[१८]-अपि च-[१८], "यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण[१९] याजयति [२०]वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यते प्र वा मीयते पापीयान् भवति यातयामान्यस्य छन्दांऽसि भवन्ति अथ यो मन्त्रे मन्त्रे वेद स सर्वमायुरेति" (आर्षब्रा १·१) इत्यादिदर्शनात् [२१]प्रतिमन्त्रमार्षेयादीनि ज्ञातव्यानि। तत्र[२२] मन्त्राणामृषिर्द्रष्टा। अक्षरसंख्याविशेषश्छन्दः। मन्त्रवाच्योऽर्थो देवता। विनियोजकं ब्राह्मणम्। तत्रैकैव महती देवता अग्निवायुसूर्यरूपेण[२३] विभक्ता सर्वत्र ध्यातव्या; तासां विभूतयः पृथिव्यन्तरिक्षद्युस्थाना[२४] अन्या[२५] अपि[२६] देवता-इति

---

[३९]अल्पप्रयाससाध्येन वेदनेन तत्सिद्धौ बह्वायाससाध्यमनुष्ठानं व्यर्थं स्यादिति चेत्। न। तरणीयाया ब्रह्महत्याया [४०]मानसकायिकत्वादिभेदेन तारतम्योपपत्तेः। [४१]मनसा संकल्पिता, वाचाऽभ्यनुज्ञाता, परहस्तेन कारिता स्वयं कृता, पुनः पुनः कृता चेत्येवं तारतम्येन अवस्थिता[४२] ब्रह्महत्याऽनेकविधा। अतः [४३]तरणमप्यनेकविधम्, यथा स्वर्गो बहुविधस्तद्वत्। "अग्निहोत्रं जुहुयात् स्वर्गकामः", "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत", "ज्योतिष्टोमेन स्वर्गकामो यजेत" [४४]इत्याद्युच्चावच-कर्मणामेकविधफलासंभवात् स्वर्गो बहुविधः। यत्तु कर्मानुष्ठानकालीनं वेदनं तत् कर्मफल एवातिशयं जनयति। "उभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद" (छान्दो १·१·१०) इति विद्वदविद्वत्प्रयोगौ [४५]प्रस्तुत्य—"यदेव विद्यया करोति···तदेव वीर्यवत्तरं भवति" (छान्दो १·१·१०) इत्याम्नानात्। अङ्गोपासितविषयमेतद्वाक्यमिति चेत्। न। न्यायस्य समानत्वात्। अस्ति ह्यस्यार्थस्योपोद्बलकं लिङ्गम्। प्रजापतिः किल सोमयागेभ्योऽर्वाचीनानग्निहोत्रपौर्णमास्यमावास्यानामकान्[४६] परस्पर-मुच्चावचान् यज्ञान् ससर्ज। सोमयागांश्चाग्निहोत्रादिभ्यः प्रौढान्[४७] अग्निष्टोमोक्थ्यातिरात्रनामकान् परस्परमुच्चावचान् सृष्ट्वा प्रथमसृष्टेष्वग्निहोत्रादिष्वभिमानविशेषेण वर्गद्वयं तुलयोद्-मिमीत। एवं[४८] वृत्तान्तं [४९]विजानतः [५०]अग्निहोत्रादिभिः अग्निष्टोमादिफलं भवति। तथा च ब्राह्मणमाम्नायते—"प्रजापतिर्यज्ञानसृजताग्निहोत्रं चाग्निष्टोमं च पौर्णमासीं चोक्थ्यं चामावास्यां चातिरात्रं च तानुदमिमीत यावदग्निहोत्रमासीत्तावानग्निष्टोमो यावती पौर्णमासी तावानुक्थ्यो यावत्यमावास्या तावानतिरात्रो य एवं विद्वानग्निहोत्रं जुहोति।

---

१८-१८. तं१. तं२. तं३. ति. पं. व. म. मै४-'अपि च' नास्ति; १९. तं१. तं२. तं३. ति. पं. व. म. म१. मै४ - 'मन्त्रेण' इत्यस्यानन्तरं 'यजति'। २०. तं१. तं२. तं३. ति. पं. व. म. म१. मै४ - 'वाऽध्यापयति' नास्ति। २१. मै. मै१ - प्रतिमन्त्रम् ऋष्यादीनि। २२. मै - अत्र। २३. तं१. तं२. तं३. ति. व. म. म१. मै४ - °सूर्यादिरूपेण। २४. मै. मै१ - °द्युस्थानस्थाः; पं. व. मै४ - °द्युस्था; ति- °द्युस्थाना। २५. ति - 'अन्या' नास्ति। २६. पं. व. ति-'अपि' नास्ति।

---

३९. इ. उ. पा-अत्यल्प°। ४०. क - मानसिककायिकत्वादि°; आ. इ. उ. पा - मानसवाचिक-त्वादि°; म१ - मानसवाचिककायिकत्वादि°। ४१. म३ - 'मनसा' इत्यस्य पूर्वं 'पुरुषेण'। ४२. अ. अ१. आ. पा - व्यवस्थिता; म३ - अवस्थितत्वात्। ४३. आ. पा - तत्तरण°। ४४. आ. पा- इत्याद्यु-च्चावच°; तं. मै१ - इत्येवमाद्युच्चावच°। ४५. आ. त्रि१ - प्रकृत्य। ४६. आ - °पौर्णमास्यामावा-स्यनामकान्; म१ - °पौर्णमासामावास्यनामकान्; तं - °पौर्णमास्यानामकान्। ४७. आ. इ. उ. पा - श्रेष्ठान्। ४८. अ. आ. इ. उ. गो. पा. म१. म३- एवम्। ४९. आ. पा- जानतः। ५०. तं, मै - 'अग्निहोत्रादिभिः' इत्यस्यानन्तरं 'प्रौढाभिः'।

नैरुक्ताः ( नि ७·५ ) । ताश्च प्रतिमन्त्र लिङ्गैर्विनियोगेन च गम्यन्त एवेति[27] न तासां पृथगभिधानाय *प्रयत्स्याम । ऋषय प्रजापत्यादय प्रतिकाण्ड भिद्यन्ते । ते च होमतर्पणाद्यर्थं[28] ज्ञातव्याः । [29]यथाह —“ अथ काण्डऋषीनेनानुदकाञ्जलिभिः शुचि । [30]अभ्यस्तपर्वे नित्यमन्त्रैः पर्वाष्टमीषु च ॥ काण्डोपाकरणेष्वेतान् पुरस्तात् सदसस्पते. । जुहुयात् काण्डसमाप्तौ च श्रुतिरेषा सनातनी ” ॥ ( काण्डानुक्रमणी २·१०-११ )॥

---

यावदग्निष्टोमेनोपाप्नोति तावदुपाप्नोति य एव विद्वान् पौर्णमासी यजते यावदुक्थ्येनोपाप्नोति तावदुपाप्नोति य एव विद्वानमावास्या यजते यावदतिरात्रेणोपाप्नोति तावदुपाप्नोति ” ( तैस १·६·९ ) इति । तदेतद्वेदनस्य सर्वत्र[51] स्वतन्त्रफलत्वे लिङ्गम् ॥ किं च तत्तद्विधिसमीपे ‘ य एव विद्वान्[52] ’ इति वचनानि वेदनादपि[53] फलं ब्रुवते । तान्यर्थवाद इति चेत् । [54]अस्तु नाम[55] । [55]सहामह एवैतमपराधं तेषां वचनानां विधेयार्थप्रशंसापरत्वात् । तर्हि ‘ यत्पर.[56] शब्दः स शब्दार्थः ’ इति न्यायेन स्वार्थे प्रामाण्य नास्तीति चेत् । न । महातात्पर्यस्य विधेयविषयत्वेऽप्यवान्तरतात्पर्यस्य स्वार्थविषयत्वानिवारणात् । “प्रावाण प्लवन्ते ” इत्याद्यर्थवादस्यापि[57] स्वार्थे प्रामाण्य प्रसज्येतेति चेत् । न । प्रमाणान्तरबाधितत्वात् । “ द्वि संवत्सरस्य सस्य पच्यते ” इत्याद्यर्थवादस्य[58] तु बाधाभावेऽप्यनुवादत्वान्न स्वार्थे प्रामाण्यम् । वेदनफलवचनानि तु नानुवादकानि । नापि बाध्यानि[59] । [60]तस्मादर्थवादत्वेऽप्यस्त्येषां स्वार्थे प्रामाण्यम् । अन्यथा मन्त्रार्थवादादिभ्यो देवादीनां[61] विग्रहादिमत्त्व न सिध्येत् । अत एवोक्तम्—“ विरोधे गुणवाद स्यादनुवादोऽवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मत ” ॥ इति । किं बहुना विद्यत एवाऽऽश्चर्यं वेदनमाम्नादपूर्वम्, अतो वेदनाय वेदो व्याख्यायते । योऽय विषयरूप इष्टप्राप्त्यनिष्टपरिहारोपाय सामान्यतो निर्दिष्ट. स विशेषेण स्पष्टीक्रियते । वेदस्तावत् काण्डद्वयात्मक । तत्र पूर्वस्मिन्[62] कर्मकाण्डे नित्यनैमित्तिककाम्यनिषिद्धरूप चतुर्विधं कर्म प्रतिपाद्यम् । “ यावज्जीवमग्निहोत्र जुहोति ” इत्यादिकं नियतम्, तस्य [63]प्रतिनियतनिमित्तत्वात् । “ यस्य गृहान् दहत्यग्नये क्षामवते पुरोडाशमष्टाकपाल निर्वपेत् ” ( तैसं २·२·२ ) इत्यादिक नैमित्तिकम्, तस्यानियतनिमित्तत्वात् । “ चित्रया यजेत पशुकाम ” ( तैस २·४·६ ) इत्यादिकं काम्यम् । “ तस्मान्मलवद्वाससा न संवदेत न सहाऽऽसीत ” (तैस२·५ १) इत्यादिकं निषिद्धम् । तेषु [64]नित्यनैमित्तिकानुष्ठानादकरणे प्रत्यवायरूपमनिष्टं परिह्रियते । स च प्रत्यवायो याज्ञवल्क्येन स्मर्यते—“ विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहा-

---

* ‘ प्रयतिष्याम ’ इति साधु । २७. मै – च ज्ञायन्ते च । २८. तै१. तै२. त३. ति. पं. म म१ – तर्पणाद्यर्थम् । २९. मै मैं१ – तदाहु । ३०. त. म१ – अभ्यस्त तर्पे° ।

---

५१. त्रि२. व– ‘ सर्वत्र ’ नास्ति । ५२. आ. त्रि१. त्रि२. पा म१. म३–वेद । ५३. अ. आ त्रि१ त्रि२ पा. म१–वेदनादेव । ५४–५५. त त्रि२. व. म३. मै१–‘ अस्तु नाम ’ नास्ति । ५५. व–सहेम हि । ५६. गो. त त्रि१. त्रि२ त्रि३ म १ – मै१ यत्परो हि । ५७. व – °वादवाक्यस्यापि, आ अ१ इ. उ. त पा म१ म३. मै१– इत्यर्थवादस्यापि । ५८. इ उ गो. त पा हा– इत्यर्थवादस्य । ५९. व– बाधितानि । ६० गो– तस्मादर्थवादत्वे सत्यप्य° । ६१. आ. इ. उ. त्रि१ पा हा–देवानाम् । ६२. आ. इ. उ पा हा – पूर्वत्र । ६३. आ. क– नियत° । ६४. आ– नित्यनैमित्तिकानुष्ठानेन तदकरणे, इ. उ पा. हा– नित्यनैमित्तिकानुष्ठानेन तदकरणेन ।

तत्र प्रजापतेर्नव काण्डानि—पौरोडाशिकम्, याजमानम्, होतारः, इष्टिहौत्रम्, चतुर्णां ब्राह्मणानि, पितृमेधश्चेति। सोमस्य नव काण्डानि – [31]अध्वरग्रहदाक्षिणानि, तेषां त्रयाणां ब्राह्मणमेकम्, वाजपेयः, तस्य च ब्राह्मणम्, सत्राः, शुक्रीयं "नमो वाचे" (तैआ ४·१·१) इत्यादिकम्, तस्य च ब्राह्मणमिति॥ [32]अग्नेः सप्त काण्डानि—अग्न्याधेयम्, पुनराधेयम्, अग्न्युपस्थानम्, अग्निः, तस्य च ब्राह्मणं "सावित्राणि जुहोति" (तैसं ५·१·१) इत्यादि, तस्यैव द्वितीयं ब्राह्मणं "यदेकेन" (तैसं ५·५·१) इत्यादि, अग्निहोत्रब्राह्मणमिति। अथ विश्वेषां देवानां षोडश काण्डानि—राजसूयः, तस्य च ब्राह्मणम्, काम्याः पशवः, काम्या इष्टयः, उपानुवाक्यं "प्रजापतिरकामयत" (तैसं ३·१·१) इति प्रश्नपञ्चकं, याज्याः,

श्चेन्द्रियाणां नरः पतनमृच्छति"॥ (याज्ञ ३·२१९) इति। यावज्जीवादिवाक्यैरत्वनुक्तोऽप्यवर्जनीयतया स्वाभीष्टः स्वर्गः प्राप्यते। तथा चाऽऽपस्तम्बः—'तद्यथाऽऽम्रे फलार्थे[65] निमिते[66] [67-]छाया गन्ध इत्यनूत्पद्येते[-67] एवं [68-]धर्मं चर्यमाणमर्था[-68] अनूत्पद्यन्ते" [आपधसू १-२०·३] इति। काम्यस्य इष्टप्राप्तिहेतुत्वं[69] तद्विधिवाक्ये [70-]एव स्पष्टम्[-70]। [71]इच्छाविघातलक्षणम् अनिष्टं कार्यात् परिह्रियते। [72-]निषिद्धवर्जनेन रागप्राप्तनिषिद्धानुष्ठानजन्यो नरकपातः[-72] परिह्रियते। न केवलं नित्यनैमित्तिकाभ्यामानुषङ्गिकस्वर्गप्राप्तिः किं [illegible] धीशुद्ध्या विविदिषोत्पादनद्वारा ब्रह्मज्ञानहेतुत्वमपि तयोरस्ति। तथा च वाजसनेयिनः समामनन्ति—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" (बृउ ४·४·२२) इति। एवं तर्हि पूर्वकाण्ड एवाशेषपुरुषार्थसिद्धेः कृतमुत्तरकाण्डेनेति चेत्। न। अपुनरावृत्तिलक्षणस्याऽऽत्यन्तिकपुरुषार्थस्य तत्रासिद्धेः। अत एवाऽऽथर्वणिकाः कर्मिणो दक्षिणमार्गेण चन्द्रप्राप्तिं पुनरावृत्तिं चाऽऽमनन्ति—"स सोमलोके विभूतिमनुभूय पुनरावर्तते" (प्रउ ५·४) इति। अत उत्तरकाण्डस्तदर्थको[73] द्रष्टव्यः[74]। [75]आत्यन्तिकपुरुषार्थसिद्धिश्च द्विविधा[76] सद्योमुक्तिः क्रममुक्तिश्चेति। वर्तमानदेहपातानन्तरमेव सिध्यति सद्योमुक्तिः। उत्तरमार्गेण गत्वा[77] ब्रह्मलोके चिरं भोगाननुभूय तत्रोत्पन्नज्ञानस्य ब्रह्मलोकावसाने सिध्यति क्रममुक्तिः। तस्मादुत्तरकाण्डे ब्रह्मोपदेशो ब्रह्मोपास्तिश्चेत्युभयं प्रतिपाद्यते। ब्रह्मोपास्तिप्रसङ्गात्[78] ब्रह्मदृष्ट्या प्रतीकमुपास्यत्वेन सांसारिकफलकामिनमुद्दिश्य प्रतिपाद्यते। ब्रह्मोपासकप्रतीकोपासकयोः समानेऽप्युत्तरमार्गे

---

३१. तं१. तं२. तं३. ति. पं. म. म१. मै४ – अध्वरो ग्रहा दक्षिणानि। ३२. मै. मै४ – अथाग्नेः।

---

६५. त्रि१. त्रि२. त्रि३. व – 'फलार्थे' नास्ति। ६६. आ – निमिते। ६७–६७. आ – छायागन्धावनूत्पद्येते; गो. त्रि१. त्रि३. हा – छाया गन्ध इत्यनूत्पद्यते; इ. उ. पा. व – छायागन्ध इत्यनूत्पद्यन्ते। ६८–६८. आ. पा – धर्ममपि चर्यमाणमर्थाः; त्रि२. व – धर्मं चर्यमाणमर्थकामाः; क. हा – धर्मेऽपि चर्यमाणे अर्थाः। ६९. आ. इ. उ. पा. हा – इष्टफलहेतुत्वम्। ७०–७०. आ. इ. उ. पा. हा – स्पष्टमेव। ७१. आ. इ. उ. हा – इष्टविघातरूपम्; अ. म३ – इष्टविघातलक्षणम्; पा – इच्छाविघातरूपम्; क – इष्टविघातम्। ७२–७२. आ. इ. उ. पा – निषिद्धवर्जनाच्च रागप्राप्तानुष्ठानजन्यो नरकः। ७३. अ. क. त्रि१. त्रि२. त्रि३. व. म३ – 'तदर्थको' नास्ति। ७४. त्रि१. त्रि२. त्रि. ३ व – ज्ञातव्यः; अ. क. म३ – आरब्धव्यः। ७५. इ. उ. पा. हा – अत्यन्तपुरुषार्थश्च; आ – °पुरुषार्थश्च। ७६. आ. इ. पा. हा – द्विविधः। ७७. क. तं. त्रि१. त्रि२. त्रि. ३ व. म. २. मै१ – 'गत्वा' नास्ति। ७८. आ. पा – °प्रसङ्गेन।

अश्वमेधः, तस्य च ब्राह्मणम्, सत्राणि, उपहोमाः, सूक्तानि, नक्षत्रेष्टयः, सौत्रामणिः, अच्छि-
द्राणि, पशुहौत्रम्, [33]पुरुषमेध इति । साहितीनामुपनिषदा साहित्य उपनिषद ऋषयः "शं
नो मित्रः" (तैआ ७ १·१) इत्यादीनाम् । याज्ञिकीनामुपनिषदां याज्ञिक्य. "अम्भस्यपारे"
(तैआ १०·१·१) इत्यादीनाम् । वारुणीना वारुण्य "सह नाववतु"(तैआ८.२·१) इत्यादीनाम् ।
५ इत्येवं तित्तिरिशाखायाः चतुश्चत्वारिंशत् काण्डानि । अथ काठके काण्डान्यष्टौ [34]हव्यवाडादी-
नाम् । अत्र[35] हव्यवाह [36] चत्वारि काण्डानि— सावित्रचित्यम्, नाचिकेतचित्यम्, चातुर्होत्र-

प्रतीकोपासकस्य विद्युल्लोकादूर्ध्वं ब्रह्मलोकगमनाभावेन क्रममुक्तेरप्यभावात्[79] अस्ति पुनरावृत्तिः।
एतच्च "अप्रतीकालम्बनान्नयति°" (ब्रसू ४·३·१५) इत्यधिकरणे द्रष्टव्यम् ॥

ननु अस्त्येव पूर्वोत्तरकाण्डयोः विषयविशेषः प्रयोजनविशेषश्च[80], तथापि पूर्वकाण्डस्याऽऽदौ
१० कर्मान्तरं परित्यज्य दर्शपूर्णमासेष्टिरेव कुतः प्रतिपाद्यत इति चेत् । प्रकृतित्वान्निरपेक्षत्वाच्चेति ब्रूमः ।
प्रकर्षेणाङ्गोपदेशो यत्र क्रियते सा प्रकृतिः । कृत्स्नाङ्गविषयत्वमुपदेशस्य प्रकर्षः । विकृतिषु तु [81]विशेषाङ्ग-
मात्रस्योपदेशः क्रियते । अङ्गान्तराणि तु प्रकृतेरतिदिश्यन्ते । अत उपदेशस्य[82] प्रकर्षाभावः । प्रकृति-
स्त्रिविधा अग्निहोत्रमिष्टिः सोमश्चेति । त्रिष्वप्येतेषु अन्यनैरपेक्ष्येण स्वाङ्गजातं सर्वमुपदिष्टम्[83] । तत्र
सोमयागस्य स्वरूपेणान्यनैरपेक्ष्येऽप्यङ्गेषु दीक्षणीयाप्रायणीयादिषु दर्शपूर्णमासेष्टिसापेक्षत्वात्[84] न
१५ पूर्वभावित्वं युक्तम् । इष्टेस्तु सोमयागनैरपेक्ष्यात्[85] सोमात् प्राचीनत्वं युक्तम् । यद्यप्यग्निहोत्रस्य
स्वरूपेऽङ्गेषु [86]च नास्त्यन्यापेक्षा,[86] तथाप्यग्निसिद्ध्यपेक्षत्वात्, आहवनीयाद्यग्नीनां च [87]पवमानेष्टि-
साध्यत्वात्, [88]पवमानेष्टीनां च दर्शपूर्णमासविकृतित्वात् परम्परयाऽग्निहोत्रस्य दर्शपूर्णमासापेक्षाऽस्तीति
प्रथमभावित्वं न[89] युक्तम् । [90]दर्शपूर्णमासयोरग्निसाध्यत्वादग्निसाधकमाधानं प्रथमतो वक्तव्यमिति
चेत् । नैवम्[91] । आधानमात्रेणाग्नयः सिध्यन्ति किंतु पवमानेष्टिभिरपि । ताश्चेष्टयो दर्शपूर्णमास-
२० विकृतित्वात् साक्षादेव[92] दर्शपूर्णमासावपेक्षन्ते । दर्शपूर्णमासौ स्वग्निद्वारा[93] पवमानेष्टिसापेक्षावपि न
साक्षात् पवमानेष्टीरपेक्षेते । अतो निरपेक्षत्वात् दर्शपूर्णमासेष्टिरेव प्रथमं वक्तव्या । ऋग्वेदसामवेद-

३३. मै. मै१ – नरमेधः । ३४. मै१ – हव्यवाहनादीनाम् । ३५ मै. मै१. मै४ – तत्र ।
३६. पं. य. मै१. मै४ – हव्यवाहनस्य ।

७९ आ. इ. उ. पा. हा – °रप्यसिद्धत्वात्, त्रि१. त्रि२. त्रि३. य. म१. म३ – °रभावात् ।
८०. गो – तत्रारोपित प्रयोजनविशेषश्च, त्रि१. त्रि१. त्रि३. य – तत्र
तत्रोचितः प्रयोजनविशेषश्च, अ अ१. क. म३ – तत्र तत्र उचितप्रयोजन फलविशेषश्च ।
८१. आ. इ. उ. पा – विशेषाङ्गोपदेश एव, त्रि१. त्रि२ य – विशेषाङ्गमात्रस्योपदेश । ८२. आ. इ. उ–
अतिदेशस्य । ८३. त. म१– सर्वमुद्दिष्टम्, त्रि१. त्रि२. त्रि३. य – समुद्दिष्टम् । ८४. आ– दर्शपूर्णमासा-
पेक्षत्वात्; इ. उ. पा हा – दर्शपूर्णमाससापेक्षत्वात् । ८५. आ. इ. उ पा – °निरपेक्षत्वात् ।
८६–८६. आ. इ उ. पा – वा नान्यापेक्षा, त्रि१ – नान्यापेक्षा, म१ – वा नास्त्यनपेक्षा, गो – वा नास्त्यन्यापेक्षा,
अ. म३ – च नास्त्यपेक्षा । ८७. आ. पा – पावमानेष्टि° । ८८. आ पा – पावमानेष्टीनाम् । ८९. इ.
गो. त्रि१ त्रि३. पा. हा – 'न' नास्ति । ९० म३ – 'दर्शपूर्ण°' इत्यस्य पूर्वं 'ननु', आ पा – दर्शपूर्ण-
मासयोरप्यग्नि° । ९१ आ – नैतम् । ९२ त्रि२. य – 'एव' नास्ति । ९३. आ. इ. उ. पा – स्वग्नि-
योनिद्वारा, मै१ – स्वाग्निद्वारा ।

चित्यम् वैश्वसृजचित्यमिति । अथारुणकेतुकचित्यस्यारुणाः काण्डर्षयः । अथ विश्वेषां देवानां द्वे काण्डे—दिवः श्येनेष्टयः " तुभ्यम् " ( तैब्रा ३·१२·१ ), " देवेभ्यः " (तैब्रा ३·१२·२) इत्यनुवाकौ; अपाघेष्टयः " तपसा " ( तैब्रा ३·१२·३ ), " देवेभ्यः " ( तैब्रा ३·१२·४ ) इत्यनुवाकौ । अथ स्वाध्यायब्राह्मणस्य स्वयम्भूः[९७] ऋषिः । अथैकाग्निकाण्डस्य " प्रसुग्मन्ता " ( आपस्तम्बमन्त्रपाठ १·१·१ ) इति प्रश्नद्वयम्, वैश्वदेवाग्निमन्त्राश्च; तस्य विश्वेदेवा ऋषयः ॥

---

योरादौ[९४] दर्शपूर्णमासेष्टिर्नाम्नातेति[९५] चेत् । बाढम् । यजुर्वेदमपेक्ष्य दर्शपूर्णमासयोरादित्वमुक्तं, कर्मकाण्डविषये यजुर्वेदस्यैव प्राधान्यात्[९६] । आनुपूर्व्या[९७] कर्मणां स्वरूपं यजुर्वेदे समाम्नातम् । तत्र तत्र विशेषापेक्षायामपेक्षिता याज्यापुरोनुवाक्यादयः ऋग्वेदे समाम्नायन्ते, स्तोत्रादीनि तु सामवेदे । तथा सति भित्तिस्थानीयो यजुर्वेदश्चित्रस्थानीयावितरौ । तस्मात् कर्मसु[९८] यजुर्वेदस्यैव[९९] प्राधान्यम् । तस्मिंश्च दर्शपूर्णमासेष्टिरादौ समाम्नाता । यद्यपि मन्त्रब्राह्मणात्मको वेदस्तथापि ब्राह्मणस्य मन्त्रव्याख्यानरूपत्वात्[१००] मन्त्रा एवाऽऽदौ समाम्नाताः । ते[१०१] च त्रिविधाः । ऋचः सामानि यजूंषि चेति । तत्र यजुषामध्वर्युवेदे बहुलत्वात्, क्वचिदृचां[१०२] सद्भावेऽपि यजुर्वेद इत्येव[१०३] आख्यायते[१०४] । अध्वर्युवेदत्वं चास्य अनादिसिद्धयाज्ञिकसमाख्याबलात्[१०५] अवगन्तव्यम् । [१०६]-अस्मिन् वेदे समाम्नाता दर्शपूर्णमासेष्टिमन्त्रास्त्रिविधाः आध्वर्यवाः, याजमानाः, हौत्राश्चेति-[१०६] । " इषे त्वा " ( तैसं १·१ ) इत्यादौ प्रपाठके पठिता आध्वर्यवाः । " सं त्वा सिञ्चामि " ( तैसं १·६·१-६ ) इत्यादौ पठिता याजमानाः । " सत्यं प्रपद्ये " ( तैब्रा ३·५ ) इत्यादौ पठिता हौत्राः । [१०७]-एतेषां मध्ये याजमानानां हौत्राणां च चित्रस्थानीयत्वात्-[१०७] भित्तिस्थानीयानामाध्वर्यवाणामेवादौ पाठो युक्तः । ते चाध्वर्यवाः " इषे त्वा " इत्यादिषु त्रयोदशस्वनुवाकेष्वाम्नाताः । तत्र प्रथमेऽनुवाके वत्सापाकरणार्था मन्त्राः । द्वितीये बर्हिराहरणार्थाः[१०८] । तृतीये दोहनार्थाः । चतुर्थे हविर्निर्वापार्थाः[१०९] । पञ्चमे [११०]व्रीह्यवघातार्थाः । षष्ठे [१११]तण्डुलपेषणार्थाः । सप्तमे कपालोपधानार्थाः । अष्टमे [११२]पुरोडाशनिष्पादनार्थाः । नवमे वेदिकरणार्थाः । दशमे प्राधान्येनाऽऽज्यग्रहणार्थाः, [११३]-प्रसङ्गात् पत्नीसंनहनार्थाश्च-[११३] । एकादशे प्राधान्येनेध्मसंनहनार्था बर्हिरास्तरणाद्यर्थाश्च[११४] । द्वादश आघारार्थाः ।

---

३७. मै – ब्रह्मा स्वयंभूः ।

---

९४. इ. उ – °सामयोरादौ । ९५. ग – °म्नायत इति; आ. इ. ड. पा – °ष्टिरनाम्नातेति । ९६. आ– पा. हा– प्रधानत्वात् । ९७. आ. इ. ड. त्रि३. पा. म३– आनुपूर्व्यात् । ९८. त्रि१. त्रि३– सर्वकर्मसु । ९९. अ. गो. तं. त्रि१. त्रि३. व. म१. म३. मै१–' एव ' नास्ति । १००. तं. म१. म३. मै१ – °नस्वरूपत्वात् । १०१. अ. अ१. गो. तं. त्रि१. त्रि२. त्रि३. व. म१. म३. मै१ – मन्त्राः । १०२. क. त्रि१. त्रि२. त्रि३. व. म१. क्वचित् क्वचिदृचाम् । १०३. इ. ड. गो. म१ – ' एव ' नास्ति । १०४. गो– व्याख्यायते; तं. मै१–अयमभिधीयते; त्रि१. त्रि२. व. म३– आम्नायते । १०५. आ इ. ड. तं. मै१. पा– °समाख्यया; व– °याज्ञिकव्यवहारबलात् । १०६-१०६. व– ते चाध्वर्यवा याजमाना हौत्राश्चेति त्रिविधाः । १०७-१०७. व– तेषु । १०८. आ. क. पा. म१. म३ –बर्हिःसंपादनार्थाः । १०९. म१– °निर्वापितार्थाः; त्रि२. व – °निर्वापणार्थाः । ११०. तं– प्रोक्षणाद्यर्थाः; मै१– अवघातार्थाः । १११. मै१– पेषणार्थाः; तं – अधिश्रपणार्थाः । ११२. तं – संवापाद्यर्थाः; मै१ –पुरोडाशश्रपणार्थाः । ११३-११३. इ. ड. पा. हा – ' प्रसङ्गात् पत्नीसंनहनार्थाश्च ' नास्ति; आ.क. त्रि१. त्रि२. त्रि३ – 'च' नास्ति । ११४. इ. ड. पा. हा – बर्हिस्तरणार्थाश्च; तं. मै१ – बर्हिराहरणार्थाश्च; म३– बर्हिरास्तीर्णार्थाश्च ।

अत्र च काण्डाना सकीर्णत्वेऽपि यथाम्नायमेवाध्येय[३८], सारस्वतत्वादस्य पाठस्य । सरस्वती हि स्वसुताय सारस्वतायेम पाठमुपदिदेश । स च सर्वविद्यानिधिरमुमेव पाठमध्यैष्ट । तस्माद्-नतिक्रमणीय इति । [३९]किंच — पूर्वं भगवता व्यासेन जगदुपकारार्थमेकीभूय स्थिता वेदाः व्यस्ता', शाखाश्च परिच्छिन्नाः । तत्र वैशंपायनं नाम शिष्य यजु'शाखानामाधिपत्ये नियुयोज । स चैत पाठं [४०]यास्काय, यास्कश्च[४०] तित्तिरये, सोऽपि चोखाय, उखश्चात्रेयाय ददौ येन पदविभागश्चके। अतश्चेयं शाखा आत्रेयीत्युच्यते। उक्तं च— " एतानृषीन् यजुर्वेदे यः पठेद्वै स वेदवित्। ऋषीणामेति सालोक्य [४१]-स्वयमोक्षेति सात्मताम्-[४१] " ॥ ( काण्डानुक्रमणी ३·३४ ) इति ॥

अत्र सामिधेनीप्रयाजाज्यभागप्रधानयागादिमन्त्राणा प्राधान्यसत्त्वेऽपि तेषां[११५] हौत्रत्वात् [११६]तान् [११७]-उपेक्ष्योपरितनप्रयोगाङ्गभूता आध्वर्यवा.-[११७] स्रुग्व्यूहनादिमन्त्रास्त्रयोदशे समाम्नाता. । [११८]तदेतत् सर्वं विनियोगसंग्रहकारेणेत्थं संगृहीतम् —

" ये दर्शपूर्णमासाङ्गमन्त्रा एते समासत ।
इषे त्वाद्यनुवाकेषु त्रयोदशसु वर्णिता. ॥
वत्सापाकरणं बर्हिर्दोहो निर्वापकण्डने[११९] ।
पेषणं च कपालानि पुरोडाशश्च वेदिका ॥
आज्यग्रहेध्मसंनाहाश्चाघारोपरितन्त्रके[१२०] ।
इत्युक्ता अनुवाकार्था प्रतिमन्त्र क्रियोच्यते " ॥ इति ।

किमिदं वत्सापाकरण नाम[१२१] ? कथं वा तस्य प्राथम्यमिति चेत् । [१२२]उच्यते—सन्ति [१२३]-दर्शयागे त्रीणि प्रधानानि हवींषि, पूर्णमासयागे च त्रीणि-[१२३] । आग्नेयोऽष्टाकपाल', ऐन्द्रं दधि, ऐन्द्रं पय इति दर्शे[१२४]। आग्नेयोऽष्टाकपाल', आज्येन प्राजापत्य उपांशुयाज, अग्नीषोमीय एकादशकपाल इति पौर्णमासे । तत्र प्रतिपद्दिने [१२५]-दधि होतु दधि सपादनीयं, तदर्थम्-[१२५] अमावास्यायां रात्रौ गावो दोग्धव्या । [१२६]-तद्दोहार्थं प्रात काले लौकिकदोहादूर्ध्वं-[१२६] स्वमातृभि. सह [१२७]चरन्तो वत्सा मातृभ्योऽपाकरणीयाः तदिदं [१२८]वत्सापाकरणं, यथोक्तरीत्या तस्य प्राथम्य च । तच्च[१२९]

३८. ति – ०वाध्येतव्यम् । ३९. त१ तं२ त३. म –' किंच ' नास्ति । ४०–४०. तं१ त१. तं३. ति प व म म१ मै४ – याज्ञवल्क्याय प्रोवाच स च । ४१–४१. त१ म२. तं३. म– स्वयंमोक्षेक-सम्मताम् , ति म१ मै१ मै४ – स्वयमोक्षेति मात्मताम् ।

११५. व– 'तेषाम्' नास्ति । ११६ व– 'तान्' नास्ति । ११७–११७. व– उपेक्ष्योपरितन-प्रयोगाङ्गाध्वर्यवा । ११८. आ. पा–एतत। ११९. त्रि२. त्रि३. व–°निर्वापकुट्टने। १२०. अ. म३–°तन्त्रको। १२१. आ. इ उ. त. म१ म३ हा–' नाम 'नास्ति। १२२. इ. ट. प. व. [illegible] –'उच्यते' नास्ति । १२३–१२३ व – दर्शयागे पूर्णमासे च त्रीणि त्रीणि प्रधानहवींषि, ट. उ – दर्शे त्रीणि प्रधानानि हवींषि पूर्णयागे च त्रीणि, पा. हा– दर्शे त्रीणि प्रधानानि हवींषि पूर्णमासे च त्रीणि, क – दर्शयागे त्रीणि प्रधानहवींषि पूर्णमासयागे च त्रीणि । १२४ आ क– दर्शयागे । १२५–१२५. आ. पा– दधिहोमे दधिसपादनार्थम्; क–दधि होतु दधिसपादनाय । १२६–१२६ व–तदर्थं प्रात लौकिकदोहादूर्ध्वम् । १२७. आ. क. गो त्रि२. म१, म३ – संचरन्त । १२८. व–वत्सापाकरण नाम । १२९. आ. क–तत्र, इ. उ. पा, हा–'तच्च'नास्ति ।

अथैषां काण्डानामाद्यवसानावगमः परस्तात् व्याख्यानावसरे भविष्यति । अयं च वेदो विध्यर्थवादमन्त्रात्मना त्रेधा भवति । विधयश्चोदनाः । अर्थवादाः स्तुतयः । मन्त्रा अनुष्ठेयार्थप्रकाशकाः । एते च ऋग्यजुर्विभागेन द्वेधा वर्तन्ते । ऋचः पादबद्धाः । अतोऽन्यानि यजूंषि । [४२]अत्राहुः– "पदक्रमविशेषज्ञो वर्णक्रमविचक्षणः । स्वरमात्राविभागज्ञो गच्छेदाचार्यसंसदम्" ।। ( तैप्रा २४·६ ) तस्मात्–

विनियोगस्य मन्त्राणां भेदस्यर्ग्यजुषस्य च ।
पदार्थस्वररूपाणामभिव्यक्त्यै च यत्यते ।।

वत्सापाकरणं सद्यश्छिन्नया[१३०] पलाशशाखया कर्तव्यमिति [१३१]तच्छेदनार्थोऽयम् "इषे त्वा" इति मन्त्र आदौ समाम्नायते । तस्य[१३२] च मन्त्रस्य तच्छेदनाङ्गत्वं ब्राह्मणे द्रष्टव्यम् । अत एव सब्राह्मणो [१३३]मन्त्रो ज्ञातव्य इति छन्दोगा अधीयते–" यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण[१३४] याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्तं[१३५] वा पद्यति[१३६] [१३७]प्र वा मीयते[१३७] पापीयान् भवति[१३८]... तस्मादेतानि [१३९]मन्त्रे मन्त्रे[१३९] विद्यात्" ( आब्रा १·१ ) इति । आर्षेयं ऋषिसंबन्धः[१४०] । अतीन्द्रियार्थद्रष्टारो ऋषयः[१४१] । तेषां वेदद्रष्टृत्वं स्मर्यते—" युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः । लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा" ॥ ( मभा १२·२०३·१७ ) इति ।

इषे त्वादीनां च मन्त्राणां प्रजापतिर्ऋषिः । तथा च काण्डानुक्रमणिकायामुक्तम्—

" शाखादिं याजमानं च होतॄन् हौत्रं च दार्शिकम् ।
तद्विधीन्[१४२] पितृमेधं च नवाऽऽहुः कस्य तद्विदः" ।। (काण्डानुक्रमणी २.१) इति ।

शाखादिः " इषे त्वा " ( तैसं १·१ ) इत्यादिप्रपाठकः । याजमानं " सं त्वा सिञ्चामि " ( तैसं १·६·१–६ ) इत्याद्यनुवाकषट्कमन्त्राः । होतारः " चित्तिः स्रुक् " ( तैआ ३·१–१२ ) इत्यादयो मन्त्राः । " सत्यं प्रपद्ये " ( तैआ ३·५ ) इत्यादिकं दार्शिकं हौत्रम् । तद्विधयः प्रोक्तानां चतुर्विधमन्त्राणां चत्वारि ब्राह्मणानि । पितृमेधः " परे युवांसं प्रवतो महीः " ( तैआ ६·१–१२ ) इत्यादि । तान्येतानि नव काण्डानि प्रजापतिना दृष्टानि । छन्दोविशेषाश्च वेदाङ्गभूते छन्दोनामके[१४३] ग्रन्थे द्रष्टव्याः । मन्त्रपदव्याख्यानादेव तत्प्रतिपाद्यार्थरूपा देवता विज्ञायते । ब्राह्मणविशेषस्तु तत्तन्मन्त्रव्याख्यानावसर एवोदाहियते । यद्यपि मन्त्रविनियोगा ब्राह्मणे सर्वेऽपि नाऽऽम्नातास्तथापि कल्पसूत्रकारैर्ब्राह्मणान्तरपर्यालोचनया ते सर्वेऽभिहिताः । अतो बौधायनादिसूत्रोदाहरणपूर्वकं ब्राह्मणानुसारेण मन्त्रार्थं[१४४] योजयामः ॥

४२. तं१. तं२. तं३. ति. म१–तत्राहुः ।

१३०. आ. इ. उ. पा– सद्यश्छिन्न° । १३१. आ. इ. उ. पा– तच्छेदनाय; व – तच्छेदनार्थमयम् । १३२. गो– अस्य । १३३. अ. इ. उ. गो. तं. त्रि१. त्रि२. पा. व. म१. म२. मै१ – 'मन्त्रः' नास्ति । १३४. आ. पा. मै१– ' मन्त्रेण ' इत्यस्यानन्तरं ' यजति '। १३५. क. त्रि२. व–गर्ते । १३६. आ. त्रि२. पा. हा– पात्यते; गो. त्रि१ – पद्यते; तं. म१. मै१–प्रपद्यते; अ. अ१. म२ – पाद्यते; ( आर्षेयब्राह्मणमनुसृत्यास्माभिरत्र पाठः स्वीकृतः )। १३७–१३७. आ. इ. उ. त्रि१. त्रि२–प्रमीयते वा । १३८. व –'भवति' इत्यस्यानन्तरम् 'इति विज्ञायते' । १३९–१३९. आ.इ.पा.म२–मन्त्रे । १४०. आ.इ.उ.पा–ऋषिभिः संबन्धः । १४१. आ. इ. उ. पा– हि ऋषयः । १४२. त्रि. व– तद्विधिम् । १४३. त्रि२. त्रि३. व– छन्दोविचितिनामके । १४४. व–मन्त्रार्थान् ।

हरिः ॐ ॥ इषे त्वोर्जे त्वा वायवः स्थोपायवः स्थ

इषे । त्वा । ऊर्जे । त्वा । वायवः । स्थ । उपायव इत्युप–आयवः । स्थ ।

---

तत्रामावास्याया संनयतः शाखामाच्छिनत्त्यध्वर्युः—'इषे त्वोर्जे त्वा' इति ॥ "उभा वामिन्द्राग्नी" (तैस १.१.१४) इत्यतः प्राक् इतः प्रभृति ये मन्त्रास्तेषां प्रजापतिः काण्डर्षिः। अत्र केचित् [43]युष्मच्छब्दावृत्त्या द्वे यजुषी आहुः। तदानीं छेदने द्वयोः समुच्चयः। अपरे तु द्वितीयेन संनमनादि कुर्वन्ति। मन्त्रार्थस्तु–इडन्नं सर्वैरेषणीयत्वात्। इह तु सानाय्यलक्षणं गृह्यते। ऊर्क् रसः [44]बलप्राणयोः उद्दीपकः। इषु इच्छायाम्। ऊर्ज बलप्राणनयोः। आभ्यां कर्मणि करणे च सपदादिलक्षणः[45] क्रिया क्विप्प्रत्ययः (पा ३.३.१०८ वा ९)। उभयत्र तादर्थ्ये चतुर्थी। "सावेकाचः" (पा ६.१.१६८) इति विभक्तेरुदात्तत्वम्। हे शाखे, इडर्थं त्वामाच्छिनद्मि, ऊर्गर्थं त्वामाच्छिनद्मि, [46]इत्येवं योग्यक्रियाध्याहारेण[46] व्याख्येयम्। प्रयोगकाले तु तदर्थस्मृतिमात्रमेव। ऊहप्रवरनामधेयेषु [47]श्रुतपदस्थाने योग्यपदान्तरप्रयोगो युज्यत एव ॥

---

इषे त्वेति ॥ दर्शयागं चिकीर्षुरमावास्यायां [145]प्रातर्नित्याग्निहोत्रं [146]हुत्वा [147]ततो दर्शयागार्थं "ममाग्ने वर्चः" (तैसं ४.७.१४) इत्यादिभिर्मन्त्रैर्वह्निषु समिदाधानरूपमन्वाधानं कृत्वा वत्सापाकरणार्थं मन्त्रेण पलाशशाखां छिन्द्यात्। तदाह बौधायनः–"शाखामाच्छिनत्तीषे त्वोर्जे त्वा" (बौश्रौ १.१) इति। आपस्तम्बस्तु तदेतदभिधाय मन्त्रभेदपक्षमपि कंचिदाश्रित्य विनियोगभेदमाह—"इषे त्वोर्जे त्वेति शाखामाच्छिनत्ति। अपि वा इषे त्वेत्याच्छिनत्त्यूर्जे त्वेति संनमयत्यनुमार्ष्टि वा" (आपश्रौ १.१.१०–११) इति ॥ संनमनमृजूकरणम्। अनुमार्जनमानुलोम्येन संलग्नधूल्याद्यपनयनम्। सोऽयं मन्त्रभेदपक्षो जैमिनिना द्वितीयाध्यायप्रथमपादे (मीसू २.१.४७) स्वीकृतः॥ [148]तत्र [149]पलाशशाखाया प्राशस्त्यं[149] ब्राह्मणे समाम्नातम्। "तृतीयस्यामितो दिवि सोम आसीत्। तं गायत्र्याहरत्। तस्य पर्णमच्छिद्यत। तत्पर्णोऽभवत्। तत्पर्णस्य पर्णत्वम्" (तैब्रा ३.२.१) इति। द्युशब्दस्याऽऽकाशे प्रसिद्धत्वात् तत्परित्यागेन स्वर्गलोकविवक्षां दर्शयितुमितः

---

४३. मै. मै१. मै३ – युष्मच्छब्दद्वयात्। ४४ त१. त२ त३. ब. म. म१ मै४ – बलप्राणनयो। ४५. त१. त२. त३ प. मै४ – ॰लक्षणे। ४६–४६ मै. मै१. मै३ – एवं योग्यक्रिया संपाद्य अध्याहारेण। ४७. त१. त२. त३ पं. ब. म – श्रौत॰।

---

१४५. आ. तं. पा मै१ – प्रातरग्निहोत्रम्। १४६ अ. तं. गो१ त्रि१. त्रि२. म१. म३ – हुत्वा। १४७. आ. पा – 'ततो' नास्ति। १४८. अ इ. उ. गो. त. त्रि२. पा. ब. मै१. हा – अत्र। १४९–१४९. त. मै१ – पलाशशाखया वत्सापाकरणप्राशस्त्यम्।

वत्सानपाकरोति—' वायवः स्थ ' इति ॥ [४८]अत्र केचित् आख्यातावृत्त्या द्वे[४९] यजुषी आचक्षते । Vवायवः गन्तारः । वातेर्गतिकर्मणः " कृवापाजि° " ( उ १ ) इत्युण्प्रत्ययः । Vउपायवः उपगन्तारः । उपपूर्वात् इणः " छन्दसीणः " ( उ २ ) इत्युण्प्रत्ययः । [५०]उभयत्र प्रत्ययस्वरेणान्तोदात्तत्वम् । उत्तरत्र [५१]गतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वम् । Vस्थ इति अस्तेः [५२]पञ्चमलकाररूपम्* । [५३-]हे वत्साः, मातृसकाशाद्गन्तारो भवत । पुनर्दोहकाले उपगन्तारो भवतेति । वायुशब्देनैषामभिधानं वाय्वधिष्ठातृकत्वमेषां प्रदर्शयितुम् । " वायुर्वा अन्तरिक्षस्याध्यक्षाः " ( तैब्रा ३·२·१ ) इति ब्राह्मणम्[-५३] ॥

[१५०]पृथिवीत आरभ्य [१५१]गणनया तृतीयस्यां दिवि सोमलता पूर्वमासीदित्युक्तम् । गायत्र्याः सोमाहरणं " कद्रूश्च वै सुपर्णी च " ( तैसं ६. १. ६ ) इत्यस्मिन्ननुवाके-" सोमो वै राजा गन्धर्वेष्वासीत् " ( ऐब्रा १. २७ ) [१५२]इत्यस्मिन् बह्वृचब्राह्मणे च प्रपञ्चितम् । तदाहरणाभिघातेन सोमस्य पर्णं भूमौ पतितम् । [१५३]पक्षिरूपाया गायत्र्याः पक्षः [१५४]पतित इति केचित् । पतितस्य [१५५]पर्णस्य [१५६]पलाशवृक्षरूपेण आविर्भावात् तस्य वृक्षस्य पर्णनाम [१५७]संपन्नम् । न चात्र पर्णस्य कथं वृक्षत्वं संपन्नमिति विस्मेतव्यम्, विधातुरीश्वरस्याचिन्त्यशक्तित्वात् । अन्यथा [१५८]बीजात् वृक्ष इत्यत्रापि ' क्व बीजं [१५९-]क्व वा[-१५९] वृक्षः ' [१६०]इत्यपि विस्मयः केन वार्येत । सर्वत्र पर्णेभ्यो वृक्षः [१६१]प्रसज्येत इत्ययमतिप्रसङ्गोऽपीश्वरसंकल्पाभावेन [१६२]परिहर्तव्यः । [१६३-]स च[-१६३] संकल्पः कार्यैकसमधिगम्यः । तस्माद्वेदार्थे [१६४-]कुतर्केन चोदनीयम्[-१६४] ॥ शाखया वत्सापाकरणं विधत्ते—" ब्रह्म वै पर्णः । यत्पर्णशाखया वत्सानपाकरोति । ब्रह्मणैवैनानपाकरोति " ( तैब्रा ३. २. १ ) इति । यथा जगन्निष्पादकं ब्रह्म प्रशस्तं तथा यागनिष्पादकस्य पलाशस्य प्रशस्तत्वात् ब्रह्मत्वेन स्तुतिः । [१६५]वैशब्देन अर्थवादान्तरोपपादिता [१६६-]पलाशस्य ब्रह्मसंबन्धप्रसिद्धिः[-१६६] सूच्यते । देवेषु परस्परं ब्रह्मतत्त्वं निरूपयत्सु पलाशवृक्षस्तत्त्वमशृणोदित्येतादृशो ब्रह्मसंबन्धः । औपानुवाक्यकाण्डे जुह्वाः पर्णमयीत्वविधिशेषेऽर्थवादे श्रूयते-" देवा वै ब्रह्मन्नवदन्त तत्पर्ण उपाशृणोत् सुश्रवा वै नाम यस्य पर्णमयी जुहूर्भवति न पापꣳ श्लोकꣳ शृणोति " ( तैसं ३. ५. ७ ) इति । एवं यत्र यत्रार्थवादे प्रसिद्धिसूचका

४८. मै. मै१. मै३. मै४ – ' अत्र ' नास्ति । ४९. व – द्वेधा । ५०. तं१. तं२. तं३. पं. म. पूर्वत्र; व – यत्र । ५१. तं१. तं२. तं३. ति. पं. व. म. म१. मै४ – गतिसमासे कृते । ५२. तं१. तं२. तं३. ति. पं. व. म. म१ – पञ्चमे लकारे रूपम् ; मै३ – पञ्चमलकारे रूपम् ; मै ४ – पञ्चमलकारोऽयम् । *पञ्चमलकारोऽत्र व्यत्ययेन द्रष्टव्यः । ५३–५३. तं१. तं२. तं३. ति. पं. व. म. मै४ – ' हे वत्सा... ब्राह्मणम् ' नास्ति ।

१५०. तं. मै१ – पृथिवीतलात् । १५१. व. त्रि२ – गणनायाम् ; आ. इ. उ. पा – 'गणनया' नास्ति । १५२. आ. इ. उ. पा – इति; म३ – इत्येतस्मिन् । १५३. व – पक्षिरूप° । १५४. इ. उ. पा – ' पतितः ' नास्ति । १५५. इ. उ. पा. हा – तस्य; आ – ' पर्णस्य ' नास्ति । १५६. आ. पा – पलाशरूपेण । १५७. अ. तं. त्रि१. त्रि२. व – ' संपन्नम् ' नास्ति । १५८. इ. उ. पा – वेत्रबीजात् ; हा – दग्धकदलीवेत्रबीजात् । १५९–१५९. आ. इ. उ. गो. पा – क्व; त्रि१. त्रि२. त्रि३. व – कुत्र; अ. अ१. क. म१. म३ – कुत्र वा । १६०. गो१. त्रि२. त्रि३ – इत्ययम् । १६१. आ. पा – 'प्रसज्येत' नास्ति । १६२. त्रि२. व – परिहरणीयः । १६३–१६३. इ. त्रि१. त्रि२. त्रि३. व – 'स च' नास्ति । १६४–१६४. इ. उ. पा– तर्कैरननुचोदनीयम् । १६५. तं – वैशब्दार्थेन । १६६–१६६. तं – पलाशब्रह्मसंबन्धस्य प्रसिद्धिः

[१६७]वैशब्दहिशब्दादय पठ्यन्ते तत्र सर्वत्र सति सम्भवे लौकिकप्रसिद्धि । अन्यथाऽर्थवादान्तर-प्रसिद्धिरिति द्रष्टव्यम् ॥ वत्सापाकरण इव गोप्रस्थानेऽपि शाखां विनियुङ्क्ते–" गायत्रो वै पर्णः । गायत्रा पशव । तस्मात् त्रीणि त्रीणि पर्णस्य पलाशानि । त्रिपदा गायत्री । यत् पर्णशाखया गा प्रार्पयति । स्वयैवैना देवतया प्रार्पयति " ( तैब्रा ३. २. १ ) इति । पर्णस्य गायत्रीसम्बन्धो
५ वेदगम्य सोमाहरणद्वारक[१६८] । [१६९]स च[१६९] पूर्वमुदाहृत. । अनुमानगम्योऽप्यपर सम्बन्धोऽस्ति, गायत्रीपादेष्विव पलाशपर्णेषु त्रित्वावगमात् । पशूना च गायत्री देवतेत्ययमर्थोऽन्यत्र द्रष्टव्य । [१७०]छेद्याया पलाशशाखाया बहुपर्णत्वप्रागग्रत्वादिगुणान्[१७०] विधत्ते—" य कामयेतापशु स्यादिति । अपर्णां तस्मै शुष्काग्रामाहरेत् । अपशुरेव भवति । यं कामयेत पशुमान्स्स्यादिति । बहुपर्णां तस्मै बहुशाखामाहरेत् । पशुमन्तमेवैन करोति । यत् प्राचीमाहरेत् । देवलोकमभिजयेत् । यदुदीचीं मनुष्य-
१० लोकम् । प्राचीमुदीचीमाहरति । उभयोर्लोकयोरभिजित्यै " ( तैब्रा ३. २ १ ) इति । य यजमानमुद्दिश्या-ध्वर्यु कामयेत । स्पष्टमन्यत् । यथोक्तशाखाच्छेदने कं मन्त्र दर्शयितुमाशङ्कयोदाहरति—" इषे त्वोर्जे त्वेत्याह ' ( तैब्रा ३. २. १ ) इति । अस्मिन् मन्त्रे विनियोगानुसारेण ' आच्छिनद्मि ' इति पदमध्याहृत्य वाक्य पूरणीयम् । इष्टिरन्नम्, सर्वै. प्राणिभिरिष्यमाणत्वात् । ऊर्ग् बलहेतु रस. । " ऊर्ज बलप्राणनयो. " इति धातु । ऊर्ज्यते बलं संपाद्यतेऽनया रसरूपयेत्यूर्क् । हे पलाशशाखे,
१५ [१७१]देवानामन्नरूपत्वार्थं त्वामाच्छिनद्मि । तस्य देवस्य बलप्रदरसार्थं त्वामाच्छिनद्मीति वाक्यार्थ. । [१७२]मन्त्रद्वयपक्षे विनियोगानुसारेण ' ऊर्जे त्वामनुमार्ज्मि ' [१७३]इत्यध्याहर्तव्यम् । एतन्मन्त्रस्तावकमर्थ-वादमाह–" इषमेवोर्जं यजमाने दधाति " ( तैब्रा ३ २ १ ) इति । [१७४]एतन्मन्त्र पठन्[१७४] अध्वर्यु-र्भोजनायान्न बलाय रस च यजमाने संपादयति । न चात्र प्रत्यक्षविरोध आशङ्कनीय । " ग्रावाण. प्लवन्ते " इत्यादिवदस्यार्थवादस्य प्रशसारूपगुणवादत्वाङ्गीकारात् ॥
२० वायव इति ॥ मन्त्रान्तरविनियोगमाह बौधायन – " तया वत्सानपाकरोति वायव स्थोपायव. स्थेति " ( बौश्रौ १. १ ) इति ॥ वान्ति गच्छन्ति इति वायव गन्तार । उप समीपे यजमान-गृहे पुनरायन्त्यागच्छन्तीति उपायव । हे वत्सा , तृणभक्षणाय प्रथमं मातृसकाशादपेत्य स्वेच्छयैवा-रण्ये गन्तारो भवत । साय पुनर्यजमानगृहे समागन्तारो भवत । अथवा वत्साना परम्परया वायुदेवताकत्वात् तदभेदविवक्षया वायुरूपत्व ब्रुवन्नध्वर्यु तद्रक्षार्थं वत्सान् वायुदेवतायै समर्पयति ॥
२५ अनेनैव प्रकारेण मन्त्रस्य पूर्वभागो ब्राह्मणेन व्याख्यायते– " वायव स्थेत्याह । वायुर्वा अन्तरिक्ष-स्याध्यक्षा । अन्तरिक्षदेवत्या. खलु वै पशव । वायव एवैनान् परिददाति " ( तैब्रा ३. २. १ ) इति । अध्यक्षा इति वचनव्यत्यय । वायु स्वसञ्चारेणान्तरिक्षमधितिष्ठति । अन्तरिक्षे च विस्रम्भ-संचाराय[१७५] बहुलमवकाश प्रयच्छन् पशून् [१७६]पालयति । सेयं प्रत्यक्षप्रसिद्धिरर्थवादान्तरगत. स्वस्वामिभावो [१७७]वा निपात्यते[१७७] । तस्यैव मन्त्रभागस्य प्रकारान्तरेणाभिप्राय आम्नायते–
३० " प्र वा एनानेतदाकरोति । यदाह । वायव. स्थेति " ( तैब्रा ३. २. १ ) इति । अध्वर्युरिमं भागमुच्चारयतीति[१७८] यदेतेनोच्चारणेन वत्सान् वायुतादात्म्यलक्षणप्रकृष्टाकारवत करोति । उत्तरभाग व्याचष्टे– " उपायव स्थेत्याह । यजमानायैव पशूनुपह्वयते " ( तैब्रा ३. २. १ ) इति ॥

---

१६७ त्रि॰ त्रि३. व टा – वैशब्दादय । १६८ आ. इ उ पा – °द्वारत, अ. क. मे१ – °द्वारत् । १६९–१६९. इ. उ पा – ' स च ' नास्ति । १७०–१७०. गो त्रि१ – छेत्राया पलाशशाखाया बहुपर्णत्वप्रागग्रत्वादीन् गुणान्, त्रि३ व – पलाशशाखाया बहुपर्णत्वादिगुणान् । १७१. आ. इ. उ. पा. ई. – देवाना भागरूप° । १७२. आ. इ उ – मन्त्रद्वित्वपक्षे । १७३ आ इ. उ पा – इत्यध्याहार्यम् । १७४–१७४ आ इ उ पा – एनन्मन्त्रपाठेन, त्रि३ मे१ – एत मन्त्र पठन् । १७५. त्रि१ त्रि२. त्रि३. व. मे१ – °सञ्चारणाय । १७६ आ. पा – लालयति, गो – चालयति । १७७–१७७. आ. पा –वाखलुशब्दै:, क – वैखलुशब्दै । १७८ आ. इ उ. पा – ' इति ' नास्ति ।

शाखाहरणादिः ]

**देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आ प्यायध्वमघ्निया**

देवः। वः। सविता। प्रेति। अर्पयतु। श्रेष्ठतमायेति श्रेष्ठ–तमाय। कर्मणे। एति। प्यायध्वम्। अघ्नियाः।

गोचराय गाः प्रस्थापयति—'देवो वः' इत्यादिभिस्तिसृभिः ऋग्भिः। तत्र प्रथमया सवितारमभ्यर्थयते। इयं च द्विपदा विराड्गायत्री जागतगायत्रपादत्वादिति[५४]॥ पॄ प्रेरणे। [V]देवः [V]सविता सर्वस्य प्रेरकः, येन विना तृणाग्रमपि न चलति, स [V]वः[५५] युष्मान् [V]प्रार्पयतु प्रस्थापयतु। अर्तेर्णौ पुगागमः (पा ७·३·३६)। किमर्थम्? [V]श्रेष्ठतमाय [V]कर्मणे [५६]यज्ञाय। "यज्ञो हि श्रेष्ठतमं कर्म" (तैब्रा ३·२·१)। प्रकर्षवतामपि पुनः प्रकर्षविवक्षायां [५७]द्वितीयः आतिशायनिको भवत्येव। तृणादिभक्षणेन सांनाय्यनिष्पत्त्यर्थत्वात् यज्ञार्थं प्रेरणम्॥

**देव इति॥** विनियोगमाह बौधायनः–"अथैषा मातृः प्रेरयति देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्निया देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मा मा वः स्तेन ईशत माऽघशꣳसो रुद्रस्य हेतिः परि वो वृणक्त्विति" (बौश्रौ १.१) इति। आपस्तम्बस्तु[१७९] त्रीनेतान् मन्त्रानभिप्रेत्य विनियोगत्रयमाह–"देवो वः सविता प्रार्पयत्विति शाखया गोचराय गाः प्रस्थापयति। प्रस्थितानामेकां गां शाखयोपस्पृशति दर्भैर्दर्भपुञ्जीलैर्वा। [१८०]आप्यायध्वमघ्निया देवभागमिति[१८०]... ...। रुद्रस्य हेतिः परि वो वृणक्त्विति प्रस्थिता अनुमन्त्रयते" (आपश्रौ १. २. ४–८) इति॥ हे [१८१]गावः, प्रेरकः [V]देवः अन्तर्यामी परमेश्वरोऽत्यन्तश्रेष्ठायेन्द्रदधिरूपाय [V]कर्मणे युष्मानरण्ये [१८२]घासमत्तुं [V]प्रार्पयतु[१८३] प्रेरयत्विति प्रथममन्त्रस्यार्थः[१८४]॥ तस्यं [१८५]मन्त्रस्य पूर्वभागे[१८५] स्थितस्य सवितृपदस्य तात्पर्यं व्याचष्टे–"देवो वः सविता प्रार्पयत्वित्याह प्रसूत्यै" (तैब्रा ३. २. १) इति। प्रेरणायेत्यर्थः। उत्तरभागं व्याचष्टे– "श्रेष्ठतमाय कर्मण इत्याह यज्ञो हि श्रेष्ठतमं कर्म। तस्मादेवमाह" (तैब्रा ३. २. १) इति॥ द्वितीयमन्त्रस्याऽयमर्थः– "हे [V]अघ्नियाः गावः, देवस्येन्द्रस्य[१८६] दधिरूपं भागम् [V]आप्यायध्वं प्रभूतघासभक्षणेन प्रवृद्धं कुरुत। युष्मान् [१८७]अपहर्तुं [V]स्तेनः चोरः [V]मा [V]ईशत शक्तो मा भूत्। कीदृशीर्युष्मान्? अत्यन्तरसा अधिकक्षीरा यद्वापत्याः किमिदोषरहिता रोगान्तरहीनाश्च। [V]अघशꣳसः भक्षणादिना तीव्रपापेन घातको व्याघ्रादिरपि शक्तः [V]मा भूदिति॥ अस्य मन्त्रस्य [१८८]प्रथमभागे 'देवभागम्' इति पदस्य तात्पर्यं व्याचष्टे–" आप्यायध्वमघ्निया देवभागमित्याह। वत्सेभ्यश्च वा एताः पुरा मनुष्येभ्यश्चाऽऽ-

५४. तं१. तं२. तं३. ति. पं. श. म. म१. मै४ – 'पादत्वात्' इत्यस्यानन्तरं 'द्व्यक्षरोनत्वाच्च'। ५५. म१, मै. मै१. मै३. मै४ – 'वः' नास्ति। ५६. तं१. तं२. तं२. ति. पं. व. म. म१. मै४ – 'यज्ञाय' नास्ति। ५७. ति. व. म. म१. मै४ – 'द्वितीयः' नास्ति।

१७९. इ. उ. म१ – आपस्तम्बसूत्रे। १८०–१८०. आ. पा – आप्यायध्वमिति। १८१. व – 'गावः' इत्यस्यानन्तरं 'वः सविता'। १८२. इ. उ. पा. हा – 'घासमत्तुम्' नास्ति। १८३. त्रि१. त्रि२. त्रि३. व. म१. म३ – 'प्रार्पयतु' नास्ति। १८४. आ. पा – ॰मन्त्रार्थः। १८५–१८५. इ. उ. गो. पा. हा – मन्त्रपूर्वभागे। १८६. इ. उ. पा. हा – 'इन्द्रस्य' नास्ति। १८७. आ. इ. उ. पा – अपाहर्तुम्। १८८. त्रि२. व – पूर्वभागे।

देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मा मा वः

देवभागमिति देव-भागम् । ऊर्जस्वतीः । पयस्वतीः ।

प्रजावतीरिति प्रजा-वतीः । अनमीवाः । अयक्ष्माः । मा । वः ।

अथ प्रस्थाप्यमाना गा एव प्रार्थयते द्वितीयया । [५८]इय च भवत्पुरुदेशपाठत्वात्
मध्येज्योतिस्त्रिष्टुप् [५८] ॥ हे [v]अघ्निया. गावः [५९]अहननार्हाः । अहननम् अघ्नः । "घञर्थे
कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्" (पा ३.३.५८ वा ४) इति हन्ते. क । अघ्न-
मर्हन्तीति "छन्दसि च" (पा ५.१.६७) इति [६०]यः । यद्वा-"अघ्न्यादयश्च" (उ ५६१)
इति यक्प्रत्ययान्तो निपात्यते । [६१]इकारश्छान्दसः । तदा गवामियं संज्ञा । सर्वदा प्रत्ययो-
दात्तत्वम् । इह तु आष्टमिकम् "आमन्त्रितस्य च" (पा ८.१.१९) इति सर्वानुदात्त-
त्वम् । [v]देवभागं[६२] देवस्येन्द्रस्य भागं सानाय्यलक्षणं [६३]यूयम् [v]आप्यायध्वम् आप्याययत ।
अन्तर्भावितण्यर्थात्, प्यायतेर्ण्यन्ताद्वा लोट् । "बहुलमन्यत्रापि संज्ञाच्छन्दसो" (उ १९०)
इति णेर्लुक् । अण्यन्तस्याचित्तवत्कर्तृकात् "अणावकर्मकात्" (पा १.३.८८) इति
परस्मैपदाभावः । "ऐन्द्रं दध्यमावास्यायाम्" (तैस २.५.४) इति सानाय्यस्यैन्द्रत्वम् ।
"वत्सेभ्यश्च वै" (तैब्रा ३.२.१) इत्यादि ब्राह्मणम्[६३] । ऊर्जस्वत्त्वादिगुणयुक्ता
यूयमाप्यायध्वम् । यद्वा-ऊर्जस्वत्त्वादिगुणयुक्तान् [v]वः[६४] युष्मान् [v]स्तेन. [v]मा [v]ईशत इति ।
शेषत्वाविवक्षाया "अधीगर्थ°" (पा २.३.५२) इति षष्ठ्यभावः । प्रथमपक्षे "वा

ध्याप्यन्त । देवेभ्य एवैना इन्द्रायाऽऽप्याययति" (तैब्रा ३. २. १) इति । यागार्थप्रवृत्तेः पूर्वं
गोग्रासेन वत्सभागो मनुष्यभागश्च प्रवृद्धो भवति । ऊर्ध्वं तु क्षीराज्यरूपो [१८९]देवान्तरभागो दधिरूप
इन्द्रभागश्च प्रवर्धते । [१९०]एवकारेण मनुष्यभ[१९०]व्यावृत्ति.[१९०] । द्वितीयं भागमुपपादयति-"ऊर्जस्वतीः
पयस्वतीरित्याह । ऊर्जं हि पयः संभरन्ति" (तैब्रा ३. २. १) इति । प्रभूतयासलक्षणेन
रसाधिक्यसंपादनं क्षीराधिक्यसंपादनं च लौकिकदोहे प्रसिद्धमिति हिशब्दस्यार्थः । तृतीयभागस्य
प्रयोजनमाह- "प्रजावतीरनमीवा अयक्ष्मा इत्याह प्रजात्यै" (तैब्रा ३. २. १) इति ।
[१९१]वन्ध्यात्वे क्रिमिदोषे रोगान्तरे[१९१] च नास्ति प्रजोत्पत्तिः । तदभावे तु विद्यते । चतुर्थभागस्य

५८-५८. तं२ - 'इय .. त्रिष्टुप्' नास्ति । ५९ त१ तं२. त३. ति. प. व. म. म१ मै४-
अहननार्हा' नास्ति । ६०. मै. मै१. मै३ - घप्रत्यय । ६१. त१. त२. त३ नि. प. व म. म१.
मै४ - 'इकारश्छान्दस' नास्ति । ६२ मै. मै१. मै३ - 'देवभागम्' नास्ति । ६३-६३. त१ तं२.
त३. नि. प. व. म म१. मै४ -'यूय.. ब्राह्मणम्' नास्ति । ६४. मै. मै१ . मै३. मै४ -'व' नास्ति ।

१८९. गो - देवभागः, तं. मै१ - देवान्तरभाग । १९०-१९०. पा. द्वा-दैवतीकरणे मनुष्यो
निवर्तते, इ. उ- दैवतीकरणे मानुष्यो निवर्तते, त. त्रि१. म१. म२-एवकारेण मनुष्यव्यावृत्ति । १९१-१९१.
भा. [illegible] - वन्ध्यात्वेन क्रिमिदोषेण रोगान्तरेण ।

स्तेन ईशत माऽघशंसो रुद्रस्य हेतिः परि वो वृणक्तु

स्तेनः । ईशत । मा । अघशंस इत्यघ–शंसः । रुद्रस्य । हेतिः । परीति । वः । वृणक्तु ।

छन्दसि " (पा ६·१·१०६) इति पूर्वसवर्णदीर्घः[६५] । ऊर्जस्वत्यो बलवत्यः [६६]बहुरसा वा । पयस्वत्यः बहुपयस्काः । असुन्नन्तस्य [६७]आद्युदात्तत्वम् । मतुप्ङीपोरनुदात्तत्वम् । प्रजावत्यः बह्वपत्याः । " उपसर्गे च संज्ञायाम् " (पा ३·२·९९) इति डप्रत्ययस्योदात्तत्वात् कृदुत्तर- ५
पदप्रकृतिस्वरत्वे[६८] प्रजाशब्दः अन्तोदात्तः । [६९-V]अनमीवाः अरोगाः । " शेवयहजिह्वाग्री-वाप्वामीवाः " (उ १६०) इति वन्प्रत्ययान्तो मिनोतेरङ्पूर्वस्यामीवशब्दो निपातितः । अमीवा उदरव्याधिः । तद्रहिता अनमीवाः[-६९] । [V]अयक्ष्माः, यक्ष्मा व्याधिः तद्रहिताः । पृथगुपादानं प्राधान्यात् । " डाबुभाभ्यामन्यतरस्याम् " (पा ४·१·१३) इति [७०]बहुव्रीहेः डाप्[७१] । उभयत्र "नञ्सुभ्याम्" (पा ६·२·१७२) इति [७२]बहुव्रीहौ (पा ६·२·१६२) उच्यमानम् १०
उत्तरपदान्तोदात्तत्वम् । स्तेनः, [७३]स्तेन चौर्ये इति चुरादेरच्[-७३], अपहर्ता मा युष्माकम् ईशत [७४]ईशिष्ट स्ववशान्[७५] युष्मान् मा कार्षीत् । व्यत्ययेन ल्केरड़ादेशः । [७६]किंच – [V]अघशंसः अपि युष्मान् मा ईशिष्ट, मा वो जिघांसीत् । अघे पापे [७७]वधलक्षणे शंसा अभिलाषो यस्य सः[७८] पापतत्परः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । अघशब्दोऽयमन्तोदात्तोऽप्यस्ति, यथा–" अप नः शोशुचदघम् " (तैआ ६·११) इति । [७९]अङ्घते गच्छति दानादिना । आगमशास्त्रस्य अनित्य- १५
त्वात् (व्याडिपरिभाषा७६)न नुम् । पचादित्वादच् (पा ३·१·१३४)। प्रत्ययस्वरेणान्तोदात्तत्वम्॥

प्रयोजनमाह– " मा वः स्तेन ईशत माऽघशंस इत्याह गुप्त्यै " (तैब्रा ३. २. १) इति । चोरव्याघ्रादेरशक्तौ गावो रक्षिता भवन्ति ॥ तृतीयमन्त्रस्यायमर्थः–रुद्रनामकस्य क्रूरदेवस्याऽऽयुधं युष्मान् परिहरत्विति ॥ एतन्मन्त्रपाठफलमाह–" रुद्रस्य हेतिः परि वो वृणक्त्वित्याह। रुद्रादेवैना-स्त्रायते " (तैब्रा ३. २. १) इति ॥ २०

६५. म – °दीर्घत्वम् । ६६. तं१. तं२. तं३. ति. पं. व. म. म१. मै४ – 'बहुरसा वा' नास्ति । ६७. तं१. तं२. तं३. ति. पं. व. म. म१. मै४ – आद्युदात्तत्वे । ६८. मै. मै१. मै३– °स्वरेण । ६९–६९. तं१. तं२. तं३. पं – उदरस्थाः कृमयः तद्रहिताः; ति. व. म. म१. मै४ – अनमीवाः, अमीवाः उदरस्थाः कृमयः तद्रहिताः । ७०. मै. मै३ – 'बहुव्रीहेः' नास्ति । ७१. मै – डापि । ७२. मै. मै१ – 'बहुव्रीहौ' नास्ति । ७३–७३. तं१. तं२. तं३. ति. पं. व. म. म१. मै४ – 'स्तेन चौर्ये इति चुरादेरच्' नास्ति । ७४. तं१. तं२. तं३. ति. पं. व. म. म१. मै४– 'ईशिष्ट' नास्ति । ७५. म. मै. मै१. मै३ – स्ववशाः । ७६. तं१. तं२. तं३. ति. पं. व. म. म१. मै४ – 'किंच' नास्ति । ७७. मै. मै१. मै३ – भक्षणलक्षणे । ७८. मै. मै१. मै३ – नियोगेन सोऽघशंसः । ७९–७९. तं१. तं२. तं३. ति. पं. व. म. म१. मै४ –'अङ्घते...अच' नास्ति ।

ध्रुवा अस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून् पाहि ॥ १ ॥

[ इषे त्रिचत्वारिंशत् ]

ध्रुवाः । अस्मिन् । गोपताविति गो–पतौ । स्यात । बह्वी । यजमानस्य । पशून् । पाहि ॥१॥

[मैस १·१·१, कासं १·१, कपिस १·१, वास १ १ ]

५ अथ[७९] न केवल मनुष्य [८०]एव, अपि तु[८०] देवोऽपि युष्मान् मा हिंसीत् इति तृतीयया [८१]आशास्ते–' रुद्रस्य ' इति ॥ इयं चैकपदा त्रिष्टुप्, " एकद्वित्रिचतुष्पदीत्युक्त-पादम्[८२] " ( पिसू ३·७ ) इति वचनात्। हेति· आयुधम्। [८३]" ऊतियूति" ( पा ३·३·९७ ) इत्यादिना क्तिन्नन्तोऽन्तोदात्तो निपातित. । सा रुद्रस्य हेतिः युष्मान् परि वृणक्तु सर्वतो वर्जयतु[८३] ॥

१० यजमानं ध्यायति [८४]ईक्षते वा[८४]–' ध्रुवा ' इत्यृचा त्रिष्टुभैकपदया॥ [८५]गवा पतिर्गो-पति. यजमानः[८५] । " पत्यावैश्वर्ये " ( पा ६·२·१८ ) इति पूर्वपदप्रकृतिस्वरत्वम्। अस्मिन् यजमाने ध्रुवा. अविनाशा. स्यात भवत, बह्वयश्च सतानवृद्ध्या भवत। " वा छन्दसि " ( पा ६·१·१०६ ) इति पूर्वसवर्णदीर्घता ॥

ध्रुवेति ॥ बौधायन·–" ध्रुवा अस्मिन् गोपतौ स्यात बह्वीरिति यजमानमीक्षते " (बौश्रौ १·१)
१५ इति । आपस्तम्ब. –" ध्रुवा अस्मिन् गोपतौ स्यात बह्वीरिति यजमानस्य गृहानभिपर्यावर्तते " ( आपश्रौ १ २. ९ ) इति ॥ हे गाव , भवत्यो भवत्स्वामिनि यजमाने स्थिरा भवत, [१९२]न तु अनीतिदानापहाराल्पायुर्भि यजमान परित्यजत[१९२], अपत्यपरपरया बह्वयश्च भवत ॥ एतन्मन्त्रपाठे प्रशसति– " ध्रुवा अस्मिन् गोपतौ स्यात बह्वीरित्याह ध्रुवा एवास्मिन् बह्वी करोति " ( तैब्रा ३. २. १ ) इति ॥

२० यजमानस्येति ॥ बौधायन –" अथैता शाखामग्रेणाऽऽहवनीय पर्याहृत्य पूर्वया द्वारा प्रपाद्य जघनेन गार्हपत्यमग्निष्ठेऽनस्युत्तरार्धे वाऽग्न्यागारस्योद्गूहति यजमानस्य पशून् पाहीति " ( बौश्रौ

८०–८०. तु१. त२. त३. ति. प ब. म. म१. मै४ – ' एव, अपि तु ' नास्ति। ८१. तै१. तै२. त३. ति प म म१. मै४ – अनुशास्ति। ८२. ति ब. म. म१ मै४ – °चतुष्पादुक्तम्। [ ' °चतुष्पादुक्तपादम् ' इति पिङ्गलीयच्छन्द सूत्रे।] ८३–८३ त१. त२. त३. ति. प. म. म१ – रुद्रस्य आयुध युष्मान् परिवृणक्तु सर्वतो परिवर्जयतु। परिवर्जनार्थे। ऊतियूतिजूतिसातिहेतिकीर्तयश्चेति क्तिन्नन्तोऽन्तोदात्तो निपातित । ८४–८४ त१. त२. त३ -ति. प ब. [illegible] – ' ईक्षते वा ' नास्ति। ८५–८५. त१ त२. त३. ति. प ब. म म१ – गोपतो गवा पतौ यजमाने, मै४ – गवां पतौ यजमाने।

१९२–१९२. आ. पा – प्रीतिदानानपहारायुर्भिर्यजमान मा त्यजत, [illegible] त्रि१. त्रि३. ब. म१. म२ – न तु प्रीतिदानापहाराल्पायुष्ट्वादिना यजमान परित्यजत, गो. मै१ – न तु प्रतिदानापहाराल्पायुर्भि-र्यजमान परित्यजत।

[86]शाखामुद्गूहति—'यजमानस्य' इति ॥ हे शाखे यजमानस्य पशून् पाहि रक्ष । [87]"तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः" (पा ६.१.१८६) इति [87]लसार्वधातुकानुदात्तत्वे यजमाने धातुस्वरः । "तस्मात् सायं पशवः" (तैब्रा ३.२.१) इत्यादि ब्राह्मणम् ॥ १ ॥

॥ इति प्रथमोऽनुवाकः ॥ ५

---

१. १.) इति । आपस्तम्बः– "यजमानस्य पशून् पाहीत्यग्निष्ठेऽनस्यग्न्यगारे वा पुरस्तात् प्रतीचीं शाखामुपगूहति पश्चात् प्राचीं वा" (आपश्रौ १. २. १०) इति ॥ अग्निष्ठम् अनो व्रीहिरूपस्य हविषो [193]धारकं शकटम् ॥ मन्त्रपाठप्रयोजनमाह– "यजमानस्य पशून् पाहीत्याह । पशूनां गोपीथाय । तस्मात् सायं पशव उपसमावर्तन्ते" (तैब्रा ३. २. १) इति । गोपीथो रक्षणम् । तस्माच्छाखाया रक्षितत्वात् शाखाया भूमौ स्थापनं [194]-निवार्यते । निवारणं तत्फलं-[194] चाऽऽह– १० "अनधः सादयति । गर्भाणां धृत्या अप्रपादाय । तस्माद्गर्भाः प्रजानामप्रपादुकाः" (तैब्रा ३. २. १) इति । उच्चदेशस्थापनं तत्फलं चाऽऽह– "उपरीव निदधाति । उपरीव हि सुवर्गो लोकः । सुवर्गस्य लोकस्य समष्ट्यै" (तैब्रा ३. २. १) इति । इवशब्द एवकारार्थः । समष्टिः सम्यग्व्याप्तिः ॥

अस्मिन्ननुवाके स्थितानां मन्त्राणां विनियोगः संगृह्यते–

"इषे शाखां छिनत्यूर्जे [195]मार्ष्टि वायवेति[195] वत्सकान् ।
अपाकृत्याथ देवो गाः प्रस्थाप्याऽऽप्येति [196]गो स्पृशेत् ॥ १ ॥ १५
रुद्रस्येत्यभिमन्त्र्यैता ध्रुवेति गृहमाव्रजेत् ।
यजेति शाखोपगूह इत्यष्टावनुवाकगाः" ॥ २ ॥ इति ॥
सूत्रद्वयं ब्राह्मणं च [197]विधेयार्थमुदाहृतम् ।
संदेहस्याऽपनुत्यर्थं मीमांसाऽप्यत्र वर्ण्यते ॥ २०

लोके तावद्विचारेण संदेहनिवृत्तिः प्रसिद्धा । वेदेऽपि तत्र तत्र [198]तत्त्वविचारपूर्वकं संदेहापनयनमुपक्रमामहे । तथा हि–अग्न्युपस्थानविषयो[199] विचारः प्रथमकाण्डे पञ्चमप्रपाठके नवमेऽनुवाके श्रूयते– "उपस्थेयोऽग्नी३र्नोपस्थेया३ इत्याहुर्मनुष्यानिन्न्वै योऽहरहराहृत्याऽथैनं याचति स इन्न्वै तमुपार्च्छत्यथ को देवानहरहर्याचिष्यतीति तस्मान्नोपस्थेयोऽथो खल्वाहुराशिषे वै कं यजमानो यजत इत्येषा खलु वा आहिताग्नेराशीर्यदग्निमुपतिष्ठते तस्मादुपस्थेयः" (तैसं १. ५. ९) इति । अस्यायमर्थः– २५ प्रतिदिनं सायं प्रातरग्निहोत्रमनुष्ठाय "उप प्रयन्तो अध्वरम्" (तैसं १. ५. ५) इत्यादिभिः

---

८६. मै. मै१. मै३ – शाखामुपगूहति । ८७–८७. तं. ति. व. म. म१. मै४ – °श्रदुपदेशात् ।

---

१९३. आ. इ. उ. पा. हा – वाहकम् । १९४–१९४. अ. अ१. गो. तं. त्रि१. त्रि२. त्रि३. म१. म३. मै१ – निवार्य तन्निवारणफलम् । १९५–१९५. इ. उ. पा. हा–°त्यनुमार्ष्टि च; म३ – मार्ष्टि वायव; त्रि१ – मार्ष्टि वायवेति । १९६. आ. इ. उ. त्रि१ – गाः । १९७. म३ – विध्यार्थम् । १९८. अ. अ१. गो. तं. त्रि१. त्रि२. व. म१. म३. मै१ – 'तत्त्व°' नास्ति । १९९. आ. पा. हा – °विषये विवादे; क – °विषयविवादे ।

मन्त्रैरग्निप्रार्थनलक्षणमुपस्थानं कर्तव्यं न वेति संशयः । न कर्तव्यमिति तावत् प्राप्तम् । कुतः ?[२००]उप-
स्थानेन अग्नेरुपद्रवप्रसङ्गात् । तथा हि—" आयुर्दा अग्नेऽस्यायुर्मे देहि वर्चोदा अग्नेऽसि वर्चो मे देहि
तनूपा अग्नेऽसि तनुव मे पाहि " ( तैसं १ ५. ५ ) इत्यादिषूपस्थानमन्त्रेष्वायुरादीनि बहूनि
याच्यन्ते । तत्र यजमानः स्वल्पं हविर्दत्त्वा बहूनि याचमानः कथमग्निं न बाधेत ? लोकेऽपि[२०१]
५ यः कश्चिद्दरिद्रो मनुष्यो यत्किंचिज्जम्बीरफलादिकं मनुष्यायैव राज्ञे [२०२]"प्रतिदिनमुपायनमानीय"[२०२]
दत्त्वा तं राजानं प्रति सहस्रसंख्याकं धनं [२०३]याचति । स याचकस्तं राजानं पीडयत्येव । स च
राजा [२०४]तस्मै कुप्यति । यदा मनुष्येष्वप्येवं तदा को नाम [२०५]अग्न्यादिदेवान् [२०६]अमेयप्रभावान्
प्रतिदिनं याचितु धृष्टो भवेत् ? तस्मादग्निर्नोपस्थेय इति पूर्वपक्षे प्राप्ते राद्धान्तोऽभिधीयते—इदं मे
भूयादिदं मे भूयादित्येवं स्वाभीष्टमखिलमाशासितुमेव यजमानः प्रजापतिरूपमिममग्निं यजते ।
१० आहिताग्नेर्यजमानस्य मन्त्रैरुपस्थानमेवाऽऽशीः । न चाऽत्र हविषः [२०७]"अल्पत्वं शङ्कनीयं"[२०७]
मन्त्रसामर्थ्येन वर्धमानत्वात् । तथा च श्रूयते—" धान्यमसि धिनुहि देवानित्याह । एतस्य यजुषो
वीर्येण । यावदेका देवता कामयते यावदेका । तावदाहुतिः प्रथते । न हि तदस्ति । यत्तावदेव
स्यात् । यावज्जुहोति " ( तैब्रा ३.२ ६ ) इति । तस्मात् मनुष्याणां क्रयविक्रयाविव यजमान-
देवतयोः यागतत्फले[२०८] विश्रम्भेण[२०९] व्यवहर्तुं शक्यते[२१०] । अत एव भगवद्गीतायां तृतीयाध्याये
१५ कर्मानुष्ठानप्रसङ्गेन[२११] स्मर्यते—" देवान् भावयतानेन ते देवा भावयन्तु वः । परस्परं भावयन्तः
श्रेयः परमवाप्स्यथ ॥ " ( भगवद्गीता ३.११ ) इति । तस्मात् हविषो जम्बीरफलादिवैलक्षण्येन[२१२]
उक्तदोषाभावादग्निरुपस्थेय एवेति राद्धान्तः[२१३] । एतमेव[२१४] द्रढयितुं याचकस्येव राज्ञ इव देवतायाः
कोपप्रसङ्गो नास्तीत्यभिप्रेत्य श्रूयते—" न तत्र जाम्यस्तीत्याहुर्योऽहरहरुप तिष्ठते " ( तैसं १.५ ९ )
इति । तथा पञ्चमकाण्डस्य पञ्चमप्रपाठके प्रथमानुवाकेऽग्निचयनगतस्य कस्यचित् पशोर्देवताविशेषो
२० विचारितः—" वायव्यः कार्या३ प्राजापत्या३ इत्याहुर्यद्वायव्य कुर्यात् प्रजापतेरियात् " ( तैसं
५ ५.१ ) इति । तत्रैव तृतीयाऽनुवाके चीयमानस्याऽग्नेरधोमुखत्वमूर्ध्वमुखत्वं वेति विचारितम्—
" ब्रह्मवादिनो वदन्ति न्युब्जमिष्टकान्याइ उत्ताना३ इति " ( तैसं ५ ५.३ ) । षष्ठकाण्डस्य[२१५]
प्रथमप्रपाठके चतुर्थाऽनुवाके होमो विचारित —" ब्रह्मवादिनो वदन्ति होतव्य दीक्षितस्य गृहा३इ
न होतव्या३मिति " ( तैसं ६.१.४ ) इति । तत्रैव नवमानुवाके[२१६] क्रेतव्ये सोमे पतितं[२१७]
२५ तृणादिकमपनेय न वेति विचारितम्—" ब्रह्मवादिनो वदन्ति विचित्य सोमा३ न विचित्या३
इति " ( तैसं ६.१ ९ ) इति । तस्मिन्नेव काण्डे तृतीयप्रपाठकेऽष्टमानुवाकेऽध्वर्युयजमानयोः पशुस्पर्शो

~~~~~~~~~~~~~~~~~~~~

२०० इ. उ – अग्न्युपस्थानेन । २०१ आ. पा – लोके हि । २०२-२०२. इ. उ पा. हा – प्रतिदिनमुपनीय । २०३ गो-याचते । २०४ आ. इ. उ, तं. त्रि१. त्रि२ पा मै१. हा – तम् । २०५. गो. क. त्रि१. त्रि२. व – अग्न्यादीन् देवान् । २०६. गो क. तं. त्रि१. त्रि२ व मै१ – महाप्रभावान् । २०७-२०७. त्रि२ व – अल्पत्वमेवाशङ्कनीयम् , त्रि१ – अल्पत्वमुपाशङ्कनीयम् । २०८ गो- यागतत्फल°, इ. उ – यागफले, त्रि१– यागतत्फलयो । २०९. गो – विशेषश्रवणेन । २१०. आ. क. गो त्रि१. पा – शक्यते । २११. अ. गो१. त्रि१. त्रि२. व. मै१ – °ष्ठानकर्तव्यताप्रसङ्गे, इ. उ. पा. [illegible] – °ष्ठानप्रसङ्गे, क – °ष्ठानकर्तव्यताप्रसङ्गेन, त – °ष्ठानकर्तव्यताप्रसङ्गे । २१२ आ. इ. उ. पा – °वैषम्येण । २१३. आ. इ उ पा – सिद्धान्त । २१४ आ. क– एतदेव । २१५. इ. उ. हा – षष्ठाष्टकस्य, पा – ' षष्ठकाण्डस्य ' नास्ति । २१६ इ. उ. हा – नवमेऽनुवाके, पा – ' नवमानुवाके' नास्ति । २१७ आ. क – पतित°, पा – 'पतितम्' नास्ति ।
~~~~~~~~~~~~~~~~~~~~

विचारितः—"ब्रह्मवादिनो वदन्त्यन्वारभ्यः पशू३र्नान्वारभ्या३ इति" (तैसं ६·३·८) इति। तत्रैव[218] पञ्चमे प्रपाठके नवमानुवाके सोमयागस्य तृतीयसवने हारियोजननामकं ग्रहं प्रति होमो विचारितः—"तं व्यचिकित्सज्जुहवानी३मा हौषा३मिति" (तैसं ६·५·९) इति। तत्रैव षष्ठप्रपाठके द्वितीयानुवाके देवभागनामकं मुनिं प्रति सात्यहव्यनामको मुनिः पप्रच्छ। यज्ञाङ्गे "देवाः गातुविदः" (तैसं १·४·४४) इत्येतन्मन्त्रहोमे सोमयागं समापितवानसि यजमाने वेति[219] ५ प्रश्नार्थः। स प्रश्न एवं श्रूयते—"वासिष्ठो ह सात्यहव्यो देवभागं पप्रच्छ यत् सृञ्जयान् बहुयाजिनोऽयीयजो यज्ञे यज्ञं प्रत्यतिष्ठिपा३ यज्ञपता३विति स होवाच यज्ञपताविति" (तैसं ६·६·२) इति। सप्तमकाण्डस्य प्रथमप्रपाठके सप्तमानुवाके गर्गत्रिरात्रनामकस्य यागस्य दक्षिणारूपे गोसहस्रे चरमधेनोरनुगमनं न[220] वेति विचारितम्—"सहस्र३ सहस्रतम्यन्वेती३ सहस्रतमी३ सहस्रा३मिति" (तैसं ७·१·७) इति। तत्रैव[221] पञ्चमप्रपाठके सप्तमानुवाके गवामयनविकृतिरूपस्योत्सर्गिणामयनस्य १० संबन्धि किंचिदहः परित्याज्यं न वेति विचारितम्—"उत्सृज्यां३ नोत्सृज्या३मिति मीमांसन्ते ब्रह्मवादिनस्तद्वाहुरुत्सृज्यमेवेत्यमावास्यायां च पौर्णमास्यां चोत्सृज्यमित्याहुः" (तैसं ७·५·७) इति। एवं ब्राह्मणान्तरेऽपि विचारा उदाहरणीयाः। तदेवं वेदवादिनां विचारपूर्वकेऽर्थनिर्णये तात्पर्यातिशयदर्शनात् सर्वोऽपि वेदार्थो विचार्य निर्णेतव्य[222] इत्यवगम्यते। तथा सति पुनः संशयो नोदेष्यति[223]। अन्यथा कदाचित् स्वबुद्धौ पूर्वपक्षयुक्तिप्रतिभाने सति विपरीतनिर्णयः संशयो वा १५ प्रसज्येत। अत एवोक्तम्—"धर्मे प्रमीयमाणे हि वेदेन करणात्मना। इतिकर्तव्यताभागं मीमांसा पूरयिष्यति"* ॥ इति। स्मृतिरपि—"आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः" ॥ (मनु १२·१०६) इति। आर्षं ब्रह्मज्ञानम्। तस्मात्[224] जैमिनिबादरायणाभ्यां मीमांसा प्रवर्तिता। येषु वाक्येषु संशयो नास्ति तेष्वपि मीमांसया किंचिदपूर्वं व्यज्यते। अत एव स्मर्यते—"यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम्। तावुभौ पुण्यकर्माणौ पङ्क्तिपावनपावनौ"‡॥ २० इति। तस्मादस्माभिस्तत्तदनुवाकेषु संभावितमीमांसोदाह्रियते ॥

प्रथमं तावत् सर्ववेदसाधारणान् विचारान् उदाहरिष्यामः[225]। यदुक्तम्—"अलौकिकार्थबोधको वेदः" इति, तत्र वेदार्थो द्विविधो धर्मो ब्रह्म च। तयोर्धर्मं प्रति विचारितम्—

"प्रत्यक्षादिभिरप्येष गम्यते विधिनैव[226] वा।
अक्षादीनां प्रमाणत्वान्मेयो धर्मोऽवभासते ॥ २५
वर्तमानैकविषयमक्षं धर्मस्तु भाव्यसौ[227]।
अक्षमूलोऽनुमानादिस्तेन विध्येकमेयता" ॥ (जैन्या १·१·४५-४६) इति ॥

स्पष्टोऽर्थः ॥

ब्रह्मतत्त्वं [228]प्रत्यप्येवं विचारितम्—

"अस्त्यन्यमेयताऽप्यस्य किं वा वेदैकमेयता। ३०
घटवत् सिद्धवस्तुत्वाद्ब्रह्मान्येनापि मीयते ॥

२१८. आ. इ. उ – तस्यैव; पा– 'तत्रैव' नास्ति। २१९. पा – 'वेति' नास्ति; इ. उ – न वेति। २२०. तं. त्रि१. व. मै१ – पुरोगमनम्; पा – 'न' नास्ति। २२१. इ. उ. हा – अत्रैव। २२२. इ. उ – वर्णितव्यः। २२३. उ– नावतरतीति; पा– नावतरतीति। * [ भट्टवार्तिककृतः श्लोकोऽयमिति मनुस्मृतौ (१२·१०६) कुल्लूकः। ] २२४. आ. पा–तस्य। ‡ [ मनोरयं श्लोक इति मीमांसासूत्रे (१·३·२४-२९) कुमारिलः ] २२५. गो. तं. त्रि१. व– उदाहरामः। २२६. आ–विधिनाऽथ। २२७. आ – भाव्यते; इ. उ. पा. हा – नेदृशः। २२८. व– प्रत्येवम्; आ. पा – प्रत्यपि।

रूपलिङ्गादिराहित्याद्यास्य मान्तरयोग्यता ।
त्वौपनिषदेत्यादौ प्रोक्ता वेदैकमेयता " ॥ ( वैन्या १·१·१७·१८ ) इति ॥

" तं त्वौपनिषदं पुरुषं पृच्छामि " ( बृउ ३ ९·२६ ) इति याज्ञवल्क्यः शाकल्यं पप्रच्छ । तत्रोपनिषत्स्वेव अधिगतः[229] पुरुष औपनिषदः । आदिशब्देन " नावेदविन्मनुते तं बृहन्तम् " ( तैब्रा ३·१२·९ ) इति श्रुतिर्विवक्षिता । तस्मादलौकिकार्थबोधको वेदः ॥

तस्य प्रामाण्यं विचारितम्—

" वेदवाक्यममानं स्यान्मानं वा नास्य मानता ।
पृथक् सङ्केतवीक्षायामनपेक्षत्ववर्जनात् ॥
वेदेऽपि लोकवच्चैव वाक्यार्थे संगतिं पृथक् ।
अगृहीत्वैव ततो वाक्यं प्रमाणं नैरपेक्ष्यतः "॥ ( जैन्या १·१·५१–५२ ) इति ॥

"अग्निमीळे पुरोहितम्" (ऋस १·१·१), "इषे त्वा" (तैसं. १·१·१) इत्यादि पदानां पृथक्सङ्केतापेक्षैः स्वार्थैः सह संगतिर्वृद्धव्यवहारैर्गृहीतेति पदार्था बुध्यन्ते। ज्योतिष्टोमादिवाक्यस्य सत्यज्ञानादिवाक्यस्य च स्वार्थाभ्यां धर्मब्रह्मभ्यां संगतेरगृहीतत्वादस्ति पृथक्सङ्केतापेक्षा [230]इत्यनपेक्षत्वलक्षणं प्रामाण्यं नास्तीति चेत् । नैवम् । लोके तावत् गवादिपदानामेव स्वार्थे संगतिर्गृह्यते, न तु 'गामानय' इत्यादिवाक्यानाम् । तथाऽपि वाक्यार्थो बुध्यत एव । तद्वद्वेदेऽपि [231]बोधसंवादस्यैव नैरपेक्ष्यम् ॥

वृद्धव्यवहारे लौकिकयोरेव पदपदार्थयोः संगतिर्गृह्यते, न तु वैदिकयोरिति शङ्कां निवारयितुं विचार्यते । इदं विचारितम्—

" लोके पदपदार्थौ यौ न तौ वेदेऽथ वाऽत्र तौ ।
रूपभेदात् पदं भिन्नमुत्तानादिभिदा स्फुटा ॥
[232]वर्णैक्यात् [233]पदैकत्वं [234]क्वाचित्की रूपभिन्नता[234] ।
[235]प्रायिकेण पदैक्येन[235] पदार्थैक्यं तथाविधम् "॥(जैन्या १·३·३१–३२)इति॥

वैदिकौ[236] पदपदार्थौ लौकिकाभ्यां भिन्नौ । कुतः ? रूपभेदात् । 'ब्राह्मणाः' इति लौकिकपदस्य रूपं वेदे "ब्राह्मणासः पितरः" (ऋस ६ ७५ १०) इत्याम्नायते । अर्थभेदोऽप्यस्ति । अवाञ्चो लौकिका गावो वहन्ति, वेदे "उत्ताना हि[237] देवगवा वहन्ति"(द्र. आपश्रौ ११ ७·६)इति श्रुतम् । अत्रोच्यते–य एव लौकिकाः पदपदार्थास्त एव वैदिकाः । कुतः ? प्रत्यभिज्ञानात्[238]। यथा प्रयोक्तॄणां[239] पुरुषाणां भेदेऽप्येकैकपुरुषस्य बहुकृत्व [240]उच्चारणभेदेऽपि त एवैते वर्णा इत्यबाधितप्रत्यभिज्ञानाद्वर्णैकत्वं [241]तच्छास्त्रविदादिभिरभ्युपगतम् । तथा [242]गवाश्वादिपदानां लोकवेदयोरबाधितप्रत्यभिज्ञानात् पदैकत्वम् । [243]क्वाचित्को रूपभेदो बहुतरप्रत्यभिज्ञया बाध्यते । उत्तानवहनाद्यर्थभेदश्च क्वाचित्कः ।

२२९. गो-अभिहित । २३०. त्रि१ – तस्मादनपेक्षत्व° । २३१ इ उ. पा द्वा– 'बोध°' नास्ति । २३२. इ उ. गो पा. द्वा – वर्णैक्यवत् । २३३ गो– पदैक्यम् । २३४–२३४. गो – क्वचिद्रूपविभिन्नता । २३५–२३५ इ उ पा द्वा – प्रायिकैक पदैकेन । २३६ इ. उ पा. द्वा – वैदिक° । २३७. इ. उ तं त्रि१ – वै । २३८. इ उ. पा – प्रत्यभिज्ञानेन । २३९. इ उ. पा द्वा – प्रयोगाणाम् । २४० इ. उ पा. द्वा – उच्चावचोच्चारण° । २४१ इ उ. त. त्रि१. पा द्वा – नित्यत्व° । २४२. क – गवाश्वादि° । २४३. इ उ पा [illegible] – क्वचित् ।

कश्चिदुत्तानशब्दवहनशब्दयोस्तदर्थयोश्च भेदो नास्ति । [२४४]तस्मात् वेदे पृथग्व्युत्पत्तिर्नापेक्षिता । तथा चोक्तम्— " लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः " इति ॥

[२४५]कर्तृदोषेण अप्रामाण्यं निवारयितुमिदं विचारितम्—

" पौरुषेयं न वा वेदवाक्यं स्यात् पौरुषेयता ।
काठकादिसमाख्यानात् वाक्यत्वात् चान्यवाक्यवत् ॥
समाख्यानं प्रवचनात् वाक्यत्वं तु पराहतम् ।
तत्कर्त्रनुपलम्भेन स्याचततोऽपौरुषेयता " ॥ ( जैन्या १·१·५३–५४ ) इति ॥

'वाल्मीकीयं, वैयासिकम्[२४६]' इत्यादिसमाख्यानात् रामायणभारतादिकं यथा पौरुषेयं, तथा 'काठकं, कौथुमं, तैत्तिरीयम्' इत्यादि समाख्यानाद्वेदः पौरुषेयः। किंच वेदवाक्यं पौरुषेयम्। वाक्यत्वात्। [२४७]कालिदासादिवाक्यवत्, इति चेत्। मैवम्। संप्रदायप्रवृत्त्या समाख्यानोपपत्तेः। वाक्यत्वहेतुस्त्वनुपलब्धिविरुद्धकालात्ययापदिष्टः। यथा व्यासवाल्मीकिप्रभृतयोऽत्र तत्तद्ग्रन्थनिर्माणावसरे कैश्चिदुपलब्धा अस्मैरप्यविच्छिन्नसंप्रदायेनोपलभ्यन्ते, न तथा वेदकर्ता पुरुषः कश्चिदुपलब्धः। प्रत्युत वेदस्य नित्यत्वं श्रुतिस्मृतिभ्यां पूर्वमुदाहृतम्। परमात्मा तु वेदकर्ताऽपि न लौकिकः पुरुषः। तस्मात् कर्तृदोषाभावात् [२४८]नास्त्याप्रामाण्यशङ्का। तेष्वेतेषु विचारेषु ब्रह्मणो मानान्तरागोचरत्वं वैयासिके शास्त्रे प्रथमाध्यायप्रथमपादे " शास्त्रयोनित्वात् " ( ब्रसू. १·१·३ ) इत्यस्य सूत्रस्य द्वितीयवर्णकेऽभिहितम्। अवशिष्टं तु जैमिनीये। तत्रापि लोकवेदाधिकरणं[२४९] प्रथमाध्यायस्य तृतीयपादे, इतरत् प्रथमपादे। तस्यैतस्य प्रमाणभूतस्य वेदस्य स्वरूपं [२५०]कल्पसूत्रकार आह[२५०]– 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' ( आपश्रौ २४·१·३१ ) इति। तयोर्मध्ये मन्त्रसामान्यस्य मन्त्रविशेषाणाम् ऋगादीनां च लक्षणं द्वितीयाध्यायस्य प्रथमपादे विचारितम्—

" अहे बुध्निय मन्त्रं म इति मन्त्रस्य लक्षणम् ।
नास्त्यस्ति वाऽस्य नास्त्येतदव्याप्त्यादेरवारणात् ॥
याज्ञिकानां समाख्यानं लक्षणं दोषवर्जितम् ।
तेऽनुष्ठानस्मारकादौ मन्त्रशब्दं प्रयुञ्जते " ॥ ( जैन्या २·१·२२–२३ ) इति ॥

आधानप्रकरण इदमाम्नायते—"अहे बुध्निय मन्त्रं मे गोपाय" ( तैब्रा १·२·१ ) इति। तत्र मन्त्रस्य लक्षणं नास्ति। कुतः? अव्याप्त्यतिव्याप्त्योर्वारयितुमशक्यत्वात्। 'विहितार्थस्याभिधायको मन्त्रः' इत्युक्ते " वसन्ताय कपिञ्जलानालभेत ( द्र. मैसं ३·१४·१; वासं २४·२० ) इत्यस्य मन्त्रस्य विधिरूपत्वादव्याप्तिः। मननहेतुर्मन्त्र इत्युक्ते ब्राह्मणेऽतिव्याप्तिरिति चेत्। मैवम्। याज्ञिकसमाख्यानस्य निर्दोषलक्षणत्वात्। तच्च समाख्यानमनुष्ठानस्मारकादीनां मन्त्रत्वं गमयति। " उरु प्रथस्व " ( तैसं १·१·८ ) इत्यादयोऽनुष्ठानस्मारकाः। " अग्निमीळे पुरोहितम् " ( ऋसं १·१·१ ) इत्यादयः स्तुतिरूपाः। " इषे त्वा " (तैसं १·१·१) इत्यादयस्त्वान्ताः। " अग्न आ याहि वीतये " ( तैब्रा ३·५·२ ) इत्यादय आमन्त्रणोपेताः। एवमन्येऽप्युदाहार्याः। ईदृशेष्वत्यन्तविजातीयेषु समाख्यानमन्तरेण नान्यः कश्चिदनुगतो धर्मोऽस्ति यस्य लक्षणत्वमुच्येत। तस्मात् समाख्यानं मन्त्रलक्षणम् ॥

---

२४४. तं. त्रि१ – 'तस्मात्' इत्यस्यानन्तरं 'भेदात्'। २४५. तं, त्रि१. व – कर्तृदोषात्। २४६. इ. उ. तं. त्रि१. पा. हा – वैयासिक्यम्; क– वैयासिकीयम्। २४७. इ. उ. पा. हा– कालिदासवाक्यवत्। २४८. त्रि१ – नास्त्यप्रामाण्य°। २४९. इ. उ. तं– °करणे। २५०–२५०. आ. इ. उ. पा. हा – कल्पसूत्रकारकृतम्।

ऋगादिलक्षणे पूर्वोत्तरपक्षावाह—

" [251]-ऋक्सामयजुषां लक्ष्म सांकर्यादिति-[251] शङ्किते ।
पादश्च गीतिः प्रश्लिष्टपाठ इत्यसंकरः." ॥ ( जैन्या २·१·२७ ) इति ॥

इदमाम्नायते—" अहे बुध्निय मन्त्रं मे गोपाय । यमृषयस्त्रैविदा विदुः । ऋचः सामानि
५ यजूꣳषि " ( तैब्रा ३·२·१ ) इति । त्रीन् वेदान् विदन्तीति त्रिविद् । त्रिविदां सम्बन्धिनोऽध्ये-
तारस्त्रैविदा । ते च य मन्त्रभागमृगादिरूपेण त्रिविधं विदुस्तं त्वं गोपायेति योजना । त्रिविधा-
नामृक्सामयजुषां व्यवस्थितं लक्षणं नास्ति । कुतः ? सांकर्यस्य दुष्परिहार्यत्वात् । अध्यापकप्रसिद्धेषु
ऋग्वेदादिषु पठितो मन्त्र [252]-ऋगादिरूप इति-[252] वक्तव्यम् । तच्च संकीर्णम् । तथा हि—" अग्नये
मथ्यमानायानुब्रूहि " ( ऐब्रा १·१६ ), " [253]-हविर्धानाभ्यां प्रोह्यमाणाभ्यामनुब्रूहि " ( ऐब्रा १·२९ )
१० इत्यादीनि-[253] यजूꣳषि ऋग्वेदे समाम्नातानि । " देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः
सूर्यस्य रश्मिभिः " ( तैसं १·१·५ ) इत्ययं मन्त्रो यजुर्वेदे संप्रतिपन्नयजुषां मध्ये पठितः । न च
तस्य यजुष्ट्वमस्ति ऋग्रूपत्वेन तद्ब्राह्मणे व्यवहृतत्वात् । " *सावित्रियर्चा " ( तैब्रा ३·२·५ ) इति हि
ब्राह्मणम् । " एतत्साम गायन्नास्ते " इति प्रतिज्ञाय—" हाउ३वु हाउ३वु " ( तैआ ९·१० ) इत्यादिकं
साम यजुर्वेदे गीतम् । " अक्षितमसि । अच्युतमसि । प्राणसंशितमसि " ( छाउ ३·१७·६ ) इति
१५ त्रीणि यजूꣳषि सामवेदे समाम्नायन्ते । तस्मान्नास्तिलक्षणमिति चेत् । न । पादादीनामसंकीर्णलक्षण-
त्वात् । पादेनार्धर्चेन चोपेता वृत्तबद्धा मन्त्रा ऋचः , गीतिरूपा[254] मन्त्राः सामानि, वृत्तगीतिवर्जित-
त्वेन प्रश्लिष्टपठिता मन्त्रा यजूꣳषि इति व्यवस्थितं लक्षणम् ॥

प्रथमाध्यायस्य द्वितीयपादे मन्त्रेष्वन्यद्विचारितम्—

" मन्त्रा उरु प्रथस्वेति किमदृष्टैकहेतवः ।
२० यागेषूत पुरोडाशप्रथनादेश्च भासकाः ॥
ब्राह्मणेनापि तद्भानात् मन्त्राः [255]पुण्यैकहेतवः ।
न तद्भानस्य दृष्टत्वाद्दृष्टं वरमदृष्टतः " ॥ ( जैन्या १·२·११–१२ ) इति ॥

" उरु प्रथस्व " ( तैसं १·१·८ ) इत्ययं कश्चिन्मन्त्रः । तस्यायमर्थः —भो पुरोडाश, त्वमुरु
विपुलं यथा भवति तथा कपालेषु प्रथस्व प्रसरेति । ईदृशा मन्त्रा यागप्रयोगेषूच्चार्यमाणा अदृष्टमेव
२५ जनयन्ति न [256]त्वर्थप्रकाशनाय तदुच्चारणम्[257] । पुरोडाशप्रथनरूपार्थस्य ब्राह्मणवाक्येनापि
[258]भासमानत्वात् । " उरु प्रथस्वेति पुरोडाशं प्रथयति " इति हि ब्राह्मणवाक्यमिति चेत् ।
नैतद्युक्तम् । अर्थप्रकाशनस्य[259] दृष्टप्रयोजनस्य संभवे सति केवलादृष्टस्य कल्पयितुमशक्यत्वात् ।
तस्मात् [260]दृष्टमर्थानुस्मरणमेव यागप्रयोगे मन्त्रोच्चारणस्य प्रयोजनम् । ब्राह्मणवाक्येनाप्यर्थानुस्मरण-

२५१-२५१. इ. उ. पा. ह —ऋक्सामयजुषां लक्ष्म किं कुर्यादिति । २५२-२५२. ख– ऋगादिरिति
हि लक्षणम् । २५३-२५३ इ उ. पा. हा–इति हविर्धानस्य प्रोह्यमाणस्यानुब्रूहीति प्रभृतीनि । * [ लिखित-
पुस्तकेषु –'सावित्र्यर्चा' ] २५४. आ. इ. उ. पा. हा–गीत्युपेता । २५५ इ उ पा. हा–दृष्टैक° । २५६. इ. उ.
पा–त्वर्थप्रकाशनानि, तं– तु दृष्टप्रकाशनाय । २५७ इ. उ पा– उच्चारणं विनापि, हा– तदुच्चारणं विनापि ।
२५८. आ इ उ. पा – सिद्धे , त्रि१ व – भासनात् । तथा हि अग्नये मथ्यमानायानुब्रूहि हविर्धानाभ्यां
प्रोह्यमाणाभ्यामनुब्रूहि इत्यादीनि यजूꣳषि ऋग्वेदे समाम्नातानि । २५९. इ. उ. पा, हा – अर्थप्रकाशस्य,
तं– अर्थप्रकाशनस्य । २६० इ उ, उ. पा, हा– दृष्टार्थानुस्मरणमेव ।

संभवे 'मन्त्रेणैवानुस्मरणीयम्'इति यो नियमः [261]तददृष्टं प्रयोजनमस्तु। ननु [262]मन्त्रेष्व अनुष्ठेयार्थस्मारकत्वं क्वचित् [263]व्यभिचरितम्। तथा हि–" दिवो वा विष्णवुत वा पृथिव्या महो वा विष्णवुत वाऽन्तरिक्षाद्धस्तौ पृणस्व बहुभिर्वसव्यैरा प्र यच्छ दक्षिणादोत सव्यात्[264]" ( तैसं १.२.१३ ) इत्यस्मिन् मन्त्रे धनमाशास्त [264]इत्ययमर्थः प्रतीयते। अनुष्ठेयार्थस्तु शकटस्थापनाय[265] आधारभूतकाष्ठस्यापनम्। तत्तु ब्राह्मणेन विधीयते—" दिवो वा विष्णवुत वा पृथिव्या इत्याशीर्पदयर्चा दक्षिणस्य हविर्धानस्य मेथीं नि हन्ति " ( तैसं ६.२.९ ) इति। नायं दोषः। अस्याधिकरणस्य लिङ्गविनियोगविषयत्वात्। उदाहृतस्तु मन्त्रः श्रुत्या विनियुज्यते ॥

द्वितीयाध्यायस्य प्रथमे पादे मन्त्रेष्वन्यद्विचारितम्—

" देवांश्च याभिर्यजत इत्याख्यातं तु मन्त्रगम्।
विधायकं न वाऽन्येन [266]समत्वात् तद्विधायकम्[266] ॥
[267]यच्छब्दादेः क्षीणशक्तित्वं विधिश्चित्रिवं ततः।
[268]आख्यातमभिधानं च प्रधानगुणकर्मणो " ॥ ( जैन्या २.१.२०-२१ ) इति ॥

अयं मन्त्र आम्नायते—" देवाꣳश्च याभिर्यजते ददाति च। ज्योगित्ताभिः सचते गोपतिः सह " ( तैब्रा २.४.६ ) इति। अयमर्थः—गोपतिर्यजमानो याभिर्गोभिर्देवान् यजते, याश्च गा ब्राह्मणेभ्यो ददाति [269]चिरमेव ताभिः[269] सह परलोकेऽवतिष्ठत इति। तत्र यथा ब्राह्मणगताख्यातपदं प्रधानगुणकर्मणोरन्यतरस्य [270]विधायकं तथा मन्त्रगतमपीति चेत्। नैवम्। यच्छब्दादिना विधिशक्तेः क्षीणत्वात्। सति हि यच्छब्दे तस्य वाक्यस्यानुवादकत्वं प्रतीयते न तु विधायकत्वम्। यच्छब्दादेरित्यादिशब्देनाऽऽमन्त्रणोत्तमपुरुषादयः। " वायवः स्थोपायवः स्थ " इत्यामन्त्रणम्। " अग्नये जुष्टं निर्वपामि " ( तैसं १.१.४ ) इत्युत्तमपुरुषः। तस्मादाख्यातस्य प्रधानकर्मविधायकत्वं गुणकर्मविधायकत्वं चेत्येवं द्वावेव प्रकारौ न भवतः। किं [271]त्वभिधायकत्वमिति[271] तृतीयोऽपि प्रकारः। ततो मन्त्रगतमाख्यातं न विधायकम्। प्रधानगुणकर्मणोस्तु लक्षणं वक्ष्यते। एवमेतैर्विचारैरयं निर्णयः प्रकृते संपन्नः—" इषे त्वोर्जे त्वा ", " ब्रह्मविदाप्नोति परम् " ( तैआ ८.२ ) इति काण्डद्वयप्रतिपाद्यार्थो न मानान्तरगम्यः। काण्डद्वयगतवाक्यस्य नास्ति पृथक् संकेतापेक्षा। तत्रत्यौ पदपदार्थौ लौकिकावेव। तद्वाक्यं च न पौरुषेयम्। अभियुक्तसमाख्यानं मन्त्रस्य लक्षणम्। प्रश्लिष्टपाठो मन्त्रविशेषस्य यजुषो लक्षणम्। [272]मन्त्रस्य च अनुष्ठानकाले स्वार्थस्मरणं[272] प्रयोजनम्। मन्त्रगतं च " वायवः स्थ ", " सविता प्रार्पयतु " इत्यादिकं न विधायकमिति ॥

इत्थं मन्त्रे सामान्यं विचार्य विशेषो विचार्यते—

" इषे त्वादिर्मन्त्र एको भिन्नो वैकः क्रियापदे।
असत्यार्थस्मारकत्वादेकादृष्टस्य कल्पनात् ॥

---

२६१. हा– तस्मात् दृष्टासंभवाददृष्टम् ; इ. उ. पा– तस्माददृष्टम्। २६२. तं. त्रि१ – मन्त्राणाम्। २६३. आ. पा – अनुपपन्नम्। २६४. आ. पा– इत्यर्थः। २६५. ग – शकटे विशेषस्थापनाय; इ. उ. त्रि१. पा. हा – शकटविशेषस्थापनाय; तं – शकटविशेषज्ञापनाय। २६६–२६६. इ. उ. पा. हा – समवायात् विधायकम्। २६७. इ. उ. पा – यच्छब्दादौ। २६८. इ. उ. पा. हा– आख्यानमभि°। २६९–२६९. इ. उ. पा. हा– चिरमेताभिः। २७०. पा. हा– अभिदायकम्। २७१–२७१. तं. त्रि१– °त्वभिधायकत्वमपीत्यस्ति। २७२–२७२. आ. पा – निर्दोषत्वात् मन्त्रस्य स्वार्थानुष्ठानकाले स्वार्थस्मारकत्वम् ; क– निर्दोषत्वादिति मन्त्रस्य स्वार्थानुष्ठानकाले स्वार्थस्मारणम्।

छेदने मार्जने चैतौ विनियुक्तौ क्रियापदे ।

अध्याहृते स्मारकत्वात् मन्त्रभेदोऽर्थभेदतः " ॥ ( जैन्या २·१·३२–३३ ) इति ॥

" इषे त्वोर्जे त्वा " इत्यत्र क्रियापदाभावेन " उरु प्रथस्व " इति मन्त्रवदर्थस्मारकत्वाभावाद-दृष्टार्थत्वे सत्येकादृष्टकल्पने लाघवादेक एव मन्त्र इति चेत्। मैवम्। शाखान्तरे—" इषे त्वेत्या-
५ छिनत्ति। ऊर्जे त्वेत्यनुमार्ष्टि " इति विनियोगभेदश्रवणात्, तदनुसारेण ' इषे त्वेत्याछिनद्मि, ऊर्जे त्वेत्यनुमार्ज्मि ' इति क्रियापदे अध्याहृते सति [२७३]अर्थद्वयस्मारकत्वात् भिन्नोऽयं मन्त्रः॥

अथ ब्राह्मणविषया विचाराः । तल्लक्षणं द्वितीयाऽध्यायप्रथमपादे विचारितम्—

" नास्त्येतद्ब्राह्मणेत्यत्र लक्षणं विद्यतेऽथ वा ।

नास्तीयन्तो वेदभागा इति क्लृप्तेरभावतः ॥

१० मन्त्रश्च ब्राह्मणं चेति द्वौ भागौ तेन मन्त्रतः ।

अन्यद्ब्राह्मणमित्येतद्भवेद्ब्राह्मणलक्षणम् " ॥ ( जैन्या २ १·२४–२५ ) इति ॥

चातुर्मास्येष्विदमाम्नायते—" एतद्ब्राह्मणान्येव पञ्च हवींषि " ( तैब्रा १·७·१·१ ) इति । तत्र ब्राह्मणस्य लक्षणं नास्ति। कुतः । वेदभागानामियत्ताऽनवधारणेन ब्राह्मणभागेऽन्यभागेषु च लक्षणस्य अव्याप्त्यतिव्याप्त्यो [२७४]र्निराकर्तुम् अशक्यत्वादिति चेत्। न। भागद्वयाङ्गीकारेण मन्त्र-
१५ व्यतिरिक्तो भागो ब्राह्मणमिति लक्षणस्य निर्दोषत्वात्। ननु ब्रह्मयज्ञप्रकरणे मन्त्रब्राह्मणव्यतिरिक्ता इतिहासादयोऽपि भागाः आम्नायन्ते—"यद्ब्राह्मणानीतिहासान् पुराणानि कल्पान् गाथा नाराशंसी " ( तैआ २·९ ) इति । मैवम् । विप्रपरिव्राजकन्यायेन ब्राह्मणावान्तरभेदानामेवेतिहासादीनां पृथगभिधानात्। " देवासुराः संयत्ता आसन्" ( तैसं १ ५·१ ) इत्यादय इतिहासाः । " इदं वा अग्रे नैव किंचनाऽऽसीत्। न द्यौरासीत्" (तैब्रा २·२·९) इत्यादिकं जगतः [२७५]प्रागवस्थामुपक्रम्य सर्गप्रतिपादकं
२० वाक्यजातं पुराणम्। कल्पस्तु आरुणकेतुकचयनप्रकरणे समाम्नायते—" इति मन्त्राः । कल्पोऽत ऊर्ध्वं यदि बलिं हरेत् " ( तैआ १·२१·२ ) इति। अश्वमेधे " यमगाथाभिः परिगायति " ( तैसं ५ १·८ ) इति विहिता मन्त्रविशेषा गाथाः । मनुष्यवृत्तान्तप्रतिपादिका ऋचो नाराशंस्यः । तस्मान्मन्त्रब्राह्मणव्यतिरिक्तभागाभावात् लक्षणं[२७६] सुस्थितम्। तच्च ब्राह्मणं द्विविधम्—विधि-रूपमर्थवादरूपं चेति। " वारुणं दशकपालं निर्वपेत् " ( तैब्रा ३ २·१ ) इति विधिः।
२५ " तृतीयस्यामितो दिवि सोम आसीत् " ( तैब्रा ३·२·१·१ ) इत्यादिकोऽर्थवादः ॥

तत्र विधेः प्रामाण्यं प्रथमाध्याये प्रथमपादे [२७७]प्रतिपादितम्—

" अबोधको बोधको वा न तावद्बोधको विधिः ।

शक्तेर्लौकिके धर्मे ग्रहणं दुर्घटं यतः ॥

समभिव्याहृते धर्मे शक्तिग्रहणसंभवात् ।

३० [२७८]बोधकस्य विधेर्मानत्वमनपेक्षतया[२७८] स्थितम् "॥(जैन्या १·१·४७·४८) इति ॥

धर्मो नाम [२७९]अनुष्ठानजन्यमपूर्वं तद्धेतुर्यागो वा। तस्यालौकिकत्वेन गवाद्यर्थवत् वृद्धव्यवहारा-विषयत्वात् संगतिग्रहणं नास्ति। ततो विधेरबोधकत्वादप्रामाण्यमिति चेत्। मैवम्। प्रसिद्धार्थ-

२७३. आ. इ. उ. पा. ह्य – क्रियाभेदात् । २७४. तं. व.– शोधयितुम् । २७५. व – प्रागवस्थामुपक्रम्य । २७६. व – लक्षणमिदम् । २७७. त. व – विचारितम् । २७८–२७८. इ. ह. पा. ह्य – बोधकत्वं विधेर्धर्मत्वानपेक्षतया । २७९. आ. इ. उ. पा. ह्य – अनुष्ठानजन्यापूर्वम् ।

पर्णशाखादिपदैः समभिव्याहृतस्य 'अपाकरोति' इति पदस्यापूर्वपर्यवसायिन्यर्थे [२८०]शक्तिग्रहणसंभवात्। यथा 'प्रभिन्नकमलोदरे मधुकरो मधूनि पिबति' इत्यत्र मधुकरशब्दस्यार्थमजानान इतरपदानाम्[२८१] अर्थमधगत्य तत्समभिव्याहारात् कमलमध्यगते मधुपानं कुर्वति भ्रमरे मधुकरशब्दस्य [२८२]शक्तिं गृह्णाति तद्वत्। अतो बोधकत्वात् मूलप्रमाणानपेक्षत्वाच्च विधिः स्वत एव प्रमाणम्। न च "वत्सानपाकरोति" (तैब्रा ३.२.१) इत्यत्र विधायकानां लिङ्लोट्तव्यप्रत्ययानामभावादविधित्वमिति शङ्कनीयम्, क्रत्वङ्गोपवीतवत् [२८३-]अपूर्वार्थत्वे सति[-२८३] पञ्चमलकाराश्रयणेन[२८४] विधित्वसंभवात्। एतच्च तृतीयाध्यायस्य चतुर्थपादे [२८५]विचारितम्--

"उपव्यानेऽनुवादो वा विधिर्वाऽद्यो यतः स्मृतौ
प्राप्तं नैवमपूर्वत्वात् क्रतौ [२८६]लेटा विधीयते" ॥ (जैन्या ३.४.५) इति ॥

दर्शपूर्णमासप्रकरणे क्रत्वङ्गत्वेन वस्त्रस्योपवीतत्वम् एव[२८७] आम्नायते--"देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुते" (तैसं २.५.११) इति। तदिदं वाक्यम् [२८८]उपवीतत्वस्यानुवादकं वा विधायकं वेति संशयः। "नित्योदकी नित्ययज्ञोपवीती" (बौध ३.१.१) इति स्मृत्या प्राप्तत्वात् विधायकानां लिङादीनामभावाच्चानुवादकमिति प्राप्ते ब्रूमः--पुरुषार्थस्य स्मृत्या प्राप्तावपि क्रत्वर्थस्य प्राप्त्यभावात्। पञ्चमलकारेण दर्शपूर्णमासाङ्गतया विधीयत इति राद्धान्तः। तेनैव न्यायेन "वत्सानपाकरोति" इत्ययं न प्रथमलकारः, किं तु पञ्चमलकारः। तस्य च विधायकत्वं "लिङर्थे लेट्" (पा ३.४.७) इति सूत्रेण सिद्धम्। नन्वेवमपि "यत् पर्णशाखया" (तैब्रा ३.२.१) इत्यनुवादकत्वगमकेन यच्छब्देन [२८९-]विधिशक्तिः प्रतिबध्यते[-२८९], "देवाश्च याभिर्यजते" (तैब्रा २.४.६) इत्यादिवदिति चेत्। नैवम्। उपरिधारणन्यायेन यच्छब्दस्य [२९०]बाधितत्वात्। स च न्यायस्तस्मिन्नेव पादेऽभिहितः—

"धारयत्युपरिष्टाद्धि देवेभ्य इति संस्तवः।
विधिर्वाऽऽद्यो घृतेः पित्र्ये प्रोक्ताया पूर्ववत् स्तुतिः ॥
[२९१]ऊर्ध्वं [२९२]विधारणं प्राप्तं समिधो [२९३]नान्यमानतः।
अतो हिशब्दसंयोगादपूर्वार्थो विधीयते" ॥ (जैन्या ३.४.८-९) इति ॥

प्रेताग्निहोत्रे श्रूयते–'अधस्तात् समिधं धारयन्ननुद्रवेदुपरिष्टाद्धि देवेभ्यो धारयति'(द्र.आपश्रौ९.११.९-१०) इति। अत्र पित्र्यं हविर्होतुं हस्ते धारयन् यदा मन्त्रं पठति तदानीम् [२९४]उद्धृतस्याधस्तात् समिधं धारयेत्, इति यद्विधीयते तदेतद्दैविकेनोपरिधारणेन स्तूयते। कुतः? [२९५]हिशब्देन अनुवादत्वप्रतीतेः। तन्त्रस्थे पूर्वाधिकरणे (मीसू ३.४.१[५-६])—"प्राचीनावीती दोहयेद्यज्ञोपवीती हि देवेभ्यो दोहयति","पुरोदञ्चो दर्भास्तान् दक्षिणाग्रान् स्तृणीयात्" (द्र.आपश्रौ ९.११.९) इत्यस्मिन्नुदाहरणद्वये यज्ञोपवीतित्वोदगग्रत्ववाक्ययोः [२९६]हिशब्दयच्छब्दयुक्तयोः विधायकत्वमपोह्यार्थवादत्वं निर्णीतं तद्वदत्रापीति प्राप्ते

---

२८०. व– शक्तेः ग्रहण°। २८१. आ. तं. पा. हा – °पदार्थानाम्। २८२. तं. व–संगतिम्। २८३-२८३. तं. व– अपूर्वार्थेन। २८४. क. तं. व– °अयणे। २८५. तं – चिन्तितम्। २८६. इ. उ. हा – वेदात्। २८७. आ – 'एव' नास्ति। २८८. इ. उ. तं– उपवीतस्यानु°। २८९-२८९. आ. इ. उ – विधिशक्तिप्रतिघातः; क – विधिशक्तिः प्रतिपाद्यते; पा. भां. हा – विधिशक्तिप्रतिघाते। २९०. तं. व – अबाधकत्वात्। २९१. तं – ऊर्ध्वे। २९२. तं– तु धारणम्; इ. उ– हि धारणम्। २९३. इ. उ. पा. भां. हा– नान्यथा ततः। २९४. तं. व – स्रुग्दण्डस्य। २९५. आ. पा. – हिशब्दात्। २९६. तं – हिशब्दयुक्तयोः; इ. उ. पा. भां. हा – हिशब्दयच्छब्दयोः।

ब्रूमः–विषमो दृष्टान्तः। दैविके यज्ञोपवीतित्वोदगग्रत्वयोर्मानान्तरप्राप्तत्वात् हिशब्दयच्छब्दौ अबाधित्वा तत्रार्थवादत्व वक्तुमुचितम्। उपरिधारणे त्वप्राप्तत्वात् हिशब्द परित्यज्य विधिरेवाऽभ्युपगन्तव्यः। एव सति वत्सापाकरणस्याप्यपूर्वार्थत्वाद्यच्छब्दपरित्यागेन विधिरेव युक्त.। ननु लोके सायदोहार्थिभिः प्रातर्वत्सा गोभ्योऽपाक्रियन्तेऽतो लोकत एव प्राप्तत्वान्न वत्सापाकरणं विधेयमिति चेत्। मैवम्। अवघातवन्नियमापूर्वहेतुत्वेन विधेयत्वात्। अवघातन्यायश्च द्वितीयाध्यायस्य प्रथमपादे[297]वर्णित –

" अवघातादिनाऽपूर्वमुत्पाद्य विद्यते न वा।
यजत्यादिवदस्त्येव वाक्यवैयर्थ्यमन्यथा॥
दृष्टे तुषविमोकेऽस्ति नापूर्वं द्रव्यतन्त्रता।
स्याद्यजत्यादिवैषम्यं नियमापूर्वकृद्भव "॥ ( जैन्या २·१·१३–१४ ) इति॥

यथा " समिधो यजति " ( तैस २·६·१ ) इत्यत्र यागजन्यमपूर्वमस्ति, तथा "[298]व्रीहिनव-हन्ति " इत्यत्रापि तदभ्युपेयम्, अन्यथा विधिवाक्यवैयर्थ्यप्रसङ्गादिति चेत्। न। दृष्टे संभवत्यदृष्ट-कल्पनस्यान्याय्यत्वात्। न चात्र यजत्यादिविधिसाम्यमस्ति, गुणकर्मत्वेनावघातस्य द्रव्यतन्त्रत्वात्। यागस्तु प्रधानकर्म। अय च कर्मणा भेदो जैमिनिना सूत्रत्रयेण स्पष्टीकृत – " तानि द्वैध गुणप्रधान-भूतानि " ( मीसू २·१·६ ), " यैस्तु द्रव्य चिकीर्ष्यते गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात् " ( मीसू २·१·८ ), "यैस्तु द्रव्य न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात् " ( मीसू २·१·७ ) इति। यैस्तु कर्मभिर्द्रव्यमुत्पादयितु संस्कर्तुं वेष्यते तेषु कर्मसु गुणत्वम्। कुत ? तस्य कर्मणो द्रव्यप्रधानत्वात्। द्रव्य प्रधानम् अस्य[299] इति बहुव्रीहि। " यूप तक्षति ", "आहवनीय-मादधाति"(तैब्रा१·१ ४)इत्यादौ यूपाहवनीयादि द्रव्यमुत्पादयितुमिष्यते।"व्रीहीनवहन्ति","तण्डुलान् पिनष्टि" इत्यत्र व्रीह्यादि द्रव्य संस्कर्तुमिष्टम्। "आज्येन प्रयाजा इज्यन्ते"(तैस ६·३·११) इत्यादिपूक्त-वैपरीत्यात् प्रधानकर्मत्वम्। अतो यजतिवैषम्यात्रावघातोऽपूर्वजनक। न च [300]विधिवाक्यवैयर्थ्यं, नख-विदलनादिनाऽपि तण्डुलनिष्पत्तिसंभवे सत्यवघातेनैव तण्डुला निष्पादनीया इति तन्नियमजन्यमपूर्वं बोधयितु विधेरपेक्षितत्वात्। तद्वच्छाखीयापाकरणेनैव सायं दोहः संपादनीय इति नियमविधिरस्तु[301]। उक्तेषु विधिसामान्यविचारेष्वेते निर्णया सपन्ना —विधिरलौकिकधर्मबोधक.। पञ्चमलकाराश्रयणेन विधायकत्वम्। अप्राप्तार्थे यच्छब्दादयो न विधिबाधका। [302]संस्कारकर्म दृष्टार्थसमवेऽपि[302] नियमापूर्वार्थमपीति॥

[303]शाखाहरण एव[303] चतुर्थाध्याये विचारितं किंचिद्द्वितीयपादे—

" प्राचीमाहरतीत्यत्र दिक्शाखा वाऽस्तु दिक्श्रुते।
आहार्यत्व दिशो नास्ति शाखा तेनोपलभ्यते "॥ ( जैन्या ४·२·२ ) इति॥

" यत्प्राचीमाहरेत् " ( तैब्रा ३ २·१ ) इति वाक्ये प्राचीशब्देन मुख्यार्थत्वात्[304] दिग्विव-क्षितेति चेत्। न। दिश आहर्तुमशक्यत्वेन दिक्संबन्धिन्या शाखाया उपलक्षणीयत्वात्॥

---

२९७. इ उ. पा. भां. द्दा – निर्णीत। २९८ आ. पा. द्दा– व्रीहीनवहन्यात्। २९९.इ उ. पा. भां द्दा – यस्य। ३०० इ उ भां द्दा – विधिवैयर्थ्यम्। ३०१ इ. उ पा. भा. द्दा– ' अस्तु ' नास्ति। ३०२–३०२ क – सस्कारकर्म दृष्टार्थे सभवेऽपि, त– सस्कारकर्मण दृष्टार्थसमवेऽपि, ब–संस्कारकर्मस्विष्टार्थे समवेऽपि। ३०३–३०३. ब – शाखाहरणे तु, द्दा – शाखाहरणमेव। ३०४. आ, पा द्दा – मुख्या।

तस्मिन्नेव पादेऽन्यद्विचारितम्—

" शाखां छित्वोपवेषं च मूले कुर्वीत शाखया ।
नुदेद्वत्सान् कपालानि स्थापयेदुपवेषतः ॥
द्वयं प्रयोजनं छित्तेर्वत्सापाकृतिरेव वा ।
आद्योऽग्रमूलयोरत्र विभज्य विनियोगतः ॥
उपवेषं करोतीति साकाङ्क्षोऽन्यार्थमूलतः ।
पूर्यतेऽतोऽनुनिष्पादी स तस्मादुच्यतेऽन्तिमः " ॥ ( जैन्या ४.२.४–६ ) इति ॥

इदमाम्नायते—" मूलतः शाखां परिवास्योपवेषं करोति " ( आपश्रौ १.६.६ ) इति । अस्यायमर्थः—येयम् " इषे त्वा " इति मन्त्रेण [305]छिन्ना शाखा तां पुनर्मूले छित्वा तं मूलभागमुपवेषं कुर्यादिति । अत्र तयोर्मूलाग्रयोः पृथग्विनियोग आम्नायते—" उपवेषेण कपालान्युपदधाति ", " शाखया वत्सानपाकरोति " इति । अत्र कपालोपधानं, वत्सापाकरणं चेत्युभयं शाखाच्छेदनस्य प्रयोजकम् । कुतः ? अग्रमूलयोः साम्येन विभज्य विनियोगात् इति चेत् । नैवम् । ' उपवेषं करोति ' इत्ययं विधिरुपवेषस्य प्रकृतिद्रव्यमपेक्षते । सा चापेक्षा मूलेन पूर्यते । तच्च मूलं शाखार्थम् । " इषे त्वोर्जे त्वेति तामाच्छिनत्ति " ( आपश्रौ १.१.१० ) [306]इत्यत्र छिन्नायाः समूलायाः शाखायाः सौकर्यार्थं परिवासनवाक्येन[307] पुनर्मूलापादानकं छेदनं श्रूयते । न चाऽसति मूले मूलापादानकं छेदनं संभवति । तस्माच्छाखार्थमेव मूलं, न तु उपवेषार्थम् । अतोऽन्यार्थमूलानुनिष्पन्नोपवेषेण[308] क्रियमाणं कपालोपधानं न शाखाच्छेदनस्य प्रयोजकं, किंतु वत्सापाकरणमेव तत्प्रयोजकम् । तथा सति यत्र शाखायाः प्रथमच्छेदनेनैव सौकर्यं संपद्यते तत्रोपवेषसिद्ध्ये पुनः प्रयत्नेन मूलं न संपादनीयम् । किं तु लौकिकेनैव[309] केनचित् काष्ठेन कपालान्युपधेयानीति विचारस्य फलं सिद्धम् ॥
[310]इत्थं ब्राह्मणे विधिभागस्य सामान्यविशेषविचाराः प्रदर्शिताः[311] ॥

अथ [312]अर्थवादविचाराः प्रदर्श्यन्ते[312]—

" वायुर्वा इत्येवमादेरर्थवादस्य मानता ।
न विधेयेऽस्ति धर्मे किं किं वाऽसौ तत्र विद्यते ॥
विध्यर्थवादशब्दानां मिथोपेक्षापरिक्षयात् ।
नास्त्येकवाक्यता धर्मे प्रामाण्यं संभवेत् कुतः ॥
विध्यर्थवादौ साकाङ्क्षौ प्राशस्त्यपुरुषार्थयोः ।
तेनैकवाक्यता तस्मात् वादानां धर्ममानता " ॥ ( जैन्या १.२.१–३ ) इति ॥

काम्यपशुकाण्डे विध्यर्थवादौ श्रूयेते—" वायव्यꣳ श्वेतमालभेत भूतिकामः " ( तैसं २.१.१ ) इति विधिः । 'वायुर्वै क्षेपिष्ठा देवता " इत्यर्थवादः । तत्र वायव्यादिशब्दा अर्थवादशब्दनैरपेक्ष्येणैव विशिष्टमर्थं विदधते[313] । अर्थवादशब्दाश्चेतरनैरपेक्ष्येणैव [314]शीघ्रगामित्वादि देवतालक्षणं सिद्धार्थमाचक्षते । अत एव एकवाक्यत्वाभावान्नास्त्यर्थवादानां धर्मे प्रामाण्यमिति चेत् । न । पदैकवाक्यत्वा-

३०५. तं – आच्छिन्ना । ३०६. इ. उ. पा. भां. [illegible] – इति तथा । ३०७. तं. च – °वाक्ये । ३०८. इ. उ. पा. भां. हा – °निष्पन्नेनोपवेषेण । ३०९. इ. उ. पा. भां. हा –'एव' नास्ति । ३१०. आ. इ. उ. क. पा. हा –'इत्थं' नास्ति । ३११. आ. इ. उ. पा. भां. हा – प्रकाशिताः। ३१२-३१२. इ. उ. तं. पा. व. भां – अर्थवादविचारः प्रदर्श्यते । ३१३. व. तं – विदधाति । ३१४. आ – शीघ्रगामि; क. तं. व – क्षिप्रगामित्वादि ।

भावेऽपि वाक्यैकवाक्यत्वात्[३१५]। विधिवाक्येन पुरुषप्रवृत्तिसिद्धये स्तावकमर्थवादवाक्यमपेक्ष्यते। अर्थवादवाक्यस्याऽपि पुरुषार्थपर्यवसानाय विधिवाक्यापेक्षा। अतो वाक्ययोः परस्परमन्वयादेकवाक्यत्वे सति विधिभागवत् [३१६]अर्थवादभागोऽपि धर्मे प्रमाणम्[३१६]। अनेनैव न्यायेन "तृतीयस्यामितो दिवि सोम आसीत्" (तैब्रा ३ २ १) इत्याद्यर्थवादस्य "यत्पर्णशाखया वत्सानपाकरोति" (तैब्रा ३ २ १) इत्येतद्विधिस्तावकत्वाद्विधिगम्ये नियमापूर्वे प्रामाण्यमस्ति। नन्वर्थवादस्य विधिस्तावकत्व [३१७]क्वचित् व्यभिचरति[३१७], "प्राचीमुदीचीमाहरति। उभयोर्लोकयोरभिजित्यै" (तैब्रा ३ २·१) इत्यत्र फलविधिप्रतिभानादिति चेत्। मैवम्। औदुम्बराधिकरणन्यायेन स्तावकत्वात्। स च न्यायस्तस्मिन्नेव पादेऽभिहित —

" ऊर्गोऽवरुद्ध्या इत्येष विधिर्यन्निगदो[३१८] न किम्।
यूपौदुम्बरतां स्तौति स्तौति वा तद्विधित्सया॥
चतुर्थ्यां फलताभानाद्यूपौदुम्बरताफलम्।
ऊर्गोऽवरोधं कथयन् कथं स्तुतिपरो भवेत्॥
[३१९]अस्तुतौदुम्बरत्वस्याविधानात् कस्य तत् फलम्।
अर्थद्वैधे वाक्यभेदस्तेन स्तावक एव स "॥ (जैन्या १ २.५-७) इति॥

इदमाम्नायते-"औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुद्ध्यै" (द्र. तैसं २ १ १) इति। अत्राऽवरोधवाक्येन किं फलमेव विधीयते किं वा यूपौदुम्बरत्वमपि स्तूयते। नाऽऽद्य। औदुम्बरत्वविध्यभावेन तत्फलकथनाऽयोगात्। न चाऽत्रौदुम्बरत्वस्य प्रत्यक्षो विधिरस्ति लिङाद्यश्रवणात्। [३२०]अत स्तुत्यैवाऽत्र विधिरुन्नेतव्य[३२०]। न चाऽत्र स्तुतिमङ्गीकरोषि। न द्वितीय। अर्थभेदेनाऽऽवृत्तिलक्षणवाक्यभेदापत्ते। तस्मादूर्गवरोध स्तावकः। [३२१]तद्वत् उभयलोकाऽभिजयेनापि [३२२]ऐशानदिशि प्रवृत्ता शाखा[३२२] विधानाय स्तूयते। तदेव वेदसामान्यतद्विशेषयोर्मन्त्रब्राह्मणयोर्मन्त्रविशेषाणामृगादीना ब्राह्मणविशेषयोर्विध्यर्थवादयोश्चापेक्षिता सामान्यविशेषविचारा अस्मिन्ननुवाक उदाहृता। वक्ष्यमाणानुवाकेष्वपि ■ सर्वे यथायोगमुदाहरणीया।

उदाहृत्याऽत्र[३२३] मीमांसा प्रकृतिप्रत्ययस्थितिम्।
अथ व्याकरणे सिद्ध वोद्धु[३२४] तत्प्रक्रियोच्यते॥

न च [३२५]व्याकरणप्रामाण्ये तत्प्रयोजने[३२५] वा विप्रदितव्यं तत्प्रामाण्यस्य स्मृतिपादे (मीसू १·३·२४-२९) निर्णीतत्वात्। तत्प्रयोजनस्य च कात्यायनेनाभिहितत्वात्।
तथा हि-

" गोगाव्यादिषु[३२६] साधुत्वे प्रयोगे वा न कश्चन।
[३२७]नियमोऽत्रास्ति वा नास्ति व्याकृतेर्मूलवर्जनात्॥

---

३१५. ब – °वाक्यार्थत्वात्। ३१६–३१६. आ – अर्थवादभागेऽपि धर्मे प्रामाण्यम्। ३१७–३१७. ■ च–न नियतम्। ३१८ इ उ पा मा– विधिर्यन्निगदे। ३१९ हा – अस्तुतौ°। ३२०. हा–तत, इ. उ. पा मा – ' अत ' नास्ति। ३२१ त– तस्मात्। ३२२–३२२. आ– ऐशानदिक्प्रवृद्धाऽऽपेषणादिभि प्रवृत्ता, च – ऐशानादिशिप्रवृत्त°, क हा – ऐशानदिक्प्रवृद्धाद्यशोपणादिभि प्रवृत्ता। – ३२३. इ. उ. पा. हा – उदाहृत्याथ। ३२४ त – वेत्तुम्। ३२५–३२५. इ. उ– व्याकरणप्रामाण्य तत्प्रयोजनम्; त – प्रकरणप्रामाण्ये तत्प्रयोजने। ३२६. इ उ पा– गोगव्यादिषु, क– गवाद्यादिषु। ३२७. इ. उ. पा – नियमोऽथास्ति, हा – नियमो वाऽस्ति।

साधूनेव प्रयुञ्जीत गवाद्या एव साधवः ।
इत्यस्ति नियमः पूर्वपूर्वव्याकृतिमूलतः ” ॥ ( जैन्या १.३.२८–२९ ) इति ॥

निर्मूलत्वेन विगीतत्वादयः पूर्वपक्षहेतवोऽप्युपलक्ष्यन्ते– “ निर्मूलत्वाद्विगीतत्वात् वैफल्यात्[३२८] वेदबाधनात् । पूर्वापरविरोधाच्च नास्य प्रामाण्यसंभवः ” ॥ इति[३२९] हेतव उक्ताः । व्याकरणस्य पौरुषेयत्वात् [३३०]मूलप्रमाणमपेक्षितम् । अत एव बुद्धादिवाक्यानां प्रामाण्यं दूषितम्[३३१] –“ प्रायेणाऽनृतवादित्वात् पुंसां भ्रान्त्यादिसंभवात् । चोदनानुपलब्धेश्च श्रद्धामात्रात्प्रमाणता ”॥ न तावत् प्रत्यक्षं मूलम् । गवादिशब्दा एव साधवो न गव्यादिशब्दाः । साधूनेव प्रयुञ्जीत नासाधून्[३३२], इत्यस्यार्थद्वयस्य केनापीन्द्रियेण ग्रहीतुमशक्यत्वात् । योगिप्रत्यक्षस्य [३३३]अतीन्द्रियत्वात् तद्ग्राहकत्वमिति चेत् । न । “ [३३४]यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् । [३३५]-अयोग्यं नेन्द्रियग्राह्यं न-[३३५] रूपे श्रोत्रवृत्तिता ” ॥ [३३६]इत्याचार्योक्तेः । विगीतत्वमपि व्याकरणे बहुश उपलभ्यते । अनादिसिद्धेऽभियुक्तव्यवहारे गृहीतसंगतिका गवादिशब्दा एव साधव इति [३३७]भवतो मतम् । पाणिनिस्तु [३३८]शास्त्रस्याऽऽमूलभूतं तद्विपरीतानेवापशब्दान् जगौ, “अइउण्” ( माहेश्वर सूत्र १ ), “ धेर्ङिति ” ( पा ७.३.१११ ), “ स्तोश्चुना श्चुः ” ( पा. ८.४.४० ), “ ष्टुना ष्टुः” (पा ८.४.४१) इत्यादिप्रयोगात् । न च धर्मार्थकाममोक्षेषु[३३९] किंचित् फलं व्याकरणस्य पश्यामः । वेदस्तु प्रयत्नेन व्याकरणं बाधते–“ तस्माद्ब्राह्मणेन न म्लेच्छितवै नाऽपभाषितवै । म्लेच्छो ह वा एष यदपशब्दः” (पाम पस्पशा) इति । परस्परविरोधश्च भूयानस्ति । त्रिमुनिव्याकरणमित्यभ्युपगच्छन्ति । [३४०]तत्र पाणिनिना यदुक्तम्-[३४०]– “इन्धिभवतिभ्यां च” (पा १.२.६), “ कर्मवत् कर्मणा तुल्यक्रियः ” ( पा ३.१.८७ ) इति तत् [३४१]-कात्यायनो दूषयति-[३४१]– “ इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यम् , सिद्धं तु प्राकृतकर्मत्वात् ” (पा१.२.६वा१) इति । क्वचित्तु [३४२]पाणिनिः स्वोक्तं स्वयमेव [३४३]दूषयामास –“ तदशिष्यं संज्ञाप्रमाणत्वात् ” ( पा १.२.५३ ) इति । तस्मान्न व्याकरणं प्रमाणमिति प्राप्ते ब्रूमः– न तावदिदं निर्मूलं पूर्वव्याकरणानामेव मूलत्वात् । सन्ति हि पूर्वव्याकरणानि[३४४], पाणिनिनैव तत्तन्मतानामुदाहृतत्वात् । “तृषिमृषिकृशेः काश्यपस्य ” ( पा १.२.२५ ), “ ऋतो भारद्वाजस्य ” ( पा ७.२.६३ ), “ त्रिप्रभृतिषु शाकटायनस्य ” ( पा ८.४.५० ), “ लोपः शाकल्यस्य ” (पा ८.३.१९), “ ओतो गार्ग्यस्य ” (पा ८.३.२०) इति हि[३४५] उदाहृतम् । तत्तद्व्याकरणानां पूर्वपूर्वव्याकरणमूलत्वेऽपि [३४६]बीजाङ्कुरवदनादित्वेन मूलक्षयाभावान्नानवस्था दोषः। न च “ धेर्ङिति ” (पा ७-३-१११) इत्यादेरपशब्दत्वं, सांकेतिकानामपि स्वस्वविषये गवादिपदवत् सुशब्दत्वात् । अन्यथा– “ बबरः प्रावाहणिरकामयत ” (तैसं ७.१.१०) इत्यादेरपशब्दत्वप्रसङ्गात्[३४७] । नापि निष्फलत्वम् । “ एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः[३४८] स्वर्गे लोके

३२८. क. तं–नैष्फल्यात् । ३२९. क. तं –इति ते । ३३०. इ. उ. हा –मूलप्रामाण्यम°। ३३१. इ. उ. हा. पा – नेषितम् । ३३२. आ. तं. पा–नापशब्दान् । ३३३. इ. उ. पा. हा – अतिशयित्वात्; तं – अतिशयत्वात् । ३३४. आ. क – यत्रास्यातिशयः । ३३५–३३५. तं. व– दूरसूक्ष्मादिदृष्टौ स्यान्न । ३३६. तं – इत्याचार्यैरुक्तत्वात् । ३३७. आ. क – भगवतः । ३३८. इ. उ. पा – शास्त्रस्यामूलभूतम् ; हा – शास्त्रस्य मूलभूतान् । ३३९. आ. इ. उ. पा – °मोक्षादिषु । ३४०–३४०. क– तत्र पाणिनीये उक्तम् ; आ– यत्त पाणिनिना प्रयुक्तम् ; इ. उ. पा. हा – तत्र पाणिनिना प्रयुक्तम् । ३४१–३४१. तं. व–कात्यायनेन दूषितम् । ३४२. आ. इ. उ. पा. हा – पाणिनिना । ३४३. आ. इ. उ. हा – दूष्यते; पा – दूष्यम् । ३४४. आ. इ. उ. पा – तानि । ३४५. इ. उ. पा. हा – ' हि ' नास्ति । ३४६. इ. उ. पा. हा – बीजाङ्कुरन्यायादनादित्वेन । ३४७. आ – इत्यादिरपशब्दः स्यात् ; क – इत्यादेरपशब्दप्रसङ्गात् इ. उ. पा. हा – इत्यादीनामपशब्दत्वं स्यात । ३४८. क. तं. व – सुष्ठु प्रयुक्तः ।

कामधुक् भवति" (द्र पाम ६.१.८४) इति [349]साधुशब्दावगमतत्प्रयोगाभ्यां धर्मोत्पत्तिश्रवणात्। नाऽपि वेदबाधः, "न म्लेच्छितवै" इत्यादेर्गाव्याद्यपशब्दविषयत्वादिनाऽप्युपपत्तेः। "नानुध्यायाद्बहूञ्छब्दान् वाचो विग्लापनं हि तत्" (बृउ ४.४.२१) इति[350] निषेधः समाधिनिष्ठब्रह्मयोगिविषयः। नापि परस्परविरोधः। [351]उक्ताऽनुक्तदुरुक्तचिन्तारूपं वार्तिकं कुर्वतः कात्यायनस्य क्वचित् क्वचित् दूषयितुम् उचितत्वात्। नापि स्वोक्तव्याहतिः। पूर्वोत्तरपक्षाभिप्रायेण तदुपन्यासात्। तस्मात् प्रमाणभूतव्याकरणानुसारेण गवादिशब्दा एव साधवस्तानेव प्रयुञ्जीतेति नियमद्वयं सिद्धम्। प्रकृतिप्रत्ययविभागोऽपि ज्ञातव्य इत्यनेनैवाभिप्रायेण वेदे तत्र तत्र शब्दनिर्वचनमुदाह्रियते। तथा हि ब्राह्मणे प्रथमकाण्डे प्रथमप्रपाठके श्रूयते – "प्रजापती रोहिण्यामग्निमसृजत। तं देवा रोहिण्यामादधत। ततो वै ते सर्वान् रोहानरोहन्। तद्रोहिण्यै रोहिणित्वम्।" (तैब्रा १.१.२) इति। तत्रैव तृतीयेऽनुवाके प्रजापतिं प्रस्तुत्य श्रूयते– "स वराहो रूपं कृत्वोपन्यमज्जत्। स पृथिवीमध आर्छत्। तस्या उपहत्योदमज्जत्। तत् पुष्करपर्णेऽप्रथयत्। यदप्रथयत्। तत् पृथिव्यै पृथिवित्वम्। अभूद्वा इदमिति। तद्भूम्यै भूमित्वम्।" (तैब्रा १.१.३) इति। एवं सर्वत्रोदाहार्यम्। व्याकरणपूर्वकस्य पदार्थज्ञानस्यावश्यंभावित्वादेव देवैः प्रार्थित इन्द्रो व्याकरणं निर्ममे। एतच्च षष्ठकाण्डे चतुर्थप्रपाठक ऐन्द्रवायवग्रहब्राह्मणे श्रूयते–" वाग्वै पराच्यव्याकृताऽवदत्ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति सोऽब्रवीद्वरं वृणै मह्यं चैवैष वायवे च सह गृह्याता इति तस्मादैन्द्रवायवः सह गृह्यते तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुद्यते" (तैसं ६.४.७) इति। पराची प्रकृतिप्रत्ययविभागरहिता। मध्यतोऽवक्रम्य विभागं कृतवानित्यर्थः। आथर्वणिकास्तु ऋग्वेदादिवत् व्याकरणमपि वेदितव्यमित्यामनन्ति– "द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा यया तदक्षरमधिगम्यते" (मुउ १.१.४–५) इति। कात्यायनोऽपि व्याकरणप्रयोजनान्युदाजहार– "रक्षोहागमलघ्वसंदेहाः प्रयोजनम्" (द्र. पाम पस्पशा) इति। स्वरवर्णविपर्यासरूपो विप्लवो वेदस्य मा भूदिति व्याकरणेन वेदो रक्षणीयः। विप्लवे तु बाधं[352] पठन्ति– "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्" ॥ (पाशिक्षा ५२) इति। [353]इन्द्रस्त्वष्टुः पुत्रं विश्वरूपाख्यं जघानेति त्वष्टा सोमयागे नेन्द्रमुपाह्वयत्[353]। इन्द्रश्च यज्ञविघ्नं कृत्वा बलात् सोमं पीत्वा जगाम। अवशिष्टेन [354]सोमरसेन इन्द्रस्याभिचारं कर्तुं "स्वाहेन्द्रशत्रुर्वर्धस्व" (तैसं २.४.१२) इत्यनेन मन्त्रेणाजुहोत्। तत्र शत्रुशब्दो घातकमाचष्टे। भो उत्पाद्यमानपुरुष, इन्द्रस्य घातकस्त्वं वर्धस्व इति विवक्षित्वा मन्त्रमुच्चारितवान्। तदानीं तत्पुरुषसमासत्वादन्तोदात्तेन भवितव्यम्। प्रमादात्तु अनेनाऽऽद्युदात्तो मन्त्रः प्रयुक्तः। स च स्वरो बहुव्रीहौ समासे लभ्यः। ततश्चेन्द्रो घातको यस्येत्यस्मिन्नर्थे पर्यवसानादिन्द्रेण वध्यो वृत्र उदपद्यत। तस्माच्च वेदस्य रक्षा कर्तव्या। तथा प्रकृतौ दर्शपूर्णमासेष्टौ–" अग्नये जुष्टं निर्वपामि" (तैसं १.१.४) इति मन्त्र आम्नातः। स च विकृतौ ऐन्द्राग्नेष्टौ अतिदिष्टः। तत्र कर्मसमवेतार्थप्रकाशनायाऽग्निपदं परित्यज्य 'इन्द्राग्निभ्यां जुष्टं निर्वपामि' इत्यूहनीयः। स चोहो व्याकरणानभिज्ञेन कर्तुमशक्यः। तथा "वेदोऽध्येयो ज्ञेयश्च"(द्र.पाम पस्पशा)[355]इत्यागमेन ज्ञेयत्वं विहितम्[355]। तच्च प्रकृतिप्रत्ययादिनिर्णय

---

३४९. त. व– साधुशब्दावबोधप्रयोगाभ्याम्, क – साधुशब्दावबोधतत्प्रयोगाभ्याम्। ३५०. क सं – इत्ययं [illegible]। ३५१. इ. उ. पा – उक्तानुक्तचिन्ता°। ३५२. इ. उ. पा. हा – बाधकम्। ३५३–३५३. क. सं. व–विश्वरूपनामानं त्वष्टुः पुत्रमिन्द्रो जघान स च त्वष्टा सोमयागे तमिन्द्रं नोपाह्वयत्। ३५४. इ. उ. पा. हा – सोमेन। ३५५–३५५. त. व– इत्यागमो ज्ञानं विधत्ते।

शाखाहरणादिः]

[३५६]विना न संभवति । तथा बृहस्पतिनाऽध्याप्यमान इन्द्रो दिव्यं वर्षसहस्रमधीयानोऽपि यदा शब्दानामन्तं न जगाम तदानीमिन्द्रादिभिर्धातुप्रातिपदिक[३५७]प्रत्ययादेशादिरूपा लघूपायाः कल्पिताः । उपायमन्तरेण[३५७] सर्वे शब्दाः कथं [३५८]वोद्धुं शक्यन्ते । तथा "स्थूलपृषतीमालभेत"(द्र. पाम पस्पशा) इत्यत्र स्थूला चासौ पृषती [३५९]चेति विग्रहे[३५९] पशुशरीरगतं स्थौल्यमुक्तं भवति । स्थूलानि पृषन्ति यस्येत्युक्ते[३६०] शरीरगतवर्णविशेषरूपाणां बिन्दूनां स्थौल्यमुक्तं [३६१]भवतीत्ययं संदेहः स्वरनिर्णयमन्तरेण नापैति । तस्मात् रक्षोहादीनि पञ्च प्रयोजनानि । [३६२]तदेवं प्रमाणत्वात् सप्रयोजनत्वाच्च व्याकरणमारब्धव्यम् ॥

इषे त्वेत्यादिशब्दानां प्रक्रियां शब्दसंग्रहे ।
अवोचं स्वरमात्रं तु वैशद्याय पुनर्ब्रुवे ॥

[३६३]इषि प्रातिपदिके गत[३६३] इकारः "फिषोऽन्त उदात्तः" ( फि १ ) इत्युदात्तः। फिषिति प्रातिपदिकस्य संज्ञा । [३६४]इषियत्र पकारस्यान्तिमत्वेऽपि "स्वरविधौ व्यञ्जनमविद्यमानवत् भवति[३६५]" ( व्याडिपरिभाषा ३३ ) इत्युक्तत्वादिकार [३६६]एवान्तिमः । एकारस्य सुप्त्वात् "अनुदात्तौ सुप्पितौ" ( पा ३.१.४ ) इत्यनुदात्तत्वे प्राप्ते तदपवादः "सावेकाचस्तृतीयादिर्विभक्तिः" ( पा ६.१.१६८ ) इति सप्तमीबहुवचने परतः स्थिते यत्प्रातिपदिकमेकाच्कं तस्मादुत्तरा तृतीयादिर्विभक्तिः उदात्ता भवति। "अनुदात्तं पदमेकवर्जम्" ( पा ६.१.१५८ ) उदात्तः स्वरितो वा यस्य वर्णस्य विधीयते तं वर्जयित्वा शिष्टं पदमनुदात्तं भवति । तत्रास्मिन् पद एकारस्योदात्तत्वविधानादिकारोऽनुदात्तः । नन्विकारस्यापि पूर्वमुदात्तत्वं विहितं ततस्तं वर्जयित्वा विभक्तेरनुदात्तत्वमस्त्विति चेत् । नैवम् । प्रथमतः प्रातिपदिकस्वरेऽवस्थिते सति पश्चाद्विधीयमानत्वेन विभक्तिस्वरस्य प्रबलत्वात् । 'सतिशिष्टस्वरो [३६७]बलीयान्' (पा६.१.१५८वा८) इति हि मर्यादा । तस्मादनुदात्तादिकमुदात्तान्तम् इष इति पदं सिद्धम् । त्वा इति पदमनुदात्तम् । युष्मच्छब्दस्य आष्टमिकापादादौ आदेशत्वात् । "अनुदात्तं सर्वमपादादौ" (पा८.१.१८) इति हि तत्रानुवर्तते । संहितायामुदात्तादेकारादुत्तरत्वेन तस्य "उदात्तादनुदात्तस्य स्वरितः" ( पा ८.४.६६) इति स्वरितत्वम् । [३६८]ततः स्वरितान्तमिदं वाक्यम् । एवं 'ऊर्जे त्वा' इति वाक्यं योज्यम् । तयोर्वाक्ययोः संहितायाम् "आद्गुणः" ( पा ६.१.८७) इत्योकारे, गुणे, [३६९]स्वरिते प्राप्ते, "पूर्वत्रासिद्धम्" ( पा ८.२.१ ) इति स्वरितस्यासिद्धत्वादनुदात्तयोः पूर्वोत्तरवर्णयोः स्थाने विहित ओकारोऽनुदात्तः । तस्य [३७०]उदात्तादुत्तरत्वेन स्वरितत्वे प्राप्ते तदपवादः "उदात्तः स्वरितपरस्य सन्नतरः" ( पा १.२.४० ) इति । यस्मादनुदात्तात् परत उदात्तः स्वरितो वा वर्तते तस्याऽनुदात्तस्यातिनीचोऽनुदात्तो भवति । एतावता यथाम्नानम् 'इषे त्वोर्जे त्वा' इति सिद्धम् । '[३७१]उणादीन्यव्युत्पन्नानि

---

३५६. तं – अन्तरेण । ३५७–३५७. तं – °प्रत्ययादेशादिरूपलघूपायमन्तरेण; आ. पा– °प्रत्ययादिरूपा उपायाः कल्पिताः । उपायमन्तरेण । ३५८. आ. पा – ज्ञातुम् । ३५९–३५९. तं – इत्युक्ते । ३६०. आ. पा – यस्यामित्यत्र । ३६१. क. व. तं – भवति, सोऽयम् । ३६२. आ. पा – तस्मात् । ३६३–३६३. क. तं – इषिति प्रातिपदिकगत° । ३६४. इ. उ. पा. भां. हा– इषि इत्यत्र । ३६५. क. तं – 'भवति' नास्ति । ३६६. तं – एवेहान्तिमः । ३६७. आ. इ. उ. पां. भां. हा – बलवान् । ३६८. इ. उ. पा. भां. हा – तत्र । ३६९. क. पा. भां. हा – 'स्वरिते' नास्ति । ३७०. इ. उ. पा. भां. हा – उदात्तादनुदात्तत्वेन । ३७१. इ. उ. पा. भां. हा – औणादीन्य° ।

प्रातिपदिकानि' (हैमपरिभाषा १०३) इति मते वायुशब्दस्य फिट्स्वरेणान्तोदात्तत्वादवशिष्ट आकारोऽनुदात्तः। विभक्तेः सुप्त्वादनुदात्तत्वे सत्युदात्तादुत्तरत्वेन स्वरितत्वम्। स्थ-शब्दस्य "तिङ्ङतिङः" (पा ८.१.२८) इति [निघातः]। अतिङन्तात् परं तिङन्तं निहन्यते। निघातो नामानुदात्तः। "स्वरितात् संहितायामनुदात्तानाम्" (पा १.२.३९) इति स्थ-शब्दगतस्यानुदात्तस्य स्वरितादुत्तरत्वेनैकश्रुतिर्भवति। तां प्रचय [३७२]इत्याचक्षते अध्यापकाः। एवम् 'उपायव स्थ' इति वाक्यं योज्यम्। तयोर्वाक्ययोः संहितायामोकारः प्रचयः। [३७३]यद्यप्ययमोकारः प्रचयानुदात्तयोरुभयोः स्थाने [३७४]विहितस्तथापि-[३७४] द्वैरूप्यस्य युगपदसंभवात् पर्यायेण [३७५]तथात्वे स्थानिवद्भावादेवैकस्मिन् पक्षे प्रचयः। पक्षान्तरे तु स्थानिवद्भावात् अनुदात्तत्वे "स्वरितात् संहितायाम्°" (पा १.२.३९) इति सूत्रेण[३७६] प्रचयः। पा-शब्दस्य सन्नतरत्वम्। देवशब्दस्य फिट्स्वरेणान्तोदात्तत्वात् संहितायामोकारोऽप्युदात्तः। युष्मच्छब्दादेशश्चानुदात्तः। संहितायां स्वरितः। "चितः" (पा ६.१.१६३) चित्प्रत्यययुक्तस्य समुदायस्यान्त उदात्तः स्यात्। तत सवितृशब्दे तृच्प्रत्ययस्य चकारेत्त्वात् सवितृपदस्य कृदन्तत्वेन प्रातिपदिकत्वाद्वाऽन्तोदात्तत्वम्। संहितायां सेत्यस्य प्रचयः। विशब्दस्योदात्तपरत्वादिकारः सन्नतरः। "[३७७]उपसर्गाश्चाभिवर्जम्" (फि ८१) अभिव्यतिरिक्ता उपसर्गा आद्युदात्ताः। [३७८]-स्त्विति प्रशब्दस्य-[३७८] उदात्तः। अर्पयत्वित्यस्य निघाते "एकादेश उदात्तेनोदात्तः" (पा ८.२.५) उदात्तेन सह य एकादेशः स उदात्तः स्यादिति सवर्णदीर्घ उदात्तः। तस्मादुत्तरौ स्वरितप्रचयौ। तु-शब्दस्य संहितायां सन्नतरत्वम्। श्रेष्ठतमायेत्यत्र "ञ्नित्यादिर्नित्यम्[३७९]" (पा ६.१.१९७) ञिति निति च प्रत्यये परत पूर्वस्याऽऽदिरुदात्तः स्यादिति श्रेष्ठशब्दगतस्य इष्ठन्प्रत्ययस्य नित्त्वाच्छ्रेष्ठशब्दस्याऽऽदिरुदात्तः। ष्ठेत्यस्यानुदात्तस्वरितौ। तमप पित्त्वाद्विभक्तेः सुप्त्वाच्चानुदात्तत्वे सति पश्चात् प्रचयसन्नतरत्वं पूर्ववत्। "नब्विषयस्यानिसन्तस्य" (फि २६) [३८०]इसन्तव्यतिरिक्तस्य नपुंसकलिङ्गविषयस्य प्रातिपदिकस्यादिरुदात्तः स्यादित्यनेन कर्मन्शब्दस्यादिरुदात्तः। [३८१]-उत्तरयोर्यथायोगमनुदात्तत्वे-[३८१]सति स्वरितप्रचयौ सन्नतरत्वं च पूर्ववत्। आप्यायध्वमित्यत्रोपसर्ग उदात्तः। [३८२]-शिष्टस्य "तिङ्ङतिङः" (पा ८.१.२८) इति निघाते-[३८२] सति स्वरितप्रचयौ। "आमन्त्रितस्य च" (पा ८.१.१९) पदादुत्तरस्य च संबोधनान्तस्य सर्वस्याऽनुदात्तः स्यादिति अघ्न्याशब्दस्य निघाते सति संहितायां पूर्वाभ्यां प्रचयाभ्यां सह प्रचयः। [३८३]देवभागशब्दे "समासस्य" (पा ६.१.२२३) इत्यन्तोदात्ते सति विभक्त्या सहैकादेशस्वरः। संहितायामाद्यौ द्वौ प्रचयौ। तृतीयः सन्नतरः। [३८४]ऊर्ज पय शब्दयोः नपुंसकत्वादाद्युदात्तत्वम्। मतुपो ङीपश्च पित्त्वादनुदात्तत्वम्। ततो यथायोगं स्वरितप्रचयसन्नतराः। प्रजाशब्दे प्रातिपदिकमन्तोदात्तम्, टाबनु-

---

३७२. त – इत्याहु। ३७३. आ. इ. पा. मां. [illegible] – 'यद्यप्ययमोकार' नास्ति। ३७४–३७४ आ. [illegible] उ पा मां हा – विहितस्यापि। ३७५. आ. इ. पा. मां – तथातथात्वे। ३७६ आ पा– 'सूत्रेण' नास्ति। ३७७. इ. उ. पा मा. हा–'अभिवर्जम्' इत्यस्यानन्तरम् 'इति'। ३७८–३७८. आ. पा – इति प्रशब्द.। ३७९ इ. उ पा. मां. [illegible] – 'नित्यम्' इत्यस्यानन्तरम् 'इति'। ३८०. इ उ पा. मां. हा – इति इसन्त°। ३८१–३८१. आ. पा–इतरयोर्यथायोगमनुदात्ते। ३८२–३८२ आ. पा. मा हा – शिष्टस्यानुदात्तत्वे सति, क त – शिष्टस्य निघाते सति। ३८३. इ. उ– देवभागशब्दस्य। ३८४. इ. उ – ऊर्जस्वत्-पयस्वत्-शब्दस्य नब्विषयत्वात् (ऊर्जं पयःशब्दयो°।

दात्तस्तयोरेकादेश उदात्तः। शेषं पूर्ववत्। "नञ्सुभ्याम्" (पा ६·१·१७२) बहुव्रीहिसमासे नञ् सु इत्येताभ्याम् उत्तरस्य[३८५] पदस्यान्त उदात्तः स्यादित्यनमीवायक्ष्मशब्दयोरन्तोदात्तत्वे सति शेषमुन्नेयम्। न चात्र "समासस्य" (पा ६·१·२२३) इत्यन्तोदात्तत्वं सिध्यति, "बहुव्रीहौ प्रकृत्या पूर्वपदम्" (पा ६·२·१) [३८६]इत्युक्तपूर्वपदप्रकृतिस्वरापवादेन "नञ्सुभ्याम्" (पा ६·२·१७२) इति सूत्रस्यापेक्षितत्वात्। "निपाता आद्युदात्ताः" (फि ८०) इति माशब्द उदात्तः। व इत्येतत् ५ पूर्ववत्। स्तेनशब्दस्य फिट्स्वरः। ईशतेत्यस्य [३८७]निघातः। मा इति पूर्ववत्[३८७]। अघेन क्रौर्येण शंसो विशसनं वधो यस्य सोऽयमघशंसः। ततो [३८८]बहुव्रीहिस्वरेणाघ इत्यन्तोदात्तः[३८८]। तस्रहेति-शब्दयोः फिट्स्वरः। परिशब्दो निपातत्वादाद्युदात्तः। वो वृणक्त्विति शब्दावनुदात्तौ। ध्रुवशब्दस्य फिट्स्वरे सति टाप्प्रत्ययेन विभक्त्या सहैकादेशस्वरः। अस्मिन्नित्यत्र विभक्तेः "सावेकाचः" (पा ६·१·१६८) इत्युदात्तत्वम्। गोपताविति्यत्र "पत्यावैश्वर्ये" (पा ६·२·१८) ऐश्वर्यार्थे पतिशब्दे १० परतः पूर्वपदस्य, प्रकृतिस्वरत्वं भवति ततो गोशब्दस्योदात्तत्वे सतिशिष्टस्यानुदात्तस्वरितप्रचयाः। [३८९]स्यातेति निघात[ः] पर्यां। बह्वीरिति ङीप्प्रत्ययस्योदात्तत्वे सवर्णदीर्घोऽप्युदात्तः। यजमानस्येत्यत्र "धातोः" (पा ६·१·१६२) धातोरन्त उदात्तः स्यादिति अकारात् [३९०]पूर्वाकार उदात्तः। शपः पित्त्वादनुदात्तत्वम्। शानचः "चितः" (पा ६·१·१६३) इत्यन्तोदात्तत्वे प्राप्ते तदपवादः "तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः" (पा ६·१·१८६) तासि प्रत्ययादनुदा- १५ त्तेतो धातोर्ङितो धातोरकारोपदेशाच्चोत्तरस्य लकारस्य स्थाने विहितं यत् सार्वधातुकं तदनुदात्तं भवति, 'ह्नुङ् अपह्नवे, इङ् अध्ययने, इत्येतौ धातू वर्जयित्वा। अत्र शबन्तस्य [३९१]यजेरस्याद्युपदेशत्वात् तदुत्तरः शानजनुदात्तः। पशूनित्यत्र फिट्स्वर एकादेशस्वरश्च। पाहीत्यस्य निघाते सति स्वरितप्रचयौ।

संबन्धश्च श्रुतिव्याख्यामीमांसाव्याकृतिस्वरैः।
चतुष्प्रकारैराद्योऽयमनुवाकः [३९२]निरूपितः ॥ १ ॥ २०

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-
संहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके प्रथमोऽनुवाकः॥

---

३८५. तं – परस्य। ३८६. आ – इत्युक्तपूर्वपदप्रकृतिस्वरत्वमपवदितुम्; क – इत्युक्तम्। पूर्वपदप्रकृतिस्वरत्वमपवदितुम्। ३८७–३८७. इ. उ. पा. भां. हा – निघाते सति पूर्ववत्। मा गतः। ३८८–३८८. तं. व – बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरेण घेत्ययमुदात्तः। ३८९. आ. क– स्यातेत्यस्य; तं – स्यातेत्यत्र। ३९०. इ. उ. पा. भां. हा – पूर्वाकारस्य। ३९१. तं – यजशब्दस्याद्युप°। ३९२. आ. इ. उ. तं. पा. भां – समापितः।

## यज्ञस्य॑ घोषद॑सि प्रत्यु॑ष्ट॒ꣳ रक्षः॒ प्रत्यु॑ष्टा॒ अरा॑तयः

यज्ञस्य॑ । घोषत् । अ॒सि॒ । प्रत्यु॑ष्टमिति॒ प्रति॑-उ॒ष्टम् । रक्षः॑ । प्रत्यु॑ष्टा इति॒ प्रति॑-उ॒ष्टाः॑ । अरा॑तयः ।

अश्वपर्शुमसिदं वाभिमन्त्रयते—'यज्ञस्य' इति ॥ "चतुर्थ्यर्थे बहुलं छन्दसि" (पा २.३.६२) इति तादर्थ्ये (पा२.३.१३ वा १) षष्ठी। घुषेर्ण्यन्तात्कर्तरि "छन्दस्युभयथा" (पा ३.४.११७) इति शप आर्धधातुकत्वाण्णिलोप. (पा ६.४.५१)। "°अदुपदेशात्°"

प्रथमानुवाके वत्सापाकरणमुक्तम्। द्वितीये बर्हिराहरणमुच्यते। तयोरनुक्रमे पाठ प्रमाणमिति मीमांसिष्यते। पौर्णमास्यां सानाय्याभावे [1]वत्सापाकरणप्रयोजनाभावात् अन्वाधानस्यानन्तरम् अमावास्यायामसंनयतोऽपि बर्हिरेव प्रथमं सपादनीयम्। अत एव बौधायन.—"यद्यु वै न संनयति बर्हि. प्रतिपदेव भवति" (बौश्रौ १ १) इति। अस्मिन्ननुवाके "यज्ञस्य घोषदसि" इत्ययमाद्यो मन्त्र.। ब्राह्मणेन तु तस्मात् पूर्वमन्यो मन्त्र [2]शाखान्तरात् (काস १ २) इहानीय[2] व्याख्यात । तस्य विनियोगमाह बौधायन —"अथ जघनेन गार्हपत्य सिदसिद वाऽश्वपर्शु वाऽऽदत्ते देवस्य त्वा सवितु प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इति" (बौश्रौ १.२) इति। आपस्तम्ब.—"उत्तरेण गार्हपत्यमसिदोऽश्वपर्शुरनडुत्पर्शुर्वा निहितो भवति। देवस्य त्वा सवितु प्रसव इति असिदमश्वपर्शुं वाऽऽदत्ते। तूष्णीमनडुत्पर्शुम्" (आपश्रौ १.३.१-२) इति ॥ असिदो दर्भच्छेदनसाधन शस्त्रम्। पर्शु [3]पार्श्वास्थि। तच्च [4]तीक्ष्णधारत्वात् [5]लवने समर्थम्। [6]मन्त्रार्थस्तु—भो लवनसाधन, प्रेरकस्य देवस्य प्रेरणे सति देवतासबन्धिभ्यां बाहुभ्यां हस्ताभ्यां च त्वा स्वीकरोमीति। मणिबन्धादधस्तनौ बाहू, उपरितनौ हस्तौ। अत्र ब्राह्मणम्—"देवस्य त्वा सवितु प्रसव इत्यश्वपर्शुमादत्ते प्रसूत्यै। अश्विनोर्बाहुभ्यामित्याह। अश्विनौ हि देवानामध्वर्यू आस्ताम्। पूष्णो हस्ताभ्यामित्याह यत्यै" (तैब्रा ३.२ २) इति। यतिर्नियति । यद्यद्यज्ञसाधनमुपादेय तत्सर्वं पोषकस्य देवस्य हस्ताभ्यामेवेति [7]नियम.। अश्वपर्शुना सह बर्हि प्राप्तु गच्छेदिति सार्थवादेन वाक्येन [8]विधिरभ्रीयते—"यो वा ओषधी पर्वशो वेद। नैना स हिनस्ति। प्रजापतिर्वा ओषधी पर्वशो वेद। स एना न हिनस्ति। अश्वपर्श्वा बर्हिरच्छैति। प्राजापत्यो वा अश्व सयोनित्वाय। ओषधीनामहिꣳसायै" (तैब्रा ३ २ २) इति। [9]प्रजापत्यक्षिपरिणामोऽश्व इत्यश्वमेधविधौ श्रूयते—"प्रजापतेरक्ष्यश्वयत् तत्परापतत् तदश्वोऽभवत् यदश्वयत् तदश्वस्याश्वत्वम्" (तैसं ५ ३ १२) इति। ततोऽश्वस्य प्राजापत्यत्वात् प्रजापतेश्चौषधीषु [10]तत्तत्पर्वाभिज्ञत्वेन पर्वणो संधौ छेत्तु प्रवृत्तस्य पर्वभङ्गकथाभावेनाश्वपर्श्वा प्रजापतिरूपया दर्भच्छेदे हिंसा न भवतीति। द्रव्यान्तरपरित्यागेनाश्वपर्शुस्वीकारस्तद्योनिभूतप्रजापतिसाहित्यार्थम्। अस्ति च तत्साहित्य कारणस्य कार्येऽनुगतत्वात्। तस्मात् प्रजापतिद्वारेण कर्तुर्हिंसादोषाभाव उपपद्यते ॥

१. ग घ– वत्सापाकरणे प्रयोजनाभावात्, आ इ उ ना. पा. भां–वत्सापाकरणाभावात्। २–२. आ इ. उ. ना. पा. भां–शाखान्तरादित्यायेन, हा– शाखान्तराधिकरणन्यायेन। ३. आ. इ. उ. ना. पा. भां. हा– पार्श्वगतास्थिखण्डम्। ४ ख–रुक्मतीक्ष्ण°, ध–रुक्मवत् तीक्ष्ण°। ५ आ. ना. पा. लवन°। ६. क–मन्त्रस्यायमर्थ.। ७. ध–नियति। ८. क. त. ब–विधत्ते। ९. इ उ. ना पा. भां. हा–प्रजापतिपरिणामोऽश्व। १० इ उ. ना. पा. भां. हा–तत्ताभिज्ञत्वेन।

प्रेयमंगाद्धिषणां बर्हिरच्छ मनुना कृता स्वधया वितष्टा

प्रेति। इयम्। अगात्। धिषणा। बर्हिः। अच्छ। मनुना।

कृता। स्वधयेति स्व-धया। वितष्टेति वि–तष्टा।

(पा ६·१·१८६) इति शतुरनुदात्तत्वम्। उदात्तनिवृत्तिस्वरेण (पा ६·१·१६१) शप उदात्तत्वम्। असिदाश्वपर्श्वोः वस्तुत्वेन विवक्षितत्वात् नपुंसकत्वम्। लिङ्गव्यत्ययो वा। बर्हिर्लवन द्वारेण मयैव शीघ्रं यज्ञं [१]संपादयस्वेति यज्ञार्थम् [२]आघोपयत् [V]असि इति स्तुतिः। [V]घोपत् इति धननामेति केचित्॥

गार्हपत्ये प्रतितपति– 'प्रत्युष्टम्' इति॥ केचित्तु 'प्रत्युष्टा अरातयः' इति गायत्र्येकपदा यजुरादिकेत्याहुः। रक्षेरसुनि अर्थविपर्यासः। क्षर [३]मूर्च्छने इत्यस्य वर्णविपर्यासो वा। यदत्र छिद्रान्वेषि [V]रक्षः तदनेन [४]प्रतितपनेन [V]प्रत्युष्टं प्रतिमुखीकृत्य दग्धमस्तु। उष दाहे। "आदितश्च" (पा ७·२·१६) इति चकारात् [५]आश्वस्तादिवत्* इडप्रतिषेधः। "गतिरनन्तरः" (पा ६·२·४९) इति पूर्वपदप्रकृतिस्वरत्वम्। [६]किंच, [V]अरातयः अपि [V]प्रत्युष्टाः सन्तु। रातयो धनस्य दातारः सुहृदः। "कृत्यल्युटो बहुलम्" (पा ३·३·११३) इति बहुलवचनात् कर्तरि क्तिन्। अतोऽन्येऽरातयः। अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६·२·२)॥

**यज्ञस्येति** ॥ [११]अश्वपर्श्वभिमन्त्रणे प्रथममन्त्रं विनियुङ्क्ते बौधायनः—"आदायाभिमन्त्रयते यज्ञस्य घोपदसीति" (बौश्रौ १·२) इति। आपस्तम्बस्तु सूत्रे—"यज्ञस्य घोपदसीति गार्हपत्य-मभिमन्त्र्य" (आपश्रौ १·३·३) इति॥ [V]घोपत् इति धनस्य नाम। भो अश्वपर्शो, त्वं [V]यज्ञस्य साधनं द्रव्यम् [V]असि। भो गार्हपत्य, इति वा [१२]योजनीयम्॥ अत्र ब्राह्मणम्—"यज्ञस्य घोपद-सीत्याह। यजमान एव रयिं दधाति" (तैब्रा ३·२·२) इति। रयिं धनम्॥

**प्रत्युष्टमिति** ॥ बौधायनः—"गार्हपत्ये प्रतितपति प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इति" (बौश्रौ १·२)। आपस्तम्बस्तु—"प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वाऽसिदं प्रतितपति। न पर्शुम्" (आपश्रौ १·३·३–४) इति॥ अस्मिन् लवनसाधने निगूढं [१३]रक्षसामथ वैरिणां[१३] च स्वरूपमस्यन्तं दग्धं भवतु॥ मन्त्रप्रयोजनमाह—"प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याह। रक्षसामपहत्यै" (तैब्रा ३·२·२) इति॥

१. पं. व– समापयतीति; ति. तं. म. म१. मै४– संपादयतीति; मै१– संपादयेति। २. मै४ – आघोपयति वा; पं– आघोपयन्निति वा; ति. तं. व. म. म१–आघोपयन्ति वा; मै१– आघोपयती। ३. तं. म–संज्वलने। ४. ति. तं. व. म–प्रतपनेन। ५. ति. तं. पं. व. म. म१–मै४– 'आश्वस्तादिवत्' नास्ति। *['आदितश्च' इति पाणिनिसूत्रे काशिका द्रष्टव्या।] ६. ति. तं. पं. म. म१. मै४– 'किंच' नास्ति।

११. तं–चाश्वपरशोरभिमन्त्रणे। १२. क. तं–योज्यम्। १३–१३. व–राक्षसस्य रिपूणाम्; क. तं– राक्षसस्य वैरिणाम्।

त आ वहन्ति कवर्यः पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे

ते। एतें। वहन्ति। कवर्य·। पुरस्तात्। देवेभ्यः। जुष्टम्। इह। बर्हि·। आसद् इत्या-सदे।

गार्हपत्यप्रदेशादाहवनीयं गच्छति– 'प्रेयम्' इति त्रिष्टुभा ॥ इयम् अश्वपर्शु· प्र अगात् प्राचीं गच्छति। "छन्दसि लुङ्लङ्लिटः" (पा ३.४.६) इति लुङ्। [7]किंविशिष्टा? धिषणा धृष्टा [8]लवनसमर्था। "धृषेर्धिष् च सञ्ज्ञायाम्" (उ २४९) इति क्युप्रत्ययः। बर्हि· अच्छ आप्तु मनुना प्रजापतिना [9]सर्वस्य कर्त्रा कृता। स्वधया [10]अनेन [11]मासलक्षणेन [12]करणेन मनुना [13]कर्त्रा कृता। [14]दधाते "आतोऽनुपसर्गे कः" (पा ३.२.३)। कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६.२.१३९)। धिनष्टा विशेषेण तनूकृता अतिनिशिता। "यस्य विभाषा" (पा ७.२.१५) इतीट्-प्रतिषेधः। "गतिरनन्तरः" (पा ६.२.४९) इति पूर्वपदप्रकृतिस्वरत्वम् ॥

कस्मात् पुनरियं प्राचीं गच्छतीत्याह– 'ते' इति ॥ ते खलु कवय· मेधाविनः [15]यज्ञकर्मविदः पुरस्तात् पूर्वस्या दिशः बर्हि आ वहन्ति। पञ्चम्यन्तात् अस्तातिः (पा ५.३.२७)। देवेभ्य [16], षष्ठ्यर्थे चतुर्थी वक्तव्या (पा २.३.६२ वा १)। [17]जुष्टं देवाना प्रियम्[17], एवं हि [18]क्रियमाणं देवानां प्रियं भवतीति। "[19]नित्यं

प्रेयमिति ॥ बौधायन —"अथ आहवनीयमभि प्रैति प्रेयमगाद्धिषणा बर्हिरच्छ मनुना कृता स्वधया वितष्टा त आ वहन्ति कवय. पुरस्ताद्देवेभ्यो जुष्टमिति" (बौश्रौ १.२) इति। स एव मन्त्रशेषं पृथग्विनियुङ्क्ते—"इह बर्हिरासद इति वेदिं प्रत्यवेक्षते" (बौश्रौ १.२) इति। आपस्तम्बस्तु कृत्स्नमन्त्रस्यैकमेव विनियोगमाह—"प्रेयमगादित्युक्त्वा उर्वन्तरिक्षमन्विहीति प्राचीमुदीचीं वा दिशमभिप्रव्रज्य यतः कुतश्चिद्दर्भमयं बर्हिराहरति" (आपश्रौ १.३.५) इति ॥ इयम् अश्वपर्शुर्विद्यारूपत्वेन [19]अभिज्ञानवती बर्हि [15-]आप्तु प्राचीं[-15] गच्छति। कीदृशी सा? प्रजापतिरूपेण मनुना स्वयम्भुवो निर्मिता। अश्वभक्षितायलक्षणया स्वधया विशेषेण तीक्ष्णीकृता। यस्मात् ते

७. मै. मै१. मै३. मै४– 'किंविशिष्टा' नास्ति। ८. मै. मै१. मै३– लवने समर्था। ९. ब– सर्व॰। १०. मै४– अनेन। ११. मै४– वा सलक्षणेन, ति. त. प. ब. म म१– वा स्वसांनाय्यलक्षणेन। १२. ति. त म. म१– कारणेन स्वभक्षितलक्षणेन। १३. ति. ब, म– 'कर्त्रा' नास्ति। १४. ति. म. म१– धाम्याती; ब–धाधातो। १५. ति. त प. ब म. म१. मै४– यजमानकर्मविद। १६. ति. त. म म१ मै४– 'देवेभ्य' नास्ति, ब– 'देवेभ्य' इत्यस्यानन्तरं 'देवानाम्'। १७–१७. मै. मै१. मै३– देवेभ्यो जुष्टम्। १८. मै मै१. मै३– क्रियमाणे।

१९. क–अभिज्ञा सती, ब–विज्ञाता सती, त–अविज्ञाता सती। १५–१५ आ. इ. उ. ना. पा.: मां, हा–आप्नुम्।

देवानां परिषूतमसि वर्षवृद्धमसि

देवानाम् । परिषूतमिति परि-सूतम् । असि । वर्षवृद्धमिति वर्ष-वृद्धम् । असि ।

मन्त्रे" (पा ६.१.२१०) इति जुष्टशब्द आद्युदात्तः[19] । वेदिं प्रत्यवेक्षमाणो मन्त्रशेषं ब्रवीति- [V]इह अस्यां खलु वेद्यां तत् लविष्यमाणं [V]बर्हिः [V]आसदे आसादयितव्यम् । एवमिदमर्हति । सदेर्ण्यन्तात् "कृत्यार्थे तवैकेन्°" (पा ३.४.१४) इति केन्प्रत्ययः । "बहुलं संज्ञाच्छन्दसोः" (द्र. उ १९०) इति [20]णेर्लुक् । "न लुमता°" (पा १.१.६३) इति वृद्ध्यभावः । कृदुत्तरपदप्रकृतिस्वरेण "[21]ञ्नित्यादिः°" (पा ६.१.१९७) इति-[21] आद्युदात्तत्वम्[22] ॥ ५

प्रस्तरार्थान् दर्भान् प्रतिगृह्णाति-'देवानाम्' इति ॥ चतुर्थ्यर्थे षष्ठी (पा २.३.६२) ।

पूर्वे [V]कवयः विद्वांसोऽनुष्ठातारः पूर्वस्या दिशो [16]बर्हिराहरन्ति स्म[16] तस्मादियं [17]प्राङ्मुखी गच्छति । [V]देवेभ्यः[18] हविर्भुग्भ्यः प्रियं [V]बर्हिः [V]इह वेद्यामासादयितव्यम् । अस्य मन्त्रस्य प्रथमभागे पदार्थं [19]तात्पर्यार्थं चाऽऽह—"प्रेयमगाद्धिषणा बर्हिरच्छेत्याह । विद्या वै धिषणा । विद्ययैवैनदच्छैति" (तैब्रा ३.२.२) इति । द्वितीयभागस्यार्थे श्रुत्यन्तरप्रसिद्धिमनुमानप्रसिद्धिं चाऽऽह—"मनुना कृता स्वधया वितष्टेत्याह । मानवी हि पर्शुः स्वधाकृता" (तैब्रा ३.२.२) इति । [20]अनेनास्याद्युपचयोऽन्वय-व्यतिरेकसिद्धः । तृतीयभागे पदार्थं पुरस्ताच्छब्दतात्पर्यं चाऽऽह—"त आ वहन्ति कवयः पुरस्तादित्याह । शुश्रुवांसो वै कवयः । यज्ञः पुरस्तात् । मुखत एव यज्ञमारभते" (तैब्रा ३.२.२) इति । होमाधारस्याऽऽहवनीयस्य पूर्वदिक्स्थत्वाद्यज्ञः पुरस्तात् वर्तत इत्युच्यते । तच्छब्दपाठेन पुरस्तादेव यज्ञ [21]आरब्धो भवति । अपि च तत्पाठे दिगन्तरप्रयुक्तं वैकल्यं नास्तीत्याह—"अथो यदेवदुवाचा यतः कुतश्चाऽऽहरति । तत्प्राच्या एव दिशो भवति" (तैब्रा ३.२.२) इति । चतुर्थभागे आसद [22]इति पदस्य[22] तात्पर्यमाह—"देवेभ्यो जुष्टमिह बर्हिरासद इत्याह । बर्हिषः समृद्ध्यै । कर्मणोऽनपराधाय" (तैब्रा ३.२.२) इति । 'आसादयितव्यम्' [23]इत्युक्ते यावद्वेद्यास्तरणाय[23] पर्याप्तं तावतः सूचितत्वादेतत् पदोच्चारणं समृद्ध्यै संपद्यते । ततो न्यूनत्व-लक्षणः कर्मणोऽपराधो न भविष्यति ॥ १० १५ २०

देवानामिति ॥ बौधायनः—"दर्भस्तम्बं [24]परिगृह्णाति यावन्तमलं [25]प्रस्तराय मन्यते । देवानां परिपूतमसीति । अथैनमूर्ध्वमुन्मार्ष्टि वर्षवृद्धमसीति" (बौश्रौ १.२) इति । आपस्तम्बस्तु २५

१९-१९. ति. तं. पं. व. म. मै४- 'नित्यं मन्त्रे इति जुष्टशब्द आद्युदात्तः' नास्ति । २०. तं. पं. व. म. म१. मै४-णिलुक् । २१-२१. मै. मै१. मै३. मै४-नित्वात् । २२. मै. मै१. मै३-आद्युदात्तः ।

१६. १६. आ. इ. उ क. ना. पा. भां. हा-बर्हिरानयन्ति; तं- बर्हिराहरन्ति आनयन्ति । १७. आ. पा. प्राक् । १८. आ. ना. पा. भां. 'देवेभ्यः' नास्ति । १९. आ. क. ना. पा-तात्पर्यम् । २०. तं-अनेनावस्थापचयोऽन्वय° । २१. ना. पा. हा-आरब्धव्यः । २२-२२. आ. इ. उ. ना. पा. भां. हा-इत्यस्य । २३. आ. इ. उ. ना. पा. भां- इत्युक्ते यावद्वेद्यास्तरणस्य युक्तत्वं । २४. आ इ. उ. ना. पा. भां- गृह्णीते । २५ आ. तं. पा. भां-प्रस्तरणाय ।

## देवबर्हिर्मा त्वाऽन्वङ्मा तिर्यक्

देवबर्हिरिति देव-बर्हिः । मा । त्वा । अन्वक् । मा । तिर्यक् ।

देवार्थं परिपूतं परिगृहीतम् असि, नात्मार्थम् । अतो मामय वृथैव [22]छविष्यतीति त्वया[22] नोद्वेजितव्यम् । [24]प्रवृद्धादेराकृतिगणत्वात् उत्तरपदान्तोदात्तत्वम् ( पा ६.२.१४७ ) । ५ "परेरभितोभावि मण्डलम्" ( पा ६.२.१८२ ) इति वा । "अथो यथा वस्यसे" ( तैब्रा ३.२.२ ) इत्यादि ब्राह्मणम् ॥

दर्भस्तम्बमुन्मार्ष्टि 'वर्षवृद्धमसि' इति ॥ वर्षेण [25]वृद्धमसि । पूर्ववत्पिङ्गलक् ( उ १९० ) । "तृतीया कर्मणि" ( पा ६.२.४८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । वर्षशब्द उञ्छादित्वादन्तोदात्तः ( पा ६.१.१६० ) ॥

१० असिदादिना बर्हिः सञ्चेययति— 'देवबर्हिः' इति ॥ देवाना बर्हिः तल्पभूतम् ।

द्वयोरेकमन्त्रत्वमभिप्रेत्यैकमेव विनियोगमाह— "देवानां [26]परिपूतमसीति दर्भान् परिप्लौति" ( आपश्री १.३.६ ) इति ॥ भो दर्भजात, त्वं देवानाम् अर्थे [27]परिगृहीतम् असि, न तु मया स्वगृहाच्छादनाद्यर्थम् । अतो न मे लवनदोषोऽस्ति । वर्षेण पुनर्वृद्धिसम्भवात् तथापि न हानिः ॥ परिगृहीतस्य कृत्स्नस्याऽपि[28] देवार्थत्वं न त्वेकदेशस्येत्येवं मन्त्राभिप्रायं दर्शयति —"देवानां १५ परिपूतमसीत्याह । यद्वा इदं किं च । तद्देवानां परिपूतम्" ( तैब्रा ३.२.२ ) इति । अपि च यथा लोके कश्चिद्भृत्यो राजनियोगात् ग्रामेषु गत्वा बलाद्गृह्यमाणं दधिक्षीरादिद्रव्यं बहुमत्तमाय राज्ञे, न तु मदर्थमिति प्रजानामग्रे प्रतिप्रोच्य निर्भय [29]सर्वमेव हरिष्यामीति ब्रूते, तद्वदिदमित्यभिप्रायान्तरमाह—"अथो यथा वस्यसे प्रतिप्रोच्याऽऽहेद करिष्यामीति । एवमेव तदध्वर्युर्देवेभ्यः प्रतिप्रोच्य बर्हिर्दाति । आत्मनोऽहिंसायै" ( तैब्रा ३.२.२ ) इति ॥ स्वीकार्यस्य स्तम्बस्यैकस्य कृत्स्नलवनं २० च विधत्ते— "यावत स्तम्बान् परिदिशेत् । यत्तेषामुच्छिंष्यात् । अति तद्यज्ञस्य रेचयेत् । एकं स्तम्बं परिदिशेत् । तं सर्वं दायात् । यज्ञस्यानतिरेकाय" ( तैब्रा ३.२.२ ) इति । यज्ञस्य मध्ये यद्द्रव्यं तस्य यज्ञात् [30]बहिर्भावोऽतिरेकः, स त्वयुक्तः । अकृष्टपच्यानां दर्भादीनां [31]तटाकाद्युदकमनपेक्ष्य वर्षेण वृद्धिं प्रसिद्धेत्याह —"वर्षवृद्धमसीत्याह । वर्षवृद्धा वा ओषधयः" ( तैब्रा ३.२.२ ) इति ॥

२५ देवबर्हिरिति ॥ बौधायन — "असिदेनोपयच्छति देवबर्हिर्मा त्वान्वङ्मा तिर्यक् पर्व ते राध्यासमिति" ( बौश्री १.२ ) । विनियोगद्वयमाहाऽऽपस्तम्ब — "देवबर्हिर्मा त्वाऽन्वङ्मा

२२-२३ मे. मै१. मै३— हनिष्यतीति । २४ ति— परिप्लौतेः । २५. मै मै१. मै३— वर्धितमसि ।

२६. आ—' परिपूतमसि ' इत्यस्यानन्तर ' वर्षवृद्धमसि ' । २७. इ. उ आ. पा भां. हा—गृहीतम् । २८ आ ना पा—सर्वस्य । २९ क—सर्वेदम् । ३०. आ. इ. उ. पा भां. हा — बहिर्भावेऽतिरेकः । ३१ इ उ — तटाकाद्यु° ।

पर्वं ते राध्यासमाच्छेत्ता ते मा रिषं

पर्वं । ते । राध्यासम् । आच्छेत्तेत्या–छेत्ता । ते । मा । रिषम् ।

---

पाष्टिकम् " [२६]-आमन्त्रितस्य° " ( पा ६·१·१९८ ) इत्याद्युदात्तत्वम्-[२६] । [२७]प्रत्ययलक्षणं तत्र नास्तीति [२८]-चेत् । सोः-[२८] व्यत्ययेन " हल्ङ्याब्भ्यः° " (पा ६·१·६८) इति लोपः[२९] करिष्यते । [V]अन्वक् पर्वणोऽधस्तात् । [V]तिर्यक् तिरश्चीनम् । यत्र क्वापि एवं [V]त्वा [V]मा आच्छिदम् । " अहिंसायै " ( तैब्रा ३·२·२ ) इति ब्राह्मणदर्शनात्, ' आच्छेत्ता ' इति वक्ष्यमाणत्वाच्च माशब्देन छेदनं निषिध्यते इति वेदितव्यम् । कस्मात् पुनरन्वक्छेदादि [३०]वर्ज्यत इत्याह– [३१]-' पर्वं ' इत्यादि-[३१] । [V]ते तव खलु [V]पर्वं प्ररोहस्थानं [V]राध्यासं पुनरपि प्ररोहार्थम् अविनष्टं स्थापयामीतीयमाशीः ॥ ५

आच्छिनत्ति– ' आच्छेत्ता ' इति ॥ कृदुत्तरपदप्रकृतिस्वरत्वम् । मर्यादायामाकारः । मर्यादा च विधानम् । यस्मादहं विधानेन तव छेत्ता, न तु वृथा, तस्मादहं [V]मा [V]रिषं विनाशं १०

---

तिर्यगिति संयच्छति । पर्वं ते राध्यासमित्यसिदमभिनिदधाति " ( आपश्री १·३·११ ) इति ॥ हे [V]देवबर्हिः, [V]त्वा [V]अन्वक् अपि [V]मा हिंसिषं, [V]तिर्यक् अपि [V]मा हिंसिषम् । किं तु [V]ते तव [V]पर्वं पुनः प्ररोहस्थानमविनष्टं यथा [३२]स्यात्तथा [३३]संपादयामि । हिंसाया अन्वक्त्वं दैर्घ्येण द्वैधीभावः । तिर्यक्त्वं ह्रस्वानां खण्डानां [३४]सादनम् ॥ बर्हिषो देवसंबन्धस्तादर्थ्यरूप इत्यभिप्राय- माह— " देवबर्हिरित्याह । देवेभ्य एवैनत् करोति " ( तैब्रा ३·२·२ ) इति । निषेधो दोष- परिहारार्थेत्याह —" मा त्वाऽन्वङ्मा तिर्यगित्याहाहिंसायै " ( तैब्रा ३·२·२ ) इति । पुनः [३५]प्ररोहरूपसमृद्ध्यर्थं पर्वसादनमित्याह —" पर्वं ते राध्यासमित्याहर्ध्यै " (तैब्रा ३·२·२) इति ॥ १५

आच्छेत्तेति ॥ बौधायनः — " आच्छिनत्त्याच्छेत्ता ते मा रिषमिति " ( बौश्री १·२ ) इति । तद्वदापस्तम्बोऽपि ( आपश्री १·३·१२ ) ॥ इत ऊर्ध्वं यत्र द्वयोर्विशेषाभावस्तत्रान्यतरस्यैव विनियोग [३६]उदाहरिष्यते । हे देवबर्हिः, तवाहम् [V]आच्छेत्ता अपि मन्त्रसामर्थ्यात् [V]मा हिंसिषम् ॥ अत्र ' मा रिषम् ' इत्येतं मन्त्रं पठतस्तदर्थाभिज्ञस्य च स्वकीयं किमपि न विनश्यतीत्याह—" आच्छेत्ता ते मा रिषमित्याह । नास्याऽऽत्मनो मीयते । य एवं वेद " ( तैब्रा ३·२·२ ) इति ॥ २०

---

२६–२६. ति. तं. पं. व. म. म१. मै४– आमन्त्रिताद्युदात्तत्वम् । २७. ति. व. म. मै४– प्रत्यय- लक्षणत्वम् । २८–२८. मै१– वचन°; ति. तं. पं. व. म. म१. मै४–'चेत् । सोः ' नास्ति । २९. ति. तं. म. म१– सुलोपः । ३०. ति. तं. म–व्यज्यते । ३१. ति. व. म. म१. मै४– ' पर्वं इत्यादि ' नास्ति ।

---

३२. क–भवति तथा । ३३. तं–साधयामि; क–स्थापयामि । ३४. क. व–संपादनम् । ३५. आ–प्ररोहसमृद्ध्यर्थम्; इ. उ–प्ररोहार्थं समृद्ध्यर्थं च; भां. ह्या–प्ररोहार्थसमृद्ध्यर्थम् । ना–प्ररोहार्थं समृद्ध्यर्थम् । ३६. तं–उदाह्रियते ।

**देवबर्हिः शतवल्शं वि रोह सहस्रवल्शा ( १ ) वि वयम् रुहेम**

देवबर्हिरिति देव-बर्हि । शतवल्शमिति शत-वल्शम् । वीति । रोह ।

सहस्रवल्शा इति सहस्र-वल्शाः ( १ ) । वीति । वयम् । रुहेम ।

---

मा गाम् । रिपेर्लृङि व्यत्ययेन श्लेरङादेशः । [32]केचिदस्य पुषादित्वमिच्छन्ति, यथा– "[33]तेन
५ गच्छन् रिप्यति " ( मनु ४·१७८) इति । तदा पुषादित्वादेवाङ्सिद्धिः.[34] (पा ३·१·५५)॥

आच्छिन्नानभिमृशति–' देवबर्हिः ' इति ॥ हे देवाना बर्हिः, Vशतवल्शम् अनेक-प्ररोहण[35] यथा तथा Vवि Vरोह । एकत्र [36]पूर्वपदामन्त्रिताद्युदात्तत्वम् । अन्यत्र बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ( पा ६·२·१ ) ॥

आत्मान प्रत्यभिमृशति–' सहस्रवल्शाः ' इति त्रिष्टुभैकपदया ॥ Vवयम् अपि
१० Vसहस्रवल्शाः पुत्रपौत्राद्यनेकप्ररोहवन्तो Vवि Vरुहेम विरूढा भूयास्म । " लिङ्याशिष्यङ् "
(पा ३·१·८६) इत्यङ्प्रत्ययः । यासुडादि (पा ३·४·१०३ ) । "छन्दस्युभयथा"
(पा ३·४·११७) इति सार्वधातुकत्वात् [37]-इयू । यस्य लोपः-[37] (पा ६·१·६६ ) ॥

---

देवबर्हिरिति ॥ कल्पसूत्रम्—" देवबर्हिः शतवल्शं विरोहेत्यालवानभिमृशति " ( आपश्रौ १·४ ६ ) इति ॥ [37]लूनावशिष्टमूलान्याळवाः । Vशतवल्शम् [38]अनन्तशाखम् ॥ बर्हिष पुत्रादिव-
१५ दुपकारकत्वात् [39]-त प्ररोहार्थं यत्नः-[39] पुत्रोत्पत्यै भवतीति व्याचष्टे—" देवबर्हिः शतवल्शा विरोहे-त्याह । प्रजा वै बर्हि । प्रजानां प्रजननाय " ( तैब्रा ३·२·२ ) इति ॥

सहस्रवल्शा इति ॥ कल्प —" सहस्रवल्शा वि वयम् रुहेमेत्यात्मानं प्रत्यभिमृशति " ( बौश्रौ १·२ ) इति ॥ मन्त्रस्याशीःपरत्वं स्पष्टमित्याह—" सहस्रवल्शा वि वयम् रुहेमेत्याह । आशिषमेवैतामाशास्ते " (तैब्रा ३ २·२ ) इति ॥

२० पृथिव्या इति ॥ कल्प —" पृथिव्याः संपृच पाहीत्यनधो निदधाति " ( आपश्रौ १·४·१ ) इति ॥ भोस्तृणकाष्ठाद्याधार, Vपृथिव्या सपर्कादिमं दर्भं रक्ष ॥ द्रव्यान्तरस्योपरिस्थापने प्रयोजन-माह—" पृथिव्याः संपृच पाहीत्याह प्रतिष्ठित्यै " ( तैब्रा ३·२·२ ) इति । यदि लूनमिमं दर्भं पृथिव्या निदध्यात् तदानीमुच्छिष्टादिस्पर्शेन त्याज्यत्वे सति दर्भोऽप्रतिष्ठित स्यात् । पूर्वं प्रस्त-रात्यस्य दर्भमुष्टे समन्त्रकलवनं प्रपञ्चितम् । इदानीं मुष्ट्यन्तराणा मन्त्रमन्तरेणैव लवन विधत्ते—
२५ " अयुग्मऽयुग्मान् मुष्टीँल्लुनोति । मिथुनत्वाय प्रजात्यै " ( तैब्रा ३·२·२ ) इति । अयुग्मत्व [40]युग्मरूप-

---

३२ ति. त प य म म१. मै४– केचिदत्र । ३३. तं. ब. म. म१–ते । ३४. मै. मै१. मै२. मै४.– °सिद्ध । ३५ ति त प. ब. म म१. मै४– °प्ररोहम् । ३६. ति. तं. ब. म. म१. मै४– पूर्ववदाद्युदात्तत्वम् । ३७–३७. ति तं. पं. ब. म. म१. मै४– सलोप ।

---

३७ ना. पा. हा–लूनशिष्ट° । ३८. क. ब–शतशाखम् । ३९–३९. क. ब–प्ररोहार्थमप्यायी° ।
४०. १ उ. ना पा. मां हा–युग्मरूप° ।

पृथि॒व्याः सं॒पृच॑ः पाहि सु॒संभृ॑ता त्वा॒ सं भ॑रा॒म्यदि॑त्यै॒

पृ॒थि॒व्याः । सं॒पृच॒ इति॑ सं-पृच॑ः । पा॒हि॒ । सु॒संभृ॒तेति॑ सु-सं॒भृ॑ता । त्वा॒ । समिति॑ । भ॒रा॒मि॒ । अदि॑त्यै ।

प्रस्तरं निदधाति—'पृथिव्याः' इति॥ ङीप उदात्तत्वात् "उदात्तयणो हल्पूर्वात्" (पा ६·१·१७४) इति विभक्तेरुदात्तत्वम्। [38]संपृचन्तीति [39]संपृचः। "क्विप् च" (पा ३·२·७६) इति क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६·२·१३९)। नित्यसमासत्वात् विभक्तिस्वराभावः। पृथिवीसंपृक्तानस्मान् [V]पाहि। दिविष्ठः त्वम्, उपरि [40]निधानात्॥

[41]निधनानि संभरति- 'सुसंभृता' इति॥ [42]सुष्ठु संभ्रियते[42] [43]अनया इति सुसंभृत्। पूर्ववत् क्विप्। तादृश्या रज्ज्वा [V]त्वा त्वां [V]सं [V]भरामि इतरमुष्टिभिः सह भरामि भृञ्। [44]भरणे भौवादिकः॥

रास्नां करोति—'अदित्यै' इति॥ षष्ठ्यर्थे चतुर्थी (पा २·३·६२ वा १)। कर्मणि क्तिन्। अखण्डनीया पृथिवी अदितिः। अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६·२·२)। रास्ना शुल्बम्। अदित्याः [V]रास्ना त्वम् [V]असि, यामदितिरकरोदिति स्तुतिः। सामर्थ्याच्चायं मन्त्रः संभरणमन्त्रात् पूर्वो द्रष्टव्यः॥

समसंख्याराहित्यम्। अत्र विषमसंख्यापक्षाणां बहुविधत्वात् [41]अशेषसंग्राहार्था वीप्सा। तान् पक्षान् दर्शयति बौधायनः—"तूष्णीमत ऊर्ध्वमयुजो मुष्टीँल्लुनोति, त्रीन् वा पञ्च वा सप्त वा नवैकादश वा" (बौश्रौ १·२) इति। अमन्त्रकलवने ब्राह्मणान्तरमुदाजहाराऽऽपस्तम्बः—"प्रस्तरमेव मन्त्रेण दाति तूष्णीमितरदिति वाजसनेयकम्" (आपश्रौ १·४·६) इति। समन्त्रकामन्त्रकयोश्च लवनयोर्द्वित्वेन मिथुनत्वं तेन च लौकिकस्त्रीपुरुषरूपमिथुनस्मरणात् तद्द्वाराऽऽत्मप्रजोत्पत्तये लवनद्वयं संपद्यते॥

सुसंभृतेति॥ अथ दर्भमयं शुल्बं भूमौ प्रसार्य तस्मिंल्लूना मुष्टयो निधातव्याः। तत्र 'पाठक्रमादर्थक्रमो बलीयान्' इति न्यायेन मन्त्रद्वयस्य व्यत्यासेन विनियोगः कल्पे दर्शितः—"अदित्यै रास्नासीत्युदगग्रं वितत्य सुसंभृता त्वा संभरामीति तस्मिन्निधनानि [42]संभृत्य" (आपश्रौ १·४·९) इति[42]॥ हे रज्जो, त्वं भूमेः काञ्चीगुणस्थानीया रशना [V]असि। हे दर्भमुष्टिसमुदाय, त्वां सुष्ठु संग्रहीतुं योग्यया रशनया संगृह्णामि॥ ब्राह्मणं तु पाठक्रमेणैव व्याचष्टे—"सुसंभृता त्वा संभरामीत्याह। ब्रह्मणैवैनत् संभरति। अदित्यै रास्नासीत्याह। इयं वा अदितिः। अस्या एवैनद्रास्नां करोति" (तैब्रा ३·२·२) इति। दर्भमयत्वेन प्रशस्तत्वात् रज्जोर्मेध्यत्वम्। एनद्दर्भजातम्। एनदेनां रशनाम्॥

३८. मै४- संपृच्यत्वमिति। ३९. मै४-संपृग्। ४०. पं-कथनात्। ४१. म१. मै. मै१. मै३. मै४- 'निधनानि' नास्ति। ४२-४२. व-सुसंभ्रियन्ते। ४३. पं- अनेन। ४४. तं. व. म. म१. मै४- 'भरणे' नास्ति।

४१. आ-अशेषार्थसंग्रहार्था। ४२-४२. इ. उ. ना. पा. भा. द्रा-संभरति।

रास्नाऽसीन्द्राण्यै संनहनं पूषा ते ग्रन्थिं ग्रथ्नातु ।

रास्ना । असि । इन्द्राण्यै । संनहनमिति सम्-नहनम् । पूषा । ते । ग्रन्थिम् । ग्रथ्नातु ।

सनह्यति—'इन्द्राण्यै' इति ॥ सेन चतुर्थी । इन्द्रस्य पत्न्याः Vसनहनं [४५]सयमनमसीति स्तुतिः । "इन्द्राणी वा अग्रे देवतानाꣳ समनह्यत" (तैब्रा ३·२·२) इति ब्राह्मणम् । प्रथमे "उदात्तयणो हल्पूर्वात्" (पा ६·१·१७४) इति विभक्तेरुदात्तत्वम् । द्वितीये तु कृदुत्तरपदप्रकृतिस्वरेण "लिति" (पा ६·१·१९३) प्रत्ययात् पूर्वमुदात्तत्वम् । सनहनं च शुल्बान्तयोः संश्लेषणम् । ग्रन्थिकरणस्य विधास्यमानत्वात् ॥

ग्रन्थिं करोति—'पूषा' इति ॥ Vपूषा आदित्यः । स Vते तव Vग्रन्थिं Vग्रथ्नातु[४६] ॥

शुल्बान्तमुपगूहति—'स ते' इति ॥ Vसः Vते तव ग्रन्थिः Vमा Vआ Vस्थात् मा

इन्द्राण्या इति ॥ कल्पः—"इन्द्राण्यै संनहनमिति [४३]संनह्यति" (आपश्रौ १·४·९) इति ॥ शुल्बमूलाग्रयोर्मेखलारूपं बन्धनं Vसंनहनम् ॥ तस्येन्द्राणीप्रियत्वं विशदयति—"इन्द्राण्यै सनहनमित्याह । इन्द्राणी वा अग्रे देवतानाꣳ समनह्यत । साऽर्ध्नोत् । ऋद्ध्यै संनह्यति" (तैब्रा ३·२·२) इति । येयमिदानीमिन्द्राणी इन्द्रपत्नी देवतानां मध्ये श्रेष्ठा वर्तते सा पूर्वस्मिन् जन्मनि शतसंख्याकान् क्रतूननुतिष्ठता यजमानेन तत्तत्कर्ता योक्त्रेण बद्धाऽभूत्, तद्बन्धनसामर्थ्यात् इन्द्राणीस्वरूपां समृद्धिं प्राप्तवती । तस्मात् समृद्ध्यर्थमेवाध्वर्युरिदं संनह्येत् । किं ■ बर्हिषः प्रजारूपत्वादिदं संहननं प्रजानाम् [४४]अपराधापाय अशैथिल्याय[४४] भवति । तस्मात् प्रसवेऽपि प्रजा धमनीभिर्व्याप्ता जायन्त इत्याह—"प्रजा वै बर्हिः । प्रजानामपराधापाय । तस्मात् स्नावसंतताः प्रजा जायन्ते" (तैब्रा ३·२·२) इति ॥

पूषेति ॥ कल्पः—"पूषा ते ग्रन्थिं ग्रथ्नात्विति ग्रन्थिं करोति" (आपश्रौ १·४·१०) इति ॥ हे संनद्धरज्जो, तव Vग्रन्थिं पोषको देवः करोतु । हे दर्भ, इति वा योज्यम् ॥ देवताविवक्षया[४५] पूषच्छब्दस्यैव प्रयोगेऽभिप्रायमाह—"पूषा ते ग्रन्थिं ग्रथ्नात्वित्याह । पुष्टिमेव यजमाने दधाति" (तैब्रा ३·२·२) इति ॥

स इति ॥ कल्पः—"स ते माऽस्थादिति पुरस्तात्प्रत्यञ्चं ग्रन्थिमुपगूहति पश्चात्प्राञ्चं वा" (आपश्रौ १·४·१०) इति ॥ हे दर्भ, तव निर्बन्धकारी Vसः [४६]रज्जुग्रन्थिश्चिर Vमा तिष्ठतु ॥ दर्भोपद्रवपरिहाररूपं निषेधफलमाह—"स ते माऽस्थादित्याहाहिꣳसायै" (तैब्रा ३·२·२) इति । [४७]गूहनं विधत्ते—"पश्चात्प्राञ्चमुपगूहति । पश्चाद्धि प्राचीनꣳ रेतो धीयते । पश्चादेवास्मै प्राचीनꣳ

४५. ति ध. म म१. मै४– सयमनमिति । ४६. मै मै१. मै३– 'ग्रथ्नातु' इत्यस्यानन्तरं 'करोतु, सामान्यग्रन्थे विशेषग्रन्थिं कर्म' ।

४३. तै– 'सनह्यति' नास्ति । ४४–४४. आ. ना पा भा हा–अपराधापाय, क. तं ब–अशैथिल्याय । ४५. आ. ना पा हा–°विवक्षायाम् । ४६ इ. उ–रज्जुश्चिरम् । ४७. तै–निगूहनम् ।

**स ते माऽऽस्थादिन्द्रस्य त्वा बाहुभ्यामुद्यच्छे बृहस्पतेर्मूर्ध्ना**

सः । ते । मा । एति । स्थात् । इन्द्रस्य । त्वा । बाहुभ्यामिति बाहु-भ्याम् ।

उदिति । यच्छे । बृहस्पतेः । मूर्ध्ना ।

प्रदेशान्तरमातिष्ठतु [47]यावद्विमोक्षं शिथिलो मा भूत् । "गातिस्था°" (पा २.४.७७) इति सिचो लुक् ॥

बर्हिरुद्यच्छते—'इन्द्रस्य त्वा' इति ॥ ᵛइन्द्रस्य ᵛबाहुभ्यां ᵛत्वा त्वाम् ᵛउत् ᵛयच्छे उत्क्षिपामि, नात्मीयाभ्यामिति स्तुतिः । "समुदाङ्भ्यो यमोऽग्रन्थे" (पा १.३.७५) इत्यात्मनेपदम् ॥

शीर्षन्नधि निधत्ते—'बृहस्पतेः' इति ॥ [48]ᵛबृहस्पतेः एव ᵛमूर्ध्ना त्वां ᵛहरामि, नात्मीयेनेति-[48] स्तुतिः । "उभे वनस्पत्यादिषु युगपत्" (पा ६.२.१४०) इति युगपदुभयोः[49] प्रकृतिस्वरत्वम् । बृहच्छब्दो वृत्तिविषये आद्युदात्त इष्यते, पतिशब्दश्च । प्रत्ययाद्युदात्तत्वेन मूर्धञ्छब्दोऽन्तोदात्तः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् ॥ १०

रेतो दधाति" (तैब्रा ३.२.२) इति । तं ग्रन्थिशेषं [48]रज्जोरग्रतो द्विगुणीकृत्य रज्जुवेष्टनस्थानात् पश्चादाकृष्य यथा प्रागग्रं भवति तथोपगूहेत् । पुरुषोऽपि पश्चादवस्थाय प्राचीनं रेतः सिञ्चति । तस्मादीदृशं गूहनमपत्यार्थियजमानार्थं [49]रेतःसेचनरूपेण पर्यवस्यति-[49] ॥ १५

इन्द्रस्येति ॥ कल्पः—"इन्द्रस्य त्वा बाहुभ्यामुद्यच्छ इत्युद्यच्छते" (आपश्रौ १.४.११) इति ॥ इन्द्रशब्दप्रयोगेणेन्द्रदत्तस्य सामर्थ्यस्य सिद्धिं दर्शयति—"इन्द्रस्य त्वा बाहुभ्यामुद्यच्छ इत्याह । इन्द्रियमेव यजमाने दधाति" (तैब्रा ३.२.२) इति ॥

बृहस्पतेरिति ॥ कल्पः—"बृहस्पतेर्मूर्ध्ना हरामीति शीर्षन्नधि निधत्ते" (आपश्रौ १.४.११) इति ॥ प्राशस्त्यात् ब्रह्मत्वेन बृहस्पतिं स्तौति—"बृहस्पतेर्मूर्ध्ना हरामीत्याह । ब्रह्म वै देवानां बृहस्पतिः ब्रह्मणैवैनद्धरति" (तैब्रा ३.२.२) इति ॥ २०

उर्वन्तरिक्षमिति ॥ कल्पः— "एत्युर्वन्तरिक्षमन्विहीति" (बौश्रौ १.२) इति । प्रयाणं करोतीत्यर्थः । हे दर्भ, विस्तीर्णत्वात् ᵛअन्तरिक्षं गमनायानुकूलम्, अतस्तथं गच्छ ॥ इहीत्यस्य शब्दस्य विवक्षां दर्शयति—"उर्वन्तरिक्षमन्विहीत्याह गत्यै" (तैब्रा ३.२.२) इति ॥

४७. मै. मै१. मै२– यावद्विमोक्षम् । ४८-४८. ति. तं. व. म. म१. मै४– इयं च । ४९. ति. तं व. म. म१. मै४– उभयपद° ।

४८. तं.– रज्जोरग्रभागम् । ४९-४९. आ– रेतःसिञ्चनरूपेण पर्यवस्यति; क– रेतःसिञ्चनरूपेण व्यवस्यन्ति ।

ह॑राम्यु॒र्व॑न्तरि॑क्ष॒मन्वि॑हि दे॒वं॒ग॒मम॑सि ॥ २ ॥

[ स॒हस्र॑वल्शा अ॒ष्टात्रिं॑शच्च ]

ह॒रा॒मि॒ । उ॒रु । अ॒न्तरि॑क्षम् । अन्विति॑ । इ॒हि॒ । दे॒व॒ग॒ममिति॑ देव-ग॒मम् । अ॒सि॒ ॥ २ ॥

[ मैस १ १.२; कास १.२, कपिसं १.२ ]

प्रत्यागच्छति—'उरु' इति गायत्र्यैकपदया ॥ ᵛउरु विस्तीर्णम् ᵛअन्तरिक्षम् ᵛअन्विहि अनुगच्छ। महान् पन्थाः, सुखेन गच्छेति भावः ॥

उपरि सादयति—' देवंगममसि ' इति ॥ देवान् गच्छतीति ᵛदेवगमम्। "गमश्च" (पा ३.२.४७) इति खच्। श्वो देवगामि ᵛअसि भवितासि। 'वर्तमानसामीप्ये (पा ३.३.१३१) लट्। तत्र हविषो धारणाद्बर्हिषो देवंगमत्व भविता, [५०]-प्रस्तरस्य त्वग्नौ-[५०] प्रहरिष्यमाणत्वात्। "दिव गच्छ" (तैस १.४.४३ ) इति च मन्त्रलिङ्गम्। "अनधः सादयति" ( तैब्रा ३.२.२ ) इति ब्राह्मणम् ॥ २ ॥

॥ इति प्रथमे द्वितीयोऽनुवाकः ॥

देवंगममसि ॥ कल्प—"एतयोत्तरेण गार्हपत्यमनधः सादयति देवंगममसीति " ( बौश्रौ १.२ ) इति ॥ [५०]असीत्यस्य अभिप्रायमाह—"देवगममसीत्याह देवानेवैनद्गमयति " (तैब्रा ३.२ २ ) इति। पलाशशाखाया इव बर्हिषो भूमौ स्थापनं निषिध्य उच्चप्रदेशस्थापनं विधत्ते—"अनधः सादयति। गर्भाणां धृत्या अप्रपादाय। तस्माद्गर्भाः प्रजानामप्रपादुकाः। उपरीव निदधाति। उपरीव हि सुवर्गो लोकः। सुवर्गस्य लोकस्य समष्ट्यै" ( तैब्रा ३.२.२ ) इति ॥

अत्र विनियोगसंग्रहः—

" [५१]यज्ञस्येत्यभिमामन्त्र्य [५२]-प्रत्यु दात्रस्य-[५२] तापनम्।
मेयं [५३]भजति देवानां दर्भसीमाऽथ प्रोक्षित ॥ १ ॥
देवेति दर्भान् संपच्य पर्वं संस्थाप्य दात्रकम्।
आच्छेत्त्विन्म्याद्देव मूलं स्पृशेत्स्व च सहेत्यतः ॥ २ ॥
पृथिव्युपर्यवस्थाप्याऽदित्यै रज्जु प्रसारयेत्।
सुसंभृद्दर्भाः संभार्या इन्द्राण्या इति बन्धनम् ॥ ३ ॥
पूषा ग्रन्थिं स ते गृह इन्द्रोधस्य बृहस्पतेः।
मूर्ध्नाधायोर्वन्त चोर्ध्वं स्थापयेद्देवमित्यतः ॥
अनुवाके [५४]द्वितीयेऽस्मिन्नुक्ता एकोनविंशतिः ॥ ४ ॥ "

५०. मे१—प्रस्तरं त्वग्ने।

५० क. सं—स्य शब्दस्य। ५१. तै—देवस्येत्यभि°। ५२-५२. इ. उ. ना. पा. भा हा—प्रत्युष्टं तस्य। ५३ आ. क—जपति। ५४. व—द्वितीयेऽस्मिन् मन्त्राः।

अथ मीमांसा—[55]तत्र [56]"पाठस्याऽनुक्रमे प्रामाण्यम्"[56]इत्ययमर्थः पञ्चमाऽध्यायस्य प्रथमपादे विचारितः—

"प्रयाजेषु क्रमो नास्ति विद्यते वा न विद्यते ।
श्रुत्यर्थाभावतो नैवं क्रमः पाठान्नियम्यते" ॥ (जैन्या ५·१·९) इति ॥

यथा "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति । तत उद्गातारम् । ततो होतारम्" (आपश्रौ २१·२·१६) इत्यत्र क्त्वाश्रुत्या पञ्चमीश्रुत्या च क्रमः प्रतीयते न तथा प्रयाजेषु श्रुतिरस्ति । "समिधो यजति" (तैसं २·६·१) "तनूनपातं यजति" (तैसं २·६·१) इत्यत्र समिद्यागतनूनपाद्यागयोः क्रमवाचिनः शब्दस्यादर्शनात् । यथा वा "अग्निहोत्रं जुहोति" (तैसं १·५·९) "यवागूं पचति" इत्यत्र यवाग्वा होमसाधनत्वेन पूर्वभावित्वमार्थिकं न तथा समिद्यागस्येतरयागसाधनत्वमस्ति । अतोऽर्थापत्तेरप्यभावान्नास्ति क्रम इति चेत् । नैवम् । वाक्यपाठेन [57]प्रतीतस्य क्रमस्य [58]बाधाभावेन अभ्युपेयत्वात् । अनेनैव न्यायेन प्रथमद्वितीयाभ्यामनुवाकाभ्यामुक्तयोर्वत्सापाकरणबर्हिःसंपादनयोः क्रमो द्रष्टव्यः ॥

'पाठादर्थक्रमो बलीयान्' इत्येतदपि तत्रैव विचारितम्—

"अग्निहोत्रं जुहोतीति यवागूं पचतीति च ।
क्रमः पाठादर्थतो वा पाठात् सर्वत्र दर्शनात् ॥
होमद्रव्यसमुत्पत्त्यै पूर्वं पाकोऽवगम्यते ।
यवाग्वेति श्रुता होमद्रव्यताऽतोऽर्थतः क्रमः" ॥ (जैन्या ५·१·६–७) इति ॥

"यवाग्वाऽग्निहोत्रं जुहोति" इति होमद्रव्यत्वं श्रुतम् । अनेनैव न्यायेन "अदितिरै रास्नासि" (तैसं १·१·२) इति मन्त्रेण रज्जुप्रसारणं पूर्वभावि "सुसंभृता त्वा संभरामि" इति मन्त्रेण [59]दर्भसंभरणं [60]पश्चाद्भावीति द्रष्टव्यम् ॥

'धिषणा बर्हिरच्छ' इत्यादौ बर्हिःशब्दार्थो प्रथमाध्यायस्य चतुर्थपादे विचारितः—

"बर्हिराज्यपुरोडाशशब्दाः संस्कारवाचिनः ।
जात्यर्था वा शास्त्ररूढेस्ते स्युः संस्कारवाचिनः ॥
जातिं त्यक्त्वा न संस्कारे प्रयुक्ता लोकवेदयोः ।
विनाऽपि संस्कृतिं लोके दृष्टत्वाज्जातिवाचिनः" ॥ (जैन्या १·४·२२–२३) इति ॥

दर्शपूर्णमासयोः श्रूयते—"बर्हिर्लुनात्याज्यं विलापयति पुरोडाशं पर्यग्नि करोति" इति । अत्र [61]बर्हिरादिशब्दानां शास्त्रे सर्वत्र संस्कृतेष्वेव तृणादिषु प्रयोगात् पोत्वादिशब्देषु शास्त्रीयरूढि-

---

५५. क–अत्र । ५६–५६. इ. उ. हा–पाठोऽनुक्रमे प्रमाणम्; तं– पाठानुष्ठानक्रमे प्रमाणम्; क– पाठोऽनुष्ठानक्रमे प्रामाण्यम् । ५७. हा–प्रमितस्य । ५८. आ. ना. पा. हा– बाधकाभावेन । ५९. क. तं–दर्भबन्धनम् । ६०. इ. उ. ना. पा. मा. हा– पश्चाद्भवतीति । ६१. आ. ना. पा. हा–बर्हिराज्यादि° ।

प्राबल्यस्योक्तत्वादाहवनीयादिशब्दवत् संस्कारवाचिनो बर्हिरादिशब्दा इति चेत्। नैवम्। अन्वय-व्यतिरेकाभ्यां जातिवाचित्वात्। यत्र यत्र बर्हिरादिशब्दप्रयोगस्तत्र तत्र जातिरित्यस्या व्याप्तेर्लोके वेदे च नास्ति व्यभिचारः। संस्कारव्याप्तेस्तु लौकिकप्रयोगे व्यभिचारो दृश्यते। क्वचित् [६२]-देशविशेषे लौकिकव्यवहारे-[६२] जातिमात्रमुपजीव्य विना संस्कारं ते शब्दाः प्रयुज्यन्ते। [६३]बर्हिरादाय गावो
५ गताः, [६४]-गव्यमाज्यम्, पुरोडाशेन-[६४] मे माता [६५]प्रहेलकं ददातीति। तस्माज्जातिवाचिनः। विचारप्रयोजनं तु 'बर्हिषा यूपावटमवस्तृणाति' इत्यत्र विना संस्कारेणाऽऽस्तरणसिद्धिः ॥

अथ व्याकरणम्— यज्ञस्येत्यत्र फिट्स्वरशेषानुदात्तसुबनुदात्तस्वरिताः। घोषदित्यत्र फिट्-स्वरानुदात्तसप्ततराः। असीत्यत्र निघातस्वरितप्रचयसन्ततराः। अथ विशेषमेव वदाम —प्रत्युष्टमित्यत्र "समासस्य" (पा ६.१.२२३) इत्यन्तोदात्तत्वे प्राप्ते तदपवादेनाव्ययपूर्वपदप्रकृतिस्वरत्वं प्राप्तम्।
१० तस्याप्यपवादः "गतिकारकोपपदात् कृत्" (पा ६.२.१३९) तत्पुरुषसमासे गतेः कारकादुपपदा-च्चोत्तरं कृत्प्रत्ययान्तं पदं प्रकृतिस्वरं भवतीत्युत्तरपदप्रकृतिस्वरत्वे प्राप्ते तस्याप्यपवादः "गतिर-नन्तरः" (पा ६.२.४९) कर्मवाचिनि क्तान्ते उत्तरपदे परतः प्रत्यासन्नः पूर्वभाविगतिसंज्ञकः शब्दः प्रकृतिस्वरो भवतीति। प्रतिशब्दस्य "उपसर्गाश्चाभिवर्जम्" (फि ८१) इत्याद्युदात्तः प्रकृतिस्वरः। 'रक्षः' इत्यत्र "नब्विषयस्य°" (फि २६) इत्याद्युदात्तः। रातयो धनस्य
१५ दातारस्तद्विपरीता अरातयो धनापहारिणः शत्रवः। "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीया कृत्याः" (पा ६.२.२) तत्पुरुषसमासे [६६]-तुल्यार्थतृतीयान्त-[६६] [६७]सप्तम्यन्तमुपमानवाचकमव्यय द्वितीयान्तं कृत्यप्रत्ययान्तं च यत्पूर्वपदं तत्प्रकृतिस्वरं भवतीति [६८]पूर्वपदस्य प्रकृतिस्वरत्वम्। तच्च समासस्वरस्यापवादः। नञश्च "निपाता आद्युदात्ताः" (फि ८०) इति आद्युदात्तः। धिषणेत्यत्र "पृषोदरादीनि यथोपदिष्टम्" (पा ६.३.१०९) इति मध्योदात्तत्वम्। बर्हिःशब्दस्येसन्तत्वेन
२० नपुंसकत्वाद्भावेन फिट्स्वर एव। असीति निपातस्वरः। [६९]मनुशब्दो "वृषादीनां च" (पा ६.१.२०३) इत्याद्युदात्तः। वितष्टेति प्रत्युष्टवत्। पुरस्तादित्यत्र "[७०]-आद्युदात्तश्च" (पा ३.१.३) च प्रत्ययः स आद्युदात्तो-[७०] भवतीत्यस्तातिप्रत्ययस्याऽऽद्युदात्तः। जुष्टशब्दस्य "नित्यं मन्त्रे" (पा ६.१.२१०) इति मन्त्रविषये "जुष्टार्पिते च छन्दसि" (पा ६.१.२०९) इति जुष्टार्पितशब्दौ नित्यमाद्युदात्तौ भवत इत्याद्युदात्तत्वम्। इडशब्दे इप्रत्यय उदात्तः।
२५ आमद इत्यत्र आसादयितव्यमित्यस्मिन् कृत्यप्रत्ययस्यार्थे विहितस्य केन्प्रत्ययस्य नित्वात् मद इत्येतत् पदमाद्युदात्तम्। [७१]ततः समासान्तोदात्तत्वं बाधित्वा तत्पुरुषे पूर्वपदप्रकृतिस्वरत्वे

६२-६२ क- देशविवक्षायां लौकिकव्यवहारे, ट ञ. भा. हा- देशविशेषव्यवहारे, ना- देशविशेषे व्यवहारे। ६३. च- बर्हिरादातव्यम्। ६४. त- गार्ग्यमाज्य पुरोडाशेन मे, च- कव्यमाज्यं पुरोडाशेन मे, क- कव्याज्यपुरोडाशार्धमेता°। ६५. च- प्रमेलक। ६६. भा- तुल्यार्थतृतीयानाम्, तं- तुल्यार्थे तृतीयान्तम्। ६७. त- '-सप्तम्यन्तम्' इत्यस्यानन्तरं 'च'। ६८. तं- नञ्पदस्य, पा- पूर्वपद°। ६९. ट ञ. त. ना. पा. मा हा- मनुशब्द। ७०-७०. ट. ञ. भा- प्रत्यया आद्युदात्ता इत्याद्युदात्तस्वरः, ना. हा- प्रत्यय आद्युदात्त। ७१. ट. ञ. ना पा. भा- तत।

प्राप्ते तदपोद्य गतेरुत्तरस्य कृदन्तस्य प्रकृतिस्वरत्वम्। परिपूतमित्यत्र परिशब्दो निपातत्वादाद्युदात्तः। पूत-शब्दः "पूञ् प्रेरणे" ⁷²इत्यतो धातोरुत्पन्नः क्तप्रत्ययान्तः। "धातोः" (पा ६·१·१६२) धातोरन्त उदात्तः। क्तप्रत्ययोऽपि "⁷³आद्युदात्तश्च" (पा ३·१·३) इत्याद्युदात्तः। सतिशिष्टत्वात् अयमेव शिष्यते। ततः "समासस्य" (पा ६·१·२२३) इत्यन्तोदात्तत्वे प्राप्ते तदपवादत्वेन "तत्पुरुषे तुल्यार्थ°" (पा ६·२·२) इति सूत्रेणाव्ययपूर्वपदप्रकृतिस्वरत्वं प्राप्तं, ५
तदपोद्य "गतिकारक°" (पा ६·२·१३९) इति सूत्रेण कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते, तन्निवार्य "गतिरनन्तरः" (पा ६·२·४९) इति पूर्वपदप्रकृतिस्वरत्वे प्राप्ते, ⁷⁴तदपवादः "परेरभितोभावि मण्डलम्" (पा ६·२·१८२) ⁷⁵परिशब्दादभितो भाव्यर्थवाचकं पदं मण्डलपदं चान्तोदात्तं स्यात्। परितोऽभितः सर्वतः सूतं स्वीकृतमिति हि तस्य पदस्यार्थ इति। ⁷⁶वर्षेण वृद्धं वर्षवृद्धम्। तत्र⁷⁶ कारकादुत्तरकृदन्तस्य प्रकृतिस्वरत्वे प्राप्ते तदपवादः "तृतीया कर्मणि" (पा ६·२·४८) १०
कर्मवाचिनि क्तान्त उत्तरपदे तृतीयान्तं पूर्वपदं प्रकृतिस्वरं स्यात्। देवबर्हिरित्यत्र षष्ठाध्यायोक्तेन "आमन्त्रितस्य च" (पा ६·१·१९८) इति सूत्रेणाऽऽद्युदात्तः। पूर्वानुवाकगतस्याग्निया इत्यस्य पदात् परत्वेनाष्टमाध्यायोक्तेन "आमन्त्रितस्य च" (पा ८·१·१९) इति सूत्रेण निघातः। इह तु वाक्यादित्वान्न पदात्परत्वम्। आच्छेत्तेति कृदुत्तरपदप्रकृतिस्वरः। शतवल्शमित्यत्र "बहुव्रीहौ प्रकृत्या पूर्वपदम्" (पा ६·२·१) इति पूर्वपदप्रकृतिस्वरत्वम्। शतशब्दस्य⁷⁷ फिट्स्वरः। १५
सहस्रशब्दः पृषोदरादित्वात् मध्योदात्तः। पृथिवीशब्दे ङीपः प्रत्ययस्वरः। "उदात्तयणो हल्पूर्वात्" (पा ६·१·१७४) उदात्तस्य स्थाने यो यण् हल्पूर्वस्तस्मादुत्तरस्य नदीसंज्ञकस्य प्रत्ययस्याजादिविभक्तेश्चोदात्तस्वरत्वं स्यात्। संपृच इत्यत्र क्विप्प्रत्ययान्तत्वेन कृदुत्तरपदप्रकृतिस्वरत्वम्। तद्वत् सुसंभृतेति शब्देऽपि। दितिः खण्डिता, न दितिरदितिः। "तत्पुरुषे तुल्यार्थ°" (पा ६·२·२) इत्यव्ययपूर्वपदप्रकृतिस्वरः। रास्नाशब्दो वृषादिः। इन्द्राण्या इत्यत्रोदात्तयण इति विभक्तिरुदात्ता। २०
संनहनमित्यत्र "लिति" (पा ६·१·१९३) ⁷⁸इत्संज्ञकलकारोपेते प्रत्यये परतः⁷⁸ पूर्वमुदात्तं स्यात्। नह्यतिधातोरुपरि ल्युट्प्रत्ययस्यानादेशोऽपि लिद्भवति। ततः कृदुत्तरपदप्रकृतिस्वरत्वम्। इन्द्रशब्दो वृषादिः। बृहस्पतेरित्यत्र "उभे वनस्पत्यादिषु युगपत्" (पा ६·२·१४०) वनस्पत्यादिषु समासेषु पूर्वोत्तरपदे युगपत् प्रकृतिस्वरे भवतः। बृहच्छब्दः पतिशब्दश्च वृषादिः। मूर्ध्नेत्यत्र "अनुदात्तस्य च यत्रोदात्तलोपः" (पा ६·१·१६१) ⁷⁹यस्मिन्ननुदात्ते परतः उदात्तो लुप्यते तस्य २५
अनुदात्तस्य उदात्तः स्यात् इति विभक्तेरुदात्तत्वम्⁷⁹। अन्तरिक्षशब्दः पृषोदरादिः। सर्वत्रागतिक आद्युदात्तो वृषादिः। ⁸⁰अगतिकमध्योदात्तः पृषोदरादिरिति द्रष्टव्यम्। देवंगममित्यत्र प्रातिपदिकत्वात् समासत्वात् कृदुत्तरपदत्वाद्वाऽन्तोदात्तत्वम् ॥ २ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-
संहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ ३०

---

७२. क. तं-इत्यस्मात्। ७३-७३. इ. उ. पा. ना. भां- उदात्तः; आ- आद्युदात्तश्चेत्युदात्तः। ७४. तं-तस्याप्यपवादः। ७५. तं-परिशब्दादुत्तरेणाभितः। ७६-७६. आ. ना. वर्षवृद्धमित्यत्र; पा-वर्षवृद्धमिति, तत्र। ७७. इ. उ. ना. पा. भां. हा-°शब्दस्यापि। ७८-७८. तं-°लकारोपेतप्रत्ययपरतः; ना. पा. हा-°लकारोपेतप्रत्यये परतः। ७९-७९. आ. ना. पा. हा-इति विभक्तिरुदात्ता। ८०. तं-अगतिको मध्योदात्तः।

शुन्धध्वं दैव्याय कर्मणे देवयज्यायै

शुन्धध्वम् । दैव्याय । कर्मणे । देवयज्याया इति देव-यज्यायै ।

सानाय्यपात्राणि प्रोक्षति—' शुन्धध्वम् ' इति ॥ शुन्ध शुद्धौ । उदात्तेत् । व्यत्ययेनाऽऽत्मनेपदम् । यद्वा—शुन्ध शौचकर्मणि, अस्माण्ण्यन्तात् कर्मकर्तर्यात्मनेपदम् । " यक्चिणोः
५ प्रतिषेधे णिश्रन्थिग्रन्थि° " ( पा ३ १·८९ वा १ ) इत्यादिना यक्प्रतिषेधः । " बहुलं
सञ्ज्ञाछन्दसो " (द्र उ १९०) इति णिलुक् । लसार्वधातुकानुदात्तत्वे (पा ६ १ १८६) धातुस्वरः।
देवानामिदं दैव्यम् । " देवाद्यञञौ " (पा ४ १·८५ वा ३) इति प्राग्दीव्यतीयः यञ्प्रत्ययः ।
ञित्त्वादाद्युदात्तत्वम् । " छन्दसि निष्टर्क्य° " ( पा ३·१·१२३ ) इत्यादौ देवयज्याशब्दो

द्वाभ्यामनुवाकाभ्याममावास्यायामहनि यत्कर्तव्यं तदुक्तम् । तृतीयेन रात्रौ कर्तव्यो दोह
१० उच्यते । आदौ तावत् ब्राह्मणेन [1]इध्माबर्हिष कालो विधीयते — " पूर्वेद्युरिध्माबर्हि करोति ।
यज्ञमेवाऽऽरभ्य गृहीत्वोपवसति " ( तैब्रा ३·२ १ ) इति । यद्यपि दर्शपूर्णमासेष्टिः प्रतिपदि
कर्तव्या तथाऽपि पर्वण्येवेध्म बर्हिश्च संपादयेत् । तावता यज्ञ प्रारब्ध एव [2]भवति । न केवलं
प्रारम्भ किंतु देवताश्च गृहीत्वा तासां समीपे निवास[3] कृतो भवति । अनेन देवतापरिग्रहस्यापि
पूर्वेद्युरेव काल इति सूच्यते । तत्प्रकारस्तु याजमानकाण्डे ( तैस १·६ ७ ) वक्ष्यते । इध्ममन्त्रास्तु
१५ " यत्कृष्णो रूपं कृत्वा " ( तैब्रा ३ ७ ४ ) इत्येवमादयः । ते चान्यत्र [4]आम्नातत्वात्तत्रैव
व्याख्यास्यन्ते । अथ दोहनार्थं "कुम्भीद्वयं विधत्ते—" प्रजापतिर्यज्ञमसृजत । तस्योखे अस्रꣳसेताम् ।
यज्ञो वै प्रजापतिः । यत्सानाय्योखे भवतः । यज्ञस्यैव तदुखे उपदधात्यप्रस्रꣳसाय " ( तैब्रा ३ २·३ )
इति । यज्ञो दर्शेष्टिः । सानाय्यमिति दधिपयसोर्नाम । [6]यज्ञसबन्धिन्यो कुम्भ्यो[6] नाशे यज्ञस्य
नष्टत्वात् स्रष्टुः प्रजापतेरपि नाशः । [7]कुम्भ्योः संपादने यज्ञस्य संपादितत्वात् प्रजापतेरेवाविनाशादेतत् संपद्यते । ' यदुखे भवतः ' इति यदस्ति तत् ' तेनोखासंपादनेन ' इति योज्यम् ॥
२०

शुन्धध्वमिति ॥ बौधायनः—" उत्तरेण गार्हपत्यं तृणानि संस्तीर्य तेषु चतुष्टयꣳ संसादयति
दोहनं पवित्रं सानाय्यतपन्यौ स्थाल्याविति । अथैनान्यद्भिः प्रोक्षति शुन्धध्वं दैव्याय कर्मणे
देवयज्याया इति त्रिः " ( बौश्रौ १ ३ ) इति ॥ आपस्तम्बः— " सानाय्यपात्राणि प्रक्षाल्योत्तरेण
गार्हपत्यं दर्भान् संस्तीर्य द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति । कुम्भीꣳ शाखापवित्रमभिधानीं निदाने
२५ दारुपात्रं दोहनमयस्पात्रं दारुपात्रं वा पिधानार्थमग्निहोत्रहवणीमुपवेषं पर्णवल्कं च तृणं च । । शुन्धध्वं
दैव्याय कर्मण इति त्रिः प्रोक्षति" (आपश्रौ १·११·५–६,९) इति ॥ हे पात्राणि, देवयज्यात्मने 'दैव्याय
'कर्मणे 'शुन्धध्वं शुद्धानि भवत ॥ विशेषेण प्रयोजनमाह—" शुन्धध्वं दैव्याय कर्मणे देवयज्याया
इत्याह । देवयज्याया एवैनानि शुन्धति " ( तैब्रा ३ २·३ ) इति । शोधयतीत्यर्थः । तेन दानमतादिरूपं स्मार्तमपि कर्म दैविकमस्ति तन्मा भूदिति विशेषणम् ॥

१. आ क पा—बर्हिष । २ इ. उ ना. पा भा हा—भवतीति । ३ इ उ—वास । ४ इ उ ना.हा—आम्नातत्वात्तत्रैव,पा भा—आम्नानात् तत्रैव । ५ तं—कुम्भद्वयम् । ६–६ इ. उ त. ना.पा भा हा—यज्ञसबन्धिनो कुम्भयो. । ७ इ उ त ना. पा भा—कुम्भयो ।

**मातुरिश्वनो घुर्मोऽसि द्यौरसि पृथिव्यसि विश्वधाया असि परमेण धाम्ना दृꣳहस्व**

मातरिश्वनः । घुर्मः । अुसि । द्यौः । अुसि । पृथिवी । अुसि । विश्वधाया इति विश्व-धायाः । अुसि । पुरमेण । धाम्ना । दृꣳहस्व ।

यप्रत्ययान्तो निपातितः । हे पात्राणि, देवयज्यात्मने ᵛदैव्याय ᵛकर्मणे ᵛशुन्धध्वं शुद्धानि भवत । स्वयमेवात्मानं शोधयतेति वा । प्राधान्यख्यापनार्था देवशब्दावृत्तिः, साकल्यार्था वा, यथा–" निधीनां त्वा निधिपतिꣳ हवामहे " ( तैसं ७·४·१२ ) इति ॥ ५

अङ्गारान् [1]निरूहते.—' मातरिश्वनः ' इति ॥ मातरि सर्वस्य परिच्छेदके अन्तरिक्षे शेत इति मातरिश्वा । " श्वन्नुक्षन्° " ( उ १५७ ) [2]इत्यादिना शीङः कनिन्प्रत्यये वकारोऽन्तादेशो[3] निपात्यते । " तत्पुरुषे कृति बहुलम् " ( पा ६·३·१४ ) इत्यलुक् । निपातनसामर्थ्यादेव सप्तम्या उदात्तत्वम् । वायुरुच्यते । तस्य यो ᵛघर्मः अग्निर्दैधुताख्यः स एव त्वम् ᵛअसि इति पार्थिवोऽग्निः स्तूयते । यद्वा घरणाधिकरणं घर्मः । घृ क्षरणदीप्त्योः । क्षरणं संचलनम् । घर्म इति मप्रत्ययान्तो निपातितः (द्र. उ १४६) । वायोरपि संचलनाधारभूतम् अन्तरिक्षमेव त्वमसीति कुम्भ्याधारोऽङ्गारः[4] स्तूयते धारणसामर्थ्यख्यापनार्थम् । " अन्तरिक्षं वै मातरिश्वनो घर्मः । एषां लोकानां विधृत्यै " ( तैब्रा ३·२·३ ) इति[5] ब्राह्मणम् ॥ १०

सांनाय्यतपनीमधिश्रयति—' द्यौरसि ' इति ॥ शुप्रभृतीनां कार्यभूता स्थाली कारणात्मना स्तूयते । " दिवश्च ह्येषा पृथिव्याश्च संभृता " ( तैब्रा ३·२·३ ) इति ब्राह्मणम् । लोकाधिकारात् ᵛविश्वधायाः इत्यन्तरिक्षमुच्यते । " वृष्टिर्वै विश्वधायाः " ( तैब्रा ३·२·३ ) इति दर्शनात् । विश्वस्य धायो धारणं यस्या इति बहुव्रीहिः । विश्वं धीयतेऽनया इति । " वहिहाधाञ्भ्यश्छन्दसि " ( उ ६६० ) इत्यसुन्प्रत्ययः । णिदित्यनुवृत्तेर्युक् ( पा ७·३·३३ ) । तत्र हि १५

**मातरिश्वन इति** ॥ बौधायनः—" अथ जघनेन गार्हपत्यमुपविश्योपवेषेणोदीचोऽङ्गारान् निरूहति मातरिश्वनो घर्मोऽसीति । तेषु सांनाय्यतपनीमधिश्रयति द्यौरसि पृथिव्यसि विश्वधाया असि परमेण धाम्ना दृꣳहस्व मा ह्वारिति " ( बौश्रौ १·३ ) इति । आपस्तम्बस्त्वेकमन्त्रत्वमाश्रित्याऽऽह —" मातरिश्वनो घर्मोऽसीति । तेषु कुम्भीमधिश्रयति " ( आपश्रौ १·१२·१ ) इति ॥ २०
हे कुम्भ, वायोः संचारस्थानप्रदानेन दीपको योऽन्तरिक्षलोकस्तद्रूपस्त्वम् ᵛअसि । तवोदरेऽप्यन्तरिक्षसद्भावात् । किंच द्युलोकजन्यवृष्ट्युदकात् भूलोकस्थमृत्तिकायाश्च संपादितत्वेन लोकद्वयरूपः ᵛअसि । किंच विशदेन बहुक्षीरधारणसामर्थ्येन विश्वधारकवृष्टिरूपः ᵛअसि । ततो दृढो भव । अतः ᵛमा २५

१. मै– निरूहति । २. ति. ब. मै४– इत्यादौ । ३. ति. तं. ब. मै४– वकारान्तः । ४. ति. तं. प. ब. मै४– कुम्भ्याधारोऽग्निः । ५. मै. मै१– इत्यादि ।

मा ह्वार्वसूनां पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारम्

मा । ह्वाः । वसूनाम् । पवित्रम् । असि । शतधारमिति शत-धारम् ।

वसूनाम् । पवित्रम् । असि । सहस्रधारमिति सहस्र-धारम् ।

" गतिकारयोरपि पूर्वपदप्रकृतिस्वरत्वं च " ( इ उ ६६६ ) इत्युक्तम् । तेन कारकपूर्वादपि भवत्येव । पूर्वपदप्रकृतिस्वरग्रहणस्य च बहुव्रीहिस्वरस्योपलक्षणत्वात्, " बहुव्रीहौ विश्वं संज्ञायाम् " ( पा ६·२·१०६ ) इति पूर्वपदान्तोदात्तत्वम् । सा त्वमीदृशेन [V]परमेण प्रकृष्टेन [V]धाम्ना धारणशक्त्या [V]दृंहस्व [6]वर्धस्व दृढा भव । दृह दृंहि वृद्धौ । व्यत्ययेनात्मनेपदम् । केचिदादृढवर्धनाया वर्तत इति । [7]यद्वा–' दृहगा ' (?) इतिवत् [8] ण्यन्तात् कर्मकर्तर्यात्मनेपदम् । पूर्ववत्प्रतिषेधादि वा ( पा ३·१ ८९ वा १ ) । [V]मा [V]ह्वा. मा कुटिला भूः । ह्वृ कौटिल्ये । ह्वृमध्यमपुरुषैकवचने, सिचि वृद्धौ " बहुलं छन्दसि " (पा ७ ३ ९७) इतीडभावे; हल्ङ्यादिलोपे, " रात्सस्य " ( पा ८·२·२४ ) इति सकारलोपः । अत्र " चादिलोपे विभाषा " ( पा ८·१·६३ ) इति प्रथमा तिङ्विभक्तिर्न निहन्यते–" दृंहस्व मा ह्वा. " इति ॥ २

उखाया शाखापवित्रं निदधाति—' वसूनाम् ' इति ॥ [9]-प्राणिना वासहेतुत्वात्-[9] पयःप्रभृतीनि धनानि वसुशब्देनोच्यन्ते प्राणाश्च, " प्राणा वै वसव " ( तैब्रा ३·२·३ )

मू· ॥ [8]पयोक्तार्थो ब्राह्मणेन विशदीक्रियते— " मातरिश्वनो घर्मोऽसीत्याह । अन्तरिक्षं वै मातरिश्वनो घर्मः । एषां लोकानां विधृत्यै । द्यौरसि पृथिव्यसीत्याह । दिवश्च ह्येषा पृथिव्याश्च संभृता । यदुखा । तस्मादेवमाह । विश्वधाया असि परमेण धाम्नेत्याह । वृष्टिर्वै विश्वधायाः । वृष्टिमेवावरुन्धे । दृंहस्व मा ह्वारित्याह धृत्यै " ( तैब्रा ३ २·३ ) इति । ' द्यौरसि पृथिव्यसि ' इति द्युलोकयोर्विस्पष्टशब्देनोपात्तत्वात् [9]तत्साहचर्येण घर्मशब्देऽन्तरिक्षपरं सति [10]कुम्भे त्रयाणां लोकानां विशेषेण धारणं सिध्यति । ' विश्वधायाः ' इत्युच्चारणात् वृष्टेरवरोध [11]स्वाधीनता भवति ॥

वसूनामिति ॥ कल्प — " तस्यां प्राचीनाग्रं शाखापवित्रं निदधाति वसूनां पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारमिति " ( बौश्रौ १·३ ) इति ॥ भो. शाखापवित्र, कुम्भीमुखे [12]-अवस्थापित [12]-[12] प्राणनिवासहेतूनां [13]वसूनां [V]पवित्रं शोधकम् [V]असि । त्वद्व्यवधानेन तृणपर्णादीनां क्षीरेण सह कुम्भ्यां पततां प्रतिबध्यमानत्वात् । न च क्षीरमप्येव प्रतिबध्येतेति शङ्कनीयम् । सूक्ष्मैः पवित्रच्छिद्रैः कुम्भ्यां पतन्तीनां शतसहस्रसंख्यानां क्षीरधाराणां सद्भावात् । शोधकत्वमादतुं

६ ति मै४– ' वर्धस्व ' नास्ति । ७. ति व मै४– यथा । ८. ति. त. व– इति तदा ।
९–९. ति त. मै४– प्राणानां स्थानभूतत्वात् ।

८. व–उक्तार्थः । ९. आ. इ. ट क. त हा–साहचर्येण । १० इ ट ना. पा. भां.हा–कुम्भस्य ।
११ व–स्वाधीनतया । १२–१२. तं–अवस्थापितत्वात् । १३. व त–क्षीराधानाम्, ट–वसूनां क्षीराधानाम् ।

इति दर्शनात् । तेऽपि हि वासहेतवः । "शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च" (उ १०) इति वसेः करणे उप्रत्ययः । "धान्ये नित्" (उ ९) इत्यतो निदिति हि तत्रानुवर्तते । नित्त्वादाद्युदात्तः (पा ६·१·१९७)। पयःप्रभृतीनां [v]वसूनां [v]शतधारम् अनेकप्रकारं [v]पवित्रं पावनम् [v]असि । प्राणात्मनां [v]वसूनां [v]सहस्रधारं पूर्वस्मादपि बहुप्रकारं पावनम् [v]असि यागसाधनद्वारेण । "पुवः संज्ञायाम्" (पा ३·२·१८५) इति इत्रप्रत्ययः ॥ ५

'वसूनां पवित्रमसि' इति द्विरुक्तिः ॥ वसुशब्दार्थं पद्यभिप्रेतं संबन्धविशेषं चाऽऽह—"वसूनां पवित्रमसीत्याह । प्राणा वै वसवः । तेषां वा एतद्भागधेयम् । यत्पवित्रम् । तेभ्य एवैनत् करोति" (तैब्रा ३·२·२) इति । धनवाचिना वसुशब्देनेह विवक्षितानां क्षीरावयवानां प्राणनिवासलक्षणजीवनहेतुत्वात् प्राणरूपत्वम् । शोधकं पवित्रमिति यदस्ति तत्प्राणानामेव संबन्धि । कुतः ? प्राणार्थमेव हि सर्वो जनः पिपीलिकामक्षिकाद्यपनयनेन क्षीरशोधनं करोति । शतसहस्रशब्दसूचितम् १० [14]अर्थमाह— "शतधारꣳ सहस्रधारमित्याह । प्राणेष्वेवाऽऽयुर्दधाति सर्वत्वाय" (तैब्रा ३·२·३) इति । 'शतायुर्भव, सहस्रायुर्भव', इत्येवमाशीर्वादो लोके प्रसिद्धः । स चाऽपमृत्युपरिहारेणाऽऽयुषः कार्त्स्न्याय संपद्यते । गुणत्रयविशिष्टं पवित्रं विधत्ते— "त्रिवृत् पलाशशाखायां दर्भमयं भवति" (तैब्रा ३·२·३) इति । क्रमेण त्रीनर्थवादानाह—"त्रिवृद्वै प्राणः । त्रिवृतमेव प्राणं मध्यतो यजमाने दधाति । सौम्यः पर्णः सयोनित्वाय । साक्षात् पवित्रं दर्भाः" (तैब्रा ३·२·३) इति । प्राणापान- १५ व्याननामकैः ऊर्ध्वाधोमध्यवृत्तिलक्षणैः अवान्तरभेदैः प्राणवायोस्त्रिवृत्त्वम् । कार्ये पलाशे कारणस्य सोमस्यानुगतियोनिसहितत्वम् । तदर्थमेवात्र पलाशशाखायामादरः । दर्भोऽस्तु साक्षादेव शुद्धिहेतवो न तु द्रव्यान्तरसंपादनेन । एतच्च संध्यावन्दनादिशास्त्रेषु प्रसिद्धम् । शाखापवित्रस्य निर्माणप्रकारः सूत्रे दर्शितः— "त्रिवृद्दर्भमयं पवित्रं कृत्वा वसूनां पवित्रमसीति शाखायाꣳ शिथिलमवसृजति मूले सूक्ष्माण्यग्रेऽग्राणि न ग्रन्थिं करोति" (आपश्रौ १·६·८) इति । तस्य शाखापवित्रस्य काल- २० भेदेन कुम्भीमुखे स्थापनप्रकारभेदं विधत्ते— "प्राक् सायमधिनिदधाति । तत् प्राणापानयो रूपम् । तिर्यक् प्रातः । तद्व्यानस्य रूपम् । दाश्र्यꣳ ह्येतदहः । अन्नं वै चन्द्रमाः । अन्नं प्राणाः । उभयमेवोपैत्य-आभित्वाय । तस्मादयꣳ सर्वतः पवते" (तैब्रा ३·२·३) इति । अमावास्यादिने सायंदोहे [15]-कुम्भ्या उपरि-[15] शाखापवित्रं प्रागग्रं पश्चान्मूलं निदध्यात् । तथा सति प्राणापानसदृशं भवति । प्राणवायुः पूर्वरूपे मुखद्वारे [16]निःसरति । अपानवायुः पश्चिमरूपेऽधोद्वारे मलं निःसारयति । २५ तस्मादस्ति सादृश्यम् । प्रतिपदि प्रातर्दोहे तिर्यक् निदध्यात् । प्रागग्रत्वस्य दीर्घत्वादुदगग्रत्वं तिर्यक्त्वम् । तच्च [17]-दर्शनविपर्येण चन्द्रेण-[17] सदृशम् । दृश्यते हि शुक्लपक्षे द्वितीयादिषु दक्षिणोत्तरवर्तिशृङ्गद्वयोपेतश्चन्द्रमाः । यद्यपि प्रतिपदि न दृश्यते तथाप्येकया कलया चन्द्रोत्पत्तेः शास्त्रसिद्धत्वेन दर्शनयोग्यत्वादेतदहश्चन्द्रदर्शनसंबन्धि भवति । न च चन्द्रप्राणरूपत्वे प्रयोजनाभावः । तयोरन्नरूपत्वेन सप्रयोजनत्वात् । ओषधीरनुगृह्णानश्चन्द्रमास्तद्द्वारेणान्नं भवति । प्राणस्याप्यन्नेन ३० [18]आप्यायमानत्वात् अन्नत्वम् । तर्ह्युभयोरपि कालयोः प्रागग्रत्वमेवास्तु, तावतैवान्नत्वसिद्धेरिति चेत् । मैवम् । अनालस्याय विलक्षणयोः प्रागग्रत्वोदगग्रत्वयोः कर्तव्यत्वात् । यस्मादालस्यमवश्यं त्याज्यं तस्मादेवायं वायुरनलसः सर्वेषु देशेषु सर्वेषु कालेषु पवते ॥

१४. इ. उ. क. तं–अर्थं दर्शयति । १५–१५. इ. उ. ना.पा.मां. हा–कुम्भ्यामुपरि । १६. क–निरसति । १७–१७. इ. उ. तं–दर्शविपर्येण चन्द्रेण; ना. पा. मां. हा–दर्शविपयत्वे । १८. आ. क. तं– उपचीयमानत्वात् ।

हुतः स्तोको हुतो द्रप्सोऽग्नये बृहते
हुत । स्तोक । हुत । द्रप्स । अग्नये । बृहते ।

स्तोकानमन्त्रयते—'हुत' इति ॥ अल्पो बिन्दुः स्तोकः महान् बिन्दुः द्रप्सः । [10]दोहनकालेऽमहान् बिन्दुः पात्राद्बहिर्निपतितः स्तोकः, स हुतः अस्तु देवतोद्देशेन परित्यक्तोऽस्तु । द्रप्सोऽपि हि हुत अस्तु । कस्मै ? अग्नये बृहते नाकाय नाकनाम्ने, कं सुखम्, तदस्य नास्तीत्यकः । तस्मादन्यो नाकः । "नभ्राण्नपात्" ( पा ६.३.७५ )

हुत इति ॥ बौधायनः—"दोह्यमानमनुमन्त्रयते हुतः स्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा द्यावापृथिवीभ्याम्" ( बौश्रौ १ ३ ) इति । आपस्तम्बस्तु दुग्धस्य क्षीरस्य कुम्भ्यां सान्नाय्यपवित्रे सेचनकाले बहिः पतता बिन्दूनामभिमन्त्रणे विनियुङ्क्ते[19]—"हुतः स्तोको हुतो द्रप्स इति विप्रुषोऽनुमन्त्रयते" ( आपश्रौ १.१३.४ ) इति ॥ अल्पो बिन्दुः स्तोकः, प्रौढो द्रप्सः[20] । तदुभय नाकनाम्ने स्वर्गवासिने प्रौढाय अग्नये हुतमस्तु । तथा द्यावापृथिवीभ्याम् अपि स्वाहा हुतमस्तु ॥ अत्र हुतशब्दप्रयोगात् हविष्ट्वेन प्रतितिष्ठति, ततः स्कन्ददोषो न भवतीत्याह—"हुतः स्तोको हुतो द्रप्स इत्याह प्रतिष्ठित्यै । हविषोऽस्कन्दाय । न हि हुतं स्वाहाकृतं स्कन्दति" ( तैब्रा ३ २ ३ ) इति । हविषोऽग्नौ प्रक्षिप्तत्वं हुतत्वम् । देवतोद्देशपूर्वकत्यागवाचकस्वाहाशब्दप्रयोगेण विषयीकृतत्वं स्वाहाकृतत्वम् । न च स्वाहाकारमन्तरेण हविष्प्रक्षेपो नास्तीति शङ्कनीयम् । वषट्कारेणापि तत्प्रक्षेपात् । अत एव वाजसनेयिनो वाग्धेनोरुपास्तौ समामनन्ति—"तस्यै द्वौ स्तनौ देवा उपजीवन्ति । स्वाहाकारं च वषट्कारं च" ( बृउ ५ ८.१ ) इति । विकल्पश्च तयोः शाखे[21]ऽविन्हित । एवं च सति द्विधाऽपि देवतानामुपयुक्तयोर्हुतस्वाहाकृतयोर्नास्ति नाशदोषः । न खलु लोके कश्चिदपि भुक्तमन्नं नष्टमिति ब्रूते ॥ नाकीयविप्रुषा होममुपपादयति—"दिवि नाको नामाऽग्निः । तस्य विप्रुषो भागधेयम् । अग्नये बृहते नाकायेत्याह । नाकमेवाऽग्निं भागधेयेन समर्धयति" ( तैब्रा ३ २.२ ) इति । नाकस्य भागः कथं द्यावापृथिवीभ्यां दत्त इत्याशङ्क्य न तयोर्नाकवद्भोक्तृत्वं किंतु स्थित्याधारत्वेन पालकत्वमित्याह—"स्वाहा द्यावापृथिवीभ्यामित्याह । द्यावापृथिव्योरेवैनत् प्रतिष्ठापयति" ( तैब्रा ३ २.२ ) इति । सपवित्रे कुम्भे क्षीरसेचनं विधत्ते—"पवित्रवत्यानयति । अपां चैवौषधीनां च रसं संसृजति । अथो ओषधीष्वेव पशून् प्रतिष्ठापयति" ( तैब्रा ३.२.३ ) इति । वर्षधाराभिरागतानामपां रसो दर्भः । गोभिर्भक्षितानामोषधीनां रसः क्षीरम् । तदुभयमत्र संसृष्टं भवत्येव । किंच दर्भोपलक्षितास्वोषधीषु

१०. मै१– योऽत्र दोहन° ।

१९. आ– मन्त्रं विनियुङ्क्ते । २०. आ. क. तं–बिन्दुर्द्रप्सः । २१. तं–विहित. ।

नाकाय स्वाहा द्यावापृथिवीभ्याꣳ

नाकाय। स्वाहा। द्यावापृथिवीभ्यामिति द्यावा-पृथिवीभ्याम्।

---

इति [11]निपातितः। अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६·२·२)। "बृहन्महतोरुपसंख्यानम्" (पा ६·१·१७३ वा १) इति बृहतः परस्याजादेर्विभक्तेरुदात्तत्वम्। "दिवि नाको नामाऽग्निः" (तैब्रा ३·२·३) इत्यादि ब्राह्मणम्। एवं 'हुतोऽस्तु' इति संकल्पेन ५ हविषोऽस्कन्नता क्रियते। कः पुनरित्थं [12]वदतीत्याह—ᵛस्वाहा स्वयमेव सरस्वती आह ब्रूते। "स्वैव ते वागित्यब्रवीत्" (तैब्रा २·१·२) इत्यादि ब्राह्मणम्। 'स्वयमेवाह' इत्यस्यार्थस्य द्योतकोऽयं निपातः। आह स्वेत्यस्य प्रतिलोमपाठे स्वाहेति भवति। "निपाता आद्युदात्ताः" (फि ८०)। न केवलं नाकायैवापि तु, ᵛद्यावापृथिवीभ्याम् अपि हुतोऽस्त्विति। "दिवो द्यावा" (पा ६·३·२९) इति द्यावादेशः आद्युदात्तः। "देवताद्वन्द्वे च" १० (पा ६·२·१४१) [13]इत्युभयपदयोः प्रकृतिस्वरम्॥

---

क्षीरोपलक्षितान् पशून् प्रतिष्ठापयत्येव॥ दोहनकाले कुम्भीस्पर्शनपूर्वकं मौनं विधत्ते—"अन्वारभ्य वाचं यच्छति। यज्ञस्य धृत्यै" (तैब्रा ३·२·३) इति। पवित्रधारणं विधत्ते—"धारयन्नास्ते। धारयन्त इव हि दुहन्ति" (तैब्रा ३·२·३) इति। लोके दोग्धारो वामहस्तेन वा जानुभ्यां वा पात्रं धारयन्त एव दुहन्ति। तथा [22]अत्रापि पवित्रं धारयन्नेवाऽऽसीत। कुम्भीस्पर्शपवित्रधारणयो- १५ र्विकल्पः सूत्रे दर्शितः—"कुम्भीमन्वारभ्य वाचं यच्छति पवित्रं वा धारयन्नास्ते" (आपश्रौ १·१२·३) इति। गां दुग्ध्वा कुम्भीं प्रति क्षीरमानयन्तं दोग्धारं पृच्छेदिति विधत्ते—"कामधुक्ष इत्याहाऽऽतृतीयस्यै। त्रय इमे लोकाः। इमानेव लोकान् यजमानो दुहे" (तैब्रा ३·२·३) इति॥ विद्यमानानां गवां मध्ये कां गां दुग्धवानसि। सोऽयं प्रश्नस्तृतीयगोपर्यन्तः[23]। गोर्भूरादिलोक- रूपत्वात्[24] गवां त्रित्वेन लोकत्रयदोहो लभ्यते। दोग्धुरुत्तरं विधत्ते—"अमूमिति नाम गृह्णाति। २० भद्रमेवाऽऽसां कर्माऽऽविष्करोति" (तैब्रा ३·२·३) इति। अमूमित्यङ्गुल्या [25]निर्दिशन् व्यावहारिकं तदीयं नाम गृह्णीयात्। सन्ति हि गवां व्यवहाराय तत्तत्स्वामिभिः संकेतितानि गङ्गायमुना- सरस्वतीत्यादीनि नामानि। तत्तन्नामग्रहणाद्बहुक्षीरप्रदानलक्षणमासां भद्रं कर्माऽऽविष्कृतं भवति। अथवा मन्त्रद्वयमच्छिद्रकाण्डे समाम्नातम्—"कामधुक्षः प्र णो ब्रूहि। इन्द्राय हविरिन्द्रियम्" (तैब्रा ३·७·४) इति; "अमूं यस्यां देवानाम्। मनुष्याणां पयो हितम्" (तैब्रा ३·७·४) २५ इति च। तयोरत्र प्रश्नोत्तरवाक्याभ्यां प्रतीकग्रहणमस्तु, आपस्तम्बेन (आपश्रौ १·१३·२) तयोः पठितत्वात्॥

---

११. ति. व. मै४– निपात्यते। १२. ति. तं. व. मै४– कर्तव्यमित्याह। १३. मै. मै१– इति पूर्वोत्तरपदयोः।

---

२२. आ. ना. पा. ह्रा–'अत्रापि' नास्ति। २३. आ. इ, उ, ना. पा. भां–°तृतीयलोकपर्यन्तः। २४ .इ. उ. °लोकत्वात्। २५. आ. क–निर्दिश्य।

सा विश्वायुः सा विश्वव्यचाः सा विश्वकर्मा

सा। विश्वायुरिति विश्व-आयुः। सा। विश्वव्यचा इति विश्व-व्यचाः। सा। विश्वकर्मेति विश्व-कर्मा।

[14]प्रथमदुग्धा गाम् [15]अनुमन्त्रयते—'सा विश्वायु' इति॥ या प्रथमं दुग्धा गौः Vसा Vविश्वायुः नाम। [16]विश्वस्य आयुर्जीवनं यस्यामिति पृथिव्यभिधीयते। तदात्मना च गौः
५ स्तूयते। "इयं वै विश्वायु" (तैब्रा ३ २ ३) इत्यादि ब्राह्मणम्॥

द्वितीयाम् [17]अनुमन्त्रयते—'सा विश्वव्यचा' इति॥ "[18-]अन्तरिक्ष Vविश्वव्यचाः[-18]" (तैब्रा ३.२.३)। विश्व व्यचति प्राप्नोतीति विश्वव्यचाः। अञ्चु गतौ, [19-]अञ्चु इत्येके[-19]। अञ्चु इत्येतस्मात् [20]धातो असुन्। शिष्टं [21]विश्वधायाशब्दवत्॥

तृतीयामनुमन्त्रयते—'सा विश्वकर्मा' इति॥ विश्वानि [22]कर्माणि कर्मफलानि यस्यां
१० Vसा Vविश्वकर्मा द्युलोकः। पूर्ववत् स्तवः। "इमानेवैताभि." (तैब्रा ३.२.३) इत्यादि ब्राह्मणम्॥

सा विश्वायुरिति॥ कल्पः—"अथ पुरस्तात् प्रत्यगानयन्त पृच्छति कामधुक्ष इति। अमूमितीतरः प्रत्याह। [26]तामनुमन्त्रयते सा विश्वायुरिति। द्वितीयमानयन्त पृच्छति कामधुक्ष इति। अमूमित्येवेतरः प्रत्याह। तामनुमन्त्रयते सा विश्वव्यचा इति। तृतीयमानयन्त पृच्छति कामधुक्ष
१५ इति। अमूमित्येवेतर प्रत्याह। तामनुमन्त्रयते सा विश्वकर्मेति" (बौश्रौ १ ३) इति॥ विश्वं कृत्स्नमायुर्यस्या. Vसा Vविश्वायु। [27]विश्वस्य व्यचो व्याप्तिर्यस्या. Vसा Vविश्वव्यचाः। विश्वानि कर्माणि यस्याः Vसा Vविश्वकर्मा॥ पृथिव्यन्तरिक्षद्युलोकाभिमानिदेवतानां क्रमेणोक्तगुणोपेतत्वात् तदभेदेन गावः स्तूयन्त इत्यमुं मन्त्राभिप्रायं दर्शयति—"सा विश्वायु. सा विश्वव्यचा. सा विश्वकर्मेत्याह। इयं वै विश्वायुः। अन्तरिक्षं विश्वव्यचाः। असौ विश्वकर्मा। इमानेवैताभिर्लोकान्
२० यथापूर्वं दुहे" (तैब्रा ३ २.२) इति। दुग्ध इत्यर्थ.। किंच बहुक्षीरप्रदानेन संतुष्टो विश्वायुरित्यादिकमाशीर्वादं प्रयुङ्क्त इत्यभिप्रायान्तरमाह—"अथो यथा प्रदात्रे पुण्यमाशास्ते। एवमेवैना एतदुपस्तौति। तस्मात् प्रादादिरयुषीय वन्दमाना उपस्तुवन्त. पशून् दुहन्ति" (तैब्रा ३.२ ३) इति। यथा लोके प्रभूत धन दत्तवते राज्ञे चिरं जीवेत्याशीर्वादं पुरोधाः करोति, एवमेवैतेन मन्त्रेण गाः स्तौति। यस्मादुक्तीयदोहने स्तुतिराम्नायते तस्माल्लौकिकदोहनेऽपि प्रभूत क्षीरं पूर्वंयुरादादिति

१४ गै मै१- प्रथमा दुग्धाम्। १५ व मै मै४-अभिमन्त्रयते। १६. मै. मै१ - विश्वम्। १७ ब मै. अभिमन्त्रयते। १८-१८. मै. मै१- 'अन्तरिक्षं विश्वव्यचा.' नास्ति। १९-१९. मै. मै१-'अञ्चु इत्येके' नास्ति। २० मै. मै१-'धातो' नास्ति। २१ मै. मै१-'विश्वधायाशब्दवत्' इत्यस्यानन्तरम् 'अन्तरिक्ष विश्वव्यचा'। २२ ति. ब. मै४-'कर्माणि' नास्ति।

२६ ना. पा-'ताम्' नास्ति। २७. ब-विश्वम्।

सांनाय्यं, पात्रप्रोक्षणादि ]

निश्चित्य हस्तेन वन्दमानाः वाचा 'मम माता मम भगिनी' इत्येवं [२८]गाः स्तुवन्तो दुहन्ति। एतत्काण्ड-
गतेषु मन्त्रेष्वनाम्नातं कंचिन्मन्त्रमुत्पाद्य विनियुङ्क्ते–" बहु दुग्धीन्द्राय देवेभ्यो हविरिति वाचं
विसृजते। यथादेवतमेव प्रसौति। दैव्यस्य च मानुषस्य च व्यावृत्त्यै " ( तैब्रा ३·२·३ ) इति। हे
दोग्धः, त्वमिन्द्राय तदनुचरेभ्यश्च देवेभ्यः पर्याप्तं बहुक्षीरं संपादयितुं [२९]तिसृभ्य उत्तरा गा [३०]दुग्धि।
तत्र समन्त्रकं गोत्रयदोहनमिन्द्रार्थम्, अमन्त्रकमितरगोदोहनं तदीयानुचरेभ्य इति यथादेवतत्वम्। ५
प्रभूतत्वेन मानुषदोहनाद्व्यावृत्तिः। कल्पे त्वच्छिद्रकाण्डोक्त एव तत्समानार्थो मन्त्रो विनियुक्तः—
" बहु दुग्धीन्द्राय देवेभ्यो हव्यमाप्यायतां पुनः। वत्सेभ्यो मनुष्येभ्यः पुनर्दोहाय कल्पतामिति
त्रिर्वाचं [३१]विसृज्य " ( आपश्रौ १·१३·५ ) इति। ब्राह्मणेऽप्येतस्यैव मन्त्रस्य प्रतीकमस्तु। अर्थतो
निर्देशात् हविरिति पदं पाठभेदः। मन्त्रावृत्तिं विधत्ते—" त्रिराह। त्रिषत्या हि देवाः " ( तैब्रा
३·२·३ ) इति। त्रिरुक्ते सत्यत्वबुद्धिर्येषां ते त्रिषत्याः। मौनं कुम्भीस्पर्शनं च विनैव तिसृभ्योऽधिका १०
[३२]गाः दोहयेदिति विधत्ते—" अवाचंयमोऽनन्वारभ्योत्तराः। अपरिमितमेवाऽवरुन्धे " ( तैब्रा
३·२·३ ) इति। उत्तरासामपि गवां दोहने बहुदेवसहितायेन्द्रायापरिमितं क्षीरं संपादितं भवति।
" तूष्णीमुत्तरा दोहयित्वा " ( बौश्रौ १·३ ) इत्यमन्त्रकदोहनं कल्पे दर्शितम्। पूर्वपक्षत्वेन दारुपात्रं
निषेधति— " न दारुपात्रेण दुह्यात्। अग्निवद्वै दारुपात्रम्। यद्दारुपात्रेण दुह्यात् यातयाम्ना हविषा
यजेत" (तैब्रा ३·२·३) इति। [३३]मन्थनेन अभिव्यज्यमानोऽग्निः पूर्वं गूढो दारुणि वर्तत इत्यग्निसहितं १५
दारुपात्रं तत्रत्येनाग्निना क्षीरस्य स्वीकृतत्वात् हविषो [३४]गतसारत्वम्। [३५]सिद्धान्तरूपेण तत्पात्रं
विधत्ते —" अथो खल्वाहुः। पुरोडाशमुखानि वै हवींषि। नेत इतः पुरोडाशात्। हविषो यामोऽ-
स्तीति। काममेव दारुपात्रेण दुह्यात् " ( तैब्रा ३·२·३ ) इति। पूर्वं निषेधवादिनो हविषस्तत्त्वं न
जानन्ति। अतस्तद्व्यावृत्त्यर्थमथोशब्दः। अभिज्ञास्त्वेवमाहुः—लोके तावदपूपौदनादीनां [३६]क्षुन्निव-
र्तकत्वेन प्राधान्यं दृष्टम्। दधिक्षीरादीनां तु सहकारित्वमेव। ततो यागेष्वपि पुरोडाशचरुमांसान्येव २०
सारवन्ति हवींषि। न तु पुरोडाशादर्वाचीनस्य क्षीरादिहविषः कश्चित् सारोऽस्ति योऽग्निना स्वीक्रियेत।
तस्माद्दारुपात्रदोहनं न विरुध्यत इति। " यदुपर्युपरि शिरो हरेत्। प्राणान् विच्छिन्द्यात्। अधोऽधः
शिरो हरति " ( तैब्रा १·१·५ ) इत्यादाविव, " नेत इतः पुरोडाशम् " ( तैब्रा ३·२·३ ) इति
वीप्सा द्वितीया च चरुपुरोडाशादत्यन्तमर्वाचीनस्येत्यर्थे। पुनरप्यन्यं पूर्वपक्षमाह— " शूद्र एव
न दुह्यात्। असतो वा एष संभूतः। यच्छूद्रः। अहविरेव तदित्याहुः। यच्छूद्रो दोग्धीति " २५
( तैब्रा ३·२·३ ) इति। असतोऽधमात्पदात् पादाज्जातः। राद्धान्तमाह—"अग्निहोत्रमेव न दुह्याच्छूद्रः।
तद्धि नोत्पुनन्ति। यदा खलु वै पवित्रमत्येति। अथ तद्धविरिति " ( तैब्रा ३·२·३ ) इति।
अग्निहोत्रहविष उत्पवनाभावान्नास्ति शूद्रस्पर्शशुद्धिः। इदं तु हविरुत्पवनस्य त्रिरावृत्त्या पवित्रमति-
शयेन प्राप्नोतीति शुद्धमेव॥

२८. ना. पा. भां. हा–गाम्। २९. इ. उ. ना. पा. भां. हा–तिस्रः। ३०. इ. उ. क. ना. भां. हा–
दोग्धि। ३१. आ. ना. हा–विसृजेत्। ३२. इ. उ. ना. पा. भां. हा–'गाः' नास्ति। ३३. इ. उ.
ना. पा. भां. हा–मथनेन; तं–'मन्थनेन' नास्ति। ३४. आ. इ. उ. ना. पा. भां. हा–गतरसत्वम्। ३५.
आ. ना. पा. हा–सिद्धान्तरूपत्वेन। ३६. क. तं–क्षुन्निवर्तकत्वात्।

**सं पृच्यध्वमृतावरीरूर्मिणीर्मधुमत्तमा मन्द्रा धनस्य सातये**

समिति । पृच्यध्वम् । ऋतावरीरित्यृत-वरी. । ऊर्मिणी. ।
मधुमत्तमा इति मधुमत्-तमा. । मन्द्रा । धनस्य । सातये ।

[23]गोदोहनसक्षाळनीया अप· पयस्यानयति—' सपृच्यध्वम् ' इति गायत्र्या ॥ हे [V]ऋतावरी ऋतेन सत्येन यज्ञेन वा तद्वत्य· ऋतसपादिका आप , यूय पयसा [V]स [V]पृच्यध्व संपृक्ता भवत । कर्मणि लकार । "[24]-छन्दसीवनिपौ° " ( पा ५·२·१०९ वा २ ) इति वनिप्-[25] । " वनो र च " ( पा ४·१·७) इति ङीप्रेफौ । "अन्येषामपि दृश्यते" (पा ६·३·१३७) इति दीर्घः । "वा छन्दसि " (पा ६·१·१०६) इति पूर्वसवर्णदीर्घत्वम् । आष्टमिकम् आमन्त्रितानुदात्तत्वम् ( पा ८ १·१९ ) । ऊर्मिमत्त्वादिगुणयुक्ताः सत्यः संपृच्यध्वम् । एतेषामामन्त्रितत्वाभावाद्यथायथ स्वरा भवन्ति । पय सपर्केण वा ह्येते गुणा अपामुपजायन्ते । महद्भिरूर्मिभिस्तद्वत्य ऊर्मिण्य । तुन्दादिषु "स्वाङ्गाद्विवृद्धौ" (गणसूत्रम्—पा ५·२·११७) इति पाठादिनिप्रत्ययः । स्वमङ्ग स्वाङ्गम् । पूर्ववद्दीर्घत्वम् (पा ६ १·१०६) । [V]मधुमत्तमाः मधुरतमाः । [V]मन्द्राः मादयित्र्य । मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु । " स्फायितञ्चि° " ( उ १७० ) इत्यादिना रक्प्रत्यय· । किमर्थं सपृच्यन इत्याह ' धनस्य ' इति । [V]धनस्य सानाय्यलक्षणस्य । [V]सातये लाभाय । [26]वन षण सभक्तौ । " जनसनखना सञ्झलो " ( पा ६·४·४२ )

संपृच्यध्वमिति ॥ कल्प —" दोहनेऽप आनीय सक्षाळनमानयति सपृच्य॰ध्वमृतावरीरूर्मिणी॰ मधुमत्तमा मन्द्रा धनस्य सातय इति " ( बौश्रौ १·३ ) इति ॥ ऋतशब्देन सत्यवाचिना जलेऽवश्यभावि क्षाळनसामर्थ्यमुपलक्ष्यते । हे सामर्थ्यवत्य आप , यूय कुम्भीगतेन क्षीरेण संपृक्ता भवत । कीदृश्यो यूयम् ? ऊर्मिमत्त्वेनात्यन्तमाधुर्येण हर्षहेतुत्वेन च क्षीरमदृश्य· । किमर्थमय[27] सपर्क· ? सानाय्यलक्षणधनलाभार्थं ॥ सामर्थ्योर्मिमाधुर्यगुणोपन्यासादत्र रससपर्को विवक्षित , न तु [28]द्रव्यमात्रसपर्कम् इत्याह—" सपृच्य॰ध्वमृतावरीरित्याह । अपा चैवौषधीना च रसर सस्सृजति । तस्मादपा चौषधीना च रसमुपजीवामः " ( तैब्रा ३ २ ३ ) इति । दोहपात्रक्षाळनेन स्वादुतमोऽपा रस· । कुम्भीगतक्षीरस्वरूपमेव[39] गोभिर्भक्षितानामोषधीनां रस· । तदुभयं कुम्भ्यां ससृष्टम् । यस्मादुभयमेळन प्रशस्त तस्माद्वयं सर्वे तदुभयमुपजीवाम । एतच्च [40]लोकप्रसिद्धम् ।

२३. त. ब मै४ – गोदोहनसक्षाल्नं निनीय । २४–२४. ति. ब मै४– छन्दसि वनिपि । २५. मे मै१– घन वन ।

२७. आ ना पा हा – किमर्थः क – किमर्थोऽयम् । ३८. आ ना पा – द्रव्यसपर्कमात्रम् । ३९ ह. ड. भा. पा मा हा– °क्षीररसस्वरूपमेव । ४०. त–लोके प्रसिद्धम् ।

सोमे॑न ( १ ) त्वाऽऽत॑नच्मीन्द्रा॑य द॒धि

सोमे॑न । त्वा । एति॑ । तन॒च्मि । इन्द्रा॑य । दधि॑ ।

इत्यात्वम् । "ऊतियूति°" (पा ३·३·९७) इत्यादिना क्तिन्प्रत्ययान्तोऽन्तोदात्तो निपातितः । युष्मत्संपर्के हि तत्सिद्धिरिति भावः ॥

दध्नाऽऽतनक्ति—'सोमेन' इति ॥ सोमसदृशेन दध्ना Vत्वा त्वाम् Vआतनच्मि घनीकरोमि । यद्वा-सोमेन सदृशत्वात् सांनाय्यमेव सोमः । "सोमः खलु वै सांनाय्यम्" (तैब्रा ३·२·३) इति च श्रूयते । सोमशब्दात् "तत्करोति" (चुराद्यन्तर्गणसूत्रम्) इति णिचि, "एरजण्यन्तानाम्*" इति वचनात् करणे घञ् । ञित्वात् आद्युदात्तत्वम् । किमर्थमित्याह—

छन्दोगास्तूभयोपजीवनं विशदीकृत्याऽऽमनन्ति—"अन्नमशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति । यो मध्यमस्तन्मांसम् । योऽणिष्ठस्तन्मनः । आपः पीतास्त्रेधा विधीयन्ते । तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति । यो मध्यमस्तल्लोहितम् । योऽणिष्ठः स प्राणः" (छाउ ६·५·१–२) इति । धनलाभोक्तिप्रयोजनं दर्शयति—"मन्द्रा धनस्य सातय इत्याह । पुष्टिमेव यजमाने दधाति" (तैब्रा ३·२·३) इति ॥

सोमेनेति ॥ कल्पः—"अथैनत् तप्त्वोदगुद्वास्य शीतं कृत्वा तिरःपवित्रं दध्नाऽऽतनक्ति सोमेन त्वाऽऽतनच्मीन्द्राय दधीति" (बौश्रौ १·३) इति ॥ हे क्षीर, दधिरूपेण Vसोमेन त्वाम् Vआ Vतनच्मि । तेनाऽऽतञ्चनेन निष्पन्नं Vदधि Vइन्द्राय होष्यते । नन्वत्र सोमशब्देन मुख्यं सोमं परित्यज्य कुतो दध्युपलक्ष्यते ? ब्राह्मणान्तरबलादिति ब्रूमः । [41]तत्र ह्यातञ्चनद्रव्यविशेषैर्देवताविशेषाणां प्रीतिं ब्रुवती श्रुतिर्दध्न इन्द्रप्रियत्वं दर्शयति—"यत् पूतीकैर्वा पर्णवल्कैर्वाऽऽतञ्च्यात् सौम्यं तद्यत् क्कैः राक्षसं तद्यत् तण्डुलैर्वैश्वदेवं तद्यदातञ्चनेन मानुषं तद्यद्दध्ना तत् सेन्द्रं दध्नाऽऽतनक्ति सेन्द्रत्वाय" (तैसं २·५·३) इति ॥ अत्राऽऽतञ्चने मुख्यं दधिशब्दं परित्यज्य गौणस्य सोमशब्दस्योपादाने प्रयोजनमाह—"सोमेन त्वाऽऽतनच्मीन्द्राय दधीत्याह । सोममेवैनत् करोति" (तैब्रा ३·२·३) इति । सांनाय्यस्य सोमीकरणं प्रयोजनम्; तस्याऽपि प्रयोजनमाह—"यो वै सोमं भक्षयित्वा । संवत्सरं सोमं न पिबति । पुनर्भक्ष्योऽस्य सोमपीथो भवति । सोमः खलु वै सांनाय्यम् । य एवं विद्वान्त्सांनाय्यं पिबति । अपुनर्भक्ष्योऽस्य सोमपीथो भवति" (तैब्रा ३·२·३) इति । सोमपीथः पातव्यत्वेन विहितः सोम इत्यर्थः । अग्निष्टोमम्

* [ मैसूरमुद्रितपुस्तके लिखितपुस्तकेषु च 'एरचिण्यन्तानाम्' इति पाठः । अस्माभिस्तु शुद्धीकृत्य पाठः संगृहीतः । 'उञ्छादीनां च' (पा ६·१·१६०) इति सूत्रे काशिकात्र द्रष्टव्या । वचनस्यास्यार्थत्वमाह कैयटः 'एरच्' (पा ३·३·५६) इति सूत्रे । ]

४१. तं–तथा ।

विष्णो॑ ह॒व्यꣳ र॑क्षस्व ॥ ३ ॥

[ सोमेनाष्टौ च ]

विष्णो॒ इति॑ । ह॒व्यम् । र॒क्ष॒स्व॒ ॥ ३ ॥

[ मैस १ १·३, काठ १ ३, कपिष्ठ १·३, वाज १·३ ]

५ [v]इन्द्राय यथा त्वं [v]दधि भवसि तया तदर्थमातनच्मि । "ऐन्द्रं दध्यमावास्यायाम्" (तैसं २·५·४) इत्यैन्द्रत्वं दध्नः । तञ्चू सङ्कोचने । "श्नान्नलोपः" (पा ६·४·२३) ॥

उपरि निदधाति—'विष्णो' इति ॥ हे [v]विष्णो सर्वस्य रक्षक, इदं दुग्धलक्षणं [v]हव्यं [v]रक्षस्व । व्यत्ययेनात्मनेपदम् । हवमर्हतीति हव्यं होमार्हम् । "छन्दसि च" (पा ५·१·६७) इति यत्प्रत्ययः ॥ ३ ॥

१० ॥ इति प्रथमे तृतीयोऽनुवाकः ॥

अनुष्ठाय सर्वास्त्वमतिवाह्य यः सोमयागं न करोति तेनाऽवश्यमसौ कर्तव्यः, "वसन्ते वसन्ते [४२]ज्योतिष्टोमेन यजेत" इति तद्विधानात् । यदि द्रव्याभावादिनिमित्तेन [४३]"न प्रतिपद्येत"[४३] तदा तद्भावनया सोमीकृत्य सांनाय्यं पिबतस्तद्वैकल्यं परिह्रियते । अस्ति ह्यनुष्ठातुमशक्तस्य सर्वत्र भावनया सम्पूर्तिः । अत एव बृहदारण्यके सृष्टिप्रकरणे ब्रह्मचारिणो गार्हस्थ्यधर्मं वाञ्छतस्तदसंभवे सति
१५ उपासनया सम्पूर्तिराम्नायते—"एकाकी कामयते । जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति । स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते । तस्यो कृत्स्नता । मन एवास्याऽऽत्मा । वाग्जाया । प्राणः प्रजा । चक्षुर्मानुषं वित्तम् । चक्षुषा हि तद्विन्दते । श्रोत्रं दैवम् । श्रोत्रेण हि तच्छृणोति । आत्मैवास्य कर्म । आत्मना हि कर्म करोति" (बृउ १·४ १७) इति । आत्मा देहः । तद्गम्यं मन्त्रादिकं दैवं वित्तम् । अतः सोमभावनया
२० वैकल्यपरिहारो युज्यते ॥ कुम्भ्याः [४४]पिधानाय पात्रविशेषं विधत्ते—"न मृन्मयेनापिदध्यात् । यन्मृन्मयेनापिदध्यात् । पितृदेवत्यꣳ स्यात् । अयस्पात्रेण वा दारुपात्रेण वाऽपिदधाति । तद्धि सदेवम्" (तैब्रा ३·२·३) इति । पितॄणां मृत्पात्रमुदकुम्भश्राद्धादौ [४५]सिद्धम् । दारुपात्रस्य सदेवत्वं दोहनपात्रावगतमन्त्रान्तराद्वा । तत्रैवमाम्नायते—"अमृन्मयं देवपात्रं यज्ञस्याऽऽयुषि प्रयुज्यताम्" (तैब्रा २·७·४) इति । अयस्पात्रस्याप्येतद् द्रष्टव्यम् ॥ पिधानपात्रस्य सोदकत्वं विधत्ते—"उदन्व-
२५ द्भवति । आपो वै रक्षोघ्नीः । रक्षसामपहत्यै" (तैब्रा ३·२·३) इति । स्वाभिमानिदेवतामुखेनापां रक्षोघ्नत्वम् । पिधानाय मन्त्रमुत्पाद्य व्याचष्टे—"अदस्तमसि विष्णवे त्वेत्याह यज्ञो वै विष्णुः ।

४२. आ. इ उ. तं ना. पा भो. हा–ज्योतिषा । ४३–४३. ना–न प्रतिपद्यते, क. प. तं–प्रतिपद्येत । ४४. ब–अपिधानाय । ४५ ना ब–प्रसिद्धम् ।

यज्ञायैवैनददस्तं करोति " ( तैब्रा ३·२·३ ) इति । अदस्तमनुपक्षीणम् । कल्पे ॥ प्रतीकमिदमित्यभिप्रेत्याच्छिद्रकाण्डमन्त्रो[४६] विनियुक्तः—" अथैनदुदन्वता कंसेन चमसेन वाऽपिदधात्यदस्तमसि विष्णवे त्वा यज्ञायापिदधाम्यहम् । अद्भिरिक्तेन पात्रेण याः पूताः परिशेरते " ( बौश्रौ १·३ ) इति । प्रथमपक्षे ' हे सांनाय्य, विष्णवे [४७]त्वाऽपिदधामि ' इत्यध्याहारः ॥

विष्णो इति ॥ कल्पः— अथ " [४८]तदुपरीव निदधाति यत्र गुप्तं मन्यते विष्णो हव्यꣳ रक्षस्वेति " ( बौश्रौ १·३ ) इति ॥ अत्र रक्षणार्थमेव विष्णुसंबोधनं, न तु इन्द्रवत् हविःस्वीकाराय इत्यमुमभिप्रायं विशदयति— " विष्णो हव्यꣳ रक्षस्वेत्याह गुप्त्यै " ( तैब्रा ३·२·३ ) इति ॥ शाखाबर्हिषोरिव सांनाय्येऽपि विधत्ते—" अनधः सादयति । गर्भाणां धृत्या अप्रपादाय । तस्माद्गर्भाः प्रजानामप्रपादुकाः । उपरीव निदधाति । उपरीव हि सुवर्गो लोकः । सुवर्गस्य लोकस्य समष्ट्यै" ( तैब्रा ३·२·३ ) इति ॥

अत्र विनियोगसंग्रहः—

" शुन्ध सांनाय्यपात्राणि प्रोक्ष्य मातेति कुम्भिकाम् ।
संस्थाप्याग्नौ वसू शाखापवित्रं तत्र निक्षिपेत् ॥ १ ॥
हुतो बिन्दून् सेति गाश्च दुग्धास्तिस्रोऽभिमन्त्रयेत् ।
संपृ संक्षालनं क्षिप्त्वा सोमे दध्नाऽऽतनक्ति हि ।
विष्णोऽनधो दधात्यस्मिंस्तृतीये दश वर्णिताः " ॥ २ ॥

अथ मीमांसा— तत्र तृतीयाध्यायस्य तृतीयपादे विचारितम्—

" शुन्धध्वमिति [४९]मन्त्रोऽयं पौरोडाशिकशोधने ।
सांनाय्यपात्रशुद्धौ वा, प्रथमोऽस्तु समाख्यया ॥
पौरोडाशिकमित्यत्र प्रकृत्या तद्धितेन वा ।
[५०]संनिध्यनुचितः कल्प्यः क्लृप्तत्वात् चरमः क्रमात्"॥ (जैन्या३·३·२७·२८)इति ॥

" शुन्धध्वं दैव्याय कर्मणे " ( तैसं १·१·३ ) इत्ययं मन्त्रः पौरोडाशिकमिति याज्ञिकैः समाख्याते काण्डे पठितत्वात् समाख्यया पुरोडाशकाण्डोक्तानाम् उलूखलजुह्वादीनां शोधनेऽङ्गमिति चेत् । नैवम् । पौरोडाशिकमिति समाख्यायां प्रकृतिः पुरोडाशमात्रमभिधत्ते, तद्धितप्रत्ययश्च तत्संबन्धिकाण्डम् । न चैतावता पुरोडाशपात्राणां मन्त्रसंनिधिः प्रत्यक्षो भवति, किंत्वर्थापत्त्या कल्प्यते । यद्युक्तः संनिधिर्न स्यात्तदा मन्त्रग्रन्थस्य ' [५१]पौरोडाशिकम् ' इति समाख्या[५१] न स्यात् । तदस्मात्

४६. तं– °काण्डगतो मन्त्रः । ४७. ड. उ. ना. पा. भां. हा– त्वामपि° । ४८. बौ–एतदुपरीव । ४९. तं. च–मन्त्रोऽङ्गम् । ५०. ड.उ–ऽसंनिध्यनुचितः । ५१–५१. आ. क. तं. ना. भां, हा– पौरोडाशिकसमाख्या ।

असंनिहितानां इषे त्वादिमन्त्राणाम् आग्नेयकाण्डसमाख्या भवति। संनिहितानां ▮ "युञ्जानः प्रथमम्" (तैसं ४·१·१) इत्यादिमन्त्राणां भवत्येषा समाख्या। तस्मात् काण्डसमाख्यया संनिधिं परिकल्प्य तम्मनिष्पन्यथानुपपत्त्या परस्पराकाङ्क्षारूपं पौरोडाशिकपात्रप्रकरणं कल्पयित्वा तद्द्वारा वाक्यलिङ्गश्रुती कल्पयित्वा तया श्रुत्या विनियोग इति समाख्याया विप्रकर्षः। सांनाय्यपात्राणां शोधनमन्त्रसंनिधिस्तु प्रत्यक्षः। इध्माबर्हिःसंपादनस्य मुष्टिनिर्वापस्य [52]चान्तरालं सांनाय्यपात्राणां देशः। उक्तमन्त्रश्च इध्माबर्हिर्निर्वापविषययोर्मन्त्रानुवाकयोर्मध्यमेऽनुवाके पठ्यते। तेन च प्रत्यक्षसंनिधिना प्रकरणादीनां चतुर्णामेव कल्पनात् संनिधिः संनिकृष्यते। तस्मात् क्रमेण समाख्यां बाधित्वा सांनाय्यपात्रशोधनशेषो मन्त्र इत्ययं चरमः पक्षोऽभ्युपेतव्यः॥

तस्मिन्नेवाऽध्याये षष्ठपादे विचारितम्—

"शाखाच्छेदादयो दोहधर्माः सायं व्यवस्थिताः।
प्रातश्च सन्ति वा सायं स्थानात्ते पूर्ववत् स्थिताः॥
स्थानर्थक्यप्रतिहतिः [53]पूर्ववन्नेह विद्यते।
[54]बलिनोऽतः प्रकरणात् प्रातर्दोहेऽपि सन्ति ते"॥ (जैन्या ३·६ १६-१७) इति॥

दर्शपूर्णमासप्रकरणे पलाशशाखाच्छेदन, तया शाखया वत्सापाकरणमित्यादयो दोहधर्माः समाम्नाताः। दोहौ च द्वौ विधेते। अमावास्यायां रात्रावेको दोहः। प्रतिपदि प्रातरपरो दोहः। तत्र [55]पूर्वन्यायेन स्थानबलात् प्राथमिके सायंदोहे प्रथमश्रुतास्ते धर्मा व्यवतिष्ठन्त इति चेत्। नैवम्। वैषम्यात्। पूर्वत्र हि सोमे धिष्ण्यासनादिधर्माणामनन्वयात् प्रकरणमानर्थक्यप्रतिहतम्। अतोऽग्नीषोमीयपशौ स्थानबलात् ते धर्मा व्यवस्थिताः। इह तु नास्त्यानर्थक्यप्रतिहतिः। अतः प्रकरणेन स्थानं बाधित्वा द्वयोर्दोहयोस्ते धर्मा अभ्युपेयाः॥

दशमाऽध्यायस्याऽष्टमे पादे विचारितम्—

"स्वाहेत्युक्तिर्दर्विहोमे सहारः स्यात्र वाऽग्रिम।
पूर्वन्यायात्र तन्मन्त्रे स्वाहाकारविधिस्त्वतः॥
[56]विधित्वेऽपि नियत्यै स्याद्व्यत्यासवषट्कृती[56]
होमान्तरे वषट्कारस्वाहाकारविकल्पनम्"॥ (जैन्या १०·८·१९-२०) इति॥

अनारभ्य श्रूयते–"वषट्कारेण स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते" इति। दर्विहोमविशेषे श्रूयते–"पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा" (तैसं १·८·१३) इति। तत्र पूर्वाधिकरणे यथाऽनारभ्य

---

[52]. इ. उ ना. पा. भां. हा– चान्तराले। [53] आ. क ना. पा. हा– पूर्ववन्नेव। [54]. त– बिहितोऽतः। [55] इ. उ. पा भां हा–पूर्वन्यायेन। [56]–[56]. क– विधित्वेऽपि नियत्येव न बाध्या व षट्कृतिः, इ पा ▮ – विधित्वोपनियत्यै स्याद्व्यत्यासवषट्कृती।

विहितस्य सान्नद्वयस्य प्राकरणिकेन सान्नद्वयविधिनोपसंहारे सति विकृत्यन्तरे सान्नद्वयं नास्ति तथैवाप्यनारभ्यवादेन विहितस्य स्वाहाकारस्य दर्विहोमप्रकरणपठितमन्त्रगतेन स्वाहाशब्देनोपसंहारे सति होमान्तरेषु नास्ति स्वाहाकार इति प्राप्ते ब्रूमः– "पृथिव्यै स्वाहा" (तैसं १·८·१३) इति मन्त्रपाठोऽयम्। न त्वत्र स्वाहाकारोऽनारभ्याधीतब्राह्मणवाक्येनैव विधीयते। न खलु– "यमादित्या अंशुमाप्याययन्ति" (तैसं २·४·१४) इत्यादि याज्यामन्त्रगतादित्यादिशब्दाः कस्यचिदर्थस्य विधायका दृष्टाः। यथा [57]सिद्धार्थवाचकादित्यशब्दो न विधत्ते, यथा वा क्रियावाचित्वेऽपि वर्तमानार्थं आप्याययन्तीति न विधायकः, तथा वैदिकहविर्विषयो '[58]देवस्य हव्यम्' इत्यस्मिन्नर्थे वर्तमानः स्वाहाशब्दो नोच्चारणं विदधाति। तथा सत्युपसंहार्योपसंहारकयोरेकविषयत्वशङ्काया अभावा- त्सत्येवात्र पूर्वन्यायः। ननु प्रकरणादिना मन्त्रस्य होमे विनियुक्तत्वात् स्वाहाकारविधिरर्थाल्लभ्यत इति चेत्। एवमपि ब्राह्मणवाक्येन पक्षे प्राप्तः स्वाहाकारो नियम्यते– [59]अस्मिन्नप्युपहोमे स्वाहाकारेणै- वान्नं प्रदीयत इति। ततः पाक्षिको वषट्कारोऽर्थान्निवर्तते। किंच "पुरस्तात् स्वाहाकारा वा अन्ये देवा उपरिष्टात् स्वाहाकारा अन्ये" (तैब्रा ३·९·१०) इति ब्राह्मणोक्तन्यायेन "स्वाहा पृथिव्यै" इत्यपि पाठः पक्षे प्राप्नोति। तत्र "पृथिव्यै स्वाहा" इत्येव पठेदिति नियम्यते। अर्थात् व्यत्यासो निवर्तते। तस्मादविधिस्वविधिस्थयोरुपसंहारामात्रेण होमान्तरेष्वनारभ्य विहितो वषट्कारस्वाहा- कारविकल्पः सुस्थितो भवति। एवं च सति "हुतः स्तोकः" (तैसं १·१·३), "स्वाहा द्यावापृथिवीभ्याम्" (तैसं १·१·३) इति मन्त्रांशाभ्यां सूचितस्य स्वाहाकारविकल्पस्य न [60]कदाचिदप्यनुपपत्तिः॥

प्रथमाध्यायस्य द्वितीयपादे किंचिद्विचारितम्—

"तेन ह्यन्नमिति प्रोक्तो वादो हेतुरुत स्तुतिः।
हिना श्रुता हेतुताऽतः शूर्पादन्यच्च साधनम्॥
शूर्पसाधनता श्रौती [61]नाश्रौतैः सा विकल्प्यते।
अतो निरर्थको हेतुः स्तुतिस्तु स्यात् प्रवर्तिका"॥ (जैन्या १·२·९–१०) इति॥

इदमाम्नायते— "शूर्पेण जुहोति तेन ह्यन्नं क्रियते" (द्र. शब्रा २·५·२–२३) इति। अयमर्थवादो [62]विधेयशूर्पे हेतुत्वेनान्वेति[62]। हिशब्दस्य हेतुवाचित्वात्। यस्मादन्नसाधनं तस्माच्छूर्पेण होतव्यमित्युक्ते यद्यदन्नसाधनं दर्वीपिठरादिकं तेन सर्वेण होतव्यमिति लभ्यते। ततः पिठरादयः शूर्पेण सह विकल्प्यन्त इति प्राप्ते ब्रूमः– शूर्पस्य होमसाधनत्वं [63]श्रौतं, तृतीयया तदव- गमात्। पिठरादीनां त्वानुमानिकमतोऽसमानबलत्वान्न विकल्पो युक्तः। ततो हेतुर्व्यर्थः। स्तुतिस्तु

५७. क–सिद्धार्थवाचक आदित्यशब्दः। ५८. तं. ना. द्वा–'देवस्य' नास्ति। ५९. तं– अस्मिन् दार्विहोमे। ६०. इ उ. पा. भां. द्वा–कांचिदप्यनुपपत्तिः ६१. इ. उ. ना. पा. भां. द्वा–नाश्रुतैः। ६२–६२. इ. उ. तं. ना. पा. भां. द्वा–विधेयशूर्पहेतुत्वेनान्वेति। ६३. तं. श्रुतम्।

प्ररोचनायोपयुक्ता। तस्मात् स्तुतित्वेनान्वयः। अनेनैव न्यायेन प्रकृतेऽपि "अग्निहोत्रमेव न दुह्याच्छूद्र। तद्धि नोत्पुनन्ति" (तैब्रा ३·२·३) इत्यत्र हिशब्दस्य हेतुत्वाद्यत्र यत्र नास्त्युत्पवनं तत्र तत्र शूद्रस्पर्शो निषिद्ध इति व्याप्तौ सत्यामुत्पवनरहितानां व्रीहियवादीनां कदाचिच्छूद्रेण स्पृष्टानां यागयोग्यत्वं न स्यादिति पूर्वः पक्षः। 'तद्धि नोत्पुनन्ति' इत्यस्यार्थवादस्य स्तावकत्वेन हेतुप्रतिपादकत्वाभावात् [६४]नोक्तो दोष इति राद्धान्तः॥

अथ व्याकरणम्— शुन्धध्वमित्यत्र धातुरुदात्तः। शप्प्रत्ययः पित्त्वादनुदात्तः। अदुपदेशाल्लसार्वधातुकमप्यनुदात्तम्। दैव्यशब्दो यञन्तत्वेन "ञ्नित्यादि॰" (पा ६·१·१९७) इत्याद्युदात्तः। मातरिश्वन्शब्दो धिषणेतिवत् मध्योदात्तः। घर्मोऽसीत्योकारस्योदात्तानुदात्तयोरोकाराकारयोः स्थाने पतितत्वादेकादेशस्वरेण नित्यमुदात्तत्वे प्राप्ते तदपवादः "स्वरितो वाऽनुदात्ते पदादौ" (पा ८·२·६) उत्तरपदस्याऽऽदावनुदात्ते परत उदात्तानुदात्तयोर्य एकादेशः स विकल्पेन स्वरितः स्यादित्योकारः स्वरितः। पृथिव्यसीत्यत्र "उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य" (पा ८·२·४) उदात्तस्य वा स्वरितस्य वा स्थाने यो यण् तस्मादुत्तरस्यानुदात्तस्य स्वरितः स्यादित्यकारः स्वरितः। विश्वस्य धायो धारणं यस्या भूमेः सा विश्वधाया। तत्र पूर्वपदप्रकृतिस्वरः प्राप्तः। विश्वशब्दश्च स्वतः आद्युदात्तः। "विश्वे देवा ऋतावृधः" (तस २·४·१४) इत्यादौ [६५]तथा दर्शनात्[६६]। इह तु "बहुव्रीहौ विश्वं संज्ञायाम्" (पा ६·२·१०६) इति विश्वमित्येतत् पूर्वपदमन्तोदात्तम्। परमशब्दो नपुंसकलिङ्गोऽपि नित्यनपुंसकत्वाभावात् फिट्स्वरेणाऽन्तोदात्तः। दृंहस्वेत्यत्र [६६]पूर्ववाक्यगतेन पदात् परत्वाभावात् न निघातः, किंतु धातुस्वरशप्स्वरलसार्वधातुकस्वराः। 'परमेण धाम्ना दृंहस्व' इत्येकवाक्यत्वेऽपि 'दृंहस्व मा ह्वाः' इति समुच्चयविवक्षया चकारस्य लुप्तत्वेन "चादिलोपे विभाषा" (पा ८·१·६३) इति निघातस्य विकल्पो द्रष्टव्यः। वसुशब्दो वृषादिः। पवित्रमित्यत्र "पुवः संज्ञायाम्" (पा ३·२·१८५) इति पूङ्धातोरित्रप्रत्यये सतीकार उदात्तः। शतधारशब्दः शतपदशब्दवत्। द्रप्सोऽसीत्यत्र धर्मोऽसीतिवदोकारः स्वरितः। "बृहन्महतोरुपसंख्यानम्" (पा६·१·१७३ वा १) इति बृहच्छब्दादुत्तरस्या अजादिविभक्तेरुदात्तत्वम्। कं सुखम्, अकं दुःखं तत् विद्यते यस्यामसौ नाकः, पूर्वपदप्रकृतिस्वरः। स्वाहाशब्दो निपातः। द्यावापृथिवीशब्दस्य "देवताद्वन्द्वे च" (पा ६·२·१४१) इत्युभयपदप्रकृतिस्वरत्वादाद्यन्तावुदात्तौ। विश्वधाया इतिवद्विश्वायुरित्यादयः। [६७]ऋतावरीशब्दस्य आमन्त्रितत्वान्निघातः। ऊर्मिशब्दस्य फिट्स्वरः। डीबनुदात्तः। मधुशब्दो वृषादिः। मधुमत्तमशब्दावनुदात्तौ। धनशब्दो नपुंसकस्वरः। सोमेन्द्रविष्णुशब्दा वृषादिगताः। हवस्य होमस्य योग्यं हव्यम्, प्रत्ययस्वरः॥ ३॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-
संहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः॥

---

६४ म–न कश्चित्। ६५-६५. आ–दर्शनात्; क ना पा. हा– तद्दर्शनात्। ६६. क तं– पूर्वस्य वाक्येन। ६७. आ. इ. ख ना. पा. भा हा–ऋतावरी, ब–ऋतावरीरिति।

कर्म॑णे वां॑ दे॒वेभ्यः॑ शकेय॒म्

कर्म॑णे। वा॒म्। दे॒वेभ्यः॑। श॒केय॒म्।

यागदिवसे कर्मारम्भे हस्तौ संमृशति—‘ कर्मणे वाम् ’ इति ॥ [V]देवेभ्यः इति षष्ठ्यर्थे चतुर्थी ( पा २·३·६२ वा १ )। हे हस्तौ, देवानां संबन्धिने [V]कर्मणे [1]कर्मसिद्ध्यर्थं [V]वां युवयोः [V]शकेयं युवां विनियोक्तुं समर्थो भूयासम्। “ लिङ्याशिष्यङ् ” ( पा ३·१·८६ ) इत्यङ्प्रत्ययः। “ छन्दस्युभयथा ” ( पा ३·४·११७ ) इति सार्वधातुकत्वात् सलोपः ॥

अनुवाकत्रयेण [1]पर्वदिनकर्तव्यं समापितमुत्तरैर्दशभिरनुवाकैः प्रतिपद्दिनकर्तव्यमभिधातव्यम्। तत्र प्रथमं तावदस्मिंश्चतुर्थेऽनुवाके हविर्निर्वापोऽभिधीयते।

**कर्मण इति** ॥ बौधायनः—“ अथ प्रातर्हुतेऽग्निहोत्रे हस्तौ संमृशते कर्मणे वां देवेभ्यः शकेयमिति ” ( बौश्रौ १·४ ) इति। आपस्तम्बः—“ कर्मणे वां देवेभ्यः शकेयमिति हस्താवनिज्य ” ( आपश्रौ १·१५·४ ) इति ॥ हे हस्तौ, देवानां संबन्धिने [V]कर्मणे प्रक्षालितौ युवां प्रयोक्तुं शक्तो भूयासम् ॥ विनाऽपि प्रक्षालनं लौकिकशक्तेः सद्भावाच्छास्त्रीयशक्त्यर्थोऽयं मन्त्रः प्रक्षालनहेतुरित्यभिप्रेत्याह—“ कर्मणे वां देवेभ्यः शकेयमित्याह शक्त्यै ” ( तैब्रा ३·२·४ ) इति। [2]कंचिन्मन्त्रमुत्पाद्य [3]तृणास्तरणे विनियुङ्क्ते—“ यज्ञस्य वै संततिमनु प्रजाः पशवो यजमानस्य संतायन्ते। यज्ञस्य विच्छित्तिमनु प्रजाः पशवो यजमानस्य विच्छिद्यन्ते। यज्ञस्य संततिरसि यज्ञस्य त्वा संतत्यै स्तृणामि संतत्यै त्वा यज्ञस्येत्याऽऽहवनीयात् संतनोति। यजमानस्य प्रजायै पशूनाꣳ संतत्यै ” ( तैब्रा ३·२·४ ) इति। ‘यज्ञस्य त्वा संतत्यै’ इत्येषां पदानामादरार्थेन द्विरभ्यासेन भूमिर्यथा न दृश्यते तथा स्तरणीयमिति सूच्यते। अत एवाऽन्यत्राऽऽम्नातम्—“ अनतिदृश्नꣳ स्तृणाति ” ( तैसं २·६·५ ) इति। स्तरणप्रदेशस्याऽऽद्यन्तौ कल्पे दर्शितौ—“ गार्हपत्यात् प्रक्रम्य संततामुलपराजीꣳ स्तृणात्याऽऽहवनीयात् ” ( आपश्रौ १·१५·४ ) इति। उलपराजिस्तृणविशेषः[4] प्रणयनं विधत्ते—“ अपः प्रणयति ” ( तैब्रा ३·२·४ ) इति। तत्प्रकारः कल्पे दर्शितः—“ [5]अथोत्तरेण गार्हपत्यमुपविश्य कꣳसं वा चमसं वा प्रणीताप्रणयनमादाय तस्मिꣳस्तिरःपवित्रमप आनयन्नाह ब्रह्मन्नपः प्रणेष्यामि यजमान वाचं यच्छेति। [6]प्रसूतः समं प्राणैर्धारयमाणोऽविषिञ्चन् हस्तेनोत्तरेणाऽऽहवनीयं दर्भेषु सादयित्वा ” ( बौश्रौ १·४ ) इति। प्रणयनविधेरर्थवादमाह—“ श्रद्धा वा आपः। श्रद्धामेवाऽऽरभ्य प्रणीय प्रचरति ” ( तैब्रा ३·२·४ ) इति। अपां श्रद्धाजनकत्वेन श्रद्धारूपत्वमुपचर्यते। तज्जनकत्वं च श्रुत्यन्तरे समाम्नातम्—“ आपो हास्मै श्रद्धां संनमन्ते पुण्याय कर्मणे ” ( ऐआ २·१·७ ) इति। दृश्यते च स्नानाचमनोपेतस्य श्रद्धातिशयः। पूर्वोक्तमेव प्रणयनविधिं पुनः

१. मै. ध— तत्सिद्ध्यर्थम्।

१. इ. उ. तं. मा. पा. भां. द्वा—पूर्वदिन°। २. इ. उ. पा. मां. द्वा—किंचिन्मन्त्र°। ३. इ. उ. पा. भां. द्वा—तृणास्तरणे। ४. इ. उ. मां. द्वा—°शब्दितस्तरणविशेषः। ५. ध—अपरेण। ६. पा. ब—संप्रसूतः; क—संप्रेष्यन्।

वेपा॑य त्वा॒

वेपा॑य। त्वा॒।

शूर्पमादत्ते—‘ वेपाय त्वा ’ इति ॥ [२]व्याप्नोतीति वेपः विष्णुर्यज्ञ. इति पर्यायाः। पचाद्यजन्तः। वृषादित्वादाद्युदात्तत्वम् ( पा ६·१·२०३ )। सर्वव्यापिने विष्ण्वात्मने यज्ञाय ५ त्वाम् ‘ आददे ’ इति शेष. ॥

पुनरप्यद्बहुधा स्तौति— “ अप प्रणयति। यज्ञो वा आप.। यज्ञमेवारभ्य प्रणीय प्रचरति। अप. प्रणयति। वज्रो वा आप.। वज्रमेव भ्रातृव्येभ्य. प्रहृत्य प्रणीय प्रचरति। अप. प्रणयति। आपो वै रक्षोघ्नी.। रक्षसामपहत्यै। अप. प्रणयति। आपो वै देवाना प्रिय धाम। देवानामेव प्रिय धाम प्रणीय प्रचरति। अप प्रणयति। आपो वै सर्वा देवता.। देवता एवाऽऽरभ्य प्रणीय प्रचरति ” (तैब्रा ३·२·४)
१० इति। यज्ञ। यथाऽभीष्टस्वर्गसाधन तद्वदपामभीष्टप्रीत्यादिसाधनत्वाद्यज्ञत्वम्। प्रणीताभिरद्भि· [७]पिष्टसंयवन प्रचरणम्। यथा वज्रो वैरिण वारयति तद्वदापः शत्रु वारयन्ति। रक्षोघ्नीत्व पूर्वोक्तम्। घृष्टयुदकस्य देवप्रियधाम्नो द्युलोकादुत्पन्नत्वादपा तद्धामत्वम्। देवास्तावदग्नि प्रविश्य तद्भाव प्राप्ता। तथा च श्रूयते—“ देवासुरा. संयत्ता आसन् ते देवा बिभ्यतोऽग्नि प्राविशन् तस्मादाहुरग्नि सर्वा देवता इति ” ( तैस ६ २·२ ) इति। स चाग्निरप्सु प्रविष्ट। “ स निलायत। सोऽपः प्राविशत् ”
१५ ( तैस २·६ ६ ) इति श्रुते। तस्मादपा सर्वदेवतात्वम्। ब्राह्मणान्तराण्य ( तैब्रा ३·२·४, ७·२ ) तथात्र द्रष्टव्यम् ॥

वेपायेति ॥ कल्प.— “ आदत्ते दक्षिणेनाग्निहोत्रहवणी[९] सव्येन शूर्पं वेपाय त्वेति ” ( बौश्रौ १·४ ) इति ॥ तदेतदुभय यज्ञायुधमध्यपाति। तानि यज्ञायुधान्यन्यत्रैवमाम्नातानि— “ स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिन च शम्या चोलूखलं च मुसल च
२० दृषच्चोपला चैतानि वै दश यज्ञायुधानि ” ( तैस १·६ ८ ) इति। तेषा प्रयोगप्रकार. [८]सूत्रे दर्शित — “ उत्तरेण गार्हपत्याहवनीयौ दर्भान् संस्तीर्य द्वन्द्व न्यञ्चि पात्राणि प्रयुनक्ति दशापराणि दश पूर्वाणि। स्फ्यश्च कपालानि चेति यथासमाम्नातमपराणि प्रयुज्य स्रुव जुहूमुपभृत ध्रुवां वेदं पात्रीमाज्य-स्थालीं प्राशित्रहरणमिडापात्रं प्रणीताप्रणयनमिति पूर्वाणि। तानि उत्तरेणावशिष्टानि अन्वाहार्य-स्थालीमश्मानमुपवेषं शातदोहपात्राणीति। प्रणीताप्रणयन पात्रसंसादनात् पूर्वमेके समामनन्ति ”
२५ ( आपश्रौ १ १५ ६-९ ) इति। तत्राग्निहोत्रहवण्यादाने शाखान्तरमन्त्र उदाहृत — “ वानस्पत्याऽसि दक्षाय त्वेत्यग्निहोत्रहवणीमादत्ते ” ( आपश्रौ १ १७ १ ) इति। तस्मात् ‘ वेपाय त्वा ’ इति मन्त्रेण शूर्पम् आदत्ते[१०]। वेपो व्याप्तिमान् यज्ञस्तदर्थं भो शूर्पं, त्वामाददे ॥ अथाऽर्थावबोधकाङ्क्ष एवं

२ मै ब- ‘ व्याप्नोतीति ’ नास्ति।

७ आ. त–पिष्टस्य सयवनम्, क–पिष्टस्य सयमनम्। ८ आ. इ. उ. ना. पा. मां. हा– तत्रैव।
९ आ. इ. उ. ना. पा. मां. हा–°स्थालीं मदन्तीमुपवेषम्; क–°स्थालीं मदन्तीमश्मानमुपवेषम्।
१० त–आददीत, क. ब–आददीत।

प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयो धूरसि धूर्व
धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्व

प्रत्युष्टमिति प्रति-उष्टम् । रक्षः । प्रत्युष्टा इति प्रति-उष्टाः । अरातयः । धूः ।
असि । धूर्व । धूर्वन्तम् । धूर्व । तम् । यः । अस्मान् । धूर्वति । तम् । धूर्व ।

'प्रत्युष्टम्' इति प्रतितपनमन्त्रो व्याख्यातः ( तैसं १.१.२ ) ॥ ५

धुरमभिमृशति—'धूः' इति ॥ धूःस्थोऽग्निरुच्यते । Vधूः हिंसकः त्वम् Vअसि । युगप्रदेशस्य धूर्भूत्वा स्थितस्त्वम् । हे अग्ने धुर्य । "एष वै धुर्योऽग्निः" ( तैब्रा ३.२.४ ) इति ब्राह्मणम् । धुर्वी हिंसायाम् । कर्तरि क्विप् ( पा ३.२.७६ ) । [3]"राल्लोपः" ( पा ६.४.२१ ) । उपधादीर्घः[3] ( पा ८.२.७६ ) । यत ईदृशस्त्वं तस्मात् Vधूर्वन्तं यज्ञस्य हिंसकं राक्षसादिकं तावत् Vधूर्व नाशय । किं च Vतं च Vधूर्व Vयः १०

वाक्यपूर्तये पदाध्याहारः । अनुष्ठानकाले तु न लौकिकं पदमध्याहर्तव्यम् । अनाम्नातस्योहादिवद-मन्त्रत्वात् । अवबुद्धस्यार्थस्य वाक्यैकदेशेनापि संस्कारोद्बोधे सति स्मृत्युत्पत्तेः । [11]अमन्त्रत्वादेव तदुद्वारकस्मृत्या नास्त्यदृष्टं [12]किंचित् । 'सूर्याय जुष्टं निर्वपामि' इत्यूहादीनमन्त्रानपि [13]प्रयुञ्जीत । अन्यथा 'अग्नये जुष्टम्' इत्येवमाम्नातस्यैव प्रयोगे सौर्यकर्मसमवेतस्यार्थस्य स्मृत्यभावप्रसङ्गात् ॥ धूर्पस्य यज्ञार्थत्वं निर्वापावघातादौ प्रसिद्धमित्याह—"वेषाय त्वेत्याह । वेषाय ह्येनदादत्ते" १५ ( तैब्रा ३.२.४ ) इति ॥

प्रत्युष्टमिति ॥ कल्पः—"प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याहवनीये गार्हपत्ये वा प्रतितप्य" ( आपश्रौ १.१७.१ ) इति । व्याचष्टे—"प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याह । रक्षसामपहत्यै" ( तैब्रा ३.२.४ ) इति ॥

धूरिति ॥ कल्पः—"जघनेन गार्हपत्यमवस्थितमनो भवति । तस्यैत्योत्तरां युगधुरमभिमृशति २० धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वाम इति" ( बौश्रौ १.४ ) इति ॥ व्रीहिरूपहविर्धारकशकटसंबन्धिनो युगस्य बलीवर्दवहनप्रदेशे कश्चिद्धिंसकोऽग्निः शास्त्रदृष्टोऽस्ति । तं प्रार्थयते– [14]भो वह्ने, त्वं हिंसकः Vअसि । ततः पापरूपं हिंसकं विनाशय । किं च Vयः राक्षसादिः यागविघ्नेन Vअस्मान् जिघांसति Vतम् अपि विनाशय । Vयं वाऽऽलस्यादिरूपं वैरिणं Vवयं

३–३ ति., तं. पं. व– राल्लोपोपधादीर्घत्वे ।

११. इ. उ–अमन्त्रकत्वादेव । १२. इ. उ. पा– क्वचित् । १३. आ. इ. उ. क. पा. ना. भां. ह्रा– प्रयुज्यते । १४. क. तं. व–हे ।

यं व॒यं धू॒र्वाम॒स्त्वं दे॒वाना॑मसि॒ सस्नि॑तम॒
पप्रि॑तम॒ जुष्ट॑तम॒ वह्नि॑तमं देव॒हूत॑म॒मह्रु॑तमसि

यम्। व॒यम्। धूर्वाम॑। त्वम्। दे॒वाना॑म्। अ॒सि। सस्नि॑तम॒मिति॒ सस्नि॑-त॒मम्।
पप्रि॑तम॒मिति॒ पप्रि॑-त॒मम्। जुष्ट॑तम॒मिति॒ जुष्ट॑-त॒मम्। वह्नि॑तम॒मिति॒ वह्नि॑-त॒मम्।
५ दे॒व॒हूत॑म॒मिति॑ दे॒व-हूत॑मम्। अह्रु॑तम्। अ॒सि।

अस्मान् धूर्वति जिघांसति अपि च तम् अपि धूर्व यं वयं धूर्वामः जिघांसामः।
सर्वत्र "उपधायां [या] च" (पा ८.२.७८) इति दीर्घत्वम्॥

अनोऽभिमन्त्रयते—'त्वम्' इति॥ हे शकट, त्वं देवानाम् असि। देवसंबन्ध्यसि [4]देवतार्थं हविर्धारणेन। अत एव सस्नितमं शुद्धतमं इदानीमसि। ष्णा शौचे। "आदृगम०"
१० (पा ३.२.१७१) इत्यादिना किन् लिड्वच्च। पप्रितमं पूर्णतमं व्रीह्यादिभिः। प्रा पूरणे।
स एव प्रत्ययः। जुष्टतमं प्रियतमं देवानाम्। "नित्यं मन्त्रे" (पा ६.१.२१०)
इत्याद्युदात्तत्वम्। वह्नितमं वोढृतमं हविषाम्। "वहिश्रिश्रुयुद्रुग्ला०" (उ ५००) इत्यादिना
[6]निप्रत्ययः। स च नित्[6]। देवहूतमं देवानामाह्वातृतममिवासि हविर्धारणेन। किंच

धूर्वामः जिघांसामः तम् अपि विनाशय॥ यद्वाधारभूताया धुरधुरः स्तवनं विधत्ते—
१५ "धूरसीत्याह। एष वै धुर्योऽग्निः। तं यदनुपस्पृश्यातीयात्। अध्वर्युं च यजमानं च प्रदहेत्।
उपस्पृश्यात्येति। अध्वर्योश्च यजमानस्य चाप्रदाहाय" (तैब्रा ३.२.४) इति। 'तं धूर्व' इति
वाक्ययोः पौनरुक्त्यभ्रमं निवारयति—"धूर्व तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वाम इत्याह।
द्वौ वाव पुरुषौ। यं चैव धूर्वति। यश्चैनं धूर्वति। तावुभौ शुचाऽर्पयति" (तैब्रा ३.२.४) इति।
शोकेन योजयतीत्यर्थः॥

२० त्वमिति॥ कल्पः—"अनोऽभिमन्त्रयते त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं
देवहूतममह्रुतमसि हविर्धानं दृंहस्व मा ह्वाः" (बौश्रौ १.४) इति॥ [15]भो. शकट, त्वं देवानां
संबन्धि भवसि। तत्र शुद्धितमं व्रीहिभिः पूर्णतमं प्रियतमं हविषो वाहकतमं देवानामाह्वातृतमं च
असि। किं च व्रीहिभारापादितभङ्गरहितं हविषो धारकम् असि। अतो दृढं भव, भग्नं मा भूः॥
मन्त्रस्य प्रथमभागे स्पष्टार्थत्वं दर्शयति—"त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं
२५ देवहूतममित्याह। यथायजुरेवैतत्" (तैब्रा ३.२.४) इति। मन्त्रपदैर्योऽर्थो यथा प्रतीयते स तथैव,

४. ति. त. मै१. पं. प- देवार्थम्। ५. ति. त प ब- प्रत्यय। ६-६ ति. पं ब- निप्रत्यय।

१५. भ. तं-हे।

**ह॒वि॒र्धान॒ं दृꣳह॑स्व॒ मा ह्वा॒र्मि॒त्रस्य॑ त्वा॒ चक्षु॑षा॒ प्रेक्षे॒ मा भेर्मा सं वि॑क्था॒**

ह॒वि॒र्धान॒मिति॑ ह॒विः॒-धान॑म् । दृꣳह॑स्व । मा । ह्वाः॒ । मि॒त्रस्य॑ ।
त्वा॒ । चक्षु॑षा । प्रेति॑ । ई॒क्षे॒ । मा । भेः । मा । समिति॑ । वि॒क्थाः॒ ।

संप्रसारणे, "हलः" (पा ६·४·२) इति दीर्घः। कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६·२·१३९)। [v]अहुतम् अकुटिलम् [v]असि धृतिमत्तया। 'हु ह्वरेश्छन्दसि' (पा ७·२·३१) इति हुभावः। [v]हविर्धानं, हविर्भूता व्रीह्यादयो निधीयन्तेऽस्मिन्निति हविर्धानम्। [7]कृदुत्तरपदप्रकृतिस्वरेण प्रत्ययात् पूर्वस्योदात्तत्वम्। यतस्त्वमेवंविधस्तस्मात् [v]दृंहस्व। [v]मा [v]ह्वाः इति व्याख्यातम्[7] (तैसं १·१·३)॥ ५

पुरोडाशीयान् प्रेक्षते—'मित्रस्य' इति॥ जगतां मित्रभूतस्य [8]जगद्बन्धोरादित्यस्य [v]चक्षुषा त्वां पुरोडाशीयसमूहं [v]प्रेक्षे। नात्मीयेन। ततश्च त्वं मनुष्येण दृष्टोऽहमिति [v]मा [v]भेः मा भैषीः। "बहुलं छन्दसि" (पा ७·३·९७) इतीडभावः। सिचि वृद्धिं बाधित्वा व्यत्ययेनान्तरङ्गो गुण एव क्रियते। "संज्ञापूर्वको विधिरनित्यः" (व्याडिपरिभाषावृत्ति ५३) इति वा वृद्ध्यभावः। [v]मा च [v]सं [v]विक्थाः मा च कम्पिष्ठाः। ओविजी भयचलनयोः। लुङि "लिङ्सिचावात्मनेपदेषु" (पा १·२·११) इति सिचः कित्त्वम्। "झलो झलि" (पा ८·२·२६) इति सिचो लोपः। अत्र 'मा च भेः मा च संविक्थाः' इति चार्थस्य गम्यमानत्वात् "चादिलोपे विभाषा" (पा ८·१·६३) इति प्रथमा तिङ्विभक्तिर्न निहन्यते। गम्यमानार्थस्याप्रयोग एव लोपः। नन्ववघातादिना पीडां कर्तुमारभते भवान्, १० १५

न त्वत्र [16]कश्चिदन्यो विवक्षाविशेषोऽस्ति[16]। द्वितीयभागे व्रीहिभारप्रयुक्तं शैथिल्यं वार्यत इत्याह—"अहुतमसि हविर्धानमित्याहानार्त्यै" (तैब्रा ३·२·४) इति। तृतीयभागे स्वयमध्यारोढुं शाकटस्य धैर्यं संपाद्यत इत्याह—"दृꣳहस्व मा ह्वारित्याह धृत्यै" (तैब्रा ३·२·४) इति। अत्र पूर्वाऽऽपस्तम्ब उत्तरस्य भागस्य मन्त्रान्तरत्वमभिप्रेत्याऽऽह—"अहुतमसि हविर्धानमित्यारोहति" (आपश्रौ १·१७·७) इति॥ २०

**मित्रस्येति**॥ कल्पः—"अथ पुरोडाशीयान् प्रेक्षते मित्रस्य त्वा चक्षुषा प्रेक्षे मा भेर्मा सं विक्था मा त्वा हिꣳसिषमिति" (बौश्रौ १·५) इति॥ हे व्रीहिसमूह, जगन्मित्रस्य सूर्यस्य [v]चक्षुषा त्वामवलोकयामि, न तु वैरिचक्षुषा। ततः [v]मा भैषीः, [v]मा अत्र कम्पिष्ठाः। अहं तु त्वां २५

७–७. ति. तं– कृदुत्तरपदप्रकृतिस्वरत्वम्, शेषं गतम्; व– कृदुत्तरपदप्रकृतिस्वरत्वं, शेषं सुगमम्।
८. व. मै. मै१– सर्वजगद्°।

१६–१६. आ. ना. ह्रा–कश्चिद्विवक्षाविशेषोऽस्ति; क–कश्चिदन्यो विवक्षाविशेषोऽस्ति।

मा त्वा ( १ ) हिꣳसिषमुरु वाताय देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याꣳ

मा । त्वा ( १ ) । हिꣳसिषम् । उरु । वाताय । देवस्य । त्वा ।
सवितु । प्रसव इति प्र-सवे । अश्विनो । बाहुभ्यामिति बाहु-भ्याम् ।

तत्किमुच्यते—'मा मे' इति । तत्राऽऽह—[v]मा [v]त्वा [v]हिंसिषम् । अवघातादिना न त्वामहं
५ नाशयामि । किन्तु [9]हविर्भूतं त्वा[9] देवतायै [10]सकल्प्य उच्छ्रितं स्थान प्रापयामि । यथोक्तम्—
"यज्ञार्थं निधन प्राप्ता [11]प्राप्नुवन्त्युच्छ्रिति पुन[11]" (द्र मनु ५·४०) इति ॥

तृणानि निरस्यति—'उरु' इति ॥ वातार्थं [12]वातप्रवृत्त्यर्थं [v]उरु महद्भव । एतेन
अवरुणत्व हविष कृत भवति । "यद्वै किंच वातो नाभिवाति" (तैब्रा ३·२·४)
इत्यादि ब्राह्मणम् ॥

१० निर्वपति—'देवस्य त्वा' इति ॥ [v]सवितु सर्वप्रेरकस्य [v]देवस्य [v]प्रसवे प्रेरणायां
तेनैव प्रेरितोऽहं त्वाम् [v]अग्नये अग्न्यर्थं [v]जुष्ट [v]प्रिय [v]निर्वपामि निष्कृष्य शूर्पे निक्षिपामि ।
"थाथघञ्क्ताजवित्रकाणाम्" (पा ६·२·१४४) इति सूत्रेण प्रसवशब्दोऽन्तोदात्तः ।
[v]अश्विनोः [v]बाहुभ्या, न त्वात्मीयाभ्यामिति स्तुति । "अश्विनौ हि देवानामध्वर्यू आस्ताम्"

न मारयामि ॥ अनुकूलोऽयम् इति बुद्ध्युत्पादनाय मित्रशब्दप्रयोग इत्याह—"मित्रस्य त्वा चक्षुषा
१५ प्रेक्ष इत्याह मित्रत्वाय" (तैब्रा ३·२·४) इति । भयकम्पयोरपि हिंसावान्तरभेदत्वमित्यभिप्रेत्याह—
"मा भेर्मा संविक्था मा त्वा हिꣳसिषमित्याहाहिꣳसायै (तैब्रा ३·२·४) इति ॥

उर्विति ॥ कल्प —"उरु वातायेति [17]परीणाहम् [18]अपव्ययाद" (आपश्री १·१७·८)
इति ॥ हे करिष्यमाणद्वार, त्वमनेन पिधानभूततृणाद्यपनयनेन वायुप्रवेशार्थं विस्तीर्णं भव । वायुप्रवेशे
प्रयोजनमाह—"यद्वै किंच वातो नाभिवाति । तत्सर्वं वरुणदेवत्यम् । उरु वातायेत्याह । अवारुण-
२० मेवैनत् करोति" (तैब्रा ३·२·४) इति । यद्द्रव्यमावृतत्वेन वायुर्न स्पृशति तस्य सर्वस्याऽऽवरको
वरुण स्वामी । तद स्वामित्वं वायुना निवर्त्यते ॥

देवस्येति ॥ कल्प —"अथ निर्वपति देवस्य त्वा सवितु प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो
हस्ताभ्यामग्नये जुष्ट निर्वपामीति" (बौश्री १·५) इति ॥ तत्प्रकारः सूत्रे दर्शित —"शूर्पे [19]पवित्रे
निधाय तस्मिन्नभिधोन्नद्धयण्या द्वयोरपि निर्वपति तया वा पवित्रवत्या" (आपश्री १·१७·९)
२५ इति ॥ व्याचष्टे—"देवस्य त्वा सवितु प्रसव इत्याह प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह । अश्विनौ

९–९. पं. हविर्भूतत्वात् । १०. मै१–समर्प्य । ११–११. ब. मै. मै१– प्राप्नुवन्त्युच्छ्रितं पदम् ।
१२. ति ब– वातप्रवृद्धयर्थम् ।

१७ आ पा. द्वा–परिणाहम् । १८ ब–अपाच्छाद, त–अवच्छेद्य, क–अपवाह्य । १९. क;
ब– पवित्रम् ।

**पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपाम्यग्नीषोमाभ्यामिदं देवानामिदमु नः सह**

पूष्णः। हस्ताभ्याम्। अग्नये। जुष्टम्। निरिति। वपामि। अग्नीषोमाभ्यामित्यग्नी-सोमाभ्याम्।
इदम्। देवानाम्। इदम्। उ। नः। सह।

(तैब्रा ३·२·४)। तथा [V]पूष्णः एव [V]हस्ताभ्यां पाणितलाभ्याम्। उदात्तनिवृत्तिस्वरेण षष्ठ्या उदात्तत्वम् (पा ६·१·१६१)॥

अग्नीषोमीयं निर्वपति—'अग्नीषोमाभ्याम्' इति॥ "देवताद्वन्द्वे च" (पा ६·२·१४१) इति [१२]-पूर्वोत्तरपदयोः युगपत् प्रकृतिस्वरत्वम्। अत्र च 'देवस्य त्वा' इत्यादि, 'जुष्टं निर्वपामि' इति चानुषज्यते-[१३]॥

निरुप्तानभिमृशति—'इदं देवानाम्' इति॥ [V]इदं निरुप्तं धान्यं [V]देवानां स्वं, तदुद्देशेन निरुप्तत्वात्। अन्यस्मात् व्यावृत्तमभूदित्यर्थः॥

निरुप्तशेषमभिमृशति—'इदमु नः सह' इति॥ [V]इदं निरुप्तशेषं [V]नः अस्माकं भवतु। उशब्दः पूर्वस्माद्व्यावृत्त्यै। तुशब्दो वा लुप्ततकारः। किमस्माकमेव? नेत्याह। [V]सह एव देवैः इदमस्माकं स्वम्। न निरुप्तवद्देवानामेव। न चास्माकमैहिकभोगायैव। तत्र शेषस्य निरुप्ते यदा आवापः, तदा यागोत्तरकालं शेषभक्षणेन साधारणत्वम्। यदा तु कोष्ठादौ, तदा तदुत्तरस्यामिष्ट्यामुभयं भविष्यतीति साधारण्यम्॥

हि देवानामध्वर्यू आस्ताम्। पूष्णो हस्ताभ्यामित्याह यत्यै। अग्नये जुष्टं निर्वपामीत्याह। अग्नय एवैनां जुष्टं निर्वपति" (तैब्रा ३·२·४) इति। पुनान् व्रीहीन् प्रियं हविर्यथा भवति तथा निर्वपति। आवृत्तिं विधत्ते—"त्रिर्यजुषा। त्रय इमे लोकाः। एषां लोकानामाप्त्यै। तूष्णीं चतुर्थम्। अपरिमितमेवावरुन्धे" (तैब्रा ३·२·४) इति॥

**अग्नीषोमाभ्यामिति**॥ आपस्तम्बः—"एवमुत्तरं यथादेवतमग्नीषोमाभ्यामिति पौर्णमास्याम्" (आपश्रौ १·१८·१) इति। तदिदं स्पष्टीचकार बौधायनः—"एतामेव प्रतिपदं कृत्वाऽग्नीषोमाभ्यामिति पौर्णमास्यामिन्द्राय वैमृधायेति चेन्द्राग्निभ्यामित्यमावास्यायामसंनयत इन्द्रायेति संनयतो महेन्द्रायेति वा यदि महेन्द्रयाजी भवति" (बौश्रौ १·५) इति॥ 'देवस्य त्वा' इत्येतमेव भागमुपक्रमं कृत्वा 'जुष्टं निर्वपामि' इत्युपसंहारं कृत्वा तयोर्मध्ये 'अग्नीषोमाभ्याम्' इति प्रयोक्तव्यम्। एतत्सर्वमभिप्रेत्याऽऽह—"स एवमेवाऽनुपूर्वं हवींषि निर्वपति" (तैब्रा ३·२·४) इति॥

**इदमिति**॥ कल्पः—"इदं देवानामिति निरुप्तानभिमृशति। इदमु नः सहेत्यवशिष्टान्" (आपश्रौ १·१८·३) इति॥ शूर्पे निरुप्तम् [V]इदं [V]देवानाम् एव स्वम् [V]इदं तु शकटस्थं देवैः

१२–१३. ति. तं, थ– उभयपदप्रकृतिस्वरत्वम्। देवस्याद्यनुषङ्गः।

स्फात्यै त्वा नारात्यै सुवरभि वि ख्येषं वैश्वानरं ज्योतिर्दृंहन्तां

स्फात्यै । त्वा । न । अरात्यै । सुवः । अभि ।

वीति । ख्येषम् । वैश्वानरम् । ज्योतिः । दृंहन्ताम् ।

निरुप्ते कोष्टादौ वा [१४]अत्रशिष्टम् आवपति—'स्फात्यै त्वा' इति ॥ स्फायी ओप्यायी
५ वृद्धौ । ण्यन्तात् क्तिन् । "तितुत्रतथसिसुसरकसेषु च" (पा ७·२·९) इति इट्प्रतिषेधः ।
णिलोपयलोपौ । उदात्तनिवृत्तिस्वरेण क्तिन उदात्तत्वम् । "उदात्तयणो हल्पूर्वात्"
(पा ६·१·१७४) इति विभक्तेरुदात्तत्वम् । [v]स्फात्यै वर्धनाय अस्मदीयं धान्यं वर्धयितुं
त्वाम् 'अत्रशिष्टमावपामि' इति शेषः । [v]नारात्यै, [१५]तत्र वर्धित-[१५] नादानाय, अपि तु दानायैव
[१६]दानार्थमेवेति । रातेः क्तिनि अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

१० आहवनीयमन्वीक्षते—'सुव' इति ॥ सुष्ठु श्रेयांसि गमयतीति [v]सुवः । [१७]अर्तेः
अन्तर्भावितण्यर्थात् "अन्येभ्योऽपि दृश्यन्ते [न्ते]" (पा ३·२·७५) इति विच्प्रत्ययः [१८] ।
"इयङुवङ्प्रकरणे तन्वादीनां छन्दसि बहुलम्" (पा ६·४·७७ वा १) इत्युवङादेशः ।
"न्यङ्स्वरौ स्वरितौ" (फि ७४) इति व· स्वरितत्वम् । एवविधं [v]वैश्वानरं विश्वेषां नराणां
स्वामित्वेन सबन्धिनं [v]ज्योतिः द्योतनशीलं आहवनीयम् [v]अभि [v]वि [v]ख्येषम् आभिमुख्येन
१५ पश्यामि । "अभिरभागे" (पा १·४·९१) इति लक्षणे कर्मप्रवचनीयत्वेन गतित्वाभावात्
"गतिर्गतौ" (पा ८·१·७०) इति निघाताभावः । "लिङ्याशिष्यङ्" (पा ३·१·८६),
"यासुट्°" (पा ३·४·१०३), "अतो येयः" (पा ७·२·८०) । "नरे संज्ञायाम्"

संहितानामस्माकं स्व पाठान्तराणामस्माभिः करिष्यमाणत्वात् मोक्ष्यमाणत्वाच्च ॥ भागयोरसांकर्यार्थं
मन्त्रद्वयमित्याह—"इद देवानामिदमु न सहेत्याह व्यावृत्त्यै" (तैब्रा ३·२·४) इति ॥
२० स्फात्यै त्वेति ॥ कल्प — "स्फात्यै त्वा नाराय्या इति निरुप्तानेवाऽभिमन्त्र्य (आपश्रौ
१·१८·३) इति ॥ हे हविः, अभिवृद्ध्यै त्वामभिमन्त्रयामि । तत्राभिवर्धनमदानाय न भवति किंतु
देवेभ्यो दातुमेव ॥ सोऽयं मन्त्रो हविषोऽस्कन्दनेन क्षयो मा भूदित्येवं रक्षार्थं इत्याह—"स्फात्यै
त्वा नाराय्या इत्याह गुप्त्यै" (तैब्रा ३·२·४) इति ॥
सुवरिति ॥ बौधायनः— "अथाहवनीयमीक्षते सुवरभि विख्येषं वैश्वानरं ज्योतिरिति"
२५ (बौश्रौ १·५) इति । आपस्तम्बस्तु मन्त्रभेदमभिप्रेत्याऽऽह—"सुवरभि विख्येषमिति सर्वं विहार-
मनुवीक्षते वैश्वानरं ज्योतिरित्याहवनीयम्" (आपश्रौ १·१८·४) इति ॥ स्वर्गसाधनत्वेन स्वर्गरूपं
सर्वं यागप्रदेशमभितो विशेषेण पश्यामि । आहवनीयाग्निं स्वर्गप्रकाशकज्योतिःस्वरूपं पश्यामि ॥

१४ मै१-अग्रेयम्, ब- शिष्टम् । १५-१५. ति त. ब- तद्वर्धितम् । १६. ति. तं. ब-
'दानार्थमेवेति' नास्ति । १७ मै मै१- 'अर्ते' नास्ति । १८. मै. ब- विच् ।

दुर्या॒ द्यावा॑पृथि॒व्योरु॒र्व॑न्तरि॑क्षम॒न्वि॑ह्यादि॑त्यास्त्वो॒पस्थे॑

दुर्याः॑ । द्यावा॑पृथि॒व्योरिति॒ द्यावा॑-पृ॒थि॒व्योः । उ॒रु । अ॒न्तरि॑क्षम्

अ॒न्विति॑ । इ॒हि॒ । अदि॑त्याः । त्वा॒ । उ॒पस्थ॒ इत्यु॒प-स्थे॒ ।

(पा ६.३.१२९) इति विश्वशब्दस्य दीर्घः । "तस्येदम्" (पा ४.३.१२०) इत्यण् अन्तोदात्तो वैश्वानरशब्दः। "तमसीव वा एषोऽन्तश्चरति" (तैब्रा ३.२.४) इति ब्राह्मणम् ।। ५

गृहाननुवीक्षते—'दृꣳहन्ताम्' इति ।। Vदुर्याः गृहाः। दुर्वी हिंसायाम्। [१९]क्विप्प्रत्यये, [२०]राल्लोपापृक्तलोपयोः (पा६.४.२१, ६.१.६७) कृतयोः, दूः हिंसा। तस्मात् "तत्र साधुः" (पा ४.४.९८) इति यत्। "न भकुर्छुराम्" (पा ८.२.७९) इति दीर्घाभावः। "यतोऽनावः" (पा६.१.२१३) [२१]इत्याद्युदात्तत्वम्। दुरि साधवो दुर्याः दुःखहेतवः। दिवि च पृथिव्यां चास्माकमुपभोगार्थं [२२]गृहाः Vदृꣳहन्तां वर्धन्ताम्। दृꣳहस्वेतिवत् पदस्वरूपमनुसरणीयम्। १० "द्यावापृथिवी हविषि गृहीत उदवेपेताम्" (तैब्रा ३.२.४) इति ब्राह्मणम्। "देवताद्वन्द्वे च" (पा ६.२.१४१) इति [२३]उभयपदप्रकृतिस्वरत्वम्; "उदात्तयणः॰" (पा ६.१.१७४) इति विभक्तेरुदात्तत्वम्; "दिवो द्यावा" (पा ६.३.२९) इति द्यावादेशः ।।

[२४]'उर्वन्तरिक्षमन्विहि' इति गमनमन्त्रो व्याख्यातः[२४] (तैसं १.१.२) ।।

शकटस्योपरिभागे परितः कटवेष्टिते तमस्विनि प्रदेशेऽवस्थितस्य बहिरवलोकनमप्यपेक्षितमित्याह— १५ "तमसीव वा एषोऽन्तश्चरति। यः परीणहि। सुवरभि वि ख्येषं वैश्वानरं ज्योतिरित्याह। सुवरेवाभि वि पश्यति। वैश्वानरं ज्योतिः" (तैब्रा ३.२.४) इति ।।

दृꣳहन्तामिति ।। बौधायनः— "अथ गृहानन्वीक्षते दृꣳहन्तां दुर्या द्यावापृथिव्योरिति" (बौश्रौ १.५)। आपस्तम्बः—"दृꣳहन्तां दुर्या द्यावापृथिव्योरिति [२०]प्रत्यवरोह" (आपश्रौ १.१८.४) इति ।। इहलोकपरलोकयोरस्मद्गृहा [२१]दृढीभवन्तु ।। अदार्ढ्यशङ्काया [२२]सद्भावात् २० दार्ढ्यमाशंसनीयमित्याह— "द्यावापृथिवी हविषि गृहीत उदवेपेताम्। दृꣳहन्तां दुर्या द्यावापृथिव्योरित्याह। गृहाणां द्यावापृथिव्योर्धृत्यै" (तैब्रा ३.२.४) इति। [२३]गृहीतहविष्कः किं वोद्दिश्य यक्ष्यसीत्यज्ञानाल्लोकयोर्भयेन कम्पः प्राप्तः। 'दृꣳहन्ताम्' इत्युक्ते सत्येतद्विनाश उद्वेगो न भवतीति निश्चयार्ढ्यं भवति ।।

१९. ति. क्विपि प्रत्यये। २०. ति. तं. व- वलिलोपापृक्तलोपयोः । २१. मै. मै१- इत्युदात्तत्वम्। २२. मै- 'गृहाः' नास्ति। २३. मै. मै१- द्यावापृथिवीद्वन्द्वे पूर्वोत्तरपदे युगपत्प्रकृतिस्वरत्वम्। २४-२४. ति. तं. व- उर्विति गतम्।

२०. आ. क. तं- प्रत्यवरुह्य। २१. तं. व-दृढा भवन्तु। २२. व-संभवात्। २३. व-गृहीते हविषि।

सादयाम्यग्ने हव्यꣳ रक्षस्व ॥ ४ ॥

[ मा त्वा पट्चत्वारिꣳशच्च ]

सादयामि । अग्ने । हव्यम् । रक्षस्व ॥ ४ ॥

[ मैस १.१.४-५, काम १.४, कपिसं १.४, काम १.६-११ ]

हवि. सादयति—'अदित्या.' इति। घते कर्मणि [25]क्तिन् । [26]दिति: खण्डनीया[26], अदिति: अखण्डनीया पृथिवी। "इयं वा अदिति" (तैब्रा ३.२.४) इति दर्शनात्। अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६.२.२)। तस्या: [v]उपस्थे उत्सङ्गे त्वा स्थापयामीति स्तुति:। उपस्थीयते अस्मिन् इत्युपस्थ। "घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्" (पा ३.३.५८ वा ४) इति [27]घञर्थे क। "स्वाङ्गानामकुर्वादीनाम्" (फि ५२) इति द्वितीयमक्षरमुदात्तम्॥

गार्हपत्यमभिमन्त्रयते—'अग्ने' इति॥ हे [v]अग्ने गार्हपत्य, इदं [v]हव्यं हवनाय निरुप्तं [v]रक्षस्व। व्यत्ययेनात्मनेपदम्। "छन्दसि च" (पा ५.१.६७) इति य.॥ ४ ॥

॥ इति प्रथमे चतुर्थोऽनुवाकः ॥

उर्विति ॥ कल्प — "उर्वन्तरिक्षमन्विहीति हरति" (आपश्रौ १.१८.४) इति ॥ व्याचष्टे— "उर्वन्तरिक्षमन्विहीत्याह गत्यै" (तैब्रा ३.२.४) इति ॥

अदित्या इति ॥ कल्प — "पश्चोत्तरेण गार्हपत्यमुपसादयत्यदित्यास्त्वोपस्थे सादयामीति" (बौश्रौ १.५) इति ॥ अदितिशब्दस्य भूमिरर्थ इत्याह—'अदित्यास्त्वोपस्थे सादयामीत्याह। इयं वा अदिति। अस्या एवैनदुपस्थे सादयति" (तैब्रा ३.२.४) इति ॥

अग्न इति ॥ गार्हपत्यमभिमन्त्रयते—"अग्ने हव्यꣳ रक्षस्वेति" (बौश्रौ १.५) इति॥ अत्र हविषो रक्षामात्र विवक्षितमित्याह—"अग्ने हव्यꣳ रक्षस्वेत्याह गुप्त्यै" (तैब्रा ३.२.४) इति ॥

अत्र विनियोगसंग्रह —

"कर्मणे हस्तयो शुद्धिर्वेषा शूर्पपरिग्रह ।
प्रत्युष्टमिति सतप्य धू स्पृशेत् [24]शकटे धुरम्[24] ॥ १ ॥
स्वमीषा संस्पृशेद्दृꣳह शकट त्वधिरोहति ।
उर्वन्तरिक्षमपश्चाद्य मित्रेति हविरीक्षते ॥ २ ॥
देवेति निर्वपेदग्नीत्यपि पूर्वानुषञ्जनात् ।
इदं निरस्तमञ्जौ स्पृशेत् स्फारयभिमन्त्रणम् ॥ ३ ॥

[25]. मै. मै१- क्तिनि । [26]-[26]. ति. व-'दिति खण्डनीया' नास्ति । [27]. ति-'घञर्थे' नास्ति ।

[24]-[24]. प- शकटे धुरम् ।

स्रुवविहारं वीक्ष्याथ वैश्वा पूर्वाग्निवीक्षणम् ।
[२८]हावरुह्योरु गच्छेदद्दि भूमौ हि सादयेत् ॥
अग्नेऽभिमन्त्रणं मन्त्रा उक्ता एकोनविंशतिः " ॥ ४ ॥

अथ मीमांसा— तत्र केचित् सामान्यविचारा उच्यन्ते । यद्यपि 'इषे त्वा' इत्यत्रैवैते वक्तव्यास्तथापि[२५] सर्वत्र संचारव्युत्पत्तये तत्तदनुवाकेषु वर्ण्यन्ते ।

द्वादशाध्यायस्य तृतीयपादे विचारितम्—

" अनध्याये मन्त्रपाठः क्रतौ नास्त्यस्ति वा न सः ।
तत्पाठस्य निषिद्धत्वादस्ति [२६]तत्रानिषेधतः " ॥ ( जैन्या १२·३·८ ) इति ॥

" पर्वणि नाध्येतव्यम् " इति निषिद्धत्वादनध्यायेषु क्रतुप्रयोगे मन्त्रपाठो नास्तीति चेत् । नैवम् । निषेधस्य [२७]ग्रहणार्थाध्ययनविषयत्वात्[२८], क्रतुप्रयोगे [२९]तदभावात् । अन्यथा प्रतिपदि एव इष्टेर्विहितत्वेन मन्त्रपाठाभावे [३०]तदध्ययनम् अनर्थकं स्यात् । तस्मात् प्रतिपदि " कर्मणे वाम् " ( तैसं १·१·४ ) इत्यादयो मन्त्राः पठितव्याः ॥

तत्रैवान्यद्विचारितम्—

" स्वरो मन्त्रे भाषिकः किं स्यात् प्रावचनिकोऽथ वा ।
ब्राह्मणोक्तेरादिमोऽन्त्यस्तदुक्तेर्लक्षणत्वतः " ॥ ( जैन्या १२·३·९ ) इति ॥

तत्तद्देशीयब्राह्मणस्वरो भाषिक इत्युच्यते । तदुक्तमाचार्यैः— " छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः । उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते " ॥ । सोऽयं भाषिकः [३१]स्वरः क्रतौ मन्त्रेषु प्रयोक्तव्यः । कुतः ? ब्राह्मणोक्तत्वात् । " [३२]मन्त्रस्य लिङ्गविनियोज्यतया"[३२] स्वरविशेषविधानायैव ब्राह्मणे मन्त्र उपादीयत इति प्राप्ते ब्रूमः— न हि ब्राह्मणे मन्त्रः पठ्यते । किंतु [३३]प्रवचनप्रसिद्धस्वराद्युपेतं [३४]मन्त्रकाण्डोत्पन्नं मन्त्रमुपलक्षयितुं तदुपलक्षणसमर्थानि मन्त्रोपक्रमस्थानि कानिचिदक्षराण्युच्चार्यन्ते । तद्यथा—" इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमा दत्ते " ( तैसं ५·१·२ ) इति । एतमेवाभिप्रायं द्योतयितुं [३५]क्वचिच्छब्दान्तरेण उपलक्ष्यते । तद्यथा— " सावित्राणि जुहोति प्रसूत्यै " ( तैसं ५·१·१ ) इति । यत्र लिङ्गसिद्धो विनियोगस्तत्र ब्राह्मणमनुवादकमस्तु । तस्मात् प्रावचनिकः स्वरः क्रतौ 'कर्मणे वाम्' इत्यादिमन्त्राणां प्रयोक्तव्यः ॥

तत्रैवान्यद्विचारितम्—

" ब्राह्मणोत्पन्नमन्त्रस्य त्रैस्वर्यं भाषिकोऽथ[३६] वा ।
आद्योऽन्यमन्त्रवन्मैवं स्वरान्तरविवर्जनात् " ॥ ( जैन्या १२·३·१० ) इति ॥

---

२५. व–' तथापि ' इत्यस्यानन्तरं ' न्यायस्य ' । २६. तं–मन्त्रानिषेधतः; ना–पाठानिषेधतः । २७. इ. उ. मा. पा. भां. हा–ग्रहणाध्ययन° । २८. तं–°विषयत्वेन । २९. तं–तथाभावात् । ३०. इ. उ. ना. भां. हा–अध्ययनम् । ३१. आ. क. तं. ना. पा. भां. हा–' स्वरः ' नास्ति । ३२–३२. तं–मन्त्रविनियोगस्य लिङ्गेऽनतिसिद्धतया । ३३. इ. उ. ना. पा. भां. हा–प्रवचनसिद्ध° । ३४. क. तं–मन्त्रकाण्डे समुत्पन्नम् । ३५. तं–कचित् कचिच्छन्दान्तरेण । ३६. व–भाषिको न ।

"वानस्पत्योऽसि" (तैब्रा १.२.१; ६.५.३) इत्ययं मन्त्रो ब्राह्मण एवोत्पन्नः तस्याप्यन्यमन्त्रवत् प्रायवचनिकस्वरः इति चेत्। नैवम्। मन्त्रकाण्डे तदपाठेन तत्स्वराभावात्। तस्मान्नाधिकस्वरः। यद्यपि "पशूनां संततिरसि" (तैब्रा ३.२.४) इति तैत्तिरीयब्राह्मणोत्पन्नो मन्त्रः त्रैस्वर्येणाऽऽम्नायते तथापि "सोमाय [37]राज्ञे क्रीताय[37] प्रोह्यमाणायानुब्रूहि" (ऐब्रा १.१३) इत्येवमादीनां बह्वृचब्राह्मणोत्पन्नमन्त्राणामेव भाषिकः स्वरः॥

[38]अन्यदपि तत्रैव चिन्तितम्—

"यदा कदाचिन्मन्त्रान्ते वा कर्मानियमाद्भवेत्।
आद्यो नैव कृत्स्नजन्यस्मृतेरङ्गत्वतोऽन्तिमः॥" (जैन्या १२.३.११) इति॥

"इषे त्वा" (तैसं १.१.१) इति मन्त्रः शाखाच्छेदे करणम्। "इमामगृभ्णन्" (तैसं ४.१.२) इति रशनाऽऽदाने। तत्र संशयः—किं मन्त्रादौ कर्म कर्तव्यम्, [39]उत अगृभ्णन् रशनाम् इत्येवंविधस्य कर्मप्रकाशकमन्त्रपदस्योच्चारणकाले[40] किं वा यस्य कस्यचित् पदस्योच्चारणकाले, आहोस्वित् मन्त्रान्ते, अथवा ततोऽपि [41]किंचित्कालं विलम्ब्येति[41]। तत्र नियामकाभावात् यथाकथंचिदिति प्राप्ते ब्रूमः—[42]कृत्स्नमन्त्रजन्यमर्थस्मरणं कर्मणोऽङ्गम्। तच्च मन्त्रसमाप्तेः पूर्वं नोदेति। विलम्बे तूत्पन्नं स्मरणं विनश्यतीति[42] परिशेषात् 'कर्मणे वाम्' इत्यादिमन्त्रान्ते कर्म संनिपतेत्॥

तृतीयाध्यायस्य प्रथमपादे [43]चिन्तितम्—

"हस्तौ ह्यवनेनिक्ते स्तृणात्युलपराजिकाम्।
दर्भास्तरण एवाङ्गं हस्तशुद्धिरुताखिले॥
तन्मात्राङ्गत्वमत्र स्यादानन्तर्यात्मकात् क्रमात्।
लिङ्गप्रकरणाभ्यां तु सर्वानुष्ठानशेषता॥" (जैन्या ३.१.१२–१३) इति॥

[44]दर्शपूर्णमासप्रकरणे श्रूयते—"हस्तावनेनिक्ते। उलपराजीं स्तृणाति" (द्र. आपश्रौ १.१५.४) इति। वेदिमास्तरितुं संपादितं स्तम्बमुलपराजी। [45]तत्र हस्तशुद्धिदर्भास्तरणवाक्ययोः [46]आनन्तर्येण [47]पाठात् क्रमप्रमाणेन हस्तशुद्धिरास्तरणमात्रस्याङ्गमिति चेत्। नैवम्। अवनेजनं हस्तसंस्कारः। संस्कृतौ

३७–३७ इ. उ. ना. पा. भो. हा–'राज्ञे क्रीताय' नास्ति। ३८. इ. उ. ना. पा. भो. हा–'अन्यदपि' नास्ति। ३९. आ. ना. हा–किंवा। ४०. आ. क. °मन्त्रस्योच्चारणकाले। ४१–४१. आ. इ. उ. ना भो हा–किंचिद्विलम्ब्येनेति। ४२–४२ इ. उ. ना पा. भो हा–कृत्स्नमन्त्रजन्योऽर्थप्रतिभिर्मन्त्रसमाप्ते पूर्वं नोदेति। विलम्बे तूत्पन्नापि विनश्यतीति, क–] कृत्स्नमन्त्रजन्यमर्थस्मरणं कर्मणोऽङ्गम्। तच्च मन्त्रसमाप्ते पूर्वं नोदेति। विलम्बे तूत्पन्नापि विनश्यतीति ततः। ४३. आ. ना. हा–विचारितम्। ४४. आ. इ. उ. ना. भो. हा–दर्शपूर्णमासयो। ४५ इ. उ. ना. भो. हा–'तत्र' नास्ति। ४६. प–आनन्तर्येण। ४७. सं–पठितत्वात्।

च हस्तौ सर्वानुष्ठानयोग्याविस्येतादृशं सामर्थ्यं लिङ्गम्। [४८]–प्रकरणं च दर्शपूर्णमासयोः स्फुटम्। अतः–[४८] प्रबलाभ्यां लिङ्गप्रकरणाभ्यां क्रमबाधात् सर्वशेषो हस्तशुद्धिः। [४९]–अयं न्यायो वाक्यभेऽपि द्रष्टव्यः–[४९]॥

चतुर्थाध्यायस्य तृतीयपादे चिन्तितम्—

" मृन्मये प्रणयेत् कामी [५०]नित्येऽप्येतदुतेतरत्।
आकाङ्क्षा संनिधिश्चास्ति तस्मान्नित्येऽपि मृन्मयम्॥
कामार्थत्वादयोग्यत्वं सामान्यविहितेन च।
आकाङ्क्षाया निवृत्तत्वान्नित्यार्थमितरद्भवेत् "॥ ( जैन्या ४·३·३–४ ) इति॥

" अपः प्रणयति " इति प्रकृत्य श्रूयते—" मृन्मयेन प्रतिष्ठाकामस्य प्रणयेत् " ( द्र. आपश्री १·१६·२ ) इति। [५१]तत्रापां प्रणयनस्य नित्येऽपि प्रयोगे मृन्मयपात्रमेव साधनम्। कुतः? नित्येऽपि पात्रस्याऽऽकाङ्क्षितत्वात्। न च लोकसिद्धं किंचित् पात्रमुपादीयत इति वाच्यम्। श्रौते कर्मण्यश्रुतात् श्रुतस्य संनिहितत्वादिति प्राप्ते ब्रूमः— कामार्थं मृन्मयमाम्नातम्। तच्च सति कामे योग्यम्। न हि पाक्षिकं कामं निमित्तीकृत्य प्रवृत्तं नित्यस्य योग्यं भवति। पात्राकाङ्क्षा तु सामान्यतो विहितेन निवर्तते। " अपः प्रणयति " इति हि पात्रमनुपन्यस्य विहितम्। तच्च [५२]–अन्यथाऽनुपपन्नं सत्–[५२] पात्रं[५३] सामान्येन [५४]आक्षिपति। तस्मात् [५५]नित्यप्रयोगे तत्काम्यं मृन्मयं नान्वेति। किंचितरत्पात्रं किंचिदुपादेयम्। "चमसेनापः प्रणयेत्" इति नित्ये पात्रं विधीयत इति चेत्। तर्हि क्त्वाचिन्ताऽस्तु॥

द्वितीयाध्यायस्य प्रथमपादे चिन्तितम्—

" देवस्य त्वेति [५६]वाक्यस्य भिन्नत्वमथवैकता।
[५७]ऐक्यप्रयोजकस्यात्र दुर्बोधत्वेन भिन्नता॥
विभागे सति साकाङ्क्षस्यैकार्थत्वं प्रयोजकम्।
तस्माद्वाक्यैक्यमेतेन यजुरन्तोऽवधार्यते "॥ ( जैन्या २·१·३०–३१ ) इति॥

दर्शपूर्णमासयोराम्नायते—" देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि " ( तसं १·१·४ ) इति। तत्र वाक्यानि [५८]भिन्नानि। कुतः? एकत्वनियामकस्य दुर्बोधत्वात्। अर्थैक्यं वाक्यैक्ये प्रयोजकमिति चेत्। न। एकस्मिन् पदेऽतिव्याप्तेः। पदसमूहस्य वाक्यत्वे समूहानामत्र बहूनां संभवात् [५९]वाक्यभेद इति प्राप्ते ब्रूमः— 'यद्विभागे साकाङ्क्षम-विभागे चैकार्थं तदेकं वाक्यम्' इति नियामकम्। 'विभागे साकाङ्क्षम्' इत्येवोक्तेऽतिव्याप्तिः स्यात्। " स्योनं ते सदनं करोमि। घृतस्य धारया सुशेवं कल्पयामि। तस्मिन्सीदामृते प्रतितिष्ठ।

---

४८–४८. क– दर्शपूर्णमासयोः स्फुटम् अतः; ङ. ड. तं. ना. पा. भां. ह– 'प्रकरणं च दर्शपूर्णमासयोः स्फुटम्। अतः' नास्ति। ४९–४९. ङ. ड. तं. ना. पा. भां. हा–'अयं न्यायो वाक्यभेऽपि द्रष्टव्यः' नास्ति। ५०–तं.द–नित्येऽप्येतदुदीर्यते। ५१. ड. ट. ना. पा. भां. हा–अत्रापाम्। ५२.–५२. आ. ना. पा. हा–अन्यथानुपपत्त्या। ५३. क– 'पात्रम्' इत्यस्यानन्तरं 'किंचित्'। ५४. क. तं– कल्पयति। ५५. त– नित्येऽपि प्रयोगे। ५६. आ. ङ. ट. क. ना.पा. भां.हा–मन्त्रस्य। ५७. ब–ऐक्यप्रयोजनस्यात्र। ५८. आ. क–' भिन्नानि ' इत्यस्यानन्तरं ' भवितुमर्हन्ति '। ५९. आ. ना– वाक्यं भावधार्यते।

व्रीहीणां मेध सुमनस्यमान " ( तैब्रा ३.७.५) इत्यत्र 'तस्मिन्त्सीद' इत्यादिपदसमूहस्य साकाङ्क्षत्वमस्ति अत. तद्व्यवच्छेत्तुमेकार्थमित्युक्तम्। न हि तत्रैकार्थत्वमस्ति। "[६०]पूर्वसमूहस्य सदनकरणमर्थ. । उत्तरसमूहस्य पुरोडाशप्रतिष्ठापनमर्थ.। स्योनं समीचीनं सुशेवं [६१]सुष्ठु सेवितु योग्यम्[६२]। व्रीहीणां मेध व्रीहिसारभूत पुरोडाशेत्यर्थ. । अत्र द्वयो समूहयोर्वाक्यद्वयत्वमुभयवादि- सिद्ध तदेकार्थमित्यनेन व्यावर्त्यते। 'एकार्थम्' इत्युक्तेऽप्यतिव्याप्ति । "भगो वा विभजतु पूषा वा विभजतु" (द्र म.यापाश्रौ १ ६ २०) इत्यनयोर्भिन्नमन्त्रत्वेन संमतयो पदसमूहयो तात्पर्य- विषयस्य द्रव्यविभागरूपस्यार्थस्यैकत्वात् तद्व्यवच्छेत्तु '[६३]विभागे साकाङ्क्षम्' इत्युक्तम्। प्रकृते तु 'अग्नये जुष्टम्' इत्यादिसमूहे पृथक्कृते, पूर्व. 'देवस्य त्वा' इति समूह. न निराकाङ्क्ष । एकीकृते तु कृत्स्नस्यैक एवार्थो निर्वाप । एतेनैकवाक्यत्वनिर्णयेनानियतपरिमाणस्य यजुषोऽवसानं [६४]निश्चेतु शक्यम् ॥

तत्रैवान्यद्विचारितम् —

"या ते अग्ने रजेत्यध्याहारो यद्वाऽनुषञ्जनम्।
तनूरित्यन्यदोषत्वादध्याहारोऽत्र लौकिक.॥
वेदाकाङ्क्षा पूरणीया वेदेनेत्यनुषञ्जनम्।
अन्यदोषोऽपि बुद्धिस्थो लौकिकस्तु न तादृश "॥ (जैन्या २.१.३४-३५) इति।

ज्योतिष्टोम उपसद्धोमेष्वेवमाम्नायते— "या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीत् स्वाहा या ते अग्ने रजाशया या ते अग्ने हराशया" (तैसं १ २.११) इति। अयमर्थ —अयसा रजतेन हिरण्येन च निर्मिता अग्नेस्तिस्रस्तनव.। तास्वाद्या येयमुक्ता साऽतिशयेन [६५]प्रवृद्धा गह्वरे तीक्ष्णद्रव्ये लोहेऽवस्थिता तया तन्वा क्षुत्पिपासे गोवधाद्युपपातक वीरहत्यादिक च [६६]महापातक हतवानस्मीति। तथा च ब्राह्मणम्— "उग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहेति। अशनयापिपासे ह वा उग्रं वच । एनश्च वैरहत्य च त्वेष वच " (तैब्रा १.५.९) इति। तत्र [६७]स्वाहान्त प्रथमो मन्त्र सम्पूर्णवाक्यत्वान्निराकाङ्क्ष.। द्वितीयतृतीय- मन्त्रयोराकाङ्क्षा पूरयितुमुचितो [६८]लौकिक वाक्यशेषोऽध्याहर्तव्य । न हि 'तनूर्वर्षिष्ठा' इत्यादिभागस्तयोरन्वेतु योग्य.। तस्य प्रथममन्त्रशेषत्वादिति प्राप्ते ब्रूम । वैदिकयोर्मन्त्रयोराकाङ्क्षा [६९]वैदिकेनैव वाक्यशेषेण[६९] पूरणीया। तत 'तनूर्वर्षिष्ठा' इत्यादिभाग [७०]इतरयो [७१]मन्त्रयो- रनुषज्यते। यद्यप्यसावन्यशेषस्तथाऽपि बुद्धिस्थ सन् कल्पनीयादध्याहारात् संनिकृष्यते। तस्मा-

६० त-पूर्वपदसमूहस्य। ६१ उ. ना पा. भा हा-'सुष्ठु' नास्ति। ६२ आ. क-'योग्यम्' इत्यस्यानन्तरम् 'इति प्रथमवाक्यस्यार्थ ' ६३. त-'विभागे' इत्यस्यानन्तर 'चेति'। ६४. त- निर्णेतुम्। ६५. त-प्रसिद्धा। ६६ इ उ. तं ना पा भां हा-'महापातक' नास्ति। ६७. इ. उ-स्वाहाशब्दान्त। ६८ इ उ तं भां पा. भां. हा-'लौकिक' नास्ति। ६९-६९. ग-वैदिक- मन्त्रेणैव। ७०. आ. ना-उत्तरयो.। ७१. भां-'मन्त्रयो' नास्ति।

दनुपङ्गः कर्तव्यः। एवं च सति प्रकृतेऽपि ' अग्नीषोमाभ्याम् ' इत्यस्मिन् मन्त्रे ' देवस्य त्वा' इत्यादि-
पूर्वभागो ' जुष्टम् ' इत्याद्युत्तरभागश्चानुपञ्जनीयः ॥

नवमाध्यायस्य प्रथमपादे चिन्तितम्—

" सवित्रर्श्याद्यूहनीयं न वाऽर्थः संगतस्ततः।
ऊहो नाविकृतस्येव निर्वापान्वयसंभवात् " ॥ ( जैन्या ९·१·१७ ) इति ॥ ५

" देवस्य त्वा सवितुः प्रसवे " ( तैसं १·१·४ ) इत्यस्मिन्नेव मन्त्रे सवित्रश्विपूषशब्दाः
कर्मसंगतं देवतारूपमर्थमभिधातुमर्हन्ति। तथा सति दृष्टप्रयोजनलाभात् अग्निश्च कर्मसमवेता
देवता। ततः कथंचिदपि व्युत्पत्त्या सवित्रादिशब्दैरग्निरभिधीयताम्। अथोच्यते—अग्निशब्दे-
नैवाग्नेरभिधानात् पुनस्तदभिधानं व्यर्थम्। किंच देवतान्तरेषु रूढास्ते शब्दा नाग्निमभिदध्युरिति।
एवं तर्हि तास्तिस्रो देवता अग्निना सह कर्मणि विकल्प्यन्ताम्। ततः प्राकृतस्य मन्त्रस्य विकृतिष्वतिदेशे १०
सति सवित्रादिशब्दस्थाने तत्तद्देवतावाचकशब्दः ऊहनीय इति प्राप्ते ब्रूमः— नात्रोहः कर्तव्यः।
कुतः ? अविकृतस्यैव मन्त्रस्य निर्वापशेषत्वेनान्वयसंभवात्। न हि प्रकृतावग्निना सह सवित्रादि-
देवतानां विकल्पो, वाक्यभेदादिदोषप्रसङ्गात्। तस्मान्निर्वापस्तावकानां सवित्रादिशब्दानां कर्मण्य-
समवेतार्थत्वान्नास्त्यूहः ॥

तत्रैवान्यच्चिन्तितम्— १५

" तत्राग्निशब्दो नोह्यः स्यादूह्यो वा स्तावकत्वतः।
सवित्रादिवदाद्यो नो समवेतार्थवर्णनात् " ॥ ( जैन्या ९·१·१८ ) इति ॥

तस्मिन् पूर्वोक्त एव मन्त्रे ' अग्नये जुष्टम् ' इत्ययमग्निशब्दो विकृतिषु नोहनीयः। कुतः ?
देवतान्तरवाचिसवित्रादिशब्दवदग्निशब्दस्याप्यत्र निर्वापस्तावकत्वेन पाठादिति प्राप्ते ब्रूमः—विषमो
दृष्टान्तः। कर्मण्यसमवेतार्थाः सवित्रादिशब्दाः। अग्निशब्दस्त्वाग्नेये कर्मणि समवेतमर्थं ब्रूते। २०
[७१]नन्वत्र जुष्टशब्दोऽसमवेतार्थः, निर्वापात् पूर्वं हविषो जुष्टत्वाभावात्। तद्योगादग्निशब्दोऽपि
तथा स्यादिति चेत्। नैवम्। जुष्टं यथा भवति तथा निर्वपामीति क्रियाविशेषणत्वेन भविष्यज्जोषण-
परत्वे सति समवेतार्थत्वात्[७२]। तस्मात् सूर्ययागे ' सूर्याय जुष्टं निर्वपामि ' इत्येवमूहनीयम्। एवं
च सति प्रकृतेऽपि ' इन्द्राय वैमृधाय ' इत्याद्यूहः कर्तव्यः ॥

द्वितीयाध्यायस्य प्रथमपादे चिन्तितम्— २५

" ऊहप्रवरनाम्नां किं मन्त्रताऽस्त्यथ वा न हि।
मन्त्रस्तदेकवाक्यत्वान्न तल्लक्षणवर्जनात् " ॥ ( जैन्या २·१·२६ ) इति ॥

" अग्नये जुष्टं निर्वपामि " ( तैसं १·१·४ ) इत्यस्य सौर्यचरौ ' सूर्याय जुष्टम् ' इत्येवं
पदान्तरप्रक्षेप ऊहः। " अदीक्षिष्टायं ब्राह्मणः " ( तैसं ६·१·४ ) इत्यस्य मन्त्रस्य शेषत्वेन प्रयोगकाले
देवदत्तोऽयमिति ब्राह्मणनामधेयविशेषं पठन्ति। तथा वरणमन्त्रेषु ' आङ्गिरसबार्हस्पत्यभारद्वाजगोत्रं ३०
ब्राह्मणं त्वा वृणीमहे ' इति प्रवरं पठन्ति। एतेषामूहप्रवरनामधेयानां मन्त्रत्वमस्ति। कुतः ? मन्त्रेण
सहैकवाक्यत्वात् इति चेत्। मैवम्। याज्ञिकप्रसिद्धिरूपस्य मन्त्रलक्षणस्योहादावभावात्। न ह्यध्येतारः

७१–७२. इ. ड. तं. ना. पा. मां. हा– ' नन्वत्र ......समवेतार्थत्वात् ' नास्ति।

ऊहादीन् [73]मन्त्रकाण्डेऽधीयते। तस्मादस्ति मन्त्रत्वम्। तथा सति 'इन्द्राय वैमृधाय जुष्टम्' इत्यादूहस्य मन्त्रत्वाभावात् स्वरवैकल्येऽपि "मन्त्रो हीन" (पाशिक्षा ५२) इत्यादिनोक्तदोषो न भविष्यति। [74]तदेव मन्त्रसंभाविता विचारा दर्शिता. ॥

अथ व्याकरणम्— 'कर्मणे वाम्' इत्यादिशब्देषु "नब्विषयस्य°" (फि २६) इत्यादिकं
५ पूर्वोक्तं यथायोगमनुसंधेयम्। वेषशब्दो वृषादि। प्रथमद्वितीययोर्धूर्वंशब्दयोर्वाक्यादित्वेन पदात्परत्व नास्तीति निघाताभाव। तृतीयस्य तु 'स धूर्व' इत्येव पदादुत्तरत्वादस्ति निघात। 'योऽस्मान् धूर्वति', 'यं धूर्वाम' इत्यनयोर्धूर्वशब्दयोर्यान्निघातो निषिद्ध.। "निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्‌कच्चिद्यत्रयुक्तम्" (पा ८·१·३०) एतैर्यदादिभि. [75]युक्त न निहन्यते। सस्निवह्निशब्दयो क्विन्‌प्रत्ययस्य नित्त्वादाद्युदात्त। जुष्टशब्दो गतः। वह्निशब्दो वृषादि.। [76]देवानाह्वयतीति देवहूरित्यत्र[76]
१० "तत्पुरुषे तुल्यार्थ°" (पा ६·२·२) इति द्वितीयान्तपूर्वपदप्रकृतिस्वर प्राप्त। स च कृदुत्तरपदप्रकृतिस्वरेण बाध्यते। अह्रुतमित्यव्ययपूर्वपदप्रकृतिस्वर। हविर्धानमित्यत्र ल्युडन्तत्वात् पूर्वस्य धाशब्दस्योदात्तत्वात् समासे कृदुत्तरपदप्रकृतिस्वर.। दृंहस्वेति गतम्। प्रेक्ष इत्यत्रोत्तरपदादेरनुदात्तत्वेऽपि "स्वरितो वाऽनुदात्ते°" (पा ८·२·६) इत्यस्य विकल्पितत्वात् "एकादेश°" (पा ८·२·५) इत्युदात्त। मा भेरित्यत्र चादिलोपसूत्रेण निघातस्य विकल्पितत्वात् धातुस्वर।
१५ वारशब्दो वृषादि। सवितुरित्यत्र प्रातिपदिकान्तोदात्तस्य विभक्त्या सहैकादेशे सत्युकार उदात्त.। प्रसव इत्यत्र सुधातोरप्प्रत्यये सति तस्य पित्त्वात् धातुस्वर एव शिष्यते। तत समासे कृदुत्तरपदप्रकृतिस्वरे प्राप्ते तदपवाद "थाथघञ्क्ताजबित्रकाणाम्" (पा ६·२·१४४) गते कारकादुपपदादस्योत्तरपदस्य थादीनामन्त [77]प्रत्ययान्तानामन्त उदात्त स्यात्। पूष्ण इत्यत्र "अनुदात्तस्य च यत्र°" (पा ६·१·१६१) इति विभक्तिरुदात्ता। अग्नीषोमाभ्यामित्यग्निशब्दस्यान्तोदात्तत्वात् 
२० सोमशब्दस्य चाऽऽद्युदात्तत्वात् समासे "देवताद्वन्द्वे च" (पा ६·२·१४१) इति युगपदुभयोः प्रकृतिस्वरत्वम्। उशब्दस्यानुदात्तत्व स्वरादिपाठे निपातितम्। सहशब्दस्य विवादत्वाभावेन फिट्‌स्वर.। स्फात्यै इत्यत्र स्फायधातोरुपर्यन्तादुत्तरस्य क्तिन्प्रत्ययस्य नित्त्वेन स्फाशब्दस्योदात्तत्वप्राप्तावप्युदात्तस्य निर्यो इत्यादुदात्तनिवृत्तिस्वरेण क्तिन्नुदात्त इति "उदात्तयण°" (पा ६·१·१७४) इति विभक्तिरुदात्ता। अरातिशब्दस्य नञ्तत्पुरुषत्वादव्ययपूर्वपदप्रकृतिस्वरत्वम्। सुवरिति वृषादि.।
२५ शर्मासि फिट्स्वर। वीत्युपसर्गस्वर। दृंहन्तामित्यत्र वाक्यादित्वान्निघाताभाव। द्यावापृथिव्यो. इत्यत्र "उदात्तयण°" (पा ६·१·१७४) इति विभक्तिरुदात्ता। उपस्थशब्द. वृषोदरादि. ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-
संहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाक ॥

---

७३ इ. उ, भां, हा- मन्त्रकाण्डेष्वधीयते। ७४. इ, ट, पा, भां, हा-तस्मादेव, ना- तस्मादेवम्। ७५, ठ-'युक्तम्' इत्यस्यानन्तरं 'पदम्'। ७६-७६. इ, उ, पा, भा-देवान् ह्वयतीति देवहूरित्यत्र। ७७, भा, ठ- प्रत्ययानामन्त।

देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य

देवः । वः । सविता । उदिति । पुनातु । अच्छिद्रेण । पवित्रेण । वसोः । सूर्यस्य ।

अप उत्पुनाति—'देवो वः' इति गायत्र्या ॥ "सावित्रियर्चा" (तैब्रा ३·२·५) इति ब्राह्मणम् । हे आपः, देवः सविता सर्वस्य प्रेरकः वः युष्मान् उत्पुनातु ऊर्ध्वं शोधयतु । अच्छिद्रेण पवित्रेण जगता पावनेन आदित्यात्मनाऽनेन; [1]छिन्नं छिद्रम् अतोऽन्यत् अच्छिद्रम्, अविच्छेदेन वर्तमानम् । अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा६.२.२)। "पुवः संज्ञायाम्" (पा ३·२·१८५) इति पुनातेरित्रप्रत्ययः । "असौ वा आदित्योऽच्छिद्रं पवित्रम्" (तैब्रा ३·२·५) इत्यादि ब्राह्मणम् । वसोः जगतां वासहेतोः सूर्यस्य मण्डलात्मनः

चतुर्थानुवाके व्रीहिनिर्वापः प्रोक्तः । निरुप्ते तुषस्य रक्षोभागत्वात् तदपनयनार्थोऽवघातः पञ्चमेऽनुवाकेऽभिधीयते । प्रोक्षितानामेव व्रीहीणामत्रावघातयोग्यत्वात् प्रोक्षणस्य चोत्पूतोदकसाध्यत्वादुत्पवनमन्त्रस्य चाङ्गभूतस्याग्निर्युत्पवने साकाङ्क्षत्वादुत्पवनमन्त्रव्याख्यानात् प्रागेवोत्पवनं विधत्ते—"इन्द्रो वृत्रमहन् । सोऽपः । अभ्यम्रियत । तासां यन्मेध्यं यज्ञियꣳ सदेवमासीत् । तदपोदक्रामत् । ते दर्भा अभवन् । यद्दर्भैरप उत्पुनाति । या एव मेध्या यज्ञियाः सदेवा आपः । ताभिरेवैना उत्पुनाति" (तैब्रा ३·२·५) इति । इन्द्रेण हतस्य वृत्रस्योदकाभिमुख्येन मृतत्वादुदकस्य सारं निर्गतम् । तच्च सारं द्विविधम्—दैवं मानुषं च । तत्र मलप्रक्षालनोपयुक्तं मानुषम् । दैवं च द्विविधम्—स्नानादिना पापशोधकं, प्रोक्षणादिना द्रव्यशोधकं च । तदुभयमत्र मेध्ययज्ञियशब्दाभ्यां विवक्षितम् । तच्च निर्गत्य भूमौ दर्भरूपेणाऽऽविर्बभूव । तस्माद्दर्भैरुत्पुनीयात् । दर्भसंख्यां विधत्ते—"द्वाभ्यामुत्पुनाति । द्विपाद्यजमानः प्रतिष्ठित्यै" (तैब्रा ३·२·५) इति । अनेन विधीयमानद्वित्वेन विरोधात् पूर्वस्मिन् वाक्ये दर्भैरिति बहुवचनं जात्यभिप्रायं व्याख्येयम् । यजमानो ह्येकेन पादेनोत्तिष्ठन् प्रतिष्ठां न लभते, द्वाभ्यां [1-]तु लभते[-1] । ततो दर्भद्वित्वमपि प्रतिष्ठित्यै भवति ॥

देव इति ॥ कल्पः—"अथैतस्यामेव स्रुचि तिरःपवित्रमप आनीयोदीचीनाग्राभ्यां पवित्राभ्यां त्रिरुत्पुनाति देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति पच्छः" (बौश्रौ १·६) इति । अत्र स्रुक्शब्देन निर्वापहेतुरग्निहोत्रहवणी विवक्षिता । "स्फ्याग्निहोत्रहवण्यामप आनीय" (आपश्रौ १·१९·१) इत्यन्यत्राभिधानात् ॥ हे आपः, अध्वर्युहृदयेऽवस्थितः प्रेरकोऽन्तर्यामी युष्मानूर्ध्वं पुनातु । केन साधनेन ? आदित्यरूपत्वभावनाबलात् अच्छिद्रेण दर्भपवित्रेण । पुनरपि केन ? जगन्निवासहेतोः सूर्यस्य रश्मित्वेन भावितैर्दर्भावयवैः ॥ यथोक्तं

१. ति. व. भिन्नम् ।

१-१. इ. उ. पा. हा-तु तल्लभते; मां-तल्लभते ।

रश्मिभिरापो देवीरग्रेपुवो अग्रेगुवोऽग्र इमं यज्ञं नयताग्रे यज्ञपतिं धत्त

रश्मिभिरिति रश्मि-भिः । आपः । देवीः । अग्रेपुव इत्यग्रे-पुवः । अग्रेगुव इत्यग्रे-गुवः ।

अग्रे । इमम् । यज्ञम् । नयत । अग्रे । यज्ञपतिमिति यज्ञ-पतिम् । धत्त ।

---

Vरश्मिभि जगता शुद्धिहेतुभिः उत्पुनातु । वसेः करणे उ. ( उ १० ), स च नित् । [२]एव

५ " यद्दर्भैरप उत्पुनाति " ( तैब्रा ३·२·५ ), " द्वाभ्यामुत्पुनाति " ( तैब्रा ३·२·५ ) इति प्रास्तयोर्दर्भयोरादित्यात्मना मण्डलरश्मितया च स्तुति. ॥

उन्महयन्नुपोत्तिष्ठति—' आपः ' इति ॥ हे Vआपः, आमन्त्रिताद्युदात्तत्वम् । उत्तरेषामामन्त्रितानामाष्टमिक सर्वानुदात्तत्वम् ( पा ८·१·१९ ), " विभाषित विशेषवचने बहुवचनम् " ( पा ८·१·७४ ) इति पूर्वस्य विद्यमानत्वात् । हे V[३]देवीः देव्यः देवनगुण-

१० युक्ता । " वा छन्दसि " (पा ६·१·१०६) इति पूर्वसवर्णदीर्घत्वम् । हे Vअग्रेपुव. भस्मादेः

---

मन्त्रार्थं विशदयति—" देवो व सवितोत्पुनात्वित्याह । सवितृप्रसूत एवैना उत्पुनाति । अच्छिद्रेण पवित्रेणेत्याह । असौ वा आदित्योऽच्छिद्रं पवित्रम् । तेनैवैना उत्पुनाति । वसोः सूर्यस्य रश्मिभिरित्याह । प्राणा वा आप । प्राणा वसव । प्राणा रश्मय. । प्राणैरेव प्राणान्त्सम्पृणक्ति ' (तैब्रा ३ २ ५ ) इति । उदकेनाऽऽप्यायिताः प्राणा इत्यपा प्राणत्वम् । आदित्याद्यधिष्ठातृदेवतानु-

१५ ग्रहैश्चक्षुरादीना प्राणाना देहे वासितत्वाद्वसुशब्दाभिधेयाना देवतानुग्रहाणां प्राणत्वम् । आदित्य-रश्मीना प्राणव्यवहारोपकारित्वात् प्राणत्वम् । ततः सूर्यरूपप्राणत्वेन भावितैर्दर्भप्राणैः सहोदकरूपाः प्राणा उत्पवनकाले सम्पृक्ता भवन्ति ॥ मन्त्रस्य ' सविता ' इत्यनेन लिङ्गेन पासावित्र्य, पच्च पादबद्धत्वाहमूपत्व तदुभयमत्र सप्रयोजनमित्याह—" सावित्रियर्चा । सवितृप्रसूत मे कर्मासदिति । सवितृप्रसूतमेवास्य कर्म भवति । पच्छो गायत्रिया त्रिष्पमृद्धत्वाय " ( तैब्रा ३ २ ५ ) इति । ममेदं

२० कर्म निखिलं सवित्रा प्रेरितमस्त्वित्यभिप्रेत्य सावित्रमन्त्रेणोत्पुनीयात् । तेन [२]तत्तथैव सपद्यते । ऋग्रूपत्वेन तत्रस्थ छन्दो ज्ञातु शक्यते । छन्दसश्चात्र [३]लक्षणतो गायत्रीत्वाद्गायत्र्याश्च त्रिपात्वात् प्रतिपादमुत्पवने सति त्रिरावृत्त्या शुध्यति । अतिशयेन कर्मफल समृद्ध भवति । आवृत्तिप्रकार सूत्रे दर्शित.—" देवो व. सवितोत्पुनात्विति प्रथमम्, अच्छिद्रेण पवित्रेणेति द्वितीय, वसो सूर्यस्य रश्मिभिरिति तृतीयम् " ( आपश्रौ १·११·८ ) इति ॥

२५ आप इति ॥ बौधायन.—" अथैना उन्महयन्नुपोत्तिष्ठत्यापो देवीरग्रेपुवो अग्रेगुवोऽग्र इमं यज्ञं नयताग्रे यज्ञपतिं धत्त युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये इत्यद्भिरेवाप'

---

२ ति तै म-' एवम् ' नास्ति । ३. ति-' देवीः ' नास्ति ।

---

२. इ. उ मा. हा- तथैव । ३. इ, उ. पा. मा हा-लक्षण येच्छत ।

युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये

युष्मान् । इन्द्रः । अवृणीत । वृत्रतूर्य इति वृत्र-तूर्ये ।

यूयम् । इन्द्रम् । अवृणीध्वम् । वृत्रतूर्य इति वृत्र-तूर्ये ।

---

शुद्धिकारणात् प्रथममेव वस्तूनां शोधिकाः। क्विपि " तत्पुरुषे कृति बहुलम् "(पा ६.३.१४) इत्यलुक् । हे [V]अग्रेगुवः प्रथमं स्नानकाल एव यागसाधनत्वं गच्छन्त्यः । " ऊङ् च गमादीनामिति वक्तव्यम् " (पा ६.४.४० वा २) इति क्वौ अनुनासिकलोपः ऊकारश्च। ईदृश्यो यूयम् [V]इमं प्रस्तुतं [V]यज्ञम् [V]अग्रे [V]नयत यज्ञानामग्रं प्रापयत । [V]यज्ञपतिं यजमानं च [V]अग्रे [V]धत्त यजमानानामग्रगण्यं कुरुत । " पत्यावैश्वर्ये " ( पा ६.२.१८ ) इति यज्ञपतौ पूर्वपदप्रकृतिस्वरत्वम् । किं हि नाम भवतीनामशक्यमित्याह—' युष्मान् ' इति । [V]युष्मान् खलु [V]इन्द्रः [V]वृत्रतूर्ये [4]वृत्रवधार्थे संग्रामे [V]अवृणीत [5]वृतवान् । [V]यूयम् अपि [V]इन्द्रं [V]वृत्रतूर्ये [V]अवृणीध्वं १०

---

प्रोक्षति प्रोक्षितास्थ स्थेति त्रिः " ( बौश्रौ १.६ ) इति। आपस्तम्बस्तु मन्त्रैक्यमभिप्रेत्याह— " आपो देवीरग्रेपुव इत्यभिमन्त्र्य " ( आपश्रौ १.११.९ ) इति॥ हे जलदेव्यः, यूयम् [V]इमं [V]यज्ञम् अविघ्नेन परिसमाप्तिं [V]नयत। यजमानं च [4]स्वर्गं [5]प्रापयत। कीदृश्य आपः? [6]शुद्धिहेतुभूतानां दर्भादीनामपि प्रोक्षणेन शोधकत्वादग्रे पुनन्तीति [V]अग्रेपुवः तेन यज्ञं समापयितुं समर्थाः। पुनरपि कीदृश्यः? प्रवाहरूपेण शीघ्रगामित्वात् गन्तृभ्यो मनुष्यादिभ्योऽप्यग्रे गच्छन्तीति [V]अग्रेगुवः तेन यजमानं [7]स्वर्गं नेतुं समर्थाः। किं च वृत्रासुरवधे युष्माकमिन्द्रस्य च परस्परमपेक्षा जाता। तत इन्द्रसमाना यूयं किं नाम कर्तुमसमर्थाः? अस्य मन्त्रस्य पूर्वभागे तत्रत्यशब्दस्वरूपमेवापां महिमानमभिधास्यत्या स्पष्टयसि, [8]ततोऽत्र किंचिद्व्याख्येयं [9]नास्तीत्याह— " आपो देवीरग्रे पुवो अग्रे गुव इत्याह। रूपमेवाऽऽसामेतन्महिमानं व्याचष्टे " ( तैब्रा ३.२.५ ) इति। मध्यमभागे प्रार्थितं कार्यमापो नोपेक्षन्त इत्याह—" अग्र इमं यज्ञं नयताग्रे यज्ञपतिमित्याह। अग्र एव यज्ञं नयन्ति। अग्रे २० यज्ञपतिम् " ( तैब्रा ३.२.५ ) इति। ब्राह्मणान्तरप्रसिद्धं परस्परसापेक्षत्वमेव तृतीयभागे दर्शयतीत्याह— " युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्य इत्याह। वृत्रं ह हनिष्यन्निन्द्र आपो वव्रे। आपो हेन्द्रं वव्रिरे। संज्ञामेवाऽऽसामेतत्सामानं व्याचष्टे " ( तैब्रा ३.२.५ ) इति। ' आपो वव्रे ' इति छान्दसो दीर्घः। वृत्राद्भीतायेन्द्राय प्रजापतिर्वज्रमद्भिः प्रक्षाल्य ददौ [10]इत्यर्सौ

---

४. मै– वृत्रवधार्थे॰ । ५. मै– वृणीतवान् ।

---

४. इ. क. तं–स्वर्गं । ५. क. तं–स्थापयत । ६. आ. क. हा–शुद्धिहेतूनाम् । ७. इ. उ. पा. भी. हा–' स्वर्गम् ' नास्ति । ८. तं–ततो नात्र । ९. तं–अस्तीत्याह । १०. हा–इत्यस्ति ।

**प्रोक्षिताः स्थाग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्यां९**

प्रोक्षिता इति प्र–उक्षिताः । स्थ । अग्नये । वः । जुष्टम् । प्रेति । उक्षामि ।

अग्नीषोमाभ्यामित्यग्नी–सोमाभ्याम् ।

घृतस्य. । युष्माकमिन्द्रो यूय चेन्द्रस्य सहाया इति स्तुतिः । वृत्र. तूर्यते हिंस्यतेऽस्मिन्निति ५ वृत्रतूर्यं युद्धम् । ६तुर्वी त्वरणहिंसयोः-६। "हन्त्यर्थाश्च"* इति चुरादिपाठात् स्वार्थिकण्यन्तात् "अचो यत्" ( पा ३·१·९७ ) इति यत् । "यतोऽनावः" ( पा ६ १·२१३ ) इत्याद्युदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्व (पा ६ २ १३९) तेन । "वृत्र९ ह हनिष्यन्निन्द्र आपो वव्रे" ( तैब्रा ३ २·५ ) इत्यादि ब्राह्मणम् ॥

प्रोक्षणीः प्रोक्षति—'प्रोक्षिताः स्थ' इति ॥ स्वत एव शुद्धा यूयम् । 'शुद्धाः स्थ' १० इति मन्त्रोच्चारणमेव आसा प्रोक्षणम् । "अद्भिर्ह्येव हवी९षि प्रोक्षति ब्रह्मणाऽपः" ( तैस २·६·५ ) इत्यादि ब्राह्मणम् । "प्रोक्षिता. स्थ इत्याह । तेनापः प्रोक्षिताः" ( तैब्रा ३·२·५) इति च । "गतिरनन्तर." (पा ६·२·४९) इति पूर्वपदप्रकृतिस्वरत्वम् ॥

पुरोडाशीयान् प्रोक्षति—'अग्नये' इति अग्न्यर्थं युष्मान् ४प्रोक्षामि अद्भिः

इन्द्रस्योदकापेक्षत्वप्रसिद्धि. 'वृत्र९ ह' इति शब्देन सूच्यते । अत एव श्रूयते—"तस्मादिन्द्रोऽ-
१५ बिभेत् स प्रजापतिमुपाधावच्छत्रुर्मेऽजनीति तस्मै वज्र९ सिक्त्वा प्रायच्छदेतेन जहीति तेनाभ्यायत" ( तैस २·५ २ ) इति । प्रक्षालितस्याऽपि वज्रस्येन्द्रेण प्रयोज्यत्वादपामिन्द्रापेक्षेत्येषा प्रसिद्धिः 'आपो ह' इत्यत्र हशब्देन सूच्यते । आपो मम सहकारिण्य इत्येतदिन्द्रस्य सम्यग्ज्ञानम् । इन्द्रोऽस्माक सहकारीत्येतदुक्तदेवताना सम्यग्ज्ञानम् । तामेतामपा सज्ञामिन्द्रेण समाना मन्त्रा ११प्रत्यापयति । दीर्घश्छान्दस ॥ मन्त्रपाठ एवापां प्रोक्षणमित्याह—"प्रोक्षिता स्थ
२० इत्याह । तेनाऽऽप. प्रोक्षिता." ( तैब्रा ३ २ ५ ) इति । "अद्भिर्ह्येव हवी९षि प्रोक्षति । ब्रह्मणाऽप इध्माबर्हिः प्रोक्षति" ( तैस २ ६ ५ ) इति हि१२ श्रुत्यन्तरम् । ब्रह्मणाऽभिमन्त्रणमन्त्रेणेत्यर्थः ॥

अग्नय इति ॥ "अग्नये वो जुष्ट प्रोक्षाम्यग्नीषोमाभ्याम्" इत्यस्य शेष पूरयित्वा विनियोगः कल्पे दर्शित —"अथ पुरोडाशीयान् प्रोक्षति देवस्य त्वा सवितु प्रसवेऽश्विनोर्बाहुभ्या पूष्णो हस्ताभ्यामग्नये वो जुष्ट प्रोक्षाम्यग्नीषोमाभ्याममुष्मा अमुष्मा इति यथादेवतं त्रिः" ( बौश्रौ १·६ ) इति ॥

६–६. ति –तुरी गतित्वरणहिंसनयो । *[ चुरादौ 'घट सघाते' इति धातोरनन्तरं गणसूत्रम् ]।

११. इ, उ–प्ख्यापयति । १२. आ, क, सं–'हि' नास्ति ।

शुन्धध्वं दैव्याय कर्मणे देवयज्याया अवधूत॑ रक्षोऽवधूता अरातयोऽदित्यास्त्वगसि प्रति त्वा ( १ ) पृथिवी

शुन्धध्वम् । दैव्याय । कर्मणे । देवयज्याया इति देव–यज्यायै । अवधूतमित्यव–धूतम् । रक्षः । अवधूता इत्यव–धूताः। अरातयः। अदित्याः । त्वक् । असि । प्रतीति । त्वा (१) । पृथिवी ।

---

सिञ्चामि । [V]जुष्टं प्रियं यथा भवति तथा सिञ्चामि । "नित्यं मन्त्रे" (पा ६·१·२१०) इति जुष्टशब्द आद्युदात्तः । 'अग्नीषोमाभ्याम्' इत्यत्र 'वो जुष्टं प्रोक्षामि' इत्यनुषज्यते । "देवताद्वन्द्वे च" (पा ६·२·१४१) इति युगपत्स्वरः ॥ ५

पात्राणि प्रोक्षति—'शुन्धध्वम्' इति ॥ गतम् (तैसं १·१·३) ॥

कृष्णाजिनमवधूनोति—'अवधूतम्' इति यजुरादिकयैकपदया गायत्र्या ॥ [V]अवधूतं विनाशितम्। [७]-शिष्टं व्याख्यातं प्रत्युष्टादिमन्त्रेण (तैसं १·१·२)। "गतिरनन्तरः" (पा ६·२·४९) इति पूर्वपदप्रकृतिस्वरत्वम्-[७] ॥ १०

कृष्णाजिनमवस्तृणाति—'अदित्याः' इति ॥ अदितिः अखण्डनीया । कर्मणि क्तिन् । अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६.२.२)। अखण्डितायाः पृथिव्याः [V]त्वक् इव प्रियतमम्

---

इदमेव तात्पर्यं दर्शयति—"अग्नये वो जुष्टं प्रोक्षाम्यग्नीषोमाभ्यामित्याह । यथादेवतमेवैनान् प्रोक्षति" (तैब्रा ३·२·५) इति ॥ आवृत्तिं विधत्ते– "त्रिः प्रोक्षति । त्र्यावृद्धि यज्ञः ॥ अथो रक्षसामपहत्यै" (तैब्रा ३·२·५) इति । तिस्र आवृत्तयो यस्य यज्ञस्यासौ त्र्यावृत् । "त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" (तैसं २·५·७) इत्यादिश्रौतप्रसिद्धिं हिशब्दो द्योतयति । रक्षोघ्नत्वमपासकृदुक्तम् ॥ १५

शुन्धध्वमिति ॥ कल्पः—"उत्तानानि पात्राणि कृत्वा प्रोक्षति शुन्धध्वं दैव्याय कर्मणे देवयज्याया इति त्रिः" (बौश्रौ १·६) इति ॥ पूर्ववद्व्याचष्टे–"शुन्धध्वं दैव्याय कर्मणे देवयज्याया इत्याह । देवयज्याया एवैनानि शुन्धति । त्रिः प्रोक्षति । त्र्यावृद्धि यज्ञः । अथो मेध्यत्वाय" (तैब्रा ३·२·५) इति । मेध्यत्वं यज्ञार्हत्वम् ॥ २०

अवधूतमिति ॥ कल्पः– "कृष्णाजिनमादायाऽवधूत॑ रक्षोऽवधूता अरातय इत्युत्करे त्रिरवधूनोति" (आपश्रौ १·१९·३) इति ॥ [V]अवधूतं विनाशितम् ॥ प्रत्युष्टमितिवद्व्याचष्टे–"अवधूत॑ रक्षोऽवधूता अरातय इत्याह । रक्षसामपहत्यै" (तैब्रा ३·२·५) इति ॥

अदित्या इति ॥ कल्पः –"अथैनत्पुरस्तात् प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति अदित्यास्त्वगसि प्रति त्वा पृथिवी वेत्त्विति" (बौश्रौ १·६) इति ॥ हे कृष्णाजिन, त्वं [१३]भूदेवतायाः त्वक्स्वरूपम् [V]असि । ततो भूमिस्त्वां प्रतिगृह्य मदीयेयं त्वगित्येवं जानातु ॥ मन्त्रस्योक्तार्थपरत्वं दर्शयति– "अदित्यास्त्वगसीत्याह । इयं वा अदितिः । अस्या एवैनत्त्वचं करोति । प्रति त्वा पृथिवी वेत्त्वि- २५

---

७–७. तं. च– गतिरन्तरः । अन्यद्गतम् ; ति– गतिरन्तरः इति । अन्यद्गतम् ।

---

१३. क. तं. च–भूमिदेवतायाः ।

वेत्त्वधिषवणमसि वानस्पत्यं प्रति त्वाऽदित्यास्त्वग्वेत्त्वग्नेस्तनूरसि

वेत्तु । अधिषवणमित्यधि-सवनम् । असि । वानस्पत्यम् । प्रतीति ।

त्वा । अदित्याः । त्वक् । वेत्तु । अग्नेः । तनूः । असि ।

[v]असि । अतस्त्वामास्तीर्णा [v]पृथिवी [v]प्रति [v]वेत्तु । आत्मन उपरि तत्रावस्थानमनुजानातु । न

५ न्यक्कारयतु । सा तु माऽवमंस्त । पृथिवीशब्दो ङीषन्तोऽन्तोदात्त ॥

उलूखलमध्यूहति–' अधिषवणम् ' इति ॥ अभिषूयते अभिपीड्यते अवहन्यतेऽस्मिन्निति सुनोतेरधिकरणे ल्युट् (पा ३ ३ ११७) । " उपसर्गात् सुनोति" (पा ८.३.६५) इत्यादिना षत्वम् । कृदुत्तरपदप्रकृतिस्वरेण (पा ६.२.१३९) " लिति " (पा ६.१.१९३ ) प्रत्ययात् पूर्वस्योदात्तत्वम् । वनस्पतेर्विकार इति "पत्युत्तरपदलक्षणो ण्य (पा ४.१.८५) । ईदृशं

१० महाभागं त्वम् [v]असि । तस्मात् [v]अदित्या' त्वग्भूतं कृष्णाजिनं त्वा [v]प्रति [v]वेत्तु अनुजानातु । आत्मोपरि तवावस्थानं क्षमताम् ॥

पुरोडाशीयानावपति—' अग्ने' ' इति ॥ [v]अग्नेः [v]तनूः शरीरमिव [v]असि, उद्दीपक-

स्याह प्रतिष्ठित्यै " ( तैब्रा ३ २ ५ ) इति । यदि स्वकीयत्वरूपेण न स्वीकुर्यात्तदानीमपसारयेत् । ततो न प्रतितिष्ठेत् । अत प्रतिष्ठार्थोऽयं स्वीकार ॥ देशादिगुणविशिष्टमास्तरणं विधत्ते-

१५ " पुरस्तात् प्रतीचीनग्रीवमुत्तरलोमोपस्तृणाति मेध्यत्वाय । तस्मात् पुरस्तात् प्रत्यञ्च पशवो मेधमुपतिष्ठन्ते । तस्मात् प्रजा मृगग्राहुकाः " ( तैब्रा ३.२.५ ) इति । यस्मादाहवनीयस्य पूर्वभागे कृष्णाजिनं पश्चिमशिरस्कमूर्ध्वलोमकमास्तृत तस्मात् तादृशा एव सन्तो यूपे बद्धाः पशवो यज्ञं सेवन्ते । यस्मादयं पशुषि मेध्यो यज्ञस्तस्मादेव [१४]प्रत्यवायरहिता सत्य. प्रजा यज्ञार्थं मृगग्रहणशीला भवन्ति ॥ कृष्णाजिनस्याऽऽदरे हेतुं प्रुवस्तद्विशिष्टमवघातं विधत्ते- " यज्ञो देवेभ्यो निलायत ।

२० कृष्णो रूपं कृत्वा । यत्कृष्णाजिने हविरध्यवहन्ति । यज्ञादेव तद्यज्ञं प्रयुङ्क्ते । हविषोऽस्कन्दाय" ( तैब्रा ३.२.५ ) इति । यज्ञपुरुष केनापि निमित्तेन देवेभ्यो [१५]विमुखोऽगात् तदा [१६]तिरोधाय स्वयं कृष्णमृगो भूत्वा तदीयरूपमात्मन सपूर्णं कृतवान् । तत कृष्णाजिनस्योपरि हविरध्यवहन्तीति यदस्ति तेन यज्ञशरीरात् कृष्णाजिनादादाय हवीरूपो यज्ञ प्रयुक्तो भवति । [१७]किंचिदध' पतितमपि विहितत्वात्[१७] कृष्णाजिनेनावरुद्धत्वात् हविरस्कन्नमेव भवति ॥

२५ अधिषवणमिति ॥ कल्पः—" तस्मिन्नुलूखलमधिवर्तयत्यधिषवणमसि वानस्पत्यं प्रति

८ ति- त्तर° ।

१४. ख क-प्रत्यवायपरहिताः । १५ क. त. विमुखोऽगच्छत् । १६. क, त, प-तिरोधानाय । १७-१७. त-कथंचिदध पतितेष्वपि नोहिषु ।

वा॒चो वि॒सर्ज॑नं दे॒ववी॑तये त्वा गृ॒ह्णाम्यद्रि॑रसि वानस्प॒त्यः

वा॒चः । वि॒सर्ज॑न॒मिति॑ वि॒–सर्ज॑नम् । दे॒ववी॑तय॒ इति॑ दे॒व–वी॒तये॑ ।

त्वा॒ । गृ॒ह्णा॒मि॒ । अद्रिः॑ । अ॒सि॒ । वा॒न॒स्प॒त्यः ।

त्वात् । हे पुरोडाशीयसमूह । "कृपिचमितनि°" ( उ ८४ ) इत्यादिना तनोतेरूप्रत्ययः । स्तुत्यर्थत्वात् [५]-अग्निशब्दोपादानस्य विकृतौ नोहः-[५] । "अग्नेर्वा एषा तनूः । यदोषधयः" ५ ( तैब्रा ३.२.५ ) इति ब्राह्मणम् । किंच ᵛवाचः ᵛविसर्जनम् असि । विसृज्यते वागनेन इति करणे ल्युट् ( पा ३.३.११७ ) । कृदुत्तरपदप्रकृतिस्वरेण ( पा ६.२.१३९ ) लित्स्वरः ( पा ६.१.१९३ ) । "सावेकाचः°" ( पा ६.१.१६८ ) इति वाचः परस्य विभक्तेरुदात्तत्वम् । "यदा हि प्रजा ओषधीनामश्नन्ति । अथ वाचं विसृजन्ते" ( तैब्रा ३.२.५ ) इति ब्राह्मणम् । एवं विश्वजननं त्वां ᵛदेववीतये देवानां भक्षणार्थं ᵛगृह्णामि उलूखले त्वां १० प्रक्षिपामि । दासीभारादित्वात् ( पा ६.२.४२ ) पूर्वपदप्रकृतिस्वरत्वम् ॥

मुसलमवदधाति—'अद्रिरसि' इति ॥ अद्रा आहर्ता तुषाणाम् ᵛअद्रिः ।

त्वादित्यास्त्वग्वेत्त्विति" ( बौश्रौ १.६ ) इति ॥ हे उलूखल, त्वमधिषवणस्यावघातस्य[१८] आधारभूतं वनस्पतिजन्यं च ᵛअसि । तादृशं त्वां कृष्णाजिनरूपेयं भूमेः त्वक् प्रतिगृह्य मदीयमिति जानातु ॥ अवघाताधारं कर्तुमधिषवणविशेषणमित्याह—"अधिषवणमसि वानस्पत्यमित्याह अधिषवणमेवैनत् १५ करोति" ( तैब्रा ३.२.५ ) इति ॥ अविरोधेन संबन्धायेयमाशीरित्याह—"प्रति त्वादित्यास्त्वग्वेत्त्वित्याह सयत्वाय" ( तैब्रा ३.२.५ ) इति । सयः संबन्धवान् । 'षिञ् बन्धने' इत्यस्माद्धातोरुत्पन्नत्वात् ॥

अग्नेरिति ॥ कल्पः—"तस्मिन् पुरोडाशीयानावपत्यग्नेस्तनूरसि वाचो विसर्जनं देववीतये त्वा गृह्णामीति" ( बौश्रौ १.६ ) इति ॥ [१९]भोः पुरोडाशीयव्रीहिसमूह, त्वम् ᵛअग्नेः शरीरम् २० ᵛअसि । यतो दाह्यं काष्ठमिव त्वां स्वीकृत्योदराग्निराहवनीयाग्निश्चोपचितवपुर्भवति । किं च ᵛवाचः प्रवृत्तिकारणमसि । त्वदीयरसेनोपचितायाः वाचः शब्दोच्चारणे प्रवृत्तत्वात् । अत ईदृशं त्वां देवभक्षणायोलूखले प्रक्षिपामि ॥ यथोक्तं मन्त्रार्थं दर्शयति—"अग्नेस्तनूरसीत्याह । अग्नेर्वा एषा तनूः । यदोषधयः । वाचो विसर्जनमित्याह । यदा हि प्रजा ओषधीनामश्नन्ति । अथ वाचं विसृजन्ते । देववीतये त्वा गृह्णामीत्याह । देवताभिरेवैनत् समर्धयति" ( तैब्रा ३.२.५ ) इति । देवैर्भक्षितत्वे २५ सति "यावदेका देवता कामयते यावदेका । तावदाहुतिः प्रथते" ( तैब्रा ३.२.६ ) इति न्यायेनाभिवृद्धिः ॥

अद्रिरिति ॥ कल्पः—"[२०]मुसलमवदधात्यद्रिरसि वानस्पत्यः स इदं देवेभ्यो हव्यं सुशमि

५–५. तं. व- अग्निशब्दोऽस्य विकृतौ नोह्यते ।

१८. इ. उ. मा. द्वा–'अवघातस्य' नास्ति । १९. इ. उ–हे । २०. इ.उ. मा. द्वा–मुसलमादधात्यद्रि° ।

स इदं देवेभ्यो हव्यꣳ सुशमि शमिष्वेषमा वदोर्जमा

स । इदम् । देवेभ्यः । हव्यम् । सुशमीति सु-शमि ।

शमिष्व । इषम् । एति । वद । ऊर्जम् । एति ।

" अदिशदिभूशुभिभ्य क्मिन् " ( उ ५०५ ) इति क्मिन्प्रत्यय । नित्त्वादाद्युदात्तत्वम्, ईदृशो

५ वनस्पतेर्विकार त्वम् [v]असि । [v]स· तादृशस्त्वम् [v]इद [v]हव्य हवनार्हम् । " छन्दसि च "

(पा ५·१·६७) इति यत्प्रत्यय । [v]सुशमि सुष्ठु स्वयमेव शाम्यतीति सुशमि । " शमित्य-

ष्टाभ्यो घिनुण् " ( पा ३·२ १४१ ) । " परादिश्छन्दसि बहुलम् " ( पा ६·२·१९९ )

इत्युत्तरपदाद्युदात्तत्वम् । ईदृशमिद हव्य [v]देवेभ्य देवनार्थं [v]शमिष्व शामय सुखहेतुं कुरु ।

शामयते [10]लोट् । " बहुल छन्दसि " ( पा २·४ ७३ ) इति शपो लुक् ॥

१० शूर्पारवेण दृषदुपले समाहन्ति—' इषम् ' इति ॥ हविर्लक्षण यदिदमन्नम् [v]आ [v]वद

देवेभ्य आवेदय, [11]युष्मदर्थम् इदमनेन यजमानेन संस्क्रियते इति । एवम् [v]ऊर्जम् [v]आ [v]वद

इति व्याख्यातम् । ऊर्क् रसः । इदानीं यज्ञायुधान्युच्यन्ते—[v]द्युमत् दीप्तिमत् । दिवेः क्विप्-

प्रत्ययान्तात् मतुपि " दिव उत् " ( पा ६·१·१३१ ) इत्युत्वे " ह्रस्वनुड्भ्या मतुप् "

( पा ६ १ १७६ ) इति मतुप उदात्तत्वम् । ईदृशमिदमन्न सस्क्रियमाण देवेभ्य· [v]वदत

१५ शमिष्वेति " ( बौश्रौ १·६ ) इति ॥ हे मुसलपदार्थ, त्व वनस्पतिजन्योऽपि दार्ढ्येण पाषाण· असि ।

[v]स त्वं देवार्थम् [v]इद [v]हव्य[22] भक्षणविरोध्युपतुषापनयनेन सुष्ठु शान्तं यथा भवति तथा शमय ॥

एतदेवाभिप्रेत्याऽऽह–" अद्रिरसि वानस्पत्य इत्याह । ग्रावाणमेवैनत् करोति । स इद देवेभ्यो हव्यꣳ

सुशमि शमिष्वेत्याह शान्त्यै " ( तैब्रा ३ २ ५ ) इति ॥ मन्त्रमुखाद्य लिङ्गसूचितं विनियोग

प्रकटयति—" हविष्कृदेहीत्याह । य एव देवानाꣳ हविष्कृत । तान् ह्वयति । त्रिर्ह्वयति । त्रिषत्या

२० हि देवा. " ( तैब्रा ३ २ ५ ) इति ॥

इषमिति ॥ कल्प —"अथ दृषदुपले शूर्पारवेणोच्चै समाहन्तीषमा वदोर्जमा वद द्युमद्वदत वयꣳ

सघात जेष्मेति " ( बौश्रौ १ ६ ) इति । तत्प्रकारोऽन्यत्र स्पष्टीकृत·– " आग्नीध्रोऽश्मानमादायेषमा

वदेति दृषदुपले समाहन्ति । द्विरेवादि, सकृदुपलाया, त्रि सधारयन्नवक्रुत्य संपादयति " ( आपश्रौ

१ २० २-३ ) इति ॥ हे पाषाण, हवि स्वरूपम् [v][22]इषम् अन्नं, तदीय स्वादुतर रस च यजमान

२५ आनेष्यतीति देवेभ्य [v]वद । हे यज्ञायुधानि, सर्वाणि यूयं स्माभिव्यक्तिमदिद हविरिति देवेभ्यो

१० ति त प ब–लोटि । ११. ति त. प ब–[ ]अस्मदर्थम् ।

२१ त–द्रव्यम् । २२. आ, इ.[ ]उ. क त. मा.[ ]दा–इदम् ।

**वद द्युमद्वदत वयꣳ संघातं जेष्म वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्तु**

वद । द्युमदिति द्यु-मत् । वदत । वयम् । संघातमिति सं-घातम् । जेष्म ।
वर्षवृद्धमिति वर्ष-वृद्धम् । असि । प्रतीति । त्वा । वर्षवृद्धमिति वर्ष-वृद्धम् । वेत्तु ।

वेदयत । ननु देवाः स्वयमेव ज्ञास्यन्ति तत्किमनेन घोषणेनेत्यत्राह— [V]वयं युष्मदीयेन शब्देन [V]संघातं भ्रातृव्यसमूहं [V]जेष्म जयेम । जयतेर्लेटि "सिब्बहुलं लेटि" (पा ३.१.३४) इति सिप्प्रत्ययः । "बहुलं छन्दसि" (पा २.४.७३) इति शपो लुक् । [12]संघातशब्दस्य थाथादिस्वरेण (पा ६.२.१४४) उत्तरपदान्तोदात्तत्वम्[13] । "मनोः श्रद्धादेवस्य" (तैब्रा ३.२.५) इत्यादि ब्राह्मणम् ॥ ५

शूर्पमुपयच्छति—'वर्षवृद्धमसि' इति ॥ व्याख्यातम् बर्हिषि (तैसं १.१.२) । इह तु शूर्पमुच्यते ॥ १०

पुरोडाशीयानुद्वपति—'प्रति त्वा' इति ॥ हे पुरोडाशीयसमूह, [V]वर्षवृद्धं त्वां शूर्पः

वदत । [V]वयं त्वनेन पाषाणघोषेणाभिनीतं वैरिसंघातं [V]जेष्म[23] ॥ अनेन [24]मन्त्रेणेष्टप्राप्तिमनिष्टपरिहारं च दर्शयति— "इषमा वदोर्जमा वदेत्याह । इषमेवोर्जं यजमाने दधाति । द्युमद्वदत वयꣳ संघातं जेष्मेत्याह । भ्रातृव्याभिभूत्यै" (तैब्रा ३.२.५) इति । उपाख्यानेन भ्रातृव्याभिभूतिं द्रढयति— "मनोः श्रद्धादेवस्य यजमानस्यासुरघ्नी वाक् । यज्ञायुधेषु प्रविष्टाऽऽसीत् । तेऽसुरा यावन्तो यज्ञायुधानामुद्वदतामुपाशृण्वन् । ते पराभवन् । तस्मात् स्वानां मध्येऽवसाय यजेत । यावन्तोऽस्य भ्रातृव्या यज्ञायुधानामुद्वदतामुपशृण्वन्ति । ते पराभवन्ति" (तैब्रा ३.२.५) इति । श्रद्धालुत्वेन यागं कुर्वतो मनोः प्रभावादिदं [25]सर्वं संपन्नम् । ततो ज्ञातीनामनुकूलानां प्रतिकूलानां च मध्ये य इमं वृत्तान्तं निश्चित्य श्रद्धालुर्यजेत तस्य भ्रातृव्याः [26]पराभवन्ति ॥ प्रैषमन्त्रमुत्पाद्य विनियोगं तात्पर्यं च दर्शयति— "उच्चैः समाहन्तवा आह विजित्यै । वृङ्क्त एषामिन्द्रियं वीर्यम् । श्रेष्ठ एषां भवति" (तैब्रा ३.२.५) इति । हे आग्नीध्र, त्वदीयहस्तगतेन पाषाणेन दृषदुपलायुग्ममुच्चैस्ताडनीयमिति मन्त्रार्थः । तं मन्त्रमध्वर्युः पठेत् । स च पाषाणध्वनिर्विजयाय भवति । यजमानश्चैषां वैरिणामिन्द्रियं बलं च विनाशयति । स्वयं चैषां ज्ञातीनां मध्ये श्रेष्ठो भवति ॥ १५ २०

**वर्षवृद्धमिति** ॥ कल्पः— "अवहत्य [27]तुषान् कृत्वोत्तरतः शूर्पमुपयच्छति वर्षवृद्धमसीति" (बौश्रौ १.६) इति ॥ हे शूर्प, [V]वर्षवृद्धं वेणुनिष्पन्नतया त्वमपि वर्षवृद्धम् [V]असि ॥ २५

**प्रतीति** ॥ कल्पः— "तस्मिन् पुरोडाशीयान् [28]उद्वपति प्रति त्वा वर्षवृद्धं वेत्त्विति"

१२. ति. तं. पं. व—संघातशब्दः । १३. ति. तं. पं. व—उत्तरपदान्तोदात्तः ।

२३. तं—जेष्यामः । २४. तं—मन्त्रेणेष्टप्राप्त्यनिष्टपरिहारौ । २५. इ. उ. भां. हा—'सर्वम्' नास्ति । २६. तं—पराभवन्तीति । २७. आ. उ. भां. हा—वितुषान्; इ—'तुषान्' नास्ति । २८. उ. पा. भां. हा—उपवपति ।

परापूत्ँ रक्षः परापूता अरातयो रक्षसां भागो(२)ऽसि वायुर्वो वि विनक्तु

परापूतमिति परापूतम् । रक्षः । परापूता इति परा–पूताः । अरातयः । रक्षसाम् । भागः । असि ।
वायुः । वः । वीति । विनक्तु ।

---

$^{v}$प्रति $^{v}$वेत्तु अनुजानातु, आत्मोपरि तव प्रक्षेपणं क्षमताम् ॥

परापुनाति—' परापूतम् ' इति यजुरादिकैकपदया गायत्र्या ॥ $^{v}$परापूतं परास्तम्। शिष्टं प्रत्युष्टादिना व्याख्यातम् ( तैस १.१.२ )। " गतिरनन्तरः " (पा ६.२.४९) इति पूर्वपदप्रकृतिस्वरत्वम् । " यज्ञ्ँ रक्षाँस्यनु प्राविशन् " (तैब्रा ३.२.५) इति ब्राह्मणम् ॥

तुषान्निरस्यति—' रक्षसाम् ' इति ॥ सुबोधम् । " कर्षात्वतः " (पा ६.१.१५९) इति भागशब्दोऽन्तोदात्त ॥

स्वयं विविनक्ति—' वायुः ' इति ॥ $^{v}$वायुः $^{v}$वः युष्मान् $^{v}$वि $^{v}$विनक्तु तण्डुलेभ्यः कणान् पृथक्करोतु ॥

---

( बौश्रौ १.६ ) इति ॥ हे व्रीहिसमूह, $^{v}$वर्षवृद्धं त्वा स्वकीयत्वेन शूर्पं [29]प्रतिमन्यताम् ॥ मन्त्रद्वये वृद्धशब्देन समृद्धिर्द्योत्यत इत्याह—" वर्षवृद्धमसि प्रति त्वा वर्षवृद्धं वेत्त्वित्याह । वर्षवृद्धा वा ओषधय । वर्षवृद्धा इषीका समृद्ध्यै " ( तैब्रा ३.२.५ ) इति । इषीका वेणवः ॥

परापूतमिति ॥ कल्प —" अथोदृह्य पर्यावृत्य परापुनाति परापूत्ँ रक्ष परापूता अरातय इति " ( बौश्रौ १.६ ) इति ॥ रक्षसोऽत्र प्रसङ्गमुपन्यस्य मन्त्रं व्याचष्टे—" यज्ञ्ँ रक्षाँस्यनु प्राविशन् । तान्यस्ना पशुभ्यो निरवादयन्त । तुषैरोषधीभ्यः । परापूत्ँ रक्षः परापूता अरातय इत्याह । रक्षसामपहत्यै " ( तैब्रा ३.२.५ ) इति । देवाः पशुयागेषु रुधिर तद्भागत्वेन [30]बहिस्त्यक्त्वा पशुयागेभ्यो रक्षासि निष्कासितवन्तस्तुषत्यागेन चौषध्युपलक्षितेभ्य. ॥

रक्षसामिति ॥ कल्प —" मध्यमे पुरोडाशकपाले तुषानोप्य रक्षसां भागोऽसीत्यधस्तात् कृष्णाजिनस्योपवपति उत्तरमपरमवान्तरदेशम् । हस्तेनोपवपतीति बह्वृचब्राह्मणम् ' ( आपश्रौ १ २०.९–१० ) इति ॥ निष्कासनार्थं भागप्रदानमिति दर्शयति—" रक्षसां भागोऽसीत्याह । तुषैरेव रक्षाँसि निरवदयते " (तैब्रा ३.२.५ ) इति ॥ विधत्ते—" अप उपस्पृशति मेध्यत्वाय " ( तैब्रा ३ २.५ ) इति ॥

वायुरिति ॥ कल्प —" वायुर्वो विविनक्त्विति विविच्य " ( आपश्रौ १.२०.११ ) इति ॥ हे तण्डुलाः, $^{v}$व युष्मान् $^{v}$वायु कणेभ्य पृथक् करोतु ॥ शुद्ध्यापादकत्वेन वा वायावादर इत्याह—" वायुर्वो विविनक्त्वित्याह । पवित्रं वै वायु । पुनात्येवैनान् " ( तैब्रा ३.२.५ ) इति ॥

---

२९. तं–अभिमन्यताम् । ३०. तं–बहिरुत्स्यक्त्वा ।

देवो वः सविता हिरण्यपाणिः प्रति गृह्णातु ॥ ५ ॥

[ त्वा भाग एकादश च ] ॥ ५ ॥

देवः । वः । सविता । हिरण्यपाणिरिति हिरण्य-पाणिः । प्रतीति । गृह्णातु ॥ ५ ॥

[ मैसं १·१·६-७; कासं १·५; कपिसं १·५; वासं १·१२-१६ ]

तण्डुलान् प्रस्कन्दयति--'देवो वः' इति ॥ [V]देवः [V]सविता सर्वस्य प्रेरकः [V]हिरण्यपाणिः हिरण्याभरणपाणिः [V]वः युष्मान् [V]प्रति [V]गृह्णातु प्रतिगृह्य रक्षतु । हिरण्यस्य विकारो वलयाङ्गुलीयकादिः पाण्योर्यस्य इति समुदायविकारषष्ठ्या ( द्र. पा २.२.२४ वा १३) विगृह्य "सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यो ग्राचोत्तरपदलोपश्च" ( द्र. पा २·२·२४ वा १२ ) इति बहुव्रीहौ, पूर्वपदप्रकृतिस्वरत्वम् । "उशीरदाशेरकपालपलालशैवालश्यामाकशारीर-शरावहृदयहिरण्यारण्यापत्यदेवराणाम्" (फि ६७) इति हिरण्यशब्द आद्युदात्तः । "अन्तरिक्षादिव" ( तैब्रा ३·२·५ ) इत्यादि ब्राह्मणम् ॥

॥ इति प्रथमे [१४]पञ्चमोऽनुवाकः ॥ ५ ॥

देव इति ॥ कल्पः— "देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्विति पात्र्यां तण्डुलान् प्रस्कन्दयित्वा" ( आपश्रौ १·२०·११ ) इति ॥ हिरण्यमङ्गुलीयकं पाणौ यस्यासौ [V]हिरण्यपाणिः ॥ अन्तरिक्षात् पततां वर्षोपलादीनामिवोच्चस्थानस्थिताच्छूर्पात् पततां [३१]तण्डुलानामितस्ततः पाते सत्यप्रतिष्ठितत्वेन हविर्विनाशो मा भूदित्यभिप्रेत्य सवितुः प्रतिग्रह इत्याह— "अन्तरिक्षादिव वा एते प्रस्कन्दन्ति । ये शूर्पात् । देवो वः सविता हिरण्यपाणिः प्रतिगृह्णात्वित्याह प्रतिष्ठित्यै । हविषोऽस्कन्दाय" (तैब्रा ३·२·५) इति ॥ प्रैषमन्त्रमुत्पादयति— "त्रिष्फलीकर्तवा आह । त्र्यावृद्धि यज्ञः । अथो मेध्यत्वाय" ( तैब्रा ३·२·५ ) इति । हे यजमानपत्नि, त्वया तण्डुलास्त्रिवारं फलीकर्तव्याः । श्रित्याच्छादकतुषापनयनं[३२] फलीकरणम् ॥

अत्र विनियोगसंग्रहः—

"देवो व इत्पुनात्यर्थौ त्रिभिरापोऽनुमन्त्रयेत् ।
अग्नयेऽग्री हविः प्रोक्ष्य शुन्धोक्षेत् यागपात्रकम् ॥ १ ॥

१४. तं. ति. व- पञ्चमोऽनुवाकभाष्यसंकोचः ।

३१. तं-तण्डुलादीनामितस्ततः । ३२. तं-श्रित्याच्छादकदोषापकरणम् ।

अथ चर्मोत्करे पुरधा ह्यदितिर्याश्चर्मसंस्तुतिः ।
अध्युलूखलमादध्यादग्नेस्तत्र हविः क्षिपेत् ॥ २ ॥
अद्रिर्मुसलमादत्त दृष दृषदि वादनम् ।
वर्षं शूर्पमुपोह्यात्र प्रति त्वा हविरावपेत् ॥ ३ ॥
[33]परा व्रीहीन्[33] परापूत रक्षसामिति चर्मणः ।
अधस्तुषं कपालेन क्षिपेद्वायुर्विविच्यते ॥
देवः क्षिपेद्धवि वाग्यां मन्त्राः सप्तदशेरिताः ” ॥ ४ ॥

अथ मीमांसा—तृतीयाध्यायस्य द्वितीयपादे चिन्तितम्—

“ हविष्कृदेहीति मन्त्रात् त्रिरवघ्नन् समाह्वयेत् ।
विनियोगोऽवघाते स्यादाह्वाने वाऽवघातके ॥
ऐन्द्रीवन्मान्त्रमाह्वानं गौणं हन्तिर्वृथाऽन्यथा ।
पाठेन प्रापित त्रित्व ह्वयतेरुपचारगीः ॥
त्रिरभ्यासो विधातव्यो नित्यप्राप्तेरभावतः ।
हन्तिना लक्ष्यते कालः प्राप्तोऽसौ ह्वयतिस्तथा ॥
विनियोगे वाक्यभेदो लिङ्गादाह्वानशेषता ।
नैन्द्रीन्याय मुख्यभावाद्धन्त्यर्थेन मुख्यतः ” ॥ ( जैन्या ३·२·५–८ ) इति ॥

दर्शपूर्णमासयोः श्रूयते—“हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति ” ( बौश्रौ १·६, आपश्रौ १·१९·७) इति । देवानामर्थं या हविः संपादयति सा हविष्कृत् । तामेतां सखोऽध्वर्युरेहीति ब्रूते । तथा चाय मन्त्रो ब्राह्मणेन व्याख्यायते—“ हविष्कृदेहीत्याह । य एव देवानां हविष्कृतः । तान् ह्वयति ” ( तैब्रा ३ २ ५ ) इति । तमिमं मन्त्रमुच्चार्याध्वर्युस्त्रिवारमवघातं कुर्वन्नाह्वयतीत्यर्थः । अनेन वाक्येन मन्त्रोऽवघाते विनियुज्यते न त्वाह्वाने । एहीत्येतत् मन्त्रगतं पदमाह्वाने समर्थं न त्ववघात इति चेत् । [34]न । तस्यावघातलक्षकत्वात् । यथा पूर्वोदाहृतायामैन्द्र्यामृचीन्द्रशब्दो गौणस्तद्वत् 'एहि' इति पदं मन्त्रगतं तेनावघाते गौणं भविष्यति । अन्यथा मन्त्रब्राह्मणयोराह्वानपरत्वाच्छ्रूयमाणम् 'अवघ्नन्' इति [35]पदम् अनर्थकं स्यात् । प्राप्तमवघातमुद्दिश्य तत्र मन्त्रस्य त्रित्वस्य च विधौ वाक्यभेद इति चेत् । न । त्रित्वस्य प्राप्तत्वेनानुवादकत्वात् । कस्यांचिच्छाखायामयं मन्त्रो मन्त्रकाण्डे त्रिवारमभ्यस्याऽऽम्नातः । ह्वयतिपदं त्वेहीतिवदवघातपरतया [36]उपचारेण नेयमिति[36] प्राप्ते ब्रूमः—

---

३३–३३. ब–पराचीनान् । ३४. इ. ठ. पा. मां. हा–'न' नास्ति । ३५. इ. ठ. मां. हा–मन्त्रपदम् । ३६–३६. ठं– उपचरणीयमिति ।

त्रिरभ्यासस्य नित्यवत्प्राप्तिः पाठमात्रेण न सिध्यति। कस्यांचिच्छाखायां ( वासं १·१५ ) द्विःपाठात्, कस्यांचित् (काण्वसं १·५) सकृत् पाठात्। अतोऽसौ नित्यवद्विधीयते। न च 'अवध्नन्' इत्यस्य वैयर्थ्यं, तस्य काललक्षकत्वात्। कालस्याऽपि विधौ वाक्यभेद इति चेत्। न। प्राप्तत्वात्। न ह्यवघाते सहायाह्वानमन्यस्मिन् काले भवति। ततोऽर्थप्राप्तः कालः। आह्वानमपि मन्त्रसामर्थ्यादेव प्राप्तत्वान्न विधेयम्। न हि 'एहि' इति मन्त्रपाठ आह्वानमन्तरेणोपपद्यते। मन्त्रव्याख्यायां चोदाहृतम्। तत्रायं वाक्यार्थः संपन्नः—अवघातकाले यदाह्वानं तस्य त्रिरभ्यासः कर्तव्य इति। अत एव [३७]शाखान्तरेऽपि स्पष्टम्[३७] आह्वानानुवादेनाभ्यासो विधीयते—"त्रिर्ह्वयति। त्रिषत्या हि देवाः" ( मैसं ४·१·६ ) इति। पूर्वं सति मन्त्रस्यापि विनियोगे वाक्यभेदः स्यात्। लिङ्गेन ह्वाह्वाने विनियुज्यते [३८]नावघाते। न चैन्द्रीन्यायोऽत्र प्रसरति तृतीयाश्रुत्यभावात्। "बर्हिर्देवसदनं दामि" ( मैसं १·१·२ ) इत्यत्रोक्तेन न्यायेन मुख्य एवाऽऽह्वाने लिङ्गेन मन्त्रविनियोगो न त्ववघातरूपे गौणाह्वाने। तस्मादाह्वानावघातशेषोऽयं मन्त्रः ॥ १०

द्वादशाध्यायस्य द्वितीयपादे चिन्तितम्—

"सवनीये पुरोडाशे स्यादाहूतिर्हविष्कृतः।
न चाऽतिदेशात् स्यान्मैवं पश्वाह्वानात् प्रसक्तितः" ॥ ( जैन्या १२·२·३ ) इति ॥

सवनीयपुरोडाशस्याऽऽग्नेयपुरोडाशविकृतित्वात् प्रकृतिवद्विकृतिः कर्तव्येत्यतिदेशेन हविष्कृदाह्वानं तत्र कर्तव्यमिति चेत्। मैवम्। पशौ कृतेन हविष्कृदाह्वानेन [३९]तत्कालीने पुरोडाशेऽपि प्रसङ्गसिद्धत्वात्। [४०]यद्यप्यौषधार्थं हविष्कृदाह्वानं पशौ नास्ति तथाप्येषा क्रत्वाचिन्ता ॥ १५

तत्रैवान्यच्चिन्तितम्—

"अस्त्याहुतिश्चरौ सौम्ये नास्ति वा पशुपाकतः।
निवृत्तत्वादस्ति मैवमनिवृत्तेः पुरोस्थितेः" ॥ ( जैन्या १२·२·४ ) इति ॥ २०

तृतीयसवने ये सौम्यचर्वादयः तेषु हविष्कृदाह्वानं पुनः कर्तव्यं, पशावाहूतायास्तस्याः पशुपाके निवृत्तत्वात्, इति चेत्। मैवम्। प्रकृतौ पत्नीसंयाजेभ्य ऊर्ध्वं हविष्कृतः पत्न्या उत्थानकालत्वेन[४१] पशावपि ततः पूर्वं निवृत्त्यभावात्। तस्मात् तत्कालीनेषु सौम्यचर्वादिषु नास्ति पुनराह्वानम् ॥

एकादशाध्यायस्य प्रथमपादे चिन्तितम्—

"अवघातः सकृद्भूयो वा सकृद्विधिसिद्धितः। २५
दृष्टा [४२]तण्डुलनिष्पत्तिः [४३]तदन्तोऽभ्यस्यतामयम्" ॥ ( जैन्या ११·१·७ ) इति ॥

---

३७–३७. आ. क. तं– शाखान्तरे विस्पष्टम्। ३८. तं– न त्ववघाते। ३९. उ. हा– तत्कालिके। ४०. घ– यद्यौषधार्थम्। ४१. इ. उ. भां. हा– °कालत्वे। ४२. घ– तस्यैव निष्पत्तिः। ४३. इ. उ. भां. हा–तदन्तोऽभ्यस्यतामिति।

"व्रीहीनवहन्ति" इत्यत्र सकृन्मुसलघातमात्रेण विधिप्रयुक्तस्यापूर्वस्य सिद्धेर्नास्त्यावृत्तिरिति चेत्। नैवम्। तण्डुलनिष्पत्तेर्दृष्टप्रयोजनत्वेन [44]तावत्पर्यन्तं तस्याभ्यासस्य[44] अश्रुतस्यापि कल्पनीयत्वात्। एवं तण्डुलपेषणादावपि द्रष्टव्यम् ॥

तत्रैवान्यत् [45]चिन्तितम्—

"सर्वौषधावघाते किमावर्त्यं सकृदेव वा।
आवृत्तिः पूर्ववन्नैव [46]दृष्टार्थस्यात्र वर्जनात्[46]" ॥ (जैन्या ११.१.८) इति ॥

अग्निचयने श्रूयते— "औदुम्बरमुलूखलं सर्वौषधस्य पूरयित्वाऽवहत्यथैतदुपदधाति" (द्र. आपश्रौ १६.२६.२) इति। अत्रादृष्टमात्रप्रयोजनत्वात् सकृदेवावघातः ॥

एकादशाध्यायस्य चतुर्थपादे चिन्तितम्—

"अवघातार्थमन्त्रः किमसकृत् सकृदेव वा।
प्रहारभेदादावृत्तिः कर्मैक्येन सकृद्भवेत्" ॥ (जैन्या ११.४.१९) इति ॥

"अव रक्षो दिवः सपत्नं वध्यासमित्यवहन्ति" (आपश्रौ १.१९.१०) इत्यवघाते [47]विनियुक्तो मन्त्र आवर्तनीयः। कुतः? अवघातस्य प्रहाररूपत्वात्, प्रहाराणां च भिन्नत्वात्, इति प्राप्ते ब्रूमः— तण्डुलनिष्पत्तिपर्यन्तत्वेनाऽऽक्षिप्तप्रहाराभ्यासयुक्तस्यावघातस्यैकत्वात् तत्र विनियुक्तस्याव-घातोपक्रमे सकृदेव पाठः ॥

तत्रैवान्यच्चिन्तितम्।

"नानाबीजेषु तन्मन्त्रः सकृद्भूयोऽथ वा सकृत्।
चिकीर्षैक्यात् प्रयोगाणां भिन्नत्वादसकृद्भवेत्" ॥ (जैन्या ११.४.२०) इति ॥

राजसूये नानाबीजेष्टिसमुदाये श्रूयते— "अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणां सोमाय वनस्पतये श्यामाकं चरुम्" (तैसं १.८.१०) इत्यादि। तत्र सोऽवघातमन्त्रः सकृदेव [48]वक्तव्यः। कुतः [49]सर्वावघातविषयायामेकस्यां चिकीर्षायां प्रवृत्तत्वात्, इति प्राप्ते ब्रूमः— समन्त्रोऽवघातश्चोदकातिदेशेन [50]यद्बीजेषु [51]प्रयुज्यते [52]तद्बीजेषु तण्डुलनिष्पत्तौ स कृतार्थः संपन्नः। पुनर्बीजान्तरे तण्डुलनिष्पत्तये समन्त्रस्यावघातस्य प्रयोक्तव्यत्वादसकृन्मन्त्रपाठः ॥

---

४४-४४ आ- तत्पर्यन्तस्याभ्यासस्य। ४५. तं- विचारितम्। ४६-४६. त- दृष्टार्थस्य प्रवर्तनात्। ४७ आ. क त- विहितः। ४८. त व- प्रयोक्तव्य। ४९. इ- पर्वघात°, उ. मां. हा- सर्वघाम°। ५०. आ. इ. उ. मां हा-बीजेषु। ५१. आ हा-युज्यते। ५२. आ इ. उ. मां. हा-तत्तद्बीजेषु।

दशमाध्यायस्य प्रथमपादे चिन्तितम् —

" अवघातः कृष्णलानामस्ति नो वाऽस्ति पाकवत् ।

प्रत्यक्षोक्त्या चरेत् पाकमवघाते तु नास्ति सा "॥ ( जैन्या १०·१·४ ) इति ॥

विकृतिरूपाणां काम्येष्टीनां काण्डे पठ्यते—"प्राजापत्यं घृते चरुं निर्वपेत् शतकृष्णलमायुष्कामः" ( मैसं २·२·२ ) इति । कृष्णलशब्दः सुवर्णशकलवाची । प्रकृतौ ' व्रीहीनवहन्ति ' इति पुरोडाश- ५ हेतूनां व्रीहीणामवघातो विहितः । सोऽत्र चरुहेतूनां कृष्णलानां चोदकवशादस्ति नो वेति संशयः । अस्तीति पूर्वपक्षप्रतिज्ञा । वितुषीकरणं तत्कृततत्त्वरूपकारः । लुप्तेऽप्युपकारे तत्सत्त्वायां ' पाकवत् ' इति निदर्शनम् । लुप्तेऽपि विक्लेदनोपकारे पाकः प्रतिवादिनोऽभिमतः तद्वदवघातोऽप्यस्तु । ' घृते 'श्रपयति इति प्रत्यक्षोक्त्या पाकोऽभ्युपगतः । अवघाते तु सोक्तिर्नास्तीति वैषम्यादवघातो नास्ति ॥

नवमाध्यायस्य प्रथमपादे चिन्तितम्— १०

" अवघाते व्रीहिरूपमिवक्षोत न वा श्रुतेः ।

आद्यः साधनतामात्रमवर्ज्यत्वाद्विवक्ष्यते "॥ ( जैन्या ९·१·३ ) इति ॥

" व्रीहीनवहन्ति " इत्यत्र व्रीहीणां स्वरूपं श्रूयमाणत्वात् विवक्षितम् । तथा सति " नैवारश्चरुर्भवति " ( तैब्रा १·३·६ ) इत्यत्र नीवाराणामव्रीहित्वादवघातो नास्तीत्यूहो नाऽऽरभ्येत । प्राकृतानामवघातविषयाणां व्रीहीणां परित्यागेन व्रीहिस्थानेऽवघातविषयत्वेन नीवाराणां १५ प्रयोग ऊहः । यदा व्रीहित्वेन नियतोऽवघातो व्रीहिनिवृत्तौ निवर्तेत तदा कुत [53]ऊहावसर इति प्राप्ते ब्रूमः— व्रीहिस्वरूपविवक्षायामपि व्रीहिगतोऽपूर्वसाधनत्वाकारो न वर्जयितुं शक्यः । अन्यथाऽवघातवैयर्थ्यापत्तेः । ततोऽपूर्वसाधनत्वाकारोऽवश्यं विवक्षितव्यः । तत्र व्रीहिरूपस्यापि विवक्षायां गौरवं स्यात् । तदविवक्षायां तु नीवाराणामपि विहितत्वेनापूर्वसाधनत्वाकारसद्भावादव- घातविषयत्वेनोहः सिध्यति ॥ २०

तत्रैवान्यच्चिन्तितम्—

" मुसलाद्युक्षणं दृष्टं स्यादपूर्वाय वोक्तितः ।

आद्यः प्रकरणादन्त्यो व्यर्थं [54]तत्स्यादिहान्यथा "॥ ( जैन्या ९·१·५ ) इति ॥

" प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति " इति श्रूयते । तत्र प्रोक्षणमुलूखलमुसलद्रव्य- द्वाराऽवघातार्थम् । कुतः ? वाक्येन तच्छेषत्वप्रतीतेरिति चेत् । नैवम् । प्रकरणेनापूर्वशेषत्वावगमात् । २५ न च वाक्यं प्रकरणात् बलीय इति वाच्यम् । अपूर्वशेषत्वाभावे वैयर्थ्यप्रसङ्गात् । पूर्वपक्षे यत्राव-

५३. तं—ऊहावकाशः । ५४. इ. उ. मो. हा—तदेमादिहान्यथा ।

घासस्तत्रैव प्रोक्षणम् । तथा सति नैर्ऋतचरौ "कृष्णानां व्रीहीणां नखनिर्भिन्नम्" (तैब्रा १ ८ ९)
इति श्रुतेषु नखेषु प्रोक्षणं नोह्यते । सिद्धान्ते स्वपूर्वस्य प्रयोजकत्वादस्ति तत्रोहः । तदेवमवघात
संबद्धा विचारा उदाहृता ॥

अथ व्याकरणम् – 'दृव्ो व ' इत्यादिषु [55] स्वरा गता [55] । अच्छिद्रेणेत्यत्र बहुव्रीहिपक्षे
५ "न सुभ्याम् ' (पा ६ २ १७२) इत्युत्तरपदान्तोदात्तं प्राप्नोति । ततस्तत्पुरुष एव कर्तव्यः । छिद्रं
छेदनोपेतं न भवतीत्यच्छिद्रं, तत्राव्ययपूर्वपदप्रकृतिस्वरत्वम् । पवित्रशब्दे प्रत्ययस्वरः । वसुसूर्यशब्दौ
वृषादी । आप इत्यत्र वाक्यादित्वादामन्त्रितानिघातः । देवीरित्यादीनां सोऽस्ति । यज्ञपतिमित्यत्र
"पत्यावैश्वर्ये' (पा ६ २ १८) इति पूर्वपदप्रकृतिस्वरः । यूयमस्तूर्यते हिंस्यतेऽस्मिन्निति तूर्यं युद्धम् ।
तुराधातोः स्वार्थेण्यन्तस्याजन्ताच्च "अचो यत्" (पा ३ १ ९७) इति यत्प्रत्यये सति प्रत्ययस्वरं
१० बाधित्वा "तित्स्वरितम्" (पा ६ १ १८५) इति स्वरिते प्राप्ते तदपवादः "यतोऽनावः"
(पा ६ १ २१३) नावन्द्व्यतिरिक्तस्य यत्प्रत्ययान्तस्याऽऽदिरुदात्तो भवति । तत्र तूर्येषुप
पदसद्भावात् समासान्तोदात्तं बाधित्वा "गतिकारकोपपदात् कृत्" (पा ६ २ १३९) इत्युत्तर
पदप्रकृतिस्वरत्वम् । प्रोक्षिता इत्यत्र "गतिरनन्तरः" (पा ६ २ ४९) इति पूर्वपदप्रकृतिस्वरत्वम् ।
अवधूतमित्यत्रापि तद्वत् । अधिषवणमित्यत्र सवनशब्दस्य ल्युट्प्रत्ययान्तत्वेन "लिति"
(पा ६ १ १९३) इति प्रत्ययात् पूर्वपदस्योदात्तत्वे सति समासे कृदुत्तरपदप्रकृतिस्वरत्वम् । वानस्पत्य
१५ मित्यत्र वनस्पतेर्विकार इत्यस्मिन्नर्थे विहितस्तद्धितप्रत्ययः उदात्तः । वाचं इत्यत्र "सावेकाचः"
(पा ६ १ १६८) इति विभक्तिरुदात्ता । अधिषवणवाद्विसर्जनम् । दासीभारादित्वात्
"दासीभाराणां च' (पा ६ २ ४२) इति सूत्रादीनां पूर्वपदप्रकृतिस्वरत्वे सति समासस्वरो
बाध्यते । सुशमीत्यत्रोत्तरपदस्य प्रत्ययस्वरेणान्तोदात्तत्वात् [56]कृदुत्तरपदत्वेनापि [57]तथैव प्राप्तौ
२० "परादिश्छन्दसि बहुलम्' (पा ६ २ १९९) इत्युत्तरपदाद्युदात्तत्वम् । शुक्रादित्यत्र मतुप पित्त्वा
दनुदात्तत्वं प्राप्ते तदपवादः "ह्रस्वनुड्भ्यां मतुप्" (पा ६ १ १७६) ह्रस्वान्तादन्तोदात्तान्नुडा
गमाच्चोत्तरो मतुबुदात्तः स्यात् । अवधूतवत् परापूतम् । हिरण्यपाणिरित्यत्र बहुव्रीहित्वात् पूर्वपदस्वरे
हिरण्यशब्दस्यान्तोदात्तेषु निपातितः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-
२५ संहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥

---

[55]-[55] ख. ग. ङ. च. भो. हा– स्वरो गतः । [56] ख– कृदुत्तरपदप्रकृतिस्वरेऽपि, त–कृदुत्तरपदेनापि ।
[57] क–तदेव ।

अवधूत॒ꣳ रक्षोऽव॑धूता॒ अरा॑त॒योऽदि॑त्या॒स्त्वग॑सि॒ प्रति॑ त्वा पृथि॒वी वे॑त्तु
दि॒वः स्क॑म्भ॒निर॑सि॒ प्रति॑ त्वाऽदि॑त्या॒स्त्वग्वे॑त्तु

अव॑धूत॒मित्यव॑-धूतम् । रक्षः॑ । अव॑धूता॒ इत्यव॑-धूताः । अरा॑तयः ।
अदि॑त्याः । त्वक् । अ॒सि॒ । प्रतीति॑ । त्वा॒ । पृ॒थि॒वी । वे॒त्तु ।
दि॒वः । स्क॒म्भ॒निः । अ॒सि॒ । प्रतीति॑ । त्वा॒ । अदि॑त्याः । त्वक् । वे॒त्तु ।　५

---

अवधूननोपस्तरणमन्त्रौ व्याख्यातौ ( तैसं १·१·५ ) ॥

शम्यां निदधाति—'दिवः' इति ॥ "ऊडिदम्°" ( पा ६·१·१७१ ) इत्यादिना विभक्तेरुदात्तत्वम् । ᵛदिवः यागसाधनद्वारेण ᵛस्कम्भनिः ᵛअसि धारयित्र्यसि । स्कम्नातेः करणे ल्युटि (पा ३·३·११७) ङीपि वर्णव्यत्ययेन ह्रस्वत्वम् । "गर्भिणयो भवन्ति" ( तैसं २·१·२) इति यथा । यद्वा—"वृतेश्च" (उ २६३) इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् स्कम्नातेः अनिप्रत्ययः । सर्वत्रोञ्छादित्वात् (पा ६.१.१६०) अन्तोदात्तत्वम् । हे शम्ये, ᵛअदित्याः ᵛत्वक् एवंभूतां त्वाम्, अदित्यास्त्वग्भूतं कृष्णाजिनं ᵛप्रति ᵛवेत्तु अनुजानातु आत्मोपरि तवावस्थानम् । "द्यावापृथिवी सहास्ताम्" ( तैब्रा ३·२·६·) इत्यादि ब्राह्मणम् ॥　१०

---

पञ्चमेऽनुवाके व्रीह्यवघात उक्तः । अवहतानां च तण्डुलानां पेषणात् पूर्वं कपालोपधानस्य निष्प्रयोजनत्वेन तदुपधानात् पूर्वं षष्ठे पेषणमभिधीयते ॥　१५

अवधूतमिति ॥ कल्पः— "अथ [1]प्रोक्षेषु त्रिष्फलीकृतेषु तथैव कृष्णाजिनमवधूनोत्यूर्ध्व-[2]ग्रीवमुदङ्ङावृत्यावधूतꣳ रक्षोऽवधूता अरातय इति त्रिः अथैनत् पुरस्तात् प्रतीचीनग्रीवमुत्तरलोमोप-स्तृणात्यदित्यास्त्वगसि प्रति त्वा पृथिवी वेत्त्विति" ( बौश्रौ १·७ ) इति ॥ पूर्ववद्व्याचष्टे—"अवधूतꣳ रक्षोऽवधूता अरातय इत्याह । रक्षसामपहत्यै । अदित्यास्त्वगसीत्याह । इयं वा अदितिः । अस्या एवैनत्त्वचं करोति । प्रति त्वा पृथिवी वेत्त्वित्याह प्रतिष्ठित्यै । पुरस्तात् प्रतीचीनग्रीवमुत्तरलोमोप-स्तृणाति मेध्यत्वाय । तस्मात् पुरस्तात् प्रत्यञ्चः पशवो मेधमुपतिष्ठन्ते । तस्मात् प्रजा मृगंग्राहुकाः । यज्ञो देवेभ्यो निलायत । कृष्णो रूपं कृत्वा । यत् कृष्णाजिने हविरधिपिनष्टि । यज्ञादेव तद्यज्ञं प्रयुङ्क्ते । हविषोऽस्कन्दाय" ( तैब्रा ३·२·६ ) इति । अवघातस्येवात्र पेषणस्य [3]विशिष्टविधिः ॥　२०

दिव इति ॥ कल्पः— "तस्मिन्नुदीचीनकुम्बाꣳ शम्यां निदधाति दिवः स्कम्भनिरसि प्रति त्वाऽदित्यास्त्वग्वेत्त्विति" ( बौश्रौ १·७ ) इति । गदया समानाकारो व्यामार्धपरिमितः काष्ठविशेषः शम्या । तां कृष्णाजिनस्योपर्युदीचीनशिरस्कां निदध्यात् । सा च पेषणहेतोर्दृषदः पश्चाद्भागधारणेन [4]तद्भागस्यौन्नत्यं करोति ॥ हे शम्ये, त्वं द्युलोकस्य धारयित्री ᵛअसि । तस्मात् कृष्णाजिनरूपायाः　२५

---

[1]. आ. क-प्रोक्षितेषु ।　[2]. आ. इ. उ. क. मां. ह्रा-°ग्रीवमुदगावृत्या° ।　[3]. तं-विधिः ।
[4]. मै[2]. तं-तद्भागस्योन्नतिम् ।

धिषणाऽसि पर्वत्या प्रति त्वा दिवः स्कम्भनिर्वेत्तु धिषणाऽसि पार्वतेयी

धिषणा । असि । पर्वत्या । प्रतीति । त्वा । दिवः । स्कम्भनिः । वेत्तु ।
धिषणा । असि । पार्वतेयी ।

शम्याया दृषदमत्याद्धाति—'धिषणा' इति ॥ [V]धिषणा धृष्टा त्वम् [V]असि हे
५ दृषद् । [V]पर्वत्या, पर्वतमर्हतीति पर्वतशब्दात् "छन्दसि च" (पा ५.१.६७) इति
[1]यत्प्रत्यय । धिषणाशब्दो व्युत्पादित प्राक् (तैसं १.१.२)। त्वामीदृशीं [V]दिवः [V]स्कम्भनिः
शम्या [V]प्रति [V]वेत्तु अनुजानातु उपरिनिधानम् ॥

दृषदुपलमत्याद्धाति—'धिषणा' इति ॥ [V]धिषणा धृष्टा [V]असि हे उपले ।
[V]पार्वतेयी, पर्वतिः परिपूर्णा महाशिला दृषल्लक्षणा । पूर्व पर्व मर्व पूरणे । "वहियस्यतिभ्यश्चित्"
१० (उ ५००) इति वहतिर्यसतिररतिरिति विधीयमानोऽतिप्रत्ययो बहुलवचनात् पर्वतेरपि भवति ।
तस्यागत्य पार्वतेयी । [2]शुभ्रादेः आकृतिगणत्वात् (पा ४.१.१२३) ढकि "कितः"

मूले [V]स्वक् इव त्वामभिमन्यताम् ॥ शम्याया शुक्लोकाधारत्वमपवादयति— "द्यावीवापृथि
सहाऽऽस्ताम् । ते शम्यामात्रमेकमहर्व्यैता॰ शम्यामात्रमेकमह । दिव स्कम्भनिरसि प्रति
त्वाऽदित्यास्त्वग्वेत्त्वित्याह । द्यावापृथिव्योर्वीत्यै" (तैब्रा ३.२ ६) इति । प्रजापतिना सृष्टे द्यावा-
१५ पृथिव्यौ पूर्वं जतुकाष्ठवत् परस्पर संश्लिष्टे अभूताम् । [5]ते पश्चादेकस्मिन् दिने शम्याप्रमाणेन परस्परं
वियुक्ते अभूताम् । प्रतिदिनं तथेति विवक्षया वीप्सोक्ता । तयो पुनः संश्लेषे यागस्यावकाशो न
स्यात् । ततो [6]विश्लेषार्थां दिवः स्कम्भनिरित्युच्यते ॥

धिषणेति ॥ कल्प —"तस्यां प्राचीं दृषदमध्यूहति धिषणासि पर्वत्या प्रति त्वा दिवः
स्कम्भनिर्वेत्त्विति" (बौश्रौ १.७) इति ॥ हे पेषणसाधनभूते दृषद्रूपे, त्वं वेष्टुमभिज्ञतया [V]धिषणा
२० [V]असि । [7]दृढतया [8]पर्वतावस्थानम् अर्हसि । तादृशीं त्वा शुक्लोकधारिका शम्याऽभिमन्यताम् ॥
सेयं दृषत् दृढतया लोकद्वयधारणाय कल्पत इत्याह- "धिषणाऽसि पर्वत्या प्रति त्वा दिवः
स्कम्भनिर्वेत्त्वित्याह । द्यावापृथिव्योर्विधृत्यै" (तैब्रा ३ २.६) इति ॥

धिषणेति ॥ कल्प —"दृषदुपलामध्यूहति धिषणाऽसि पार्वतेयी प्रति त्वा पर्वतिर्वेत्त्विति"
(बौश्रौ १ ७) इति ॥ पूर्ववत् । [V]पर्वति पर्वतसबन्धिनी दृषत् ॥ तथैव व्याचष्टे—"धिषणाऽसि
२५ पार्वतेयी प्रति त्वा पर्वतिर्वेत्त्वित्याह । द्यावापृथिव्योर्धृत्यै" (तैब्रा ३ २.६) इति ॥

१. नि. त प. व- य॰ । २ मै-'शुभ्रादे' नास्ति ।

५ उ मा. हा-तत. । ६. मै[२]. त-विश्लेषाय । ७ त-ऋद्धितया । ८ क-पर्वतावस्थाम्,
ख-पर्वतस्थानम्; मै[२]. तं-पर्वतास्थलम् ।

प्रति त्वा पर्वतिर्वेत्तु देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां
पूष्णो हस्ताभ्यामधि वपामि धान्यमसि धिनुहि देवान्

प्रतीति । त्वा । पर्वतिः । वेत्तु । देवस्य । त्वा । सवितुः । प्रसव इति प्र—सवे ।
अश्विनोः । बाहुभ्यामिति बाहु—भ्याम् । पूष्णः । हस्ताभ्याम् । अधीति । वपामि ।
धान्यम् । असि । धिनुहि । देवान् । ५

(पा ६·१·१६५) इत्यन्तोदात्तत्वम् । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् (पा ६.१.१६१) ।
[3]-शिलापुत्रे तदपत्यत्वमुपचर्यते-[3] । यस्मात् त्वं धिषणाऽसि पार्वतेयी, तस्मात् त्वां दुहितृ-
स्थानीयां सा [v4]पर्वतिः दृषत् [v]प्रति [v]वेत्तु, त्वां मातेव दुहितरमुत्सङ्गस्यामनुजानातु ॥

पुरोडाशीयानधिवपति—' देवस्य त्वा ' इति ॥ सावित्रो व्याख्यातः (तैसं १·१·४)।
अधिवपनं दृषदि प्रक्षेपणम् ॥ १०

अधिवपति—' धान्यम् ' इति ॥ [v]धान्यं पोषकम् [v]असि । दधातेः पोषणकर्मणः
" दधातेर्यन्नुट्° " (उ ७२६) इति यत्प्रत्ययः । बहुलवचनात् " यतोऽनावः "
(पा ६·१·२१३) इत्याद्युदात्तत्वं बाधित्वा " तित्स्वरितम् " (पा ६·१·१८५) ।
यद्वा— " तिल्यशिक्यमर्त्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः " (फि ७६) इति
अन्तस्वरितत्वम् । धिनोत्यर्थे प्रीणने वा दधातिर्वर्तते । यस्मात् त्वमीदृशमसि तस्माद्देवानां १५

देवस्येति ॥ बौधायनः—" तस्यां [9]पुरोडाशीयानुद्वपति देवस्य त्वा सवितुः प्रसवेऽश्विनो-
र्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टमधिवपाम्यग्नीषोमाभ्याममुष्मा अमुष्मा इति
यथादेवतम् । *अधिवपति धान्यमसि धिनुहि देवानिति " (बौश्रौ १·७) इति ।
आपस्तम्बस्तु ' धान्यमसि ' इत्यनेन सह [10]एकमन्त्रत्वमभिप्रेत्याऽऽह—" देवस्य त्वेत्यनु-
द्रुत्याग्नये जुष्टमधिवपामीति यथादेवतं दृषदि तण्डुलानधिवपति त्रिर्यजुषा तूष्णीं चतुर्थम् " (आपश्रौ २०
१·२१·५) इति ॥ अत्र वाक्यपूरणाय ' अग्नये ' इत्यादिकमध्याहृतम्, अतो यथाम्नातमेवाऽनूद्य
व्याचष्टे—" देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह । अश्विनौ हि
देवानामध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामित्याह यत्यै । अधिवपामीत्याह । यथादेवतमेवैनानधि-
वपति " (तैब्रा ३·२·६) इति ॥ ' देवान् प्रीणय ' इति यदुक्तं तस्य नास्त्यनुपपत्तिः, आहुति-
रूपस्य [11]धान्यस्य अल्पत्वेऽपि मन्त्रसामर्थ्येन तदभिवृद्धेरित्याह—"धान्यमसि धिनुहि देवानित्याह । २५

३–३. मै– शिलापुत्रकत्वदपत्यत्वमुपचर्यते। ४. ति. पं. व–ःपार्वती ।

९. उ. भा. द्रा–पुरोडाशीयानुपवपति; क–पुरोडाशीयान् निर्वपति, (बौश्रौसूत्रे 'पुरोडाशीयानधि-
वपति ') । *(बौश्रौसूत्रे 'अधिवदते')। १०. आ. क. द्रा–एकमन्त्रतामाश्रित्य । ११. च–साधनस्य ।

प्राणार्य त्वा(१)ऽपानार्य त्वा व्यानार्य त्वा दीर्घामनु प्रसितिमायुषे धां

प्राणायेति प्र-अनार्य। त्वा (१)। अपानायेत्यप-अनार्य। त्वा। व्यानायेति वि-अनार्य।

त्वा। दीर्घाम्। अन्विति। प्रसितिमिति प्र-सितिम्। आयुषे। धाम्।

---

[v]धिनुहि प्रीणय। यद्वा—धान्यं पोषणशील वर्धिष्णुस्त्वमावं हव्यमसि। तस्मात् [v]देवान् यावदभिलाषं

५ प्रथित्वा प्रीणय। "एतस्य यजुषो वीर्येण" ( तैब्रा ३.२.६ ) इत्यादि ब्राह्मणम्। हिवि दिवि धिवि जिवि प्रीणनार्थाः। "धिन्विकृण्व्योर च" (पा ३ १.८०) इति उप्रत्ययः। "अतो लोपः" (पा ६.४.४८)। "उतश्च प्रत्ययाच्छन्दो वा वचनम्" (पा ६.४.१०६ वा १) इति हेर्लुक् न क्रियते। पित्त्वनिषेधात् (पा ३.४.८७)ङित्त्वात् उदात्तत्वं च हेः॥

पिनष्टि—'प्राणाय त्वा' इति॥ [v]प्राणाय प्राणार्थं त्वा प्राचीन पिनष्मि, अपानार्थं

१० प्रतीचीन व्यानार्थं तिरश्चीनं, प्राणादिवृत्तीनामेवंरूपत्वात्। सर्वत्र थाथादिस्वरेणाऽन्तोदात्तत्वम् (पा ६.२.१४४)। घञर्थे कः, घञ् वा। बहुलमिति वचनाद्वृद्ध्यभावः। व्याने संहितायां छान्दसं दीर्घत्वम्॥

बाहू अन्ववेक्षते—'दीर्घामनु' (तैसं १.१.६) इति त्रिष्टुभैकपदया॥ प्रसितिः

---

एतस्य यजुषो वीर्येण। यावदेका देवता कामयते यावदेका। तावदाहुतिं प्रथते। न हि तदस्ति।

१५ यत्तावदेव स्यात्। यावज्जुहोति" ( तैब्रा ३.२.६ ) इति। वीप्सा सर्वत्राऽनुगमार्था। [12]यदि द्रव्य यावत् जुहोमि तावदेव देवान् प्राप्नुयात् तदा कथमिदमल्पं देवान् प्रीणयेदित्याशङ्क्येत, न तु तावदेवेति नियमोऽस्ति, किं तु यावत् काम्यते तावत् प्रवर्धते। ततः संभवत्येव प्रीणनम्॥

प्राणायेति॥ बौधायनः—"पिनष्टि प्राणाय त्वाऽपानाय त्वा व्यानाय त्वेति" (बौश्रौ १.७) इति। आपस्तम्बः—"प्राणाय त्वेति प्राचीमुपलां प्रोहत्यपानाय त्वेति प्रतीचीं व्यानाय त्वेति

२० मध्यदेशे व्यवधारयति, प्राणाय त्वाऽपानाय त्वा व्यानाय त्वेति सतत पिनष्टि" (आपश्रौ १.२१.१) इति॥ उच्छ्वासनिश्वासतत्सन्धिगताः वृत्तयः [13]प्राणापानव्यानाः। "अथ यः प्राणापानयोः सन्धिः स व्यानः" (छाउ १.३.३) इति श्रुत्यन्तरात्। हे हविः, वृत्तित्रयं [14]यजमाने चिरं[14] स्थापयितुं त्वां पिनष्मि॥ एतदेव दर्शयति—"प्राणाय त्वाऽपानाय त्वेत्याह। प्राणानेव यजमाने दधाति" (तैब्रा ३.२.६) इति॥

२५ दीर्घामिति॥ बौधायनः—अथ "बाहू अन्ववेक्षते दीर्घामनु प्रसितिमायुषे धामिति"

---

५. मै-'प्राणाय' नास्ति।

---

१२. द उ त. ब–यद्यीदम्, क मै[2]– यद्विदम्। १३. मै[2]–प्राणापानव्यानोदानादयः। १४-१४ घ-यजमानोचितम्।

दे॒वो वः॑ सवि॒ता हिर॑ण्यपाणि॒: प्रति॑ गृह्णातु ॥ ६ ॥

[ प्रा॒णाय॑ त्वा॒ पञ्च॑दश च ]

दे॒वः । व॒: । स॒वि॒ता । हिर॑ण्यपाणि॒रिति॒ हिर॑ण्य–पा॒णि॒: । प्रतीति॑ । गृ॒ह्णा॒तु॒ ॥ ६ ॥

[ मैसं १ १·६–७; कासं १·६; कपिसं १·६; वासं १·१९–२० ]

प्रबन्धः कर्मसंतानः । षिञ् बन्धने । “ तादौ च निति कृत्यतौ ” ( पा ६·२·५० ) इति ५
पूर्वपदप्रकृतिस्वरत्वम् । [v]दीर्घाम् अविच्छिन्नां [v]प्रसितिम् [v]अनु युवां [v]धां दधामि अविच्छिन्नेन
कर्मसंतानेन युवां संबध्नामि । “ तृतीयार्थे ” ( पा १·४·८५ ) इत्यनोः कर्मप्रवचनीयत्वम् ।
धामिति दधातेर्लेट् । “ इतश्च लोपः परस्मैपदेषु ” ( पा ३·४·९७ ) । “ बहुलं छन्दसि ”
( पा २·४·७३ ) इति शपो लुक् । [v]आयुषे आयुरर्थं यजमानस्याविच्छिन्नमायुर्भूयात् इति ।
यद्वा– आयुः अन्नं पुरोडाशलक्षणं तस्सिद्ध्यर्थम् ॥ १०

कृष्णाजिने पिष्टानि प्रस्कन्दयति––‘ देवः ’ इति ॥ व्याख्यातम् ( तैसं १·१·५ ) ।
“ अन्तरिक्षादिव वै ” ( तैब्रा ३·२·६ ) इत्यादि ब्राह्मणम् ॥

॥ इति प्रथमे षष्ठोऽनुवाकः ॥

---

( बौश्री १·७ ) इति । आपस्तम्बः–– “ प्राचीमन्ततोऽनुप्रोह्य ” ( आपश्रौ १·२१·७ ) इति ॥
प्रसितिः प्रबन्धः कर्मसंतानः । यजमानस्याऽऽयुरभिवृद्ध्यर्थमिमामविच्छिन्नकर्मसंततिहेतुरूपामुपलां १५
धारितवानस्मि ॥ तदेतदाह–– “ दीर्घामनु प्रसितिमायुषे धामित्याह । आयुरेवास्मिन् दधाति ”
( तैब्रा ३·२·६ ) इति ॥

देव इति ॥ कल्पः–– “ देवो वः सविता हिरण्यपाणिः प्रति गृह्णात्वित्ति कृष्णाजिने पिष्टानि
[१५]प्रस्कन्दयित्वा ” ( आपश्रौ १·२१·७ ) इति ॥ पूर्ववत् व्याचष्टे–– “ अन्तरिक्षादिव वा एतानि
प्रस्कन्दयन्ति । यानि दृषदः । देवो वः सविता हिरण्यपाणिः प्रति गृह्णात्वित्याह प्रतिष्ठित्यै । २०
हविषोऽस्कन्दाय ” ( तैब्रा ३·२·६ ) इति ॥ पत्नीं दासीं वा प्रति प्रैषमन्त्रमुत्पाद्य व्याचष्टे––
“ असंवपन्ती पिंष्टाणूनि कुरुतादित्याह मेध्यत्वाय ” ( तैब्रा ३·२·६ ) इति । तथा च सूत्रितम्––
“ असंवपन्ती पिंष्टाणूनि कुरुतादिति संप्रेष्यति । दासी पिनष्टि पत्नी वा । अपि वा पत्न्यवहन्ति
शूद्रा पिनष्टि ” ( आपश्रौ १·२१·७–९ ) इति । हे दासि, तण्डुलेष्वन्यद्द्रव्यं किमप्यप्रवेशयन्ती पेषणं
कुरु । तानि च पिष्टानि सूक्ष्माणि कुरु । तमिमं प्रैषमध्वर्युः पठेत् । पिष्टस्य सूक्ष्मत्वे पुरोडाशद्वारा २५
यज्ञयोग्यता भवति ॥

अत्र [१६]विनियोगसंग्रहः––

“ अवेति पूर्ववत्तत्र धास्यां स्थापयते दिवः ।
[१७]धिषणा द्वे-[१७] तथाऽश्मानौ देवेत्यधिनपेद्धविः ॥ १ ॥

---

१५. आ–प्रस्कन्दयति । १६. तं, मै[२]–विनियोगमन्त्रसंग्रहः । १७–१७. तं, मै[२]– धिषद्वयात्;
द. उ. भां, हा–धिषणद्वे ।

[१८]प्राणायेति त्रिभिः [१९]पिष्ट्वा दीर्घंत्वन्त उपोहति ।
देवोऽजिने [२०]स्कन्दयेत प्रोक्ता [२१]-एकादश त्विह-[२१] ॥ २ ॥ इति ॥

अथ मीमांसा—यद्यप्यत्र विशेषाकारेण विचारा बहवो नोपलभ्यन्ते तथाऽपि सामान्यविचाराः पूर्वोक्ता अनुसंधेयाः । 'इषे त्वा' इत्यत्र वाक्यपूर्तये यथाऽध्याहारस्तथैव 'अधिवपामि' इत्यत्रापि 'अग्नये जुष्टम्' इत्यादिकमध्याहर्तव्यम् । अध्याहृतस्य चानाम्नातत्वेनामन्त्रत्वादूहादिष्विव स्वराद्यपराधो नास्ति । किं च नवमाध्यायस्य प्रथमपादे चिन्तितम्—

"नोह्य ऊह्योऽथ वा धान्यशब्दो मांसगतोक्तितः ।
[२२]ऊह्यो लक्षणयाऽर्थस्य गोपानस्येव संगते." ॥ (जैन्या ९·१·१९) इति ॥

दर्शपूर्णमासयोः पेषणाय तण्डुलावापेऽयं मन्त्रो विहितः—"धान्यमसि धिनुहि देवान्" (तैस १·१·६) इति ॥ सोऽयं [२३]धान्यशब्दोऽसमवेतमर्थं ब्रूते, निस्तुषाणां तण्डुलानां धान्यशब्दार्थत्वाभावात् । [२४]तदयं सविन्नादिशब्दवन्नोहनीय इति चेत् । नैवम् । लक्षणावृत्त्या धान्यशब्दस्य तण्डुलरूपेऽर्थे समवेतत्वात् । यथा 'गाव पीयन्ते' इत्यत्र मुख्यवृत्त्यभावेऽपि नासमवेतार्थत्वं लोका वर्णयन्ति, किंतु पयो लक्षयित्वाऽर्थं समवेतमेव प्रतीयन्ति तद्वत् । तस्मात् [२५]शाक्यानामयने षट्त्रिंशत्संवत्सरे धान्यशब्द ऊहनीयः । तत्र ह्येवमाम्नायते—"[२६]सस्थितेऽहनि गृहपतिर्मृगयां याति । स तत्र यान् मृगान् हन्ति, तेषां तरसा सवनीया पुरोडाशा भवन्ति" इति (द्र. आपश्रौ २३ ११·१२-१३) । तत्र दर्शपूर्णमासवत् पेषणाय मांसमावपन् 'मांसमसि धिनुहि देवान्' इत्येव मन्त्रमूहेत् । ■ च धान्यशब्दवल्लक्षको मृगशब्द ऊहे प्रयोक्तव्य इति वाच्यम्, लक्षणावृत्ते प्रकृतावार्थिकत्वेनातिदेशानर्हत्वात् । तस्मात् मांसमित्येव धान्यशब्दस्योहः ॥

अथ व्याकरणम्— अवधूतमित्यादयो गताः । पर्वत्येत्यस्य पर्वतमर्हतीत्यस्मिन्नर्थे छन्दोविषये तकाररहितस्य यप्रत्ययस्य विधानात् प्रत्ययस्वरः । पार्वतेयीत्यत्र ङीपुदात्तः । पर्वतिरित्यत्र तदर्हतीत्यस्मिन्नर्थे छान्दस इकारप्रत्ययोऽप्युदात्तः । धान्यशब्दस्य "तित्यधिक्यमर्त्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणाम्°" (फि. ७६) इत्यन्तस्वरितत्वम् । धिनुहीत्यत्र "सेर्ह्यपिच्च" (पा ३·४·८७) इति पिच् स्थाने आदिष्टस्य शब्दस्य पित्त्वनिषेधात् प्रत्ययस्वरः । यद्यपि विकरणप्रत्ययस्योकारस्य स्वरः सतिशिष्टस्तथाऽपि व्यत्ययो द्रष्टव्यः । प्रसितिमित्यत्र कृदुत्तरपदप्रकृतिस्वरे[२७] प्राप्ते [२८]तदपवादः "तादौ च निति कृत्यतौ" (पा ६·२·५०) तुप्रत्ययव्यतिरिक्ते तकारादौ निति इति प्रत्यये परतः पूर्वपदप्रकृतिस्वरः भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः ॥

१८. व-प्राणायादि, त. मै[२]-प्राणाय त्वेति । १९. मै[२]- 'पिष्ट्वा' नास्ति । २०. च-स्कन्दयेत्तत् । २१-२१. क-एकादशेह तु । २२ इ. उ पा. मां. हा-ऊह्य । २३ आ. पा-धान्यशब्दोऽसमवेतार्थम्; क-धान्यशब्द समवेतमर्थम् । २४ क त व. मै[२]-तत । २५. त-जान्यानामयने । २६. व हा-संस्थिते संस्थितेऽहनि । २७. च-°स्वरत्वे, इ पा. मां. हा-स्वरपदत्वे । २८. इ. उ. मां. हा-तदपवादात् ।

धृष्टि॑रसि॒ ब्रह्म॑ य॒च्छापा॑ग्ने॒ऽग्निमा॒माद॑ं जहि॒ निष्क्र॒व्याद॑ꣳ से॒धाऽऽ दे॑व॒यजं॑ वह॒

धृष्टि॑ः । अ॒सि॒ । ब्रह्म॑ । य॒च्छ॒ । अपेति॑ । अ॒ग्ने॒ । अ॒ग्निम् । आ॒माद॒मित्या॑म—अद॑म् । ज॒हि॒ । निरिति॑ । क्र॒व्याद॒मिति॑ क्रव्य—अद॑म् । से॒ध॒ । एति॑ । दे॒व॒यज॒मिति॑ देव—यज॑म् । व॒ह॒ ।

धृष्टिमादत्ते—'धृष्टिः' इति ॥ [V]धृष्टिः उपवेषः । धृष्टिर्धर्षणे समर्था [V]असि शत्रूणाम् । अतो [V]ब्रह्म हविर्लक्षणमन्नं [V]यच्छ देहि । किं हि नाम त्वया न शक्यते कर्तुमिति ॥ ५

गार्हपत्यमभिमन्त्रयते—'अप' इति ॥ हे [V]अग्ने गार्हपत्य, यस्त्वयि आमात् अग्निः तं [V]जहि नाशय । आमात् अपक्वाशी हविषो विनाशकः । "अदोऽनन्ने" (पा ३·२·६८) इति विट्प्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६·२·१३९ ) ॥

अङ्गारं निरस्यति—'निः' इति ॥ [V]क्रव्यादम् अग्निं [V]निः [V]सेध निष्क्रम्य बहिरपनय । षिधू गत्यां भौवादिकः । आममांसभक्षकः क्रव्यात् चिताग्निः । "क्रव्ये च" १० ( पा ३·२·६९ ) इति विट्प्रत्ययः । पूर्वपदप्रकृतिस्वरत्वम् ॥

अङ्गारमन्यमावर्तयति—'[1]आ देवयजं वह इति[1]॥ देवान् यजतीति देवयट् । हविषां सम्यक् संपादकः । "अन्येभ्योऽपि दृश्यते" ( पा ३·२·१७८ ) इति क्विप्-

---

षष्ठानुवाके पेषणमुक्तम् । यद्यप्यनन्तरं पुरोडाशो निष्पादनीयस्तथाऽप्यतप्तेषु कपालेषु पुरोडाशस्य श्रपयितुमशक्यत्वात् सप्तमे कपालोपधानमभिधीयते ॥ १५

धृष्टिरिति ॥ कल्पः—"धृष्टिरसि ब्रह्म यच्छेत्युपवेषमादाय" ( आपश्रौ १·२२·२ ) इति । पलाशशाखामूले छिन्नः प्रादेशपरिमितः उपवेषः ॥ हे उपवेष, त्वमङ्गाराणां धर्षणे समर्थः [V]असि । अतो ब्रह्मशब्दोदितं [1]पुरोडाशरूपं देवान्नं[1] प्रयच्छ ॥ धृष्टिशब्दो धैर्यद्योतनायेत्याह—"धृष्टिरसि ब्रह्म यच्छेत्याह धृत्यै" ( तैब्रा ३·२·७ ) इति ॥

अपाग्न इति ॥ कल्पः—"अपाग्नेऽग्निमामादं जहीति [2]गार्हपत्यात् प्रत्यञ्चावङ्गारौ निर्वर्त्य २० निष्क्रव्यादꣳ सेधेति तयोरन्यतरमुत्तरमपरमवान्तरदेशं[3] निरस्याऽऽदेवयजं वहेति दक्षिणमवस्थाप्य" ( आपश्रौ १·२२·२ ) इति ॥ हे गार्हपत्य [V]अग्ने, योऽग्निः शास्त्रीयं पाकमन्तरेणाऽऽमं द्रव्यमत्ति न तु [4]पाकार्थं स्थापितस्य पाकं करोति तम् [V5-]अप [V]जहि [-5]मारय । यश्च लौकिकं मांसमत्ति तमपि निषेधय । यस्तु देवान् यजति तम [V]आ [V]वह ॥ यथोक्तस्य अग्न्यानयनस्य कपालोपधानार्थतां दर्शयन् प्रशंसति—"अपाग्नेऽग्निमामादं जहि निष्क्रव्यादꣳ सेधाऽऽ देवयजं वहेत्याह । य २५ एवाऽऽमात् क्रव्यात् । तमपहत्य । मेध्येऽग्नौ कपालमुपदधाति" ( तैब्रा ३·२·७ ) इति ॥

---

१–१. मै– एति ।

---

१. व-पुरोडाशं देवानाम् । २. आ–'गार्हपत्यात्' इत्यस्यानन्तरम् 'आहवनीयाद्वा' । ३. आ–°देशम्' इत्यस्यानन्तरं 'वा' । ४. आ, इ, उ, मां. ह्य–पाकार्थं° । ५–५. आ. क–अपनय; तं–अपनीय ।

निर्दंग्धꣳ रक्षो निर्दंग्धा अरातयो ध्रुवमसि पृथिवीं दृꣳह्वाऽऽयुर्दृꣳह
प्रजां दृꣳह सजातानस्मै यजमानाय पर्यूह

निर्दग्धमिति निः–दग्धम्। रक्षः। निर्दंग्धा इति निः–दग्धाः। अरातयः।
ध्रुवम्। असि। पृथिवीम्। दृꣳह। आयुः। दृꣳह। प्रजामिति प्र–जाम्।
५ दृꣳह। सजातानिति स–जातान्। अस्मै। यजमानाय। परीति। ऊह।

प्रत्यय[२]। स एव प्रकृतिस्वरः। [v]देवयजम् अग्निम् [v]आ [v]वह आनय। "य एवामाव्रभ्यात्" (तैब्रा ३.२.७) इत्यादि ब्राह्मणम्॥

अङ्गारमधिवर्तयति—'निर्दग्धम्' इति॥ प्रत्युष्टादिना व्याख्यातम् (तैसं १.१.२)। "अग्निवत्युपदधाति" (तैब्रा ३.२.७) इत्यादि ब्राह्मणम्॥

१० मध्यमकपालमुपदधाति—'ध्रुवम्' इति॥ [v]ध्रुव निश्चल मध्यमं सर्वकपालानाम् [v]असि। [३]सर्वं तद्वत्[३]। [v]पृथिवीं दृढां कुरु। दृह दृहि वृद्धौ। अन्तर्भावितण्यर्थः। पृथिवीशब्दो ङीषन्तोऽन्तोदात्तः। यजमानस्य [v]आयुः [v]प्रजां च [v]दृह। प्रजाशब्दः कृदुत्तरपदप्रकृतिस्वरेण (पा ६.२.१३९) अन्तोदात्त। किं च [v]अस्मै [v]यजमानाय। षष्ठ्यर्थे चतुर्थी (पा २.३.६२वा१)। अस्य यजमानस्य [v]सजातान् समानजन्मनः [v]पर्यूह परितः सेवमानान् कुरु। "सजातानस्मा

१५ निर्दग्धमिति॥ "निर्दग्धꣳ रक्षो निर्दग्धा अरातय", "ध्रुवमसि पृथिवीं दृꣳहायुर्दृꣳह प्रजां दृꣳह सजातानस्मै यजमानाय पर्यूह" [६]इत्येतयोर्मन्त्रयोरर्थक्रमेण विनियोगः कल्पे दर्शित — "ध्रुवमसीति तस्मिन् [७]मध्यमपुरोडाशकपालमुपदधाति। निर्दग्धꣳ रक्षो निर्दग्धा अरातय इति कपालेऽङ्गारमत्याधाय" (आपश्रौ १.२२.२-३) इति॥ हे कपाल, त्वं दृढम् [v]असि, अत पृथिव्यादीन् दृढीकुरु। अस्य यजमानस्य ज्ञातीन् परितः सेवकान् कुरु। अस्मिन् कपालेऽवस्थितं [v]रक्ष नि शेषेण दग्धम्॥ आम्नान-
२० क्रमेण निर्दग्धमन्त्रमादौ व्याचष्टे—"निर्दग्धꣳ रक्षो निर्दग्धा अरातय इत्याह। रक्षाꣳस्येव निर्दहति" (तैब्रा ३.२.७) इति॥ [८]कपालोपधानं विधत्ते—"अग्निवत्युपदधाति। अस्मिन्नेव लोके ज्योतिर्धत्ते" (तैब्रा ३.२.७) इति। यथोक्ताङ्गारयुक्ते प्रदेशे कपालमुपदध्यात्॥ [९]कपालस्योपरि अन्यस्याङ्गारस्य स्थापनं विधत्ते—"अङ्गारमधिवर्तयति। अन्तरिक्ष एव ज्योतिर्धत्ते" (तैब्रा ३.२.७) इति॥ कपालस्याध ऊर्ध्वं च स्थिताभ्यामङ्गाराभ्यां लोकद्वयस्य ज्योतिष्मत्वे ततोऽप्यूर्ध्वमङ्गारस्य स्थापनासंभवात्
२५ दिवो ज्योतिर्न स्यादिति न शङ्कनीयमित्याह—"आदित्यमेवामुष्मिँल्लोके ज्योतिर्धत्ते" (तैब्रा ३.२.७) इति॥ एतद्वृत्तान्तज्ञानं प्रशंसति—"ज्योतिष्मन्तोऽस्मा इमे लोका भवन्ति। य एवं वेद" (तैब्रा ३.२.७) इति॥

२. त. ति. पं ब– विच्प्रत्ययः। ३–३. त. ति. प. ब– स त्वद्वत्।

६ त–इत्यनयोर्मन्त्र°। ७. आ का. पा. हा–मध्यम पुरोडाश°। ८. आ, उ, भा–कपालानामुपधानम्। ९. आ. इ, उ. भो. हा–कपालोपरि।

धर्त्रमस्यन्तरिक्षं दृꣳह प्राणं दृꣳहापानं दृꣳह सजातानस्मै
यजमानाय पर्यूह धरुणमसि दिवं दृꣳह चक्षु(१)र्दृꣳह श्रोत्रं दृꣳह

धर्त्रम्। असि। अन्तरिक्षम्। दृꣳह। प्राणमिति प्र-अनम्। दृꣳह।
अपानमित्यप-अनम्। दृꣳह। सजातानिति स-जातान्। अस्मै। यजमानाय। परीति।
ऊह। धरुणम्। असि। दिवम्। दृꣳह। चक्षुः(१)। दृꣳह। श्रोत्रम्। दृꣳह। ५

अभितो बहुलान् करोति " (तैब्रा ३.२.७) इत्यादि ब्राह्मणम्। "समानस्य छन्दसि°" (पा ६.३.८४) इत्यादिना सभावः। "वा जाते" (पा ६.२.१७१) इत्युत्तरपदान्तोदात्तत्वम्। जात्यादिग्रहणं नानुवर्तिष्यते। "ऊडिदम्°" (पा ६.१.१७१) इत्यादिना अस्मा इति विभक्तेरुदात्तत्वम्। लसार्वधातुकानुदात्तत्वे (पा ६.१.१८६) यजमाने धातुस्वरः। "उपसर्गादस्यत्यूह्योर्वा वचनम्" (पा १.३.२९ वा ३) इत्यूहतेः परस्मैपदत्वम्॥ १०

पूर्वार्धमुपदधाति—'धर्त्रम्' इति॥ [v]धर्त्रं धारकं पुरस्तात् पुरोडाशस्य [v]असि। धृञ् धारणे। "गुधृवीपचि°" (उ ६०६) इत्यादिना त्रप्रत्ययः। [४]त्वम् अन्तरिक्षादिकं [v]दृंह निश्चलं धारय। प्राणापानशब्दौ थाथादिस्वरेण (पा ६.२.१४४) अन्तोदात्तौ। समानमन्यत्॥

अपरार्धमुपदधाति—'धरुणम्' इति॥ [v]धरुणं धारकम् अपरतः पुरोडाशस्य

धर्मेमिति॥ बौधायनः—"अथ पूर्वार्ध्यमुपदधाति धर्त्रमस्यन्तरिक्षं दृꣳह प्राणं दृꣳहापानं दृꣳह सजातानस्मै यजमानाय पर्यूहेति। अथापरार्ध्यमुपदधाति धरुणमसि दिवं दृꣳह चक्षुर्दृꣳह श्रोत्रं दृꣳह सजातानस्मै यजमानाय पर्यूहेति। अथ दक्षिणार्ध्यमुपदधाति धर्मासि दिशो दृꣳह योनिं दृꣳह प्रजां दृꣳह सजातानस्मै यजमानाय पर्यूहेति। [१०-]अथ पूर्वार्ध्यमुपदधाति[-१०] चितः स्थ प्रजामस्मै रयिमस्मै सजातानस्मै यजमानाय पर्यूहेति" (बौश्रौ १.८) इति। आपस्तम्बः—"धर्त्रमसीति पूर्वं द्वितीयꣳ सꣳस्पृष्टं धरुणमसीति पूर्वं तृतीयम्" (आपश्रौ १.२२.६) इति। "धर्मासीति सप्तमं चितः स्थेत्यष्टमम्" (आपश्रौ १.२३.१) इति॥ तत्र धर्त्रधर्मधरुणशब्दा धारकत्वं ब्रुवन्तो दृढत्वं लक्षयन्ति। हे अष्टमकपाल, त्वं [११]चितरूपोऽसि। ततो यजमानस्य प्रजादिकं परितः संपादय। प्रजादेः प्रत्येकमुपचयविवक्षया पृथग्वाक्यत्वं द्योतयितुम् 'अस्मै' इति पदस्याऽऽवृत्तिः। 'चितः स्थ' इति बहुवचनमादरार्थम्॥ क्रमेण मन्त्रान् व्याचष्टे—"ध्रुवमसि पृथिवीं दृꣳहेत्याह। पृथिवीमेवैतेन दृꣳहति। धर्त्रमस्यन्तरिक्षं दृꣳहेत्याह। अन्तरिक्षमेवैतेन दृꣳहति। १५ २० २५

४. मै—'त्वम्' नास्ति।

१०-१०. इ. पा. हा— अथोत्पूर्वार्ध्यमुपदधाति; [बौश्रौसूत्रे 'पूर्वमुपचितमुपदधाति']।
११. आ. इ. उ. तं. पा. मां. हा-उपचित°।

सजातानस्मै यजमानाय पर्यूह धर्मासि दिशो दृꣳह योनिं दृꣳह
प्रजां दृꣳह सजातानस्मै यजमानाय पर्यूह चितः स्थ प्रजामस्मै रयिमस्मै

सजातानिति स-जातान्। अस्मै। यजमानाय। परीति। ऊह। धर्म। असि। दिशः।
दृꣳह। योनिम्। दृꣳह। प्रजामिति प्र-जाम्। दृꣳह। सजातानिति स-जातान्। अस्मै।
५ यजमानाय। परीति। ऊह। चितः। स्थ। प्रजामिति प्र-जाम्। अस्मै। रयिम्। अस्मै।

---

[५]असि। "धारेर्णिलुक्च" इति उनन्प्रत्ययः। तद् त्वं धुप्रभृतीनि [५]दृꣳह। समानमन्यद्॥

दक्षिणार्धमुपदधाति—'धर्म' इति॥ [५]धर्म धारकं दक्षिणतः पुरोडाशस्य [५]असि। धृञो मनिन्। अत्र तु प्रजननशक्तिः प्रजा॥

अन्यान्युपदधाति—'चित' इति॥ चीयन्ते उपचीयन्ते इति चितः चितयः।
१० यस्मात् [५]चित [५]स्थ, तस्मादस्य यजमानस्य प्रजार्थं पर्यूहत परितश्चिनुत। प्रत्येकमभिधानात् एकवचनम्। [५]शिष्टं स्पष्टम्॥

---

धरुणमसि दिवं दृꣳहेत्याह। दिवमेवैतेन दृꣳहति। धर्मासि दिशो दृꣳहेत्याह। दिश एवैतेन दृꣳहति" (तैब्रा ३.२.७) इति॥ उपसंहरति—"इमानेवैतैर्लोकान् दृꣳहति" (तैब्रा ३.२.७) इति॥ एतद्वेदनं प्रशंसति—"दृꣳहन्तेऽस्मा इमे लोकाः प्रजया पशुभिः। य एवं वेद॥ (तैब्रा ३.२.७)
१५ इति। सर्वत्र विधेयार्थं केनापि प्रकारेण स्तुत्वा श्रद्धोत्पादनीयेति व्युत्पादयितुं कपालोपधानं बहुधा स्तौति। तत्राऽयमेकः प्रकारः—"त्रीण्यग्रे कपालान्युपदधाति। त्रय इमे लोकाः। एषां लोकानामाप्त्यै" (तैब्रा ३.२.७) इति। मध्यमपूर्वापरकपालगतं [१२]त्रित्वमपि प्रशस्तम्॥ अथापरः प्रकारः—"एकमग्रे कपालमुपदधाति। एकं वा अग्रे कपालं पुरुषस्य संभवति। अथ द्वे। अथ त्रीणि। अथ चत्वारि। अथाष्टौ। तस्मादष्टाकपालं पुरुषस्य शिरः॥ (तैब्रा ३.२.७) इति। प्रथमं
२० 'ध्रुवमसि' इत्येकं कपालमुपधीयते। ततो 'धर्त्रमसि' इत्यनेन सह द्वे। 'धरुणमसि' इत्यनेन सह त्रीणि। 'धर्मासि' इत्यनेन सह चत्वारि। ततः केषाञ्चित् मते 'चितः स्थ' इत्यनेनैवोपरितनानि चत्वारीत्यष्टौ भवन्ति। पुरुषस्यापि गर्भे प्रथमं शिरोरूपमखण्डं कपालमुत्पद्यते। पश्चात् क्रमेण रेखाभिरष्टधा भिद्यते॥ कपालेषु मत्यो स्तुत्वा तदुपधानं स्तौति—"यदेव कपालान्युपदधाति। यज्ञो वै प्रजापतिः। यज्ञमेव प्रजापतिꣳ संस्करोति। आत्मानमेव तत्संस्करोति। तꣳ संस्कृतमात्मानम्। अमुष्मिँल्लोकेऽनुपरैति"
२५ (तैब्रा३.२.७)इति। उपधानेन कपालेषु संस्कृतेषु तद्द्वारा तत्साध्यो यागः संस्क्रियते। यज्ञद्वारा तत्स्वः

---

५. ब- अन्यत्।

---

१२. क-त्रित्वमपीत्यम्; तं-त्रित्वमित्यम्।

संजातानस्मै यजमानाय पर्यूंह भृगूणामङ्गिरसां तपसा तप्यध्वं

सजातानिति स–जातान् । अस्मै । यजमानाय । परीति । ऊह ।

भृगूणाम् । आङ्गिरसाम् । तपसा । तप्यध्वम् ।

अङ्गारैरभिवासयति—‘ भृगूणाम् ’ इति ॥ भृगवोऽङ्गिरसश्च तपस्विनः प्रसिद्धाः । तेषां तपसा तप्यध्वं तप्तानि भवत । कर्मणि लकारः । “ देवतानामेव ” ( तैब्रा ३·२·७ ) ५ इत्यादि ब्राह्मणम् ॥

कपालानि विमुञ्चति—‘ यानि ’ इति । इष्टिसंस्थानकालभाविनोऽपि विमोकमन्त्रस्य प्रासङ्गिकमिहाऽऽम्नानम् । इयं चतुष्पदाऽनुष्टुप् । यणादेशाकरणेन प्रथमतृतीयौ पूरणीयौ[6] ।

प्रजापतेः संस्कारः । तेन कपालयज्ञप्रजापतिसंस्कारेण तेषां संस्कृतत्वात् यजमानः स्वयं संस्कृतो भवति । तं च संस्कृतं [13]स्वर्गे लोके गच्छन्तमनु फलदानाय यज्ञः प्रजापतिरूपधारी कश्चिद्देवो गच्छति ॥ अपरः १० प्रकारः—“ यदष्टावुपदधाति । गायत्रिया तत्संमितम् । यन्नव । त्रिवृता तत् । यद्दश । विराजा तत् । यदेकादश । त्रिष्टुभा तत् । यद्द्वादश । जगत्या तत् । छन्दःसंमितानि स उपदधत्कपालानि । इमाँल्लोकाननुपूर्वं दिशो विधृत्यै दृꣳहति । अथाऽऽयुः प्राणान् प्रजां पशून् यजमाने दधाति । सजातानस्मा अभितो बहुलान् करोति ” ( तैब्रा ३·२·७ ) इति । त्रिवृच्छब्दः स्तोमवाची । स च स्तोमः “ उपास्मै गायता नरः ” ( ऋसं ९·११·१ ) इत्याद्यृग्भिर्नवभिः संपद्यते । छन्दःशब्दश्च स्तोम- १५ मप्युपलक्षयति । गायत्रीविराट्त्रिष्टुब्जगतीनां चाष्टत्वाद्यक्षरसंख्या प्रसिद्धा । [14]तथा संख्यया छन्दः-साम्यम् । नन्वग्नाऽऽग्नेयस्याष्टौ कपालान्यग्नीषोमीयस्य चैकादश, न तु नवादिसंख्या लभ्यत इति चेत् । बाढम् । तथाऽपि संख्याऽन्यत्र [15]विद्यमाना प्रसङ्गादिह स्तूयते । त्रयोदशसंख्या न क्वाप्यस्ति । एकादिका सप्तपर्यन्ता संख्याऽप्यत्रास्तीति चेत्तर्हि तस्या अप्यनेन न्यायेन स्तुतिरूह्या । ईदृशानि कपालान्युपदधानोऽध्वर्युरनुक्रमेण पृथिव्यादिलोकान् प्रागादिदिशश्च दृढीकरोति । लोकबुद्ध्या २० कपालानां स्थापितत्वात् । अत इदमुपधानं लोकदृढ्यै भवति । किं चाऽऽयुरादीन् भ्रातृपुत्रांश्च यजमाने संपादितवान् भवति । क्रमप्राप्ते मन्त्रे स्पष्टार्थत्वं दर्शयति—“ चितः स्थेत्याह । यथा यजुरेवैतत् ” ( तैब्रा ३·२·७ ) इति ॥

भृगूणामिति ॥ कल्पः—“ भृगूणामङ्गिरसां तपसा तप्यध्वमिति वेदेन कपालेष्वङ्गारानध्यूह्य ” ( आपश्रौ १·२२·६ ) इति ॥ हे कपालानि, देवतातपोरूपेणाऽग्निना तप्तानि भवत ॥ इममेवार्थं २५ दर्शयति—“ भृगूणामङ्गिरसां तपसा तप्यध्वमित्याह । देवतानामेवैनानि तपसा तपति ” ( तैब्रा ३·२·७ ) इति ॥

यानीति ॥ अयं मन्त्रो यद्यपि यागसमाप्तौ पठनीयस्तथाऽपि [16]कपालप्रसङ्गादिहाऽऽम्नातः ।

६. ति. व– पूर्यौ ।

१३. इ. उ. भां. हा–स्वर्ग° ।　　१४. क–‘ तथा ’ नास्ति; तं. व.– तथा ।　　१५. व–स्तूयमाना ।
१६. तं–‘ कपाल° ’ नास्ति ।

यानि॑ घ॒र्मे क॒पाला॑न्युपचि॒न्वन्ति॑ वे॒धसः॑ ।
पू॒ष्णस्तान्यपि॑ व्र॒त इ॑न्द्रवा॒यू वि मु॑ञ्चताम् ॥ ७ ॥

[ च॒क्षु॒रष्टाच॑त्वारिꣳशच्च ]

यानि॑ । घ॒र्मे । क॒पाला॑नि । उ॒प॒चि॒न्वन्तीत्यु॑प–चि॒न्वन्ति॑ । वे॒धसः॑ ।
५ पू॒ष्णः । तानि॑ । अपीति॑ । व्र॒ते । इ॒न्द्र॒वा॒यू इतीन्द्र–वा॒यू । वीति॑ । मु॒ञ्च॒ता॒म् ॥ ७ ॥

[ मैस १ १·८, कासं १ ७, कपिस १ ७, वास १·१७–१८ ]

विधायको वेधाः अध्वर्युं । विध विधाने । असुन्प्रत्यय. ( उ ६६४ ) । उञ्छादित्वात् (पा ६.१.१६० ) अन्तोदात्तः । व्यत्ययेन बहुवचनम् । एको ह्यध्वर्युरुपदधाति । [V]यानि [V]कपालानि [V]घर्मे अङ्गारे [V]वेधस· [V]उपचिन्वन्ति उपहितवन्त.। वर्तमानसामीप्ये (पा ३.३.१३१)
१० लट् । [V]तानि कपालानि [V]इन्द्रवायू [V]वि [V]मुञ्चताम् । 'ध्रुवमसि' इत्यादि मन्त्रैरुपहितानां तावेव निमोचकाविति भाव· । "नोत्तरपदेऽनुदात्तादौ॰" ( पा ६·२·१४२ ) इत्युभयपदप्रकृति·स्वरत्वे निषिद्धे समासान्तोदात्तत्वम् । किमुपधानं विमोकार्थमित्यत आह– [V]पूष्ण. पोपकस्याग्नेः। उदात्तनिवृत्तिस्वरेण (पा ६ १.१६१) निभक्तेरुदात्तत्वम्। तस्य [V]व्रते हवि·श्रपणलक्षणे कर्मणि अपीते समाप्ते इदानीं विमुञ्चतामिति। "स ते मनसा मनः" (तैंस १·३·१० ) इत्यादिवद्
१५ 'अपि' इति उपसर्गश्रुतेर्योग्य क्रियापदमध्याह्रियते। उपचिन्वन्ति इत्यत्र "सतिशिष्टोऽपि विकरणस्वरो लसार्वधातुकस्वरं न बाधते" इति वचनात् लसार्वधातुकाद्युदात्तत्वम्। "चतुष्पदयर्चा "( तैंब्रा ३·१·७ ) इत्यादि ब्राह्मणम् ॥

॥ इति प्रथमे सप्तमोऽनुवाकः ॥

तद्विनियोगश्च[१७] दर्शितः— "यानि घर्मे कपालानीति चतुष्पदयर्चा कपालानि विमुच्य संस्थायोद्वा-
२० सयति । सतिष्ठेते दर्शपूर्णमासौ" ( आपश्रौ ३·१४·४-५ ) इति । अध्वर्युरूपा [V]वेधसः [V]यानि [V]घर्मे [V]कपालानि आदीप्ते वह्नौ 'ध्रुवमसि' इत्यादिमन्त्रैरुपस्थापितवन्त । पूजार्थं बहुवचनम्। तादृशान्यपि कपालानि विमोक्तुं समर्थौ [V]इन्द्रवायू पोषकस्य यजमानस्य यागरूपे [V]व्रते समाप्ते सति [V]वि [V]मुञ्चताम् ॥ अनेकगुणविशिष्टं विमोकं विधत्ते— "तानि ततः सꣳस्थिते। यानि घर्मे कपालान्युपचिन्वन्ति वेधस इति चतुष्पदयर्चा विमुञ्चति। चतुष्पाद· पशवः पशुष्वेवोपरिष्टात्
२५ प्रतितिष्ठति" ( तैब्रा ३ २·७ ) इति ॥

अत्र विनियोगसंग्रह —

" धृष्टिरादायोपवेषमपाङ्गारौ वियोजयेत् ।
निष्क्रापसारयेदेकमा देवान्यं तु दीपयेत् ॥ १ ॥

[१७] धा. क–तद्विनियोगः सूत्रे ।

ध्रुवं कपालमाधाय निर्दाह्यारं तथोपरि।
धत्रं द्वितीयं धरुणं तृतीयं धर्मसप्तमम् ॥ २ ॥
चितोऽष्टमं भृगू तेषु सर्वेष्वङ्गाररोपणम्।
यानि स्वकाले संप्राप्ते कपालानि विमुञ्चति
अनुवाके सप्तमेऽस्मिन्नुक्ता द्वादश मन्त्रकाः" ॥ ३ ॥ इति ॥



अथ मीमांसा— चतुर्थाध्यायस्य प्रथमपादे चिन्तितम्—
"श्रपणं तुपवापश्च कपालस्य प्रयोजकौ।
उत श्रपणमेवाऽऽद्यो वापार्थत्वात्तृतीयया ॥
पुरोडाशकपालेति नाम्ना स्याच्छ्रपणार्थता।
प्रयुक्तस्य प्रयुक्तिर्नो तस्य वापे [१८]प्रसञ्जनम्" ॥ (जैम्या ४·१·२२–२३) इति ॥ १०

"कपालेषु श्रपयति" इति श्रपणं पुरोडाशस्य श्रुतम्। तथा "पुरोडाशकपालेन तुषानुपवपति" इति कपाले तुषधारणं श्रुतम्। ते च तुषाः सकपालाः "रक्षसां भागोऽसि" इति मन्त्रेण कृष्णाजिनस्याधस्ताद् अवस्यापनीयाः। तत्र श्रपणं यथा कपालसंपादनस्य प्रयोजकं तथा तुषवापोऽपि प्रयोजकः। "एकहायन्या" (तैसं ६.१.६) इति तृतीयया यथा गोः क्रयार्थत्वं तथा "कपालेन" इति तृतीयया कपालस्य [१९]तुषवापार्थत्वावगमादिति चेत्। मैवम्। नात्र कपालमात्रस्य तुषोपवापसाधनत्वं श्रुतम्। किं तर्हि? यत्कपालं पुरोडाशश्रपणायोपात्तमासादितं च तस्यैव कपालस्य साधनत्वम्। एतच्च पुरोडाशकपालेनेति सविशेषणनाम्ना तद्विधानादवगम्यते। तथा सति प्रथमं श्रपणेन कपालं प्रयुज्यते। न च प्रयुक्तस्य पुनः [२०]तुषवापेन प्रयुक्तिः[२०] संभवति। तस्माच्छ्रपणेनैव प्रयुक्तं कपालं तुषोपवापेऽपि प्रसङ्गात् सिध्यति। ईदृशमेवाङ्गत्वं तृतीयाश्रुत्या बोध्यते ॥ १५

अथ व्याकरणम्—धृष्टिशब्दः क्तिन्प्रत्ययान्तत्वादाद्युदात्तः। आमाच्छब्दे कृत्स्वरः। तथैव देवयज्शब्दः। निर्दग्धमिति प्रयुष्टवत्। सजातानित्य[अ] समानं जातं जन्म येषां ते सजाताः। "वा जाते" (पा ६·२·१७१) जातशब्द उत्तरपदे बहुव्रीहौ [२१]समासे विकल्पेनान्तोदात्तो[२१] भवति। भृग्वङ्गिरःशब्दौ भृगादी। उपचिन्वन्तीत्यत्र यानीत्यनेन यच्छब्दयोगान्निघाताभावः। विकरणप्रत्ययस्वरस्य सतिशिष्टस्यापि अबलीयस्त्वेन "उदात्तयणः०" (पा ६·१·१७४) इति उपरितनस्याकारस्योदात्तः। पूर्ण इत्यत्र "अनुदात्तस्य च यत्रोदात्तलोपः" (पा ६·१·१६१) इति विभक्तिरुदात्ता। इन्द्रवायू इत्यत्र "देवताद्वन्द्वे च" (पा ६·२·१४१) इत्युभयपदप्रकृतिस्वरत्वे प्राप्ते तदपवादः "नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु" (पा ६·२·१४२) अनुदात्तादौ पृथिव्यादिव्यतिरिक्त उत्तरपदे देवताद्वन्द्वस्वरो न भवति। ततः "समासस्य" (पा ६·१·२२३) इत्यन्तोदात्तः ॥ २० २५

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-
संहिताभाष्ये प्रथमप्रकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ३०

---

१८. व– प्रयोजनम्। १९. क– तुषोपवापार्थावगमादिति; तं–तुषवापार्थत्वावधारणात्।
२०–२०. तं–तुषावापेन प्रयुक्तिः, व–तुषवापनप्रयुक्तिः। २१–२१. क–समासान्तोदात्तः।

## सं वपामि समापो अद्भिरग्मत समोषधयो रसेन

समिति । वपामि । समिति । आपः । अद्भिरित्यत्–भिः । अग्मत । समिति । ओषधयः । रसेन ।

पिष्टानि सवपति—' सम् ' इति ॥ समित्येकीभावे; सह प्रक्षिपामि । सावित्रशेषश्चायम् । " अग्नये जुष्टम् " ( तैसं १.१ ४ ) इत्यपि लभ्यते ॥

प्रणीता मदन्तीरानीयमाना प्रतिमन्त्रयते—' समापः ' इति वक्ष्यमाणवस्त्रादिल्पपदया उपरिष्टाद्व्यूह्या ॥ [v]आपः प्रणीतालक्षणाः । [v]अद्भिः मदन्तीलक्षणाभिः [v]सम् [v]अग्मत संगच्छन्ताम्[1] । " ऊडिदम्° " ( पा ६.१.१७१ ) इत्यादिना असर्वनामस्थानविभक्तेरुदात्तत्वम् । " छन्दसि लुङ्लङ्लिटः " ( पा ३.४.६ ) इति लुङ् । " समो गम्यृच्छिभ्याम् " ( पा १.३.२९ ) इत्यात्मनेपदम् । " बहुलं छन्दसि " ( पा २.४ ७३ ) इति शपो लुक् । " आत्मनेपदेष्वनतः " ( पा ७ १ ५ ) इत्यदादेशः । यद्वा तेनैव लुङ् । " मन्त्रे घस° " ( पा २.४.८० ) इत्यादिना ल्रेर्लुक् । " °गमहन° " ( पा ६.४.९८ ) इत्युपधालोपः । किं च [v]ओषधयः पिष्टलक्षणाः [2]अनेन आनीयमानेन द्विप्रकारेण [v]रसेन जलेन संगच्छन्ताम् । ओषा धीयन्त आस्वित्योषधयः । दासीभारादित्वात् ( पा ६.२.४२ ) पूर्वपदप्रकृतिस्वरत्वम् । ओषशब्दो घञन्त आद्युदात्तः । " कर्मण्यधिकरणे च "

सप्तमे कपालोपधानमुक्तम् । सतस्तेषु लब्धावसरत्वादष्टमे पुरोडाशश्रपणमभिधीयते ॥

समिति ॥ ' सवपामि ' इत्यस्याऽऽम्नातस्य मन्त्रस्य शेषं पूरयित्वा विनियोगः कल्पे दर्शितः—" अथोत्तरेण गार्हपत्यमुपविश्य वाचयम तिर पवित्रं पात्र्यां कृष्णाजिनात् पिष्टानि संवपति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं सं वपामि अग्नीषोमाभ्याममुष्मा अमुष्मा इति " ( बौश्रौ १.९ ) इति ॥ अपेक्षितस्थाने [1]अयोक्तव्य इत्येतमर्थं दर्शयितुमेव निर्वापपेषणयोः ' देवस्य त्वा ' इति मन्त्रो द्विराम्नातः । [2]अत्रानाम्नातमप्यनेनैवाभिप्रायेण[2] व्याचष्टे—" देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह । अश्विनौ हि देवानामध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामित्याह यत्यै । सं वपामि इत्याह । यथादेवतमेवैनानि संवपति " ( तैब्रा ३.२ ८ ) इति ॥

समापः इति ॥ बौधायनः—" प्रणीताभ्यः स्रुवेणोपहत्य वेदेनोपयम्य पाणिं चान्तर्धायैव मदन्तीभ्यः ता उभयीरानीयमानाः प्रतिमन्त्रयते समापो अद्भिरग्मत समोषधयो रसेन सं रेवतीर्जगतीभिर्मधुमतीर्मधुमतीभिः सृजध्वमिति " ( बौश्रौ १.९ ) इति । पूर्वं चमसे संगृहीता आपः प्रणीताः । तथा आपो

१. ति ब–' सगच्छन्ताम् ' इत्यस्यानन्तरं ' अद्भिः ' । २. मै– रसेन ।

१. इ. ट. त. पा. मा. द्वा–ऽयोक्तव्यम् । २-२ इ [illegible] द्वा–अनेनैव प्रयोक्तव्यमित्यभिप्रायेण

सः रे॒वती॒र्जग॑तीभि॒र्मधु॑मती॒र्मधु॑मतीभिः सृज्यध्व॒मद्भ्यः

समिति॑ । रे॒वतीः॑ । जग॑तीभिः । मधु॑मती॒रिति॒ मधु॑-मतीः॑ । मधु॑मतीभि॒रिति॒ मधु॑-मती॒भिः ।
सृ॒ज्य॒ध्व॒म् । अ॒द्भ्य इत्य॑त्-भ्यः ।

(पा ३·२·९३) इति दधातेः क्विप्रत्ययः। एवं परोक्षवदभिधायेदानीं प्रत्यक्षवदभिधीयते[3]। [V]रेवतीः रेवत्यः धनवत्यः सर्वधनकारणत्वात्। "रयेर्मतौ बहुलम्" (पा ६·१·३७ वा ६) ५
इति संप्रसारणम्। "वा छन्दसि" (पा ६·१·१०६) इति पूर्वसवर्णदीर्घत्वम्। "ह्रस्वनुड्भ्यां मतुप्" (पा ६·१·१७६) इत्यत्र "रेशब्दाच्चोपसंख्यानम्" (द्र. पा ६·१·१७६ वा १) इति मतुप उदात्तत्वं वत्वं च। ईदृश्यो यूयं [V]जगतीभिः [V]सं [V]सृज्यध्वम् संसृष्टा भवत। कर्मणि लकारः। जगतीभिः जङ्गमस्वभावाभिः। "वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च" (उ २४१) इति गमेरतिप्रत्ययः, मकारलोपः, द्विर्वचनं च १०
निपात्यते। "उगितश्च" (पा ४.१.६) इति ङीप्। "अभ्यस्तानामादिः" (पा ६·१·१८९) इत्याद्युदात्तत्वम्। शतृवद्भावेन लसार्वधातुकत्वात् (पा ६·१·१८६) प्रत्ययस्यानुदात्तत्वम्। तथा [V]मधुमतीः मधुमत्यः मधुरा यूयं [V]मधुमतीभिः संसृज्यध्वम्। एतदुक्तं भवति– हे आपः रेवत्यो मधुमत्यश्च, यूयं जगतीभिर्मधुमतीभिश्च ओषधीभिः संसृज्यध्वमिति। "आपो वा ओषधीर्जिन्वन्ति" (तैब्रा ३·२·८) इत्यादि, "आपो वै रेवतीः" (तैब्रा १५
३·२·८) इत्यादि च ब्राह्मणम्॥

अपः परिप्लावयति– 'अद्भ्यः' इति गायत्र्यैकपदया यजुरन्तया॥ हे ओषधयः, यूयं मदन्त्यः। आपस्तम्बेन [V] प्रणीतामात्रेऽयं मन्त्रो विनियुक्तः। "स्रुवेण प्रणीताभ्य आदाय वेदेनोपयम्य समापो अद्भिरग्मतेति [3]पिष्टेष्वानीय" (आपश्रौ १·२४·५) इति॥ प्रणीताः [V]आपः मदन्तीभिः [V]अद्भिः संगच्छन्ताम्। पिष्टरूपाः [V]ओषधयः द्विविधोदकरसेन संगच्छन्ताम्। किं च हे आपः, यूयं २०
[4]सर्वसस्याऽभिवृद्धिहेतुत्वात् तद्द्वारा धनवत्यः स्वभावतो माधुर्यवत्यश्च। ओषधयोऽपि जङ्गमरूपपश्वभिवृद्धिहेतुतया पशुरूपधनयुक्ताः स्वभावसिद्धस्वादुत्वेन माधुर्यवत्यश्च। ततः पिष्टरूपाभिस्ताभिः ओषधीभिः [5]संसृष्टा भवत॥ मन्त्रस्य पूर्वभागे जलौषधिसंगमस्य फलमाह– "समापो अद्भिरग्मत समोषधयो रसेनेत्याह। आपो वा ओषधीर्जिन्वन्ति। ओषधयोऽपो जिन्वन्ति। अन्या वा एतासामन्या जिन्वन्ति। तस्मादेवमाह" (तैब्रा ३·२·८) इति। जिन्वन्ति प्रीणयन्ति। यद्यप्यचेतना- २५

३. मै– प्रत्यक्षवदुच्यते।

३. आ. इ. उ. क. तं. पा. भां. हा– पिष्टेष्वानयति। ४. इ. उ. पा. भां. हा– सर्वस्याऽभि॰।
५. उ. पा. भां. हा– संसृष्टा।

परि प्रजाताः स्थ समुद्भिः पृच्यध्वं जनयत्यै त्वा सं यौम्यग्नये

परीति । प्रजाता इति प्र–जाता । स्थ । समिति । अद्भिरित्यत्–भिः ।

पृच्यध्वम् । जनयत्यै । त्वा । समिति । यौमि । अग्नये ।

---

Vअद्भ्यः Vपरि Vप्रजाताः अद्भ्य एव सर्वाः संभूता. । यस्मादेव Vस्थ तस्मादाभिः Vसं
५ Vपृच्यध्वम् संपृक्ता भवत । कर्मणि लकारः । Vअद्भिः संपर्केण युष्माकमभिवृद्धिरिति ।
"यथा सुवृष्टे" (तैब्रा ३.२.८) इत्यादि ब्राह्मणम् । "ऊडिदम्°"
(पा ६.१.१७१) इत्यादिना अद्भ्यो विभक्तेरुदात्तत्वम् । प्रकृष्टा जाता प्रजाता इति
प्रादिसमास, प्राचार्यवत् । गतित्वाभावात् अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६.२.२) ।
यद्वा–अन्तर्भावितण्यर्थात् कर्मणि निष्ठाया "गतिरनन्तर" (पा ६.२.४९) इति
१० पूर्वपदप्रकृतिस्वरत्वम् ॥

आलोटयति—'जनयत्यै' इति । Vजनयत्यै प्रजाना जननाय त्वा Vसंयौमि[4]
मिश्रीकरोमि । "अमेरति.[5]" (उ ४९९) इति विधीयमानः अतिप्रत्ययो बहुलवचनात्

---

नामपामोषधीना च नास्ति प्रीतिस्तथाऽपि पुरोडाशरूपेण देवप्रियहेतुत्वात् तदुपचार । न हि
केवलेन जलेन पिष्टेन वा पुरोडाश संभवति, किंत्वन्योन्यमेलनरूपेण प्रीणनेन । यस्मात् तासाम-
१५ पामोषधीना च मध्येऽन्या आपोऽन्या ओषधी प्रीणयन्ति । अन्याश्चौषधयोऽन्या अप. प्रीणयन्ति ।
तस्मान्मन्त्र 'समोषधयो रसेन' इत्येवं ब्रूते ॥ उत्तरभागे माधुर्यसंपादनं फलमाह—"सꣳ रेवती-
र्जगतीभिर्मधुमतीर्मधुमतीभि सृज्यध्वमित्याह । आपो वै रेवती । पशवो जगती । ओषधयो
मधुमती. । आप ओषधी पशून् । तानेवास्मा एकधा सꣳसृज्य । मधुमत करोति" (तैब्रा
३.२.८) इति ॥

२० अद्भ्य इति ॥ बौधायन —"अथानुपरिप्लावयत्यद्भ्य परि प्रजाता· स्थ समद्भि पृच्य-
ध्वमिति" (बौश्रौ १.९) इति । आपस्तम्ब —"अद्भ्य परि प्रजाता इति ताभिरनुपरिप्लाव्य"
(आपश्रौ १.२४.५) इति ॥ परिप्लावन पिष्टस्य सर्वत आर्द्रीकरणम् ॥ हे पिष्टरूपा ओषधय, यूय
पूर्वम् Vअद्भ्य उत्पन्ना. Vस्थ । ततोऽधापि Vअद्भि. संपृक्ता भवत ॥ मन्त्रेण परिप्लावन विधत्ते—
"अद्भ्य परि प्रजाता स्थ समद्भि. पृच्यध्वमिति पर्याप्लावयति । यथा सुवृष्ट इमामनुविसृत्य ।
२५ आप ओषधीर्महयन्ति । तादृगेव तत्" (तैब्रा ३.२.८) इति । यथा पर्जन्ये सुवृष्टे सत्यापो भूमिमनु-
प्रविश्यौषधीर्वर्धयन्ति तथाविधमिदं[6] परिप्लावनम् । जलेन पिष्टे सर्वत प्लाविते सति पुरोडाशनिष्पत्ते.॥

जनयत्या इति ॥ कल्प —"स यौति जनयत्यै त्वा सं यौमीति" (बौश्रौ १.९) इति ॥

---

४. तं. नि. ब–'सयौमि' इत्यस्यानन्तर 'संयोजयामि' । ५. ति. ब–रमेणित् ।

---

६ क–°विधमिद ।

त्वाऽग्नीषोमाभ्यां मखस्य शिरोऽसि घर्मोऽसि विश्वायुरुरु प्रथस्वोरु

त्वा। अग्नीषोमाभ्यामित्यग्नी–सोमाभ्याम्। मखस्य। शिरः। असि।
घर्मः। असि। विश्वायुरिति विश्व–आयुः। उरु। प्रथस्व। उरु।

---

जनेर्ण्यन्तादपि भवति। "छन्दस्युभयथा" (पा ३·४·११७) इति तस्य सार्वधातुकत्वात् णिलोपाभावः ॥ ५

व्युह्याभिमृशति—'अग्नये' इति ॥ अग्न्यर्थं त्वामभिमृशामीति शेषः ॥

'अग्नीषोमाभ्याम्' इत्यत्र 'त्वा' इत्यनुषज्यते। पूर्ववच्छेषः। अभिमर्शेन चान्यस्मात् व्यावृत्तिः क्रियते ॥

पिण्डं करोति—'मखस्य शिरोऽसि' इति ॥ "यज्ञो वै मखः" (तैब्रा ३·२·८); तस्य ᵛशिरः मुख्यमङ्गम् ᵛअसि, प्राधान्यात् ॥ १०

अधिश्रयति—'घर्मः' इति ॥ ᵛघर्मः प्रवर्ग्य आदित्यो वा, स एव ᵛअसि, उष्णत्वात्। विश्वमायुर्येन क्रियत इति ᵛविश्वायुः, विश्वायुर्नामाऽसि। "बहुव्रीहौ विश्वं संज्ञायाम्" (पा ६·२·१०६) इति पूर्वपदान्तोदात्तत्वम् ॥

प्रथयति—'उरु' इति ॥ ᵛउरु यथा भवति तथा ᵛप्रथस्व। ᵛयज्ञपतिः यजमानः

---

हे परिप्लावितपिष्ट, त्वां हस्ताङ्गुलिमर्दनेन सम्यक् मिश्रीकरोमि। एतच्च यजमानस्य शुक्रशोणित- १५ मिश्रणेनैव प्रजोत्पत्तये संपद्यते ॥ एतदेव विशदयति—"जनयत्यै त्वा सं यौमीत्याह प्रजा एवैतेन दाधार" (तैब्रा ३·२·८) इति ॥

अग्नय इति ॥ कल्पः—"संयुत्य व्यू(व्यु)ह्याभिमृशत्यग्नये त्वाऽग्नीषोमाभ्याममुष्मा अमुष्मा इति यथादेवतम्" (बौश्रौ १·९) इति ॥ त्वामहं स्पृशामीति शेषः ॥ असांकर्यं मन्त्रद्वयप्रयोजन- मित्याह—"अग्नये त्वाऽग्नीषोमाभ्यामित्याह व्यावृत्त्यै" (तैब्रा ३·२·८) इति ॥ २०

मखस्येति ॥ कल्पः—"पिण्डं करोति मखस्य शिरोऽसीति" (बौश्रौ १·९) इति ॥ विशदीकृत्य व्याचष्टे—"मखस्य शिरोऽसीत्याह। यज्ञो वै मखः। तस्यैतच्छिरः। यत् पुरोडाशः। तस्मादेवमाह" (तैब्रा ३·२·८) इति ॥

घर्म इति ॥ कल्पः—"घर्मोऽसि विश्वायुरित्याग्नेयं पुरोडाशमष्टासु कपालेष्वधिश्रयति। एवमुत्तर- मुत्तरेषु" (आपश्रौ १·२४·६–७) इति ॥ हे पुरोडाश, त्वं तप्तकपालावस्थानेन दीप्तो देवतायोग्यत्वेन २५ कृत्स्नायुःप्रदश्च ᵛअसि ॥ विश्वमायुर्यस्येति बहुव्रीहेरायुष्प्रदत्वमित्येवात्रार्थ इत्याह—"घर्मोऽसि विश्वायुरित्याह। विश्वमेवाऽऽयुर्यजमाने दधाति" (तैब्रा ३·२·८) इति ॥

उर्विति ॥ कल्पः—"उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति पुरोडाशं प्रथयन् सर्वाणि

---

७. इ. उ. पा. ह्व–त्वाम्

ते यज्ञपतिः प्रथतां त्वचं गृह्णीष्वान्तरितꣳ रक्षोऽन्तरिता अरातयो

ते । यज्ञपतिरिति यज्ञ–पतिः । प्रथताम् । त्वचम् । गृह्णीष्व ।

अन्तरितमित्यन्तः–इतम् । रक्षः । अन्तरिता इत्यन्तः–इताः । अरातयः ।

अनेन तवोरुप्रथनेन ᵛउरु ᵛप्रथता पश्वादिभिः । "पत्यावैश्वर्ये" (पा ६·२·१८) इति

५ पूर्वपदप्रकृतिस्वरत्वम् ॥

श्लक्ष्णीकरोति—'त्वचम्' इति ॥ ᵛत्वच ᵛगृह्णीष्व त्वचा अतिश्लक्ष्णतनूर्भव । "सर्वमेवैनꣳ सतनुम्" (तैब्रा ३ २·८) इत्यादि ब्राह्मणम् ॥

पर्यग्निकरोति—'अन्तरितम्' इति यजुरादिकयैकपदया गायत्र्या ॥ ᵛअन्तरितं तिरोहितम् अपनीतम् । "अन्तरपरिग्रहे" (पा १·४·६५) इति गतिसञ्ज्ञकत्वात्[६] "गतिरनन्तरः"

१० (पा ६·२·४९) इति पूर्वपदप्रकृतिस्वरत्वम् । व्याख्यातमन्यत् (तैस १·१·२) । "घर्मो वा एषोऽशान्तः" (तैब्रा ३ २ ८) इत्यादि ब्राह्मणम् ॥

कपालान्यभिप्रथयति । अतुङ्गमनपूपाकृतिं कूर्मस्येव प्रतिकृतिमश्वशफमात्रं करोति" (आपश्रौ १ २५·३–४) इति ॥ हे पुरोडाश, त्वं बहु यथा भवसि तथा विस्तीर्णो भव । त्वदीयो यजमानोऽपि प्रजाभिः प्रथितोऽस्तु ॥ यज्ञपतेर्विस्तारं दर्शयति—"उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामित्याह ।

१५ यजमानमेव प्रजया पशुभिः प्रथयति" (तैब्रा ३ २ ८) इति ॥

त्वचमिति ॥ कल्पः—"त्वचं गृह्णीष्वेत्यद्भिः श्लक्ष्णीकरोत्यनतिक्षारयन्[८]" (आपश्रौ १·२५ ७) इति ॥ हे पुरोडाश, त्वमद्भिः श्लक्ष्णीभूतां ᵛत्वचं स्वीकुरु ॥ निम्नोन्नतभावपरिहारेण त्वक्सादृश्ये सति पुरोडाशः सदेहो भवतीत्याह—"त्वचं गृह्णीष्वेत्याह । सर्वमेवैनꣳ सतनुं करोति" (तैब्रा ३·२·८) इति ॥ श्लक्ष्णीकरणं विधत्ते—"अथाप आनीय परिमार्ष्टि । माꣳसमेव तत्त्वचं दधाति । तस्मात्त्वचा

२० माꣳसं छन्नम्" (तैब्रा ३·२ ८) इति । तत् तेन मार्जनेन पिष्टरूपे मांस एव श्लक्ष्णत्वरूपत्वचं स्थापयति । ततो लोके सांऽपि तथा दृश्यते ॥

अन्तरितमिति ॥ कल्पः—"अन्तरितꣳ रक्षोऽन्तरिता अरातय इति सर्वाणि हवीꣳषि त्रिः पर्यग्निकृत्वा" (आपश्रौ १·२५·८) इति ॥ ᵛदर्भैर्दीप्तैः पुरोडाशस्य परितो रक्षसां संशोधनं पर्यग्निकरणम् । अनेन पर्यग्निकरणेन राक्षसजातिर्व्यवहिता, शत्रवोऽपि[?] व्यवहिताः । तदेतद्विधत्ते—

२५ "घर्मो वा एषोऽशान्तः । अर्धमासेऽर्धमासे प्रवृज्यते । यत् पुरोडाशः । स ईश्वरो यजमानꣳ शुचा प्रदहः । पर्यग्निकरोति । पशुमेवैनमकः । शान्त्या अप्रदाहाय" (तैब्रा ३ २·८) इति । पुरोडाशो योऽस्ति स एष दीप्यमानोऽग्निर्भूत्वा कदाचिदपि न शाम्यति । प्रतिपक्षं तप्तकपाले संतप्यमानत्वात् । स च

६. मै–°सञ्ज्ञकत्वात् ।

८ आ इ उ. पा हा–°त्यनभिक्षारयन्, ब–°त्यनतिवर्षयन् । ९ त. ब–ज्वलद्भिर्दर्भैर्दीप्तैः ; उ क. पा मा–ज्वलद्भिर्दर्भैर्दीप्तैः ।

देवस्त्वा॑ सवि॒ता (१) श्र॑पयतु॒ वर्षि॑ष्ठे अ॒धि नाके॒ऽग्निस्ते॑ त॒नुवं॒ माऽति॑ धा॒गग्ने॑

दे॒वः। त्वा॒। स॒वि॒ता (१)। श्र॒प॒य॒तु॒। वर्षि॑ष्ठे। अधीति॑।

नाके॑। अ॒ग्निः। ते॒। त॒नुव॑म्। मा। अतीति॑। धा॒क्। अग्ने॑।

श्रपयति—' देवः ' इति ॥ ᵛदेवः ᵛसविता सर्वस्य प्रेरकः त्वां ᵛश्रपयतु पक्वं करोतु। किमर्थम्? ᵛवर्षिष्ठे वृद्धतमे ᵛनाके सुखरूपे स्वर्गे निमित्ते। "निमित्तात् कर्म(सं)योगे" (पा २·३·३६ वा६) इति सप्तमी। नाके स्वर्गार्थं त्वां श्रपयतु। सप्तम्यर्थमेवाधिशब्दो द्योतयति। "अधिपरी अनर्थकौ" (पा १·४·९३) इति कर्मप्रवचनीयसंज्ञा। यद्वा—देवः सविता त्वां श्रपयतु। कीदृशम्? वर्षिष्ठे अधि नाके; योऽयं दिवि नाको नामाऽग्निः वृद्धतमो रक्षसां हन्ता तस्मिन्नधि तेनेश्वरेण रक्ष्यमाणं त्वां श्रपयतु। "अधिरीश्वरे" (पा १·४·९७) इति कर्मप्रवचनीयत्वम्। "यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी" (पा २·३·९) इति स्वामिविशेषे द्योत्ये स्वामिविशेषात् सप्तमी। यथा "अधि ब्रह्मदत्ते पञ्चालः" इति। "पुरोडाशं वा अधिश्रितम्" (तैब्रा ३·२·८) इत्यादि ब्राह्मणम्॥ किं च—ᵛअग्निः ᵛते ᵛतनुवं ᵛमा ᵛअति ᵛधाक् कृशानुस्त्वामतीत्य मा धाक्षीत्। दहेर्लुङि, च्लेः सिच्, हलन्तलक्षणा वृद्धिः (पा ३·२·११०; ३·१·४४; ७·२·३) "बहुलं छन्दसि" (पा ७·३·९७)

तापेन यजमानं प्रदग्धुं समर्थः। [10]तत्र [11]पशुप्रचारेण पर्यग्निकरणेन पुरोडाशे पशौ कृते सति प्रदीप्ताग्निरूपपरित्यागेन शान्तो भूत्वा यजमानं न प्रदहति॥ आवृत्तिं विधत्ते—"त्रिः पर्यग्नि करोति। त्र्यावृद्धि यज्ञः। अथो रक्षसामपहत्यै" (तैब्रा ३·२·८) इति। मन्त्रं व्याचष्टे—"अन्तरित९ रक्षोऽन्तरिता अरातय इत्याह। रक्षसामन्तर्हित्यै" (तैब्रा ३·२·८) इति॥

देव इति॥ बौधायनः—"पुरोडाश९ श्रपयति देवस्त्वा सविता श्रपयतु वर्षिष्ठे अधि नाकेऽग्निस्ते तनुवं माति धागिति" (बौश्रौ १·१०) इति। आपस्तम्बस्तु मन्त्रभेदमाह—"देवस्त्वा सविता श्रपयत्वित्युल्मुकैः प्रतितपति। अग्निस्ते तनुवं माऽति धागिति दर्भैरभिज्वलयति" (आपश्रौ १·२५·८–९) इति॥ हे पुरोडाश, अतिप्रवृद्धे नाकनाम्न्यग्नौ त्वामधिश्रित्य ᵛसविता ᵛदेवः पक्वं करोतु। अयम् ᵛअग्निः तव शरीरस्य भस्मीभावरूपमतिदाहं मा करोतु॥ सवितृपदस्य नाकपदस्य, माऽतिधागित्यस्य चाभिप्रायमाह—"पुरोडाशो वा अधिश्रित९ रक्षा९स्यजिघा९सन्। दिवि नाको नामाग्नी रक्षोहा। स एवास्माद्रक्षा९स्यपाहन्। देवस्त्वा सविता श्रपयत्वित्याह। सवितृप्रसूत एवैन९ श्रपयति। वर्षिष्ठे अधि नाक इत्याह। रक्षसामपहत्यै। अग्निस्ते तनुवं माऽति धागित्याहानतिदाहाय" (तैब्रा ३·२·८) इति॥

१०. क–ततश्च; इ. उ. पा. मा. ह्य–तच्च। ११. क. तं. य–पशुप्रचारेण।

हव्यꣳ रक्षस्व सं ब्रह्मणा पृच्यस्वैकताय स्वाहा

हव्यम् । रक्षस्व । समिति । ब्रह्मणा । पृच्यस्व । एकताय । स्वाहा ।

इति इडमात्र: । हल्ङ्याादिलोपसंयोगान्तलोपौ । घत्वचर्त्वमपूमावाः ( पा ८·२·३६, ८·४·५५; ८·२·३७ )। "तन्वादीनां छन्दसि बहुलम्" ( पा ६·४·७७ वा १ ) इति तनोतेरुवङादेश. ॥

गार्हपत्यमभिमन्त्रयते—'अग्ने' इति ॥ व्याख्यातम् ( तैस १ १·४ ) ॥

भस्मनाऽभिवासयति—'सम्' इति ॥ ब्रह्मणा बृहता अनेन भस्मना स पृच्यस्व

अग्न इति ॥ बौधायन —"गार्हपत्यमभिमन्त्रयतेऽग्ने हव्यꣳ रक्षस्वेति" ( बौश्रौ १·१० ) इति । आपस्तम्बस्तु पूर्वमन्त्रस्यैव शेष मन्यते ॥ पूर्ववद्व्याचष्टे—"अग्ने हव्यꣳ रक्षस्वेत्याह गुप्त्यै ।" ( तैब्रा ३·२·८ ) इति ॥ आग्नीध्रं प्रति [12]प्रेषमन्त्रमुत्पाद्य व्याचष्टे[12]—"अविदहन्त. श्रपयतेति वाच विसृजते । यज्ञमेव हवीꣳष्यभिव्याहृत्य प्रतनुते । पुरोरचमविदाहाय शृतं करोति" ( तैब्रा ३ २·८ ) इति । संवपनकाले यो वाङ्नियमस्तमिदानीं परित्यजेत् । [13]विशेषेण दाहो भस्मीभाव[13]स्तं परित्यज्य सम्यक्पाकं श्रपणं कुरुत । अत एवाऽऽम्नायते—"यो विदग्ध स नैर्ऋतो योऽशृत स रौद्रो य शृत स सदेव- स्तस्मादविदहता शृतङ्कृत्य सदेवत्वाय" ( तैसं २·६·३ ) इति । अविदहन्त इति बहुवचन पूजार्थम् । अस्मिन् काले वाग्विमोके सति यज्ञमेवाभिलक्ष्य तत्रापि प्रधानभूतानि हवीꣳष्यभिलक्ष्य[14] वाचमुच्चार्य यज्ञ विस्तारितवान् भवति । किं च [15]विदाहदोषनिवृत्तये सम्यक्पाकगुणसिद्धये चैवं प्रैषमुच्चारयन्[16] हवि- स्वीकारात् पुरव देवेभ्यो रुचिं कृतवान् भवति ॥ पुरोडाशाच्छादन विधत्ते—"मस्तिष्को वै पुरोडाश । तं यन्नाभिवासयेत् । आविर्मस्तिष्क स्यात् । अभिवासयति । तस्माद्गुहा मस्तिष्क" ( तैब्रा ३·२·८ ) इति । मस्तिष्क शिरस्यवस्थितो मेदस खण्ड । गुहा [17]गूढ आच्छादित[17] इत्यर्थ ॥ छादनयोग्यं मन्त्रं विधत्ते-"भस्मनाऽभिवासयति । तस्मान्माꣳसेनाऽस्थि छन्नम्" ( तैब्रा ३ २ ८ ) इति । यस्मान्मेद- स्थानीय पुरोडाशो मांसस्थानीयेन भस्मनाऽऽच्छादितस्तस्माल्लोकेऽप्यस्थिसश्लिष्ट मेदो मासेन छन्नं भवति ॥ पुरोडाशस्योपरि [18]भस्मनोऽभ्यूहने साधन विधत्ते—"वेदेनाऽभिवासयति । तस्मात् केशै शिरश्छन्नम्" ( तैब्रा ३·२ ८ ) इति । दर्भमुष्टिनिर्मितो वेदिसमार्जनहेतुर्वेद । [19]अस्ति हि तस्मिन्[19] दर्भाणां केशै साम्यम् ॥ एतद्वेदन प्रशसति—"अखल्तिमायुको भवति । य एव वेद" ( तैब्रा ३·२·८ ) इति । केशरहितशिरोयुक्त [20]खलति, तद्व्यनशीलो [21]न भवति ॥

समिति ॥ कल्प —"स ब्रह्मणा पृच्यस्वेति वेदेन पुरोडाशे साङ्गार भस्माभ्यूहति" ( आपश्रौ

१२-१२. इ. उ-प्रैषमुत्पादयति, भां-प्रैषमन्त्रमुत्पादयति, पा. हा-प्रैषमन्त्रमुत्पादयेति । १३-१३ ब-अविशेषेण दाहे मर्यादाद ; त-विशेषेण दाहो मषीभाव , क-विशेषेण दाहो मषीभावो भस्मीभावश्च । १४ त-ष्यभिवीक्ष्य । १५ आ. इ. उ पा मां. हा-विशेषेण दाहनिवृत्त्यै । १६. इ. उ. पा. भां. हा-प्रैषमुच्चारयेत् । १७-१७ ब-गूढमाच्छन्न । १८ त-भस्माभ्यूहने, क-भस्मनोद्घूनने । १९-१९. आ. भां. हा-तस्मिन्, क त. ब- अस्ति हि । २० ब-'खलति' इत्यस्यानन्तरम् 'तद्वान्यः खलति' । २१. ब-'न' नास्ति ।

द्वि॒ताय॒ स्वाहा॑ त्रि॒ताय॒ स्वाहा॑ ॥ ८ ॥

[ स॒वि॒ता द्वाविँ॒शतिश्च ]

द्वि॒ताय॑ । स्वाहा॑ । त्रि॒ताय॑ । स्वाहा॑ ॥ ८ ॥

[ मैसं १·१·९; कासं १·८; कपिसं १·८; वासं १·२१–२३ ]

संपृक्तो भव हे पुरोडाश। पृचेः कर्मणि क्तकारः। "मस्तिष्को वै पुरोडाशः" (तैब्रा ३·२·८) इत्यादि ब्राह्मणम्॥ "पशोर्वै प्रतिमा पुरोडाशः" (तैब्रा ३·२·८) इति च ब्राह्मणम्॥ ५

पात्रनिर्णेजनीरपो निनयति—'एकताय' इति॥ एकतादयः संज्ञाशब्दाः "तत एकतोऽजायत" (तैब्रा ३·२·८) इत्यादि ब्राह्मणे प्रसिद्धाः तद्वाच्याः [७]पित्रादयः अग्निभ्राता-दयः[७]। तेभ्य इमा आहुतयः सन्त्विति स्वयमेव सरस्वत्याह, न त्वं मनुष्य इति। एकतोऽ-भिपातादस्यास्ति जन्मेत्येकतः। अर्श आदेराकृतिगणत्वात् अच्प्रत्ययः (पा ५·२·१२७)। १०

१·२५·१२ ) इति॥ हे पुरोडाश, मन्त्रेण संपृक्तो भव॥ समन्त्रकत्वप्रकाशकं मन्त्रमन्वयव्यतिरेकाभ्यां व्याचष्टे—"पशोर्वै प्रतिमा पुरोडाशः। स नाथजुष्कमभिवास्यः। क्षुधेव स्यात्। ईश्वरा यजमानस्य पशवः प्रमेतोः। सं ब्रह्मणा पृच्यस्वेत्याह। प्राणा वै ब्रह्म। प्राणाः पशवः। प्राणैरेव पशून्त्संपृणक्ति। न प्रमायुका भवन्ति" (तैब्रा ३·२·८) इति। पर्यग्निकरणेन पुरोडाशस्य पशूकृतत्वात्, पशोश्च मन्त्रसंस्कार्यत्वात्, यजुषा विनाऽभिवासनमनर्थकं स्यात्। न केवलं वैयर्थ्यं किन्तु यजमानस्य पशवश्च मर्तुं समर्था भवन्ति। सोऽयं व्यतिरेकः। उक्तदोषपरिहाराय मन्त्रेण 'संपृच्यस्व' इत्येवमयं मन्त्रो ब्रूते। तत्र संपर्कप्रतियोगी मन्त्रः पशून् मरणात् पालयतीति प्राणस्वरूपः। पशवश्च [२२]प्राणाधारत्वात् प्राणस्वरूपाः। अतो योग्यत्वात् [२३]तत्संपर्के सति पशवो मरणशीला न भवन्ति। सोऽयमन्वयः॥ मन्त्रेण यथा संपर्कस्तथा भस्मनाऽपि संपर्को युक्त [२४]एवेत्याह—"यजमानो वै पुरोडाशः। प्रजाः पशवः पुरीषम्। यदेवमभि वासयति। यजमानमेव प्रजया पशुभिः समर्धयति" (तैब्रा ३·२·८) इति। पुरीषं भस्म॥ १५ २०

**एकतायेति**॥ कल्पः—"अत्रैतत् पात्रीसंक्षालनं गार्हपत्यादङ्गारेणाभितप्य हुत्वान्तर्वेदि प्रतीचीनं तिसृषु लेखासु निनयत्येकताय स्वाहा द्विताय स्वाहा त्रिताय स्वाहा" (बौश्रौ १·१०) इति॥ तेभ्य इदं पात्रीप्रक्षालनोदकं हुतमस्तु॥ एकतादीनामुत्पत्तिप्रकारमाह— "देवा वै हविर्भृत्वाऽब्रुवन्। कस्मिन्निदं म्रक्ष्यामह इति। सोऽग्निरब्रवीत्। मयि तनूः संनिदध्वम्। अहं वस्तं जनयिष्यामि। यस्मिन् म्रक्ष्यध्व इति। ते देवा अग्नौ तनूः संन्यदधत। तस्मादाहुः। अग्निः सर्वा देवता इति। सोऽङ्गारेणाऽपः अभ्यपातयत्। तत एकतोऽ-जायत। स द्वितीयमभ्यपातयत्। ततो द्वितोऽजायत। स तृतीयमभ्यपातयत्। ततस्त्रितोऽजायत। यदद्भ्यो-ऽजायन्त। तदाप्त्यानामाप्त्यत्वम्। यदात्मभ्योऽजायन्त। तदात्म्यानामात्म्यत्वम्" (तैब्रा ३·२·८) इति। देवाः पूर्वं व्रीह्यवघातादिना हविः संपाद्य बीजवधादिपापलेपः कस्मिन् [२५]पुरुषे मार्जनीय इति [२६]विचार्य अग्निवचनेन २५

७–७, तं. ति. पं. व– 'पवित्रादयः अग्नेर्भ्रातरः'।

२२. तं–प्राणधारित्वात्। २३. आ. इ. उ. तं. मां. ह्र–संपर्के। २४. इ, उ. पा. मां. ह्र–एवेत्याह। २५. मां–पुरोडाशे। २६. तं–विचारात्।

"तद्धितश्चासर्वविभक्तिः" ( पा १.१.३८ ) इत्यव्ययत्वात् "*अव्ययानां भमात्रे टिलोपः" ( पा ४.२.१०४ वा २ )। अस्तिसामानाधिकरण्याभावेऽपि "बहुलं छन्दसि" ( पा ५.२.१२२ ) इति मत्वर्थीयो दृश्यते। यथा–"सोऽन्तर्वानभवत्" ( तैब्रा २.२.९ ) इति। एवं द्वितस्त्रितोऽपि द्रष्टव्यः। "देवा वै हविर्भूत्वाऽब्रुवन्" ( तैब्रा ३.२.८ ) इति ब्राह्मणम् ॥

इति प्रथमेऽष्टमोऽनुवाकः

स्ववीर्यमग्नौ स्थापितवन्तः। ततः सोऽग्निः सर्वदेववीर्यधारिणाऽङ्गारेणाब्देवतामभिलक्ष्य तद्वीर्यमपातयत्। उत्पन्नानामेकतादीनामस्कामाः देवविशेषाणामापो मातरः, देवा आत्मानः पितरः इत्याप्त्यनामकत्वमात्मनामकत्वं च युक्तम् ॥ स च लेपः परंपरया [27]ब्रह्मघातिनि पुरुषे पर्यवसित इत्याह–"ते देवा आप्त्येष्वमृजत। आप्त्या अमृजत सूर्याभ्युदिते। सूर्याभ्युदितः सूर्याभिनिम्रुक्ते। सूर्याभिनिम्रुक्तः श्यावदति। श्यावदन्न (?) अग्रेदिधिषौ। अग्रेदिधिषुः परिवित्ते। परिवित्तो वीरहणि। वीरहा ब्रह्महणि। तद्ब्रह्महणं नात्यच्यवत" ( तैब्रा ३.२.८ ) इति। आप्त्या एकतादयः। उदयास्तमयकालयोः सुप्तौ पुरुषावभ्युदिताभिनिम्रुक्तौ। तथा चोक्तम्–"सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च। अंशुमानभिनिम्रुक्ताभ्युदितौ तौ यथाक्रमम्" ( अमरकोश–काण्ड २ ब्रह्मवर्ग ५ ) इति ॥

अत्यवक्राः दन्तमालिन्यं चात्र रोगविशेषकृतम्। ज्येष्ठायामनूढायां कनिष्ठामूढ्वाऽवस्थितोऽग्रेदिधिषुः। ऊढवति कनिष्ठे सति विवाहरहितो ज्येष्ठः परिवित्तः। वीरस्य क्षत्रियस्य हन्ता वीरहा। ब्राह्मणस्य हन्ता ब्रह्महा। एतेष्वाप्त्यानामेकतादीनां देवानां पापलेपमार्जनार्थैव सृष्टत्वादेषु तन्मार्जनमुचितम्। [28]सूर्याभ्युदितादीनां ब्रह्महान्तानां पापप्रवणत्वात् निम्नगामिनो जलस्येव लेपस्यापि तेषु प्रवाहो युक्तः। ब्रह्महत्यायाः पापाधिक्यतारतम्यविश्रान्तिभूमित्वाल्लेपो ब्रह्महणं नातिक्रामति। प्रक्षालनोदकस्य लेपत्वात्तु निनयनं विधत्ते–"अन्तर्वेदि निनयत्यवरुद्ध्यै" ( तैब्रा ३.२.८ ) इति। एतेन निनयनेन कर्मफलप्रतिबन्धकपापलेपस्यापनीतत्वात् फलसंपादनायेदं निनयनं संपद्यते। तस्य जलस्य वह्नितापं विधत्ते–"उल्मुकेनाऽभिगृह्णाति शृतत्वाय शृतकामा इव हि देवाः" ( तैब्रा ३.२.८ ) इति। शृतं पक्वम्। "यः शृतः स सदेवः" ( तैसं ७.१.३ ) इति हि [29]पूर्वमुदाहृतम्।

अत्र विनियोगसंग्रहः–

"[30]मत्रपात्रं हविर्वाप समा तत्र जलं क्षिपेत्।
अद्भ्यः संप्लाव्य तदाभिर्जन [31]संयौत्यशेषतः ॥ १ ॥
अग्नावीं निर्दिशेद्भागौ मखः पिण्डं करोति हि।
घर्मं कपाले निक्षिप्य [32]प्रथयेदुरुमन्त्रतः ॥ २ ॥

* "अव्ययानां भमात्रे टिलोपः", इत्याकारं वार्तिकं कौमुद्याम् "अव्ययात्त्यप्" ( पा ४.२.१०४ ) इत्यस्मिन् सूत्रे विद्यते। भाष्ये तु "अव्ययानां च" इत्येव वार्तिकं "नस्तद्धिते" ( पा ६.४.१४४ वा ४ ) इत्यस्मिन् सूत्रे दृश्यते।

२७ आ इ. उ पा भा हा–ब्रीहवघातिनि, क–ब्रीवघातिनि। २८. इ. उ. पा. मा. हा–सूर्याभ्युदितानाम्। २९. इ. उ–पूर्वमुदाहृतत्वात्। ३०. ब – स म पात्रे। ३१. इ. उ. पा. मा हा–संयोज्य शेषतः। ३२. ब. प्रथयेदुरु।

त्वचं श्लक्ष्णीकरोत्यन्निरन्तः पर्यग्रये कृतिः ।
श्रपयत्युल्मुकैर्देवो ह्यग्निस्ते ज्वाल्यते कुशैः ॥ ३ ॥
सं वेदेन च साङ्गारभस्मनाऽऽच्छादयेद्धविः ।
एकान्तर्वेदि लेखासु क्षालनं निनयेत्त्रिभिः ॥
अनुवाकेऽष्टमे सप्तदशमन्त्राः प्रकीर्तिताः ॥ ४ ॥ " इति ॥

अथ मीमांसा—[33]अत्र 'अविदहन्तः श्रपयत' (तैब्रा ३·२·८) इति कश्चिन्मन्त्र उक्तः । 'शृतकामा इव हि देवाः' (तैब्रा ३·२·८) इत्यर्थवादश्च । एतद्विषये ब्राह्मणान्तरवाक्यमपि 'यो विदग्धः' (तैसं २·६·३) इत्यादिकमुदाहृतम् । तत्र किंचित्तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्—

" परुषि छिन्नमित्युक्त्या बर्हिषस्तु समूलताम् ।
घृतं दैवं मस्तु पित्र्यमित्युक्त्या नवनीतकम् ॥
यो विदग्धः स इत्युक्त्या पुरोडाशस्य पक्वताम् ।
स्तौति पूर्वोत्तरौ पक्षौ योजनीयौ निवीतवत् ॥ " (जैन्या ३·४·१२-१३) इति ॥

चातुर्मास्येषु महापितृयज्ञे श्रूयते—"यत्परुषि [34]दिनं तद्देवानाम् । यदन्तरा तन्मनुष्याणाम् । यत्समूलं तत् पितृणाम् । समूलं बर्हिर्भवति व्यावृत्त्यै" (तैब्रा १·६·८) इति । परुः पर्व । [35]दिनं छिन्नम्[35] । ज्योतिष्टोमे दीक्षाभ्यङ्गे श्रूयते— " घृतं देवानां मस्तु पितॄणां निष्पक्वं मनुष्याणां तद्वा एतत् सर्वदेवत्यं यन्नवनीतं यन्नवनीतेनाभ्यङ्क्ते सर्वा एव देवताः प्रीणाति " (तैसं ६·१·१) इति । मस्तु [36]दधिभवं मण्डम् । निष्पक्वं शिरसि प्रक्षेप्तुमीषद्विलीनं नवनीतं तक्रं वा । दर्शपूर्णमासयोः पुरोडाशश्रपणे श्रूयते— " यो विदग्धः स नैर्ऋतो योऽशृतः स रौद्रो यः शृतः स सदेवस्तस्मादविदहता शृतंकृत्यः सदेवत्वाय " (तैसं २·६·३) इति । विदग्धः [37]अतिपक्वः । अशृतोऽपक्वः । तत्र बर्हिषि समूलच्छेदनस्याभ्यङ्गे नवनीतस्य पुरोडाशे यथोचितपाकस्य च विधेयतया सर्वमवशिष्टं स्तावकम् । तत्र पूर्वोत्तरपक्षौ न प्रपञ्चितौ । अस्यैव पादस्य प्रथमाधिकरणे निवीतवाक्ये प्रोक्तयोरेवात्रापि योजनीयत्वात् । तस्यैवाधिकरणस्योदाहरणबाहुल्यमनेनैवाधिकरणेन प्रपञ्च्यते ॥

अथ व्याकरणम् ॥ संवपामीत्यादौ स्वरा गताः । आप इत्यत्र फिट्स्वरः । अद्भिरित्यत्र "ऊडिदंपदाद्यप्पुम्रैद्युभ्यः" (पा ६·१·१७१) इति ऊडादेशात्, इदंशब्दात्, 'पद्दन्°' (पा ६·१·६३) इत्याद्यादेशेभ्य अप्शब्दात्, पुंशब्दात्, रैशब्दात्, दिवशब्दाच्च उत्तरमसर्वनामस्थानमुदात्तं भवति । यद्यपि " सावेकाचस्तृतीयादिः°" (पा ६·१·१६८) इति सूत्रेणैवैतत् सिद्धं तथाऽपि द्वितीयाबहुवचनार्थमस्य सूत्रस्य अवश्यवक्तव्यत्वादनेन[38] विशेषसूत्रेणोदात्तो विधेयः । रेवतीरित्यत्र " रेशब्दाच्चोपसंख्यानम् " (द्र. पा ६·१·१७६ वा१) इति [39]मतुबुदात्तः । प्रजाता इत्यत्रान्तर्भावितण्यर्थात् कर्मणि [40]निष्ठायां " गतिरनन्तरः " (पा. ६·२·४९) इति पूर्वपदप्रकृतिस्वरत्वम् । जनयत्या इत्यत्र क्तिन्प्रत्ययान्तत्वेन " ञ्नित्यादिर्नित्यम् " (पा. ६·१·१९७) इत्याद्युदात्तः । उरुशब्दस्य [41]नियतनपुंसकलिङ्गत्वाभावात् फिट्स्वरः । यज्ञपतिरित्यत्र " पत्यावैश्वर्ये " (पा. ६·२·१८) इति पूर्वपदप्रकृतिस्वरत्वम् । अन्तरितमित्यत्रान्तःशब्दस्य गतित्वात् " गतिरनन्तरः " (पा. ६·२·४९) इति पूर्वपदप्रकृतिस्वरत्वम् । वर्षिष्ठ इत्यत्र इष्ठन्प्रत्ययस्य नित्त्वात् आद्युदात्तः । एवं सर्वमुन्नेयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
प्रथमकाण्डे प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

३३. व—दर्शपूर्णमासे । ३४. आ—दितम् । ३५-३५. आ—दितं खण्डितम्; क—दिनं खण्डितम् । ३६. इ. उ. भां. हा—दधिसंभवम् । ३७. क. व—अधिकपक्वः; तं—अधिकपाकः । ३८. आ. इ. उ. भां. हा—वक्तव्यत्वाद°; व—आवश्यकत्वाद° । ३९. आ. क. हा—मतुबाद्युदात्तः । ४०. पा—क्तान्ते । ४१. आ. क. हा—नित्यनपुंसकत्वाभावात् ।

आ द॑दु इन्द्र॑स्य बा॒हुर॑सि दक्षि॑णः स॒हस्र॑भृष्टिः श॒तते॑जा वा॒युर॑सि ति॒ग्मते॑जाः

एति॑ । द॒दे॒ । इन्द्र॑स्य । बा॒हुः । अ॒सि॒ । दक्षि॑णः । स॒हस्र॑भृष्टि॒रिति॑ स॒हस्र॑-भृ॒ष्टिः ।

श॒तते॑जा॒ इति॑ श॒त-ते॒जाः । वा॒यु । अ॒सि॒ । ति॒ग्मते॑जा॒ इति॑ ति॒ग्म-ते॒जा ।

स्फ्यमादत्ते—' आददे ' इति ॥ सावित्रशेषोऽयम् ( तैस १.१.४ ) ॥

५ स्फ्यमनुमन्त्रयते—' इन्द्रस्य ' इति ॥ " स्वाङ्गाख्यायामादिर्वा " ( फि ९ ) इति दक्षिणशब्द आद्युदात्तः । बाहुर्विशेष्यते [v]सहस्रभृष्टिः अनेकपरिपाक[1] अनेकप्रकार शत्रूणा पीडकः । [v]शततेजाः [2]बहुप्रधान तद्वत् त्वमपीति । उभयत्रापि " बहुव्रीहौ प्रकृत्या पूर्वपदम् " ( पा ६.२.१ ) इति पूर्वपदप्रकृतिस्वरत्वम् ॥

तीक्ष्णीकरोति—' वायुः ' इति ॥ [v]वायु, [v]असि वायुरिव क्षिप्रकार्यसि । पुन

१० इत्यत आह—[v]तिग्मतेजाः तीक्ष्णदीप्ति निशितधारत्वात् । तादृशो हि त्वमसि । पूर्ववत् प्रकृतिस्वरत्वम् ॥

अष्टमे पुरोडाशश्रपणमुक्तम् । अथ पक्वस्य हविषो वेद्यामासादनीयत्वात् नवमे वेदिरुच्यते ॥

आददे इति ॥ 'आददे ' इत्याम्नातस्य मन्त्रस्य शेषं पूरयित्वा विनियोग कल्पे दर्शित — " अथ जघनेन [1]वेदिं तिष्ठन् स्फ्यमादत्ते देवस्य त्वा सवितु प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इति "

१५ ( बौश्रौ १.११ ) इति ॥ यथोक्तमादानं विधत्ते—" देवस्य त्वा सवितु प्रसव इति स्फ्यमादत्ते प्रसूत्यै । अश्विनोर्बाहुभ्यामित्याह । अश्विनौ हि देवानामध्वर्यू आस्ताम् । पूष्णो हस्ताभ्यामित्याह यत्यै " ( तैब्रा ३.२.९ ) इति ॥

इन्द्रस्येति ॥ बौधायन —"आदायाभिमन्त्रयत इन्द्रस्य बाहुरसि दक्षिण सहस्रभृष्टि शततेजा इति । अथैनं बर्हिषा संस्यति वायुरसि तिग्मतेजा इति " ( बौश्रौ १.११ ) इति । संश्यति सम्यक् तनूकरोति ।

२० एकमन्त्रत्वमाहाऽऽपस्तम्ब —" इन्द्रस्य बाहुरसि दक्षिण इत्यभिमन्त्रयते " ( द्र आपश्रौ २.१.१ ) इति । हे स्फ्य, त्वम् [v]इन्द्रस्य [v]दक्षिण [v]बाहुरिव समर्थोऽसि । कीदृशो बाहु ? [2]सहस्रसंख्याकानां शत्रूणां भृष्टि पाको मारण यस्मात्सौ [v]सहस्रभृष्टि । पुन [3]कीदृश ? शतसंख्याकान्यायुधानि तेजोयुक्तानि यस्यासौ [v]शततेजा । न केवलमिन्द्रबाहुसदृश किन्तु वायुसदृशोऽप्यसि । यथा वायुस्तीक्ष्णामग्नि-ज्वालामुत्पादयंस्तिग्मतेजास्तथा स्फ्योऽपि वक्ष्यमाणस्तम्बच्छेदरूप तीव्रं कर्म कुर्वन् [v]तिग्मतेजा

२५ इत्युच्यते ॥ मन्त्रस्य प्रथमभाग इन्द्रशब्दविवक्षामाह—" आददे इन्द्रस्य बाहुरसि दक्षिण इत्याह । इन्द्रियमेव यजमाने दधाति " ( तैब्रा ३.२.९ ) इति । अत्र ' आददे ' इति पदं पूर्वमन्त्रस्थस्वरूपम् । तच्च स्पष्टार्थम् । 'इन्द्रस्य' इति मन्त्रादि ॥ द्वितीयभागे मन्त्रगतशब्दस्वरूपमेव बाहुसदृशस्य स्फ्यस्य महिमानं स्थापयतीत्याह—" सहस्रभृष्टि शततेजा इत्याह । रूपमेवास्यैतत् महिमानं व्याचष्टे " (तैब्रा ३.२.९) इति ॥

१. भै– अनेकपरिवार. । २. ति. भ– बहुपादान. ।

१ आ– वेद्या । २. आ. पा. हा–सहस्रसंख्यानाम् । ३. ६ उ– ' कीदृश ' इत्यस्यानन्तरं ' शततेजा ' ।

पृथिवि देवयजन्योषध्यास्ते मूलं मा हिꣳसिषमपहतोऽररुः पृथिव्यै

पृथिवि । देवयजनीति देव-यजनि । ओषध्याः । ते । मूलम् ।

मा । हिꣳसिषम् । अपहत इत्यप-हतः । अररुः । पृथिव्यै ।

बर्हिः प्रहरति—' पृथिवि ' इति । हे [V]पृथिवि [V]देवयजनि देवयागाधिकरणभूते, त्वदीयायाः [V]ओषध्याः [V]मूलं [V]मा [V]हिंसिषम् । अनेन स्फ्यप्रहारेण न विनाशयामि । प्रथमस्यामन्त्रितस्य पाष्ठिकमाद्युदात्तत्वम् । "नाऽऽमन्त्रिते समानाधिकरणे" (पा ८·१·७३) इति पूर्वस्याविद्यमानवत्त्वनिषेधात् द्वितीयः पदात् परत्वान्निहन्यते । ओषधिशब्दस्य दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् । [3]ओषशब्दोऽयं घञन्त आद्युदात्तः । " विपाद्वै नामाऽसुरः " ( तैब्रा ३·२·९ ) इति ब्राह्मणम् । तेन ब्राह्मणोक्तमेध्यत्वाभिप्रायं पृथिव्या देवयजनत्वम् । यथा—" मेध्यामेवैनां देवयजनीं करोति " ( तैब्रा ३·२·९ ) इति ॥ १०

सतृणं पुरीषमादत्ते—' अपहतः ' इति ॥ [V]अपहतः अपनीतः । " गतिरनन्तरः " (पा ६·२·४९ ) इति पूर्वपदप्रकृतिस्वरत्वम् । " [4]अररुर्वै नामासुर आसीत् " ( तैब्रा ३·२·९ ) इत्यादि[4] ब्राह्मणप्रसिद्धोऽसुरविशेषः [V]अररुः अरणशीलः गूढचारी । "अर्तेररुः" ( उ ५२८ ) इत्यरुप्रत्ययः । स इतः पृथिव्या अपहृतः ।अपादानस्य [5]शेषत्वेन विवक्षायां[5] षष्ठ्यर्थे चतुर्थी । " उदात्तयणो हल्पूर्वात् " (पा ६·१·१७४ ) इति विभक्तेरुदात्तत्वम् ॥ १५

तृतीयभागे तेजोजनकतया तेजोरूपेण वायुना स्फ्यरूप उपमिते सति यजमाने तेजो भवतीत्याह—"वायुरसि तिग्मतेजा इत्याह । तेजो वै वायुः । तेज एवास्मिन् दधाति " ( तैब्रा ३·२·९ ) इति ॥

**पृथिवीति** ॥ कल्पः—अथान्तर्वेद्युदीचीनाग्रं दर्भं निधाय तस्मिꣳ स्फ्येन प्रहरति पृथिवि देवयजन्योषध्यास्ते मूलं मा हिꣳसिषमिति " ( द्र. बौश्रौ १·११ ) इति ॥ हे देवयागाश्रयभूते [V]पृथिवि, त्वदीयायाः [V]ओषध्याः [V]मूलं [V]मा विनाशयामि ॥ अत्र ' देवयजनि ' इति विशेषणेन [6]वाम्तिलोहिताभ्यामापादितमशुचित्वं [6]निवारयतीत्याह—" विपाद्वै नामासुर आसीत् । सोऽबिभेत् । यज्ञेन मा देवा अभिभविष्यन्तीति । स पृथिवीमभ्यवमीत् साऽमेध्याऽभवत् । अथो यदिन्द्रो वृत्रमहन् । तस्य लोहितं पृथिवीमनु व्यधावत् । साऽमेध्या अभवत् । पृथिवि देवयजनीत्याह । मेध्यामेवैनां देवयजनीं करोति " ( तैब्रा ३·२·९ ) इति । [6]"विषमत्तीति विपात्"[6] ॥ इतरभागप्रयोजनमाह—" ओषध्यास्ते मूलं मा हिꣳसिषमित्याह । ओषधीनामहिꣳसायै " ( तैब्रा ३·२·९ ) इति ॥ २५

**अपहत इति** ॥ कल्पः—" अपहतोऽररुः पृथिव्या इति स्फ्येन सतृणान् पांसूनपादाय " ( आपश्रौ २·१·५ ) इति । [V]अररुः नामकोऽसुरः । सोऽत्र रजोपनयनेन पृथिव्याः सकाशात् [V]अपहतः ॥

३. मै– ओषशब्दः; पं. व– ओषधिशब्दः । ४–४. ति– भ्रातृव्यो वा अररुरिति । ५-५. तं. ति- शेषत्वे तद्विवक्षायाम् ।

४ ग-ररा(?)रो है' । ५. गं-…(?) इत्याह । ६–६. इ. उ. पा. भा. द्रा–'विषमत्तीति विपात्' नास्ति ।

व्रजं गच्छ गोस्थानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो

व्रजम् । गच्छ । गोस्थानमिति गो-स्थानम् । वर्षतु । ते । द्यौः । बधान । देव । सवितः । परमस्याम् । परावतीति परा-वति । शतेन । पाशैः । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । तम् । अतः ।

हरति—'व्रजम्' इति ॥ व्रजन्त्यस्मिन्निति व्रजः । "गोचरसंचर°" (पा ३.३.११९) इत्यादौ घप्रत्ययान्तो निपातितः । यस्मिन् प्रदेशे पांसवः सघीभूता उत्करभावमापद्यन्ते, तं देशं गच्छति । कीदृशम्? ^v^गोस्थानम्, गोशब्दस्य प्रत्याश्रावण-लक्षणस्य संबन्धि स्थानम् ॥ "छन्दांसि वै व्रजो गोस्थानः" (तैब्रा ३.२.९) इति ब्राह्मणम् । छन्दस्त्वेन तस्य स्तुतिः । तान्यपि हि [६]गवां शब्दानां स्थानानि । कृदुत्तरपदप्रकृतिस्वरत्वम् । स्थानशब्दो ञित्स्वरेणाऽऽद्युदात्तः (पा ६.१.१९७) । ननु "मन्क्तिन्व्याख्यानशयन°" (पा ६.२.१५१) इत्यादिना कृदुत्तरपदान्तोदात्तत्वेन भाव्यम् । तर्हि "परादिश्छन्दसि बहुलम्" (पा ६.२.१९९) इत्युत्तरपदाद्युदात्तत्वं भविष्यति ॥

वेदिं प्रत्यवेक्षते—'वर्षतु' इति ॥ ^v^ते तव स्फ्येन प्रहतायाः शान्त्यर्थं ^v^द्यौः ^v^वर्षतु दिविष्ठपर्जन्यद्वारेण ॥

निवपति—'बधान' इति द्विपदया गायत्र्या यजुरन्तया ॥ हे ^v^देव ^v^सवितः

व्रजमिति ॥ कल्पः—"व्रजं गच्छ गोस्थानमिति हरति" (आपश्रौ २.१.५) इति ॥ 'अस्तु श्रौषट्' इत्यनेन मन्त्रेणाऽऽग्नीध्रः प्रत्याश्रावणं वक्ति । सेयं वागत्र गोशब्देन विवक्षिता । तस्या वाचः स्थानभूत उत्करदेशो व्रजः । हे तृणसहितपांसो, त्वं ^v^व्रजं ^v^गच्छ ॥ 'अप[ह]तोऽररुः पृथिव्यै' इत्येवं पूर्वं मन्त्रं स्पष्टार्थत्वादुपेक्ष्योत्तरं मन्त्रं व्याचष्टे—"व्रजं गच्छ गोस्थानमित्याह । छन्दांसि वै व्रजो गोस्थानः । छन्दांस्येवास्मै व्रजं गोस्थानं करोति" (तैब्रा ३.२.९) इति । गायत्र्यादीनि छन्दांस्येव गोशब्दाभिधेयानां वाचामवस्थानयोग्यो व्रजशब्दाभिधेयो देशविशेषः । तत्रार्थद्वयसाधारणशब्दोपेतं मन्त्रं पठन्नुत्करदेशं छन्दोरूपं संपादितवान् भवति ॥

वर्षत्विति ॥ कल्पः—"वर्षतु ते द्यौरिति वेदिं प्रत्यवेक्षते" (आपश्रौ २.१.५) इति ॥ हे वेदे, तवाऽऽप्यायनाय द्युशब्देनोपलक्षितः पर्जन्यः ^v^वर्षतु ॥ पर्जन्याधारतया तद्रूपत्वोपचारो दिव इत्याह—"वर्षतु ते द्यौरित्याह । वृष्टिर्वै द्यौः । वृष्टिमेवावरुन्धे" (तैब्रा ३.२.९) इति । वर्षतीति वृष्टिः पर्जन्यः ॥

बधानेति ॥ कल्पः—"हृत्वोत्करे निवपति बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौगिति" (बौश्रौ १.११) इति ॥ हे ^v^सवितः ^v^देव, अनेन

६. सं. नि ब—गवादीनाम् ।

**मा मौगपहतोऽररुः पृथिव्यै देवयजन्यै व्रजं (१) गच्छ गोस्थानं वर्षतु ते द्यौर्बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान् द्वेष्टि**

मा । मौक् । अपहत इत्यप-हतः । अररुः । पृथिव्यै । देवयजन्या इति देव-यजन्यै । व्रजम् (१) । गच्छ । गोस्थानमिति गो-स्थानम् । वर्षतु । ते । द्यौः । बधान । देव । सवितः । परमस्याम् । परावतीति परा-वति । शतेन । पाशैः । यः । अस्मान् । द्वेष्टि । ५

सर्वस्य प्रेरक, परमस्यां परावति सुदूरेऽपि देशे स्थितं जनम्। "उपसर्गाच्छन्दसि धात्वर्थे" (पा ५.१.११८) इति वतिः। छान्दसश्चाडागमः। शतेन पाशैः बहुभिः पाशैः तं बधान अस्मिन्नुत्करे तं निश्चेष्टं स्थापय। कम्? यः अस्मान् द्वेष्टि यं च वयं द्विष्मः तमस्माकं द्वेष्टारं द्वेष्यं च बधान। बद्धं तम् अस्मादुत्करात् मा मौक् मा मुचः। यद्वा—परमस्यां परावति परागतौ पराजये शतेन पाशैः अस्माकं द्वेष्टारं द्वेष्यं च बधान। बद्धं च तम् अस्मात् पराजयात् मा मौक् मा मुचः। यद्वा—परमस्यां परावति पराजये पराजयार्थं तस्मिन्नुत्करे बधान। बद्धं च तं मा मुचः उत्करात् पराजयाद्वा। मुचेर्लुङि व्यत्ययेन अङं बाधित्वा च्लेः सिचादेशः। "बहुलं छन्दसि" (पा ७.३.९७) इति इडभावः। हलन्तलक्षणा वृद्धिः, हल्ङ्यादिलोपसंयोगान्तलोपौ। द्वितीये पर्याये 'देवयजन्यै' इति पृथिव्या विशेषणम्। 'अपहतः' इत्यादौ प्रथमप्रहारेण देवयागयोग्यत्वस्यापादितत्वात्। तृतीये च पर्याये अदेवयजनत्वम् असुरस्य विशेषणम्। यस्मिन् वेदिदेशमनुप्रविश्य शयाने १० १५

सतृणपांसुरूपेणावस्थितं[७] द्वेष्टारं द्वेष्यं च पाशशतेनात्यन्तदूरदेशे बधान। तं पुरुषद्वयम् अतो बन्धनात् मा मुञ्च ॥ अत्र 'योऽस्मान् यं च' इति न पुनरुक्तिः, द्वेषं प्रति कर्तृत्वेन कर्मत्वेन च[८] पुरुषभेदादित्याह—"बधान देव सवितः परमस्यां परावतीत्याह। द्वौ वाव पुरुषौ। यं चैव द्वेष्टि। यश्चैनं द्वेष्टि। तावुभौ बध्नाति। परमस्यां परावति शतेन पाशैः। योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौगित्याहानिर्मुक्त्यै" (तैब्रा ३.२.९) इति। परावति दूरभूमौ। अनिर्मुक्तिरनिर्मोक्षः ॥ व्याख्यातात् [९]मन्त्रत्रयात् पूर्वभावी यो मन्त्रः स्पष्टार्थबुद्ध्योपेक्षितस्तं पुनः सिंहावलोकितन्यायेन[१०] स्मृत्वा व्याचष्टे— २०
"अररुर्वै नामाऽसुर आसीत्। स पृथिव्यामुपम्लुप्तोऽशयत्। तं देवा अपहतोऽररुः पृथिव्या इति पृथिव्या अपाघ्नन्। भ्रातृव्यो वा अररुः। अपहतोऽररुः पृथिव्या इति यदाह। भ्रातृव्यमेव पृथिव्या अपहन्ति" (तैब्रा ३.२.९) इति। उपम्लुप्तस्तिरोहितः। यज्ञविघाताय गूढरूपेण भूमौ शयानत्वात्। अत एवायं भ्रातृव्यः शत्रुः। तं च देववन्मन्त्रोच्चारणपूर्वकेण सतृणानां पांसूनामपनयनेनापघ्नन्ति ॥ २५

७. पा. °रूपेणास्थितम्। ८. इ. उ. पा. मा. हा–'च' नास्ति। ९. तं –मन्त्रत्रितयात्।
१०. आ– सिंहावलोकनन्यायेन; क–सिंहावलोकनन्यायेन अनिर्मुक्तः स्यादिति।

यं च॑ व॒यं द्वि॒ष्मस्तम॒तो मा मौ॒गप॑हतो॒ऽररुः॑ पृथि॒व्या अदे॑वयजनो व्र॒जं ग॑च्छ गो॒स्थानं॒ वर्ष॑तु ते॒ द्यौर्ब॑धा॒न दे॑व सवितः पर॒मस्या॑ परा॒वति॑

यम् । च॒ । व॒यम् । द्वि॒ष्मः । तम् । अतः॑ । मा । मौक् । अप॑हत॒ इत्यप॑-ह॒तः । अ॒ररुः॑ । पृ॒थि॒व्याः । अदे॑वयजन॒ इत्यदे॑व-य॒जन॒ः । व्र॒जम् । ग॒च्छ॒ । गो॒स्थान॒मिति॒ गो-स्थान॑म् । वर्ष॑तु । ते॒ । द्यौः । ब॒धा॒न । दे॒व॒ । स॒वि॒तः॒ । प॒र॒मस्या॑म् । प॒रा॒वतीति॑ परा-वति॑ । ५

तस्या भुवि देवयजनं नास्ति, तेन* अदेवयजनोऽसुरोऽपहत इति। नञ्समासे कृते अव्ययपूर्वपदप्रकृतिस्वरत्वम्। तृतीय एव शेष – 'अररुस्ते दिव मा स्कान्' इति। अत एवोत्करस्य योऽयम् [v]अररुः त्वयि बद्धः स [v]दिव स्वर्गं [v]मा [v]अस्कान्* मा गात्। स्कन्देर्लुङि हलन्तलक्षणा वृद्धिः। "बहुलं छन्दसि" (पा ७.३.९७) इति इडभावः। १० "झलो झलि" (पा ८.२.२६) इति सिचो लोपः। हल्ङ्याबादिसंयोगान्तलोपौ। "भ्रातृव्यो वा अररुः" (तैब्रा ३.२.९) इत्यादि ब्राह्मणम्॥

अपहत इति ॥ कल्पः—"द्वितीयं प्रहरति पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंसिषमिति। अपहतोऽररुः पृथिव्यै देवयजन्या इत्यादत्ते। व्रजं गच्छ गोस्थानमिति हरति। वेदिं प्रत्यवेक्षते वर्षतु ते द्यौरिति। इत्वोत्करे निवपति बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं १५ द्विष्मस्तमतो मा मौगिति। तृतीयं प्रहरति पृथिवि देवयजन्योषध्यास्ते मूलं मा हिंसिषमिति। अपहतोऽररुः पृथिव्या अदेवयजन इत्यादत्ते। व्रजं गच्छ गोस्थानमिति हरति। वेदिं प्रत्यवेक्षते। वर्षतु ते द्यौरिति। हृत्वोत्करे निवपति बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौगिति" (बौश्रौ १.११) इति ॥ [11]यद्यपि 'अपहत'[-11] इत्यनयोर्द्वितीयतृतीययोः 'पृथिवि देवयजनि' इत्ययमाद्यमन्त्रो नाऽऽम्नातस्तथाऽपि प्रथमपर्यायादनुषञ्जनीयः। यथा वाक्यस्य परिपूर्तये २० शब्दान्तरमनुषज्यते तथा प्रयोगपरिपूर्त्यर्थं[12] मन्त्रानुषङ्गो न्याय्यः। [13]अररुशब्देनोपहतवेदिभूमिपांसव क्षिप्यन्तोऽपि प्रथमपर्यायेऽपनीतास्तावता वेदिभूम्येकदेशो यागयोग्यः संपन्नः। अनेनैवाभिप्रायेण द्वितीयपर्याये 'अपहतोऽररुः पृथिव्यै देवयजन्यै' इति पृथिवी [14]विशेष्यते। तृतीयपर्याये तु 'अदेवयजन' इत्यररु-विशेषणम्। तदेवमुपहतास्तृणपांसवो यज्ञभूमेरुद्धृत्य यस्मिन्नुदग्देशे निरस्यन्ते स देशः[15] उत्करः[16] इत्युच्यते॥

अररुरिति ॥ कल्पः—"अररुस्ते दिव मा स्कानिति न्युप्तमाग्नीध्रोऽञ्जलिनाऽभिगृह्णाति" (आपश्रौ २५ २.१.८) इति ॥ हे पांसुसमूहरूपोत्कर, तव संबन्धी यः [v]अररुः स स्वर्गं [v]मा गच्छतु॥ द्वितीयतृतीय-

७. तं. ति ब– स। [*पदपाठे 'स्कान्' इति।]

११-११ क– 'यद्यपि अपहत इति' नास्ति। १२. आ. इ उ पा. मा. हा–*परिसमाप्त्यर्थम्। १३. इ. उ. पा मा–अररुशब्देनोपहता वेदि°, हा–अररुशब्देनोपहता वेदि°। १४ इ. उ. पा. मा. हा– विशिष्यते। १५. आ पा. हा–'देश' नास्ति। १६ आ इ उ. पा मा हा–उच्यते।

शृतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा (२) मौगररुस्ते दिवं मा स्कान् वसवस्त्वा परि गृह्णन्तु गायत्रेण छन्दसा रुद्रास्त्वा परि गृह्णन्तु त्रैष्टुभेन छन्दसाऽऽदित्यास्त्वा

शृतेन । पाशैः । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । तम् । अतः । मा (२) । मौक् । अररुः । ते । दिवम् । मा । स्कान् । वसवः । त्वा । परीति । गृह्णन्तु । गायत्रेण । छन्दसा । रुद्राः । त्वा । परीति । गृह्णन्तु । त्रैष्टुभेन । छन्दसा । आदित्याः । त्वा ।

वेदिं परिगृह्णाति— 'वसवः' इति ॥ वसवः अष्टौ । अष्टाक्षरा गायत्री । ते च गायत्रेण छन्दसा त्वां दक्षिणतः परि गृह्णन्तु । एकादश रुद्राः । एकादशाक्षरा त्रिष्टुप् । ते एकादशाक्षरेण त्रैष्टुभेन छन्दसा त्वां पश्चात् परि गृह्णन्तु । द्वादश आदित्याः । ते द्वादशाक्षरेण जागतेन छन्दसा त्वामुत्तरतः परि गृह्णन्तु । " छन्दसः प्रत्ययविधाने

पर्याययोः [17]प्रथमव्याख्ययाऽवबोद्धुं शक्यतया तावुपेक्ष्य मन्त्रमेतं व्याचष्टे—" तेऽमन्यन्त । दिवं वा अयमितः पतिष्यतीति । तमररुस्ते दिवं मा स्कानिति दिवः पर्यबाधन्त । भ्रातृव्यो वा अररुः । अररुस्ते दिवं मा स्कानिति यदाह । भ्रातृव्यमेव दिवः परिबाधते "। ( तैब्रा ३.२.९ ) इति । ते देवाः केनाप्युपायेनाररुर्बन्धनं[18] छित्वा फलविघाताय स्वर्गं गमिष्यतीति मत्वा मन्त्रेण बन्धनं दृढीकृत्य दिवः सकाशाद्यथा परितो बाधितो भवति तथा यत्नं कृतवन्तः । तस्मादाग्नीध्राञ्जलिना पांसुराशौ निरुद्धे सति भ्रातृव्यः [19]स्वर्गात् बाधितो[19] भवति ॥ मन्त्रान् व्याख्यायानुष्ठानं विधत्ते—"स्तम्बयजुर्हरति । पृथिव्या एव भ्रातृव्यमपहन्ति । द्वितीयꣳ हरति । अन्तरिक्षादेवैनमपहन्ति । तृतीयꣳ हरति । दिव एवैनमपहन्ति । तूष्णीं चतुर्थꣳ हरति । अपरिमितादेवैनमपहन्ति " ( तैब्रा ३.२.९ ) इति । यजुर्मन्त्रेण छिन्नो दर्भः स्तम्बयजुः । तच्च स्तम्बरूपं स्फ्येन छित्वोत्करदेशे हरेत् । त्रिवारमेवं हरणेन [20]लोकत्रये भ्रातृव्यो हतो भवति । अमन्त्रकेण चतुर्थहरणेन अपरिमितात् ब्रह्माण्डात् सर्वस्मात् भ्रातृव्यावधातः ॥

वसव इति ॥ कल्पः—" अथ पूर्वं परिग्राहं परिगृह्णाति वसवस्त्वा परिगृह्णन्तु गायत्रेण छन्दसेति दक्षिणतः, रुद्रास्त्वा परिगृह्णन्तु त्रैष्टुभेन छन्दसेति पश्चादादित्यास्त्वा परिगृह्णन्तु जागतेन छन्दसेत्युत्तरतः " ( बौश्रौ १.११ ) इति ॥ आहवनीयगार्हपत्ययोर्मध्ये वेदिं खनितुं वेदिसीम्नोऽवबोधाय[21] स्फ्येन दिक्त्रये रेखात्रयं कर्तव्यम् । सोऽयं वेदेः परिग्राहः । परिग्रहीताऽध्वर्युर्दिक्त्रये क्रमेण भावनया वस्वादिरूपः, [22]परिग्राहसाधनभूतः स्फ्यश्च छन्दस्त्रयरूपः । तमिमं परिग्राहं विधत्ते—"असुराणां वा इयमग्र आसीत् । यावदासीनः परापश्यति । तावद्देवानाम् । ते देवा अब्रुवन् । अस्त्वेव नोऽस्यामपीति । कियं नो दास्यथेति । यावत् स्वयं परिगृह्णीथेति । ते वसवस्त्वेति दक्षिणतः पर्यगृह्णन् । रुद्रास्त्वेति पश्चात् । आदित्यास्त्वेत्युत्तरतः । तेऽग्निना प्राञ्चोऽजयन् । वसुभिर्दक्षिणा । रुद्रैः प्रत्यञ्चः । आदित्यैरुदञ्चः । यस्यैवं विदुषो वेदिं परिगृह्णन्ति । भवत्यात्मना । पराऽस्य भ्रातृव्यो भवति " ( तैब्रा ३.२.९ ) इति । पुरा कदाचिदसुराणां विजये सति

१७. क. तं–प्रथमपर्यायवत् बोद्धुम् । १८. आ. हा– बन्धम् । १९–१९. आ. इ. उ. पा. भां. हा–स्वर्गबाधितः । २०. आ. इ.उ. पा. भां. हा–लोकेभ्यः । २१. आ. इ. उ. भां. हा–वेदिमानाय । २२. इ. उ. क. पा. भां. हा–परिग्रहणसाधनभूतः ।

परिं गृह्णन्तु जाग॑तेन॒ छन्द॑सा दे॒वस्य॑ सवि॒तुः स॒वे कर्म॑ कृण्वन्ति वे॒धसः॑

परीति॑ । गृ॒ह्ण॒न्तु॒ । जाग॑तेन । छन्द॑सा । दे॒वस्य॑ । स॒वि॒तुः । स॒वे । कर्म॑ । कृ॒ण्व॒न्ति॒ । वे॒धसः॑ ।

नपुंसके स्वार्थ उपसंख्यानम्* " (पा ४.२.५५ वा १) इति गायत्रादिभ्यः स्वार्थेऽण्प्रत्ययः । तत्र त्रिष्टुप्-जगतीशब्दाभ्याम् उत्सादित्वादञ् (४.१.८६), प्राग्दीव्यतीयत्वात् तस्योपसंख्या-
५ नस्य । " असुराणां वा इयमग्र आसीत् " (तैब्रा ३.२.९) इत्यादि ब्राह्मणम् ॥

खनति– 'देवस्य' इति द्विपदया गायत्र्या ॥ सवितुः सर्वप्रेरकस्य देवस्य सवे अनुज्ञायाम् अनुज्ञां लब्ध्वैव वेधसः विधायका ऋत्विजः कर्म कुर्वन्ति । यत एवं, तस्मात् अहमपि देवेन सवित्राऽनुज्ञात एव वेदिं खनामि । ततो मम नापराध इति । कृवि जिघांसायाम्, कृवि हिंसाकरणयो: इत्यन्ये । " धिन्विकृण्व्योर च " (पा ३.१.८०) इति उप्र-
१० त्यय । " अतो लोपः " (पा ६.४.४८) । " ‡सवजवौ छन्दसि " (पा ३.३.५६ वा ४) इति सवशब्दोऽजन्तत्वादन्तोदात्तः ॥

एषा पृथिवी कृत्स्नाऽपि तेषामेव स्वभूताऽऽसीत् । देवानां कोऽपि [23]भूम्यंशो नाभूत् । किंतु यो देवो यत्र यदोपविष्टो यावद्दूरं[24] पश्यति तत्र तावान् देश तस्य देवस्य सदा स्वाधीनोऽभवत् । ततो देवा असुरानयाचन्त [25]'युष्मदधीनायामस्यां पृथिव्यां कोऽप्यंशोऽस्माकं नियतोऽपेक्षितस्तत्र [26]कियत्स्थानमस्मभ्यं
१५ दास्यथेति । ततोऽसुरैरनुज्ञाता देवा मन्त्रैर्वेदिं स्वकीयत्वेन स्वीकृतवन्त । तस्याश्च वेदे प्राच्यामाहव-नीयोऽग्नि पालको दक्षिणादिषु वस्वादय । ततश्चतुर्दिक्ष्ववस्थितानां देवानामग्न्यादिमुखेन विजय एव । तस्मादेवं विदुषो यस्य यजमानस्याध्वर्युर्वो यथोक्तमन्त्रैर्वेदिं परिगृह्णीतु स यजमान स्वेनैव [27]रूपेणाभि-भव्यातो भवति । तस्य भ्रातृव्य परा भवति । परिगृह्णन्तीति बहुवचनं पूजार्थं, प्रयोगभेदाभिप्रायेण वा ।

देवस्येति ॥ बौधायन —" अथ प्राचीं स्फ्येन वेदिमुद्धन्ति देवस्य सवितु सवे कर्म कृण्वन्ति
२० वेधस इति " (बौश्रौ १.११) इति । आपस्तम्बस्तु शाखान्तरमन्त्रेण भूमेरुपरिभागावस्थितायास्तृण-सहिताया मृद उद्धननमभिधाय ब्रूते—" देवस्य सवितु सव इति खनति " (आपश्रौ २.२.७) इति ॥ परमेश्वरस्यानुज्ञाया सत्या वेधस समाना अध्वर्यव इदमुद्धननरूपं खननरूपं वा कर्म कुर्वन्ति ॥ ईश्वरानु-

* महाभाष्ये 'छन्दस. प्रत्ययविधाने नपुंसकात् स्वार्थे उपसंख्यानम्' इति वार्तिककार. ।
‡ 'जवसवौ छन्दसि' इति महाभाष्ये ।

२३ आ. इ. उ त. भां द्रा–भूम्यंशभूत. । २४ आ द्रा–यावद्देशम् । २५ ब–युष्मदीयायाम् ।
२६. था. ब– कियद्भूस्थानमस्मभ्यम् , इ. उ पा. भां–कियत्स्थलमस्मभ्यम्, द्रा– कियत्स्थलमस्मभ्यम् ।
२७. स–रूपेण भव्यात् ।

त्तया [२८]सर्वैर्जनैः स्वाभीष्टं कर्म क्रियत इत्येतद्विदुषां प्रसिद्धमित्याह—"देवस्य सवितुः सव इत्याह प्रसूत्यै। कर्म कृण्वन्ति वेधस इत्याह। इषितꣳ हि कर्म क्रियते" (तैब्रा ३.२.९) इति॥ वेदेर्दिग्द्वये निम्नतां विधत्ते—"पृथिव्यै मेध्यं चामेध्यं च व्युदक्रामताम्। प्राचीनमुदीचीनं मेध्यम्। प्रतीचीनं दक्षिणाऽमेध्यम्। प्राचीमुदीचीं प्रवणां करोति। मेध्यामेवैनां देवयजनीं करोति" (तैब्रा ३.२.९) इति। व्युदक्रामतां विभागमाप्नुताम्॥ अंसाकारेण श्रोण्याकारेण च कोणेषु चतुर्ष्वौन्नत्यं विधत्ते—"प्राञ्चौ वेद्यꣳसावुन्नयति। आहवनीयस्य परिगृहीत्यै। प्रतीची श्रोणी। गार्हपत्यस्य परिगृहीत्यै। अथो मिथुनत्वाय" (तैब्रा ३.२.९) इति। अंसयोः श्रोण्योश्च प्रत्येकं युग्मतया मिथुनत्वम्। यद्वा पुमानंसो [२९]स्त्री श्रोणिरिति मिथुनत्वम्॥ भूमेरूर्ध्वभागस्य त्वक्स्थानीयस्य स्फ्येनापसारणं विधत्ते—"उद्धन्ति यदेवास्या अमेध्यम्। तदपहन्ति।" (तैब्रा ३.२.९) इति॥ तमेव विधिमनूद्यार्थवादान्तरमाह—"उद्धन्ति। तस्मादोषधयः पराभवन्ति" (तैब्रा ३.२.९) इति। तस्मादुद्धननात् भूमिष्ठास्तृणस्तम्बा बर्हिरास्तरणहविरासादनविरोधिनो विनश्यन्ति॥ भूमावत्यन्तं [३०]निगूढानां तृणमूलानाम् [३१]उद्धननमात्रेण अपगमाभावात् पृथग्यत्नेन छेदनं विधत्ते—"मूलं छिनत्ति। भ्रातृव्यस्यैव मूलं छिनत्ति। मूलं वा अतितिष्ठद्रक्षाꣳस्यनूत्पिपते" (तैब्रा ३.२.९) इति। वैरिणो मूलं निवासाधिकरणं गृहादिकम्। यदि तृणमूलं भूमिमतीत्य किंचिदवतिष्ठेत तदा तदनु रक्षाꣳस्युद्भवेयुः। तस्मान्मूलं छेदनीयम्॥ छेदनसाधनं विधत्ते—"यद्धस्तेन छिन्द्यात् कुनखिनीः प्रजाः स्युः। स्फ्येन छिनत्ति। वज्रो वै स्फ्यः। वज्रेणैव यज्ञाद्रक्षाꣳस्यपहन्ति" (तैब्रा ३.२.९) इति। स्फ्यस्य वज्रत्वमन्यत्र स्पष्टमाम्नातम्—"इन्द्रो वृत्राय वज्रं प्राहरत् स त्रेधा व्यभवत् स्फ्यस्तृतीयꣳ रथस्तृतीयं यूपस्तृतीयम्" (तैसं ५.२.६) इति॥ प्रादेशपरिमितं[३२] वेदिखननं विधत्ते—"पितृदेवत्याऽतिखाता। इयतीं खनति। प्रजापतिना यज्ञमुखेन संमिताम्" (तैब्रा ३.२.९) इति। [३३]यदियं वेदिः प्रादेशपरिमाणमतीत्य खाता स्यात्तदा पितृदेवत्यत्वादियं [३४]दैविकी न भवेत्। 'इयतीम्' इति प्रादेशपरिमाणाभिनयः[३५]। प्रजापतिसृष्टतया तद्रूपं यज्ञपुरुषस्य मुखम्। तच्च प्रादेशपरिमितम्। अतस्तत्संमितां वेदिं खनेत्॥ पक्षान्तरं विधत्ते—"वेदिर्देवेभ्यो निलायत। तां चतुरङ्गुलेऽन्वविन्दन्। तस्मात् चतुरङ्गुलं खेया" (तैब्रा ३.२.९) इति। केनापि निमित्तेन देवेभ्यो [३६]विमुखीभूता वेदिदेवता भूमौ [३७]निलीना सती [३८]चतुरङ्गुलमात्रखननेन लब्धा। तस्माच्चतुरङ्गुलं खनेत्॥ तं विधिमनूद्यार्थवादान्तरमाह—"चतुरङ्गुलं खनति। चतुरङ्गुले ह्योषधयः प्रतितिष्ठन्ति" (तैब्रा ३.२.९) इति। ओषधिमूले भूमेरन्तश्चतुरङ्गुलं प्रसृते सति ता ओषधयो वायुना नोन्मूल्यन्ते॥ पक्षान्तरं विधत्ते—"आ प्रतिष्ठायै खनति। यजमानमेव प्रतिष्ठां गमयति" (तैब्रा ३.२.९) इति। यदि चतुरङ्गुलप्रमाणेन [३९]प्रादेशप्रमाणेन वा सिकतादिप्रयुक्तशैथिल्यरहिता[४०] भूमिर्न लभ्यते तदा तल्लाभपर्यन्तं खनेत्॥ दक्षिणस्यां दिश्यौन्नत्यं विधत्ते—"दक्षिणतो वर्षीयसीं करोति। देवयजनस्यैव रूपमकः" (तैब्रा ३.२.९) इति। 'प्राचीमुदीचीं प्रवणां करोति' (तैब्रा ३.२.९) इत्यनेनैव सिद्धेऽप्यौन्नत्ये पुनरपि कुड्याकारेण मृत्तिकाप्रक्षेपोऽत्र विधीयते। अकः कृतवान् भवति॥ लोष्टभावरहितां [४१]सिकतया सदृशीं मृदं वेद्यां सर्वत्र [४२]परिकिरेदित्याह—"पुरीषवतीं करोति। प्रजा वै पशवः पुरीषम्। प्रजयैवैनं पशुभिः पुरीषवन्तं करोति" (तैब्रा ३.२.९) इति॥

५ १० १५ २० २५ ३०

---

२८. क–'सर्वैः' नास्ति। २९. आ–योषित्। ३०. आ–निरूढानाम्। ३१. ब–उद्धरणमात्रेण। ३२. ब–°प्रादेशसंमितम्। ३३. आ, क–यदेयम्; तं–यदीयम्। ३४. ब–दैवी। ३५. क–°परिमाणस्याभिप्रायः; तं–°परिमाणस्याभिनयः। ३६. क. तं–विमुखा ३७. ड. ट. तं–विलीना। ३८. आ. क–चतुरङ्गुलमात्रं खननेन; तं–चतुरङ्गुलखननेन। ३९. तं–प्रादेशपरिमाणेन। ४०. आ. इ. उ. पा. मां. हा–°प्रयुक्तशैथिल्यात्। ४१. तं–सीतायाः। ४२. आ. क. तं–विकिरेदित्याह।

ऋ॒तम॑स्यृ॒त॒सद॑नमस्यृ॒त॒श्रीर॑सि धा अ॑सि स्व॒धा अ॑स्यु॒र्वी चासि वस्वी॑ चासि

ऋ॒तम्। अ॒सि। ऋ॒त॒सद॑न॒मित्यृ॒त-सद॑नम्। अ॒सि। ऋ॒त॒श्रीरित्यृ॒त-श्रीः। अ॒सि। धाः।
अ॒सि। स्व॒धेति॒ स्व-धा। अ॒सि। उ॒र्वी। च॒। अ॒सि। वस्वी॑। च॒। अ॒सि।

उत्तरं परिग्राहं परिगृह्णाति—'ऋतमसि' इति ॥ हे वेदे, [V]ऋतं सत्य यज्ञो वा त्वम्
५ [V]असि तदाधारत्वात्। तदेवाह—'ऋतसदनमसि' इति। ऋतस्य सदनम् असि गृहमसि।
ऋतवादी ऋत्विक् यजमानो यज्ञो वा सीदति अस्मिन् इत्यधिकरणे ल्युट्। कृदुत्तरपदप्रकृति-
स्वरत्वम्। ऋतं श्रयति साधनत्वेन इति [V]ऋतश्री। "क्विब्वचि°" (पा ३.२.१७८ वा २)
इत्यादिना क्विप् दीर्घश्च। स एव स्वरः। दक्षिणतः पश्चादुत्तरतश्च त्रय एवैते परिग्रहे मन्त्राः।
"एतावती वै पृथिवी" (तैब्रा ३.२.९) इत्यादि ब्राह्मणम् ॥

१० समीकरोति—'धा' इति यजुरादिकया 'पुरा क्रूरस्य' इत्यादिकया त्रिष्टुभा चतु-
ष्पदया ॥ दधातीति [V]धा। "क्विप् च" (पा ३.२.७६) इति क्विप्। हविषामाधारः
त्वम् [V]असि। स्वधा अन्नं स्वं पुरुष दधातीति। "आतोऽनुपसर्गे कः" (पा ३.२.३)।
कृदुत्तरपदप्रकृतिस्वरत्वम्। [V]स्वधा एव त्वम् [V]असि तत्साधनत्वात्। "ईषा अक्षादिषु

ऋतमिति ॥ कल्प—"उत्तरं परिग्राहं परिगृह्णात्यृतमसीति दक्षिणत ऋतसदनमसीति पश्चादृत-
१५ श्रीरसीत्युत्तरत" (बौश्रौ १.११) इति ॥ ऋतं सत्यम्। तच्च सत्यत्वं त्रिष्वस्ति वेद्यां हविषि फले च।
असुरदानात् पूर्वमासीनो देवो यावन्तं भूदेशं पश्यति न तस्य देवयजनत्वं नियतम्। अतोऽनृतत्वम्। वेदे-
दत्तत्वात् तत्र पुनः परावर्तत इत्यृतत्वम्। ततो हे वेदे, त्वम् [V]ऋतम् [V]असि। हविष फलहेतुत्वं न
कदाचित् व्यभिचरति [४३]इत्यस्ति सत्यत्वम्[४३]। तत्र सत्यं हविस्तस्या वेद्या सीदति। ततो हे वेदे, त्वम्
[V]ऋतसदनम् [V]असि। फलस्यावश्यम्भावित्वादृत्पूतत्वम्। तच्च फलं हविर्द्वारेण वेद्या ध्रीयते। ततो हे वेदे,
२० त्वम् [V]ऋतश्री [V]असि ॥ विधत्ते—"उत्तरं परिग्राहं परिगृह्णाति। एतावती वै पृथिवी। यावती वेदि
तस्या एतावत एव भ्रातृव्यं निर्भज्य। आत्मन उत्तरं परिग्राहं परिगृह्णाति" (तैब्रा ३.२.९) इति।
वेदिव्यतिरिक्ताया भूमेरासुरत्वेन कर्मण्यनुपयोगादुपयुक्ता भूमिर्वेदिरेव। तथा सति [४४]पूर्वपरिग्राहेण महाभूमे
संबन्धिनो वेदिरूपादेव तावतः प्रदेशाद्वैरिणं निःसार्य स्वार्थमुत्तरपरिग्राहं कुर्यात् ॥ मन्त्रार्थो मन्त्रपदैर्व्यवा-
भिव्यक्त इत्याह—"ऋतमस्यृतसदनमस्यृतश्रीरसीत्याह यथायजुरेवैतत्" (तैब्रा ३.२.९) इति ॥
२५ धा इति ॥ बौधायनः—"अथ प्रतीचीं स्फ्येन वेदिं योयुप्यते धा असि स्वधा असि उर्वी चासि
वस्वी चासि पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीरदानुर्यामैरयञ्चन्द्रमसि स्वधाभिस्तां धीरासो
अनुदृश्य यजन्त इति" (बौश्रौ १.११) इति। आपस्तम्बो मन्त्रभेदमाह—"धा असि स्वधा असीति
प्रतीचीं वेदिं स्फ्येन योयुप्यते। उदादाय पृथिवीं जीरदानुरिति वेदिमनुवीक्षते" (आपश्रौ २.३.८-९) इति ॥

४३-४३. ख– इत्यृतत्वमस्ति। ४४. इ–पूर्वपरिग्राहे।

पुरा क्रूरस्यं विसृपों विरप्शि(३)न्नुदादायं पृथिवीं

पुरा । क्रूरस्यं । विसृप इतिं वि-सृपः । विरप्शिन्निति वि-रप्शिन् । उदादायेत्युत्-आदायं । पृथिवीम् ।

छन्दसि प्रकृतिभावमात्रं वक्तव्यम्" (पा ६.१.१२७ वा २) इति पदयोः सवर्णदीर्घत्वाभावः। Vउर्वी महती Vच Vअसि । Vवस्वी वासहेतुः Vच Vअसि । पुरोडाशादिधनवत्त्वेन देवतानां धारकत्वात् । अत्र "गुणवचनात् ङीबाद्युदात्तार्थम्" (पा ४.१.४४ वा १) इति ५ वसुशब्दात् ङीप् । उरुशब्दात् ङीप् ङीष् वा । न कश्चन विशेषः । ङीप्यपि "उदात्तयणो हल्पूर्वात्" (पा ६.१.१७४) इति नद्या उदात्तत्वेन भाव्यम् । अत्र "चवायोगे प्रथमा" (पा ८.१.५९) इति प्रथमा तिङ्विभक्तिर्न निहन्यते ।

अथ कुतोऽवगम्यते ईदृशी वेदिरिदानीमभूदिति तत्राह— 'पुरा' इति ॥ Vक्रूरस्य अररुनाम्नोऽसुरस्य उत्करवद्धस्य Vविसृपः विसर्पणात् Vपुरा पूर्वमेव । "सृपितृदोः कसुन्" १० (पा ३.४.१७) । व्यत्ययेन प्रथमा । Vपृथिवीं प्रथिताम् । Vजीरदानुः जीरोऽग्निः वृष्टिर्वा । 'जु' इति सौत्रो धातुः । तस्मात् "जोरी च" (उ १९१) इति रक्प्रत्ययः । जीरस्य दानुः दात्री जीरदानुः । "दाभाभ्यां नुः" (उ ३१९) इति नुप्रत्ययः । [८]ततः "अन्तोदात्त-प्रकरणे मरुद्वृधादीनां छन्दस्युपसंख्यानम्" (पा ६.२.१०६ वा २) इति पूर्वपदस्या-न्तोदात्तत्वम् । यद्वा—जीवनशीलाः जीराः । "स्फायितञ्चि°" (उ १७८) इति रक्प्रत्ययो १५ बहुलवचनात् जीवेरपि भवति । दानवः दातारः हविषां, यजमानाः । जीरा दानवो यस्यामिति

थोयुज्यते समीकरोति ॥ विविधं [४५]रपणं शब्दनमुच्चैरुपांशुत्वादिभेदेन मन्त्रोच्चारणं विरप्[४६] । तद्वन्त ऋत्विजो विरप्शाः । लोमशशब्दवद् द्रष्टव्यम् । विरप्शा ऋत्विजो यस्यां वेद्यां सा वेदिर्विरप्शिनी । तस्याः संबोधनं छान्दसं Vविरप्शिन् इति । हे वेदे, Vक्रूरस्य उत्करे पांसुभिर्बद्धस्याररोर्विसर्पणात्[४७] निर्गमात् Vपुरा त्वं दैविकहविषां धारयित्री Vअसि । स्वधाशब्देन "एतत्ते तत ये च त्वामनु" (तैसं १.८.५) इत्यादिनोक्तं २० पैतृकपिण्डादिकमुपलक्ष्यते । तेनाऽपि युक्ता Vअसि । अत एव कृत्स्नधारणाद्विस्तीर्णा Vच Vअसि पुरोडाशादिरूपधनवत्त्वात् Vवस्वी Vच Vअसि द्रव्यवत्यसि । जीरा जीवनशीला दानवो हविषां दातारो यावज्जीवादिशास्त्रप्रेरिता यजमाना यस्यां पृथिव्यां सा पृथिवी Vजीरदानुः । द्वितीयार्थे प्रथमा । यद्वा— जीराश्च ते दानवश्च । छान्दसो वचनव्यत्ययः । तादृशाः पूर्वे यजमाना वेदिरूपां Vयां Vपृथिवीं कृत्स्न-भूमेरासुर्याः सकाशादूर्ध्वम् Vआदाय Vचन्द्रमसि[४८] अमृतकिरणैः सार्धं स्थापितवन्तः । इदानींतनास्तु २५

८. मै- 'ततः' नास्ति ।

४५. इ. उ. भां- रवणम्; क- ईरणम् । ४६. इ. उ. भां- विरप्शनम् । ४७. क- निर्गमनात् । ४८. ख- चन्द्रमसः ।

जीरदानुर्यामैरयञ्चन्द्रमसि स्वधाभिस्तां धीरासो अनुदृश्य यजन्ते ॥ ९ ॥

[ देवयजन्यै व्रज तमतो मा विरप्शिन्नेकादश च ]

जीरदानुरिति जीर-दानु । याम् । ऐरयन् । चन्द्रमसि । स्वधाभिरिति स्व-धाभिः ।
ताम् । धीरास. । अनुदृश्येत्यनु-दृश्य । यजन्ते ॥ ९ ॥

५ [ मैस १.१.१०, काठ १.९, कपिष्ठ १.९, वास १.१४-२८ ]

बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । ईदृशीं [v]या त्वा [v]स्वधाभिः अन्नैरोषधिविकारैः सहिताम् [v]उदादाय उत्क्षिप्य [v]चन्द्रमसि ओषधीशे [v]ऐरयन् स्थापितवन्तः यज्वानः । हे [v]विरप्शिन्, वेधाः सम्बोधनम् । विविधं रपणं शब्दनं विरप्[9], उपांशुत्वादिभेदेन मन्त्राणामुच्चारणम् । तद्वन्तो विरप्शाः ऋत्विज उच्यन्ते । लोमादित्वाच्छः (पा ५.२.१००) । तद्वति विरप्शिन् । [10]छान्दसः
१० ङीप्रत्ययाभाव. । [v]ता तादृशीं त्वा चन्द्रमसि स्थापिता देवयजनीभूताम् [v]अनुदृश्य अन्वीक्ष्य 'सैवेयमस्माभि. संस्कृता [11]वेदि.' इति निज्ञाय, [v]धीरास. प्रज्ञावन्तो यजमानाः [v]यजन्ते । "आज्जसेरसुक्" (पा ७.१.५० ) । तस्माद्वयमपि तथैव विज्ञाय यजामः । यद्वा– हे विरप्शिन् वेदे, क्रूरस्य अरुनाम्नोऽसुरस्य विसर्पणात् प्रागेव या त्वाम् उदादाय चन्द्रमसि स्थिताभिः स्वधाभिः अमृतैर्हेतुभि. जीरदानुभूता पृथिवीम् ऐरयन् प्रापयन् । ता तथाविधां त्वाम् अनुदृश्य
१५ धीरा. यजन्ते । तस्माद्वयमपि तादृशीं त्वामवगम्य यजाम इति । दासीभारादित्वात् (पा ६.२.४२ ) 'चन्द्रमसि' इति पदे पूर्वपदप्रकृतिस्वरत्वम् । "यदेवास्या अमेध्यम्" (तैब्रा ३.२.९ ) इत्यादि ब्राह्मणम् ॥

॥ इति प्रथमे नवमोऽनुवाकः ॥

धीमन्त [v]ताम् इमां वेदिं मनसाऽनुचिन्त्य तस्यां [v]यजन्ते ॥ समीकरणं विधत्ते—"क्रूरमिव वा एतत्
२० करोति । यद्वेदिं करोति । धा असि स्वधा असीति योयुप्यते शान्त्यै" (तैब्रा ३.२.९ ) इति ॥ विशेषणद्वयेन कृत्स्नभूमिरूपत्वमशेषधनोपेतत्वं च सपाद्यत इत्याह—"उर्वी चासि, वस्वी चासीत्याह । उर्वीमेवैना वस्वीं करोति" (तैब्रा ३.२.९ ) इति ॥ 'विसृप पुरा' इत्युक्त्या [49]क्रूरमपुरुषमशुचित्वं निवार्यत इत्याह—"पुरा क्रूरस्य विसृपो विरप्शिन्नित्याह मेध्यत्वाय" (तैब्रा ३.२.९ ) इति ॥ चन्द्रमस्यैरयन्नित्यनुसंधानस्य प्रयोजनमाह—"उदादाय पृथिवीं जीरदानुर्यामैरयञ्चन्द्रमसि स्वधाभिरित्याह ।
२५ यदेवास्या अमेध्यम् । तदपहृत्य । मेध्यां देवयजनीं कृत्वा । यददश्चन्द्रमसि मेध्यम् । तदस्यामैरयति" (तैब्रा ३.२.९ ) इति । एरयति आनयतीत्यर्थः ॥ अनुदृश्येति पदस्याभिप्रायमाह—"तां धीरासो अनुदृश्य यजन्त इत्याहानुख्यात्यै" (तैब्रा ३.२.९ ) इति । अनुसन्धानायेत्यर्थः । आग्नीध्रं प्रति प्रैषमुत्पादयति— "प्रोक्षणीरासादय । इध्माबर्हिरुपसादय । स्रुवं च

९. च- इद । १०. च- छान्दसत्वात् । ११. च- भूमिः ।

३० ४९. आ. पा ह्वा–अरुक्रमपु°, तै–क्रूरमपुरुषमशु° ।

सुचश्च संमृड्ढि । पत्नीꣳ संनह्य । आज्येनोदेहीत्याहानुपूर्वतायै ” (तैब्रा ३.२.९) इति । यद्यर्थविपर्ययोऽपि तदनुक्रमेणानुष्ठानोपयुज्यते ॥ आग्नीध्रस्यानुष्ठानं विधत्ते— “ प्रोक्षणीरासादयति । आपो वै रक्षोघ्नीः । रक्षसामपहत्यै ” (तैब्रा ३.२.९) [50] इति ॥ प्रोक्षणीनां स्थानं विधत्ते— “ स्फ्यस्य वर्त्मन्त्सादयति यज्ञस्य संतत्यै ” (तैब्रा ३.२.९) इति [50] । प्रोक्षणीनामपां बाहुल्यं विधत्ते— “ उवाच ” हासितो देवलः । एतावतीर्वा अमुष्मिꣳल्लोक आप आसन् । यावतीः प्रोक्षणीरिति । ५
तस्माद्बह्वीरासाद्याः ” (तैब्रा ३.२.९) इति । अस्मिन् यागे यावत्यः प्रोक्षण्य आसाद्यन्ते तावत्य एवामुष्मिꣳल्लोक आपो भवन्तीति देवलेनोक्तत्वाद्बाहुल्यमत्र [51] कर्तव्यम् ॥ उत्करे स्फ्यस्य परित्यागं ध्यानविशिष्टं विधत्ते— “ स्फ्यमुदस्यन् । यं द्विष्यात् तं ध्यायेत् । शुचैवैनमर्पयति ” (तैब्रा ३.२.९) इति ॥ यथोक्तक्षेपकाले स्फ्यस्य तिर्यग्धारणं विधत्ते— “ वज्रो वै स्फ्यः । अन्वञ्चं धारयेत् । वज्रेऽध्वर्युः क्षण्वीत पुरस्तात्तिर्यञ्चं धारयति । वज्रो वै स्फ्यः । वज्रेणैव यज्ञस्य दक्षिणतो रक्षाꣳस्यपहन्ति । अग्निभ्यां १०
प्राचश्च प्रतीचश्च । स्फ्येनोदीचश्चाधराचश्च । स्फ्येन वा एष वज्रेणास्यै पाप्मानं भ्रातृव्यमपहत्य । उत्करेऽधि प्रवृश्चति । यथोपधाय वृश्चन्त्येवम् ” (तैब्रा ३.२.१०) इति । स्फ्यस्य वज्रत्वप्रतिपादकं श्रुत्यन्तरं पूर्वमुदाहृतम् । अन्वञ्चमभिमुखम् । क्षण्वीत म्रियेत । तत्परिहाराय वेद्याः पूर्वभागे तिर्यञ्चं धारयेत् । तथा सति दक्षिणाग्रत्वेन [52] वेदेर्दक्षिणदिग्व्यवस्थितानि रक्षांसि हतानि भवन्ति । आहवनीयाग्निना पूर्वदिगवस्थितानसुरान् हन्ति । गार्हपत्याग्निना पश्चिमदिगवस्थितान् । स्फ्यस्य मूलेनोत्तरदिग- १५
वस्थितानसुरान् हन्ति । स्फ्यस्य [53] अधोधारणया [54] अधस्तनान्, [55] ऊर्ध्वधारणया उपरितनानित्यपि द्रष्टव्यम् । एवं तिर्यञ्चं धारयन्नध्वर्युः पापरूपं वैरिणमस्या वेदेरपहत्योत्करे छिनत्ति । यथा काष्ठं कस्मिंश्चिदाधारेऽवस्थाप्य लोकाश्छिन्दन्ति तद्वत् ॥ हस्तप्रक्षालनं विधत्ते— “ हस्तावनेनिक्ते । आत्मानमेव पवयते ” (तैब्रा ३.२.१०) इति ॥ स्फ्यस्यापि तद्विधत्ते— “ स्फ्यं प्रक्षालयति मेध्यत्वाय । अथो पाप्मन एव भ्रातृव्यस्य न्यङ्क छिनत्ति ” (तैब्रा ३.२.१०) इति । प्रक्षालितः स्फ्यो यज्ञयोग्यो २०
भवति ॥ किं चानेन पापरूपस्य वैरिणः शरीरं छिन्नं भवति ॥ [56] आग्नीध्रस्यानुष्ठानं विधत्ते— “ इध्माबर्हिरुपसादयति पुष्ट्यै । यज्ञस्य मिथुनत्वाय । अथो पुरोरुचमेवैतां दधाति । उत्तरस्य कर्मणोऽनुख्यात्यै ” (तैब्रा ३.२.१०) इति । [57] इध्मस्य बर्हिषश्च सहोपसादनं [57] परस्परं योगाय । तेन च योगेन यज्ञसंबन्धि मिथुनं भवति । किं चैतामुपसादनरूपां दीप्तिं पुरः करोति । तया दीप्त्योत्तरं कर्तव्यं ख्यापितं भवति ॥ तयोरुपसादने प्रागग्रत्वं विधत्ते— “ न पुरस्तात् प्रत्यगुपसादयेत् । यत्पुरस्तात्प्रत्यगुपसादयेत् । २५
अन्यत्राऽऽहुतिपथादिध्मं प्रतिपादयेत् । प्रजा वै बर्हिः । अपराध्नुयाद्बर्हिषा प्रजानां प्रजननम् । पश्चात्प्रागुपसादयति । आहुतिपथेनेध्मं प्रतिपादयति । संप्रत्येव बर्हिषा प्रजानां प्रजननमुपैति ” (तैब्रा ३.३.१०) इति प्रागग्रत्वम् । प्रत्यगग्रेण बर्हिषा प्रजानामुत्पत्तिः [58] न स्यात् [58] । ततः स्वयं

[50]–[50]. आ. क– ‘ इति । प्रोक्षणीनां स्थानं विधत्ते ’ नास्ति; इ. तं. पा. भा– ‘ प्रोक्षणीनां स्थानं विधत्ते– स्फ्यस्य वर्त्मन् सादयति यज्ञस्य संतत्यै ’ इति नास्ति । [51]. तं–द्रष्टव्यम् । [52]. इ. पा. भां. हा– ३० वेदेर्दक्षिणस्यामवस्थितानि । [53]. इ. तं. पा. भां. हा–अधोधारया । [54]. तं–अधःस्थितान् । [55]. इ. तं. पा. भा–ऊर्ध्वधारया । [56]. तं–आग्नीध्रेणानुष्ठेयम् । [57]–[57]. आ–इध्मस्य बर्हिषश्चोभयोः सहैव सादनम्; इ. पा. भां. हा–इध्माबर्हिषोरुभयोः सहोपसादनम् । [58]–[58]. आ. क. तं–विनश्येत् ।

पश्चादवस्थायोभयं प्रागग्रमुपसादयेत् । तथा सतीध्मस्याऽऽहुतिपथो नापैति । [५९]सम्प्रत्येव समीचीनेन बर्हिषा प्रजोत्पत्तिं प्राप्नोति । इध्माबर्हिषो परस्पर दिग्भेदं विधत्ते—" दक्षिणमिध्मम् । उत्तरं बर्हि. । आत्मा वा इध्म. । प्रजा बर्हि । प्रजा ह्यात्मन उत्तरतरा तीर्थे । ततो मेधमुपनीय । यथादेवतमेवैनत् प्रतिष्ठापयति । प्रतितिष्ठति प्रजया पशुभिर्यजमान " ( तैब्रा ३.२.१० ) इति । पितुर्यजमानस्य
५ दक्षिणभागो युक्त.। [६०]प्रजानाम् उत्तरभाग । तथा सत्युभयं तीर्थे [६१]योग्यस्थाने संपद्यते[६१] । ततस्तदुभयं यज्ञं नीत्वा तत्तद्देवतामनतिक्रम्य स्थापितवान् भवति । [६२]एतेन यजमानस्य प्रजापशुसमृद्धिर्भवति ॥

अत्र विनियोगसंग्रह —

" आदद इत्यं ममादत्त इन्द्रस्येत्यभिमन्त्रयेत् ।
पृथिवि स्तम्बयजुश्छित्त्वा ह्यपगृह्णाति भूरज ॥ १ ॥
१० व्रजं गच्छेदुद्दत्तेदं सर्वं वेदिं समीक्षते ।
अथा धूलिं क्षिपेदेवं पुन: स्तम्बहृतिद्वयम् ॥ २ ॥
अथात्र पूर्ववन्मन्त्रा [६३]अराऽऽग्नीध्रोऽञ्जलौ धरेत्[६३] ।
वस त्रिभिर्ग्रहो वेदेदेव वेदिं खनेदमूम् ॥ ३ ॥
अतोत्तरपरिग्राहो धा असीति समीकृति ।
१५ [६४]उदादायेतीक्षते ता[६४] मन्त्रोक्ता पञ्चविंशति ॥ ४ ॥ " इति ॥

अथ मीमांसा ॥ तृतीयाध्यायस्य सप्तमपादे चिन्तितम्—

" मुख्याङ्गतैव वेद्यादे. प्रयाजाद्यङ्गताऽपि वा ।
तद्वाक्यं प्रक्रियायुक्तं मुख्याङ्गत्वस्य बोधकम् ॥
[६५]मुख्याङ्गस्यापि वेद्यादे प्रयाजादिषु चाङ्गता ।
२० मुख्यार्थत्वात् प्रयाजादेश्चापूर्वव्यवधानत ॥ " ( जैन्या ३.७.१–२ ) इति ॥

दर्शपूर्णमासयो श्रूयते—" वेद्यां हवींष्यासादयति, बर्हिषि हवींष्यासादयति " इति । तथा तद्धर्मा श्रूयन्ते— ' वेदिं खनति, बर्हिर्लुनाति ' इत्यादय । [६६]मुख्यहवींष्याग्नेयपुरोडाशादीनि । अमुख्यहवींषि तु प्रयाजाद्यर्थानि । तत्र स्वस्वधर्मसहितानि[६७] वेद्यादीनि प्रकरणबलात् मुख्यहविषामेव अङ्गानि । ' वेद्यां हवींष्यासादयति ' इति वाक्यात् [६८]सर्वहविरङ्गत्वमिति चेत् । न । प्रकरणेन [६९]वाक्यस्य
२५ संकोचनीयत्वात्[६९] । यदि वाक्यं प्रकरणनैरपेक्ष्येण स्वतन्त्रं स्यात्, तदा [७०]सादनमात्रपर्यवसानेन यागाभावे वैयर्थ्यं स्यात् । सौमिकहविषामप्येतद्वेद्यामादन प्रसज्येत । तस्मात् मुख्यं हवि, तदङ्गं वेद्यादिकमिति प्राप्ते ब्रूम —अस्तु वैयर्थ्यातिप्रसङ्गपरिहारेण प्रकृतापूर्वसाधनभूतहविष्षु वेद्यादेरङ्गत्वम् ।

५९. त–' संप्रत्येव ' नास्ति, इ. पा. मा. हा–' संप्रत्येव ' इत्यस्यानन्तरम् ' इति ' । ६०. आ. क. त–प्रजाया° । ६१–६१. इ. पा. मा. हा–योग्ये स्थाने सपाद्यते । ६२ त–तेन, च–तेन च, पा. हा–एतेन च ।
३० ६३–६३ इ त. पा. मां हा–अराग्नीध्राञ्जलौ क्षिपेत्, क–त–अराग्नीध्राञ्जलौ धरेत् । ६४–६४ आ–उदादायेति वेदीक्षा, इ त पा. मा. हा–उदादायेतीक्षते ता° । ६५. त–मुख्याङ्गस्यैव । ६६ आ. क. त–मुख्यानि हवींष्याग्नेय° । ६७. इ. त पा. मा. हा–°धर्मविहितानि । ६८. आ. क. त–सर्वहविरङ्गतेति । ६९–६९. त. हा–वाक्यसंकोचात् । ७०. पा. मा–सादनमात्रकर्तृपर्यवसानेन ।

वेद्यधिकरणम् ]

प्रयाजादिहवींष्यपि [७१]स्वकीयावान्तरापूर्वद्वारा मुख्यापूर्वसाधनान्येवेति[७१] तदङ्गत्वमपि वेद्यादेर्युक्तम् । एवं सति वाक्यस्यात्यन्तसंकोचो न [७२]भवति ॥

पञ्चमाध्यायस्य प्रथमपादे चिन्तितम्—

" पुरोडाशाभिवासान्तस्यापकर्षोऽस्ति दर्शके ।
न वाऽऽद्योऽस्त्वपकृष्टाया वेदेर्वैगुण्यहानये ॥
अभिवासात् परा वेदिरिति [७३]तत्क्रमबोधतः ।
प्रागेव विहिता दर्शे वेदिर्नातोऽपकर्षणम् ॥ " ( जैन्या ५.१.३२-३३ ) इति ॥

दर्शपूर्णमासयोः पुरोडाशस्य कपालेषु श्रपितस्य [७४]आच्छादनमाम्नातम्—" भस्मनाऽभिवासयति " ( तैब्रा ३.२.८ ) इति । तत ऊर्ध्वं वेदिराम्नाता[७५] । तेनैव क्रमेण पौर्णमासीयागे प्रतिपद्यनुष्ठानं कृतम् । दर्शयागे तु वेदेरपकर्ष आम्नातः—" पूर्वेद्युरमावास्यायां वेदिं करोति " इति । तत्र वेदेः पूर्वभाविनोऽभिवासनान्तस्याङ्गसमूहस्यापकर्षः कर्तव्यः, अन्यथा वेदेर्वैगुण्यप्रसङ्गादिति प्राप्ते ब्रूमः—यदि दर्शः पूर्णमासीविकारः स्यात्तदा पौर्णमास्यां क्लृप्तः क्रमो दर्शेऽतिदिश्येत । न त्वसौ विकारः । तस्मात् कश्चित्क्रमोऽत्र स्वातन्त्र्येणोपेयः । क्रमोपयनं च सर्वेषु [७६]धर्मेष्वाम्नातेषु पश्चात्पाठादिभिः संपद्यते । वेदिपदार्थश्चाभिवासनादूर्ध्वं दर्शपूर्णमाससाधारण्येनाऽऽम्नातः । विशेषतस्तु दर्शयागे पूर्वेद्युरेवाऽऽम्नायते । तथा सत्यभिवासनवेद्योः क्रमबोधात् प्रागेव दार्शिकवेदेः पूर्वदिनसंबन्धावगमात् तदेव तस्याः स्थानमिति वेदेरपि तावन्नापकर्षः । [७७]तत्र कुतः[७७] अभिवासनान्तस्याङ्गसमूहस्याऽपकर्षः ॥

प्रथमाध्यायस्य चतुर्थपादे चिन्तितम्—

" [७८]प्रोक्षणीः संस्कृतिर्जातिर्योगो वा सर्वभूमिषु ।
[७९]तयोक्तेः संस्कृतिर्जातिः स्याद्रूढेः प्रबलत्वतः ॥
अन्योन्याश्रयतो नाऽऽद्यो न जातिः कल्प्यशक्तितः ।
योगः स्यात् क्लृप्तशक्तित्वात् क्लृप्तिर्न्यायकरणात्तथैव ॥ "

( जैन्या १.४.२४-२५ ) इति ॥

दर्शपूर्णमासयोः श्रूयते—" प्रोक्षणीरासादयति " ( तैब्रा ३.२.९ ) इति । तत्र प्रोक्षणीशब्दस्य [८०]अभिमन्त्रणासादनादिसंस्कृतिः[८०] प्रवृत्तिनिमित्तम् । कुतः । सर्वेषु वैदिकप्रयोगप्रदेशेषु[८१] संस्कृतानामेवापां प्रोक्षणीशब्देनोच्यमानत्वादित्येकः पक्षः । लोके जलक्रीडायां प्रोक्षणीभिरुद्वेजिताः स्म इत्यसंस्कृतास्वप्सु प्रयोगाद्बर्हिरादिशब्दवज्जातौ रूढत्वादुदकत्वजातिः प्रवृत्तिनिमित्तम् । न च प्रकर्षेणोक्ष्यते सिच्यत आभिरिति योगोऽत्र शङ्कनीयः, रूढेः प्रबलत्वादिति पक्षान्तरम् । तत्र न तावत् संस्कारो

७१-७१. इ. उ. पा. भां. ह्रा-स्वकीयावान्तरापूर्वसाधनान्येवेति । ७२. आ. तं-भविष्यति । ७३. इ. उ. ह्रा-तत्क्रमबोधनम् । ७४.- इ. उ. पा. भां. ह्रा- छादनमा° । ७५. इ. उ. पा. भां. ह्रा- ' वेदिराम्नायते ' ७६. तं. च-पदार्थेष्वाम्नातेषु । ७७-७७. आ-तत्कुतः; इ. उ. क. भां. २०. ह्रा-ततः । ७८. क. च-प्रोक्षणी । ७९. इ. उ. पा. भां-तयोक्ते; तं-तयोक्त° । ८०-८०. च-°मन्त्रणासादनादिकम्; मा-°मन्त्रणासादनादिसंस्तुतिः । ८१. इ. उ. पा. भां. ह्रा-वैदिकप्रदेशेषु ।

युक्तोऽन्योन्याश्रयत्वात् । विहितेष्वभिमन्त्रणादिसंस्कारेष्वनुष्ठितेषु पश्चात् संस्कृतास्वप्सु प्रोक्षणीशब्दप्रवृत्ति । तत्प्रवृत्तौ सत्यां प्रोक्षणीशब्देनापोऽनूद्याभिमन्त्रणादिविधिरित्यन्योन्याश्रयत्वम् । नापि जातिपक्षो युक्त । उदकजातौ प्रोक्षणीशब्दस्य वृद्धव्यवहारे पूर्वमक्लृप्तत्वेनेव पर कल्पनीयत्वात् । ततो गोशब्दवदश्वकर्णशब्दवच्च रूढो न भवति । योगस्तु [82]व्याकरणे क्लृप्त,[82] सोपसर्गाद्धातो करणे ल्युट्प्रत्ययेन (पा ३ ३ ११५) व्युत्पादनात् । तस्मात् प्रोक्षणीशब्दो यौगिक । घृतादेः प्रोक्षणत्वं [83] प्रयोजनम् ॥

द्वितीयाध्यायस्य प्रथमपादे चिन्तितम् —

" प्रोक्षणीरासादयेति निगदस्त्रिविधाद्बहि ।
यजुर्वोच्चैस्त्वधर्मस्य भेदादस्य चतुर्थता ॥
परप्रत्यायनार्थत्वादुच्चैस्त्वं [84] यजुरेव स ।
तल्लक्षणेन युक्तत्वात् त्रैविध्यमिति सुस्थितम् ॥ " (जैन्या २ १.३८–३९) इति ॥

' प्रोक्षणीरासादय, इध्माबर्हिरुपसादय, अग्नीदग्नीन् विहर, बर्हि स्तृणीहि ' इत्यादयो निगदा आम्नाता । परसंबोधनार्था मन्त्रा निगदा । ते च पूर्वस्य ऋग्यजुःसामभ्यो बहिर्भूताश्चतुर्थप्रकारा । कुतः । पादगीत्योर्ऋक्सामलक्षणयोरभावात् प्रश्लिष्टपाठस्य यजुर्लक्षणस्य सत्त्वेऽपि धर्मभेदेन यजुष्यन्तर्भावानुपपत्ते । ' उपांशु यजुषा, उच्चैर्निगदेन ' इति हि धर्मभेद इति प्राप्ते ब्रूम — ' ब्राह्मणा भोज्यन्ता परिव्राजकास्त्वन्त ' इत्यत्र सत्येव परिव्राजकानां ब्राह्मण्ये पूजानिमित्तो विशेषो यथा, तथा निगदाना यजुर्लक्षणोपेतत्वाद् यजुषामेव सता परप्रत्यायननिमित्त उच्चैस्त्वं धर्म । ततो मन्त्राणां त्रैविध्यं सुस्थितम् ॥

अथ व्याकरणम् ॥ आदद इत्यादौ स्वरा प्रसिद्धा । दक्षिण इत्यत्र " स्वाङ्गाख्यायामादिर्वा " (फि ९) इत्याद्युदात्त । पृथिवीत्यत्र वाक्यादित्वेन पाष्ठिकामन्त्रिताद्युदात्तत्वम् । भरतेत्यत्राविद्यमानत्वेऽप्रत्यय आद्युदात्त । गोस्थानमित्यत्र कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते तदपवाद " मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीता " (पा ६ २ १५१) । मन्नन्त क्तिन्नन्तं व्याख्यानादिचतुष्टयं याजकादिगण क्रीतशब्दश्चोत्तरपदमन्तोदात्तं भवतीत्यन्तोदात्तत्वे प्राप्ते " परादिश्छन्दसि बहुलम् " (पा ६.२.१९९) इत्युत्तरपदाद्युदात्त । वर्षतिविति वाक्यादि । तथा [85]बधानेत्यपि । तत्र शानजादेशस्य चित्त्वादन्तोदात्त । पाशशब्दो घनन्त । द्वेष्टीत्यत्र यच्छब्दयोगान्न निघात । गायत्रशब्दस्य वृद्धत्ययान्तत्वात् प्रत्ययस्वर । त्रैष्टुभजागतशब्दयोरण्प्रत्यये सत्याद्युदात्त । उर्वीशब्दे ङीषन्त । धत्वीशब्दो वृषादि । सुराशब्दस्य निपातत्वाभावादन्तोदात्त । विष्णु इत्यत्रोत्तरपदस्य क्सुप्रत्ययान्तत्वात् [86] आद्युदात्त । उदादायेत्यत्र ल्यप पित्त्वाद्धातुस्वरावशेषे कृत्स्वर । जीरदानुशब्द पृषोदरादि । ऐरयदित्यत्र यच्छब्दयोगान्निघाताभावे सति आडागमस्य विहितमुदात्तत्वं सतिशिष्टम् । चन्द्रमसीति दासीभारादि । अनुदयेति कृत्स्वर ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-
संहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके नवमोऽनुवाक ॥

---

[82]-[82]. आ-व्याकरणेन क्लृप्त, इ. ट. पा. मां हा-व्याकरणोक्त ।  [83]. भा; इ. पा. मां. हा-प्रोक्षणत्वम् ।  [84] पा. मां. हा-परप्रत्यायनार्थत्वादुच्यते, इ. उ-परप्रत्ययनार्थत्वादुच्यते; क. वं-परप्रत्ययनार्थत्वादुच्चत्वम् ।  [85]. क-बधानेत्यत्रापि ।  [86]. तं-आदिरुदात्त ।

प्रत्युष्ट॒ꣳ रक्षः॒ प्रत्यु॑ष्टा॒ अरा॑तयो॒ऽग्नेर्व॒स्तेजि॑ष्ठेन॒ तेज॑सा॒ निष्ट॑पामि
गो॒ष्ठं मा निर्मृ॑क्षं वा॒जिनं॑ त्वा सपत्नसा॒हꣳ सं मा॑र्ज्मि

प्रत्यु॑ष्ट॒मिति॒ प्रति॑-उ॒ष्टम् । रक्षः॑ । प्रत्यु॑ष्टा॒ इति॒ प्रति॑-उ॒ष्टाः । अरा॑तयः । अ॒ग्नेः ।
वः॒ । तेजि॑ष्ठेन । तेज॑सा । निरिति॑ । त॒पा॒मि॒ । गो॒ष्ठमिति॑ गो-स्थम् । मा । निरिति॑ ।
मृ॒क्ष॒म् । वा॒जिन॑म् । त्वा॒ । स॒प॒त्न॒सा॒हमिति॑ सपत्न-सा॒हम् । समिति॑ । मा॒र्ज्मि॒ । ५

गार्हपत्ये स्रुवादीन् प्रतितपति—' प्रत्युष्टम् ' इति ॥ व्याख्यातम् ( तैसं १.१.२ ) । ᵛतेजिष्ठेन तेजितृतमेन तीक्ष्णतमेन ᵛअग्नेः ᵛतेजसा ᵛवः युष्मान् ᵛनिष्टपामि निष्कृष्य दोषेभ्यः तपामि । " निसस्तपतावनासेवने " ( पा ८.३.१०२ ) इति षत्वम् । तेजितृशब्दात् " तुश्छन्दसि " ( पा ५.३.५९ ) इतीष्ठनि, " तुरिष्ठेमेयःसु " ( पा ६.४.१५४ ) इति तृशब्दलोपः ॥ १०

स्रुवं संमार्ष्टि—' गोष्ठम् ' इति ॥ गावस्तिष्ठन्ति यत्र स गोष्ठो देशः । " घञर्थे कविधानम्° " (पा ३.३.५८ वा ४) इति कः । थाथादिसूत्रेण (पा६.२.१४४) अन्तोदात्तत्वम्[1] । "अम्बाम्ब°" (पा ८.३.९७) इत्यादिना षत्वम् । यस्मादहं गवां स्थानं ᵛमा ᵛनिर्मृक्षं मा विनीनशम् इति प्रार्थयसे, तस्मात् ᵛवाजिनम् अन्नवन्तम् अन्नसाधनभूतं ᵛसपत्नसाहं सपत्नानां शत्रूणाम् अभिभवितारं त्वां ᵛसं ᵛमार्ज्मि शोधयामि । स्रुवादिसंमार्गाभावे यागाभावेन वृष्ट्यभावात् १५ गवादयो विनश्येयुरिति भावः । ' निर्मृक्षम् ' इति [2]मृशतेर्लुङि "शल इगुपधादनिटः क्सः" (पा ३.१.४५ ) इति च्लेः क्सादेशः । ' सपत्नसाहम् ' इति कर्मण्यणन्तोऽन्तोदात्तः ॥

नवमे वेदिरुक्ता । दशमे वेद्यामासादनीयस्याऽऽज्यादिहविषो ग्रहणमभिधीयते ॥

**प्रत्युष्टमिति** ॥ बौधायनः—" अथैताः स्रुचः समादत्ते दक्षिणेन स्रुवं जुहूपभृतौ सव्येन ध्रुवां प्राशित्रहरणं वेदपरिवासनानीति । गार्हपत्ये प्रतितपति प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातयोऽग्नेर्वस्तेजिष्ठेन तेजसा २० निष्टपामि इति " ( बौश्रौ १.१२ ) इति । आपस्तम्बस्य मते ' प्रत्युष्टम् ' ( आपश्रौ २.४.२ ), ' अग्नेर्वः ' ( आपश्रौ २.४.१० ) इत्येतौ द्वौ मन्त्रौ । तौ च संमार्जनात् प्राक् पश्चाच्च क्रमेण स्रुचां तापने विनियुज्येते ॥ प्रत्युष्टमन्त्रो व्याख्यातः ॥ हे स्रुचः, युष्मानतितीक्ष्णेन ᵛअग्नेः ᵛतेजसा निःशेषेण तपामि । अनिष्टपरिहारायेष्टसिद्धये चोभौ मन्त्रावित्याह—" प्रत्युष्टꣳ रक्षः प्रत्युष्टा अरातय इत्याह । रक्षसामपहत्यै । अग्नेर्वस्तेजिष्ठेन तेजसा निष्टपामीत्याह मेध्यत्वाय " ( तैब्रा ३.३.१ ) इति ॥ २५

**गोष्ठमिति** ॥ कल्पः—" अथ स्रुवं संमार्ष्टि गोष्ठं मा निर्मृक्षं वाजिनं त्वा सपत्नसाहꣳ सं मार्ज्मीति । ... । अथ जुहूं सं मार्ष्टि वाचं प्राणं मा निर्मृक्षं वाजिनीं त्वा सपत्नसाहीꣳ सं मार्ज्मीति । ... । अथोपभृतं सं मार्ष्टि चक्षुः श्रोत्रं मा निर्मृक्षं [1]वाजिनीं त्वा सपत्नसाहीꣳ[1] सं मार्ज्मीति । ... । अथ ध्रुवां

1. ति. ध— थाथादिस्वरेणान्तो° । 2. व— मृजेर्लुङि ।

1–1. आ—वाजि त्वा सपत्नसाहम् । ३०

वाचं॑ प्रा॒णꣳ॒ चक्षुः॒ श्रोत्र॑ꣳ प्र॒जां योनि॒ मा निर्मृ॑क्षं वा॒जिनीं॑ त्वा सपत्नसा॒हीꣳ॑

वाच॑म् । प्रा॒णमिति॑ प्र-अ॒नम् । चक्षुः॑ । श्रोत्र॑म् । प्र॒जामिति॑ प्र-जाम् ।
योनि॑म् । मा । निरिति॑ । मृ॒क्षम् । वा॒जिनी॑म् । त्वा॒ । स॒प॒त्न॒सा॒हीमिति॑ सपत्न-सा॒हीम् ।

जुहूं संमार्ष्टि—' वाचम् ' इति ॥ अत्र ' मा निर्मृक्षम् ' इत्यादि वक्ष्यमाणमनुषज्यते ।
५ याथादिस्वरेण ( पा ६ २·१४४ ) प्राणशब्दोऽन्तोदात्तः ॥

उपभृतं समार्ष्टि—' चक्षुः ' इति ॥ पूर्ववद्वक्ष्यमाणस्यानुषङ्गः ॥

ध्रुवां समार्ष्टि—' प्रजाम् ' इति ॥ ' सपत्नसाहीम् ' इति उदात्तनिवृत्तिस्वरेण ( पा ६·१·१६१ ) ङीप उदात्तत्वम् ॥

---

संमार्ष्टि प्रजां योनिं मा निर्मृक्षं वाजिनीं त्वा सपत्नसाहीꣳ संमार्ज्मीति " ( बौश्रौ १·१२ ) इति ॥ हे स्रुव,
१० गवा स्थाने [४]मा विनाशयामीत्यभिप्रेत्याक्रमन्तं वैरिणमभिभवितारं त्वा सम्यक् शोधयामि । एवमन्येषु योज्यम् । द्वितीयतृतीयमन्त्रयो ' मा निर्मृक्षम् ' इत्यादिरनुषज्यते ॥ मन्त्राणां स्पष्टार्थत्वमभिप्रेत्य तद्व्याख्यानमुपेक्ष्यानुष्ठानं विधत्ते " स्रुवं समार्ष्टि " ( तैब्रा ३·३·१ ) इति ॥ तत्र क्रमं विधत्ते— " स्रुवमग्रे । पुमाꣳसमेवाऽऽस्य संश्यति मिथुनत्वाय " ( तैब्रा ३·३·१ ) इति । स्रुवः पुमान् । जुह्वाद्याः स्त्रियः । ततस्तास्य पूर्वभावित्वं स्रुवस्य युक्तम् । संश्यति सम्यक् तनूकरोति [२]विवाहार्थं
१५ संस्करोतीत्यर्थः ॥ जुह्वादीनां पौर्वापर्यं विधत्ते—" अथ जुहूम् । अथोपभृतम् । अथ ध्रुवाम् " ( तैब्रा ३·३·१ ) इति ॥

प्रशंसति—" असौ वै जुहूः । अन्तरिक्षमुपभृत् । पृथिवी ध्रुवा । इमे वै लोकाः स्रुचः । वृष्टिः संमार्जनानि । वृष्टिर्वा इमाँल्लोकाननुपूर्वं कल्पयति । ते तत क्लृप्ताः समेधन्ते " ( तैब्रा ३·३·१ ) इति । स्थानावस्थानसाम्येन स्रुचां लोकत्वम् । संमृज्यन्ते स्रुचो यैर्वेदाग्रैस्तानि [३]संमार्जनानि । पूर्वं दर्भैर्वेद
२० इत्या तदग्राणि परियास्य तानि वेदपरिवासनानि [४]"स्रुचां संमार्जनाय"[४] स्थापितानि । तेषां वृष्टिजन्यतया वृष्टिरूपत्वम् । वृष्टिरूपैर्वेदाग्रैर्लोकरूपाणां जुह्वादीनां क्रमेण संमार्जने सति वृष्टिरेवानुक्रमवर्तिनो लोकान् धान्यादिसंपन्नान् करोति । ततस्ते लोकाः संपन्नाः सम्यगभिवर्धन्ते ॥ वेदनं प्रशंसति— " समेधन्तेऽस्मा इमे लोकाः प्रजया पशुभिः । य एवं वेद " ( तैब्रा ३·३·१ ) इति ॥ वेदपरिवासनानामग्रमूलभागयो [५]व्यवस्थां दर्शयति—" यदि कामयेत वर्षुकः पर्जन्यः स्यादिति । अग्रतः संमृज्यात् । वृष्टिमेव निय-
२५ च्छति । अवाचीनाग्रा हि वृष्टिः । यदि कामयेतावर्षुकः स्यादिति । मूलतः संमृज्यात् । वृष्टिमेवोद्यच्छति " ( तैब्रा ३·३·१ ) इति । नियच्छति न्यग्भावेन प्रवर्तयति । उद्यच्छति [६]ऊर्ध्वाकारेण धारयति ॥ तस्मिन्नेव विषये संप्रदायविदां मतमाह—" तदु वा आहुः । अग्रत एवोपरिष्टात् संमृज्यात् । मूलतोऽध-स्तात् । तदनुपूर्वं कल्पते । वर्षुको भवतीति " ( तैब्रा ३·३·१ ) इति । उपरिष्टादिति [७]स्रुचो बिलभागः । अधस्तादिति दण्डभागः । एवं सति परिवासनानां [८]स्रुवस्रुचां चाग्रमग्रेण संबध्यते मूलं
३० मूलेनेत्यानुपूर्वी समा भवति । पर्जन्यश्च वर्षति ॥ बिलभागे विशेषमाह—" प्राचीमभ्याकारम् ।

---

२. क–व्यवहारार्थम् । ३. ब–स्रुक्संमार्जनानि । ४–४. तं–स्रुक्संमार्जनाय । ५. आ. इ उ पा. भा. हा–[५]मूलावयवयो । ६. क.ब–ऊर्ध्वाकर्षणेन; तं–ऊर्ध्वकर्षणेन । ७. उ, भा. हा–स्रुचाग्र । ८. तं. ब–स्रुवः; इ उ. पा. भा. हा–स्रुवस्य ।

अग्रैरन्तरतः । एवमिव ह्यन्नमद्यते । अथो अग्राद्वा ओषधीनामूर्जं प्रजा उपजीवन्ति । ऊर्जं एवान्नाद्यस्यावरुद्ध्यै ” ( तैब्रा ३·३·१ ) इति । बिलभागे पश्चिमोपक्रमां प्रागवसानां स्रुक्संमार्जनक्रियां कृत्वा बिलस्याभ्यन्तरे सर्वत्र आकृष्याऽऽकृष्य संमृज्यात् । यथा भुञ्जानः पुमान् हस्तं [9]पुरतः पात्रे प्रसार्याभितो [10]भोज्यानि आकृष्याऽऽकृष्य मुखबिले प्रक्षिपति तद्वत् । किंच प्रजा ओषधीनामग्रभागादानीय रसमुपजीवन्ति तद्वत् । अत्र परिवासनाग्रैः संमार्जनं रसरूपस्यान्नं योग्यस्यान्नस्य [11]संपत्त्यै भवति ॥ दण्डभागे विशेषमाह—५ “ अधस्तात् प्रतीचीम् । दण्डमुत्तमतः । मूलेन मूलं प्रतिष्ठित्यै ” ( तैब्रा ३·३·१ ) इति । अधस्तादवस्थितं दण्डं प्रति प्रागुपक्रमां पश्चिमावसानां संमार्जनक्रियामुत्तमेन दर्भभागेण कुर्यात् । तथा सति दर्भमूलेन स्रुचो मूलं संबध्यते । तच्च [12]प्रतिष्ठित्यै भवति ॥ बिलदण्डयोरुक्तां व्यवस्थां लौकिकलिङ्गेन द्रढयति—“ तस्माद्-रत्नौ प्राञ्च्युपरिष्टाल्लोमानि । प्रत्यञ्च्यधस्तात् । स्रुग्घ्येषा ” ( तैब्रा ३·३·१ ) इति । मणिबन्धादूर्ध्वं सूक्ष्मरोमाणि प्राङ्मुखानि, अधस्तात्तु प्रत्यङ्मुखानि । एषा हि लौकिकी स्रुक्, तद्दृष्टान्तेन १० वैदिक्यामपि स्रुचि यथोक्तप्रकारो द्रष्टव्यः । अत्र केचिदाहुः—ऊर्ध्वबिलत्वेन [13]हस्तधृतायाः स्रुच ऊर्ध्वाधो-भागौ कृत्स्नावप्युपरिष्टादधस्ताच्छब्दाभ्याम् विवक्षितौ, न तु बिलभागदण्डभागौ । एवं धारकहस्तेऽ-प्यूर्ध्वाधोदेशौ । तथा सत्युक्तं लोमलिङ्गमनुकूलमिति । तर्हि तथैवास्तु ॥ स्रुवस्य प्रथमतः संमार्जनं [14]रूपककल्पनायोपपादयति—“ प्राणो वै स्रुवः । जुहूर्दक्षिणो हस्तः । उपभृत् सव्यः । आत्मा ध्रुवा । अन्नꣳ संमार्जनानि । मुखतो वै प्राणोऽपानो भूत्वा । आत्मानमन्नं प्रविशय । बाह्यतस्तनुवꣳ शुम्भयति । १५ तस्मात् स्रुवमेवाग्रे संमार्ष्टि । मुखतो हि प्राणोऽपानो भूत्वा । आत्मानमन्नमाविशति ” ( तैब्रा ३·३·१ ) इति । आत्मा हस्तयोर्मध्यवर्ति शरीरम् । [15]मुखे संचारिणो[15] वायोः प्राणापानाभिधेये द्वे वृत्ती । उच्छ्वासरूपेण [16]बहिर्निर्गच्छतीति प्राणवृत्तिः । निःश्वासरूपेणान्तः [17]प्रविशतीत्यपानवृत्तिः । तत्र प्राणरूपो वायुः प्राणतां परित्यज्य स्वयमपानो भूत्वा मुखे प्रक्षिप्तम् [18]अन्नग्रासं मध्यशरीरे प्रवेश्य [19]बाह्यं हस्तादिरूपं शरीरं पुष्ट्या शोभितं करोति । २० तस्मादन्नरूपैर्वेदाग्रैः प्राणरूपस्य स्रुवस्यादौ संमार्जनं कर्तव्यम् । तथा कृते सति प्रथमतोऽन्नप्रवेशः, पश्चात् बाह्यहस्तरूपस्य जुह्वादेः शोभेत्येतदुपपन्नम् ॥ प्रसङ्गात् प्राणापानवेदनं प्रशंसति—“ तौ प्राणापानौ । अध्वर्युकः प्राणापानाभ्यां भवति । य एवं वेद ” ( तैब्रा ३·३·१ ) इति । प्रकर्षेण बहिरनितीति प्राणः । अपकर्षेणान्तरनितीत्यपानः । इत्येवं वृत्तिभेदात् तौ प्राणापानौ संपन्नाविति वेदितुरकाले प्राणापानाभ्यां [20]वियोगोऽपमृत्युरूपो न भवति ॥ मन्त्रमुत्पाद्य विनियुङ्क्ते—“ दिवः शिल्पमवततम् । पृथिव्याः ककुभि श्रितम् । तेन वयꣳ सहस्रवल्शेन । सपत्नं नाशयामसि स्वाहेति । स्रुक्संमार्जनान्यग्नौ प्रहरति ” २५ ( तैब्रा ३·३·२ ) इति । दिवः सकाशात् वृष्टिरूपेणाधः प्रसृतमिदं दर्भरूपं चित्रं वस्तु भूमेरुपर्याश्रितं, शतशाखेन तेन दर्भेण वयं वैरिणं नाशयामः । इदं दर्भरूपं हुतमस्तु । अनेन मन्त्रेण वेदपरिवासनानि अग्नौ प्रक्षिपेत् ॥ अस्मिन् मन्त्रे संमार्जनानि न प्रतीयन्त इति शङ्कां वारयति—“ आपो वै दर्भाः । रूपमेवैषामेतन्महिमानं व्याचष्टे ” ( तैब्रा ३·३·२ ) इति । [21]अत्र ‘ दिवोऽवततम् ’ इत्यनेन ३० वृष्टिरूपा आपः प्रतीयन्ते । [22]अपां च[22] दर्भरूपेणोत्पत्तिः पूर्वमेवोत्पवनब्राह्मणे ( तैब्रा ३·२·५ ) दर्शिता । तस्मादेतन्मन्त्रगतशब्दस्वरूपमेवैषां दर्भाणां [23]दिवःशिल्पत्वादिलक्षणं महिमानं प्रख्यापयति ॥

९. व–पुनः पुनः । १०. तं–भोज्यान् । ११. आ. पा. ह्रा–प्राप्त्यै । १२. तं. व–प्रतिष्ठायै । १३. तं. व. ह्रा–हस्ते धृतायाः । १४. इ.उ.पा.भां.–रूपकल्पनायोप°; तं–रूपकल्पनयोप° । १५–१५. आ. मुखसंचारिणः ; तं–मुखसंचारिणे । १६. आ–बहिर्निर्गच्छन्ती तं–बहिर्गच्छन्ती; १७. आ–प्रविशत्यपानवृत्तिः; ३५ तं–प्रविश्य(?)न्त्यपानवृत्तिः । १८. व–अन्नरसम् । १९. तं–‘ बाह्यम् ’ इत्यस्यानन्तरं ‘ तन्वम् ’ । २०. आ. इ. उ. क. पां. भां. ह्रा–वियोगो मृत्युरूपः । २१. आ. पा. ह्रा–‘अत्र’ नास्ति । २२–२२. आ. इ. उ, पा, भां. ह्रा–आपश्च दर्भरूपाः । २३. तं. व–द्युशिल्प° ।

अस्य मन्त्रस्यानुष्टुप्छन्दस्त्वमृग्रूपत्वं चानुसंधेयमित्याह—“ अनुष्टुभर्चा ” ( तैब्रा ३.३.२ ) इति । सम्मृज्यादिति शेषः । विधेयमनुष्टुभः स्तौति—“ आनुष्टुभः प्रजापतिः । प्राजापत्यो वेदः । वेदस्याग्रे स्रुक्संमार्जनानि । स्वेनैवैनानि छन्दसा । स्वया देवतया समर्धयति ” ( तैब्रा ३.३.२ ) इति । जगत्स्रष्टुः प्रजापतेरनुष्टुप् सहकारिणीति तापनीयोपनिषदि श्रूयते—“ स एवं मन्त्रराजं नारसिंहमानुष्टुभम-
५ पश्यत । तेन वै सर्वमिदमसृजत ” ( नृसिंहपूर्वतापनीयोपनिषद् १.१ ) इति । तस्मात् प्रजापतेरानुष्टुभत्वम् । “ प्रजापतेर्वा एतानि श्मश्रूणि । यद्वेदः ” ( तैब्रा ३.३.९ ) इति वक्ष्यति । तस्मात् वेदस्य प्राजापत्यत्वम् । तथा सति वेदाग्रस्य स्वकीयं छन्दः स्वकीया च देवतेत्युभयं समृद्धिहेतुर्भवति ॥ न केवलं छन्दसः प्राशस्त्यं किं तु ऋचोऽपीत्याह—“ अथो ऋग्वाव योषा । दर्भो वृषा । तन्मिथुनम् । मिथुनमेवास्य तद्यज्ञे करोति प्रजननाय । प्रजायते प्रजया पशुभिर्यजमानः ” ( तैब्रा ३.३.२ ) इति ।
१० वृषा सेचनसमर्थः पुमान् ॥ अत्र स्रुक्संमार्जनानामुक्तमन्त्रेणाग्नौ प्रक्षेप इत्येकः पक्षः । अद्भिः प्रक्षाल्य [24]उत्करे [25]प्रक्षिपेत् इत्यपरः पक्षः । अत एव सूत्रकारः—“ अग्नौ प्रहरति ” इत्युक्त्वा पुनरप्याह—“ उत्करे वा न्यस्यति ” ( आपश्रौ २.५.१ ) इति । तमिमं पक्षं विधत्ते—“ तान्येके वृथैवापास्यन्ति । तत्तथा न कार्यम् । आरब्धस्य यज्ञियस्य कर्मणः स विदोहः । पशवो ह्येनानि पशवोऽभितिष्ठेयुः । न तत्पशुभ्यः कम् । अद्भिर्मार्जयित्वोत्करे न्यस्येत् । यद्वै यज्ञियस्य कर्मणोऽन्यत्राहुतीभ्यः संतिष्ठते । उत्करो वाव तस्य
१५ प्रतिष्ठा । एतां हि तस्मै प्रतिष्ठां देवाः समभरन् । यदद्भिर्मार्जयति । तेन शान्तम् । यदुत्करे न्यस्यति । प्रतिष्ठामेवैनानि तद्गमयति । प्रतितिष्ठति प्रजया पशुभिर्यजमानः ” ( तैब्रा ३.३.२ ) इति । केचिदद्भिः प्रक्षालनमकृत्वैव यत्र क्वापि परित्यजन्ति तदयुक्तम् । य एषोऽनुष्ठानप्रकारः स कर्मणो विपरीतं फलं दोग्धि । [26]अनवक्षालितदर्भाक्रमणेन पशूनां रोगोत्पत्त्या सुखं न भवेत् । मार्जनेन तच्छान्तं भवति । आहुतिव्यतिरिक्तस्य [27]यज्ञियद्रव्यस्योत्करः समाप्तिस्थानमिति देवैः संपादितत्वात् तत्रैव परित्यागे प्रतिष्ठा भवति ॥
२० अग्निप्रहरणपक्षमेव प्रशंसितुम् उत्करे परित्यागं दूषयति—“ अथो स्तम्बस्य वा एतद्रूपम् । यत् स्रुक्संमार्जनानि । स्तम्बशो वा ओषधयः । तासां जरत्कक्षे पशवो न रमन्ते । अप्रियो ह्येषां जरत्कक्षः । यावदप्रियो ह वै जरत्कक्षः पशूनाम् । तावदप्रियः पशूनां भवति । यस्यैतान्यन्यत्राग्नेर्दधाति ” ( तैब्रा ३.३.२ ) इति । अथोशब्द उत्करपक्षव्यावृत्त्यर्थः । ओषधयो द्विविधाः—स्तम्बरूपा नवदाव्यरूपाश्च । कोमलतृणाभावादस्मात् जरत्कक्षः स्तम्बः । दावाग्निदग्धप्रदेशे वृष्ट्या समुत्पन्नः [28]कोमलस्वादुतृणसमूहो नवदाव्यः । तत्र
२५ स्रुक्संमार्जनानि [29]स्तम्बलूनतया स्तम्बरूपाणि । यद्येतान्यग्नेरन्यत्रोत्करे त्यजेरन् तदा तत्र तत्र विकीर्णानि तानि बहुस्तम्बा ओषधयः संपद्यन्ते । तासामोषधीनां संबन्धिनि जरत्कक्षे प्रीत्यभावात् जरत्कक्षवत् यजमानोऽपि पशूनामप्रिय इत्यपशुरेव स्यात् ॥ अग्निप्रहरणपक्षं प्रशंसति—“ नवदाव्यासु वा ओषधीषु पशवो रमन्ते । नवदावो ह्येषां प्रियः । यावत्प्रियो ह वै नवदावः पशूनाम् । तावत्प्रियः पशूनां भवति । यस्यैतान्यग्नौ प्रहरन्ति । तस्मादेतान्यग्नावेव प्रहरेत् । यदरस्मिन्न्संमृज्यात् । पशूना घ्यै ”
३० ( तैब्रा ३.३.२ ) इति । नवः प्रत्यासन्नपूर्वकालभावी दावाग्निर्यस्य कोमलस्यौषधिसमूहस्य सोऽयं नवदावः । [30]तादृशौषधिवत् यजमानोऽपि समार्जनानाम् अग्नौ प्रहरणे पशूनां प्रियो भवति । तस्मादाहवनीये गार्हपत्ये वा यस्मिन्नग्नौ स्रुचः प्रतितप्य संमृष्टास्तस्मिन्नेव अग्नौ[31] प्रहरणं यजमानगृहे पशूनां बहूनां

---

२४. क – उदक् । २५. आ. क–परित्यजेत् । २६. आ–अप्रक्षालितदर्भाक्रमणेन, क. तै– अप्रक्षालितदर्भाक्रमणे । २७. इ. उ –यज्ञियस्य द्रव्यस्य । २८. इ. उ. भो–कोमलत्वात् स्वादुतृणसमूहः ।
३५ २९. तै – स्तम्बे मूलतया इ. उ–स्तम्बमूलतया । ३०. इ. उ. पा. हा–तादृगोषधिवद् । ३१. आ. इ. उ, क. तै. पा. भो. हा– ‘ अग्नौ ’ नास्ति ।

सं मा॒ज्म्या॒शासा॑ना सौमन॒सं प्र॒जाᳪ᳭ सौभा॑ग्यं त॒नूम् ।
अ॒ग्नेरनु॑व्रता भू॒त्वा सं न॑ह्ये सुकृ॒ताय॒ कम् ॥

समिति॑ । मा॒र्ज्मि॒ । आ॒शासा॒नेत्या॑-शासा॑ना । सौ॒मन॒सम् । प्र॒जामिति॑ प्र-जाम् । सौभा॑ग्यम् । त॒नूम् । अ॒ग्नेः । अनु॑व्रतेत्यनु॑-व्र॒ता । भू॒त्वा । समिति॑ । न॒ह्ये॒ । सु॒कृ॒तायेति॑ सु-कृ॒ताय॑ । कम् ।

पत्नीं योक्त्रेण संनह्यति—'आशासाना' इति चतुष्पदयाऽनुष्टुभा । 'संनह्ये' इत्युत्तमपुरुषश्रवणात् पत्नी मन्त्रं ब्रवीति । <sup>V</sup>आशासाना प्रार्थयमाना । अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वम् ( पा ६·१·१८६ ) । कृदुत्तरपदप्रकृतिस्वरत्वम् ( ६·२·१३९ )। किम् ? <sup>V</sup>सौमनसं शोभनं मनः सौमनसम् । "प्रज्ञादिभ्यश्च" (पा ५·४·३८ ) इति मनस्शब्दात् स्वार्थे विधीयमानोऽण्प्रत्ययः तदन्तादपि भवति । छन्दसि दृष्टानुविधानात् (पा १·१·६ वा १) । <sup>V</sup>प्रजां [3]पुत्रादिकाम् । कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६·२·१३९ ) । <sup>V</sup>सौभाग्यं भर्तुरिष्टत्वम् । "सुभग मन्त्रे*" इति विधीयमानस्यौद्गात्रादिलक्षणस्याञः अभावे

धारणाय भवति ॥ [32]स्रुक्संमार्जनवदग्निसंमार्जनानामपि कंचिन्मन्त्रमुत्पाद्य विनियुङ्क्ते—"यो भूतानामधिपतिः । रुद्रस्तन्तिचरो वृषा । पशूनस्माकं मा हिꣳसीः । एतदस्तु हुतं तव स्वाहेत्यग्निसंमार्जनान्यग्नौ प्रहरति" ( तैब्रा ३·३·२ ) इति । [33]तन्तिः कर्मसंतानं, तत्र[33] चरतीति तन्तिचरः । वृषा देवेषु श्रेष्ठः । हे रुद्र, स त्वमस्माकं पशून् मा हिꣳसीः । एतदग्निसंमार्जनद्रव्यं तव हुतमस्तु । तस्यैवार्थस्यानुवादकः स्वाहेति शब्दः । यैर्दर्भैरिध्मः संनद्धस्तैरेवाग्निं संमृज्य स्वकाले संप्राप्ते तानि संमार्जनान्यग्नौ प्रहरेत् । प्रथमतोऽग्नौ संमृष्टे प्रधानयागादूर्ध्वमन्वाहार्यरूपायां दक्षिणायामृत्विग्भ्यो दत्तायामनूयाजहोमात् पूर्वं द्वितीयमग्नौ संमृष्टे सति तत्प्रहरणकालः ॥ अग्निदग्धप्रदेशे [34]पुनरुत्पद्य सम्यक् वर्धमानत्वादग्नौ दर्भाणां प्रहरणं युक्तमित्याह—"एषा वा एतेषां योनिः । एषा प्रतिष्ठा । स्वामेवैनानि योनिम् । स्वां प्रतिष्ठां गमयति । प्रतितिष्ठति प्रजया पशुभिर्यजमानः" ( तैब्रा ३·३·२ ) इति । एषा वह्निरूपा । न चाग्निप्रहरणे रुद्रविषयो मन्त्रो व्यधिकरण इति वाच्यम् । अग्नेरेवात्र रुद्रत्वात् । "रुद्रो वा एषः । यदग्निः । स एतर्हि जातः" ( तैसं ५·४·३ ) इति श्रुत्यन्तरात् । 'यदरोदीत् तद्रुद्रस्य रुद्रत्वम्' ( तैसं· १·५·१ ) इति निर्वचनाच्च ।

आशासानेति ॥ कल्पः—"अथैतां पत्नीमन्तरेण वेद्युत्करौ प्रपाद्य जघनेन दक्षिणेन गार्हपत्यमुदीचीमुपवेश्य योक्त्रेण संनह्यति आशासाना सौमनसं प्रजाᳪ᳭ सौभाग्यं तनूम् । अग्नेरनुव्रता भूत्वा सं नह्ये सुकृताय कमिति" ( बौश्रौ १·१२ ) इति ॥ या पत्नी वह्नेरनुसारिणी <sup>V</sup>भूत्वा सौमनस्यादिफलानि[35] <sup>V</sup>आशासाना वर्तते [36]तामेतां शोभनकर्मणे सुखं यथा भवति तथा बध्नामि ॥

३. म– अपत्यम् । * उद्गात्रादिगणे गणसूत्रम् ( द्र. पा ५·१·१२९ ) ।

३२. आ. क–स्रुक्संमार्जनप्रसङ्गादग्नि°; तं–स्रुक्संमार्जनादग्नि° । ३३–३३. म–तन्त्यां कर्मसन्ताने । ३४. इ. उ. पा. भां. हा–पुनरुत्पाद्य । ३५. आ. उ. पा. भां. '°फलानि' नास्ति । ३६. उ. क. पा. म. भां. हा–तामेनाम् ।

प्यजेन क्रियते ॥ जित्त्वादाद्युदात्तत्वम् । " इद्गमगसिन्ध्वन्ते पूर्वपदस्य च " ( पा ७·३·१९ ) इत्युभयपदवृद्धि । [V]तनू शरीरम् अविनाशाम् । " कृषिचमितनि° " ( उ ८४ ) इत्यादिना ऊप्रत्यय । [V]अग्ने परिचरणलक्षणानि यानि व्रतानि तैरनुगता [V]अनुव्रता । " अवादयः क्रुष्टाद्यर्थे तृतीयया " ( पामा २·२·१८ वा ४ ) इति तत्पुरुष. । " तत्पुरुषे तुल्यार्थ° " ( पा ६ २ २ ) इत्यादिनाऽव्ययपूर्वपदप्रकृतिस्वरत्वम् । [V]सुकृताय शोभनाय कर्मणे [V]स [V]नह्ये बध्ये । शोभन कर्म सुकृतम् । भावे निष्ठा । " सूपमानात् क्तः " ( पा ६·२·१४५ ) इत्युत्तरपदान्तोदात्तत्वम् । [V]कं सुख यया भवति तथा बध्ये । कर्मणि लकारः । यद्वा— कम् आ मान सनह्ये बध्नामि । नह्यति स्वरितेत् । " एतद्वै पत्नियै व्रतोपनयनम् " ( तैब्रा ३·३·३ ) इत्यादि ब्राह्मणम् ॥

योक्त्रबन्धनाय गार्हपत्यसमीपे पत्न्या उपवेशन विधत्ते— " अयज्ञो वा एष । योऽपत्नीक । न प्रजा प्रजायेरन् । पत्न्यन्वास्ते । यज्ञमेवाक । प्रजानां प्रजननाय " ( तैब्रा ३ ३·३ ) इति । अकः कृतवान् भवति ॥ बन्धनकालेऽप्युपवेशनमेव, न तूत्थानमित्याह— " यत्तिष्ठन्ती संनह्येत । प्रिय ज्ञातिं रुन्ध्यात् । आसीना सनह्यते । आसीना ह्येषा वीर्यं करोति " ( तैब्रा ३·३·३ ) इति । रुन्ध्यात् नाशयेत् । चिरमप्यवस्थातुं शक्यत्वादासीनायाः सामर्थ्यमस्ति ॥ दिग्देशौ विधत्ते— " यत् पश्चात्प्राच्यन्वासीत । अनया समदं दधीत । देवानां पत्निया समदं दधीत । दक्षिणत उदीच्यन्वास्ते । आत्मनो गोपीथाय " ( तैब्रा ३·३·३ ) इति । समदः कलह. । गार्हपत्यस्य पश्चाद्भागे प्राङ्मुखत्वे सति प्राचीनप्रवणया वेदिरूपया पृथिव्या सह कलह स्यात् । पत्नीसंयाजहोमेषु तृतीयाहुतेर्या देवता देवपत्नी तस्या अपि तत्रैव स्थानमिति तयाऽपि सह कलहं कुर्यात् । अतो दक्षिणदेशे स्वरक्षार्थमुदङ्मुखी तिष्ठेत् ॥ ननु सर्वा अपि योषित सौमनस्यादिकामान्[३७] आशासते, तत्र को विशेषोऽस्या इत्याशङ्क्य मन्त्रे पूर्वोक्तस्याभिप्रायमाह— " आशासाना सौमनसमित्याह । मेध्यामेवैनां केवलीं कृत्वा । आशिषा समर्धयति " ( तैब्रा ३·३ ३ ) इति । देवयजनप्रवेशेन यज्ञयोग्यां पापक्षयेण केवलीं कृत्वा [३८]पश्चादाशास्तानेति ब्रुवन् सत्ययाऽऽशिषा समृद्धा करोति ॥ [३९]अनुव्रतसूचितमर्थमाह— " अग्नेरनुव्रता भूत्वा स नह्ये सुकृताय कमित्याह । एतद्वै पत्नियै व्रतोपनयनम् । तेनैवैनाम् व्रतमुपनयति " ( तैब्रा ३·३·३ ) इति । पत्न्या स्वातन्त्र्येण कर्माधिकाराभावात् पत्न्या सह यदधिकारे सत्येतदेव योक्त्रं तस्या अनुव्रतस्वीकरणलिङ्गम् । यथा विवाहे स्त्रियाः कण्ठे [४०]मङ्गलसूत्रं लिङ्गं[४०] तद्वत् ॥ अस्मिन्नर्थे लौकिकवैदिकप्रसिद्धिं दर्शयति— " तस्मादाहु । यश्चैवं वेद यश्च न योक्त्रमेव युवे । यमन्वास्ते । तस्यामुष्मिंल्लोके भवतीति योक्त्रेण " ( तैब्रा ३·३·३ ) इति । यस्मात् सूत्रधारणं लोकवेदयोर्नियमस्वीकारे लिङ्गम् । लोके हि दूरदेशवर्तिदेवतादर्शनं संकल्पयन्त सूत्रं बध्नन्ति । वेदेऽप्युपनयनव्रते मौञ्जीं बध्नन्ति । तस्माद्यो यागं जानाति यश्च न जानाति तादृशा सर्वेऽप्येवमाहुः । इयं पत्नी योक्त्रमवश्यं युवे मिश्रयति बध्नाति यं पतिमन्वेषा सत स्वीकृत्याऽऽस्ते तस्य संबन्धिना मङ्गलसूत्रेणामुष्मिंल्लोके युक्ता भवतीति ॥ प्रकारान्तरेण [४१]योक्त्रबन्धनं स्तौति— " यद्योक्त्रम् । स योग । यदास्ते । स क्षेम. ।

३७. क–सौमनस्यादिकम् । ३८. आ. पा हा– ' पश्चात् ' नास्ति । ३९. ब–अनुव्रतशब्दस्तद्विवक्षार्थक इत्याह । ४०–४०. सं. ब–मङ्गलसूत्रधारणम् । ४१. आ. इ. उ. पा. मां. हा–योक्त्रम् ।

सुप्रजसस्त्वा वयꣳ सुपत्नीरुप(१) सेदिम।
अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम्॥

सुप्रजस इति सु-प्रजसः। त्वा। वयम्। सुपत्नीरिति सु-पत्नीः। उपेति (१)।
सेदिम। अग्ने। सपत्नदम्भनमिति सपत्न-दम्भनम्। अदब्धासः। अदाभ्यम्।

पत्नी गार्हपत्यमुपसीदति—'सुप्रजसः' इति चतुष्पदयाऽनुष्टुभा। [V]सुप्रजसः ५
शोभनापत्याः। "नित्यमसिच् प्रजामेधयोः" (पा ५·४·१२२) इति [4]असिच् समासान्तः।
[V]सुपत्नीः सुपत्न्यः। "वा छन्दसि" (पा ६·१·१०६) इति पूर्वसवर्णदीर्घः। शोभनः
पतिः [5]यस्याः इति बहुव्रीहौ "विभाषा सपूर्वस्य" (पा ४·१·३४) इति नकारोऽन्ता-
देशः। "[6]ऋन्नेभ्यः°" (पा ४·१·५) इति ङीपि-[6], "आद्युदात्तं द्व्यच् छन्दसि"
(पा ६·२·११९) इत्युत्तरपदाद्युदात्तत्वम्, पतिशब्दस्याद्युदात्तत्वात्। ईदृश्यः [V]वयं हे १०
[V]अग्ने, त्वाम् [V]उप [V]सेदिम उपसीदामः। "छन्दसि लुङ्लङ्लिटः" (पा ३·४·६) इति

योगक्षेमस्य क्लृप्त्यै" (तैब्रा ३·३·३) इति। अप्राप्तस्य वस्तुनः प्राप्तिर्योगः। प्राप्तस्य रक्षणं क्षेमः।
अतो योक्त्रबन्धनमुदङ्मुखासनं चोभयसिद्ध्यै भवति॥ मनसि किमभिप्रेत्यासौ बध्यत इत्याशङ्क्याह—
"युक्तं क्रियाता आशीः कामे युज्याता इति। आशिषः समृद्ध्यै" (तैब्रा ३·३·३) इति। मया
शास्त्रीयं कर्म क्रियतेऽतः सौमनस्यादिरूपा ममेयमाशीः फले युज्यताम्। अनेनाभिप्रायेणाऽऽशीः १५
[42]समृद्धा भवति॥ विधत्ते[42]—"ग्रन्थिं ग्रथ्नाति। आशिष एवास्यां परिगृह्णाति। पुमान् वै
ग्रन्थिः। स्त्री पत्नी। तन्मिथुनम्। मिथुनमेवास्य तद्यज्ञे करोति प्रजननाय। प्रजायते प्रजया पशुभि-
र्यजमानः। अथो अर्धो वा एष आत्मनः। यत्पत्नी। यज्ञस्य धृत्या अशिथिलंभावाय" (तैब्रा ३·३·३)
इति। सौमनस्याद्याशिषः सर्वा अपि योक्त्रग्रन्थिना [43]तस्यां परिगृहीता भवन्ति। यज्ञकर्तुरर्ध-
स्वरूपभूता पत्नी। ततस्तदीयग्रन्थिना यज्ञो ध्रियते न तु शिथिलो भवति॥ २०

सुप्रजस इति॥ कल्पः—"जघनेन [44]गार्हपत्यमुपसीदति सुप्रजसस्त्वा वयꣳ सुपत्नीरुप सेदिम।
अग्ने सपत्नदम्भनमदब्धासो अदाभ्यमिति" (बौश्रौ १·१२) इति। हे [V]अग्ने, [V]वयं त्वामुपसीदामः।
कीदृश्यो वयम्? [V]सुप्रजसः[45] शोभनप्रजोपेताः। शोभनः पतिर्यासां ताः सुपत्न्यः। त्वत्प्रसादात्
[V]अदब्धासः[46] केनाप्यतिरस्कृताः। कीदृशं त्वाम्? [V]सपत्नदम्भनं[47] वैरिनाशिनम्, [V]अदाभ्यं[48]
केनाप्यतिरस्कार्यम्॥ पत्न्या उपसदने प्रयोजनं दर्शयति—"सुप्रजसस्त्वा वयꣳ सुपत्नीरुप सेदिमेत्याह। २५
यज्ञमेव तन्मिथुनीकरोति। ऊनेऽतिरिक्तं धीयाता इति प्रजात्यै" (तैब्रा ३·३·३) इति। शोभनः

४. मै– 'असिच्' नास्ति। ५. म– यासाम्। ६–६. म. व– ऋन्नेभ्यः ङीप्।

४२–४२. इ.उ.पा.भां. हा–समृद्धा एव भवतीति विधीयते। ४३ इ. उ. पा. भां. हा–तस्याः। ४४. क–
गार्हपत्यमुपविशति। ४५. इ. उ. तं. पा. भां. हा–' सुप्रजसः ' नास्ति। ४६. इ. उ. तं. पा. भां.हा–'अद-
ब्धासः' नास्ति। ४७. इ. उ. तं. पा. हा–'सपत्नदम्भनम्' नास्ति। ४८. इ.उ. तं. पा. भां.हा–'अदाभ्यम्' ३०
नास्ति।

इमं वि ष्यामि वरुणस्य पाशं यमबध्नीत सविता सुकेतः।
धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमि ॥

इमम्। वीति। स्यामि। वरुणस्य। पाशम्। यम्। अबध्नीत। सविता। सुकेत इति सु-केतः।
धातुः। च। योनौ। सुकृतस्येति सु-कृतस्य। लोके। स्योनम्। मे। सह। पत्या। करोमि।

५ वर्तमाने लिङ्। कीदृशम् ? सपत्नदम्भनं शत्रूणा विनाशसाधनम्। करणे ल्युटि, कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६.२.१३९)। यस्मादीदृशस्त्वम् तस्मात् त्वामुपसीदामः। अदब्धास त्वत्प्रसादेन केनचिदप्यहिंसिताः। "आज्जसेरसुक्" (पा ७.१.५०)। अदाभ्य केनचिदप्यनभिभवनीयं त्वाम्। दभिः प्रकृत्यन्तरमस्तीति केचिदाहुः। "दमेश्चेति वक्तव्यम्*" (पा ३.१.१२४ वा ३) इति ण्यत्। उभयत्राव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा६.२.१२१)॥

१० योक्त्रं पत्नी विमुञ्चति—'इमम्' इति त्रिष्टुभा चतुष्पदया॥ संनहनप्रसङ्गादत्र आम्नातोऽप्ययं मन्त्रः सामर्थ्यादुत्कृष्यते। वृणोति छादयतीति वरुणं बन्धम्। "कृवृदारिभ्य उनन्" (उ ३४०) इत्युनन् प्रत्ययः। तस्य धारणार्थो यः पाशस्तम् इमं योक्त्रं वि ष्यामि विमुञ्चामि। षोऽन्तकर्मणि, "उपसर्गात् सुनोति" (पा ८.३.६५) इत्यादिना षत्वम्। कीदृशं पाशमिति तत्राह— सुकेतः सविता सर्वस्य प्रेरक यम् अबध्नीत बद्धवान्।
१५ "बध्नातेर्व्यत्ययेनात्मनेपदम् (पा ३.१.८५)। सुकेतः सुज्ञान। कित ज्ञाने। घञ्। "आद्युदात्त

पतिर्यस्या इत्यभिधानाद्यज्ञ मिथुनवन्तं करोति। तस्मिन् मिथुने पत्न्या कर्मण्यननुष्ठीयमाने सति यद् यज्ञाङ्गं तेनाननुष्ठितं सन्नूनं भवति, यत्रोनप्रदेशे तदङ्गमतिरिक्त तेनानुष्ठितमनया पत्न्या क्रियतेऽनुष्ठीयते। अत एव पत्नीकर्तव्य पूर्णपात्रनिनयनमाम्नायते — "अञ्जलौ पूर्णपात्रमानयति। रेत एवास्यां प्रजां
दधाति" (तैब्रा ३.३.१०) इति। एवमन्यदपि तत्कर्तव्यमुदाहार्यम्। अत अन पत्नी परिपूरयतीति
२० प्रयोजनेन पत्न्या प्रवेशने सति तन्मिथुनं प्रजननाय सपद्यते॥

इममिति॥ यथा सप्तमेऽनुवाके कपालोपधानप्रसङ्गेन वह्निमोचनमन्त्रोऽप्याम्नात एवमत्रापि योक्त्रबन्धनप्रसङ्गेन योक्त्रविमोकमन्त्र आम्नायते—"इमं विष्यामि वरुणस्य पाशं यमबध्नीत सविता सुकेतः। धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमि" इति॥ वि ष्यामि विमुञ्चामि।
सुकेतः सुज्ञानः। सवित्रा बद्धेऽस्मिन् योक्त्ररूपे वरुणपाशे विमुक्ते सति धातुः ब्रह्मणः योनौ
२५ स्थानेऽनुष्ठितस्य कर्मण फलभूते लोके पत्या सह मे सुखं करोमि॥ अस्य च योक्त्रस्य विमोकः

७. म- केनाप्यहिंसिताः। * 'अपिदम्भिभ्या च' इति भाष्ये। ८. म-धारणहेतु। ९. मै-प्रमुञ्चामि।
१०-१०. म-पाशम्। ११. मै- बध्नातेरात्मनेपदम्।

४९. ख. 'यद्' नास्ति। ५० तै. ब-पात्रधारणमाम्नायते। ५१. ठ. पा. मां. हा- 'तत्',
नास्ति, इ-' तत्कर्तव्यम्' नास्ति। ५२. ठ. तै. पा. मां. हा-' पत्नी' नास्ति। ५३. ब-योक्त्र.
३० विमोचनमन्त्र.। ५४. तै-विमोकः।

समायुषा सं प्रजया समग्ने वर्चसा पुनः ।
सं पत्नी पत्याऽहं गच्छे समात्मा तनुवा मम ॥

समिति । आयुषा । समिति । प्रजयेति प्र-जया । समिति । अग्ने । वर्चसा । पुनः ।
समिति । पत्नी । पत्या । अहम् । गच्छे । समिति । आत्मा । तनुवा । मम ।

द्व्यच् छन्दसि " ( पा ६·२·११९ ) इत्युत्तरपदाद्युदात्तत्वम् । यद्वा–अनेन योक्त्रविमोकेन मम वरुणपाशं तमोरूपम् ईश्वरेण बद्धं विमुञ्चामि । किंच–$^V$धातुः प्रजापतेरपि $^V$योनौ स्थाने $^V$सुकृतस्य $^V$लोके शोभनकर्मसंबन्धिनि लोके $^V$पत्या $^V$सह $^V$मे $^V$स्योनं सुखं $^V$करोमि । योक्त्रविमोकेन सम्यक् यज्ञनिष्पत्तेः । सुकृतशब्दोऽन्तोदात्तस्वरः ॥ ५

सयोक्त्रेऽञ्जलौ उदपात्र आनीयमाने [१२]पत्नी गार्हपत्यमुपतिष्ठते[१२] ' सम् ' इति चतुष्पदयाऽनुष्टुभा ॥ हे $^V$अग्ने गार्हपत्य, यदिदमुदपात्रेण योक्त्रं संगच्छते, तेनाहम् $^V$आयुषा तावत् $^V$सं $^V$गच्छे संगता भूयासम् । " आशंसायां भूतवच्च " ( पा ३·३·१३२ ) इति लट् । " समो गम्यृच्छिभ्याम् " ( पा १·३·२९ ) इत्यात्मनेपदम् । किंच $^V$प्रजया अपत्येन $^V$वर्चसा बलेन च $^V$सं गच्छे । $^V$पुनः उपर्युपरि । किंच–$^V$अहं $^V$पत्नी भूत्वा $^V$पत्या सह $^V$सं गच्छे, न वियोक्ष्ये । किंच $^V$मम $^V$आत्मा क्षेत्रज्ञः $^V$तनुवा [१३]तन्वा अविकलेन्द्रियेण शरीरेण $^V$सं गच्छताम् । अनेन कर्मणा एतत्सर्वं ममास्त्विति । तनुवेति । " तन्वादीनां छन्दसि बहुलम् " ( पा ६·४·७७ वा १ ) इत्युवङादेशः । ममेति । " युष्मदस्मदोर्ङसि " ( पा ६·१·२११ ) इत्याद्युदात्तत्वम् ॥ १० १५

स्वकाले कर्तव्यः । पिष्टलेपफलीकरणहोमाभ्यामूर्ध्वं प्रायश्चित्तहोमेभ्यः पूर्वमस्य स्वकालः । अत एव कल्पसूत्रकारस्तस्मिन् प्रदेशे पठति—" इमं वि ष्यामीति पत्नी योक्त्रपाशं विमुञ्चते । तस्याः सयोक्त्रेऽञ्जलौ पूर्णपात्रमानयति । समायुषा सं प्रजया इत्यानीयमाने जपति " ( आपश्रौ ३·१०·६–८ ) इति ॥ २०

समायुषेति ॥ सोऽपि मन्त्रोऽत्रैवानन्तरमाम्नातः—" समायुषा सं प्रजया समग्ने वर्चसा पुनः । सं पत्नी पत्याऽहं गच्छे समात्मा तनुवा मम " इति ॥ हे $^V$अग्ने, $^V$अहम् $^V$आयुषा $^V$सं $^V$गच्छे, $^V$प्रजया $^V$सं गच्छे, पातिव्रत्यलक्षणेन $^V$वर्चसा $^V$सं गच्छे । अनेन $^V$पत्या पुनः पुनः $^V$पत्नी भूत्वा[५५] $^V$सं गच्छे, वियोगः कदाचिदपि मा भूदित्यर्थः । $^V$मम शरीरेण जीवात्मा चिरं संगच्छताम् ॥

१२–१२. ति, व– पति गार्हपत्यं वोपतिष्ठते । १३. मै– ' तन्वा ' नास्ति । २५

५५. इ. ई. पा. मा. हा– ' भूत्वा ' नास्ति ।

महीनां पयोऽस्योषधीनाꣳ रसस्तस्य तेऽक्षीयमाणस्य नि( २ )र्वपामि

महीनाम् । पयः । असि । ओषधीनाम् । रसः ।

तस्य । ते । अक्षीयमाणस्य । निरिति (२) । वपामि ।

---

आज्यं निर्वपति—' महीनाम् ' इति ॥ महीनां गवां पयः असि । पयसो घृतात्मना
५ परिणतत्वात् कारणरूपेण घृतं व्यपदिश्यते । भवति हि विकारे प्रकृतिशब्दः । यथा ' शालीन्
भुङ्क्ते ' ( पाभा ४.३.१५५ वा २ ) इति ओदने शालिशब्दः । " ङ्याश्छन्दसि बहुलम् "
( पा ६.१.१७८ ) इति नामुदात्तः । किंच— ओषधीनां रसः असि रसभूतमसि, भक्षित-
तृणादिपरिणामत्वात्तस्य । दासीभारादित्वात् ( पा ६.२.४२ ) ओषधिशब्दस्य पूर्वपदप्रकृति-
स्वरत्वम् । " नामन्यतरस्याम् " ( पा ६.१.१७७ ) इति वचनादत्र नाम उदात्तत्वं न भवति ।
१० तस्य एतादृशस्य ते तव अक्षीयमाणस्य निर्वपामि । आज्यराशेर्निष्कृष्य [14]स्थाल्यां प्रक्षिपामि ।

---

महीनामिति ॥ कल्पः—" महीनां पयोऽस्योषधीनाꣳ रसस्तस्य तेऽक्षीयमाणस्य निर्वपामि
देवयज्याया इति तस्यां पवित्रान्तर्हितायामाज्यस्थाल्यामाज्यं[56] निरुप्य " ( आपश्रौ २ ६.१ ) इति ।
यद्यप्यत्र मन्त्रकाण्डे ' देवयज्यायै ' इति पदं नाऽऽम्नातं, तथापि ब्राह्मणानुसारेण तत्पठितम्[57] ॥
महीशब्दस्य गौरित्यर्थः । अत एव सप्तमकाण्डे गां प्रस्तुत्याऽऽम्नायते—" तस्या उपोत्थाय कर्णमा
१५ जपेदिडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्निये नामानि " ( तैस ७.१.६ )
इति । हे आज्य, त्वं महीनां[58] गवां पयः असि, साक्षात् तज्जन्यत्वात् । ओषधीनां रसः चासि,
परंपरया तज्जन्यत्वात् । तादृशस्य क्षयेण रहितस्य तव स्वरूपं देवयागार्थं पात्र्यां निर्वपामि ॥ ' इमं
वि ष्यामि ', ' समायुषा ' इत्यस्य मन्त्रद्वयस्यात्राप्रासङ्गिकत्वात् तद्व्याख्यानमुपेक्ष्यानन्तरस्य मन्त्रस्य
पूर्वभागे स्पष्टार्थतां दर्शयति—" महीनां पयोऽस्योषधीनाꣳ रस इत्याह । रूपमेवास्यैतन्महिमानं
२० व्याचष्टे " ( तैब्रा ३.३.३ ) इति ॥ [59]उत्तरभागस्य ' तेऽक्षीयमाणस्य '[59] इति पदस्याभिप्रायमाह
" तस्य तेऽक्षीयमाणस्य निर्वपामि देवयज्याया इत्याह । आशिषमेवैतामाशास्ते " ( तैब्रा ३.३.३ )
इति ॥ [60]आज्यस्य यागाङ्गता[60] विधत्ते— " घृतं च वै मधु च प्रजापतिरासीत् । यतो मध्वासीत् ।
ततः प्रजा असृजत । तस्मान्मधुषि प्रजननमिवास्ति । तस्मान्मधुना न प्रचरन्ति । यातयाम हि ।
आज्येन प्रचरन्ति । यज्ञो वा आज्यम् । यज्ञेनैव यज्ञं प्रचरन्त्ययातयामत्वाय " ( तैब्रा ३.३.४ )
२५ इति । प्रजापतिः पूर्वं यागसाधनं सृष्टिसाधनं चाभिप्रेत्य स्वयमेव सत्यसंकल्पतया [61]घृतरूपेण मधुरूपेण
च[61] परिणतोऽभूत्, यस्मादुत्पत्तिबीजत्वमभिप्रेत्य मध्वभूत् तस्मात् मधुबीजेन प्रजा असृजत । अत एव

---

१४. तं. ति. व– आज्यस्थाल्याम् ।

---

५६ आ पा. ह्य पवित्रान्तर्हितायामाज्यम् । ५७. आ. इ. उ. पा. मां ह्य–पठितव्यम् । ५८. इ.
उ. तं. पा. मां. ह्य– ' महीनाम् ' नास्ति । ५९–५९. त व–उत्तरभागेऽक्षीयमाणस्य । ६०–६०. आ इ
३० उ. पा. मां–आज्यमागाङ्गताम् । ६१–६१. आ.इ. उ. मा. ह्य–घृतमधुरूपेण, पा – घृतरूपेण ।

महीनां पयोऽस्योषधीनाꣳ रसोऽदब्धेन त्वा चक्षुषाऽवेक्षे सुप्रजास्त्वाय ।
तेजोऽसि तेजोऽनु प्रेह्यग्निस्ते

महीनाम् । पयः । असि । ओषधीनाम् । रसः । अदब्धेन । त्वा । चक्षुषा । अवेति । ईक्षे । सुप्रजास्त्वायेति सुप्रजाः– त्वाय । तेजः । असि । तेजः । अनु । प्रेति । इहि । अग्निः । ते ।

यागार्थं हि निरुप्तमक्षय्यं संपद्यते । अत एवमुक्तम् । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अत्र "क्रियाग्रहणं च कर्तव्यम्" (द्र. पामा १·४·३२) इति घृतस्य संप्रदानत्वात् "चतुर्थ्यर्थे बहुलं छन्दसि" (पा २·३·६२) इति षष्ठी ॥ ५

[15]पत्नी आज्यमवेक्षते[15]–'महीनाम्' इति ॥ रसान्तं व्याख्यातम् (तैसं १·१·१०)। Vअदब्धेन तिमिरादिभिरनुपहतेन Vचक्षुषा त्वाम् Vअवेक्षे पश्यामि, Vसुप्रजास्त्वाय शोभनापत्यत्वाय । "नित्यमसिच् प्रजामेधयोः" (पा ५·४·१२२) इति समासान्तः । "अत्वसन्तस्य च°" (पा ६·४·१४) इति विधीयमानं दीर्घत्वं व्यत्ययेन त्वेऽपि[16] भवति ॥ १०

गार्हपत्येऽधिश्रयति–'तेजोऽसि' इति ॥ Vतेजः उज्ज्वलम् Vअसि एधि । पञ्चमलकारे रूपम् । "अमेध्यं वा एतत् करोति" (तैब्रा ३·३·४) इत्यादि ब्राह्मणम् ॥

आहरति–'तेजः' इति ॥ ते तव आहवनीयाख्यं Vतेजः Vअनु Vप्रेहि अनुक्रमेण गच्छ ॥ १५

[62]मधुना नानाबीजेन जन्तूत्पादनं[62] विद्यते । तेनोत्पादनेन यतो गतसारं ततो मधुना यागं न कुर्वन्ति । [63]सारवत्वात् आज्येन यागं कुर्युः । सर्वयज्ञहेतुत्वादाज्यस्य यज्ञत्वं तद्धेतुत्वं च वक्ष्यते–"सर्वस्मै वा एतद्यज्ञाय गृह्यते । यद्ध्रुवायामाज्यम्" (तैब्रा ३·३·५) इति । अतो यज्ञयोग्यसाधनेनैव यज्ञस्यानुष्ठानान्नास्ति गतसारत्वदोषः ॥

महीनामिति ॥ कल्पः–"अथैनामाज्यमवेक्षयति महीनां पयोऽस्योषधीनाꣳ रसोऽदब्धेन त्वा चक्षुषाऽवेक्षे सुप्रजास्त्वायेति" (बौश्रौ १·१२) इति ॥ Vअदब्धेन रोगानुपहतेन ॥ विधत्ते–"पत्न्यवेक्षते । मिथुनत्वाय प्रजात्यै । यद्वै पत्नी यज्ञस्य करोति । मिथुनं तत् । अथो पत्निया एवैष यज्ञस्यान्वारम्भोऽनवच्छित्त्यै" (तैब्रा ३·३·४) इति । यज्ञस्य [64]पुरुषरूपत्वात् तेन सह पत्न्या मिथुनत्वम् । किं च पत्न्या आज्यावेक्षणरूप एष एव यजमानमनु यज्ञारम्भः । दंपत्योर्द्वयोरप्यारम्भे सति यज्ञो न विच्छिद्यते ॥ २० २५

तेज इति ॥ कल्पः–"अथैनद् गार्हपत्येऽधिश्रयति तेजोऽसीति । [65]समिधमुपयत्य प्राङ् हरति।"

१५. तं. ति. व– पत्नी आज्यमवेक्षयति. । १६. तं– सुमिन्त्रेऽपि ।

६२–६२. आ–मधुना नानाबीजोत्पादनम् ; क.ब– मधूनि नानाजन्तूत्पादनम् ; तं–मधुपि नानाजन्तूत्पादनम् । ६३. ब–सारबीजत्वेन; इ. उ. पा. द्दा–असारत्वात्; भा–आसारत्वात् । ६४. स्था.क.तं. द्दा–पुरुषत्वात् । ६५. ब–समीपमुपयत्य । ३०

तेजो॒ मा वि नै॑द॒ग्नेर्जि॒ह्वाऽसि॑ सु॒भूर्दे॒वाना॒ं धाम्ने॑धाम्ने दे॒वेभ्यो॒ यजु॑षेयजुषे भव

तेज॑. । मा । वीति॑ । नै॒त् । अ॒ग्ने । जि॒ह्वा । अ॒सि॒ । सु॒भूरिति॑ सु-भू॑ । दे॒वाना॑म् ।
धाम्ने॑धाम्न॒ इति॒ धाम्ने॑-धाम्ने । दे॒वेभ्य॑. । यजु॑षेयजुष॒ इति॒ यजु॑षे-यजु॒षे । भव ।

आहवनीयेऽधिश्रयति—' अग्निः ' इति ॥ [V]ते तव [V]तेजः औज्ज्वल्यम् [V]अग्नि. मा [V]वि [V]नैत् मा विनैषीत् [१७]मा विनीनशत्[१७]। माङि नयतेर्लुङि " बहुलं छन्दसि " ( पा ७·३·९७ ) इति इडभावे, सिचि वृद्धौ, " स्कोः संयोगाद्योरन्ते च " ( पा ८·२·२९ ) इति सलोपः ॥

आज्यमवेक्षते—' अग्नेः ' इति । [V]अग्नेः त्वं [V]जिह्वा [V]असि; [१८]जिह्वास्थानीयज्वालाहेतुत्वात् । [V]सुभू सुष्ठु भूत जातं सर्वोत्कर्षेणोत्पन्नम् । [V]देवाना स्वभूत, देवार्थं वा जातम् । यस्मात् त्वमीदृशं तस्मात् [V]देवेभ्य. देवानाम् । षष्ठ्यर्थे चतुर्थी ( पा २·३·६२ वा१ ) । देवार्थं वा । [V]धाम्नेधाम्ने सर्वस्मै धारणाय । " अनुदात्त च " ( पा ८·१·३ ) इति द्वितीयस्याम्रेडितस्य अनुदात्तत्वम् । यथायथं स्वस्वपदस्थितये देवाना प्रभूतं [V]भव । तदर्थं [V]यजुषेयजुषे मन्त्र पर्याप्तं [१९]सभव ।

तेजोऽनुप्रेहीत्यथैनदाहवनीयेऽधिश्रयत्यग्निस्ते तेजो मा वि नैदिति " ( बौश्रौ १ १२ ) इति ॥ हे आज्य, त्वं तेजोरूपम् [V]असि । तेजोरूपमाहवनीयमनुप्रवेष्टुं गच्छ । अयमाहवनीय [V]अग्नि त्वदीयं [V]तेजः [V]मा अपनयतु ॥ अनुष्ठानविधिपूर्वक [६६]मन्त्रं व्याचष्टे—" अमेध्य वा एतत् करोति । यत्परन्यवेक्षते । गार्हपत्येऽधिश्रयति मेध्यत्वाय । आहवनीयमभ्युद्द्रवति । यज्ञस्य सतत्यै । तेजोऽसि तेजोऽनु प्रेहीत्याह । तेजो वा अग्नि. । तेन आज्यम् । तेजसैव तेज समर्धयति । अग्निस्ते तेजो मा वि नैदित्याहाहिंसायै " ( तैब्रा ३·३ ४ ) इति ॥

अग्नेरिति ॥ बौधायन — " अथैनद्यथाहृत प्रति *परिहृत्योत्तरार्धे वेद्यै निधायाध्वर्युरवेक्षते अग्नेर्जिह्वासि सुभूर्देवाना धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे भवेति " ( बौश्रौ १ १२ ) इति । आपस्तम्ब — " अग्नेर्जिह्वासीति स्फ्यस्य वर्त्मन्त्सादयति " ( आपश्रौ २·६ ५ ) इति ॥ आहवनीये स्थितस्याज्यस्योदग्देशे समानेतु स्फ्येन काचिद्रेखा कृता तस्यां सादयेत् ॥ हे आज्य, ज्वालारूपाया जिह्वाया उत्पादकत्वात् [V]अग्ने [V]जिह्वा [V]असि । [V]देवाना सुखाय भवतीति [V]सुभू, [६७]ईदृशः त्वं[६७] तत्तदाहुतिस्थानाय तत्तन्मन्त्रपूर्वकग्रहणाय च पर्याप्त [६८]भव ॥ [६९]व्याचष्टे— " अग्नेर्जिह्वाऽसि सुभूर्देवानामित्याह । यथायजुरेवैतत् । धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे भवेत्याह । आशिषमेवैतामाशास्ते " ( तैब्रा ३·३·४ ) इति ॥

१७–१७ मे– ' मा विनीनशत् ' नास्ति । १८. त. ति. ब– रसप्रधानत्वात् । १९. तं. ति. ब– भव ।

६६ ब–मन्त्रान् । * श्रौतसूत्रे–' पर्याहृत्यो° ' इति । ६७–६७ क–ईदृशस्त्वमपि । विधत्ते– ' स्फ्यस्य वर्त्मन् सादयति । यज्ञस्य सतत्यै ' इति । ६८. क–भवत्विति । ६९. हा–मन्त्र व्याचष्टे ।

शुक्रम॑सि ज्योति॑रसि तेजो॑ऽसि
दे॒वो व॑: सवि॒तोत्पु॑ना॒त्वच्छि॑द्रेण प॒वित्रे॑ण॒ वसो॑: सूर्य॑स्य र॒श्मिभि॑:

शु॒क्रम् । अ॒सि॒ । ज्योति॑: । अ॒सि॒ । तेज॑: । अ॒सि॒ । दे॒वः । व॒: । स॒वि॒ता । उदिति॑ । पु॒ना॒तु॒ । अच्छि॑द्रेण । प॒वित्रे॑ण । वसो॑: । सूर्य॑स्य । र॒श्मिभि॒रिति॑ र॒श्मि-भि॑: ।

पूर्ववदाम्रेडितस्यानुदात्तत्वम् । “ शुक्रं त्वा शुक्रायाम् ” इत्यादिना येन येन यजुषा पुनर्ग्रही- ५
ष्यते [२०]येन चावद्यते[२०] तस्मै सर्वस्मै यजुषे प्रभूतं भव । यदि च यजुषेयजुषे प्रभवेत् ततो धाम्नेधाम्ने प्रभवतीति भावः । “ ब्रह्मवादिनो वदन्ति यदाज्येनान्यानि ” ( तैब्रा ३.३.५ ) इत्यादि ब्राह्मणम् ॥

उत्पुनाति—‘ शुक्रम् ’ इति ॥ [V]शुक्रं शुद्धं पूर्वमेव [V]असि । यद्वा—शुक्रं भव । पञ्चमो लकारः । ज्योतिः [V]असि दीप्तमसि [V]तेजः [V]असि तेजनं दीपनं देवानामसि । १०
“ तद्वा अतः पवित्राभ्याम् ” ( तैब्रा ३.३.४ ) इत्यादि ब्राह्मणम् ॥

प्रोक्षणीरुत्पुनाति—‘ देवः ’ इति गायत्र्या त्रिपदया ॥ [२१]सा च व्याख्याता[२१]

शुक्रमसीति ॥ कल्पः—“ अथैनदुदगग्राभ्यां पवित्राभ्यां पुनराहारमुत्पुनाति । शुक्रमसीति प्रथमं ज्योतिरसीति द्वितीयं तेजोऽसीति तृतीयम् ” ( आपश्रौ २.६.७–७.१ ) इति ॥ [V]शुक्रं दीप्तिमत् ॥ आज्यस्योत्पवनं विधत्ते— “ तद्वा अतः पवित्राभ्यामेवोत्पुनाति । यजमानो वा आज्यम् । १५
प्राणापानौ पवित्रे । यजमान एव प्राणापानौ दधाति ” ( तैब्रा ३.३.४ ) इति । यतो योषिद्वीक्षणेन अमेध्यस्याज्यस्य मेध्यत्वाय गार्हपत्याद्यधिश्रयणं कृतमत एवात्यन्तशुद्ध्यर्थमुत्पुनीयात् । प्रकारविशेषं विधत्ते— “ पुनराहारम् । एवमिव हि प्राणापानौ संचरतः ” ( तैब्रा ३.३.४ ) इति । आज्यस्थापिते पवित्रे प्राच्यां [७०]प्रोह्य पुनः पश्चादाहृत्य मध्यादूर्ध्वमुत्पुनीयात् । एवं त्रिवारमित्यभिप्रायेण वीप्सार्थो णमुल्प्रत्ययः [७१]प्रयुक्तः ॥ मन्त्राणां स्पष्टार्थतां दर्शयति—“ शुक्रमसि ज्योतिरसि तेजोऽसीत्याह । २०
रूपमेवास्यैतन्महिमानं व्याचष्टे ” ( तैब्रा ३.३.४ ) इति ॥ [७२]प्रतिमन्त्रं पृथक्क्रियां[७२] विधत्ते— “ त्रिर्यजुषा । त्रय इमे लोकाः । एषां लोकानामाप्त्यै ( तैब्रा ३.३.४) इति । त्रित्वमनूद्यार्थवादान्तरमाह— “ त्रिः । व्यावृद्धि यज्ञः । अथो मेध्यत्वाय ” ( तैब्रा ३.३.४ ) इति ॥

देव इति ॥ कल्पः—“ अथ प्रोक्षणीरुत्पुनाति देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति पच्छः ” ( बौश्रौ १.१२ ) इति ॥ तदेतदुत्पवने पवित्रविशिष्टं विधत्ते— २५
अथाज्यवतीभ्यामपः । रूपमेवासामेतद्वर्णं दधाति । अपि वा उताऽऽहुः । यथा वै योषा सुवर्णं हिरण्यं पेशलं बिभ्रती रूपाण्यास्ते । एवमेता एतर्हीति ” ( तैब्रा ३.३.४ ) इति । याभ्यां पवित्राभ्यामाज्यमुत्पूतं ताभ्यामेवाऽऽज्यलिप्ताभ्यामप उत्पुनीयात् । व्यत्ययेन स्त्रीलिङ्गत्वम् । एतदाज्यं स्वबिन्दुभिरासामपां

२०–२०. तं. ति. व– येन येन भाविष्यसे । २१. व– गतम् ।

७०. ■–प्राह्य । ७१. इ. उ. पा. भां. ह्रा–‘ प्रयुक्तः ’ नास्ति । ७२–७२. आ. इ. उ. पा. भां. ३०
ह्रा–प्रतिमन्त्रक्रियाम् ।

शुक्रं ( ३ ) त्वा शुक्रायां धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामि
शुक्रम् ( ३ ) । त्वा । शुक्रायाम् । धाम्नेधाम्न इति धाम्ने-धाम्ने ।
देवेभ्यः । यजुषेयजुष इति यजुषे-यजुषे । गृह्णामि ।

( तैसं १.१.५ ) । " अथान्यव्रतीम्याम् " ( तैब्रा ३.३.४ ) इत्यादि ब्राह्मणम् ।
" तत्रोभयोर्मीमांसा " ( तैब्रा ३.३.४ ) इत्यादि च ॥

जुह्वामाज्यं गृह्णाति—' शुक्रम् ' इति ॥ [3]शुक्रं शुद्धं त्वा [4]शुक्रायां शुद्धायां जुह्वां [5]गृह्णामि । शिष्टं व्याख्यातम् । आधारार्थत्वात् प्रयाजार्थत्वाच्च ' धाम्नेधाम्ने ' इत्याद्युपपद्यते । एवमुपभृद्ध्रुवयोरपि वेदितव्यम् ॥

वर्णविशेषोपेतं रूपं संपादयति । अपि च ताम्रादिकालुष्यराहित्येन शोभनवर्णोपेतं कटकाद्याकारसौकर्येण पेशलं हिरण्यं बिभ्रती योषेव इमा आप आज्यबिन्दुयुक्ता नेत्रप्रिया भवन्ति ॥ [73]मन्त्रगतच्छन्दःप्रभृत्यनुसंधेयतया विधत्ते—" आपो वै सर्वा देवताः । एषा हि विश्वेषां देवानां तनूः । यदाज्यम् । तत्रोभयोर्मीमांसा । जामिः स्यात् । यद्यजुषाऽऽज्यं यजुषाऽप उत्पुनीयात् । छन्दसाऽप उत्पुनात्यजामित्वाय । अथो मिथुनत्वाय । सावित्रियर्चा । सवितृप्रसूतं मे कर्मासदिति । सवितृप्रसूतमेवास्य कर्म भवति । पच्छो गायत्रिया त्रिःसमृद्धत्वाय । अग्निरेवौषधीः सनयति । ओषधीभिः पशून् । पशुभिर्यजमानम् " ( तैब्रा ३.३.४ ) इति । उदकरूपेण वीर्येण देवताशरीरमुत्पाद्यते । आहुतिरूपेणाऽऽज्येन तत्पोष्यते । तस्मादाज्योदकयोः सर्वदेवतारूपत्वे समे सति किमेतदुभयं [74]यजुषैवोत्पुनीयात्, उत आप ऋचेति मीमांसायामालस्यनिवारणार्थमृचेति युक्तम् । ऋग्यजुर्भ्यां मिथुनत्वमपि संपद्यते । त्रिवारम् उत्पूतासु अप्सु आदरातिशयात् सामिरग्निः क्रमेणौषधीपशुयजमानाः समृद्धा भवन्ति ॥

शुक्रमिति ॥ कल्पः—" आदत्ते दक्षिणेन स्रुवं सव्येन जुहूं वेदे प्रतिष्ठाप्य तस्यां गृह्णाति शुक्रं त्वा शुक्रायां धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामीत्येतेन यजुषा चतुर्गृहीतं गृहीत्वा समृद्धयोत्प्रयच्छति । अथोपभृति गृह्णाति ज्योतिस्त्वा ज्योतिषि धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामीत्येतेन यजुषाऽष्टगृहीतं गृहीत्वा भूयसो ग्रहान् गृह्णन् कनीय आज्यं गृह्णाति तथैव समृद्धयोत्प्रयच्छति । अथ ध्रुवायां गृह्णात्यर्चिस्त्वाऽर्चिषि धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामीत्येतेन यजुषा चतुर्गृहीतं गृहीत्वाऽभिपूर्य तथैव समृद्धयोत्प्रयच्छति " ( बौश्रौ १.१२ ) इति ॥ अत्र मध्यममन्त्रे ' धाम्नेधाम्ने ' इत्यादिकमनुषज्यते ॥ हे आज्य, दीप्तं त्वा दीप्तायां जुह्वां[75] तत्तन्मन्त्रपूर्वकग्रहणाय तत्तद्धोमस्थानाय पर्याप्तं गृह्णामि । ध्रुवमितरयोर्योज्यम् ॥ त्रिष्वपि मन्त्रेषु धामयजुःशब्दयोर्वीप्सायास्तात्पर्यमाह—" शुक्रं त्वा शुक्रायां ज्योतिस्त्वा ज्योतिष्यर्चिस्त्वाऽर्चिषीत्याह सर्वत्वाय । पर्याप्त्या अनन्तरायाय " ( तैब्रा ३.३.४ ) इति । आहुतिबाहुल्यं सर्वत्वम् । एकैकस्यामाहुतावाज्यबाहुल्यं पर्याप्तिः । आहुतेः कस्या अप्यलोपोऽनन्तरायः ॥ यदेतदाज्यावेक्षणं पूर्वमुक्तं तत्र विशेषं वक्तुं तत्प्रस्तौति—" देवासुराः संयत्ता आसन् । स एतमिन्द्र आज्यस्यावकाशमपश्यत् । तेनावैक्षत । ततो देवा अभवन् । पराऽसुराः । य एवं विद्वानाज्यमवेक्षते । भवत्यात्मना । पराऽस्य भ्रातृव्यो भवति " ( तैब्रा ३.३.५ ) इति । अवकाशः प्रकाशको मन्त्रः ।

[73] ब—मन्त्रगतं तेजःप्रभृतिकमनु°, क—मन्त्रगतच्छन्दःप्रभृतिकमनु° । [74] इ. ञ. पा भा. हा—, यजुषोत्पुनीयात् । [75] आ. इ. पा. हा—' जुह्वाम् ' नास्ति ।

हविर्ग्रहणम् ]

ज्योतिष्यसि ज्योतिस्त्वाऽर्चिषि धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामि ॥ १० ॥

[ उप नी रश्मिभिश्शुक्रं षोडश च ]

ज्योतिः । त्वा । ज्योतिषि । अर्चिः । त्वा । अर्चिषि । धाम्नेधाम्न इति धाम्ने-धाम्ने । देवेभ्यः । यजुषेयजुष इति यजुषे-यजुषे । गृह्णामि ॥ १० ॥

[ मैसं १.१.११, कासं १.१०, कपिसं १.१० वासं १.२४–२८ ] ५

उपभृति गृह्णाति—' ज्योतिः ' इति ॥ [v]ज्योतिः दीप्तं त्वां, [v]ज्योतिषि दीप्तायामुपभृति गृह्णामि । ' धाम्नेधाम्ने ' इत्यनुषज्यते ॥

ध्रुवायां गृह्णाति—' अर्चिः ' इति ॥ अर्चिषो हेतुत्वादार्चिःशब्देनोच्यते । तादृशं त्वाम् [v]अर्चिषि देवानामर्चनसाधने ध्रुवायां [v]गृह्णामि । शिष्टं स्पष्टम् ( तैसं १.१.१० ) ॥

॥ इति प्रथमे दशमोऽनुवाकः ॥ १०

स च ' अग्नेर्जिह्वासि ' इत्यादिकः ॥ अभिघारणरूपत्वकथनेनावेक्षणं प्रशंसति—" ब्रह्मवादिनो वदन्ति । यदाज्येनान्यानि हवीꣳष्यभिघारयति । अथ केनाऽऽज्यमिति । सत्येनेतिब्रूयात् । चक्षुर्वै सत्यम् । सत्येनैवैनदभिघारयति " ( तैब्रा ३.३.५ ) इति । वक्तुर्विप्रलम्भसंभवात् श्रुतोऽर्थः कदाचित् व्यभिचरत्यपि, दृष्टस्तु न तथेति चक्षुः सत्यम् । शुक्तिरजतरज्जुसर्पव्यभिचारस्तु [७६]काचकामलादिदोषप्रयुक्तः ॥ अवेक्षणे निमीलनरूपं विशेषं विधत्ते—" ईश्वरो वा एषोऽन्धो भवितोः । यश्चक्षुषाऽऽज्यमवेक्षते । निमील्यावेक्षेत । दाधाराऽऽत्मन्चक्षुः । अभ्याज्यं धारयति " ( तैब्रा ३.३.५ ) इति । आज्यस्याऽऽदित्यमण्डलवत् तेजस्वित्वात् नैरन्तर्यवीक्षणेनान्धो भवितुं प्रभुर्भवति । तत्र निमीलनेन [७७]"स्वात्मन्यक्ष्णो धारणादविनष्टचक्षुष्ट्वादन्धो"[७७] न भवति ॥ वीक्षणेनाऽऽज्यमभिघारयति । विधत्ते—" आज्यं गृह्णाति । छन्दाꣳसि वा आज्यम् । छन्दाꣳस्येव प्रीणाति " ( तैब्रा ३.३.५ ) इति । आज्यस्य यज्ञसाधनत्वेन छन्दःसादृश्यम् ॥ स्रुग्विशेषेणाऽऽवृत्तिविशेषं विधत्ते—" चतुर्जुह्वां गृह्णाति । चतुष्पादः पशवः । पशूनेवावरुन्धे । अष्टावुपभृति । अष्टाक्षरा गायत्री । गायत्रः प्राणः । प्राणमेव पशुषु दधाति । चतुर्ध्रुवायाम् । चतुष्पादः पशवः । पशुष्वेवोपरिष्टात् प्रतितिष्ठति " ( तैब्रा ३.३.५ ) इति । गायत्र्या रक्षितत्वात् प्राणो गायत्रः । तथा वाजसनेयिनः समामनन्ति—" प्राणा वै गयास्तत् प्राणाꣳस्तत्रे तद्यद्गयाꣳस्तत्रे तस्माद्गायत्री नाम " (शब्रा ५.५.५) इति । स्वाधीनत्वेनावरुद्धेषु पशुषु पश्चात्प्रयोगेण प्रतितिष्ठतीति ॥ आह्वस्याऽऽज्यस्य स्रुग्विशेषेणाल्पाधिकपरिमाणं विधत्ते—" यजमानदेवत्या वै जुहूः । भ्रातृव्यदेवत्योपभृत् । चतुर्जुह्वां गृह्णन् भूयो गृह्णीयात् । अष्टावुपभृति गृह्णन् कनीयः । यजमानायैव भ्रातृव्यमुपस्तिं करोति " ( तैब्रा ३.३.५ ) इति । उप समीपे भृत्यत्वेनास्ति [७८]तिष्ठतीत्युपस्तिः ॥ संख्यां पुनः प्रकारान्तरेण स्तौति—" गौर्वै स्रुचः । चतुर्जुह्वां गृह्णाति । तस्माच्चतुष्पदी । अष्टावुपभृति । तस्मादष्टाशफा । चतुर्ध्रुवायाम् । तस्माच्चतुस्स्तना । गामेव तत्सꣳस्करोति । साऽस्मै सꣳस्कृतेषमूर्जं दुहे " ( तैब्रा ३.३.५ ) इति । अभिमतदोहनात् स्रुचां गोरूपत्वं संख्यया तदवयवसाम्यं च । ततः स्रुचामाज्यपूर्तिरूपो यः संस्कारस्तेन गामेव संस्करोति सा च गौः [७९]पयोरूपमन्नमाज्यरूपं रसं च १५ २० २५ ३०

७६. इ. उ–काचकामलकादि° । ७७–७७. आ.पा.हा–स्वात्मप्रविष्टान्चक्षुषो धारणादन्धः; तं–स्वात्मन्यविनष्टचक्षुषो धारणादनन्धः । ७८. इ. उ. क–तिष्ठतीत्युपस्तृत् । ७९. तं–पयोरूपमिदमन्न° ।

दुग्धे ॥ गृहीतस्याऽऽज्यस्य यथोचितमाहुत्यङ्गत्वं दर्शयति—" यज्जुह्वां गृह्णाति । प्रयाजेभ्यस्तत् । यदुपभृति । प्रयाजानूयाजेभ्यस्तत् । सर्वस्मै वा एतद्यज्ञाय गृह्यते । यद्ध्रुवायामाज्यम् " ( तैब्रा ३.३.५ ) इति । पञ्चसु प्रयाजेषु त्रय जौहवाज्येन निष्पाद्यं, द्वय त्वौपभृतार्धेन, शिष्टेन त्वनूयाजाः । यत्र द्रव्यापेक्षा तत्र सर्वत्र ध्रौवम् ॥

५　अत्र विनियोगसंग्रहः—

" प्रत्यु स्रुचस्तपेदग्नेर्मृष्टेरूर्ध्वं पुनस्तपेत् ।
गोष्ठ वाचं तथा चक्षुः प्रजां मार्ष्टि क्रमात् [८०]स्रुचः ॥ १ ॥
जुहूपभृद्ध्रुवाः, आशा पत्नीं योक्त्रेण नह्यति ।
सुप्रेति पत्न्युपविशेदिमं काले विमोचनम् ॥ २ ॥
१०　समा पत्नी पूर्णपात्रं जपेदथ महीद्वयात् ।
घृतं निरूप्य वीक्षेत तेजोऽसिश्रित्य पश्चिमे ॥ ३ ॥
[८१]अग्नौ, तेजो हरेदग्निः पूर्वोत्रावधिसश्रयेत् ।
अग्ने स्वयत्संनि क्षिपद्या शु ज्यो ते त्रिभिराज्यकम् ॥ ४ ॥
उत्पूय देवो जल्पमुत्पुनात्याज्यपवित्रतः ।
१५　शु ज्योऽसिद्विभिराज्यस्य ग्रहो जुह्वादिके त्रये ॥
दशमे [८२]ऽत्यनुवाकेऽस्मिंस्त्रयोविंशतिरीरिताः ॥ ५ ॥ " इति ।

अथ मीमांसा ॥ द्वितीयाध्यायस्य प्रथमपादे चिन्तितम्—

" समार्ष्टि स्रुच इत्यत्र किं प्रधानाख्यकर्मता ।
गुणकर्मत्वमथवा दृष्टाभावेऽवघातवत् ॥
२०　गुणत्वं न हि [८३]सम्भाव्य प्राधान्यं तु प्रयाजवत् ।
अदृष्टकल्पनेनापि गुणत्वं स्याद्द्वितीयया ॥ " ( जैन्या २ १ १६–१७ ) इति ॥

दर्शपूर्णमासयोर्जुह्वादीनां दर्भैः समार्जनमाम्नायते—" स्रुचः संमार्ष्टि " ( तैब्रा ३.३.१ ) इति । तत्र समार्जनं प्रधानकर्म । कुतः । गुणकर्मलक्षणरहितत्वात् प्रधानकर्मलक्षणयुक्तत्वाच्च । तथा हि—अवघातेन व्रीहीणां तुषविमोको दृष्टः संस्कारः । तथा समार्जनेन जुह्वादिषु कंचिद्विशयं न पश्यामः । २५　अतोऽवघातवद्गुणकर्मत्वं नास्ति । " यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत " ( मीसू २ १.८ ) इति गुणकर्मलक्षणस्याभावात् । प्रयाजादिवददृष्टार्थत्वेन प्रधानकर्मत्वमस्ति । " यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि " ( मीसू २.१.७ ) इत्येतस्य प्रधानकर्मलक्षणस्य सद्भावादिति प्राप्ते ब्रूमः—स्रुच इति द्वितीया कर्मकारके विहिता । कर्मत्वं चेप्सिततमत्वे सति भवति । " कर्तुरीप्सिततमं कर्म " ( पा १ ४.४९ ) इति कर्मसंज्ञाविधानात् । क्रतुसाधनत्वेन च स्रुचां क्रतुर्मीप्सिततमत्वम् । अतः ३०　प्रधानभूताः स्रुचः । तथा सति समार्जनक्रियाया गुणकर्मत्वमवघातवत् भविष्यति । यदि स्रुक्षु दृष्टार्थो न स्यात् तर्ह्यपूर्वं कल्पनीयम् ॥

द्वादशाध्यायस्य प्रथमपादे चिन्तितम्—

" पत्नीसंनहनं कार्यं चोदकादिति चेन्न तत् ।
बन्धवासोधारणयोर्योक्त्रबन्धनसिद्धितः ॥ " ( जैन्या १२.१.१७ ) इति ॥

---

३३　८०. ब–स्रुवम्, त–स्रुवाम् । ८१. क. त–नद्यो । ८२. ड. पा मा. हा–°ऽप्यनुवाकेऽस्मिन् । ८३. त–सामान्यम् ।

दर्शपूर्णमासविकारेषु सौमिकेषु प्रायणीयादिषु चोदकातिदेशात् पत्नीसंनहनं कार्यमिति चेत् । मैवम् । प्रसङ्गसिद्धत्वात् । यदष्टाय बन्धो यदि वा वासोधारणं [८४]दृष्टं प्रयोजनमुभयथाऽपि सौमिकेन योक्त्रबन्धनेनैव [८५]तत् सिध्यति । " योक्त्रेण पत्नीꣳ संनह्यति " ( द्र. तैसं ६·१·३ ) इति हि सोमे विधीयते । तस्माद्दैष्टिकं पत्नीसंनहनं पृथक् न कार्यम् ॥

नवमाध्यायस्य तृतीयपादे चिन्तितम्—

" पत्नीमिति द्विपत्न्यादावूह्यं नो वोह्यतेऽर्थतः ।
नोपदेशस्य सामान्यादतिदेशाप्रवृत्तितः ॥ " ( जैन्या ९·३·८ ) इति ॥

दर्शपूर्णमासयोर्मन्त्र आम्नायते— " पत्नीꣳ संनह्य " ( तैब्रा ३·२·९ ) इति । तत्रैकपत्नीकस्य यजमानस्य प्रयोगे समवेतार्थ एकवचनान्तः पत्नीशब्दः । स च द्विपत्नीकस्य बहुपत्नीकस्य च प्रयोगेऽर्थवशादूहनीय इति चेत् । मैवम् । किमुपदेशप्राप्तस्योहोऽतिदेशप्राप्तस्य वा । नाऽऽद्यः । उपदेशस्य सर्वप्रयोगसाधारणत्वात् । यद्येकपत्नीकप्रयोगार्थमेवायं मन्त्रोपदेशः स्यात्तदानीमेकवचनं विवक्ष्येत । न त्वेवमस्ति । अन्यथा द्विबहुपत्नीकप्रयोगयोर्मन्त्र एव नोपदिश्येत । तत्र कुत ऊहानूहचिन्तावकाशः । साधारणोपदेशे सर्वप्रयोगसमवेतार्थतया ' पत्नीम् ' इति पदे प्रातिपदिकं कर्मकारकविभक्तिश्चेत्युभयमेव विवक्षितम् । एकवचनं त्वदृष्टार्थतया सर्वप्रयोगेषु [८६]यथावस्थितमेव पठनीयम्[८६] । नाप्यतिदेशप्राप्तस्योह इति द्वितीयः पक्षः । द्विबहुपत्नीकप्रयोगयोरविकृतित्वेनातिदेशायोगात् । तस्मादत्र नास्त्यूहः ॥ १५

तत्रैवान्यच्चिन्तितम् ।

" ऊह्यो नो वैष विकृतावूह्योऽपाठेन[८७] पाशवत् ।
नादृष्टच्छान्दसत्वाभ्यां [८८]पाशे छान्दसता न हि ॥ " ( जैन्या ९·३·९ ) इति ॥

एष एकवचनान्तः पत्नीमन्त्रो विकृतौ द्विबहुपत्नीकप्रयोगयोरर्थानुसारेणोहनीयः । कुतः ? पाठाभावात् । प्रकृतावर्थानुसारेण प्राप्तोऽप्यूहः सर्वप्रयोगसाधारणेन मन्त्रपाठेन बाधितः । विकृतौ २० तु बाधकस्य पाठस्याभावेन, अस्मदायत्ते प्रयोगेऽर्थानुसारेणोहो युक्तः । अत एव पूर्वत्र द्विपशुयुक्तायां विकृतौ " अदितिः पाशं प्रमुमोक्तु, " ( तैसं ३·१·४ ) ' अदितिः पाशान् प्रमुमोक्तु ' इत्येकवचनान्तो बहुवचनान्तश्च पाशमन्त्र ऊहित इति चेत् । मैवम् । पत्नीमित्येकवचनस्याविवक्षितत्वेन प्रकृतावदृष्टार्थतया यथावस्थितपाठे सति विकृतावप्यदृष्टार्थं यथावस्थितस्यैव पठितव्यत्वात् । अथोच्येत प्रकृतौ छान्दसस्यैवैकवचनमेव व्यत्ययेन द्वित्वबहुत्वयोरर्थयोर्वर्तत इति । एवं तर्हि विकृतावप्यूहमन्तरेणैव द्वित्वबहुत्ववाचित्वात् मा भूदूहः । न चैवं पाशेऽप्यूहो मा भूदिति शङ्कनीयम् । प्रकृतावेकवचनबहुवचनयोरेकस्मिन्नेव पाशे २५ वैदिकप्रयोगादर्शनात्, द्वित्वे तु तदभावात् । तस्मात् पाशस्योहो विकृतावस्ति न तु पत्नीशब्दस्य । यद्यप्यस्मिन्ननुवाके ' पत्नीं संनह्य ' ( तैब्रा ३·२·९ ) इत्ययं [८९]प्रैषमन्त्रो नाऽऽम्नातस्तथाऽपि पूर्वानुवाकब्राह्मणे ( तैब्रा ३·२·९ ) तदाम्नानादिह पत्नीसंनहनप्रसङ्गेन विचारद्वयं दर्शितम् ॥

चतुर्थाध्यायस्य प्रथमपादे चिन्तितम्— ३०

" जुहूपभृद्ध्रुवास्थाज्यं सर्वार्थं वा व्यवस्थितम् ।
सर्वार्थमविशेषात् स्यात् प्रयाजार्थं हि जौहवम् ॥
प्रयाजानूयाजहेतुः स्यादौपभृतमाज्यकम् ।
ध्रौवमन्यार्थमित्येषा व्यवस्था वचनैर्मता ॥ " ( जैन्या ४·१·३३–३४ ) इति ॥

" चतुर्जुह्वां गृह्णाति " ( तैब्रा ३·३·५ ), " अष्टावुपभृति " ( तैब्रा ३·३·५ ), " चतुर्ध्रुवायाम् " ३५ ( तैब्रा ३·३·५ ) इत्येषु ग्रहणवाक्येषु ' एतदर्थम् ' इति विशेषनियामकस्याश्रवणात् पात्रत्रयगतमाज्यं सर्वार्थमिति चेत् । मैवम् । " यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत् " ( तैब्रा ३·३·५ ) इत्यादिवाक्यैर्व्यवस्थावगमात् ॥

---

८४. तं. ब–दृष्ट° । ८५. इ. उ. पा. भां. द्रा–' तत् ' नास्ति । ८६–८६. इ. उ. तं. पां. भां–यथावस्थित एव पठनीयः । ८७. इ. उ. क. पा. भां. द्रा–विकृतावूह्यो पाठो न । ८८. इ. उ. क. तं. पा. ४० इ. भां. द्रा–पाठे । ८९. इ. उ. पा. भां. द्रा–मन्त्रः ।

अत्रैवान्यचिन्तितम्—

" अष्टावुपभृतीत्यत्र किमष्टैकग्रहे विधि.।
[९०]चतुर्द्वयग्रहे वाऽऽद्यः[९०] स्यादष्टश्रुतिमुख्यत ॥
चतुर्गृहीत होमाङ्ग फलवत्त्वात् न बाध्यते ।
५ चतुर्द्वित्वं लक्ष्यतेऽत्र सहानीत्यर्थमष्टता ॥ " ( जैन्या ४.१ ३५–३६ ) इति ॥

ग्रहणवाक्ये " चतुर्जुह्वा गृह्णाति " ( तैब्रा ३ ३ ५ ) इत्यत्र यथा चतु संख्याविशिष्टमेकहविर्ग्रहण विवक्षित तथैव " अष्टावुपभृति " ( तैब्रा ३.३.५ )[९१]इत्यत्राप्यष्टसंख्याविशिष्टमेकहविर्ग्रहण[९१]विधातव्यम् । तथा सत्यष्टत्वश्रुतेर्मुख्यत्वलाभात् । अष्टसंख्यावयवभूतयोश्चतु सख्ययोर्विधाने [९२]'सख्याष्टशब्दस्यावयव-लक्षणा'[९३] प्रसज्येतेति प्राप्ते ब्रूम' । प्रसज्यता नाम लक्षणा । मुख्यार्थस्वीकारे [९४]होवं वाक्यविरोधापत्ति.[९४] ।
१० " चतुर्गृहीतं जुहोति " इत्यनारभ्य श्रुतं वाक्य होममात्रोद्देशेन चतुर्गृहीत विदधाति । यद्य-प्येतत् सर्वहोमविषयतया सामान्यरूपम्, औपभृतं तु प्रयाजानूयाजविषयतया विशेषरूप, तथापि होमस्य फलवत्त्वेन प्राधान्यात् ग्रहणस्य होमार्थत्वेनोपसर्जनत्वात् प्रधानानुसारेण चतुर्गृहीतमेव युक्तं न तूपसर्जनानु-सारेणाष्टगृहीतम् । तस्मादुपभृति चतुर्गृहीतद्वय विधीयते । तत्रैकं चतुर्गृहीत हविश्चतुर्थपञ्चमप्रयाजार्थमपरं त्वनूयाजार्थम् । नन्वेव [९५]'सति चतुर्गृहीतस्यैव हविर्द्वयत्वात् ' चतुरुपभृति ' इत्येव निधातव्य न तु
१५ ' अष्टावुपभृति ' इति विधिर्युक्त इति चेत् । मैवम् । तथा सत्यनूयाजार्थं द्वितीय चतुर्गृहीत न सिध्येत् । अथ तदपि वाक्यान्तरेण विधीयेत तदानीमुपभृत प्रथमेन चतुर्गृहीतेनावरुद्धत्वात् द्वितीयस्मै पात्रान्तरमन्वि-ष्येत । यद्युपभृति चतुर्गृहीतं विधीयेत तदा चतुर्गृहीतद्वयस्य पृथगेवानुष्ठानात् उपभृत्यैकप्रयत्नेनाऽऽनयनं न सिध्येत् । अत उभयस्य सहोपभृत्यानयनार्थम् ' अष्टावुपभृति ' इत्युच्यते । तस्मात् साहित्यार्थमष्ट-शब्दप्रयोगेऽपि हविर्द्वयसिद्धये द्वे चतुर्गृहीते अत्र विधीयेते ॥

२० अथ व्याकरणम् ॥ प्रत्युष्टमित्यादिषु स्वरा गता । वाजिनमित्यत्र प्रत्ययस्वर । सपत्नान् सहत इति सपत्नसाह इत्यत्र अणि प्रत्ययान्तत्वात् प्रत्ययस्वर' । सपत्नसाहीमित्यत्रोदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वम् । आशासानेत्यत्र शानचश्चित्वादन्तोदात्तत्वे ( पा ६.१.१६३ ) प्राप्ते लसार्वधातुकानुदात्तत्वे (पा ६ १.१८६) धातुस्वरलोपे समाने कृत्स्वर' ( पा ६.२ १३९ ) । सौभाग्यशब्दस्य ष्यञ्प्रत्ययान्तस्य (पा ६.१.१९७) ञित्स्वरः । प्रतमनुगताऽनुमतेत्यत्राव्ययपूर्वपदप्रकृतिस्वर (पा ६ २.२) । सुकृतायेत्यत्र " गतिरनन्तर "
२५ ( पा ६.२.४९ ) इति [९६]गतिस्वरत्वे प्राप्ते तदपवाद " सूपमानात् क्त. " ( पा ६ २.१४५ ) ' सु ' इत्येतस्मादुपमानात् पर क्तान्तमुत्तरपदमन्तोदात्त भवति । सुप्रजम् इत्यत्रासिच्प्रत्ययान्तस्य (पा५.४.१२२) चित्स्वरे (पा ६ १ १६३ ) समासे कृत्स्वर. ( पा ६.२ १३९ ) । शोभन पतिर्यस्या सा सुपत्नीरित्यत्र " नञ्सुभ्याम् " ( पा ६ २ १७२ ) इत्युत्तरपदान्तोदात्तस्यापवाद — " आद्युदात्त द्व्यच् छन्दसि " ( पा ६.२.११९ ) आद्युदात्त द्व्यच्क यदुत्तरपद तद्बहुव्रीहौ समासे सोरुत्तरमाद्युदात्त भवति । सुकेत
३० इत्यत्रापि तद्वत् । महीनामित्यत्र " ह्रस्वच्छन्दसि बहुलम् " ( पा ६ १.१७८ ) इत्यन्तात् छन्दसि विषये बहुलं नामुदात्तो भवति । धाम्नेधाम्न इत्यत्र " अनुदात्तं च " ( पा ८ १ ३ ) इत्याम्रेडितमनुदात्तम् । ज्योतिरित्यत्रेसुन्प्रत्ययान्तत्वान्नित्स्वर. ( पा ६.१.१९७ )॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके दशमोऽनुवाक' ॥ १० ॥

३५ ९०–९० आ. हा–चतुर्द्वयं ग्रहे वाय , क–चतुर्द्वयग्रहो वाय , ङ. ठ भां–चतुर्ग्रहे द्वय बोध , तै–चतुर्द्वयग्रहे वा नाद्य । ९१. ङ. ठ पा. भां. हा–इत्यत्राष्ट° । ९२ ङ. ठ पा भां. हा–विधीयते । ९३–९३. ङ ठ पा भां. हा–सन्यवयवलक्षणा । ९४–९४. आ.त–होमवाक्यविरोधापत्ते. । ९५. तै–तर्हि । ९६. तै. ब–पूर्वपदप्रकृतिस्वरत्वे ।

कृष्णोऽस्याखरेष्ठोऽग्नये त्वा स्वाहा

कृष्णः । असि । आखरेष्ठ इत्याखरे-स्थः । अग्नये । त्वा । स्वाहा ।

इध्मं प्रोक्षति–' कृष्णः ' इति । कृष्णः कृष्णमृगः । " * कृष्णस्यामृगाख्या चेत्" (फि ११) इति वचनात् मृगाख्यायामाद्युदात्तत्वम् । आखरेष्ठः आखनति समन्तात्कुर्वं मूलैरवद्रावयतीत्याखरो वनस्पतिः । " §खनतेर्डरो वक्तव्यः" (द्र. पाभा ३·३·१२५) इति खनतेर्डर-प्रत्ययः । तत्र तिष्ठतीत्याखरेष्ठः । " सुपि स्थः " ( पा ३·२·४ ) इति कः । " तत्पुरुषे कृति बहुलम् " ( पा ६·३·१४ ) इत्यलुक् । सुषामादित्वात् षत्वम् ( पा ८·३·९८ ) कर्षात्वता-दिसूत्रेण ( पा ६·२·१४४ ) उत्तरपदान्तोदात्तत्वम् । " अग्निर्देवेभ्यो निलायत । कृष्णो रूपं कृत्वा । स वनस्पतीन् प्राविशत् " ( तैब्रा ३·३·६ ) इत्यादिब्राह्मणोक्तो योऽग्निः स एव त्वमसीति तदाधारभूतेध्मस्तुतिः । एवंभूतं त्वामिध्मम् अग्नये अग्न्यर्थं प्रोक्षामीति शेषः । एवं कर्तव्यमिति स्वयमेव सरस्वत्याह । विभक्त्यन्तसमुदायात्मा निपातः स्वाहा इति । संस्कारविशेषानवधारणात् नावगृह्यते ॥ १०

दशमेऽनुवाके आज्यहविषो ग्रहणमुक्तम् । एकादश इध्माबर्हिःपूर्वकं वेद्यां हविरासादनमुच्यते । तत्र ' कृष्णोऽस्याखरेष्ठोऽग्नये ' इत्याद्यो मन्त्रः । ततः पूर्वम् ' आपो देवीः ' ( तैसं १·१·५ ) इत्ययमुदकाभिमन्त्रणमन्त्र आम्नातव्य इत्यभिप्रेत्य पूर्ववत् व्याचष्टे—" आपो देवीरग्रे पुवो अग्रे गुव इत्याह । रूपमेवासामेतन्महिमानं व्याचष्टे । अग्र इमं यज्ञं नयताग्रे यज्ञपतिमित्याह । अग्र एव यज्ञं नयन्ति । अग्रे यज्ञपतिम् । युष्मानिन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये इत्याह । वृत्रꣳ ह हनिष्यन्निन्द्र आपो वव्रे । आपो हेन्द्रं वव्रिरे । संज्ञामेवाऽऽसामेतत् सामानं व्याचष्टे । प्रोक्षिताः स्थेत्याह । तेनापः प्रोक्षिताः " ( तैब्रा ३·२·६ ) इति ॥ १५

कृष्ण इति ॥ कल्पः —" अथेध्मं विस्रस्य प्रोक्षति कृष्णोऽस्याखरेष्ठोऽग्नये त्वा स्वाहेति " ( बौश्रौ १·१३ ) इति ॥ हे इध्म, त्वं वह्निप्रियतमत्वात् तदभेदोपचारेण [1]कृष्णमृगः असि । तथा वनस्पतिस्थोऽसि । अतः अग्नये प्रियं त्वां प्रोक्षामि । तदेतत् कर्तव्यमिति स्वकीया सरस्वती ब्रूते, सोऽयमर्थः स्वाहाशब्दवाच्यः । अत एवाग्निहोत्रब्राह्मणे प्रजापतेः स्वकीयया वाचा सह संवाद एवमाम्नायते— " तं वागभ्यवदज्जुहुधीति । सोऽब्रवीत् कस्त्वमसीति । स्वैव ते वागित्यब्रवीत् । सोऽजुहोत् स्वाहेति [2]तत्स्वाहाकारस्य जन्म[2] " ( तैब्रा २·१·२ ) इति । अथवा नानार्थवाची स्वाहाशब्दः प्रोक्षणं ब्रूते ॥ [3]अथोक्तमन्त्रार्थं दर्शयति— " अग्निर्देवेभ्यो निलायत । कृष्णो रूपं कृत्वा स वनस्पतीन् प्राविशत् । कृष्णोऽस्याखरेष्ठोऽग्नये त्वा स्वाहेत्याह । अग्नय एवैनं जुष्टं करोति । अथो अग्नेरेव मेधमवरुन्धे " ( तैब्रा ३·३·६ ) इति ॥ २० २५

* शुद्धीकृतोऽयं पाठः । मुद्रितपुस्तके लिखितपुस्तकेषु च 'कृष्णस्य मृगाख्या चेत्' इति पाठः वर्तते ।

§काशिकादिषु शिक्षाकारमिदं वार्तिकम् । १. पं. व– याथादिस्वरेण ।

१. आ.भां– कृष्णो मृगः । २–२. आ.पा.हा– ' तत्स्वाहाकारस्य जन्म 'नास्ति । ३. तं–यथोक्तं मन्त्रार्थम् । ३०

वेदि॑रसि ब॒र्हिषे॑ त्वा॒ स्वाहा॑ ब॒र्हिर॑सि स्रु॒ग्भ्यस्त्वा॒ स्वाहा॑
दि॒वे त्वा॒ऽन्तरि॑क्षाय त्वा पृथि॒व्यै॑ त्वा॑

वेदि॑ः। अ॒सि॒। ब॒र्हिषे॑। त्वा॒। स्वाहा॑। ब॒र्हिः॑। अ॒सि॒। स्रु॒ग्भ्य इति॑ स्रु॒क्-भ्यः॑।
त्वा॒। स्वाहा॑। दि॒वे। त्वा॒। अ॒न्तरि॑क्षाय। त्वा॒। पृ॒थि॒व्यै॑। त्वा॒।

५ वेदिं प्रोक्षति—'वेदिः' इति॥ [V]वेदिः वेदयित्री हविषामाधारत्वेन प्रकाशयित्री [V]असि। "सर्वधातुभ्य इन्" (उ ५६७) इति विदेरिन्प्रत्ययः। तां तादृशीं त्वा [V]बर्हिषे बर्हिःस्तरणार्थं प्रोक्षामि। एतच्च स्वयमेव वागाह॥ "प्रजा वै बर्हिः" (तैब्रा ३.३.६) इत्यादि ब्राह्मणम्॥

बर्हिः प्रोक्षति—'बर्हिः' इति॥ [V]बर्हिः[२] बृहत् पर्याप्तम् [V]असि। "बृहेर्नलोपश्च" १० (उ २७४) इतीमिप्रत्ययः। तादृशं त्वा [V]स्रुग्भ्यः स्रुगर्थं स्रुचां धारणार्थं प्रोक्षामीत्याह स्वयं सरस्वती। "साबेकाचः०" (पा ६.१.१६८) इति भ्यस उदात्तत्वम्। "प्रजा वै बर्हिः। यजमानः स्रुचः" (तैब्रा ३.३.६) इत्यादि ब्राह्मणम्॥

अन्तर्वेदि पूर्वाग्रं बर्हिः स्थापयित्वा प्रोक्षति—'दिवे' इति॥ अग्रमध्यमूलेषु क्रमेण प्रोक्षणम्। सर्वत्र प्रोक्षामीति शेषः। यागनिर्वृत्तिद्वारेण द्युप्रभृतीनां लोकानां धारणार्थं प्रोक्षणं

---

१५ वेदिरिति॥ कल्पः—"वेदिं प्रोक्षति। वेदिरसि बर्हिषे त्वा स्वाहेति" (बौश्रौ १.१२) इति॥ हे वेदे, त्वं [४]लब्धा [V]असि। "तदिमामविन्दन्त, यदिमामविन्दन्त तद्वेद्यै वेदित्वम्" (तैसं ६.२.४) इति श्रुतेः। अतो बर्हिर्धारयितुं त्वा प्रोक्षामि॥ रूपकेणाऽऽधाराधेयभावं दर्शयति—"वेदिरसि बर्हिषे त्वा स्वाहेत्याह। प्रजा वै बर्हिः। पृथिवी वेदिः। प्रजा एव पृथिव्यां प्रतिष्ठापयति" (तैब्रा ३.३.६) इति॥

२० बर्हिरिति॥ कल्पः—"बर्हिः प्रोक्षति। बर्हिरसि स्रुग्भ्यस्त्वा स्वाहेति" (बौश्रौ १.१२) इति॥ हे दर्भ, वेदेस्त्वं बृहणम् [V]असि। अतस्त्वयि स्रुचः स्थापयितुं त्वा प्रोक्षामि। पूर्ववदाधारकत्वं दर्शयति—"बर्हिरसि स्रुग्भ्यस्त्वा स्वाहेत्याह। प्रजा वै बर्हिः। यजमानः स्रुचः। यजमानमेव प्रजासु प्रतिष्ठापयति" (तैब्रा ३.३.६) इति॥

दिव इति॥ कल्पः—"अन्तर्वेदि पुरोग्रन्थि बर्हिरासाद्य दिवे त्वेत्यग्रं प्रोक्षत्यन्तरिक्षाय त्वेति २५ मध्यं पृथिव्यै त्वेति मूलम्" (आपश्रौ २.८.१) इति॥ बर्हिष्येव लोकत्रयं भावयित्वा लोकार्थतां प्रोक्षणस्येत्याह—"दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेति बर्हिरासाद्य प्रोक्षति। एभ्य एवैनल्लोकेभ्यः प्रोक्षति" (तैब्रा ३.३.६) इति॥ विधत्ते—"अथ ततः सह स्रुचा पुरस्तात् प्रत्यञ्चं ग्रन्थिं प्रत्युक्षति। प्रजा वै बर्हिः। यथा सूत्यै काल आपः पुरस्ताद्यन्ति। तादृगेव तत्" (तैब्रा ३.३.६) इति॥ अग्रादित्रयप्रोक्षणानन्तरं यः शेषस्तेन प्रोक्षणशेषेणोदकेन स्वयं हस्तस्थितप्रोक्षणपात्रेण सह बर्हिषः पुरस्तात् हस्त

---

३० २. मे—'बर्हिः' नास्ति।

---

४. ब—लब्धा।

स्वधा पितृभ्य ऊर्ग्भव बर्हिषद्भ्यं ऊर्जा पृथिवीं गच्छत

स्वधेति स्व--धा। पितृभ्यः इति पितृ--भ्यः। ऊर्क्। भव।

बर्हिषद्भ्य इति बर्हिषत्--भ्यः । ऊर्जा। पृथिवीम्। गच्छत।

---

भवति । "ऊडिदम्°" (पा ६·१·१७१) इत्यादिना दिव इति विभक्तेरुदात्तत्वम् । पृथिव्या इत्यादौ "उदात्तयणो हल्पूर्वात्" (पा ६·१·१७४) इति विभक्तेरुदात्तत्वम् ॥

दक्षिणस्याः श्रोणेरुत्तरस्याः प्रोक्षणीशेषं निनयति--'स्वधा' इति ॥ "मासा वै पितरो बर्हिषदः" (तैब्रा ३·३·६) इत्यादि ब्राह्मणप्रसिद्धा ये मासनामानः पितरो बर्हिष्यागत्य सीदन्ति, तेभ्यः [V]स्वधा अन्नम् । कीदृशम् ? [V]ऊर्क् बलप्राणनयोः उद्दीपकं [V]भव इति । समुदायापेक्षमेकवचनम्, अन्नापेक्षं वा। किंच--[V]ऊर्जा रसेन सह [V]पृथिवीं [V]गच्छत प्रविशत । अवयवापेक्षं बहुवचनम् । बर्हिषद इति पृषोदरादित्वात् (पा ६·३·१०९) सलोपः। "सत्सूद्विष°" (पा ३·२·६१) इत्यादिना क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६·२·१३९)।

---

प्रसार्य उदकं यथा प्रत्यक् सिच्यते [5]तयोरिक्षिपेत् । यथा मनुष्याणां गवादीनां च प्रसूतिकाले प्रथमतः आपो निर्गच्छन्ति । [6]तत्प्रोक्षणं तादृगेव भवति ॥

**स्वधा इति** ॥ कल्पः-- "अतिशिष्टाः प्रोक्षणीर्निनयति दक्षिणायै श्रोणेरोत्तरस्यै* श्रोणेः स्वधा पितृभ्य ऊर्ग्भव बर्हिषद्भ्य ऊर्जा पृथिवीं गच्छतेति" (बौश्रौ १·१३) इति ॥ हे जल, [7]मया त्वं [V]पितृभ्यः दत्तमसि[7] । अतो बर्हिष्यवस्थितेभ्यः पितृभ्यो रसरूपं [V]भव । हे जलावयवाः, भवदीयोद्भूतरसरूपेण [V]पृथिवीं [V]गच्छत ॥ मन्त्रव्याख्यानपूर्वकं विधत्ते-- "स्वधा पितृभ्य इत्याह । स्वधाकारो हि पितृणाम् । ऊर्ग्भव बर्हिषद्भ्य इति दक्षिणायै श्रोणेरोत्तरस्यै निनयति संतत्यै । मासा वै पितरो बर्हिषदः । मासानेव प्रीणाति । मासा वा ओषधीर्वर्धयन्ति । मासाः पचन्ति समृद्ध्यै । अनतिस्कन्दन् ह पर्जन्यो वर्षति । यत्रैतदेवं क्रियते । ऊर्जा पृथिवीं गच्छतेत्याह । पृथिव्यामेवोर्जं दधाति । तस्मात् पृथिव्या ऊर्जा भुञ्जते" (तैब्रा ३·३·६) इति । स्वधाकारः पितृणां प्रिय इत्यर्थो [8]वाजसनेयिनां प्रसिद्धः । "देवा उपजीवन्ति । स्वाहाकारं च वषट्कारं च । हन्तकारं मनुष्याः । स्वधाकारं पितरः" (बृउ ५·८·१) इति श्रुतिः पूर्वमुदाहृता । वेदेर्दक्षिणश्रोणिमारभ्योत्तरश्रोणिपर्यन्तं[9] निनयनेन [10]यजमानस्याविच्छिन्ना प्रजा भवति मासाभिमानिदेवा [11]एव बर्हिषदः पितर इति तत्प्रतीतौ सत्याममिमन्तव्यकालात्मका मासा ओषधीर्वर्धयित्वा फलं संपादयन्ति । ततोऽन्नसमृद्धिः । यस्मिन् देशे एतन्निनयनमेवं क्रियते तस्मिन् देशे पर्जन्यो [12]वृष्ट्या सस्यं न विनाशयति[12] । यथाकालं यथोचितं

---

५. व--तयोक्षेत । ६. तं--तत्प्रस्युक्षणम् । * श्रौतसूत्रे तु 'श्रोणेरोत्तरायै' इति । ७--७. व--त्वं पितृणामन्नमसि । ८. तं--वाजसनेयिशाखायाम् । ९. तं--°पर्यन्तेन । १०. तं--यजमानेनावि° । ११. इ.उ. भां.हा--'एव' नास्ति । १२--१२. भा. क-अतिवृष्ट्या सस्यमविनाशयन्; तं-- सस्यान्यविनाशयन्।

विष्णोः स्तूपोऽस्यूर्णाम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्यो

विष्णोः। स्तूपः। असि। ऊर्णाम्रदसमित्यूर्णा–म्रदसम्।
त्वा। स्तृणामि। स्वासस्थमिति सु–आसस्थम्। देवेभ्यः।

ऊर्जेति। "साविकाच॰" (पा ६ १.१६८) इति विभक्तेरुदात्तत्वम्। "आतोऽनुपसर्गे कः" (पा ३.२.३) इति कप्रत्ययान्तः स्वधाशब्दः। थाथादिस्वरेणान्तोदात्तः (पा ६.२.१४४)॥

प्रस्तरं गृह्णाति–'विष्णो' इति॥ विष्णुः व्यापको यज्ञः। "यज्ञो वै विष्णुः" (तैब्रा ३.३.६) इति ब्राह्मणम्॥ तस्य [v]स्तूपः संघातः [v]असि। त्वदात्मना यज्ञः संहत इति स्तुतिः। "*स्त्यः सम्प्रसारणमुच्च" इति पप्रत्ययः, उकारश्चान्तादेशः। "दीर्घश्च" इति तत्रानुवर्तते। वृषादित्वादाद्युदात्तत्वम् (पा ६.१ २०३)॥

बर्हिः स्तृणाति–'ऊर्णाम्रदसम्' इति॥ ऊर्णा अविसूत्रम्। तद्वन्मृदुः ऊर्णाम्रदाः। म्रद मर्दने घटादि। यस्मात् "प्रथिम्रदि॰" (उ २८) इत्यादिना उः विधीयते,

वर्षति। उदकरसस्य[13] पृथिवीगतस्थान पृथिवीजन्येनान्नरसेन जना भोगं संपादयन्ति॥ शैथिल्यं विधत्ते—"ग्रन्थिं विस्रंसयति। प्रजनयत्येव तत" (तैब्रा ३.३ ६) इति। बन्धनरूपे [14]गर्भेऽवस्थितस्य बर्हिषो निष्क्रमणमेवोत्पादनम्॥ शिथिलस्य निमोचनं विधत्ते—"ऊर्ध्वं प्राञ्चमुद्गृह्य प्रत्यञ्चमायच्छति। तस्मात् प्राचीनं रेतो धीयते। प्रतीचीः प्रजा जायन्ते" (तैब्रा ३.३ ६) इति। 'पश्चात् प्राञ्चमुपगूहति' इति हि पूर्वं [15]निहितस्य प्राञ्चमुद्गृह्य ग्रन्थेरग्रं धरणोर्ध्वमुत्कृष्य प्रत्यङ्मुखत्वेन कर्षेत्॥

विष्णोरिति॥ कल्पः—"विष्णो स्तूपोऽसीति धर्मेसियाहवनीयं प्रति *प्रस्तरमुपादत्ते" (आपश्रौ २ ८ ७) इति॥ हे प्रस्तर, त्वं व्यापिनो यज्ञस्य संघातरूपो धारक [v]असि॥ तदेतद्दर्शयति— "विष्णो स्तूपोऽसीत्याह। यज्ञो वै विष्णुः। यज्ञस्य धृत्यै" (तैब्रा ३.३ ६) इति॥ विधत्ते—"पुरस्तात् प्रस्तरं गृह्णाति। मुख्यमेवैनं करोति" (तैब्रा ३.३ ६) इति। वेदेः पूर्वभागे ब्रह्मा यजमानो वा प्रस्तरं धारयेत। तच्च सूत्रेऽभिहितम्— "ब्रह्मा प्रस्तरं धारयति यजमानो वा" (आपश्रौ २ ८ ६) इति॥ धारणाय प्रदास्यमानमौल्यस्य हस्तेनाभिनीय निधत्ते— "इयन्तं गृह्णाति। प्रजापतिना यज्ञमुखेन संमितम्" (तैब्रा ३ ३ ६) इति। वेदिलक्षणमात्रस्य इयायमभिनय प्रादेशमात्रपरत्वेन [16]व्याख्येय॥ तदेवानूद्य प्रशंसति—"इयन्तं गृह्णाति। यज्ञपरुषा संमितम्। इयन्तं गृह्णाति। एतावद्वै पुरुषे वीर्यम्। वीर्यसंमितम्" (तैब्रा ३ ३ ६) इति। परः पर्वः। [17]तच्च यज्ञपुरुषस्य हस्तकूर्परयोरन्तरं प्रादेशमात्रं भवति। प्रसारितयोरङ्गुष्ठनिष्ठितयोरङ्गुल्योर्यावन्मध्यं तावदेव पुरुषे सामर्थ्यम्, हानोपादानाद्यशेषव्यापाराणां तत्रैव निष्पत्तेः॥ पक्षान्तरं विधत्ते— "अपरिमितं गृह्णाति। अपरिमितस्यावरुद्ध्यै" (तैब्रा ३ ३ ६) इति। यावद्यौचित्ये स्वस्य सौकर्यं तावदेव गृह्णीयात्।

* इदमाकारं सूत्रादि नोपलभ्यते। द्र॰ उ ३१२– 'स्तुवो दीर्घश्च'।

१३ त– उदकस्य, क–उदकरसस्य। १४. ड.उ पा भा–गर्ते स्थितस्य। १५. त–गृहीतस्य। * श्रौतसूत्रे 'ऽमपादत्ते' इति। १६. ड.उ.पा–वेदे व्याख्येयः। १७. ड.उ पा भा.हा–तत्र।

गन्धर्वोऽसि विश्वावसुर्विश्वस्मादीषतो यजमानस्य परिधिरिड ईडित

गन्धर्वः । असि । विश्वावसुरिति विश्व–वसुः । विश्वस्मात् ।
ईषतः । यजमानस्य । परिधिरिति परि–धिः । इडः । ईडितः ।

तस्मादसुन् । " उपमानानि सामान्यवचनैः " ( पा २·१·५५ ) इति तत्पुरुषः । "तत्पुरुषे तुल्यार्थ° " ( पा ६·२·२ ) इत्यादिना उपमानपूर्वपदप्रकृतिस्वरत्वम् । " ऊर्णोतेश्च* " (उ ७२५ ) इति डप्रत्ययान्तः ऊर्णाशब्दः । वृषादित्वादाद्युदात्तत्वम् ( पा ६·१·२०३ ) । तादृशं त्वां ^V^स्तृणामि । पुनश्च विशेष्यते–^V^स्वासस्थं शोभनाः सुखवन्तः आसितारः स्थातारश्च यस्मिन् स स्वासस्थः, आसितारः आसाः । आस उपवेशने । पचाद्यच् । स्थातारः स्थाः, विच् ( पा·३·२·७४ ) । समाहारद्वन्द्वः । सु आसस्थं शोभनमासस्थं यस्मिन्निति स्वासस्थम् । " नञ्सुभ्याम् " ( पा ६·२·१७२ ) इति उत्तरपदान्तोदात्तत्वम् । यद्वा–आसनमासस्थम् । "†दृशसदद्मितमिभ्यश्च " इति चकारस्यानुक्तसमुच्चयार्थत्वादासेस्थप्रत्ययः । बहुलवचनात् सकारश्च मध्यम उपजायते । [3]शोभनमासस्थं यस्मिन्निति[3] बहुव्रीहिः । स एव स्वरः । ^V^देवेभ्यः इति षष्ठ्यर्थे चतुर्थी ( पा २·३·६२ वा१ ) । देवानां स्वासस्थम् । यद्वा–स्वासस्थं त्वां देवार्थं स्तृणामि । तादर्थ्ये चतुर्थी ( पा २·१·३६ ) ॥

मध्यमं परिधिं परिदधाति–'गन्धर्वः' इति ॥ विश्वानि वसून्यस्मिन्निति विश्वावसुः[4] । १५

तस्यापरिमितसंपत्तये भवति ॥ उत्पवनहेत्वोः पवित्रयोः प्रस्तरे स्थापनं विधत्ते— " तस्मिन् पवित्रे अपिसृजति । यजमानो वै प्रस्तरः । प्राणापानौ पवित्रे । यजमान एव प्राणापानौ दधाति " ( तैब्रा ३·३·६ ) इति । प्रस्तरस्य यजमानवत् यज्ञसिद्धिहेतुतया तद्भेदोपचारः ॥

ऊर्णेति ॥ कल्पः + "बर्हिर्वेद्याः स्तृणाति देवबर्हिरूर्णाम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्य इति " ( बौश्रौ १·१३ ) इति । अत्र शाखान्तरानुसारेण ' देवबर्हिः ' इत्येवत् पदं पूरितम् ॥ हे देवबर्हिः, त्वं कम्बलवत् [18]मृदुस्पर्शं, देवानां सुखेनासितुं [19]स्थानभूतं त्वां वेद्यां ^V^स्तृणामि ॥ व्याचष्टे—" ऊर्णाम्रदसं त्वा स्तृणामीत्याह । यथायजुरेवैतत् । स्वासस्थं देवेभ्य इत्याह । देवेभ्य एवैनत् स्वासस्थं करोति " ( तैब्रा ३·३·६ ) इति ॥ विधत्ते—"बर्हिः स्तृणाति प्रजा वै बर्हिः । पृथिवी वेदिः । प्रजा एव पृथिव्यां प्रतिष्ठापयति " ( तैब्रा ३·३·६ ) इति । तत्रैव विशेषं विधत्ते— " अनतिदृश्नꣳ स्तृणाति । प्रजयैवैनं पशुभिरनतिदृश्नं करोति " ( तैब्रा ३·३·६ ) इति । भूमिस्वरूपमत्यन्तं यथा न दृश्यते तथा बहुलं स्तृणीयात् । २५
बहुप्रजापश्वावृतो यजमानोऽपि वैदेशिकैरदृश्यमानः प्रभुर्भवति ॥

गन्धर्व इति ।। कल्पः— " अथ प्रस्तरपाणिः *प्रागभिसृप्य परिधीन् परिदधाति गन्धर्वोऽसि

* विभिन्नाकारं सूत्रमिदमुणादौ । † इदमाकारं सूत्रादि नोपलभ्यते । उणादौ "शीङ्शपि" ( उ ३९३ ) इत्यादीनि चत्वारि सूत्राणि अथप्रत्ययविधायकानि दृश्यन्ते । ३–३. व– शोभमानमासस्थमस्मिन्निति । ४. मै– ' विश्वावसुः ' नास्ति । ३०

\+ श्रौतसूत्रे तु ' बर्हिर्मुष्टिम् ' इति । १८. क–मृदुरोमरूपः । १९. आ. पा. ह्रा–स्थानरूपम् ।
* श्रौतसूत्रे तु ' प्राग्भिसृप्य ' इति ।

**इन्द्र॑स्य बा॒हुर॑सि॒ ( १ ) दक्षि॑णो॒ यज॑मानस्य प॒रि॒धिरि॒ड ई॑डि॒तो मि॒त्रावरु॑णौ त्वोत्त॒र॒तः परि॑ धत्तां ध्रु॒वेण॒ धर्म॑णा॒ यज॑मानस्य प॒रि॒धिरि॒ड ई॑डि॒तः**

इन्द्र॑स्य। बा॒हु.। अ॒सि॒ ( १ )। दक्षि॑ण.। यज॑मानस्य। प॒रि॒धिरिति॑ परि—धिः। इ॒ड॰। ई॑डि॒तः। मि॒त्राव॑रु॒णा॒विति॑ मि॒त्रा—वरु॑णौ। त्वा॒। उ॒त्त॒र॒त इत्यु॑त्—त॒र॒त॰। परीति॑। ध॒त्ता॒म्। ध्रु॒वेण॑। धर्म॑णा। यज॑मानस्य। प॒रि॒धिरिति॑ परि—धिः। इ॒ड॰। ई॒डि॒तः।

बहुव्रीहौ " विश्वस्य वसुराटो॰ " ( पा ६·३·१२८ ) इति पूर्वपदस्य दीर्घत्वम्। " बहु-व्रीहौ विश्वं संज्ञायाम् " ( पा ६·२·१०६ ) इति पूर्वपदान्तोदात्तत्वम्। [v]विश्वावसु नाम [v]गन्धर्वः। स शत्रुनिग्रहसमर्थ॰, स एव त्वम् [v]असि इति परिधे॰ स्तुतिः। यस्मादेवं तस्मात् [v]विश्वस्मात् [v]ईरतः हिंसकात् राक्षसादेर्जनात्। ईष गतिहिंसादानेषु, अनुदात्तेत्, भौवा-दिकः। व्यत्ययेन शतृप्रत्यय। " "अदुपदेशात्" " ( पा ६·१·१८६ ) इति लसार्व-धातुकानुदात्तत्वेन धातोरेव स्वर॰। [v]यजमानस्य [v]परिधिः परित॰ सर्वतो धाता रक्षकस्त्वमसि। " उपसर्गे घोः कि॰ " ( पा ३·३·९२ ) इति किप्रत्यये कृदुत्तरपदप्रकृतिस्वरत्वम्। किंच— इडन्न पशवश्च, तद्वान् [v]इडः, तत्साधनत्वात्। अर्शआदित्वादच् ( पा ५·२·१२७ )। अत एव सर्वैः [v]ईडितः स्तुतः॥

दक्षिणं परिदधाति—' इन्द्रस्य ' इति॥ [v]इन्द्रस्य य [v]दक्षिण॰ [v]बाहु महावीर्यः, स एव त्वम् [v]असि इति दक्षिणस्य परिधे स्तुतिः। " स्वाङ्गाख्यायामादिर्वा " ( फि ९ ) इति दक्षिणशब्द आद्युदात्त.। गतमन्यत् ( तैस १·१·११ )॥

उत्तर परिदधाति— ' मित्रावरुणौ ' इति॥ [v]ध्रुवेण अचलेन नित्येन [v]धर्मणा कर्मणा [v]मित्रावरुणौ एव च त्वामुत्तरत [v]परि [v]धत्ताम्। समानमन्यत् (तैस १·१ ११)॥

विश्वावसुर्विश्वस्मादीषतो यजमानस्य परिधिरिड ईडित इति मध्यमम्। इन्द्रस्य बाहुरसि दक्षिणो यजमानस्य परिधिरिड ईडित इति दक्षिणम्। मित्रावरुणौ त्वोत्तरत परिधत्ता ध्रुवेण धर्मणा यजमानस्य परिधिरिड ईडित इत्युत्तरम् " (-बौश्रौ १ १३ ) इति॥ हे मध्यमपरिधे, त्वं विश्वावसुनामा[20] [v]गन्धर्वः [v]असि, यद्वद् रक्षकत्वात्। तेन सर्वस्मात् हिंसकात् [v]यजमानस्य परिपोषकोऽस्वरूपः स्तुतो भव॥ एवमुत्तरयो-र्योज्यम्॥ [v]ध्रुवेण [v]धर्मणा अनुष्ठीयमाननित्यकर्मनिमित्तम्॥ विधिपूर्वकं व्याचष्टे—" धारयन् प्रस्तरं परिधीन् परिदधाति। यजमानो वै प्रस्तर। यजमान एव तत्स्वय परिधीन् परिदधाति। गन्धर्वोऽसि विश्वावसुरित्याह। विश्वमेवायुर्यजमाने दधाति। इन्द्रस्य बाहुरसि दक्षिण इत्याह। इन्द्रियमेव यजमाने दधाति। मित्रावरुणौ त्वोत्तरत परिधत्तामित्याह। प्राणापानौ मित्रावरुणौ। प्राणापानावेवास्मिन् दधाति " ( तैब्रा ३·३·६ ) इति॥

२०, सं—॰नामक॰

सूर्यस्त्वा पुरस्तात् पातु कस्याश्चिदभिशस्त्याः
वीतिहोत्रं त्वा कवे द्युमन्तं समिधीमह्यग्ने बृहन्तमध्वरे

सूर्यः। त्वा। पुरस्तात्। पातु। कस्याः। चित्। अभिशस्त्या इत्यभि-शस्त्याः। वीतिहोत्रमिति वीति-होत्रम्। त्वा। कवे। द्युमन्तमिति द्यु-मन्तम्। सम्। इति। इधीमहि। अग्ने। बृहन्तम्। अध्वरे। ५

" देवताद्वन्द्वे च " ( पा ६·२·१४१ ) इति मित्रावरुणशब्दे पूर्वोत्तरपदयोः युगपत्प्रकृतिस्वरत्वम् ॥

सूर्येण पुरस्तात् परिधानकार्यं करोति—'सूर्यः' इति ॥' [v]सूर्यः एव त्वां [v]पुरस्तात् [v]पातु रक्षतु। कस्मात्? [v]कस्याश्चित् यतः कुतश्चित् [v]अभिशस्त्याः अपरिमितायाः अभिशापात् रक्षःप्रभृतिप्रयुक्तात्। शसु हिंसायाम्। " तितुत्रतथसि° " १० ( पा ७·२·९ ) इति इट्प्रतिषेधः, " तादौ च निति कृत्यतौ " ( पा ६·२·५० ) इति गतेः प्रकृतिस्वरत्वम्। " निपाता आद्युदात्ताः " ( फि ८० ), " उपसर्गाश्चाभिवर्जम् " ( फि ८१ ) इत्यभिशब्दोऽन्तोदात्तः। एवं कस्याश्चिदित्यत्र " सावेकाचः°" ( पा ६·१·१६८ ) इति प्राप्तं विभक्त्युदात्तत्वं " न गोश्वन्°" ( पा ६·१·१८२ ) इति प्रतिषिध्यते।

ऊर्ध्वे[६] समिधावादधाति[६]—'वीतिहोत्रम्' इति त्रिपदया गायत्र्या ॥ [v]वीतिहोत्रम् १५ इष्टस्तोत्रम्। वीतेः कान्तिकर्मणः " मन्त्रे वृषे° " ( पा ३·३·९६ ) इत्यादिना कर्मणि क्तिन्प्रत्यय उदात्तः। वेतव्या कमितव्या होत्रा वाक् स्तोत्ररूपा होतृव्यापारो वा यस्य तं [v]त्वा हे [v]कवे मेधाविन् [v]अग्ने, [v]द्युमन्तं दीप्तिमन्तम्। " ह्रस्वनुड्भ्यां मतुप् " ( पा ६·१·१७६ ) इति मतुप उदात्तत्वम्। [v]बृहन्तं महान्तं [v]समिधीमहि प्रागेव दीप्तिमन्तं सन्तम् अनया समिधा

सूर्य इति ॥ बौधायनः—" अथ सूर्येण पुरस्तात् परिदधाति सूर्यस्त्वा पुरस्तात् पातु २० कस्याश्चिदभिशस्त्या इति " ( बौश्रौ १·१३ ) इति। आपस्तम्बः—" आहवनीयमभिमन्त्र्य " ( आपश्रौ २·९·७ ) इति ॥ [v]कस्याश्चित् [v]अभिशस्त्याः सर्वस्या अपि हिंसायाः ॥ अनेनैवाभिप्रायेण व्याचष्टे—" सूर्यस्त्वा पुरस्तात् पात्वित्याह। रक्षसामपहत्यै। कस्याश्चिदभिशस्त्या इत्याह। अपरिमितादेवैनं पाति " ( तैब्रा ३·३·६ ) इति ॥

वीतिहोत्रमिति ॥ कल्पः—" ऊर्ध्वे *आघारसमिधावादधाति वीतिहोत्रं त्वा कवे द्युमन्तं २५ समिधीमह्यग्ने बृहन्तमध्वर इति " ( बौश्रौ १·१३ ) इति ॥ हे विद्वन् [v]अग्ने, त्वामध्वरं निमित्तीकृत्य [v]समिधीमहि। कीदृशं त्वाम्? वीतये व्याप्तये समृद्धये होत्रं होमो यस्य तं [v]वीतिहोत्रम् ॥ एतमेवार्थं दर्शयति—" वीतिहोत्रं त्वा कव इत्याह। अग्निमेव होत्रेण समर्धयति। द्युमन्तं समिधीमहीत्याह समिध्यै। अग्ने बृहन्तमध्वर इत्याह वृद्ध्यै " ( तैब्रा ३·३·६ ) इति ॥

५. मै–प्रकृतिस्वरत्वम्। ६–६. व– ऊर्ध्वां समिधमादधाति। ३०

* श्रौतसूत्रे 'आघार-' इति पदं नास्ति।

विशो यन्त्रे स्थो वसूनाᳲ रुद्राणामादित्यानाᳲ सदसि सीद
॥ जुहूरुपभृद् ॥ ध्रुवाऽसि घृताची

विश । यन्त्रे इति । स्थ । वसूनाम् । रुद्राणाम् । आदित्यानाम् ।
सदसि । सीद । जुहू । उपभृदित्युप-भृत् । ध्रुवा । असि । घृताची ।

५ सम्यक् दीपयाम । इन्धेर्लिङि "बहुलं छन्दसि" ( पा २·४·७३ ) इति विकरणस्य लुक् । यद्वा—"छन्दस्युभयथा" ( पा ३·४·११७ ) इत्यार्धधातुकत्वात् विकरणाप्रसङ्गः । सार्वधातुकत्वेन ङित्त्वादनुनासिकलोप । [v]अध्वरे अध्वरार्थम् । निमित्तात् सप्तमी । ( पा २·३·३६ वा ६ ) ध्वृ हूर्छने । हूर्छन कौटिल्यम् । ध्वरन्तीति ध्वराः रक्षःप्रभृतय. । पचाद्यच् । [7]ते यत्र न भवन्ति[7] स अध्वर. । बहुव्रीहौ "नञ्सुभ्याम्" ( ६·२·१७२ ) इत्युत्तरपदान्तोदात्तत्वम् ।
१० तादृशाय यज्ञाय त्वा समिधीमहि ।

विधृती सादयति—' विश· ' इति ॥ [v]विशः प्रजायाः [v]यन्त्रे यमने धारिके [v]स्थः । "गुधृवीपचि°" ( उ ६१६ ) इत्यादिना यमेस्त्रप्रत्यय । "सावेकाच °" ( पा ६·१·१६८ ) इति विशः परस्या षष्ठ्या उदात्तत्वम् ॥

तयोः प्रस्तर सादयति—' वसूनाम् ' इति ॥ वस्वादय· प्रसिद्धा देवताः यज्ञभागिन्यः ।
१५ तासां सदस्त्वेन विधृत्योः स्तुति ॥

तत्र जुहूं सादयति—' जुहू ' इति ॥ ' असि घृताची ' इत्यादिकं वक्ष्यमाणं जुह्वादिभि प्रत्येकमभिसंबध्यते । हूयतेऽनया इति जुहू । "[8]जुहोतेर्दीर्घश्च" ( द्र पामा ३·२·१७८ वा ३ ) इति क्विप्प्रत्ययः, " द्वे च " इति तत्रानुवर्तते[8] । [v]जुहू त्वम् [v]असि । त्वया खलु हूयते । पुनश्च विशेष्यते—[v]घृताची त्वम् । घृतमञ्चति गच्छति धारकत्वेनेति घृताची ।

२० विश इति ।। कल्प —" अन्तर्वेद्युदीर्चीनाग्रे विधृती तिरश्ची आसादयति विशो यन्त्रे स्थ इति " ( बौश्रौ १ १३ ) इति ॥ हे दर्भरूपे विधृत्यौ, युवां प्रजाया नियामिके भवथ ॥ एतदेव दर्शयति—" विशो यन्त्रे स्थ इत्याह । विशा यत्यै " ( तैब्रा ३ ३ ६ ) इति ॥ विधत्ते—" उदीचीनाग्रे निदधाति प्रतिष्ठित्यै " ( तैब्रा ३ ३ ६ ) इति ॥

वसूनामिति ।। कल्प —" वसूनाᳲ रुद्राणामादित्यानाᳲ सदसि सीदेति तयो. प्रस्तरमत्यादधाति[21] " ( आपश्रौ २·९·१२ ) इति ॥ विधृतिद्वयमेव सद इत्यभिप्रेत्याऽऽह—" वसूनाᳲ रुद्राणामादित्यानाᳲ सदसि सीदेत्याह । देवतानामेव सदने प्रस्तरᳲ सादयति " ( तैब्रा ३·३ ६ ) इति ॥
२५
जुहूरिति ॥ कल्प —" प्रस्तरे जुहूᳲ *सादयति जुहूरसि घृताची नाम्ना प्रियेण नाम्ना प्रिये

७–७ मे– ते यत्र न सन्ति, व– यत्र नासन् । ८–८ मे–' द्युतिगमिजुहोतीनां द्वे च ' इति क्विप् । ' जुहोतेर्दीर्घश्च ' इति दीर्घोऽनुवर्तते ।

३० २१. आ.पा हा–°मभ्यादधाति । * श्रौतसूत्रे तु ' सादयति ' नास्ति ।

नाम्ना॑ प्रि॒येण॒ नाम्ना॑ प्रि॒ये सद॑सि ( २ ) सीदै॒ता अ॑सदन्त्सुकृ॒तस्य॑ लो॒के
ता वि॑ष्णो पाहि पा॒हि य॒ज्ञं पा॒हि य॒ज्ञप॑तिं पा॒हि मां य॑ज्ञ॒नियम्॑ ॥ ११ ॥

नाम्ना॑ । प्रि॒येण॑ । नाम्ना॑ । प्रि॒ये । सद॑सि (२) । सी॒द॒ । ए॒ताः । अ॒स॒द॒न् । सु॒कृ॒तस्येति॑ सु-कृ॒तस्य॑ । लो॒के । ताः । वि॒ष्णो॒ इति॑ । पा॒हि॒ । पा॒हि॒ । य॒ज्ञम् । पा॒हि॒ । य॒ज्ञप॑ति॒मिति॑ य॒ज्ञ-प॒ति॒म् । पा॒हि॒ । माम् । य॒ज्ञ॒नि॒यमिति॑ य॒ज्ञ-नि॒यम् ॥ ॥ ११ ॥ ५

[ वा॒दु॒र॑सि प्रि॒ये सद॑सि पञ्चदश च ]

[ मैसं १·१·११–१२; कासं १·११; कपिसं १·११; वासं २·१–६ ]

न्कृत्विगादिना किन् ( पा ३·२·५९ ) । अनुनासिकलोपे, " अचः " ( पा ६·४·१३८ ) इत्यकारलोपे, " चौ " ( पा ६·३·१३८ ) इति दीर्घः । सा त्वं ᵛप्रियेण ᵛनाम्ना घृतसंबन्धेन सर्वस्य [9]प्रीतिहेतुना घृताचीतिनाम्ना उपलक्षितासि । " तासामेतदेव प्रियं नाम यद्घृताची " ( तैब्रा ३·३·६ ) इत्यादि ब्राह्मणम् । [10]ईदृशेन नाम्ना ᵛप्रिये ᵛसदसि प्रस्तराख्येऽस्मिन् सदने ᵛसीद । " यजमानो वै प्रस्तरः " ( तैब्रा ३·३·६ ) इति यजमानत्वसंस्तवान्नाममात्रेण प्रस्तरस्य प्रियत्वम् ॥ १०

उपभृतं सादयति–' उपभृत् ' इति ॥ उपेत्य जुहूं बिभर्तीति ᵛउपभृत् । " अन्येभ्योऽपि दृश्यते " ( पा ३·२·१७८ ) इति क्विप् । ईदृशी त्वम् असि । समानमन्यत् ॥ १५

ध्रुवां सादयति–' ध्रुवा इति ' ॥ ᵛध्रुवा [11]निश्चला । यत्रैव साद्यते तत्रैव धार्यते, न चाल्यते प्राक् समिष्टयजुष इति ध्रुवा । तादृशी त्वम् ᵛअसि । शिष्टं स्पष्टम् ॥

स्रुचोऽभिमृशति[12] ' एताः ' इति यजुरन्तया त्रिष्टुभैकपदया ॥ ᵛसुकृतस्य शोभनस्य कर्मणः यागलक्षणस्य ᵛलोके स्थाने । " सूपमानात् क्तः " ( पा ६·२·१४५ ) इति क्तान्तमन्तोदात्तम् । ᵛएताः स्रुचः ᵛअसदन् [13]आसीदन्ति मयाऽन्वासादितत्वात्[13] । छान्दसो २०

सदसि सीदेति । उत्तरामुपभृतमुपभृदसि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सीदेति । उत्तरां ध्रुवां ध्रुवाऽसि घृताची नाम्ना प्रियेण नाम्ना प्रिये सदसि सीदेति " ( बौश्रौ १·१३ ) इति ॥ प्रथमद्वितीययोः ' असि घृताची ' इत्यादिकमनुपत्यते ॥ व्याचष्टे–" जुहूरसि घृताची नाम्नेत्याह । असौ वै जुहूः । अन्तरिक्षमुपभृत् । पृथिवी ध्रुवा । तासामेतदेव प्रियं नाम । यद्घृताचीति । यद्घृताचीत्याह । प्रियेणैवैना नाम्ना सादयति " ( तैब्रा ३·३·६ ) इति ॥ २५

एता इति ॥ कल्पः–" अथ स्रुचः सचा अभिमृशत्येता असदन्त्सुकृतस्य लोके ता विष्णो

९. ग– प्रियहेतुना । १०. तं. ति. य– ईदृशी सती । ११. क– अचला । १२. मै– स्रुचोऽभिमन्त्रयते । १३–१३. मै–सदसि मया सादितत्वात् ।

लुङ् । [14]"लृदित्यादङ् (पा ३·१·५५)। [v]ताः स्रुचः हे [v]विष्णो सर्वस्य पालक, [v]पाहि, [v]यज्ञ [v]पाहि, [v]यज्ञपतिं यजमानं च [v]पाहि। " पत्यावैश्वर्ये " ( पा ६·२·१८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । [v]यज्ञनियं यज्ञस्य नेतारं [v]मा च [v]पाहि । यज्ञं नयतीति " सत्सूद्विष° " ( पा ३·२·६१ ) इत्यादिना क्विप् । " तन्वादीनां छन्दसि बहुलम् " ( पा ६·४·७७ वा १ )
५ इति इयङादेशेन " एरनेकाच° " ( पा ६·४·८२ ) इति यणादेशो बाध्यते । कृदुत्तरपदप्रकृतिस्वरत्वम् ( ६·२·१३९ ) । [15]"समानवाक्ये पदात् परत्वाभावात्"[15] प्रथमवर्जं तिङन्तानां निघाताभावः ॥

॥ इति प्रथमे एकादशोऽनुवाकः ॥

पाहि पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञनियमिति " ( बौश्रौ १·१३ ) इति ॥ लोकेऽवश्यंभावि फलं,
१० तद्रूपत्वेन भाविते प्रस्तरे स्रुचोऽवस्थिता ॥ एतदेव दर्शयति—" एता असदन्त्सुकृतस्य लोक इत्याह । सत्यं वै सुकृतस्य लोक । सत्य एवैना सुकृतस्य लोके सादयति । ता विष्णो पाहीत्याह । यज्ञो वै विष्णु । यज्ञस्य धृत्यै । पाहि यज्ञं पाहि यज्ञपतिं पाहि मा यज्ञनियमित्याह । यज्ञाय यजमानायात्मने । तेभ्य एवाऽऽशिषमाशास्तेऽनार्त्यै " ( तैब्रा ३·३·६ ) इति । ऋत्विग्यजुरयकर्तृकं स्रुचां गोपणम् ॥

अथ विनियोगसङ्ग्रहः—

१५ " कृष्ण इध्म वेदिर्वेदि बर्हिर्बर्हि. समुक्षति ।
त्रिधे त्रिभिर्बर्हिषोऽग्रमध्यमूलानि चोक्षति ॥ १ ॥

स्वधा दोप क्षिपेद्भूमौ विष्णो प्रस्तरमुच्चयेत् ।
ऊर्णां बर्हिस्तृतिर्गन्ध त्रिभिस्तीन् परिधीन् क्षिपेत् ॥ २ ॥
सूर्योऽभिमन्त्र्य पूर्वाग्नि वीत्याधारसमिदिस्यति. ।
२० विदो आधाय विधृती वसु प्रस्तरसादनम् ॥ ३ ॥
शुद्धपशुभिरासाद्य स्रुच एतास्तु मन्त्रयेत् ।
एकादशानुवाकेऽस्मिन्नीरिता मन्त्रविंशतिः ॥ ४ ॥ " इति ॥

अथ मीमांसा ॥ प्रथमाध्यायस्य चतुर्थपादे चिन्तितम्—

" यजमानः प्रस्तरोऽत्र गुणो वा नाम वा स्तुतिः ।
२५ सामानाधिकरण्ये न स्यादेकस्यान्यनामता ॥
गुणो वा यजमानोऽस्तु कार्ये प्रस्तरलक्षिते ।
अंशांशि बाध्यभावेन पूर्ववच्चात्र सत्स्तुतिः ॥

१४. मै- पुषादिलादङ् । १५-१५. मै- समावपादत्वाभावात् ।

अर्थभेदादनामत्वं गुणश्चेत् प्रह्रियेत सः ।
यागसाधकताद्वारा[22] विधेयप्रस्तरस्तुतिः ” ( जैन्या १·४·२६–२८ ) इति ॥

इदमाम्नायते— “ यजमानः प्रस्तरः ” ( द्र. तैब्रा ३·३·६ ) इति । तत्र यजमानस्य प्रस्तरशब्दो नामधेयं, प्रस्तरस्य वा यजमानशब्दो नामधेयम् । कुतः ? ‘ उद्भिदा यजेत ’ इत्यादाविव सामानाधिकरण्यादित्येकः पक्षः । गुणविधिरेष इत्यपरः । तथाऽपि यजमानकार्ये जपादौ प्रस्तरस्याचेतनस्य सामर्थ्याभावात् प्रस्तरकार्ये स्रुग्धारणादौ यजमानस्य शक्तत्वात् यजमानरूपो गुणो विधीयते । एवं सति पश्चात् श्रुतस्य प्रस्तरशब्दस्य कार्यलक्षकत्वेऽपि प्रथमश्रुतो यजमानशब्दो मुख्यवृत्तिर्भविष्यति । न चात्र पूर्वन्यायेन स्तुतिः संभवति । अष्टाकपालद्वादशकपालयोरिव प्रस्तरयजमानयोरंशांशित्वाभावात् । “ वायुर्वै क्षेपिष्ठा देवता ” ( तैसं २·१·१ ), “ ऊर्जोऽवरुद्ध्यै ” ( मैसं १·११·८ ) इत्यादिवत् स्तुतिरिति चेत् । न । क्षिप्रत्वादिधर्मवत् कस्यचिदुत्कर्षस्याप्रतीतेः । तस्मान्नामगुणयोरन्यतरत्वमिति प्राप्ते ब्रूमः— गोमहिषयोरिवार्थभेदस्यात्यन्तप्रसिद्धत्वात् नामत्वं न युक्तम् । गुणपक्षे त्वसौ प्रहरणस्य प्रस्तरविषयत्वात् यजमाने प्रहृते सति कर्मलोपः स्यात् । तस्मात् विधेयः प्रस्तरो यजमानशब्देन स्तूयते । यथा ‘ सिंहो देवदत्तः ’ इत्यत्र सिंहगुणेन शौर्यादिनोपेतो देवदत्तः सिंहशब्देन स्तूयते तथा यजमानगुणेन यागसाधनत्वेन युक्तः प्रस्तरो यजमानशब्देन स्तूयते । एवं “ यजमानो वा एककपालः ” ( मैसं १·१०·७ ) इत्यादिषु द्रष्टव्यम् ॥

अथ व्याकरणम् ॥ “ *कृष्णस्यामृगाख्या चेत् ” ( फि ११ ) इति कृष्णशब्दस्याऽऽद्युदात्तः । आखरेष्ठ इत्यत्र प्रातिपदिकस्वरेण वा समासस्वरेण वा कृत्स्वरेण वा कृत्प्रत्ययान्तत्वेन थाथादिस्वरेण (पा६·२·१४४) वाऽन्तोदात्तत्वम् । वेविशब्दस्येन्प्रत्ययान्तत्वेन नित्स्वरः ( पा ६·१·१९७ ) । विष्णुशब्दो नुप्रत्ययान्तः । स्तुपशब्दो वृषादिः ( पा६·१·२०३ ) । ऊर्णाशब्दस्य वृषादित्वादाद्युदात्तत्वे ( पा ६·१·२०३ ) सत्युपमानपूर्वपदप्रकृतिस्वरत्वम् ( पा. ६·२·२ ) । स्वासस्थमित्यत्र “ नञ्सुभ्याम् ” ( पा. ६·२·१७२ ) इत्यन्तोदात्तः । विश्वावसुरित्यत्र “ बहुव्रीहौ विश्वं संज्ञायाम् ” ( पा ६·२·१०६ ) इति पूर्वपदान्तोदात्तत्वम् । ईशतो यजमानस्येत्युभयत्र लसार्वधातुकस्वरः ( पा ६·१·१८६ ) । मित्रावरुणावित्यत्र देवताद्वन्द्वस्वरः ( पा ६·२·१४१ ) । उत्तरत इत्यत्रातसुच्प्रत्ययान्तत्वेन चित्स्वरः ( ६·१·१६३ ) । धर्मणेत्यत्र मनिन्प्रत्ययान्तत्वात् नित्स्वरः ( पा ६·१·१९७ ) । [23]सूर्यशब्दो निपातनादाद्युदात्तः (पा ३·१·११४) । कस्या इत्यत्र “ सावेकाचः° ” ( पा. ६·१·१६८ ) इति विभक्तेरुदात्तत्वे प्राप्ते “ न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः ” ( पा ६·१·१८२ ) इति प्रथमैकवचने साववर्णान्तत्वेन निषिध्यते । अभिशस्त्या इत्यत्र ‘ तादौ च° ” ( पा ६·२·५० ) इति गतेः प्रकृतिस्वरः । वीतिहोत्रमित्यत्र “ मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ” ( पा ३·३·९६ ) इति वीधातोरुदात्तत्वे क्तिन्प्रत्यये सति बहुव्रीहिस्वरः । घृताचीत्यत्र कृत्स्वरः ( पा ६·२·१३९ ) ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके एकादशोऽनुवाकः ॥ ११ ॥

२२. तं-°साधनताद्वारा । * शुद्धीकृतोऽयं पाठः । मुद्रितपुस्तके लिखितपुस्तकेषु च ‘ कृष्णस्य मृगाख्या चेत् ’ इति पाठः वर्तते । २३. आ.पा.दा-सूर्यशब्दे ।

**भुवनमसि वि प्रथस्वाग्ने यष्टरिदं नमः ।**

**भुवनम् । असि । वीति । प्रथस्व । अग्ने । यष्टः । इदम् । नमः ।**

अग्रेण जुहूपभृतौ प्राञ्चमञ्जलिं करोति—'भुवनम्' इति यजुरादिकयैकपदया गायत्र्या ॥ हे [V]अग्ने [V]यष्टः यागस्य निर्वर्तक । "अग्निर्वै देवानां यष्टा" (तैब्रा ३.३.७) इति ब्राह्मणम् । [1]अत्र पादादित्वात् 'अग्ने' इति न निहन्यते । "आमन्त्रितं पूर्वमविद्यमानवत्" (पा ८.१.७२) इति तस्याविद्यमानत्वात् 'यष्टः' इत्यपि न निहन्यते । द्वयोरपि पाष्ठिकमाद्युदात्तत्वम् (पा ६.१.१९८) । त्वं [V]भुवनम् [V]असि, त्वदायत्तत्वात् समस्तभूतजातस्य । तस्मात् [2]भुवनमिव [V]वि [V]प्रथस्व विस्तीर्णो भव । तुभ्यम् [V]इदं [V]नमः । अयमञ्जलिस्त्वां प्रीणयितुं क्रियते ॥

एकादशेऽनुवाक इध्माबर्हिःस्रुचां प्रोक्षणादिमन्त्रमुक्तम् । तत्राज्यहविषा पूर्णानां स्रुचां यदासादनमुक्तं तेन पुरोडाशसांनाय्ययोरपि वेद्यामासादनमुपलक्ष्यते । ते मन्त्रास्त्वच्छिद्रकाण्डादौ (तैब्रा ३.७.५) द्रष्टव्याः । सर्वेषु हविःष्वासादितेष्वग्न्यन्वाहिताना मिध्मकाष्ठानामुपरि [1-1]"होतुमाधारो द्वादशे विधीयते" ॥

भुवनमिति ॥ कल्पः— "अथाग्रेण जुहूपभृतौ प्राञ्चमञ्जलिं करोति भुवनमसि वि प्रथस्वाग्ने यष्टरिदं नम इति" (बौश्रौ १.१५) इति ॥ जुहूपभृतोर्या पूर्वस्मिन् देश आहवनीयं [2]प्रत्ययमञ्जलिः । हे यागनिष्पादकाग्ने, त्वं [V]भुवनम् [V]असि । भवन्त्यस्माद्भूतानीति भुवनम् । अतो भूतकारणत्वात् विस्तृतो भव । तुभ्यमिदमञ्जलिरूपं [V]नमः अस्तु ॥ अस्य मन्त्रस्य द्वितीयाघारशेषत्वादमन्त्रकस्य प्रथमाघारस्य पूर्वमनुष्ठेयत्वात् तं विधित्सुः ततः पूर्वं होतारं प्रति प्रैषमन्त्रमुत्पादयति— "अग्निना वै होत्रा । देवा असुरानभ्यभवन् । अग्नये समिध्यमानायानुब्रूहीत्याह भ्रातृव्याभिभूत्यै" (तैब्रा ३.३.७) इति । हे होतः, इध्मकाष्ठैः समिध्यमानस्याग्नेरनुरूपान् मन्त्रान् ब्रूहि । इतिमं प्रैषमध्वर्युर्ब्रूयात् । देवाः पूर्वं स्वकीयेषु यागेषु वह्निं होतारं कृत्वा तन्मुखेनासुरानभ्यभवन् । अतोऽद्यापि वैरिनिरस्काराय समन्त्रकैः काष्ठैरग्निः प्रज्वलितः कार्यः ॥ संख्याविशिष्टमिध्मं विधत्ते— "एकविंशतिमिध्मदारूणि भवन्ति । एकविंशो वै पुरुषः । पुरुषस्याप्त्यै" (तैब्रा ३.३.७) इति । "दश हस्त्या अङ्गुलयो दश पद्या आत्मैकविंशः" (तैसं ५.१.१) [3]इत्यन्यत्राऽऽम्नातम् ॥ होता "प्र वो वाजा अभिद्यवः" (ऋसं ३.२७.१) इत्यादिष्वृक्षु सामिधेनीसंज्ञकास्वनूच्यमानासु काष्ठानामग्नौ [4]प्रक्षेपं विधत्ते— "पञ्चदशेध्मदारूण्यभ्यादधाति । पञ्चदश वा अर्धमासस्य रात्रयः । अर्धमासशः संवत्सर आप्यते" (तैब्रा ३.३.७) इति । [5]"त्रियन्तैस्त्वैरर्धमासैः चतुर्विंशतिसंख्याकैरित्यर्थः ॥ अवशिष्टानां षण्णां काष्ठानां विनियोगमाह— "त्रीन् परिधीन् परिदधाति । ऊर्ध्वे समिधावादधाति । अनूयाजेभ्यः समिधमतिशिनष्टि । षट् संपद्यन्ते । षड्वा ऋतवः । ऋतूनेव प्रीणाति" (तैब्रा ३.३.७) इति । 'गन्धर्वोऽसि' (तैसं १.१.११) इत्यादयः परिधिमन्त्राः । 'वीतिहोत्रम्' (तैसं १.१.११) इत्यादिरूर्ध्वसमिन्मन्त्रः । ते च पूर्वानुवाकेऽभिहिताः ॥ [6]अग्निप्रज्वलनाय वायूत्पादनं विधत्ते— "वेदेनोपवाजयति । प्राजापत्यो वै वेदः । प्राजापत्यः प्राणः । यजमान

1. मै– 'अत्र' नास्ति । 2. मै– 'भुवनमिव' नास्ति ।

1–1. ब–होतुमाघारो द्वादशे विधीयेते । 2 इ उ.पा.मा हा–प्रत्यञ्जलिं । 3. तं–इति ह्यन्यत्रा° । 4. इ.उ.मा–क्षेपम् । 5 ब–वैस्तैरर्ध° । 6. आ इ.उ.पा मा हा–अग्निप्रज्वलनाय ।

जुह्वेह्यग्निस्त्वा ह्वयति देवयज्याया

जुहु । एति । इहि । अग्निः । त्वा । ह्वयति । देवयज्याया इति देव–यज्यायै ।

दक्षिणेन जुहूमादत्ते–‘ जुहु ’ इति ॥ हे [v]जुहु [v]एहि अस्मद्धस्तमागच्छ । यतः [v]अग्निः त्वां [v]देवयज्यायै देवयागार्थमाह्वयति । “छन्दसि निष्टर्क्य°” ( ३·१·१२३ ) इत्यत्र देवयज्या-

आहवनीयः । यजमान एव प्राणं दधाति ” ( तैब्रा ३·३·७ ) इति । वेदस्य प्रजापतिश्मश्रुत्वात् प्राजापत्यत्वम् । प्राणवायोः प्रजापतिसृष्टतया प्राजापत्यत्वम् । आहवनीयस्य प्रस्तरन्यायेन यजमानत्वम् ॥ आवृत्तिं विधत्ते—“ त्रिरुपवाजयति । त्रयो वै प्राणाः । प्राणानेवास्मिन् दधाति ” ( तैब्रा ३·३·७ ) इति । प्राणोऽपानो व्यानश्चेति प्राणानां त्रित्वम् । अनेकगुणविशिष्टं प्रथमाघारं विधत्ते—“ वेदेनोपयत्य स्रुवेण प्राजापत्यमाघारमाघारयति । यज्ञो वै प्रजापतिः । यज्ञमेव प्रजापतिं मुखत आरभते । अथो प्रजापतिः सर्वा देवताः । सर्वा एव देवताः प्रीणाति ” ( तैब्रा ३·३·७ ) इति । उपयत्य वेदस्योपरि स्रुवमवस्थाप्येत्यर्थः । आहुतीनामादित्वात् अयमाघारो यज्ञस्य मुखम् । तस्मिन् मुखे यज्ञस्रष्टृत्वेन यज्ञरूपं प्रजापतिमेवाऽऽरब्धवान् भवति ॥ प्रजापतेः सर्वदेवतारूपत्वोपपादनं वाजसनेयिन एवमामनन्ति—“ तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं [७]देवमेतस्यैव सा विसृष्टिः । एष उ ह्येव सर्वे देवाः ” ( बृउ १·४·६ ) इति ॥ आग्नीध्रं प्रति प्रैषमन्त्रमुत्पादयति—“ अग्निमग्नीत्त्रिस्त्रिः संमृड्ढीत्याह । त्र्यावृद्धि यज्ञः । अथो रक्षसामपहत्यै ” ( तैब्रा ३·३·७ ) इति । वैर्दर्भैरिध्मः पूर्वं संनद्धस्तैरग्निज्वालायां संमार्जनमभिनेतव्यम् । ‘ हे अग्नीद् ’ इति संबोध्य तत्रासौ प्रेष्यते । ‘ त्रिस्त्रिः ’ इति वीप्सा परिधिसंमार्जनापेक्षा । तद्विधत्ते—“ परिधीन्त्संमार्ष्टि । पुनात्येवैनान् ” ( तैब्रा ३·३·७ ) इति ॥ प्रतिपरिधि त्रिरावृत्तिं विधत्ते—“ त्रिस्त्रिः संमार्ष्टि । त्र्यावृद्धि यज्ञः । अथो मेध्यत्वाय । अथो एते वै देवाश्वाः । देवाश्वानेव तत्संमार्ष्टि । सुवर्गस्य लोकस्य समष्ट्यै ” ( तैब्रा ३·३·७ ) इति । देवाश्वत्वेन भाविताः स्वर्गप्राप्तये भवन्ति । द्वयोराघारयोः क्रमेण गुणभेदं विधत्ते—“ आसीनोऽन्यमाघारमाघारयति तिष्ठन्नन्यम् । यथाऽनो वा रथं वा युञ्ज्यात् । एवमेव तदध्वर्युर्यज्ञं युनक्ति । सुवर्गस्य लोकस्याभ्यूढ्यै ” ( तैब्रा ३·३·७ ) इति ॥ शाकटस्य प्राथमिकं बलीवर्दयुगम्[८] उपर्यासीनेन प्रेर्यते । द्वितीयतृतीयादिकं [illegible] भूमौ स्थितेन । तद्वदाघाररथः स्वर्गलोकमभिलक्ष्य वहनाय भवति । एतद्वयवेदनं प्रशंसति—“ वहन्त्येनं ग्राम्याः पशवः । य एवं वेद ” ( तैब्रा ३·३·७ ) इति । बलीवर्दाश्वादयो ग्राम्याः ॥ ‘ तिष्ठन्नन्यम् ’ इति विहितस्य द्वितीयाघारस्य संबन्धिषु मन्त्रेषु प्रथमं मन्त्रं व्याचष्टे—“ भुवनमसि वि प्रथस्वेत्याह । यज्ञो वै भुवनम् । यज्ञ एव यजमानं प्रजया पशुभिः प्रथयति । अग्ने यष्टरिदं नम इत्याह । अग्निर्वै देवानां यष्टा । य एव देवानां यष्टा । तस्मा एव नमस्करोति ” ( तैब्रा ३·३·७ ) इति । पूर्वोक्तनिर्वचनेन भूतोत्पत्तिकारणत्वादग्न्यभिन्नो यज्ञो भुवनम् । यष्टा देवपूजकः । अग्निश्च हव्यवहनेन देवान् पूजयति ॥

जुह्वेहीति ।। कल्पः—“ अथाऽऽदत्ते दक्षिणेन जुहूं जुह्वेह्यग्निस्त्वा ह्वयति देवयज्याया इति ।

७. आ.इ.उ.क.पा.मा.हा–दैवमेतस्यैव; य–देवतमेतस्यैव; तं–वेदमेतस्यैव; [ अस्माभिः स्वीकृतः पाठः बृहदारण्यकमनुसृत्य शुद्धीकृत्य दत्तः ] । ८. तं.व.–°युग्मम् ।

उर्पभृदेहि देवस्त्वा सविता ह्वयति देवयज्याया अग्नाविष्णू मा वामव क्रमिषं
वि जिहाथां मा मा सं तांप्सं लोकं मे लोककृतौ कृणुतं

उर्पभृदित्युप-भृत्। एति। इहि। देव। त्वा। सविता। ह्वयति। देवयज्याया इति देव-यज्यायै। अग्नाविष्णू इत्यग्ना-विष्णू। मा। वाम्। अवेति। क्रमिषम्। वीति। जिहाथाम्। मा। मा। समिति। ताप्तम्। लोकम्। मे। लोककृताविति लोक-कृतौ। कृणुतम्।

शब्दो यप्रत्ययान्तो निपातितः। "आग्नेयी वै जुहूः" (तैब्रा ३·३·७) इत्यादि ब्राह्मणम् ॥

सव्येनोपभृतमादत्ते—'उपभृत्' इति ॥ हे उपभृत्, एहि। यतः सर्वस्य प्रेरकः सविता देवयज्यायै आह्वयति। "सावित्र्युपभृत्" (तैब्रा ३·३·७) इत्यादि ब्राह्मणम् ॥

अत्याक्राम जपति—'अग्नाविष्णू' इति ॥ अग्निराहवनीयः, विष्णुर्यज्ञः, यज्ञश्चान्तर्वेदि स्रुचामग्रत आस्ते। [3]ताराह—हे अग्नाविष्णू, युवामह मा अव क्रमिषम् अनक्रम्य मा गाम्। "नेटि" (पा ७·२·४) [4]इत्यनेन वृद्धिप्रतिषेधः। तदर्थं युवा वि जिहाथां मम [5]मार्ग-प्रदानार्थं विगच्छतम्। मा मां च मा सं ताप्स संतप्तं मा कार्ष्टम्। "झलो झलि" (पा ८·२·२६) इति सिचो लोपः। "वदव्रजहल०" (पा ७·२·३) इति वृद्धिः।

"सव्येनोपभृतमुपभृदेहि देवस्त्वा सविता ह्वयति देवयज्याया इति" (बौश्रौ १·१५) इति ॥ अनयोर्मन्त्रयोरभिमवितृप्यनस्या युक्तेत्याह—"जुह्वेह्यग्निस्त्वा ह्वयति देवयज्याया इत्याह। आग्नेयी वै जुहूः। सावित्र्युपभृत्। ताभ्यामेवैने प्रसूत आदत्ते" (तैब्रा ३·३·७) इति। अग्निसवितारौ जुहूपभृतोः स्रुचोरभिमानिदेवते[10] ॥

अग्नाविष्णू इति ॥ बौधायनः—"अत्याक्राममपत्यग्नाविष्णू मा वामवक्रमिषं वि जिहाथां मा मा संताप्तं लोकं मे लोककृतौ कृणुतम्" (बौश्रौ १·१५) इति। अत्याक्रमणप्रकार आपस्तम्बेन दर्शितः—"अग्नाविष्णू मा वामवक्रमिषमित्यग्रेण *स्रुचोऽपरेण मध्यम [11]परिधिमनतिक्रामन् प्रस्तरं दक्षिणेन पदा दक्षिणाऽतिक्रामति। उदङ् मध्येन" (आपश्रौ २·१३·५) इति ॥ [12]मध्यमपरिधेः पुरतोऽवस्थित आहवनीयोऽग्निः ततः पश्चात्स्रुचामग्रभागे शाखादण्डावस्थितो यज्ञाभिमानी विष्णुः। हे अग्नाविष्णू, आघारहोमार्थं स्रुचोर्मध्ये गच्छन्नप्यहं पादेन युवां मा अव क्रमिषम्। मम गमनावकाशाय युवां वियुक्तौ भवतम्। मां प्रति संतापं मा कुरुतम्। किं च स्थानकारिणौ[13] युवां मम गमनस्थानं कुरुतम् ॥ यथोक्तमर्थं दर्शयति—"अग्नाविष्णू मा वामवक्रमिषमित्याह। अग्निः पुरस्तात्। विष्णुर्यज्ञः पश्चात्। ताभ्यामेव प्रतिप्रोच्यात्याक्रामति। वि जिहाथां मा मा सं ताप्तमित्याहाहिंसायै। लोकं मे लोककृतौ कृणुतमित्याह। आशिषमेवैतामाशास्ते" (तैब्रा ३·३·७) इति ॥

३. घ—तदेवाह। ४. ब. मे—इत्यादिना। ५. त. ति—मार्गप्रदर्शनार्थम्।

१०. इ च, व, पा. मां. हा—'जुहूपभृतो' नास्ति। ११. तं—°देवो। * श्रौतसूत्रे 'स्रुवोऽपरेण' इति पाठः। ११. आ. इ. मां—परिधिमनतिक्रामन्, क—परिधिमनतिक्रामन्। १२. उ. पा. मां—मध्यमं परिधिम्, ए—मध्यमपरिधिम्। १३. आ इ. उ. पा. मां. हा—°कारणो।

विष्णोः स्थानमसीत इन्द्रो अकृणोद्वीर्याणि समारभ्योर्ध्वो अध्वरो दिविस्पृशमह्रुतो ( १ ) यज्ञो यज्ञपतेरिन्द्रावान्त्स्वाहा

विष्णोः । स्थानम् । असि । इतः । इन्द्रः । अकृणोत् । वीर्याणि । समारभ्येति सम्–आरभ्य । ऊर्ध्वः । अध्वरः । दिविस्पृशमिति दिवि–स्पृशम् । अह्रुतः (१) । यज्ञः । यज्ञपतेरिति यज्ञ–पतेः । इन्द्रावानितीन्द्र–वान् । स्वाहा । ५

---

हे[6] ᵛलोककृतौ स्थानप्रदौ, मम च ᵛलोकं स्थानं ᵛकृणुतं कुरुतम् । "धिन्विकृण्व्योर च" (पा ३.१.८० ) इत्युप्रत्ययः । "अतो लोपः" ( पा ६.४.४८ ) ॥

स्थानं कल्पयति–'विष्णोः' इति ॥ ᵛविष्णोः यज्ञात्मनः ᵛस्थानम् ᵛअसि । अतः प्रशस्तेऽस्मिन् स्थाने स्थित्वा यागं निर्वर्तयामीति भावः ॥

आघारमाघारयति—'इतः' इति ॥ ᵛइतः अस्मादाघारात् समारभ्य ᵛइन्द्रः ᵛवीर्याणि वृत्रवधादीनि ᵛअकृणोत् करोति स्म । "अनुदात्ते च कुधपरे" ( पा ६.१.१२० ) इति प्रकृतिभावः । पूर्ववदुप्रत्ययः । किंच अयमाघारः ᵛऊर्ध्वः ऊर्ध्वलोकगामी भूत्वा, ᵛअध्वरः अध्वर्यः । "नञ्सुभ्याम्" ( पा ६.२.१७२ ) इत्युत्तरपदान्तोदात्तत्वम् । पूर्ववत् प्रकृतिभावः । हिंसकरहितः केनचिदप्यहिंसितश्च भूत्वा ᵛतमिन्द्रं ᵛदिविस्पृशम् अकरोत् । "स्पृशोऽनुदके क्विन्" ( पा ३.२.५८ ), "तत्पुरुषे कृति बहुलम्" ( पा ६.३.१४ ) इत्यलुक् । कृदुत्तरपदप्रकृतिस्वरः ( पा ६.२.१३९ ) । "आघारमाघार्यमाणमनु समारभ्य" ( तैब्रा ३.३.७ ) इत्यादि ब्राह्मणम् । कोऽस्य विशेषः यत एवमकरोदित्याह–ᵛइन्द्रावान् इन्द्रेण

---

विष्णोरिति ॥ बौधायनः—"स्थानं [14]कल्पयते विष्णोः स्थानमसीति" ( बौश्रौ १.१५ ) इति । आपस्तम्बः—"विष्णोः स्थानमसीत्यवतिष्ठते । अन्तर्वेदि दक्षिणः पादो भवत्यवग्रः सव्यः । [15]अयोर्ध्वस्तिष्ठन् दक्षिणं परिधिसंधिमन्ववहृत्य" ( आपश्रौ २.१३.७–८ ) इति ॥ हे भूप्रदेश, त्वं यज्ञपुरुषस्य ᵛस्थानम् ᵛअसि ॥ यज्ञपुरुषप्रयुक्तमतिशयं दर्शयति—"विष्णोः स्थानमसीत्याह । यज्ञो वै विष्णुः । एतत् खलु वै देवानामपराजितमायतनम् । यद्यज्ञः । देवानामेवापराजित आयतने तिष्ठति" ( तैब्रा ३.३.७ ) इति । देवयजनभूव्यतिरिक्तभूमेरसुराधीनतया तत्र देवानां पराजयेऽपि यज्ञप्रदेशोऽपराजितः ॥ २०

इत इति ॥ बौधायनः—"अन्वारब्धे यजमाने मध्यमे परिधौ *संस्पृशन्नृजुस्तिष्ठन्नृजुमाघारमाघारयति संततं प्राञ्चमव्यवच्छिन्दन्नित इन्द्रो अकृणोद्वीर्याणि समारभ्योर्ध्वो अध्वरो दिविस्पृशमह्रुतो यज्ञो यज्ञपतेरिन्द्रावान्त्स्वाहेति" ( बौश्रौ १.१५ ) इति । आपस्तम्बः—"समारभ्योर्ध्वो अध्वर इति २५

---

६. मै–वाम् । ७. व– एनमिन्द्रम् ।

---

१४. आ.क–कल्पयति । १५. आ.क–'अथ' नास्ति । *बौश्रौसूत्रे 'संस्पृश्यर्जु' इति ।

बृहद्भाः पाहि मोऽग्ने दुश्चरितादा मा सुचरिते भज

बृहत् । भाः । पाहि । मा । अग्ने । दुश्चरितादिति दुः—चरितात् ।
आ । मा । सुचरित इति सु—चरिते । भज ।

देवतया तद्वान् । "अन्येषामपि दृश्यते" (पा ६.३.१३७) इति दीर्घः । यतोऽयमाघार
५ इन्द्रावान्, तस्मादयमेव खलु [v]यज्ञपतेः यजमानस्य । "पत्यावैश्वर्ये" (पा ६.२.१८)
इति पूर्वपदप्रकृतिस्वरत्वम् । [v]अहुतः अकुटिलः निश्चितफलः [v]यज्ञः । [v]स्वाहा स्वयमेवेत्य
सरस्वत्याह । अहुत इति, "हु ह्वरेश्छन्दसि" (पा ७.२.३१) इति हुभावः । होमपक्षे
स्वाहेति [8]प्रक्षेपार्थो निपातः ॥

स्रुचमुद्गृह्णाति—'बृहत्' इति ॥ क्रियाविशेषणम् । [9]भासते इति [v]भा । "भ्राज-
१० भास०" (पा ३.२.१७७) इत्यादिना क्विप् । यस्मादयमग्निरनेनाघारेण भृशं भासते
ज्वलति तस्मात् स्रुचमुद्गृह्णामीति भावः ॥

उदङ्ङुपर्याक्रामं जपति—'पाहि' इति द्विपदया गायत्र्या ॥ हे [v]अग्ने, नः [v]दुश्चरि-
तात् प्रमादकृतनिन्दिताच्चरितात् कर्मापराधात् मां [v]पाहि । यथा कर्मापराधो न भवति

---

प्राञ्चमुदञ्चमृजुᳲ सततं ज्योतिष्मत्याघारमाघारयन् सर्वाणीध्मकाष्ठानि सᳲस्पर्शयति" (आपश्रौ २.१४.१)
१५ इति । अस्य मते 'इत इन्द्र.' इति वाक्यं पूर्वमन्त्रशेषः । [v]इतः देवयजनस्थानवशात् [v]इन्द्रः असुरवध-
रूपाणि [v]वीर्याणि अकरोत् । [v]यज्ञपतेः यजमानस्य [v]यज्ञः आघारः [v]स्वाहा देवतायै दत्तः । कीदृशो यज्ञः ?
इन्द्रदेवताकत्वेनेन्द्रवान् । नैर्ऋतीं राक्षसीं दिशं [v]समारभ्य [v]ऊर्ध्वः दीर्घः [v]अध्वरः हिंसारूपेण विच्छेदेन
रहित ऐशानीं दैविकीं दिशं स्पृशति । [v]अहुतः अकुटिलः ॥ इन्द्रशब्दसूचितं दर्शयति—"इत इन्द्रो
अकृणोद्वीर्याणीत्याह । इन्द्रियमेव यजमाने दधाति" (तैब्रा ३.३.७) इति ॥ [16]ऊर्ध्वशब्देन वृद्धिः
२० सूचितेत्याह—"समारभ्योर्ध्वो अध्वरो दिविस्पृशमित्याह वृद्ध्यै" (तैब्रा ३.३.७) इति ॥ [17]समारभ्येति
पदसूचितं[17] दर्शयति—"आघारमाघार्यमाणमनुसमारभ्य । पूर्वस्मिन् काले देवाः सुवर्गं लोकमायन् । साक्षा-
देव यजमानः सुवर्गं लोकमेति । अथो समृद्धेनैव यज्ञेन यजमानः सुवर्गं लोकमेति" (तैब्रा ३.३.७) इति ।
देवाः स्वयं याग कुर्वन्तोऽध्वर्युमनु समाघारं स्पृष्ट्वा विलम्बमन्तरेण स्वर्गं गताः । साक्षादेवाविलम्बेनैव ।
किं च सम्यगारभ्येत्यनेन समृद्धिः सूचिता ॥ अहुतशब्दार्थं दर्शयति—"अहुतो यज्ञो यज्ञपतेरित्याहानार्त्यै"
२५ (तैब्रा ३.३.७) इति ॥ इन्द्रशब्दार्थमाह—"इन्द्रावान्त्स्वाहेत्याह । इन्द्रियमेव यजमाने दधाति"
(तैब्रा ३.३.७) इति ॥

बृहद्भा इति ॥ कल्पः—"बृहद्भा इति स्रुचमुद्गृह्णाति" (बौश्रौ १.१५) इति ॥ अनेनाऽऽ-
घारेण ज्वालारूपं यथा [v]बृहत् भवति, तथाऽयमग्निर्भासते । ततो शुद्धर्मा दक्षिणामित्युद्गृह्णाति ॥

---

८. त नि व- प्रदानार्थः । ९. ति. पं. व- भाति ।

---

३० १६. था, इ च पा मां हा-ऊर्ध्वशब्दे । १७-१७ इ मां हा-सुवर्गपदसूचितम्; च-दिविस्पृशपदसूचितम्

मखस्य शिरोऽसि सं ज्योतिषा ज्योतिरङ्क्ताम् ॥ १२ ॥
[ अहुत एकविंशतिश्च ]
मखस्य । शिरः । असि । समिति । ज्योतिषा । ज्योतिः । अङ्क्ताम् ॥ १२ ॥
[ मैसं १·१–१३ ; कासं १·१२; कपिसं १·१२; वासं २·८–९ ]

तथा कुरु । "दुर्निन्दायाम्" ( द्र.पाभा २·२·१८ वा४ ) इति प्रादिसमासः ॥ दुःशब्देन चरितं विशेष्यते न तु चरणम्; तेन गतित्वाभावादव्ययपूर्वपदप्रकृतिस्वरत्वम् ( पा ६·२·२ ) । किंच [v]सुचरिते [10–]सुष्ठु निर्वर्तिते यज्ञफले[–10] [v]मा मां [v]भज स्थापय । विद्यमानोऽप्यपराधो गुणत्वेन ग्रहीतव्य इति भावः । "सुः पूजायाम्" ( पा १·४·९४ ) इति कर्मप्रवचनीयत्वात् यद्यपि प्रादिप्रसङ्गे "कर्मप्रवचनीयानां प्रतिषेधः" ( द्र.पाभा २·२·१८ वा १ ) इत्यस्ति, तथापि "स्वती पूजायाम्" (द्र.पाभा २·२·१८ वा ४ ) इति प्रादिसमासः । तेन गतित्वाभावात् "गतिरनन्तरः" ( पा ६·२·४९ ) इत्यस्यापवादः, "सूपमानात् क्तः" ( पा ६·२·१४५ ) इत्युत्तरपदान्तोदात्तत्वं न प्रवर्तते । तेन पूर्ववदव्ययपूर्वपदप्रकृतिस्वरत्वम् ( पा ६·२·२ ) । "अग्निर्वाव पवित्रम् । वृजिनमनृतं दुश्चरितम्" ( तैब्रा ३·३·७ ) इत्यादि ब्राह्मणम् ।

जुह्वा ध्रुवां समनक्ति—'मखस्य' इति ॥ निर्वर्तिताघारा जुहूरभिमन्त्र्यते । हे जुहु, [v]मखस्य यज्ञस्य [v]शिरः शिर इव [11]त्वम् उत्तमाङ्गम् [v]असि । तस्मात् तव [v]ज्योतिषा घृतेन

अधिकभासनेन स्वर्गः समर्थित इत्याह—"बृहन्ना इत्याह । सुवर्गो वै लोको बृहद्भाः । सुवर्गस्य लोकस्य समष्ट्यै" ( तैब्रा ३·३·७ ) इति ॥

पाहीति ॥ कल्पः—"अथासꣳस्पर्शयन् स्रुचावुदङ्ङत्याक्रामञ्जपति पाहि माऽग्ने दुश्चरितादा मा सुचरिते भजेति" ( बौश्रौ १·१५ ) ॥ [v]भज स्थापय ॥ जुहूपभृतोः परस्परमसंस्पर्शयत्नविशिष्टं प्रतिनिवृत्याऽऽगमनं विधत्ते—"यजमानदेवत्या वै जुहूः । भ्रातृव्यदेवत्योपभृत् । प्राण आघारः । यत् संꣳस्पर्शयेत् । भ्रातृव्येऽस्य प्राणं दध्यात् । असꣳस्पर्शयन् अत्याक्रामति । यजमान एव प्राणं दधाति" ( तैब्रा ३·३·७ ) इति । यजमानयत् यागे प्रत्यासन्नत्वात् [18–]जुहूर्यजमान इति[–18] मन्यते । औपभृतस्य त्वाज्यस्य जुहूद्वारा होम इति व्यवहितत्वमुपभृतः । [19]ततो भ्रातृव्यो देवता । अर्थवादान्तरे वा एवदेव [20]तत्त्वं द्रष्टव्यम् ॥ मन्त्रस्य पदार्थवाक्यार्थौ दर्शयति—"पाहि माऽग्ने दुश्चरितादा मा सुचरिते भजेत्याह । अग्निर्वाव पवित्रम् । वृजिनमनृतं दुश्चरितम् । ऋजुकर्मꣳ सत्यꣳ सुचरितम् । अग्निरेवैनं वृजिनादनृताद्दुश्चरितात् पाति । ऋजुकर्मे सत्ये सुचरिते भजति । तस्मादेवमाशास्ते । आत्मनो गोपीथाय" ( तैब्रा ३·३·७ ) इति । कायिकं निषिद्धाचरणं वृजिनं, विहिताचरणमृजुकर्म, वाचिके सत्यानृते ॥

मखस्येति ॥ कल्पः—"जुह्वा ध्रुवां समनक्ति मखस्य शिरोऽसि सं ज्योतिषा ज्योतिरङ्क्ता-

१०–१०. मै– शोभनचरिते कर्मणि । ११. मै– 'त्वम्' नास्ति ।

१८–१८. क–जुहूः यजमानोऽभि°; तं. ब–जुहूं यजमानोऽभि° । १९. ब–अतोऽस्य । २०. आ, इ,उ,क,पा,मा,द्रा–'तत्त्वम्' नास्ति ।

इदं ध्रौवं [v]ज्योतिः घृतं [v]सम् [v]अक्ता संगच्छताम्। व्यत्ययेनात्मनेपदम्। "शिरो वा एतद्यज्ञस्य। यदाघारः" ( तैब्रा ३·३·७ ) इति ब्राह्मणम् ॥

॥ इति प्रथमे द्वादशोऽनुवाकः ॥

---

मिति त्रिः" ( बौश्रौ १·१५ ) इति ॥ हे आघारशेष, त्वं यज्ञस्य शिरोवदुत्तममङ्गम् [v]असि। अतस्त्वद्रूपेण [v]ज्योतिषा ध्रौवाज्यरूपं [v]ज्योतिः [v]सम् [v]अक्ता संयुज्यताम् ॥ समञ्जनं विधत्ते—" शिरो वा एतद्यज्ञस्य। यदाघारः। आत्मा ध्रुवा। आघारमाघार्य ध्रुवां समनक्ति। आत्मन्नेव यज्ञस्य शिरः प्रतिदधाति" ( तैब्रा ३·३·७ ) इति। [21]गलादधस्तनो देह[21] आत्मा ॥ पूर्वपक्षत्वेन द्विरावृत्तिं विधत्ते—" द्विः समनक्ति। द्वौ हि प्राणापानौ" ( तैब्रा ३·३·७ ) इति ॥ सिद्धान्तमाह—" तदाहुः। त्रिरेव समञ्ज्यात्। त्रिधातु हि शिर इति। शिर एवैतद्यज्ञस्य। अथो त्रयो वै प्राणाः। प्राणानेवास्मिन् दधाति" (तैब्रा ३·३·७) इति। त्वङ्मांसास्थिरूपा विस्पष्टास्त्रयो धातवो यस्य तत्त्रिधातु ॥ मन्त्रगतज्योतिःशब्दविवक्षां दर्शयति—" मखस्य शिरोऽसि सं ज्योतिषा ज्योतिरङ्क्तामित्याह। ज्योतिरेवास्मा उपरिष्टाद्दधाति। सुवर्गस्य लोकस्यानुख्यात्यै" ( तैब्रा ३·३·७ ) इति। अस्य ध्रौवाज्यशेषस्योपरि स्थापितेनाऽऽघारशेषाज्येन [22]अत्युज्ज्वलसत्प्रदीपेनैव स्वर्गलोकः प्रकाशितो भवति ॥

अत्र विनियोगसंग्रहः—

" ध्रुवाग्नेरञ्जलिं कृत्वा [23]जुपभृद्भ्यां तयोर्ग्रहः।
अग्ना दक्षिणदिग्गामी विष्णो स्थित्वा [24]समाहुतिः ॥ १ ॥
गृह्णन् स्रुचमुद्रुह्य पाहि प्रतिनिवर्तते।
मख ध्रुवामनक्ति त्रिर्नव मन्त्रा इहेरिताः ॥ २ ॥ " इति ॥

अथ मीमांसा ॥ 'अग्ने यष्टरिदं नमः', " अग्निर्वै देवानां यष्टा" ( तैब्रा ३·३·७ ) इत्यनयोर्मन्त्रब्राह्मणयोरग्निदेवताया यागाधिकारः प्रतीयते तदयुक्तं, [25]नवमाध्यायप्रथमपादोक्तदेवताधिकरणविरोधप्रसङ्गात्। [26]तत्र ह्येवं चिन्तितम्[26] —

" देवः प्रयोजकोऽपूर्वं वाऽऽद्योऽस्य फलदत्वतः।
न विधेये गुणो ह्येषोऽपूर्वस्य फलितोचिता ॥ " ( जैन्या ९·१·८ ) इति ॥

'आग्नेयोऽष्टाकपालः' इत्यादिषु सर्वेषु कर्मसु मन्त्रतन्त्ररूपाणामनुष्ठेयानामङ्गानामग्न्यादिर्देवः प्रयोजकः। कुतः। यागेन पूजितायाः देवतायाः फलप्रदत्वात्। सम्भवति च फलप्रदत्वं मन्त्रार्थवादादिभ्यो विग्रहादिपञ्चकावगमात्। विग्रहो हविःस्वीकारस्तद्भोजनं तृप्तिः [27]प्रसादश्चेति एतस्योचितं[27] पञ्चकम्। "सहस्राक्षो गोत्रभिद्वज्रबाहुः" (तैसं २·३·१४) इति विग्रहः। "अग्निरिदं हविरजुषत" (तैब्रा १·५ १०) इति हविःस्वीकारः। 'अद्धीदिन्द्र प्रस्थितेमा हवींषि' ( ऋ १०·११६·८ ) इति हविर्भोजनम्। "तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति" ( तैसं २·५·४) इति तृप्तिप्रसादौ। ततः सेवितराजादिवत् पूजितदेवतायाः फलप्रदत्वेन प्राधान्यात् सैवाङ्गानां प्रयोजिकेति प्राप्ते ब्रूमः—" किं देवतायाः [28]फलप्रदत्वलक्षणं

---

[21]-[21]. आ—गलादधस्तनो देहः, क—ग्रीवादधस्तनो देशः। [22]. क—अत्युज्ज्वले सन् प्रदीपेनेव, ख.घ—अत्युन्नतप्रदीपेन, ङ.भां ह्य—अत्युज्ज्वलं सत्प्रदीपेन। [23]. त—जुपभृद्भ्याम्। [24]. त.भां—समाहुति। [25]. ङ.ठ.भां ह्य—नवमाध्यायस्य प्रथम°। [26]-[26]. ङ.ठ.पा भां.ह्य—अत्र ह्येतद्विचिन्तितम्। [27]-[27]. आ.क त—प्रसादश्चेत्येतत्पञ्चकमनयोरुचितम्। [28]. ङ.ठ.पा.भां—सलक्षणम्।

प्राधान्यं शब्दादापाद्यते, वस्तुसामर्थ्याद्वा । नाऽऽद्यः । 'स्वर्गकामो यजेत' इति शब्दे विधेयस्य यागस्यैव फलप्रदत्वावगमात् । द्रव्यदेवते तु सिद्धत्वेन विध्यनर्हे । तत्र यथा द्रव्यस्य विधेयं प्रति गुणभावः तथा देवताया अपि । यदि यागस्य कालान्तरभाविफलं प्रति व्यवहितत्वं तर्हि तत्साधनभूता देवता ततोऽपि व्यवहिता । का तर्हि फलस्य गतिः । अपूर्वमिति वदामः । तच्च श्रुत्या श्रुतार्थापत्त्या वा प्रतीयमानत्वाच्छान्दमिति तस्य फलप्रदत्वमुचितम् । नापि वस्तुसामर्थ्यात् [२९]देवस्य फलप्रदत्वं, विग्रहादिपञ्चकप्रतिपादकयोर्मन्त्रार्थवादयोः स्वार्थे तात्पर्याभावात् । अन्यथा 'वनस्पतिभ्यः स्वाहा, मूलेभ्यः स्वाहा, तूलेभ्यः स्वाहा' इत्यादिमन्त्रेष्वपि देवत्वं विग्रहादियुक्तं कल्प्येत । तच्च प्रत्यक्षविरुद्धम् । अतो न राजादिवत् फलप्रदत्वम् । किंच विग्रहादिमद्देवतावाद्यपि न विना कर्मणा फलमभ्युपगच्छति । ततः प्राप्ताप्राप्तविवेकेनोभयवादिसिद्धस्य यागस्यैव फलप्रदत्वमस्तु । किं च मातापितृगुर्वादिशुश्रूषाया देवतां विनैव फलप्रदत्वमुभयवादिसिद्धम् । तस्मात् फलप्रदमपूर्वमेवाङ्गानुष्ठाने प्रयोजकम् । देवस्य प्रयोजकत्वे सत्याग्नेययाग उपदिष्टानि प्रयाजाद्यङ्गानि सौर्यादियागेष्वन्यभावादनूह्यानि । अपूर्वस्य प्रयोजकत्वे [३०]तत्सत्त्वादूह्यानीति विशेषः । तदिदं देवताधिकरणमग्न्यादिदेवतानां [३१] कर्माधिकारे विरुध्यते । अत एव वैयासिकदेवताधिकरणसूत्रेषु जैमिनिपक्ष एवमुपन्यस्तः—"मध्वादिष्वसंभवादनधिकारं जैमिनिः" ( ब्रसू १·३·३१ ) इति । अस्यायमर्थः—अस्ति हि [३२]काचन मधुविद्या, छन्दोगैराम्नातत्वात् । तस्यामादित्यो मधुत्वेन ध्यातव्यः । वसवो रुद्रा आदित्या मरुतः साध्याश्चेत्येते देवगणाः । परित उपविश्य तन्मधूपजीवन्ति । ईदृशेनोपासनेन वस्वादिमहिमानं प्राप्नुवन्तीति श्रूयते । तस्यां विद्यायां मनुष्याणामधिकारः संभवति । वस्वादिदेवतास्तु कानन्यान् वस्वादीनुपासीरन् कं चान्यं वस्वादिमहिमानं प्राप्नुयुः । आदित्यश्च कमन्यमादित्यं मधुत्वेनोपासीत । तस्माद्देवानामनधिकारं जैमिनिर्मन्यत इति । तर्हि [३३]विद्यान्तरेऽधिकारोऽस्त्वित्याशङ्क्योत्तरमेवं सूत्रितम्—"ज्योतिषि भावाच्च" ( ब्रसू १·३·३२ ) इति । न खल्वादित्यो नाम कश्चिच्चेतनो विग्रहवान् देवोऽस्ति किं त्वस्मिन् दृश्यमाने ज्योतिर्मण्डले भवत्यादित्यशब्दप्रयोगः । एवमङ्गारेष्वग्निशब्दः । यदि विग्रहवती देवता स्यात्तदानीमृत्विगादिवत् कर्मण्युपलभ्येत । किंचैकस्य यजमानस्य यागे हविः स्वीकर्तुं गत्वा तदानीमेवान्येषां यागेषु गन्तुं न शक्नुयात् । अत एवाऽऽम्नायते—"कस्य वाऽह देवा यज्ञमा गच्छन्ति कस्य वा न बहूनां यजमानानाम्" ( तैसं १·६·७ ) इति । किं च विग्रहवत्सु देवेषु मृतेषु वैदिकानामग्नीन्द्रादिशब्दानामभिधेयाभावाद्वेदस्याप्रामाण्यं प्रसज्येत । तस्मात् मृगतृष्णादिवाक्येष्विव "सहस्राक्षो गोत्रभिद् [३४]वज्रबाहुः" ( तैसं २·३·१४ ) इत्यादि वाक्येषु कश्चिद्विकल्पप्रत्ययो जायते । "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" ( योसू १·९ ) इति तल्लक्षणम् । 'मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः । एष वन्ध्यासुतो याति शशशृङ्गधनुर्धरः' ॥ इत्यत्र विनैव बाह्यवस्तुना यथा कश्चिदाकारविशेषो मनसि प्रतिभासते तथैव देवतावाक्येषु । तस्मात् "अग्निर्वै देवानां यष्टा" ( तैब्रा ३·३·७ ) इति वाक्यबलात् देवानां यागाधिकारो वक्तुं न शक्यः ।

२९. ब–एव स्यात् । ३०. ब–तत्साधनत्वादूह्यानीति । ३१. आ.पा.हा–°देवानाम् । ३२. तं–काचित् । ३३. तं–विद्यान्तरापि° । ३४. आ.क.पा.हा–'वज्रबाहुः' नास्ति ।

अत्रोच्यते— देवानामधिकाराभावः कुत इति वक्तव्यम् । देहाद्यभावाद्वा, सत्यपि देहादावर्थित्व-सामर्थ्यविद्यारूपाणामधिकारहेतूनामभावाद्वा, सत्स्वपि तेषु शास्त्रेण निषिद्धत्वाद्वा । प्रथमपक्षेऽपि देहाद्यभावः कुत इति वाच्यम् । प्रमाणाभावाद्वा बाधकसद्भावाद्वा । नाऽऽद्य । मन्त्रार्थवादेतिहासपुराणयोगिप्रत्यक्ष-लोकप्रसिद्धीनां तत्प्रमाणत्वात् । "देवो व सविता प्रार्पयतु" ( तैसं १·१·१ ), "रुद्रस्य हेतिः परि वो

५ वृणक्तु" ( तैसं १·१·१ ) इत्यादयश्चेतनोचितव्यवहाराभिधायिनो बहवो मन्त्राः पूर्वमुदाहृताः । 'अग्ने यष्टरिदं नमः', 'इत इन्द्रो अकृणोद्वीर्याणि' इत्यादय उदाह्रियन्ते । "अथा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यताम्" ( तैसं १·१·१३ ), "अग्ने त्वꣳ सु जागृहि" ( तैसं १·२·३ ) इत्यादय उदाह-रिष्यन्ते । "तं गायत्र्याहरत्" (तैब्रा ३·२·१), "[35]पुरुष वै देवाः पशुमालभन्त[35]" (द्र. मैसं ३·१०·२) 'देवासुराः संयत्ता आसन्' ( तैसं २·३·७ ) इत्यादयोऽर्थवादाः । इतिहासो भारतादि । पुराणं

१० ब्राह्मपाद्मवैष्णवादि । योगिप्रत्यक्षं [36]योगशास्त्रे "मूर्धज्योतिषि सिद्धदर्शनम्[36]" ( योगसू ३·३२ ) इत्यादिसूत्रेषु प्रसिद्धम् । लोकप्रसिद्धिश्च [37]चित्रकारादिषु तत्तन्मूर्तिलेखनादिभिर्द्रष्टव्या । नापि द्वितीयो बाधकस्यानुपलम्भात् । वनस्पतितन्मूलादीनामपि विग्रहादिमत्त्वप्रसङ्गो बाधक इति चेत् । न । तस्येष्टत्वात् । प्रत्यक्षविरोध इति चेत् । न । स्थावरत्वस्य प्रत्यक्षत्वेऽपि तदभिमानिदेवतानामप्रत्यक्षत्वात् । सन्ति हि सर्वेषु वस्तुष्वभिमानिदेवता । अत एव श्रूयते—"अन्तरिक्षदेवत्या खलु वै पशवः" ( तैब्रा ३·२·१ ),

१५ "यजमानदेवत्या वै जुहूः । भ्रातृव्यदेवत्योपभृत्" ( तैब्रा ३·३·५ ) इति । नात्र दृश्यमाना अन्तरिक्षयज-मानभ्रातृव्या विवक्षिताः किं तु तदभिमानिदेवताः । एवं च सत्यभिमानिनीभिः सहाभेदविवक्षया "वायवः स्थोपायवः स्थ" ( तैसं १·१·१ ), 'जुह्वेह्यग्निस्त्वा ह्वयति देवयज्याया उपभृदेहि देवस्त्वा सविता ह्वयति' इत्यादीनि चेतनोचितानि सम्बोधनान्युपपद्यन्ते । किं निमित्तोऽयं देवताभिव्यक्त्यभिनिवेश इति चेत् । तर्हि किं निमित्तोऽयं देवताप्रद्वेषाभिनिवेशः । "ज्योतिषि भावाच्च" ( ब्रसू १·३·३२ ) इति जैमिनिमतस्य सूत्रितत्वा-

२० दिति चेत् । किं बादरायणस्य मतं न पश्यसि ? स ह्येवं सूत्रयामास—"अभिमानिव्यपदेशस्तु विशेषानुग-तिभ्याम्" ( ब्रसू २·१·५ ) इति । अस्यायमर्थः— वाक्चक्षुरादीन्द्रियाणां परस्परकलहेषु[38] "मृद-ब्रवीत्" ( शब्रा ६·१·३·४ ) "आपोऽब्रुवन्" ( शब्रा ६·१·३·२ ) इत्यादिश्रुतिषु चाभिमानिदेवता व्यप-दिश्यन्ते । इन्द्रियसंवादवाक्यस्याऽऽदावेव आह— "एता देवताः" ( ऐउ १·२·१ ) इति [39]देवताशब्देन विशेषितत्वात्[39] । अन्यत्र च "अग्निर्वाग्भूत्वा मुखं प्राविशत् । वायुः प्राणो भूत्वा नासिके प्राविशत्"

२५ ( ऐउ १·२·४ ) इत्यादिना सर्वेष्वेवेन्द्रियेषु देवतानुगतिश्रवणादिति । बाधकान्तरं तु बादरायण एवाशङ्क्य निराचष्टे । तदीयं सूत्रमेवम्—'विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्" ( ब्रसू १·३·२७ ) इति । ऋत्विग्दृष्टान्तेन [illegible] कर्मणि विरोधः—सोऽपि नास्त्येकस्य युगपद्बहुगृहभोजनासंभवेऽपि बहुकर्तृकनमस्कारस्वीकारः सम्भवतीत्यनेकप्रकारदर्शनात् । इह च यागस्योद्देशत्यागात्मकत्वात् नमस्कार-न्यायेन बहवो यजमाना युगपदेकां देवतामुद्दिश्य हवींषि त्यजेयुः । अथवा देवतानां योगसामर्थ्याद्युगपद-

३० ३५-३५. त-'पुरुष वै देवाः पशुमालभन्त' नास्ति । ३६-३६. इ.उ तं.पा.हा-योगशास्त्रे सिद्धे ज्योतिर्दर्शनम्, क-योगशास्त्रप्रसिद्धमूर्धन्य ज्योतिषम् । ३७ आ-चित्रकारादि । ३८. आ.क-कलहश्रुतिषु । ३९-३९. त-देवताशब्दो विवक्षितत्वात् ।

नैकशरीरप्राप्तिः श्रुतिस्मृत्योर्दृश्यते । तैश्च शरीरैर्युगपद्बहुषु यागेषु युगपद्गच्छेयुः । न चानुभवविरोधः, तासामन्तर्धानादिशक्तिमत्त्वेनायोग्यानुपलब्धेः । नापि विग्रहवतीषु देवव्यक्तिषु मृतासु वैदिकशब्दस्यार्थाभावः जातेरेव शब्दार्थत्वात् । ततो [40]वनस्पतिमूलकजुहूपस्मृदाद्यचेतनद्रव्येषु सर्वेष्वभिमानिनीनां विग्रहवतीनां चेतनानां देवतानामभ्युपगमेऽपि न बाधः कश्चित् । मृगतृष्णिकाखपुष्पादिष्वपि वनस्पत्यादिष्विव देवताभ्युपगमः प्रसज्येतेति चेत् । न । यदा 'मृगतृष्णायै स्वाहा खपुष्पाय स्वाहा' इति वेदवाक्यं [41]दर्शयिष्यसि तदाऽभ्युपगमिष्यामः । अतः प्रमाणसद्भावाद्बाधकाभावाच्च सन्त्येव देवतानां विग्रहादयः ॥ नाप्यर्थित्वाद्यधिकारकारणाभावादिति द्वितीयः पक्षो युक्तः । आदित्यवस्वादीनां स्वस्वपदस्य प्राप्तत्वेन तत्प्राप्तिहेतावुपासने यागे वाऽर्थित्वाभावेऽपि फलान्तरहेतौ तत्संभवात् । सत्यसंकल्पानां तेषां संकल्पादेव फलसिद्धौ न यागादिप्रवृत्तिरिति चेत् । न । संकल्प इव यागादावपि प्रयासबुद्ध्यभावेन प्रवृत्तिसंभवात् । श्रूयन्ते हि बहुशो वेदवाक्यानि– "अग्निष्टोमेन वै प्रजापतिः प्रजा असृजत । तां अग्निष्टोमेनैव पर्यगृह्णात्" (तैसं ७.१.१) इति । "बृहस्पतिरकामयत । श्रन्मे देवा दधीरन् । गच्छेयं पुरोधामिति । स एतं चतुर्विंशतिरात्रमपश्यत् । तमाहरत् । तेनायजत । ततो वै तस्मै श्रद्देवा अदधत गच्छत् पुरोधाम्" (तैसं ७.४.१) इति । इदानीं मनुष्य एव सत्रे भाविसंज्ञया प्रजापतिबृहस्पत्यादिशब्दैरुच्यत इति चेत् । अस्त्वेवं नक्षत्रेष्टौ । तत्र हि यजमानो देवता चेत्युभयमेकेनैव शब्देन व्यवहृतम्—"अग्निर्वा अकामयत । अन्नादो देवानाᳪं स्यामिति । स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपत्" (तैब्रा ३.१.४) इति । इह तु [42]बाधकाभावात् मुख्या एव प्रजापतिबृहस्पत्यादयः । अन्यथा वसिष्ठविशेषणं विरुध्येत । तच्चैवमाम्नायते—"वसिष्ठो हतपुत्रोऽकामयत विन्देय प्रजाम्" (तैसं ७.४.७) इति । तस्मादर्थिनो देवा यागादिषु प्रवर्तेरन् । सामर्थ्यमपि [43]धनवत्त्वं तेषामस्त्येव । उपनयनपूर्वकाध्ययनाभावेऽपि [44]स्वयंभातवेदानामस्त्येव[44] विद्या ॥

निषेधं च न पश्यामः, "तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः" (तैसं ७.१.१) इतिवत् 'देवा अनवक्लृप्ताः' इत्यश्रवणात् । प्रत्युत "देवा वै यज्ञेऽकुर्वत तदसुरा अकुर्वत" (तैसं १.७.३) इति बहुशः श्रुतम् । आघारब्राह्मणेऽपि [45]प्रदेशान्तर एवं[45] श्रूयते—"देवा वै सामिधेनीरनूच्य यज्ञं नान्वपश्यन्त्स प्रजापतिस्तूष्णीमाघारमाघारयत्ततो वै देवा यज्ञमन्वपश्यन्" (तैसं २.५.११) इति । "असुरेषु वै यज्ञ आसीत् तं देवास्तूष्णीᳪं होमेनावृञ्जत" (तैसं ६.३.७) इति । सर्वोऽप्ययमर्थवादः इति चेत् । बाढम् । न खलु वयमप्येतमनर्थवादं ब्रूमः । महातात्पर्येण विधिं प्रशंसतोऽवान्तरतात्पर्येण स्वार्थेऽपि प्रामाण्यात् भूतार्थवादत्वे का तव हानिः । यदा प्रजापतिरमन्त्रकं प्रथममाघारं प्राजापत्यमनुतिष्ठति तदा कमन्यं प्रजापतिं मनसा ध्यायेदिति चेत् । पूर्वकल्पेऽतीतं ब्रह्माण्डान्तरे वर्तमानं वा ध्यायतु । यथा देवदत्तः स्वयमन्यस्य पिताऽपि सन् विद्याधनादिभिः स्वपित्रा समानोऽपि सन् स्वपितरं नमस्करोति । यथा वा ब्राह्मणकर्तृके श्राद्धे ब्राह्मणान्तरं भोज्यते तद्वत् । यदि तत्र स्वसमानस्य पितुः ब्राह्मणान्तरस्य च पूजया तुष्टः परमेश्वरः फलं दद्यात्, तर्हि स किमस्य प्रजापतेः फलदाने विस्मरिष्यति निद्रास्यति वा । "तूस

---

४०. इ.उ.तं.पा.हा–वनस्पतितूलजुहू°; आ–वनस्पतिमूलजुहू° । ४१. इ उ.पा.हा–दर्शयिष्यति । ४२. इ.उ.पा.व.हा–बाधाभावात् । ४३. तं.व–धनवताम् । ४४–४४. आ–स्वयंभातत्वाद्वेदानामस्त्येव विद्या; क–स्वयंभूतवेदानामपौरुषेयत्वमस्त्येव । ४५–४५. आ–'प्रदेशान्तर एवम्' नास्ति ।

एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति " ( तैसं २.५.४ ) इत्यत्रापीन्द्रविग्रहेऽवस्थितोऽन्तर्याम्येव फलस्य दाता। अत एव बादरायण — " फलमत उपपत्तेः " ( ब्रसू ३.२.३८ ) इति सूत्रयामास। ईश्वरस्य फलदातृत्वेऽपि नापूर्ववैयर्थ्यं फलविशेषे तत्तारतम्ये चापूर्वस्यैव नियामकत्वात्। जैमिनिश्चापूर्वाङ्गीकारेण परितुष्टो न देवतां द्वेष्टि। तावतैव स्वापेक्षितोद्दाध्यायस्याऽऽरम्भसिद्धेः। न च प्रजापतिकर्तृके

५ याग ऋत्विजामभावः। देवतान्तराणामृत्विक्त्वात्। नन्वार्त्विज्य विप्रस्यैव। तथा च द्वादशाध्यायस्यावसाने चिन्तितम् —

" आर्त्विज्य किं त्रिवर्णस्य विप्रगाम्येव वाऽग्रिमः।
विद्यावत्त्वात्र तद्युक्त ब्राह्मणस्यैव तत्स्मृते ॥ " ( जैन्या १२.४.१७ ) इति।

" प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा " ( याज्ञस्मृ १.११८ ) इति स्मृतिः। नाय दोषः।

१० तत्र क्षत्रियवैश्ययोरार्त्विज्य नास्त्येतावदेव विवक्षितं न तु देवानां तन्निवार्यते, मन्त्रब्राह्मणयोस्तद्वगमात्[४६]। " पृथिवी होता। द्यौरध्वर्युः। रुद्रोऽग्नीत्। बृहस्पतिरुपवक्ता " ( तैआ ३.२ ) " अग्निर्होता। अश्विनाऽध्वर्यू। त्वष्टाऽग्नीत्। मित्र उपवक्ता " ( तैआ ३.३ ) इति मन्त्राः। " अश्विनौ हि देवानामध्वर्यू आस्ताम् " ( तैब्रा ३.२.२ ) इति ब्राह्मणम्। त्रैवर्णिकानामेव वसन्तादिकालेष्वाधानविधानात् देवाना वर्णाश्रमाभावात् [४७]नास्त्याधानमिति चेत्। न। तद्विधानस्य मनुष्य-

१५ विषयत्वात्। वर्णाश्रमप्रयुक्ता विधयो मनुष्याणामेव [४८]सन्ति। देवास्तु न वर्णाश्रमधर्ममनुतिष्ठन्ति। किंतु काम्यकर्मण्याधानमपि देवानामाम्नातम् — " प्रजापती रोहिण्यामग्निमसृजत। त देवा रोहिण्यामादधत। त पूषाऽऽधत्त। तं त्वष्टाऽऽधत्त। त मनुराधत्त। त धाताऽऽधत्त " ( तैब्रा १.१.२ ) इति। [४९]तदेव देवाना यागाधिकारे विघ्नाभावात् " अग्निर्वै देवाना यष्टा " ( तैब्रा २.३.७ ) इत्येतदिह सुस्थितम्। सर्वत्र च मन्त्रब्राह्मणेतिहासपुराणादिवादा सुतरामुज्जीविता ॥

प्रथमाध्यायस्य चतुर्थपादे चिन्तितम् —

" अग्निहोत्र जुहोत्याघारमाघारयतीत्यमू।
विधेयौ गुणसंस्कारावाहोस्वित् कर्मनामनी ॥
अग्नये होत्रमत्रेति बहुव्रीहिगतोऽनलः।
गुणो विधेयो नामत्वे रूपं न स्यात् क्षरद्घृते ॥

२५ संस्क्रियाऽऽधारमाघारयतीत्युक्ता द्वितीयया।
आघारेत्यग्निहोत्रेति यौगिके कर्मनामनी ॥
[illegible]ज्योतिरिति प्रोक्तो मन्त्राद्देवस्तया घृतम्।
[illegible]हीतवाक्योक्त द्वितीयायास्त्वियं गतिः ॥
[illegible]धिते हि धात्वर्थे करणत्व ततोऽस्य सा।
[illegible]प्यतां वक्ति संस्कारो नैवाऽऽशङ्क्य क्रियात्वतः ॥ "

( जैन्या १.४.८–१२ ) इति ॥

[illegible] र्त्स्वीकार' सम्भव[illegible] न य[illegible]
[illegible]यदन बहवो यजमाना युगपद[illegible]

त—पुर[illegible]
क—[illegible]
३९. [illegible]मिनात्। ४७. इ त पा मां.द्वा-नास्त्यपूर्वमाधानमिति। ४८. तं-सन्ति।

' अग्निहोत्रं जुहोति ' इत्यत्राग्निहोत्रशब्दस्य कर्मनामत्वे द्रव्यदेवतयोरभावाद्यागस्य स्वरूपमेव न सिध्येत् । ततोऽग्निर्देवतारूपो गुणोऽनेन दर्विहोमे विधीयते । आघारशब्दश्च ' घृ क्षरणदीप्त्योः ' इत्यस्माद्धातोरुत्पन्नः क्षरद्घृतमाचष्टे । तस्मिंश्च घृते [50]द्वितीयाविभक्त्या संस्कार्यत्वं प्रतीयते । तच्च संस्कृतं घृतमुपांशुयागे द्रव्यं भवति । तस्मादग्निहोत्राघारशब्दौ गुणसंस्कारयोर्विधायकाविति प्राप्ते ब्रूमः- " अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः " ( तैब्रा २.१.९ ) इति विहितेन मन्त्रेण प्राप्तत्वात् देवता न विधेया । ततोऽग्निसूर्यदेवताकस्य सायंप्रातःकालयोर्नियमेनानुष्ठेयस्य कर्मणोऽग्निहोत्रमिति यौगिकं नामधेयम् । योगश्च बहुव्रीहिणा दर्शितः । ' चतुर्गृहीतं वा एतदभूत्तस्याऽऽघारमाघार्य ' इत्याज्यद्रव्यस्य प्राप्ततया क्षरद्-घृतसंस्कारस्याविधेयत्वादाघारशब्दोऽपि यौगिकं कर्मनामधेयम् । यस्मिन् कर्मणि नैर्ऋतीं दिशमारभ्यैशानीं दिशमवधिं कृत्वा संतत्या घृतं क्षार्यते तस्य कर्मण एतन्नाम । ननु नामत्वे सति " उद्भिदा यजेत " ( द्र. तांब्रा १९.७.३ ) " ज्योतिष्टोमेन यजेत " ( द्र. शब्रा.१०,१.२.६ ) इत्यादाविव धात्वर्थेन करणेन सामानाधिकरण्याय ' अग्निहोत्रेण जुहोति ', ' आघारेणाऽऽघारयति ' इति तृतीयया भवितव्यम् । नैष दोषः । अनुष्ठानादूर्ध्वं धात्वर्थस्य सिद्धत्वाकारेण करणत्वेऽपि ततः पूर्वं साध्यत्वाकारं वक्तुम् ' अग्निहोत्रम् ' ' आघारम् ' इति द्वितीयाया युक्तत्वात् । न चात्र द्वितीयानुसारेण ' व्रीहीन् प्रोक्षति ' इत्यादाविव संस्कारः शङ्कनीयः । व्रीहिशब्दवदग्निहोत्राघारशब्दयोः प्रसिद्धद्रव्यवाचकत्वाभावेन क्रिया-वाचित्वाभ्युपगमात् । तस्मादग्निहोत्राघारशब्दौ दर्विहोमोपांशुयागयोर्गुणसंस्कारविधायिनौ न भवतः किंतु कर्मान्तरयोर्नामनी ॥

द्वितीयाध्यायस्य द्वितीयपादे चिन्तितम्—

" अग्निहोत्राघारवाक्यमनुवादोऽथ वा विधिः ।
अल्पत्वात्तु [51]दध्यूर्ध्ववाक्येनोक्तमनूद्यते ॥
[52]गुण्यसिद्धौ न दध्यादिर्गुणो दृष्टा विशिष्टता ।
रूपं दध्यादिमन्त्राभ्यामतोऽसौ गुणिनो विधिः ॥ " ( जैन्या २.२.१३-१४ )इति ॥

इदमाम्नायते—" अग्निहोत्रं जुहोति " इति , " दध्ना जुहोति " इति, " पयसा जुहोति " ( द्र. कासं ६.३ ) इति च । इदमपरमाम्नायते " आघारमाघारयति " ( तैब्रा ३.३.७ ) इति, "ऊर्ध्वमाघारयति" (तैसं ४.१.१४) इति, "ऋजुमाघारयति" (तैसं २.५.११) इति च । तत्राग्निहोत्रवाक्यं दध्यादिवाक्यविहितस्य कर्मसमुदायस्यानुवादः । आघारवाक्यं तु ऊर्ध्वादिवाक्यविहितस्य तस्येति । न त्वेतद्वाक्यद्वयं कर्मविधायकम् । कुतः ? द्रव्यदेवतालक्षणस्य यागरूपस्याभावादिति चेत् । तत्र वक्तव्यम्- किं दध्यादिवाक्येन गुणमात्रं विधीयते किंवा गुणविशिष्टं कर्म । नाद्यः । अग्निहोत्रादिवाक्यस्य त्वन्मते कर्मविधायकत्वाभावेन गुणिनः कस्यचिदसिद्धौ गुण्यनुवादपुरःसरस्य गुणमात्रविधानस्यासंभवात् । द्वितीये विधिगौरवं स्यात् । तच्च सत्यां गतावयुक्तम् । अतोऽग्निहोत्रादिवाक्यं कर्मविधायकम् । तत्र द्रव्यं दध्यादिवाक्यैर्लभ्यते । देवता तु मान्त्रवर्णिकी । आघारेऽप्येवं द्रव्यदेवते उन्नेतव्ये ।

५०. इ.उ-द्वितीयया विभक्त्या । ५१. आ.क.पा.हा-दध्यादिवाक्ये° । ५२. क.तं-गुणसिद्धौ ।

दशमाध्यायस्य तृतीयपादे चिन्तितम्—

" हिरण्यगर्भ आघारे पूर्वस्मिन्नुत्तरेऽथ वा ।
लिङ्गादाद्ये सम लिङ्ग क्लृप्तकार्यत्वतोऽन्तिमे ॥ " ( जैन्या १०·३·३ ) इति ॥

वायव्यपशौ " हिरण्यगर्भः समवर्तताग्र इत्याघारमाघारयति " ( तैसं ५·५·१ ) इति श्रुतो मन्त्रः पूर्वस्मिन्नाघारे स्यात् । कुतः ? मन्त्रलिङ्गात् । प्रकृतौ प्राजापत्यः पूर्व आघारः । अस्मिन्नपि मन्त्रे हिरण्यगर्भशब्देन प्रजापतिरभिधीयते । " प्रजापतिर्वै हिरण्यगर्भः " ( तैसं ५·५·१ ) इति वाक्यशेषादिति प्राप्ते ब्रूमः । अन्तिम आघारेऽयं मन्त्रः । [53] कुतः ? [54] क्लृप्तकार्यत्वात् । प्रकृतावमन्त्रकः प्रथम आघारः, ' प्रजापतिं मनसा ध्यायन्नाघारयति ' इति ध्यानमात्रस्याभिधानात् । ' तूष्णीमाघारयति ' इत्यमन्त्रत्वं साक्षादेव श्रुतम् । द्वितीये त्वाघारे " ऊर्ध्वो अध्वरः " ( तैसं १·१·१२ ) इत्यादिर्मन्त्रो विहितः । अतो मन्त्रकार्यं तत्र क्लृप्तम् । तस्माद्द्वितीयाघारे हिरण्यगर्भमन्त्रविधिः । यत्तु प्रजापति-देवतालिङ्गं तदिन्द्रेऽपि समानम् । इन्द्रोऽपि हि प्रजानां पतिः । तस्मात् ' ऊर्ध्वो अध्वरः ' इति मन्त्रं बाधित्वा [55]हिरण्यादिमन्त्रः तत्र निधीयते ॥

तृतीयाध्यायस्याष्टमे पादे चिन्तितम्—

" मा मा सं ताप्तमित्येतत् कस्मिन् [56]स्यादिति पूर्ववत् ।
अध्वर्यावस्तु तत्रेन स्वामिकर्मोपयोगतः ॥ " ( जैन्या ३·८·२१ ) इति ॥

' मा मा ' इति मन्त्रोक्तं संतापाभावरूपं फलं यजमाने स्यादध्वर्यौ वेति संदेहः । पूर्वाधिकरणे " ममाग्ने वर्चः " ( तैसं ४·७·१२ ) इत्यध्वर्युणा पठ्यमानेऽपि मन्त्रे ' मम ' इति शब्दोऽध्वर्युस्वामिनं यजमानं लक्षयति । ' स्वर्गकामो यजेत ' इत्यात्मनेपदेन साङ्गयागफलस्य स्वर्गस्य यजमानगामितायाः अवगमात् । ततो यथा वर्चो यजमाने भवति तथा संतापाभावोऽपि यजमानगामीति प्राप्ते ब्रूमः— अध्वर्यावसतप्ते सत्यविघ्नेन स्वामिनः कर्म समाप्यते । तस्मादध्वर्युगतोऽपि संतापाभावो यजमानस्यैव फलमिति नात्र पूर्ववदस्योपचारः ॥

अथ व्याकरणम् ॥ भुवनशब्दो नियतनपुंसकलिङ्गत्वादाद्युदात्तः । अग्न इत्यत्र वाक्यादित्वान्न निघातः । " आमन्त्रितं पूर्वमविद्यमानवत् " ( पा ८·१·७२ ) इति तस्याविद्यमानवद्भावात् षष्ठीत्येतस्य पदात्परत्वाभावाच्च निघातः । किंतु षाष्ठमामन्त्रिताद्युदात्तत्वम् ( पा ६·१·१९८ ) । अग्नाविष्णू इत्यत्रापि तद्वत् । न विद्यते स्वरो [57]निघ्नो हिंसा[57] यस्य सोऽस्वरः । " नञ्सुभ्याम् " ( पा ६·२·१७२ ) इत्युत्तरपदान्तोदात्तत्वम् । दिविस्पृशमित्यत्र कृत्स्वरः ( पा ६·२·१३९ ) । अह्रुत इत्यत्राव्ययपूर्वपद-प्रकृतिस्वरः ( पा ६·२·२ ) । दुश्चरितादित्यत्रापि तद्वत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीय-
संहिताभाष्ये प्रथमकाण्डे प्रथमप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

५३ आ इ.उ.पा मा.हा–' कुतः ' नास्ति । ५४ इ ट–क्लृप्तत्वात । ५५ ट–हिरण्यगर्भमन्त्रः ।
५६ ट–स्वामिनि । ५७–५७ आ इ.उ.पा मा.हा–विघ्न ; तै.ब–हिंसा ।

वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत् ।
अथा सपत्नाꣳ इन्द्रो मे निग्राभेणाधराꣳ अकः ।
वाजस्य । मा । प्रसवेनेति प्र-सवेन । उद्ग्राभेणेत्युत्-ग्राभेण । उदिति । अग्रभीत् ।
अथ । सपत्नान् । इन्द्रः । मे । निग्राभेणेति नि-ग्राभेण । अधरान् । अकः ॥

स्रुचौ व्यूहति—' वाजस्य ' इत्यनुष्टुभ्यां चतुष्पदाभ्याम् ॥ [V]वाजस्य अन्नस्य [V]प्रसवेन उत्पत्तिहेतुना । थाथादिस्वरेणान्तोदात्तत्वम् ( पा ६.२.१४४ ) । [V]उद्ग्राभेण अनेन जुह्वा ऊर्ध्वग्रहेण माम् [V]उदग्रभीत् । "छन्दसि लुङ्लङ्लिटः" (पा ३.४.६) इति लुङ् । उद्गृह्णातु उपरि स्थापयतु । कः ? इन्द्रः, अर्धर्चान्तरे श्रुतत्वात् । "*छन्दस्युत्पूर्वादपीष्यते स्रुगुद्यमननिपातनयोः" इति ग्रहेः घञ्प्रत्ययः । "हृग्रहोर्भश्छन्दसि°" (पा ८.२.३२ वा १) इति भत्वम् । स एव स्वरः ॥ ५

एवमनेनार्धर्चेन दक्षिणेन जुहूमुद्गृह्य अर्धर्चान्तरेण सव्येनोपभृतं निगृह्णाति — [V]अथ अनन्तरं [V]निग्राभेण सव्येनोपभृतो नीचैर्ग्रहणेन [V]मे मम [V]सपत्नान् शत्रून् [V]इन्द्रः [V]अधरान् निकृष्टान् [V]अकः करोतु । तेनैव लुङ् । " मन्त्रे घसह्वर° " ( पा २.४.८० ) इत्यादिना लेर्लुक् । गुणहल्ङ्यादिलोपौ ( पा ७.३.८६ ), ( पा ६.१.६८ ) । संहितायां " निपातस्य च " ( पा ६.३.१३६ ) इत्यथशब्दस्य दीर्घः । " व्यन् सपत्ने " ( पा ४.१.१४५ ) इति[1] सपत्नीव सपत्नः [2]इत्युपमायाम् अकारः, [+]निपातनात् । " परादिश्छन्दसि बहुलम् " ( पा ६.२.१९९ ) इत्युत्तरपदाद्युदात्तत्वम् । द्वितीयाबहुवचन- १० १५

द्वादशेऽनुवाक आघारावुक्तौ । अथ पञ्च प्रयाजाः, द्वावाज्यभागौ, अथ प्रधानयागाः, एकः स्विष्टकृत्, इडाभागभक्षणं त्रयोऽनूयाजा इत्येतावदनुष्ठातव्यम् । तन्मन्त्रास्तु हौत्रत्वादध्वर्युकाण्ड एतस्मिन्नाऽऽम्नाताः । उपरितनास्तु स्रुग्व्यूहनादिमन्त्रा आध्वर्यवत्वादिह त्रयोदशेऽनुवाक आम्नायन्ते ॥

वाजस्येति ॥ कल्पः— " [1]अथोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा वाजवतीभ्याꣳ स्रुचौ व्यूहति वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीदिति । दक्षिणेन जुहूमुद्गृह्णात्यथा सपत्नाꣳ इन्द्रो मे २०

*इदमाकारं वार्तिकं नोपलभ्यते । काशिकायां "छन्दसि निपूर्वाद°" ( पा ३.३.३५ वा १ ) इत्यादिः वार्तिकाकारः । भाष्ये च "समि मुष्टौ" ( पा ३.३.३६ ) इति सूत्रे ' उद्ग्राभनिग्राभौ च छन्दसि° ', इत्यादि भिन्नाकारं वार्तिकं लभ्यते । वस्तुतस्तु " उदि ग्रहः " ( पा ३.३.३५ ) इत्यनेनैव उत्पूर्वाद्ग्रहेः घञि कृते ' उद्ग्राभः ' इति लभ्यते । महाभाष्ये पस्पशाह्निके प्रयोजनाधिकरणे ' रक्षोहागम° ' इत्यत्र शब्दकौस्तुभः—" उदि ग्रहः " इति सूत्रे ' उद्ग्रामनिग्राभौ च छन्दसि स्रुगुद्यमननिपातनयोः ' इति वचनात् निपूर्वात् ग्रहेर्घञ् । तत्र उत्पूर्वात् सूत्रेण लोकेऽपि सिद्धो घञ् । निपूर्वात् तु वार्तिकोक्तश्छन्दस्येव" इति । १. तं. ति. ब– ' इति ' इत्यस्यानन्तरं ' सपत्नशब्दस्य साधुत्वम् ' । २. तं. ति. ब– इत्युपमार्थीयः । + अत्र काशिका– ' सपत्नीशब्दादपरेऽकारम् इवार्थे निपातयन्ति ' । २५

१. आ–अथोदङ्ङध्वर्युः प्रत्याक्रम्य । ३०

उद्ग्राभञ्च निग्राभञ्च ब्रह्म देवा अवीवृधन् ।
अथा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यताम् ।

उद्ग्राभमित्युत्–ग्राभम् । च । निग्राभमिति नि–ग्राभम् । च । ब्रह्म । देवाः । अवीवृधन् ।
अथ । सपत्नान् । इन्द्राग्नी इतीन्द्र–अग्नी । मे । विषूचीनान् । वीति । अस्यताम् ॥

५ सवन्धिनो नकारस्य "दीर्घादटि समानपादे" (पा ८.३.९) इति रुत्वम् । "आतोऽटि नित्यम्" (पा ८.३.३) इति पूर्वस्यानुनासिकत्वम् । "भोभगोअघो*" (पा ८.३.१७) इति यत्वम्* । "अनुनासिकात् परोऽनुस्वारः" (पा ८.३.४) इति केचित् ॥

एवं जुहूपभृतोः उद्ग्रहणनिग्रहणे कृत्वा प्राचीं जुहूं व्यूहति – $^v$उद्ग्राभ $^v$च $^v$निग्राभ $^v$च $^v$देवा इहागता $^v$अवीवृधन् वर्धयन्तु । "नित्यं छन्दसि" (पा ७.४.८) इति
१० णौ चङ्युपधाया ह्रस्व ऋकारः । $^v$ब्रह्म परिवृढ इष्टसाधनसमर्थम् उद्ग्राभं च निग्राभं च । यद्वा–परं वस्तु देवाश्चान्ये वर्धयन्तु इदमुभयमिति ॥

एव च प्रतीचीमुपभृत प्रत्यूहति – 'अथ' इति ॥ $^v$अथ अनन्तरम् $^v$इन्द्राग्नी $^v$मे मम $^v$सपत्नान् $^v$विषूचीनान् विष्वग्गतान् $^v$व्यस्यताम् स्वस्थानात् इतश्चेतश्च विगमयताम् । विषु नाना अञ्चतीति ऋत्विगादिना (पा ३.२.५९) क्विन्प्रत्यय । "विभाषाञ्चेरदिक्स्त्रियाम्"

१५ निग्राभेणाधरान् अकरिति सव्येनोपभृत निगृह्णात्युद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन्निति प्राचीं जुहूमूहत्यथा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यतामिति प्रतीचीमुपभृत प्रत्यूहति" (बौश्रौ १ १९) इति ॥ ब्रह्मस्य प्रत्यहेतुना $^२$अमुष्या जुहा ऊर्ध्वग्रहणेन $^३$इन्द्रो मामूर्ध्वमग्रहीत् । अथोपभृतो नीचग्रहणेन मम वैरिणो निकृष्टान् रुद्धान् अकरोत् । पर $^v$ब्रह्म $^v$देवा च ममोत्कर्षं वैरिणो निकर्षं च वर्धितवन्त । $^v$अथ $^v$इन्द्राग्नी मम $^v$सपत्नान् विष्वग्गतय स्वस्थानभ्रष्टा यथा भवन्ति तथा विशेषेण
२० $^४$प्रवर्तयेताम् ॥ एतन्मन्त्रव्याख्यानात् पूर्वमिडाभक्षणादिकं विधीयते, तस्य स्रुग्व्यूहनात् प्रागनुष्ठेयत्वात् । तत्रेडाभागस्य पुरोडाशाद्ग्रच्छेदं विधत्ते—"धिष्णिया वा एते न्युप्यन्ते । यद्ब्रह्मा । यद्धोता । यदध्वर्यु । यदग्नीत् । यद्यजमान । तान् यदन्तरेयात् । यजमानस्य प्राणान्त्संकर्षेत् । प्रमायुक स्यात् । पुरोडाशमपगृह्य सञ्चरत्यध्वर्यु । यजमानायैव तल्लोकं परिशिनष्टि । नास्य प्राणान्त्संकर्षति । न प्रमायुको भवति" (तैब्रा ३.३.८) इति ।
२५ धिष्णियनामका केचन देवा सोमरक्षका । तथा च श्रूयते—"धिष्णिया वा अमुष्मिँल्लोके सोममरक्षन्" (तैस ६ ३ १) इति । ते च धिष्णिया सोमयागे $^५$वेदिकासदृशा मृन्मया आम्नायन्ते$^५$ । "चात्वाला-द्धिष्णियानुपवपति" (तैसं ६.३ १) इति श्रुते । तेषां च धिष्णियानामतिक्रमण तत्रैव निषिद्धम्—

* "लोपः शाकल्यस्य" (पा ८.३ १९) इति यलोपोऽत्र द्रष्टव्यः ।

२. आ इ उ पा भो दा–मुष्या । ३ आ.इ.पा दा– इत । ४. इ उ क त.त्रि१.पा भो दा–प्रवर्तयताम् ।
३० ५–५. क.ब–वेदिका मृन्मयाः क्रियन्ते, तं त्रि१–वेदिकासदृशा मृन्मया क्रियन्ते ।

(पा ५·४·८) इति खप्रत्ययः स्वार्थिकः । [3]अनुनासिकलोपः । "अचः" (पा ६·४·१३८) इत्यकारलोपः । "चौ" (पा ६·३·१३८) इति दीर्घत्वम् । इन्द्रश्चाग्निश्च । "देवताद्वन्द्वे च" (पा ६·२·१४१) इति पूर्वोत्तरपदप्रकृतिस्वरत्वे "नोत्तरपदेऽनुदात्तादौ°" (पा ६·२·१४२) इति विप्रतिषिद्धे समासान्तोदात्तत्वम् । "अथ स्रुचावनुष्टुभ्यां वाजवतीभ्याम्" (तैब्रा ३·३·९) इत्यादि ब्राह्मणम् ॥ ५

---

"प्राणा वा एते यद्धिष्णिया यदध्वर्युः प्रत्यङ् धिष्णियानतिसर्पेत् प्राणान्त्संकर्षेत्" (तैसं ६·३·१) इति । तद्वदत्रापीडाभागभक्षणाय वेद्या उत्तरभागे स्थितानां ब्रह्मादीनां मध्ये संचारे प्राणापहारं बाधकमुपन्यस्य तत्परिहाराय भक्ष्यं पुरोडाशभागमपरिच्छिद्य तेभ्यः प्रदानाय हस्ते धृत्वा संचरेन्निति विधीयते । तेन यज्ञविघ्ना- भावाद्यजमानस्य स्वर्गं लोकमवशेषयति । इह लोकेऽपि प्राणबाधो न भवति । अत्र सूत्रम्—"[6]इडापात्र- मुपस्तीर्य सर्वेभ्यो हविर्भ्य इडां [7]समवद्यति" (आपश्रौ ३·१·६) इति ॥ अथान्तरेडां विधत्ते— १० "पुरस्तात्प्रत्यङ्ङासीनः । इडाया इडामादधाति । हस्त्याः होत्रे । पशवो वा इडा । पशवः पुरुषः । पशुष्वेव पशून् प्रतिष्ठापयति । इडायै वा एषा प्रजातिः । तां प्रजातिं यजमानोऽनु प्रजायते" (तैब्रा ३·३·८) इति । पात्रस्थिताया इडायाः पूर्वभागे प्रत्यङ्मुख उपविश्य सर्वसाधारण्या इडायाः सकाशाद्धोत्रे विभज्य प्रदातुं तद्धस्तयोस्यामल्पामिडामवदाय होतृहस्त आदध्यात् । "गौर्वा अस्यै शरीरम्" (तैसं १·७·२) [8]इतीडाभिमानिदेवताश्रवणात् पशुत्वम् । नरमेधे पुरुषस्याऽऽलभ्यत्वात् सोऽपि १५ पशुः । महत्या इडाया एषाऽवान्तरेडा प्रजाता । ततो यजमानस्य प्रजा भवति । अत्र सूत्रम्— "पुरस्तात्प्रत्यङ्ङासीन इडाया होतुर्हस्तेऽवान्तरेडामवद्यति" (आपश्रौ ३·२·५) इति ॥ होतुः प्रदेशिन्या द्वयोः पर्वणोराज्येनाञ्जनं विधत्ते—"द्विरङ्गुलावनक्ति पर्वणोः । द्विपाद्यजमानः प्रतिष्ठित्यै" (तैब्रा ३·३·८) इति । द्वाभ्यां पादाभ्यां स्थैर्येणावस्थानं प्रतिष्ठितिः ॥ अवान्तरेडायां प्रकारविशेषं विधत्ते— "सकृदुपस्तृणाति । द्विरादधाति । सकृदभिघारयति । चतुः संपद्यते । चत्वारि वै पशोः २० प्रतिष्ठानानि । यावानेव पशुः । तमुपह्वयते" (तैब्रा ३·३·८) इति । प्रतिष्ठानं पादः । अनेन चतुरवत्तेन तं चतुष्पादं पशुमुपह्वयते । इडाभागभक्षणायानुज्ञापितवान् भवति । अत्र चतुरवत्तं पुरोडाशभागं होता हस्ते धृत्वा भक्षणानुज्ञार्थं हौत्रकाण्डे पठितमनुवाकम् "उपहूतꣳ रथन्तरम्" (तैब्रा ३·५·८) इत्यादि पठेत् । तन्मध्येऽध्वर्युर्यजमानश्च प्रत्युपह्वानरूपं मन्त्रान्तरं पठेत् ॥ तदिदं विधत्ते— "मुखमिव प्रत्युपह्वयेत । संमुखानेव पशूनुपह्वयते" (तैब्रा ३·३·८) इति । होतुर्मुखमेवाभिवीक्ष्य पठेदित्यर्थः ॥ अध्वर्युयजमानयो- २५ र्होतृहस्तगतेडास्पर्शनं विधत्ते—"पशवो वा इडा । तस्मात् साऽन्वारभ्या । अध्वर्युणा च यजमानेन च" (तैब्रा ३·३·८) इति ॥ [9]पाठे तन्मन्त्रान्तरम्[9] उत्पादयति—"उपहूतः पशुमानसानीत्याह । उप ह्येनौ ह्वयते होता । इडायै देवतानामुपहवे" (तैब्रा ३·३·८) इति । अहमध्वर्युर्देवैरनुज्ञातस्तत इडाभक्षणेन पशुमान् भवानि । यजमानेऽप्येवं योज्यम् । कस्मिन् कालेऽयं मन्त्रपाठः ? इडायै देवताना- मनुज्ञापने होत्रा क्रियमाणे सति तन्मध्य एनावध्वर्युयजमानौ यदोपह्वयते तदा पठेत् । " दैव्या अध्वर्यव ३०

---

३. ति. व– अनुनासिकलोपे ।

---

६. आ–इडापात्र उप° । ७. आ.क–अवद्यति । ८. तं–इति वागभिमानि° । ९–९. आ– पाठ्यं मन्त्रान्तरम् ; तं.त्रि१–पाठ्यतन्मन्त्रान्तरम् ।

उपहूताः, उपहूतोऽयं यजमानः" ( तैब्रा ३ ५ ८ ) इति मन्त्रावयवाभ्यामाभ्यां तयोरुपहवः । तदनन्तरं पठेदित्यर्थः ॥ [10]तद्वेदनं प्रशंसति—" उपहूतः पशुमान् भवति । य एवं वेद " ( तैब्रा ३ ३.८ ) इति ॥ अवान्तरेडाया अवदानं तदुपाह्वानं च वाक्प्राणदेवतयोः प्रियमिति स्तौति—" या वै हस्त्यामिडामादधाति । वाचः सा भागधेयम् । यामुपह्वयते । प्राणानां सा । वाचं चैव प्राणांश्चावरुन्धे " ( तैब्रा ३.३.८ )
५ इति ॥ पुरोडाशस्य बर्हिषि स्थापनं विधातुं प्रस्तौति—" अथ वा एतर्ह्युपहूतायामिडायाम् । पुरोडाशस्यैव बर्हिषदो मीमांसा " ( तैब्रा ३ ३ ८ ) इति । इडावदानानन्तरं होत्रा तस्यामिडायामुपहूतायां सत्यामवशिष्टस्य पुरोडाशस्यैतस्मिन्नेव काले बर्हिःस्थापनसंबन्धिनी काचिन्मीमांसा भवति । किं पुरोडाशो बर्हिषि स्थापनीयो न वेति । तत्र प्रयोजनाभावादस्थापनमिति प्राप्ते प्रयोजनं देवानां समागतमिति मत्वा विधत्ते—" यजमानं देवा अब्रुवन् । हविर्नो निर्वपेति । नाहमभागो निर्वप्स्यामीत्यब्रवीत् । न मयाऽ-
१० भागयाऽनुवक्ष्यथेति वागब्रवीत् । नाहमभागा पुरोऽनुवाक्या भविष्यामीति पुरोऽनुवाक्या । नाहमभागा याज्या भविष्यामीति याज्या । न मयाऽभागेन वषट् करिष्यथेति वषट्कारः । यद्यजमानभागं निधाय पुरोडाशं बर्हिषदं करोति । तानेव तद्भागिनः करोति " ( तैब्रा ३.३ ८ ) इति । यजमानवागाद्यभिमानिदेवता भागरहिताः स्वस्वव्यापारं न कुर्वन्ति । ततो यजमानस्यैव पुरोडाशभागं पृथङ्निधायावशिष्टं पुरोडाशं बर्हिषि स्थापयेत् । तेन स्थापनमात्रेण वयं भागिन इति देवानां तुष्टिर्भवति ॥ स्थापितस्य विभागं विधत्ते—" चतुर्धा
१५ करोति । चतस्रो दिशः । दिक्ष्वेव प्रतितिष्ठति " ( तैब्रा ३ ३.८ ) इति ॥ पुनः पूर्वविधिमनूद्य प्रशंसति—" बर्हिषदं करोति । यजमानो वै पुरोडाशः । प्रजा बर्हिः । यजमानमेव प्रतिष्ठापयति । तस्मादस्थ्नाऽन्याः प्रजाः प्रतितिष्ठन्ति । मांसेनान्याः " ( तैब्रा ३.३ ८ ) इति । यस्मात् कठिनस्य बर्हिषि स्थापितस्य पुरोडाशस्य मृदुनो बर्हिषश्च संयोगस्तस्मात् कूर्मादयः केचित् कठिनेनास्थ्ना प्रतितिष्ठन्ति स्थूलकायास्तु मांसेन ॥ प्रकारान्तरेण तमेव विधिं प्रशंसति—" अथो खल्वाहुः । दक्षिणा वा एता हविर्यज्ञस्यान्तर्वेद्य-
२० वरुध्यन्ते । यत्पुरोडाशं बर्हिषदं करोति " ( तैब्रा ३.३ ८ ) इति । पुरोडाशहविष्को हविर्यज्ञः । तस्य बर्हिषि पुरोडाशस्थापनं [11]यत् एतास्तु ऋत्विजां वेदिमध्ये दक्षिणा एवावरुद्धा [11] ॥ विध्यन्तरमनूद्य प्रशंसति—" चतुर्धा करोति । चत्वारो ह्येते हविर्यज्ञस्यर्त्विजः । ब्रह्मा होताऽध्वर्युरग्नीत् " ( तैब्रा ३.३ ८ ) इति ॥ तत्तद्भागस्य निर्देशं विधत्ते—" तमभिमृशेत् । इदं ब्रह्मणः । इदः होतुः । इदमध्वर्योः । इदमग्नीध इति । यथैवादः सौम्येऽध्वरे । आदेशमृत्विग्भ्यो दक्षिणा नीयन्ते । तादृगेव तत् " ( तैब्रा
२५ ३.३.८ ) इति । यथा सोमयागे माध्यंदिनसवने दक्षिणार्थानि द्रव्याणि [12]वेद्यां [13]कृष्णाजिने प्रसार्य [14]इदमस्येदमस्य [15]इत्यादिरूपं दक्षिणा नीयन्ते, तद्वदिदं निर्देशनं द्रष्टव्यम् । निर्दिष्टानां भागानां यौगपद्यनिवारणाय क्रमं विधत्ते—" अग्नीधे प्रथमायाऽऽदधाति । अग्निमुखा ह्यृद्धिः । अग्निमुखामेवर्द्धिं यजमान ऋध्नोति " ( तैब्रा ३ ३ ८ ) इति । अग्निः कृत्स्नयागनिष्पादकत्वात्[16] समृद्धिहेतुः । तमग्निमिन्धे इत्यग्नीत् । [17]अतोऽस्य प्राथम्यं युक्तम् ॥ आग्नीध्रस्य हस्ते भागाधानप्रकार[18] विधत्ते—" सकृदुपस्तीर्य
३० द्विरादधत् । उपस्तीर्य द्विरभिघारयति । षट् संपद्यन्ते । षड्वा ऋतवः । ऋतूनेव प्रीणाति" ( तैब्रा ३ ३ ८ ) इति । अस्य विधेस्तात्पर्यं बौधायन एकस्मिन्कारेणाऽऽह— " उपहूतायामिडायामग्नीध आदधाति षडवत्तमुपस्तृणात्या-दधात्यभिघारयति " ( बौश्रौ १ १८ ) इति । आपस्तम्बस्त्वन्यथा सूत्रे—" द्विरुपस्तृणाति द्विरादधाति द्विरभिघारयति " ( आपश्रौ ३ ३ ७ ) इति ॥ विधत्ते—" वेदेन ब्रह्मणे ब्रह्मभागं परिहरति । प्राजापत्यो वै वेदः । प्राजापत्यो ब्रह्मा । सविता यज्ञस्य प्रसूत्यै " ( तैब्रा ३ ३.८) इति । परिहारः प्रदानम् । यथा

३५ १० त–न्वेदनम् । ११–११. त–एता ऋत्विजो अन्तर्वेदिमध्ये दक्षिणा एवाद्रुद्धा , त्रि१–एता ऋत्विजो अन्तर्वेदिमध्ये दक्षिणा एवावरुद्धा । १२. त–' वेद्याम् ' नास्ति । १३. इ उ पा हा–' कृष्णाजिने ' नास्ति । १४ इ उ त त्रि१.पा–इदमस्य । १५. इ.उ.त.क.पा हा–दत्यादिरूपादिरूप । १६ क–'यागनिष्पादकहेतुत्वात्, आ.पा हा–'यागहेतुत्वात् । १७. आ प.–इतोऽस्य । १८. त–'प्रधानम्'

प्रजापतिरन्तर्यामितया प्रेरक एवं ब्रह्माऽपि तदा तदाऽनुज्ञया यज्ञस्य प्रवर्तक इति ब्रह्मणः प्राजापत्यत्वम् ॥ वेदव्यतिरिक्तसाधनेन येन केनापि [१९]प्रक्रान्तपात्रेण भागान्तरं देयमित्याह—" अथ काममन्येन " ( तैब्रा ३.३.८ ) इति ॥ होतुर्ब्रह्मानन्तर्यं विधत्ते—" ततो होत्रे । मध्यं वा एतद्यज्ञस्य यद्धोता । मध्यत एव यज्ञं प्रीणाति " ( तैब्रा ३.३.८ ) इति ॥ सामिधेनीरारभ्योपरिष्टादेव होतुर्व्यापारात् यज्ञमध्यत्वम् । अध्वर्योर्होत्रानन्तर्यं विधत्ते—" अथाध्वर्यवे । प्रतिष्ठा वा एषा यज्ञस्य । यदध्वर्युः " ( तैब्रा ३.३.८ ) इति । प्रतिष्ठा समाप्तिः । समिष्टयजुर्होमपर्यन्तं यज्ञमध्वर्युः समापयति ॥ आग्नीध्रमारभ्याध्वर्युपर्यन्ते क्रममन्वाहार्यादिदक्षिणायामतिदिशति— " तस्माद्यथर्षिश्चस्यैतामेवाऽऽवृतमनु । अन्या दक्षिणा नीयन्ते । यज्ञस्य प्रतिष्ठित्यै " ( तैब्रा ३.३.८ ) इति । आवृत् प्रकारः ॥ आग्नीध्रं प्रति प्रैषमुत्पादयति— " अग्निमग्नीत् सकृत् सकृत् संमृड्ढीत्याह । पराङिव ह्येतर्हि यज्ञः " ( तैब्रा ३.३.८ ) इति । [२०]वीप्सया परिधिसंमार्जनमपि लभ्यते । अस्मिन् काले समाप्तप्रायत्वात् यज्ञः पराङ्मुख इव वर्तते । ततः सकृत् संमार्जनं पर्याप्तम् । अथ होतारं प्रत्यस्ति कश्चित् प्रैषमन्त्रः— " इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि" ( बौश्रौ १.१९, द्र. शब्रा १.९.१.१ ) इति । भद्रं फलं तस्य वाच्यं वचनं तदर्थम् " अग्निर्होता[२१] " ( तैब्रा ३.३ ) इत्यादिश्रुतिसिद्धा दैव्या होतारः परमेश्वरेण प्रेषिताः[२२] । " इदं द्यावापृथिवी भद्रमभूत् " ( तैब्रा ३.३ ) इत्याद्यनुवाकः सूक्तं, तस्य वाको वचनं, तदर्थं मानुषो होता प्रेषितः । अतो हे होतः, त्वं तत् सूक्तं ब्रूहि ॥ तमिमं मन्त्रमुत्पाद्य तत्र इषितपदस्य भद्रवाच्यायेति पदस्य च [२३]तात्पर्यं व्याचष्टे— " इषिता दैव्या होतार इत्याह । इषितः हि कर्म क्रियते । भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहीत्याह । आशिषमेवैतामाशास्ते " ( तैब्रा ३.३.८ ) इति । अस्ति होतारं प्रत्यपरः प्रैषमन्त्रः— " स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि " ( बौश्रौ १.१९,शब्रा २.६.१.४७ ) इति । दैव्यानां होतॄणामयं यज्ञः स्वाधीनः, मानुषेभ्यो होतृभ्यः स्वस्त्यस्तु । हे होतः, त्वं शंयुदेवस्य संबन्धिनं "तच्छंयोरा वृणीमहे" ( तैब्रा ३.५.११ ) इत्यनुवाकं ब्रूहि । अस्मिन् मन्त्रे स्वगाशब्दस्वस्तिशब्दशंयुशब्दानामभिप्रायं क्रमेण दर्शयति— " स्वगा दैव्या होतृभ्य इत्याह । यज्ञमेव तत्स्वगा करोति । स्वस्तिर्मानुषेभ्य इत्याह । आशिषमेवैतामाशास्ते । शंयोर्ब्रूहीत्याह । शंयुमेव बार्हस्पत्यं भागधेयेन समर्धयति " (तैब्रा ३.३.८) इति । शंयुर्बृहस्पतेः पुत्रः ॥ इत्यमिडाभागाद्यनुष्ठानं विधायास्मिन् काण्ड आम्नाताभ्यां ' वाजस्य मा ' ( तैसं१.१.१३ ) इत्येताभ्यामृग्भ्यां स्रुग्व्यूहनं विधत्ते—" अथ स्रुचावनुष्टुब्भ्यां वाजवतीभ्यां व्यूहति । प्रतिष्ठा वा अनुष्टुक् । अन्नं वाजः प्रतिष्ठित्यै । अन्नाद्यस्यावरुद्ध्यै " (तैब्रा ३.३.९) इति । चतुर्भिः पादैर्गवादीनां प्रतिष्ठितत्वात् तद्वदनुष्टुभः प्रतिष्ठाहेतुत्वम् । वाजशब्दस्यान्नवाचित्वात् तद्वत्यौ ऋचौ अत्तुं योग्यस्यान्नस्यावरोधाय भवतः ॥ सामान्याकारेण विहितं स्रुग्व्यूहनं विशेषाकारेण विशदयति—" प्राचीं जुहूमूहति । जातानेव भ्रातृव्यान् प्रणुदते । प्रतीचीमुपभृतम् । जनिष्यमाणानेव प्रतिनुदते । स विषूच एवापोह्य सपत्नान् यजमानः । अस्मिँल्लोके प्रतितिष्ठति " ( तैब्रा ३.३.९ ) इति । वैरिणः परस्परवियुक्ता विविधदिक्पलायिता एव यथा भवन्ति तथा तानपोह्य प्रतितिष्ठति ॥ वाजवतीभ्यामिति द्विवचनार्थमनूद्य प्रशंसति— " द्वाभ्याम् । द्विप्रतिष्ठो हि " ( तैब्रा ३.३.९ ) इति । द्वाभ्यां पादाभ्यां प्रतिष्ठा यस्यासौ द्विप्रतिष्ठः ॥

१९. तं–पात्रेण । २०. इ.उ.ह्रा–वीप्सायाम् । २१. इ–अग्निर्होता पृथिवी होत्रा; क.तं.त्रि१.पा.ह्रा–अग्निर्होता पृथिवी होता । २२. इ.उ.क.पा.ह्रा–प्रेरिताः । २३. तं.त्रि१–अभिप्रायम् ।

वसुभ्यस्त्वा रुद्रेभ्यस्त्वाऽऽदित्येभ्यस्त्वाऽक्त॒ꣳ रिहा॑णा वि॒यन्तु॒ वयः॑ ।
वसु॑भ्य॒ इति॑ वसु॑-भ्य॒ः । त्वा॒ । रु॒द्रेभ्यः॑ । त्वा॒ । आ॒दि॒त्येभ्यः॑ । त्वा॒ ।
अ॒क्तम् । रिहा॑णाः । वि॒यन्तु॑ । वयः॑ ।

जुहा परिधीननक्ति – ' वसुभ्यः ' इति ॥ [4]वस्वर्थं त्वाम्[4] अनज्मीति शेषः । ५ वस्वादितृप्तये[5] त्वामनज्मि इति[6] मध्यमदक्षिणोत्तराणां क्रमेण मन्त्राः, वस्वादयश्च वेदिपरिग्रहार्थमागताः एतेन परिष्वञ्जनेन प्रीयन्त इति ॥

स्रुक्षु प्रस्तरमनक्ति, तत्र जुह्वामग्राण्यनक्ति – ' अक्तम् ' इति परोष्णिहा त्रिपदया भूतेन्द्रियवस्वक्षरया ॥ [V]अक्तं कृताञ्जनमिमं प्रस्तरं [V]रिहाणा लिहानाः आस्वादयन्तः, ते वक्ष्यमाणा रश्मय । लिह आस्वादने, स्वरितेत् । वर्णव्यत्ययेन लकारस्य रेफः । व्यत्ययेनानुदात्ते-
१० त्वमाश्रित्याऽऽत्मनेपदम् ( पा १.३ १२ ), लसार्वधातुकानुदात्तत्व (६.१.१८६) च कृतमिति मन्यामहे । [7]वृषादिषु ( पा ६.१.२०३ ) वाऽय[7] द्रष्टव्यः ॥

उपभृति मध्यान्यनक्ति – ' वियन्तु ' इति ॥ ' वयः ' इति वेर्बहुवचनमिति यास्क. ( नि २.६ ) । " वातेर्डिच्च* " ( उ ५८३ ) इति विधीयमान इण्प्रत्ययो वेतेरपि भवति । डित्त्वाट्टिलोप ( पा ६.४.१४३ ) । [V]वय॰ [8]प्रजनिष्णवः आदित्यरश्मयः एतल्लेहनेन
१५ [V]वियन्तु [9]वृद्ध्यर्थं गर्भं धारयन्तु । पादादित्वान्न निहन्यते । वी गतिप्रजननकान्त्यसनखादनेषु ॥

वसुभ्य इति ॥ कल्प — " जुह्वा परिधीननक्ति वसुभ्यस्त्वेति मध्यमं रुद्रेभ्यस्त्वेति दक्षिणमादित्येभ्यस्त्वेत्युत्तरम् " ( बौश्रौ १ १९ ) इति ॥ त्रिष्वपि ' अनज्मि ' इत्यध्याहार ॥ स्पष्टार्थतां दर्शयति— " वसुभ्यस्त्वा रुद्रेभ्यस्त्वाऽऽदित्येभ्यस्त्वेत्याह । यथायजुरेवैतत् " ( तैब्रा ३.३.९ ) इति ॥

अक्तमिति ॥ बौधायन — " स्रुक्षु प्रस्तरमनक्त्यक्तꣳ रिहाणा इति जुह्वामग्राणि वियन्तु
२० वय इत्युपभृति मध्यानि प्रजां योनिं मा निर्मृक्षमिति ध्रुवाया मूलानि " ( बौश्रौ १.१९ ) इति । आपस्तम्बस्त्वाद्यद्वितीयमन्त्रावेकीकृत्याऽऽह—" अक्तꣳ रिहाणा इति[24] जुह्वामग्रं प्रजां [25]योनिमित्युपभृति मध्यम् । आ प्यायन्तामाप ओषधय इति ध्रुवाया मूलम् " ( आपश्रौ ३.६.१ ) इति ॥ पक्षिण आज्येन [V]अक्तं प्रस्तराग्रं लेलिहाना विविधं मार्गं गच्छन्तु । अहं तु [V]प्रजां तत्कारणं च [V]मा निर्नाशयामि । आज्यरूपा [V]आप प्रस्तरमूला ओषधीराप्याययन्तु ॥ विधत्ते— " स्रुक्षु प्रस्तरमनक्ति । इमे वै लोका स्रुच । यजमान
२५ प्रस्तर । यजमानमेव तेजसाऽनक्ति । त्रेधाऽनक्ति । त्रय इमे लोका । एभ्य एवैनं लोकेभ्योऽनक्ति । अभिपूर्वमनक्ति । अभिपूर्वमेव यजमान तेजसाऽनक्ति " ( तैब्रा ३ ३.९ ) इति । अभिमुखमग्र पूर्वं यथा

४-४ मै– ' वस्वर्थं त्वाम् ' नास्ति । ५. व– 'तृप्त्यर्थम् । ६ व– ' इति ' इत्यस्यानन्तर ' मन्तव्यम् ' । ७-७. तं ति. प व–पृषोदरादिषु वा । *सर्वत्र लिखितपुस्तकेषु यद्यपि ' वेञो डित् ' इति लभ्यते, तथाप्यत्र शुद्धीकृत्य पाठो निर्धारित । ' वेञो डित् ' इत्याकार सूत्रादिषु नोपलभ्यते । ' वेञो
३० डिच्च ' (उ. ५२१) इत्युणादिसूत्र तु तन्तुसन्तानेऽर्थे विद्यमानस्य वेञः परस्य ईचि–प्रत्ययस्य डित्त्व विदधाति । ' वातेर्डिच्च ' ( उ ५८३ ) इति सूत्र गतिगन्धनार्थयोर्विद्यमानस्य वाते इण विदधत् तस्य इणः डित्त्वमपि प्रतिपादयति । अनेन सूत्रेण विहित इण् वातेरिव अत्र वेतेरपि भवतीत्याशय । ८ ति. प–प्रजनयिष्णव । ९. पं– वृष्ट्यर्थम्, सं ति व– प्रजायतां वृष्ट्यर्थम् ।

२४. आ.फ–वियन्तु वय इति । २५. आ.फ–योनिं मा निर्मृक्षमित्युपभृति ॥

प्रजां योनिं मा निर्मृक्षमा प्यायन्तामाप ओषधयो
मरुतां पृषतयः स्थ दिवं (१) गच्छ ततो नो वृष्टिमेरय ।
प्रजामिति प्र—जाम् । योनिम् । मा । निरिति । मृक्षम् ।
एति । प्यायन्ताम् । आपः । ओषधयः । मरुताम् । पृषतयः । स्थ ।
दिवम् (१) । गच्छ । ततः । नः । वृष्टिम् । एति । ईरय । ५

ध्रुवायां [10]मूलान्यनक्ति — 'प्रजाम्' इति ॥ अहं [v]प्रजां [v]योनिं च तत्कारणभूतमन्नादिकं [v]मा [v]निर्मृक्षं मा विनीनशम्, अपि तु वर्धयितुमिच्छामि, तस्माद्वृद्धयर्थं 'वियन्तु वयः' इति । मृशेः "शल इगुपधादनिटः क्सः" (पा ३.१.४५) इति च्लेः क्सादेशः । कृदुत्तरपदप्रकृतिस्वरेण (पा ६.२.१३९) प्रजाशब्दोऽन्तोदात्तः ॥

अत्र, प्रथमद्वितीयपादावष्टाक्षरौ [11]तृतीयो द्वादशाक्षरो यस्यास्तां परोष्णिहमाचक्षते[11] १० (पिंसू ३.२१)। इह तु [12]तृतीयोऽष्टाक्षरः पादः, 'द्वादशाक्षर आऽष्टाक्षरतायाः प्रतिक्रामति' इति; प्रथमद्वितीयौ पञ्चाक्षरौ, 'अष्टाक्षर आ चतुरक्षरतायाः प्रतिक्रामति' इति[12] ॥

आहवनीये प्रस्तरं प्रहरति — 'आप्यायन्ताम्' इति [13]यजुरादिकया, 'दिवं गच्छ' [14]इत्येकपदया जगत्या, 'ततो नः' इत्येकपदया च गायत्र्या ॥ हे प्रस्तर, अनेन त्वत्प्रहरणेन [v]आपः [v]ओषधयः च [v]आ [v]प्यायन्ताम् वर्धन्ताम् । वर्षेण ह्यपामोषधीनां च वृद्धौ प्रजा योनयश्च १५

भवति तथा प्रस्तरमनक्त्यात् । यजमानोऽपि मुख एव सभासु वक्तृत्वेन तेजस्वी भवति ॥ मन्त्रगतस्याक्तशब्दस्याभिप्रायमाह— "अक्त<sup></sup>रिहाणा इत्याह । तेजो वा आज्यम् । यजमानः प्रस्तरः । यजमानमेव तेजसाऽनक्ति" (तैब्रा ३.३.९) इति ॥ विशब्दसूचितं दर्शयति— "वियन्तु वय इत्याह । वय एवैनं कृत्वा । सुवर्गं लोकं गमयति" (तैब्रा ३.३.९) इति । मन्त्रे प्रथमाबहुवचनान्तो विशब्दः पक्षिवाची, ब्राह्मणे तु द्वितीयैकवचनान्तो वयःशब्दः ॥ 'मा निर्मृक्षम्' इत्येतस्याभिप्रायम् [26]आह—"प्रजां योनिं मा निर्मृक्षमित्याह । २० प्रजायै गोपीथाय" (तैब्रा ३.३.९) इति ॥ ओषधय इत्यत्र द्वितीया विवक्षितेत्याह— "आ प्यायन्तामाप ओषधय इत्याह । आप एवौषधीराप्याययति" (तैब्रा ३.३.९) इति । अत्र बहुवचनं द्रष्टव्यम् ॥

आ प्यायन्तामिति ॥ बौधायनः— "तमुपरीव प्रहरति* नात्यग्रं प्रहरति न पुरस्तात् प्रत्यस्यति न प्रतिशृणाति न विष्वञ्चं वियौत्यूर्ध्वमुद्योत्याप्यायन्तामाप ओषधयो मरुतां पृषतयः स्थ दिवं गच्छ ततो नो वृष्टिमेरयेति" (बौश्रौ १.१९) इति । आपस्तम्बः— "अनूच्यमाने सूक्तवाके मरुतां पृषतयः स्थेति २५ सशाखया प्रस्तरमाहवनीये प्रहरति" (आपश्रौ ३.६.६) इति । अत्र प्रस्तरप्रहृतौ 'नात्यग्रम्' इत्यादयो

१०. मै— मूलमनक्ति । ११–११. तं. ति—तृतीयतुरीयौ द्वादशाक्षरौ यस्यास्तां परोष्णिहेत्याचक्षते । १२–१२. तं. ति. पं. ब—अष्टाक्षरः प्रथमः पादः आचतुरक्षरतायाः प्रतिक्रामन्तीति प्रथमद्वितीयौ पञ्चाक्षरावभूताम् । द्वादशाक्षर अष्टाक्षरतायाः प्रतिक्रामन्तीति तृतीयोऽष्टाक्षरोऽभूत् । [ मैसूरपुस्तके तट्टिप्पण्याम् — 'अष्टाक्षराः आ चतुरक्षरतायाः प्रतिक्रामन्ति' इति प्रथमद्वितीयौ पञ्चाक्षरावभूताम् । 'द्वादशाक्षराः आऽष्टाक्ष- ३० रतायाः प्रतिक्रामन्ति' इति तृतीयोऽष्टाक्षरोऽभूत् ।] १३. तं. ति. ब— यजुषा । १४. तं. ति—इत्येकपदया च ।

२६. तं. त्रि१— दर्शयति । *श्रौतसूत्रे तु 'प्राञ्चं प्रहरति' ।

आयुष्पा अ॑ग्नेऽस्यायु॑र्मे पाहि चक्षुष्पा अ॑ग्नेऽसि चक्षु॑र्मे पाहि ध्रुवाऽसि

आयुष्पा इत्या॑यु –पा । अग्ने । असि । आयुः । मे । पाहि ।
चक्षुष्पा इति॑ चक्षु –पाः । अग्ने । असि । चक्षुः । मे । पाहि । ध्रुवा । असि ।

वर्धयितुं शक्यन्त इति । ओपधिशब्दस्य दासीभारादित्वात् ( पा ६.२.४२ ) पूर्वपदप्रकृति-
५ स्वरत्वम् । ओपशब्दो घञन्त । कथमेतत् प्रहरणेन तासामाप्यायनमित्यत आह – [v]मरुतां [v]पृषतय अश्वा [v]स्थ, मरुतामश्वा इव शीघ्रगतिरत्वमसीति यावत् । [15]अश्वापेक्षया बहुवचनम् । पृषु वृषु सेचने । "वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च" (उ २५०) इत्यतिप्रत्ययान्तो निपातित. । व्यत्ययेन श । "उगितश्च" (पा ४.१ ६) इति ङीप् । वर्णव्यत्ययेन ह्रस्वत्वम् । छसार्वधातुकानुदात्तत्वे (पा ६.१ १८६) धातुस्वरः । "शतुरनुमः॰" ( ६.१ १७३ ) इति
१० नद्युदात्तत्व[16] बहुलवचनादेव न क्रियते शस्वरश्च । वृषादिर्वाऽयं द्रष्टव्य ( पा ६.१.२०३ ) । भवत्वेवं शीघ्रगतित्व, किमेतावता तासा वृद्धिरित्यत आह–[v]दिवम् आदित्य शीघ्र [v]गच्छ । ततः किमित्यत आह– [v]तत आदित्यमण्डलादस्माक [v]वृष्टिम् [v]एरय आगमय । एव च कृते अपामोषधीनां चाप्यायन भविष्यति । ततश्च प्रजायोन्योर्वृद्धिश्च भविष्यति । "मन्त्रे वृष॰" (पा ३.३.९६ ) इति वृषेः क्तिन् उदात्तत्व विधीयमान बहुलवचनान्न क्रियते ।
१५ यद्वा–वृष्टिहेतुरादित्यरश्मि वृष्टिः । करणे क्तिन् । तामेरय अस्मदभिमुखं प्रेरय । उदात्तविधौ भाषाधिकारादत्र न भवति ॥

आहवनीयमुपतिष्ठते – 'आयुष्पा' इति ॥ हे [v]अग्ने, [v]आयुष्पाः सर्वेषामायुषो रक्षक. [v]असि । पातेर्विच् (पा ३.२.७५) । "नित्यं समासेऽनुत्तरपदस्थस्य" (पा ८.३.४५) इति विसर्जनीयस्य स॰ । "आदेशप्रत्यययोः" (पा ८.३.५९) इति षत्वम् । कृदुत्तरपदप्रकृति
२० स्वरत्वम्[17] (पा ६.२.१३९) । तस्मात् [v]आयुः [v]मे [v]पाहि । चक्षुपश्च त्व रक्षितासि, तस्मात्

नियमविशेषा । आहवनीयात्यय प्रस्तरात्यस्य न कार्यं । प्रस्तरस्य पुरस्तादन्यत् किमपि न प्रक्षिपेत् । [26]दर्भस्य कस्यचिच्छेदरूपा हिंसा न कार्या । दर्भाणा परस्परवियोगो न कार्यं. । किंतु कृत्स्न प्रस्तर मुपक्षेत् । आपस्तम्बस्य [28]तु 'मरुताम्' इति [29]प्रस्तरमन्त्रादि । सह शाखया वत्सापाकरणहेतुभूतया ॥ हे प्रस्तरावयवा दर्भा , यूयं वायुप्रेरितवृष्टिजन्यतया वायुना बिन्दव [v]स्थ । हे प्रस्तर, त्वं [v]दिव गत्वा[30]
२५ [v]वृष्टिं प्रेरय ॥ व्याचष्टे — "मरुता पृषतय स्थेत्याह । मरुतो वै वृष्ट्या ईशते । वृष्टिमेवावरुन्धे । दिवं गच्छ ततो नो वृष्टिमेरयेत्याह । वृष्टिर्वै द्यौः । वृष्टिमेवावरुन्धे" (तैब्रा ३ ३ ९) इति ॥

आयुष्पा इति ॥ कल्प — "अथोपोत्थायाऽऽहवनीयमुपतिष्ठत आयुष्पा अग्नेऽस्यायुर्मे पाहि चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहीति" (बौश्रौ १.१९) इति ॥ आयुश्चक्षुषो पालनीयत्वा दर्शयति—

१५. ब– अश्वापेक्षम् । १६. मे–आद्युदात्तत्वम् । १७. ब– °प्रकृतिस्वर ।

३० २७. इ उ पा हा–अन्यस्य । २८. इ.उ.तं.त्रि१.पा हा–'तु' नास्ति । २९. त.त्रि१.पा.हा–मन्त्रादिः । ३०. त्रि१–गच्छ ।

यं प॑रि॒धिं प॒र्यध॑त्था॒ अग्ने॑ देव प॒णिभि॑र्वी॒यमा॑णः* ।
यम् । प॒रि॒धिमिति॑ परि—धिम् । प॒र्यध॑त्था॒ इति॑ परि—अध॑त्थाः ।
अग्ने॑ । दे॒व॒ । प॒णिभि॒रिति॑ प॒णि—भिः । वी॒यमा॑णः ।

[V]मे [V]चक्षुः [V]पाहि अविनष्टं कुरु । "यावद्वा अध्वर्युः प्रस्तरं प्रहरति । तावदस्यायुर्मीयते" (तैब्रा ३.३.९) इत्यादि ब्राह्मणम् ॥　५

भूमिमभिमृशति — 'ध्रुवाऽसि' इति ॥ [१८]-हे भूमे, त्वं [V]ध्रुवा अचञ्चला [V]असि-[१८] तस्मात् मामपि ध्रुवं कुर्विति भावः ॥

मध्यमं परिधिमनुप्रहरति — 'यम्' इति त्रिष्टुभा पुरस्ताज्ज्योतिषा वसुरुद्रेशभवाक्षरपदया ॥ हे [V]अग्ने । पादादित्वान्न निहन्यते । [V]देव देवनादिगुणयुक्त । "आमन्त्रिते समानाधिकरणे०" (पा ८.१.७३) इति पूर्वस्य विद्यमानवत्त्वात् निहन्यत एव । [V]यं [V]परिधिं [V]पर्यधत्थाः परिहितवानसि । "यद्वृत्तान्नित्यम्" (पा ८.१.६६) इति निघाते निषिद्धे अट उदात्तत्वम् । "तिङि चोदात्तवति" (पा ८.१.७१) इति गतेर्निघातः । उदात्तवता तिङा गतिसमासः (पा २.२.१८) । परिधिशब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः (पा ६.२.१३९) ॥ सः [V]पणिभिः पणिनामभिः असुरैः [V]वीयमाणः वेष्ट्यमानः । तेषां निवारणार्थं [१९]-यं परिधिं-[१९]　१०

[२१]-"यावद्वा अध्वर्युः प्रस्तरं प्रहरति । तावदस्यायुर्मीयते-[२१] । आयुष्पा अग्नेऽस्यायुर्मे पाहीत्याह । आयुरेवास्मिन् धत्ते । [२२]-यावद्वा अध्वर्युः प्रस्तरं प्रहरति । तावदस्य चक्षुर्मीयते-[२२] । चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहीत्याह । चक्षुरेवाऽऽस्मिन् धत्ते" (तैब्रा ३.३.९) इति ॥　१५

ध्रुवेति ॥ कल्पः—'ध्रुवाऽसीत्यन्तर्वेदि पृथिवीमभिमृशति" (आपश्रौ ३.७.७) इति ॥ व्याचष्टे—"ध्रुवासीत्याह प्रतिष्ठित्यै" (तैब्रा ३.३.९) इति ॥

यमिति ॥ कल्पः—"मध्यमे [२३]-परिधिमनुप्रहरति-[२३] यं परिधिं पर्यधत्था अग्ने देव पणिभिर्वीयमाणः । तं त एतमनु जोषं भरामि नेदेष त्वदपचेतयाता इति । अथेतरावुपसमस्यति यज्ञस्य पाथ उपसमितमिति" (बौश्रौ १.१९) इति ॥ [२४]भोः [V]अग्ने [V]देव, स्तुतिभिः प्राप्यमाणस्त्वं स्वयं [V]यं [२५]-मध्यमं [V]परिधिं-[२५] पश्चिमे भागे स्थापितवानसि, तवानुकूलतया प्रियं [V]तम् [V]एतं परिधिं त्वयि [V]भरामि । [V]एष त्वत्तोऽपरक्तः [V]न एव । हे दक्षिणोत्तरपरिधी, [V]यज्ञस्य फलरूपमन्नं युवामुपसंप्राप्नुतम् ॥　२०
'पर्यधत्था' इत्येतत् सत्यमित्याह—"यं परिधिं पर्यधत्था इत्याह । यथायजुरेवैतत्" (तैब्रा ३.३.९) इति ॥ परिधावग्नेः प्रीत्युत्पादनायाग्निसंबोधनमित्याह—"अग्ने देव पणिभिर्वीयमाण इत्याह । अभय एवैनं जुष्टं करोति" (तैब्रा ३.३.९) इति ॥ अनुशब्देन ज्ञातीनामनुरक्तत्वं सूच्यत इत्याह—　२५

* तैब्रा १३.९, मैत्रायणीसंहितायां (४.१.१४) "वीयमानः" । द्र. भर्तृहरिकृतमहाभाष्यदीपिका [ BORI । पृ. १ ] "तैत्तिरीयाः कृतणत्वमग्निशब्दमुच्चारयन्ति" ।

१८–१८. मै– ध्रुवा नित्या त्वमसि । १९–१९. मै– 'यं परिधिम्' नास्ति ।　३०

३१–३१ इ. उ. पा. हा–'यावद्वा अध्वर्युः ''' मीयते' नास्ति । ३२–३२. इ. उ. पा. हा–'यावद्वा '''''' चक्षुर्मीयते' नास्ति । ३३–३३. इ. उ. पा. हा–परिधिं प्रहरति । ३४. तं.त्रि१–हे । ३५–३५. आ.क.हा–मध्यमपरिधिम् ।

तं ते एतमनु जोषं भराम्येष नेदेष त्वदपचेतयातै
यज्ञस्य पाथ उप समितꣳ सꣳस्रावभागाः स्थेषा बृहन्तः प्रस्तरेष्ठा बर्हिषदश्च(२)देवा

तम् । ते । एतम् । अन्विति । जोषम् । भरामि । न । इत् । एषः । त्वत् ।
अपचेतयाता इत्यप-चेतयाति । यज्ञस्य । पाथः । उप । समितिं । इतम् ।
५ सꣳस्रावभागा इति सꣳस्राव-भागाः । स्थ । इषा । बृहन्तः ।
प्रस्तरेष्ठा इति प्रस्तरे-स्थाः । बर्हिषद इति बर्हि-सदः । च ( २ ) । देवाः ।

पर्यधत्था । छन्दसि कर्मणि लकारः । व्यत्ययेन णकारः । वच्यादिसूत्रेण (पा ६.१.१५) संप्रसारणम् । [v]तम् [v]एत मध्यम परिधि तव [v]जोषम् इष्टम् । कर्मणि घञ् (पा ३.३.१९) । [v]अनु [v]भरामित्यामेवानुगतं हरामि प्रहरामि । "हृग्रहोर्भश्छन्दसि" (पा ८.२.३२ वा १) इति भत्वम् ।
१० युक्तमेव तन्वेवं कर्तुमित्याह—[v]एषः अयं परिधिः, एवं नाम [20]तवाभिमनः त्वत्तो हेतोः [v]न [v]इत् [v]अपचेतयातै नैवापरक्तचित्तो भवेत् । यद्यय न प्रहियेत, उपेक्षितोऽहमनेनाग्निनेति त्वत्तोऽपचेतयेत । तस्मात्त्वय्येवैनमनुप्रहरामि । चित संचेतने, चुरादिः, अनुदात्तेत् (पा १.३.१२) । तस्माल्लेटि "लेटोऽडाटौ" (पा ३.४.९४) इत्याडागमः । "वैतोऽन्यत्र" (पा ३.४.९६) इत्यैत्त्वम् । "निपातैर्यत्" (पा ८.१.३०) इत्यादिना निघातप्रतिषेधः । पूर्ववत् गति-
१५ निघातसमासौ । णिचश्चित्त्वादुदात्तत्वम् (पा ६.१.१६३) ॥

इतरावुपसमस्यति — 'यज्ञस्य' इति ॥ [v]यज्ञस्य साध्यतया संबन्धि यत् [v]पाथः अन्नं तद्युवामपि [v]उप [v]समितम् [21]उपसंप्राप्तुमितम् । अचेतनानामपि यज्ञोपयुक्तानां फलसंबन्धः प्रतिपादितो भवति । 'उदके थुट् च' (उ ६५३) इत्यधिकृत्य "अन्ने च" (उ ६५४) इति पातेरसुन् प्रत्ययः ॥

२० एतान् संस्रावेणाभिघारयति — 'संस्रावभागाः' इति त्रिष्टुभा चतुष्पदया ॥ संस्राव्यत

"तं ते एतमनु जोषं भरामीत्याह । सजातानेवास्मा अनुकान् करोति" (तैब्रा ३.३.९) इति ॥ अपरागनिषेधमानुकूल्यार्थं इत्याह — "नेदेष त्वदपचेतयाता इत्याहानुख्यात्यै" (तैब्रा ३.३.९) इति ॥ अनेकयोः परिध्योः सहकथनं [26]बहुदिव्यानुकूल्यायेत्याह—"यज्ञस्य पाथ उपसमितमित्याह । भूमानमेवोपैति" (तैब्रा ३.३.९) इति ॥ विधत्ते—"परिधीन् प्रहरति । यज्ञस्य समिष्ट्यै"
२५ (तैब्रा ३.३.९) इति । समिष्टि सपूर्तिः ॥

संस्रावभागा इति ॥ कल्पः — "अथैनान् संस्रावेणाभिजुहोति । जुह्वामुपभृतं [*]संस्रावयति संस्रावभागाः स्थेषा बृहन्तः प्रस्तरेष्ठा बर्हिषदश्च देवा इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन् बर्हिषि [§]मादयध्वमिति" (बौश्रौ १.१९) इति ॥ हे [v]विश्वे [v]देवाः, यूयं [v]संस्रावभागा

२०. ब— त्वदभिमतः । २१. मे— उपसंप्राप्तुतम् ।

३० २६. तै—धनीबाहुल्यार्थमित्याह, त्रि १—धनादिबाहुल्यार्थमित्याह । [*]बौश्रौसूत्रे 'सम्प्रस्रावयति' । [§]बौश्रौसूत्रे 'मादयध्वं स्वाहेति' ॥

**इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन् बर्हिषि**

इमाम् । वाचम् । अभीति । विश्वे । गृणन्तः ।
आसद्येत्या—सद्य । अस्मिन् । बर्हिषि ।

इति संस्रावः । कर्मणि घञ् ( पा ३· ३·१९ ) । थाथादिस्वरेणोत्तरपदान्तोदात्तत्वम् ( पा ६·२·१४४ ) । संस्रावो जुहूपभृद्भ्यां सिच्यमान आज्यशेषो भागो येषां तादृशाः [V]स्थ भवत । लिङर्थे लेट् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ( पा ६·२·१ )। " वसवो वै रुद्रा आदित्याः स[21]स्रावभागाः " ( तैब्रा ३·३·९ ) इत्यादि ब्राह्मणम् । कीदृशाः पुनस्त इत्याह — [V]इषाः इच्छावन्तः [22]भागं लब्धुम् । इषेः क्विबन्तात् अर्शआदित्वात् अच्प्रत्ययः ( ५·२·१२७ ) । [V]बृहन्तः महान्तः सर्वैराराधनीयाः । 'प्रस्तरेष्ठा बर्हिषदश्च देवाः' इति द्वितीयः पादः । ये [V]प्रस्तरेष्ठाः, प्रस्तरे तिष्ठन्तीति । " स्थः क च " ( पा ३·२·७७ ) इति क्विप्प्रत्ययः । " तत्पुरुषे कृति बहुलम् " ( पा ६·३·१४ ) इत्यलुक् । सुषामादित्वात् षत्वम् ( ८·३·९८ ) । कृदुत्तरपदप्रकृतिस्वरत्वम् ( ६·२·१३९ ) । ये [V]च [V]बर्हिषदः । बर्हिषि [23]यज्ञे सीदन्तीति । " सत्सूद्विष° " ( पा ३·२·६१ ) इत्यादिना क्विप् । पृषोदरादित्वात् सकारलोपः ( ६·३·१०९ ) । पूर्ववत् षत्वस्वरौ । [V]विश्वे अपि [V]देवाः देवनादिगुणयुक्ता यूयं [V]माम् [24]अस्मदीयां [25]युष्मद्विषयां स्तोत्ररूपां [V]वाचम् [V]अभि [V]गृणन्तः आभिमुख्येन शब्दयन्तः, अहो सम्यगियं स्तुतिः कृतेत्येवं प्रशंसन्तः । " अभिरभागे " ( पा १·४·९१ ) इति लक्षणादिषु ( पा १·४·९० ) कर्मप्रवचनीयत्वम् । [V]अस्मिन् [V]बर्हिषि स्तीर्णे यज्ञे

[V]स्थ । जुहूपभृद्भ्यां सिच्यमान आज्यशेषः संस्रावः, स एव भागो येषां ते संस्रावभागाः । कीदृशा देवाः । तं भागं लब्धुमिच्छावन्तः, [V]बृहन्तः महान्तः सर्वैराराधनीयाः । तत्र केचित् प्रस्तरमुष्टौ तिष्ठन्ति । अन्ये त्वास्तीर्णे बर्हिषि सीदन्ति । अस्माभिः क्रियमाणाम् [V]इमां स्तुतिम् [27]अभिवीक्ष्य समीचीनेयमिति [V]गृणन्तः[28] यूयम् [V]अस्मिन् यज्ञ उपविश्य हृष्टा भवत ॥ विधत्ते—" स्रुचौ संस्रावयति । यदेव तत्र क्रूरम् । तत्तेन शमयति । जुह्वामुपभृतम् । यजमानदेवत्या वै जुहूः । भ्रातृव्यदेवत्योपभृत् । यजमानायैव भ्रातृव्यमुपस्तिं करोति " ( तैब्रा ३·३·९ ) इति ॥ व्याचष्टे— " संस्रावभागाः स्थेत्याह । वसवो वै रुद्रा आदित्याः संस्रावभागाः । तेषां तद्भागधेयम् । तानेव तेन प्रीणाति " ( तैब्रा ३·३·९ ) इति ॥ अस्मिन् मन्त्रे देवतासंबन्धमृचश्छन्दोविशेषं च प्रशंसति—" वैश्वदेव्यर्चा । एते हि विश्वे देवाः । त्रिष्टुभ्भवति । इन्द्रियं वै त्रिष्टुप् । इन्द्रियमेव यजमाने दधाति " ( तैब्रा ३·३·९ ) इति । एते वस्वादिरूपाः[29] ॥

२२. मै– भागान् । २३. मै– 'यज्ञे' नास्ति । २४. ब– मदीयाम् । २५. मै– त्वद्विषयाम्; तं– युष्मदीयाम् ।

२७. श्रि १–उत्प्रेक्ष्य ; क.तं – अभिलक्ष्य । २८. तं–गृण्वन्तः । २९. तं. श्रि १–वस्वादयः ।

मादयध्वमग्नेर्वामपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनी सुम्ने मा धत्तं धुरि धुर्यौ पातमग्नेऽदब्धायोऽशीततनो पाहि माऽद्य दिवः

मादयध्वम् । अग्ने । वाम् । अपन्नगृहस्येत्यपन्न–गृहस्य । सदसि । सादयामि । सुम्नाय । सुम्निनी इति । सुम्ने । मा । धत्तम् । धुरि । धुर्यौ । पातम् ।

५ अग्ने । अदब्धायो इत्यदब्ध–आयो । अशीततनो इत्यशीत–तनो । पाहि । मा । अद्य । दिव ।

ᵛआसध उपविश्य ᵛमादयध्व तृप्यत । मद तृप्तियोगे, चौरादिक, *आकुस्मीय आत्मनेपदी । आसदेति कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६ २·१३९ )। " ऊडिदम्° " ( पा ६·१·१७१ ) इत्यादिना इदम सप्तम्या उदात्तत्वम् । " स्रुचौ सप्रस्नावयति " ( तैब्रा ३·३·९ ) इत्यादि ब्राह्मणम् । " वैश्वदेव्यर्चा " ( तैब्रा ३·३·९ ) इत्यादि च ॥

१० धुरि स्रुचौ वा स्रुचौ विमुञ्चति – ' अग्ने ' इति ॥ हे जुहूपभृतौ, ᵛवा युवाम् ᵛअग्ने ᵛअपन्नगृहस्य अपन्नस्थानस्य ᵛसदसि सदने निश्चलभूते धुरादौ ᵛसादयामि स्थापयामि । किमर्थम् ? ᵛसुम्नाय सुम्नार्थं यजमानस्य सुख यथा स्यादिति । हे ᵛसुम्निनी ²⁶सुखयित्र्यौ । " वा छन्दसि " ( पा ६ १·१०६ ) इति पूर्वसवर्णदीर्घत्वम् । मामध्वर्यु ᵛसुम्ने ᵛधत्तं स्थापयतम् । किं च ᵛधुरि यागलक्षणायामस्या वर्तमानौ ᵛधुर्यौ अस्या धुरो वोढारौ पत्नीयजमानौ

१५ ᵛपात रक्षतम् । " धुरो यड्ढकौ " ( पा ४·४ ७७ ) इति यत्प्रत्यय । " तित्स्वरितम् " ( पा ६·१·१८५ ) इति स्वरितत्वम् । " यतोऽनाव " ( पा ६ १·२१३ ) इत्याद्युदात्तत्व

अग्नेरिति ॥ बौधायन — " अथ प्रदक्षिणमावृत्य प्रत्यङ्ङुदाद्रुत्य धुरि स्रुचौ ⁴⁰विमुञ्चत्यग्नेर्वामपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनी सुम्ने मा धत्त धुरि धुर्यौ पातमिति " ( बौश्रौ १ १९ ) इति ॥ हे जुहूपभृतौ, युवामविनश्वरगृहस्य पृथिव्यभिमानिनो वह्ने स्थाने शकटरूपे यजमानस्य सुखाय

२० स्थापयामि । हे सुखवत्यौ, सुखे मा ⁴¹स्थापयत यज्ञभारवाहिनावेतौ दंपती रक्षतम् ॥ यथोक्त मन्त्रार्थं दर्शयति— " अग्नेर्वामपन्नगृहस्य सदसि सादयामीत्याह । इय वा अग्निरपन्नगृह । अस्या एवैने सदने सादयति । सुम्नाय सुम्निनी सुम्ने मा धत्तमित्याह । प्रजा वै पशव सुम्नम् । प्रजामेव पशूनात्मन धत्ते । धुरि धुर्यौ पातमित्याह जायापत्योर्गोपीथाय " ( तैब्रा ३·३ ९ ) इति । अत्राऽऽपस्तम्बो मन्त्रभेदमाश्रित्य ' अग्नेर्वाम् ' इति शकटस्य पूर्वभागे स्रुचौ सादयित्वा ' धुरि धुर्यौ ' इति युगधुरो प्रोहेत् इति मन्यते ( आपश्रौ २ ८·४ )॥

२५ अग्न इति ॥ कल्प —" अपर चतुर्गृहीतं गृहीत्वाऽन्वाहार्यपचन एवेध्मप्रव्रश्चनान्यभ्याधाय फलीकरणानोप्य ⁴²फलीकरणाञ्जुहोत्यग्नेऽदब्धायोऽशीततनो पाहि माऽद्य दिव पाहि प्रसित्यै पाहि

* ' चित सचेतने ' इत्यस्मिन् धातौ ' आकुस्मादात्मनेपदिन ' इति गणसूत्र द्रष्टव्यम् ।
२६ मै- सुम्नवत्यौ, ब–सुखवत्यौ ।

४०. इ उ पा हा–मुञ्चत्यग्नेर्° । ४१. इ च.पा मा हा–स्थापयतः । ४२. क–फलीकरणं
३० जुहोत्यग्ने°, बौश्रौसूत्रे ' फलीकरणहोमं जुहोत्यग्ने° ' ।

पाहि प्रसि॑त्यै पाहि दुरि॑ष्ट्यै पाहि दु॑रद्म॒न्यै पाहि दुश्च॑रि॒ता॒द॑वि॑षं
नः पि॒तुं कृ॑णु सु॒षदा॒ योनि॒ꣳ स्वाहा॑

पाहि। प्रसि॑त्या इति प्र–सि॒त्यै। पाहि। दुरि॑ष्ट्या इति दुः–इ॒ष्ट्यै।
पाहि। दुरद्म॒न्या इति दुः–अद्म॒न्यै। पाहि। दुश्च॑रि॒तादिति दुः–च॒रि॒तात्।
अवि॑षम्। नः। पि॒तुम्। कृ॒णु। सु॒षदेति सु–सदा॑। योनि॑म्। स्वाहा॑। ५

बहुलवचनात् न भवति। "धुरि धुर्यौ पातमित्याह। जायापत्योर्गोपीथाय" (तैब्रा ३.३.९) इति ब्राह्मणम्॥

अन्वाहार्यपचने फलीकरणहोमं जुहोति — 'अग्ने' इति यजुरादिकया, 'अविषं नः पितुं कृणु' इति गायत्र्यैकपदया, 'सुषदा' इति यजुरन्तया॥ हे [V]अग्ने [V]अदब्धायो अहिंसित-जीवित। "छन्दसीणः" (उ २) इत्युण्प्रत्ययः। हे [V]अशीततनो उष्णशरीर। "नामन्त्रिते १० समानाधिकरणे°" (पा ८.१.७३) इति पूर्वस्याविद्यमानत्वनिषेधात् उभयत्राप्याष्टमिको निघातः (पा ८.१.१९)। [V]अद्य अस्मिन् कर्मणि क्रियमाणे मां [V]पाहि। आमन्त्रितत्रयस्याविद्य-मानत्वात् "तिङ्ङतिङः" (पा ८.१.२८) इति निघाताभावः। [V]दिवः द्युलोकात् द्युलोक-वासिभ्यो देवेभ्यः, यथा ते कर्मापराधेन क्रुद्धा न हिंसन्ति तथा कुरु। "ऊडिदम्°" (पा ६.१.१७१) इति विभक्तेरुदात्तत्वम्। किंच — [V]पाहि [V]प्रसित्यै। प्रसितिः प्रकर्षेण १५ नाशः कर्मणोऽत्यन्तलोपः। स्यतेः क्तिनि "द्यतिस्यति°" (पा ७.४.४०) इत्यादिना इत्वम्। "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" (पा २.३.१४) इति चतुर्थी। प्रसितिं निवारयितुं मां पाहीति। व्यत्ययेन वाऽपादाने चतुर्थी (पा ३.१.८५, २.३.२८)। अपदात्परत्वात् पाहीति

दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरितादविषं नः पितुं कृणु सुषदा योनिꣳ स्वाहेति" (बौश्रौ १.२०) इति॥ तण्डुलेषु [४३]शुभ्रीक्रियमाणेष्वपनेया मालिन्यांशाः फलीकरणाः। हे [V]अग्ने, मां [V]दिवः [V]पाहि २० द्युलोकवासिनो देवा मय्यपराधं यथा न गृह्णन्ति तथा कुरु। [V]अदब्धायो अहिंसितजीवित [V]अशीततनो उष्णशरीर, [V]प्रसित्यै प्रकृष्टात् बन्धात् फलविघ्नात् [V]पाहि[४४]। [V]दुरिष्ट्यै दुष्टाद्यथा-शास्त्रानुष्ठानात् [४४][V]पाहि। [V]दुरद्मन्यै यागाधिकारविरोधिदुष्टवस्तुभोजनात् [४४][V]पाहि। [V]दुश्चरितात् [४५]निषिद्धाचरणात् [V][४४]पाहि। [V]पितुम् अन्नमस्मदीयम् [V]अविषम् अमृतं कुरु। [V]सुषदा सुखोपवेशनेन निमित्तेन [V]योनिं स्थानं कुरु। इदं फलीकरणद्रव्यं तुभ्यं [V]स्वाहा २५ हुतमस्तु॥ मन्त्रव्याख्यानपूर्वकं होमं विधत्ते— "अग्नेऽदब्धायोऽशीततनो इत्याह। यथा-यजुरेवैतत्। पाहि माऽद्य दिवः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्यै पाहि दुश्चरितादित्याह। आशिष-मेवैतामाशास्ते। अविषं नः पितुं कृणु सुषदा योनिꣳ स्वाहेतीध्मसंवृश्चनान्यन्वाहार्यपचनेऽभ्याधाय फलीकरणहोमं जुहोति। अतिरिक्तानि वा इध्मसंवृश्चनानि। अतिरिक्ताः फलीकरणाः। अतिरिक्तमाज्यो-च्छेषणम्। अतिरिक्त एवातिरिक्तं दधाति। अथो अतिरिक्तेनैवातिरिक्तमाप्त्वाऽवरुन्धे" (तैब्रा ३.३.९) इति। ३०

[४३]. आ.क.हा–गृहे क्रियमाणेष्व°। [४४]. इ.उ तं.त्रि१.पा.मां.हा–'पाहि' नास्ति।
[४५]. तं–दुष्टाचरणात्। ~'°वृश्चनानि' इति साधुः स्यात्

न निहन्यते । " नादौ च निति कृत्यतौ " (पा ६·२·५०) इति गते॰ प्रकृतिस्वरत्वम् । एवं [v]दुरिष्ट्यै इत्यत्रापि स्वरचतुर्थ्यौ । दुरिष्टिरेकाङ्गविकलं कर्म । यद्वा–" दुर्निन्दायाम् " (द्र. पाभा २·२·१८ वा ४) इति प्रादिसमासे अत्राव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६·२·२)। दुरश्मनी दुष्टा भुक्ति अभोज्यभोजनम् । "अदेर्मुट् च" (उ२७०) इत्यनिप्रत्यय॰, गतिसमासः (पा२·२·१८) प्रादिसमासापवाद॰ । " कृदिकारादक्तिनः " ( गणपाठः पा ४·१·४५ ) इति ङीष् । षितः इत्युदात्तः (पा ३·१·३), दीर्घः । पूर्ववच्चतुर्थी (पा २·३·१४)। " उदात्तयणो हल्पूर्वात् " (पा ६·१·१७४) इति विभक्तेरुदात्तत्वम्। [27]दुश्चरितम् अयथानुष्ठितम्[27]। " दुर्निन्दायाम् " (द्र पाभा २·२·१८ वा ४) इति प्रादिसमास । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ( पा ६·२·२ )। ततः मा [v]पाहि । " भीत्रार्थानाम्॰ " ( पा १·४·२५ ) इत्यपादानत्वम् । अनुष्ठितस्य निवारयितुमशक्यत्वात् तन्निमित्तानर्थपरिहार एव ततो रक्षणम् । गतिसमासपक्षे " गतिरनन्तर. " ( पा ६·२·४९ ) इति पूर्वपदप्रकृतिस्वरत्वम् । किंच [v][28]न. अस्माकम्[28] [v]अविषं विषयद्विष बाधकम्[29], [30]अतोऽन्यदविषम् । अव्ययपूर्वपदप्रकृतिस्वरत्वम ( पा ६·२·२ )। [v]पितुम् अन्न [v]कृणु देहि । पितुरित्यन्ननाम ( निघण्टु २·७·६ )। पुनश्च विशेष्यते – [v]सुषदा [v]योनिं, सुखेन सदनमश्वस्यान सुषत् । " सत्सूद्विष॰ " ( पा ३·२·६१ ) इत्यादिना क्विप् । " सदिरप्रतेः " ( पा ८ ३·६६ ) इति षत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम (पा ६·२·१३९)। तेन हेतुना योनिं समस्तस्योत्पत्तिस्थानम् । अन्नेन हि सर्वं सुखेन सीदति । यथा " अन्नाद्भूतानि जायन्ते " ( मैउ ६·१२, द्र. तैउ २ २ ) इत्यादि ब्राह्मणम् । तुभ्यमिद [v]स्वाहा सुखेन हुतमस्तु । यद्वा–इत्यमिद कर्तव्यम् इति सरस्वत्यपि स्वयमेवाऽऽह ( द्र. निरुक्त ८ २० ) ॥

इध्मे [46]शास्त्रोक्तप्रमाणेन छिन्ने सति तच्छेपकाष्ठानीध्मसन्नहनानि । तानि दक्षिणाग्नौ प्रक्षिप्य तेषामुपरि शुष्कुगताज्ये स्थापितान फलीकरणान्जुहुयात् । [47]यागोपयुक्तद्रव्यादधिकत्वमतिरिक्तत्वम् । अधिकद्रव्यहोमेनाधिक फल प्राप्य तत्स्वाधीन करोतीत्यर्थः ॥ [48]इत्थ फलीकरणहोमे निष्पन्ने सत्यनन्तर पत्न्या समीपे वेदप्रासनं विधातव्यम् । तद्विधौ बुद्धिस्थे सति तत्प्रसङ्गात् वेदस्य प्रशंसक कश्चिन्मन्त्र उत्पाद्यते । स च प्रदेशान्तरविषयतया विनियुज्यते —" वेदिर्देवेभ्यो निलायत । तां वेदेनान्वविन्दन् । वेदेन वेदिं विविदु पृथिवीम् । सा पप्रथे पृथिवी पार्थिवानि । गर्भं बिभर्ति भुवनेष्वन्त । ततो यज्ञो जायते विश्वदानिरिति पुरस्तात् स्तम्बयजुषो वेदेन वेदिं संमार्ष्ट्यनुवित्त्यै । अथो यद्वेदश्च वेदिश्च भवत । मिथुनत्वाय प्रजात्यै " (तैब्रा ३·३ ९) इति । येनापि कारणेन देवेभ्यस्तिरोहिता वेद्यभिमानिदेवता वेदाभिमानिदेवतामुखेन देवा अलभन्त । तमेत वेदस्य महिमान 'वेदेन' इत्यादिको

२७–२७. ब– विनिन्दितं चरित दुश्चरितम् । २८–२८. मै– 'न अस्माक' नास्ति । २९. तं. ति. ब– बाधकत्वात् । ३०. ति–ततोऽन्यदविषम् ।

४६. त–शास्त्रोक्तप्रकारेण । ४७. आ–यज्ञोपयुक्त॰ । ४८. इ.उ.पा मो.हा–'इत्थम्' नास्ति ।

देवा॑ गातुविदो गा॒तुं वि॒त्त्वा गा॒तु(३)मि॑त॒ मन॑सस्पत

देवाः᳕ । गा॒तु॒ऽविद॒ इति॑ गा॒तु–वि॒दः । गा॒तुम् । वि॒त्त्वा । गा॒तुम् (३) । इ॒त । मन॑सः । प॒ते ।

समिष्टयजूंषि जुहोति – 'देवाः' इति॥ हे [v]देवाः [v]गातुविदः गतिज्ञाः । गाङ् गतौ । "कमिमनिजनि°" (उ ७२) इत्यादिना तुप्रत्ययः । "विभाषितं विशेषवचने बहुवचनम्" (पा ८.१.७४) इति पूर्वस्याविद्यमानत्वनिषेधात् निहन्यते । [v]गातुं [v]वित्त्वा मार्गं लब्ध्वा आगमनकाले यत्र स्थिताः ते यूयं [v]गातुम् [v]इत, येन मार्गेणाऽऽगताः तमेव मार्गं भजत, समाप्ते कर्मणि तेनैव प्रतिनिवर्तध्वम् । किंच हे [v]मनसः [v]पते, सर्वभूतानाम् [३१]-अन्तरात्मतया मनसोऽपि पते-[३१] । "सुबामन्त्रिते पराङ्गवत्°" (पा २.१.२) इति षष्ठ्यन्तस्य परामन्त्रितानु-

मन्त्रः प्रकाशयति । [४९]अस्य अयमर्थः—असुरैर्दत्तां पृथिवीं देवाः पूर्वोत्तरभागाभ्यां संस्कृत्य वेदिमकुर्वन् । तां च वेदिं देवाः पुनर्वेदेनालभन्त । सा च वेदिः पृथिवीरूपा सती पार्थिवानि व्रीह्यादीनि विस्तारितवती । किंच सा पृथिवीदेवता सर्वेषु भुवनेष्वन्तः [५०]उदरान्तर्यं गर्भं बिभर्ति । तस्मात् गर्भात् सर्वस्य फलस्य दाता यज्ञपुरुष उत्पन्न इति । अनेन मन्त्रेणाष्टमानुवाकोक्तात् पुरोडाशनिष्पादनादूर्ध्वं नवमानुवाके वक्ष्यमाणात् ध्रुवायजुर्हरणात् पुरस्तात् दर्भमयेन वेदेन वेदिस्थानं संमृज्यात् । तच्च वेदिलाभाय । किं च वेदवेदिरूपं मिथुनं प्रजननाय भवति ॥ प्रासङ्गिकं समाप्य प्रकृतमनुसरति—"प्रजापतेर्वा एतानि श्मश्रूणि । यद्वेदः । पत्निया उपस्थ आस्यति । मिथुनमेव करोति । विन्दते प्रजाम्" (तैब्रा ३.३.९) इति ॥ पत्नीसमीपे प्राप्तस्य वेदस्य पुनरास्तरणं विधत्ते—"वेदꣳ होताऽऽहवनीयात् स्तृणन्नेति । यज्ञमेव तत्संतनोत्योत्तरस्मादर्ध-मासात् । तꣳ संततमुत्तरेऽर्धमास आलभते । तं कालेकाल आगते यजते" (तैब्रा ३.३.९) इति । वेदस्य बन्धनं विमुच्य गार्हपत्यमारभ्याऽऽहवनीयपर्यन्तास्तरणेनाऽऽगामिपर्वपर्यन्तं यज्ञः संततो भवति । पुनः पर्वण्य-न्वाधानादिकं कृत्वा प्रतिपदि तं संततं यज्ञं कर्तुमारभते । एवं [५१]-पुनः पुनस्तत्काले-[५१] समागते सति यजत इत्यविच्छिन्नो यज्ञो भवति ॥

देवा इति ॥ बौधायनः—"*अथोत्थाय दक्षिणेन पदा वेदिमवक्रम्य ध्रुवया समिष्टयजुर्जुहोति देवा गातुविदो गातुं वित्त्वा गातुमित मनसस्पत इमं नो देव देवेषु यज्ञꣳ स्वाहा वाचि स्वाहा वाते धाः स्वाहेति" (बौश्रौ १.२१) इति । आपस्तम्बः—"देवा गातुविद इत्यन्तर्वेद्यूर्ध्वस्तिष्ठन् ध्रुवया समिष्टयजुर्जुहोति । मध्यमे स्वाहाकारे बर्हिरनुप्रहरति" (आपश्रौ ३.१३.२–३) इति ॥ अन्तेऽपि बौधायनेन स्वाहाकारस्या-ध्याहृतत्वात् तेनावशिष्टं सर्वं होतव्यमिति लभ्यते । जुह्वादीनि तु यजमानेन यावदायुः [५२]-संभार्याणि । 'तमा-हिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' (द्र. वैखाश्रौसू २१.९) इति शास्त्रात्-[५२] । हे [v]गातुविदः [५३]मार्गविदः [v]देवाः, पूर्वं यं [५४v]गातुं [५५]मार्गं लब्ध्वा समागताः, पुनः प्रतिनिवृत्य तं [५६v]गातुं [५७]मार्गं गच्छत ।

३१–३१. मै– अन्तरात्मन् ; व– अन्तरात्मना मनसोऽपि पते ।

४९. तं–तस्य । ५०. तं. त्रि१—आदरणीयम् । ५१–५१. तं–पुनः तत्तत्काले; त्रि–पुनः तत्र तत्र काले । *बौश्रौसूत्रे 'अथोपोत्थाय' । ५२–५२. तं. त्रि–संभाद्याणि, तं यज्ञपात्रैः दहन्तीति शास्त्रात् । ५३. इ.उ.पा.भां– 'मार्गविदः' नास्ति । ५४. तं. त्रि१. हा–'गातुम्' नास्ति । ५५. इ.उ.पा.भां– 'मार्गम्' नास्ति । ५६. तं–त्रि१–'गातुम्' नास्ति । ५७. इ.उ.पा.भां.हा–'मार्गम्' नास्ति ।

इमं नो देव देवेषु यज्ञ२ स्वाहा वाचि स्वाहा वाते धाः ॥ १३ ॥

[ दिवं च वित्वा गातु त्रयोदश च ]

इमम् । न. । देव । देवेषु । यज्ञम् । स्वाहा । वाचि । स्वाहा । वाते । धा. ॥ १३ ॥

[ मैस १.१.१३, काठ १.१२, कपिष्ठ १ १२, वासं २.१६–१८, शब्रा १.८.३ ]

५ प्रवेशात् । षष्ठयाऽऽमन्त्रितसमुदायस्य पाष्ठिकमामन्त्रिताद्युदात्तत्वम् ( पा ६·१·१९८ ) । पदात्परत्वाभावात् निघाताभाव “ षष्ठ्या. पति° ” ( पा ८·३·५३ ) इत्यादिना विसर्जनीयस्य सकारः । हे [V]देव, [V]इमम् अस्माक [V]यज्ञ [V]देवेषु अग्न्यादिषु [V]धा· धेहि स्थापय । एवं हि सरस्वत्याह । तदनन्तर [V]वाचि वाग्देवतायां शब्दब्रह्मणि च धाः । " सावेकाच. ° ” ( पा ६·१ १६८ ) इति विभक्तेरुदात्तत्वम् । ‘ वाचि धाः ’ इति

१० सरस्वत्याह । तत. पश्चादिम यज्ञं [V]वाते सर्वनिलयाधारे धा स्थापय । यस्मादय यज्ञ [32]प्रवृत्त· तत्रैव वाते स्थापय । “ वाताद्वा अध्वर्युर्यज्ञ प्रयुङ्क्ते ” ( तैब्रा ३·३·९ ) इत्यादि ब्राह्मणम् । दधाते. लेटि “ बहुलं छन्दसि ” ( पा २ ४ ७३ ) इति शपो लुक् । “ इतश्च लोपः परस्मैपदेषु ” ( पा ३·४·९७ ) इति इकारलोपः ॥

॥ इति प्रथमे त्रयोदशोऽनुवाक· ॥

१५ हे [V]मनसस्पते [V]देव, [58]हव्यमोक्तृषु [V]देवेषु [V]इम [V]न [V]यज्ञ निधेहि । इदमाज्य हुतमस्तु । सर्वक्रियाप्रवर्तके वायौ निधेहि इदमाज्यं हुतमस्तु ॥ वायुविषयेणानेन मन्त्रेण यज्ञसमाप्तिमुपपादयति—“ ब्रह्मवादिनो वदन्ति । स त्वा अध्वर्यु स्यात् । यो यतो यज्ञं प्रयुङ्क्ते । तदेन प्रतिष्ठापयतीति । वाताद्वा अध्वर्युर्यज्ञं प्रयुङ्क्ते । देवा गातुविदो गातु वित्वा गातुमितेत्याह । यत एव यज्ञ प्रयुङ्क्ते । तदेन प्रतिष्ठापयति । प्रतितिष्ठति प्रजया पशुभिर्यजमान ” ( तैब्रा ३ ३ ९ ) इति । योऽध्वर्युर्यस्मात् देवात् यज्ञमुपक्रमते तस्मिन्नेव देवे यदि यज्ञ

२० समापयेत् तर्हि स एव मुख्योऽध्वर्यु स्यादिति ब्रह्मवादिनामुक्ति । अत्राप्यध्वर्यु सर्वक्रियाप्रवर्तकात् वायोरेव यज्ञमुपक्रमते । “ देवा गातुविद । गातु यज्ञाय विन्दत । मनसस्पतिना देवेन । वाताद्यज्ञ प्रयुज्यताम् ” ( तैब्रा ३·७·४ ) इत्येतस्याच्छिद्रकाण्डगतस्य मन्त्रस्य प्रथमं अपितत्वात् । अत समाप्तावपि ‘ देवा गातुविद ’ इत्येष वायुविषयो मन्त्रो युक्त ।

यद्यप्येतावता त्रयोदशानुवाकोक्तानां मन्त्राणां व्याख्यान समाप्त तथापि दशमानुवाके

२५ पत्नीसनहनप्रसङ्गेन पत्नीविषयौ द्वौ मन्त्रावाम्नातौ। तदानीमनुपयोगात् ब्राह्मणेन तौ [59]तत्र न व्याख्यातौ । उपवेषत्यागार्थं मन्त्रोत्पत्तिरपि कर्तव्येति तदुभयमत्र [60]व्याक्रियते । प्रथम तावत्

३२ मै– प्रवृत्त ।

५८ आ.क पा हा–भक्तोक्तेषु । ५९. इ.उ.त्रि१.पा हा–‘ तत्र ’ नास्ति । ६०. इ.उ.त. त्रि.पा.हा.–क्रियते ।

[६१]योक्त्रविमोकमन्त्रस्य पूर्वार्धं व्याचष्टे—" यो वा अयथादेवतं यज्ञमुपचरति । आ देवताभ्यो वृश्च्यते । पापीयान् भवति । यो यथादेवतम् । न देवताभ्य आवृश्च्यते । वसीयान् भवति । वारुणो वै पाशः । इमं वि ष्यामि वरुणस्य पाशमित्याह । वरुणपाशादेवैनां मुञ्चति । सवितृप्रसूतो यथादेवतम् । न देवताभ्य आवृश्च्यते । वसीयान् भवति " ( तैब्रा ३·३·१० ) इति । योक्त्रपाशस्य वरुणो देवता, तद्बन्धस्य च [६२]सविता देवता । ततो 'वरुणस्य पाशं , यमबध्नीत सविता ' ( तैसं १·१·१० ) इति पदाभ्यां यथादेवतं यज्ञोपचारात् न देवताभ्य आवृश्च्यते न विच्छिन्नो भवति । नापि दरिद्रो भवति । सवितृप्रसूतो यथादेवतमुपचरतीति शेषः ॥ तृतीयपादे पदार्थवाक्यार्थौ दर्शयति—"धातुश्च योनौ सुकृतस्य लोक इत्याह । अग्निर्वै धाता । पुण्यं कर्म सुकृतस्य लोकः । अग्निरेवैनां धाता । पुण्ये कर्मणि सुकृतस्य लोके दधाति " ( तैब्रा ३·३·१० ) इति ॥ दुःखनाशाय सुखप्राप्तये च चतुर्थपादोक्तिरित्याह— " स्योनं मे सह पत्या करोमीत्याह । आत्मनश्च यजमानस्य चानार्त्यै संत्वाय " ( तैब्रा ३·३·१० ) इति ॥ पत्न्याः पूर्णपात्रविमोकार्थो यो मन्त्रस्तं व्याचष्टे—" समायुषा सं प्रजयेत्याह । आशिषमेवैतामाशास्ते पूर्णपात्रे " ( तैब्रा ३·३·१० ) इति । समानीयमान इति शेषः ॥ मन्त्रगतं छन्दः प्रशंसति— " अन्ततोऽनुष्टुभा । चतुष्पद्वा एतच्छन्दः प्रतिष्ठितं पत्नियै पूर्णपात्रे भवति । अस्मिँल्लोके प्रतितिष्ठानीति । अस्मिन्नेव लोके प्रतितिष्ठति " ( तैब्रा ३·३·१० ) इति । पत्नीकर्तव्यस्यावसाने[६३] यदिदं पूर्णपात्राभिमन्त्रणमनुष्टुभा क्रियते तदिदं छन्दः पादचतुष्टयोपेतत्वात् गौरिव प्रतिष्ठितं भवति । कस्मिन् विषये ? पत्न्याः संबन्धिनि पूर्णपात्रे विषये । मन्त्रं जपन्त्याः कोऽभिप्रायः ? इह लोके प्रतिष्ठिता स्यामित्यभिप्रायः[६४] । मन्त्रसामर्थ्यात् सा प्रतितिष्ठत्येव ॥ प्रकारान्तरेण प्रशंसति—" अथो वाग्वा अनुष्टुक् । वाङ्मिथुनम् । आपो रेतः प्रजननम् । एतस्मात् वै मिथुनात् विद्योतमानः स्तनयन् वर्षति । रेतः सिञ्चन् । प्रजाः प्रजनयन् " ( तैब्रा ३·३·१० ) इति । न केवलमनुष्टुभश्छन्दोरूपत्वं किंतु वाग्रूपत्वमप्यस्ति । सा च वाग्योषित् छन्दोरूपेण पुरुषेण सह मिथुनं संपद्यते । यास्तु पूर्णपात्रगता आपस्ताः प्रजोत्पत्तिसाधनं रेतः । एतस्मादेव यागानुष्ठानगतात् मिथुनादुत्पन्न आदित्यप्रेरितो मेघो वृष्टिद्वारेण प्रजोत्पत्तौ पर्यवस्यति । तथा च स्मर्यते— " अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः " ( मनु ३·७६ ) इति ॥ विमुक्तयोक्त्रस्य पूर्णपात्रोदकस्य च [६५]सह स्वीकारः[६५] पत्न्या कर्तव्य इत्याह— " यद्वै यज्ञस्य ब्रह्मणा युज्यते । ब्रह्मणा वै तस्य विमोकः । अद्भिः शान्तिः । विमुक्तं वा एतर्हि योक्त्रं ब्रह्मणा । आदायैनद् पत्नी सहाप उपगृह्णीते शान्त्यै " ( तैब्रा ३·३·१० ) इति । यथा मन्त्रेणोपहितानां कपालानां मन्त्रेणैव विमोकः कर्तव्यस्तथा योक्त्रस्यापि योगविमोकवत्त्या रज्ज्वा कृतस्योपद्रवस्याद्भिः शान्तिः युक्ता । योक्त्रं चेदानीं मन्त्रेण मुक्तमतोऽञ्जलौ तद्योक्त्रमादाय तेन सहापो गृह्णीयात् ॥ तद्ग्रहणायानयनं विधत्ते— " अञ्जलौ पूर्णपात्रमानयति । रेत एवास्यां प्रजां दधाति । प्रजया हि मनुष्यः पूर्णः " ( तैब्रा ३·३·१० ) इति । शोभत इति शेषः ॥ पूर्णपात्रोदकेन पत्न्या मुखप्रक्षालनं विधत्ते—" मुखं विमृष्टे

६१. इ.उ.पा.ह्रा–योक्त्रविमोचक° । ६२. पा.ह्रा–सूर्यः । ६३. आ.क–' °कर्तव्यस्यावसाने ' इत्यस्यानन्तरं ' विहितम् ' ६४. आ.क– ' अभिप्रायः ' इत्यस्यानन्तरं ' तत्र ' । ६५–६५. आ.क–सहकारः ।

अवभृथस्यैव रूपं कृत्वोत्तिष्ठति " ( तैब्रा ३.३.१० ) इति । उत्तिष्ठेदिति विधिः ॥ अथोपवेषो मन्त्रेण परित्यक्तव्योऽत प्रस्तौति– " परिवेषो वा एष वनस्पतीनाम् । यदुपवेष " ( तैब्रा ३.३.११ ) इति । पलाशशाखामूले स्थितो भाग उपवेष । स च सर्वेषां वनस्पतीना परितो व्याप्नोति । वनस्पतिभिर्दु साध्यस्याङ्गारवियोजनवहकपालोपधानादेरनेन कृतत्वात् ॥ वेदनं
५ प्रशंसति – " य एवं वेद । विन्दते परिवेष्टारम् " ( तैब्रा ३.३.११ ) इति । सेवकजनमित्यर्थः ॥ मन्त्रोत्पादनपूर्वकमुपवेषत्यागं विधत्ते —" तमुत्करे । य देवा मनुष्येषु । उपवेषमधारयन् । ये अस्मदपचेतस । तानस्मभ्यमिहाऽऽकुर । उपवेषोपविड्ढि न । प्रजां पुष्टिमथो धनम् । द्विपदो नश्चतुष्पद । ध्रुवाननपगान् कुर्विति पुरस्तात् प्रत्यञ्चमुपगूहति । तस्मात् पुरस्तात् प्रत्यञ्चः शूद्रा अवस्यन्ति " ( तैब्रा ३.३.११ ) इति । तमुत्कर उपगूहतीत्यन्वय । ' य देवा '
१० इत्यादिर्मन्त्र. । य पलाशशाखामूलभागं देवा मनुष्यसंबन्धियज्ञेषु कपालोपधानादिकर्मकारिणमुपवेषम-कल्पयन्, हे उपवेष, स त्वं ये पुत्रभार्यादयोऽस्मत्तोऽपक्रान्तास्तानस्मदर्थमिहाऽऽनीयानुरक्तान् कुरु । हे उपवेष, अस्माकं समीपे प्रजादिकं विड्ढि व्याप्तं कुरु । मनुष्यान् पशूंश्च चिरजीविनो वियोगरहितांश्च कुरु । अनेन मन्त्रेण तमुपवेषम् [६६]उत्करे मृत्खननादिरूपे तृणादित्यागस्थाने[६६] पूर्वभागे प्रत्यङ्मुखं [६७]गूढं कुर्यात् । यस्मादेवं तस्माल्लोकेऽप्युपवेषवत्कर्मकरा शूद्रा स्वाम्यभिमुखा स्वामिनः पुरस्तात्
१५ सर्वदाऽवतिष्ठन्ते ॥ निःशेषेण गूहनं विधत्ते —" स्थविमत उपगूहति । अप्रतिवादिन एवैनान् कुरुते " ( तैब्रा ३.३.११ ) इति । तमुत्करे प्रवेश्य मूलं बहिर्नावशेषयेत् । किंतु स्थविष्ठान्मूलादारभ्य कृत्स्नं प्रवेशयेत् । तथा सत्येतान् भृत्यानप्रतिवादिन उपकारिणः कुरुते ॥ अभिचाराय मन्त्रान्तर-मुत्पादयितुं प्रस्तौति– " धृष्टिर्वा उपवेष । शुचर्वो यज्ञो ब्रह्मणा संश्रितः " ( तैब्रा ३.३.११ ) इति । अयमुपवेष स्वत एव धार्ष्ट्ययुक्त, [६८]तत ऊर्ध्वं वह्निसंतापेन शुक् । पुनरपि मन्त्रेण
२० तीक्ष्णीकृतत्वात् यज्ञ. सपत्नोऽवोऽभिचारयोग्य ॥ तत्र मन्त्रमुत्पाद्य विनियुङ्क्ते —" योपवेषे शुक् । साऽमुमृच्छतु यं द्विष्म इति । अथास्मै नाम गृह्य प्रहरति " ( तैब्रा ३.३.११ ) इति ॥ शुक् संतापः । ' अमुम् ' इत्यत्र यो द्वेष्यस्तस्य नाम गृहीत्वा तमुपवेषमग्नौ प्रहरेत् ॥ पुनरप्यृचा श्रयमभि-चारार्थमुत्पादयति —" निरमुं नुद ओकस । सपत्नो य पृतन्यति । निर्बाध्येन हविषा । इन्द्र *एणं पराशरीत् । इहि तिस्र परावत । इहि पञ्च जनाँ अति । इहि तिस्रोऽति रोचना यावत् । सूर्यो असद्दिवि ।
२५ परमां त्वा परावतम् । इन्द्रो नयतु वृत्रहा । यतो न पुनरायसि । शश्वतीभ्य समाभ्य इति " ( तैब्रा ३.३.११ ) इति । यः शत्रुर्युयुत्सति अमुं स्वगृहात् त्वं नि सारय । निःशेष जगत् बाध्यं येन तन्निर्बाध्य तादृशं हविरुपवेषरूपं, तेनेन्द्र एनं शत्रुं पराकृत्य हिंसितवान् । परावच्छब्दो दूरदेशवाची स्त्रीलिङ्गः । हे शत्रो, त्वं त्रिभ्यो लोकेभ्यो निर्गत्य त्रीन् दूरदेशान् ब्राह्मणादीनतिक्रम्य चाण्डालादिषु गच्छ । यावत् सूर्यो दिव्यस्ति तावन्तं कालमभिसूर्यचन्द्रस्यास्तिस्रो दीप्तीरतिक्रम्य महत्यन्धकारे गच्छ । वृत्रहेन्द्र त्वामत्यन्तदूरदेशं नयतु । यस्मात् दूरदेशादनेकेभ्य संवत्सरेभ्य ऊर्ध्वमपि न पुनरागमिष्यसि ॥
३० एवामिस्तिसृभिर्ऋग्भिरुपवेषं गृहात् दूरतो निरस्येदित्येतं विधिं स्तावकेनार्थवादेनोन्नयति—" त्रिवृद्वा एष

६६–६६. त–तृणादित्यागरूपे, पा.हा–तृणादिरूपे । ६७. इ त्र हा –गूहनम् । ६८. आ त–अत ।
* ६. " तैत्तिरीया: कृतगरवलमित्यन्दमुच्चारयन्ति " ( महाभाष्यदीपिका भर्तृहरिकृता BORI पृ १ ) ।

वज्रो ब्रह्मणा सꣳशितः । शुचैवैनं विद्ध्वा । एभ्यो लोकेभ्यो निर्णुद्य । वज्रेण ब्रह्मणा स्तृणुते " ( तैब्रा ३.३.११ ) इति । मन्त्रत्रयेण तीक्ष्णीकृत एष उपवेषरूपो वज्रस्त्रिगुणो भवति। एतन्निष्ठेन शोकेनैनं वैरिणं लोकत्रयात्[६९]निःसार्य मन्त्रात्मकेन [७०]वज्रेणाभिहिनस्ति ॥ त्रिर्भूमिं[७०] खात्वा तत्रोपवेषं [७१]प्रतिक्षेप्तुं यजुर्द्वयरूपं मन्त्रमुत्पादयति — " इतोऽसाववधिष्मामुमित्याह स्तृत्यै " ( तैब्रा ३.३.११ ) इति । स्तृतिर्हिंसा । अत्र सूत्रम् — " पञ्चभिर्निरस्येत्रि खनेद् वा " ( आपश्रौ ३.१४.२ ) इति । ५ उपवेपस्यान्तो [७२]क्षेपणे [७३]दूरदेशनिरसने भूमौ खनने च ध्यानं विधत्ते— " यं द्विष्यात् तं ध्यायेत् । शुचैवैनमर्पयति " ( तैब्रा ३.३.११ ) इति ॥

अत्र [७४]विनियोगसंग्रहः—

" वाजद्वाभ्यां स्रुचोर्व्यूहो यत्वस्य्यात् परिधींस्त्रिभिः ।
[७५]अक्त मा ध्या त्रिभिः स्रुक्षु प्रस्तराग्रादिकाञ्जनम् ॥ १ ॥ १०
मरु प्रस्तरहोमोऽयमायुरग्न्यभिमन्त्रणम् ।
ध्रुवा भूमिं स्पृशेयं प मध्यस्य परिधेर्हुतिः ॥ २ ॥
यज्ञान्ययोर्द्वयोर्होमः [७६]संस्रा संस्रावकाहुतिः[७६]
अग्नेः स्रुचौ सादयित्वा धुरि ते मोहयेत्[७७] स्रुचौ ॥ ३ ॥
अग्ने फलीकृतेर्होमो देवा इष्टयजुर्हुतिः । १५
वाचि बर्हिर्हुतिर्वाते सर्वहोमोऽत्र विंशतिः ॥ ४ ॥ "

अथ मीमांसा ॥ दशमाध्यायस्य द्वितीयपादे चिन्तितम् —

" क्रयाय प्रतिपत्त्यै वा चमसेडादिभक्षणम् ।
क्रयाय पूर्ववन्मैवं यागीये स्वत्ववर्जनात् ॥
अक्रीतयजमानस्य भक्षसत्वाच्च तेन सा । २०
प्रतिपत्तिः संस्कृतित्वात् सत्रेषु न निवर्तते ॥ " ( जैन्या १०.२.११–१२ ) इति ॥

अस्ति सोमे चमसभक्षः । अस्ति च इष्टौ इडाप्राशित्रादिभक्षः । तत्र भक्षेण क्रीतानामृत्विजां स्वाधीनत्वसंभवात् दक्षिणेव क्रयार्थं भक्ष इति पूर्वः पक्षः । यागदेवतायै संकल्पिते द्रव्ये स्वत्वमलभमानो यजमानो न तेन क्रेतुं शक्नोति । किंच—" यजमानपञ्चमाः समुपहूयेडां प्राश्नन्ति " (द्र॰ आपश्रौ ३.२.११) इत्यक्रीतस्यापि यजमानस्य भक्षः श्रूयते । तत्साहचर्यात् ऋत्विजामपि भक्षणं न क्रयार्थमिति गम्यते । २५ तस्मात् प्रतिपत्त्यर्थो भक्षः । तेन क्रयार्थत्वाभावेन परिशिष्यमाणा सा प्रतिपत्तिर्योगोपयुक्तद्रव्यसंस्कारत्वेन[७८] सत्रेषु न बाध्यते ॥

तृतीयाध्यायस्य प्रथमपादे चिन्तितम् —

" चतुर्धा कार्य आग्नेयः पुरोडाश इतीरितम् ।
चतुर्धा करणं सर्वशेषो वाऽऽग्नेयमात्रगम्[७९] ॥ ३०

६९. तं–निरस्य । ७०–७०. तं–वज्रेण हिनस्ति भूमिम् । ७१. तं–प्रक्षेप्तुम् । ७२. तं–प्रहरणे । ७३. आ.तं–दूरदेशे निरसने । ७४. उ.पा.भां.द्दा–विनियोगः । ७५. आ–अक्तमाध्या ; तं–अर्क प्राप्य । ७६–७६. आ–संस्राव स्रावकाहुतिः । ७७. इ.उ–प्रेरयेत् । ७८. इ.उ.पा.भां.द्दा–°संस्काररूपत्वेन । ७९. इ.उ.क.पा.भां.द्दा–°मात्रगः ।

सपत्नशान्ताऽऽग्नेये युक्ताऽतः सर्वशेषता ।
अग्नीषोमीय ऐन्द्राग्ने यतोऽस्त्याग्नेयता तत ॥
नाग्नेयत्वं तयोर्मुख्यं केवलाग्न्यनुपाश्रयात् ।
तेनैकस्मिन् पुरोडाशे चतुर्धाकरणस्थिति ॥ " ( जैन्या ३·१·३४–३६ ) इति ॥

५ दर्शपूर्णमासयो श्रूयते " आग्नेयं चतुर्धा करोति " ( द्र. तैब्रा ३·३·८, आपश्रौ ३·३·२ ) इति । तत्राऽऽग्नेयवदैन्द्राग्नाग्नीषोमीययोरपि पुरोडाशयोरग्निसम्बन्धादाग्नेयशब्देन पुरोडाशत्रयमुपलक्ष्यते । ततस्त्रयाणां शेष इति चेत् । मैवम् । न ह्याग्नेय इत्यय तद्धित सम्बन्धमात्रेऽभिहित, किंतु देवतासंबन्धे । अग्निश्च केवलो द्विदैवत्ययो पुरोडाशयोर्न देवता । अतो देवतैकदेशेन कृत्स्नदेवतोपलक्षणादाग्नेयत्वं तयोर्न मुख्यमिति मुख्य एवाऽऽग्नेये चतुर्धाकरण व्यवतिष्ठते ॥

१० तत्रैव चतुर्थपादे चिन्तितम् —

" इद ब्रह्मण इत्युक्तिः क्रयार्था भक्षणाय वा ।
भक्षाश्रुते क्रयार्थोऽतो यथेष्टं तैर्नियुज्यताम् ॥
देवतायै समस्तस्य कल्पितत्वात् स्वामिता न हि ।
शेषस्य प्रतिपत्त्यर्थं भक्षण तत्र युज्यते ॥ " ( जैन्या ३·४·३७–३८ ) इति ॥

१५ चतुर्धाकृतस्य पुरोडाशस्य भागान् यजमान [80]एवं निर्दिशेत् —" इद ब्रह्मण । इदं होतुः । इदमध्वर्यो । इदमग्नीध " ( तैब्रा ३ ३ ८ ) इति । सोऽय निर्देशो न भक्षणार्थ । भक्षणस्याश्रुतत्वात् । ततो भृतिदानेन तानृत्विज परिक्रेतुमय निर्देश । क्रयश्च तदङ्गीकारानुसारेण स्वल्पेनाप्युपपद्यते । तस्मात् स्वकीयभागास्तैरिच्छयोपयोक्तु क्रयार्था इति प्राप्ते ब्रूम — " अग्नये जुष्ट निर्वपामि" (तैस १ १ ४) इति कृत्स्नस्य हविषो देवतार्थं सङ्कल्पितत्वेन तत्र यजमानस्य स्वामित्वाभावाच्च

२० युक्त परिक्रय । भक्षण तु प्रतिपत्त्यर्थत्वात् युक्तम् । अवशिष्टस्य च कोऽप्युपयोग प्रतिपत्ति । पुरोडाशस्य भक्षणार्हत्वात्, भक्षणेन कर्मकराणामुत्साहजननात् च [81]तद्भक्षणार्थो निर्देशो युज्यते ॥

तत्रैवाष्टमपादे चिन्तितम्

" वाजस्य मेत्यमुं ब्रूयादेको द्वौ वा क्रत्वर्थत ।
एक [82]काण्डद्वये पाठादध्वर्युस्वामिनावुभौ ॥ " ( जैन्या ३ ८·१९ ) इति ॥

२५ दर्शपूर्णमासयो " वाजस्य मा " ( तैसं १·१·१३, १·६ ४ ) इत्ययं मन्त्रोऽध्वर्युकाण्डे यजमानकाण्डे चाऽऽम्नात । तत्रैकेन पठिते सति मन्त्रस्य चरितार्थत्वाद्वितीयस्त न पठेदिति चेत् । मैवम् । काण्डान्तरपाठवैयर्थ्यप्रसङ्गात् । तस्मादुभाभ्या पठनीय । तयो पठतोरर्थभेदोऽस्ति । अनेन मन्त्रेण [83]प्रकाशितमर्थमनुष्ठास्यामीत्यध्वर्युर्मनुते । अत्र न प्रमदिष्यामीति यजमान ॥

[84]चतुर्थस्य द्वितीयपादे चिन्तितम् —

३० " प्रस्तरं शाखया सार्धं प्रहरेत् प्रकृतिस्त्वियम् ।
शाखाया अर्थकर्म स्यात् प्रतिपत्तिरुतोदिता ॥
प्रकृति प्रस्तरे याग शाखाया साहचर्यत ।
तयात्वादर्थकर्मत्वे हन्ति शाखां प्रयोजयेत् ॥"

८०. आ क पा. हा-एव । ८१. ह.ट.त ह-भक्षणार्थ. । ८२. ट-काण्डद्वयो । ८३. ह-यजमान-
३५ प्रकाशितमर्थमनुष्ठानस्वा(?)मीत्य । ८४ तं-चतुर्थाध्यायस्य ।

हरतिर्यागवाची नो प्रतिपत्तिस्ततो भवेत् ।
पौर्णमास्यां ततो नैव हृतिः शाखां प्रयोजयेत् ॥ " ( जैन्या ४-२-७–९ ) इति ॥

दर्शपूर्णमासयोः श्रूयते— " सह शाखया प्रस्तरं प्रहरति " ( आपश्रौ ३-६-६ ) इति । तत्र शाखाप्रहरणमर्थकर्म । कुतः ? प्रहरतिशब्देन यागस्याभिधानात् । एतच्च— ' सूक्तवाकेन प्रस्तरं प्रहरति " इत्येतद्वाक्यमुदाहृत्य चिन्तितम् । प्रस्तरप्रहरणस्य यागत्वे तत्साहचर्यात् शाखाप्रहरणमपि याग एवेत्यर्थकर्म स्यात् । अर्थाय क्रतुसाकल्यप्रयोजनाय* क्रियमाणमर्थकर्म । ततः प्रहरणेन पौर्णमास्यामपि पलाशशाखा प्रयुज्यत इति प्राप्ते ब्रूमः— ' सूक्तवाकेन प्रस्तरं प्रहरति ' इत्यत्र हरतिधातोर्यागवाचित्वं नोक्तं किंतु मान्त्रवर्णिकदेवतामुपलभ्य द्रव्यदेवताभ्यां यागः कल्पितः । शाखाप्रहरणे तु नास्ति देवता । ततो यागस्य कल्पयितुमशक्यतया हरतिधातुरत्र स्ववाच्यार्थपरित्यागमेवाऽऽचष्टे । तथा सति वत्सापाकरण उपयुक्तायाः पलाशशाखाया उपयोगान्तराभावात् यागदेशे १० अवकाशलाभाय यत्र क्वाप्यवश्यं परित्यागे प्राप्ते शास्त्रेणाऽऽहवनीये त्यागो [85]नियम्यते । तेन च शास्त्रीयत्यागेन शाखायाः प्रतिपत्तिर्भवति । प्रतिपत्तिर्नाम संस्काररूपो व्यर्थः । यथा राज्ञा चर्वितस्य ताम्बूलस्य सौवर्णे पतद्ग्रहे प्रक्षेपस्तद्वत् । ततः प्रहरणं प्रतिपत्तिकर्मतया तदभावेऽपि[86] क्रतुवैफल्याभावात् पौर्णमास्यां [87]स्वसिद्ध्यहेतुभूतां शाखां न प्रयोजयति ॥

[88]षष्ठाध्यायस्य प्रथमपादे चिन्तितम्— १५

" स्त्रिया नास्ति स्वामिभावः पुंल्लिङ्गेन तदीरणात् ।
प्रकृत्यर्थतया लिङ्गं संख्यावन्नाविवक्षितम् ॥
कस्त्युद्देश्यगतत्वेन संख्यया सदृशत्वतः ।
शब्दिभक्तिविकारादेरर्थस्वप्रकृतेर्न तु ॥ " ( जैन्या ६-१-६–७ ) इति ॥

' स्वर्गकामो यजेत ' इति पुंलिङ्गशब्देनाधिकारिणो [89]विधानात् सोऽधिकारः स्त्रिया नास्ति । २० न च ग्रहैकत्ववत् लिङ्गमविवक्षितमिति वाच्यम् । एकत्ववत् लिङ्गस्य प्रत्ययार्थत्वाभावात् प्रकृत्यर्थतया तु ग्रहत्ववत् विवक्षितं पुंलिङ्गमिति प्राप्ते ब्रूमः— अस्ति स्त्रियाः [90]कर्मसु अधिकारः । कुतः ? पुंलिङ्गस्याविवक्षितत्वात् । न ह्येकत्वस्य प्रत्ययार्थत्वमविवक्षायां निमित्तं किंतूद्देश्यगतत्वम् । इहापि यः स्वर्गकामः स यजेतेति वचनव्यक्तौ पुंलिगस्योद्देश्यगतत्वेनैकत्वसदृशत्वान्नास्ति विवक्षितत्वम् । न च प्रकृत्यर्थो लिङ्गम् । स्त्रीलिङ्गं तावट्टावादिभिः स्त्रीप्रत्ययैरभिधीयते । पुंलिङ्गं तु ' वृक्षान् ' इत्यस्मिन् २५ द्वितीयाबहुवचने विभक्तिविकारेण नकारादेशलक्षणेनाभिव्यज्यते । एवं ' कुलम् ' इत्यस्मिन् प्रथमैकवचने नपुंसकाभिव्यक्तिः । तस्मात् लिङ्गस्य प्रकृत्यर्थत्वाभावादुद्देश्यगतत्वेनाविवक्षितत्वाच्च स्त्रिया अस्त्यधिकारः ॥

तत्रैवान्यच्चिन्तितम् —

" दंपतिभ्यां पृथक् कार्यं सह वाऽऽख्यातसंख्यया ।
[91]पृथक् मैवमवैगुण्यात्[91] कर्त्रैक्यं देवतैक्यवत् ॥ " ( जैन्या ६-१-८ ) इति ॥ ३०

यजेतेत्याख्यातप्रत्ययगतायाः संख्याया उद्देश्यगतत्वाभावेन विवक्षाया वारयितुमशक्यत्वादेककर्तृत्वाय दंपतिभ्यां [92]पृथगेव कर्मानुष्ठेयमिति चेत् । मैवम् । वैगुण्यप्रसङ्गात् । कर्मणि यत्र तत्र

* जैन्याविस्तरे–' क्रतुसाफल्यप्रयोजनाय ' इति । ८५. उ–विनियम्यते । ८६. आ–' अपि ' नास्ति । ८७. तं–स्वसिद्धये (हे)तुभूतां ; भां–स्वसिद्धिहेतुभूताम् । ८८. इ.उ.पा.भां.हा–षष्ठस्याध्यायस्य । ८९. तं–अभिधानात् । ९०. तं–कर्मणि । ९१–९१. इ.उ.क.तं.पा.भां.हा–पृथगेवमवैगुण्यात् । ३५
९२. इ.उ–सक्कदेव ।

पत्न्यवेक्षणं यजमानावेक्षणं चेत्युभयमप्याम्नातम् । तत्र यजमानप्रयोगे पत्न्यवेक्षणं लुप्येत पत्नीप्रयोगे यजमानावेक्षणं लुप्येतेत्यवैगुण्याय द्वयोः सहाधिकारः । न च यजेतेत्येकवचनं विरुद्धम् । 'अग्नीषोमौ देवता' इत्यत्र यथा व्यासक्तयोर्देवत्वात् देवतैक्यं तथा दम्पत्योरेकमेव कर्तृत्वमित्यङ्गीकारात् । तस्मात् दम्पत्योः सहाधिकारः । तथा सति "ऊनेऽनतिरिक्तं धीयाता" (तैब्रा ३.३.५) इति वाक्येन ५ कर्मणि न्यूनाङ्गपूरणं पत्न्या क्रियत इति यदुक्तं तत्सुस्थितम् ॥

अथ व्याकरणम् ॥ व्यानस्येत्यत्र "व्रज व्रज गतौ" इत्यस्मात् धातोरुत्पन्न कर्मणि घञन्त (पा ३.३.१९) । ततो ञित्त्वादाद्युदात्त (पा ६.१.१९७) । प्रसवशब्दोऽप्ययान्त. (पा ३.३.५७) । ततस्तत्र थाथादिस्वर (पा ६.२.१४४) । एवं सर्वं [९३]यथायोग्यमुन्नेयम्[९३] ॥

इषे त्वाद्या यजुर्मन्त्रा. काश्चित् काश्चिदुदीरिता ।
१० [९४]तां भामृचं विविच्यात्र वच्मि[९४] छन्दोऽवबुद्धये ॥

"सावित्रियर्चा" (तैब्रा ३.३.४), "अनुष्टुभर्चा" (तैब्रा ३.३.२), "वैश्वदेव्यर्चा" (तैब्रा ३.३.९) इति ब्राह्मणेन व्यावशांसनात् सन्ति[९५] यजुषां मध्ये समाम्नाता ऋचः । देवो वः सविता प्रार्पयत्विति द्विपदा विराड् गायत्री । आप्यायध्वमिति मध्येज्योतिस्त्रिष्टुप् ॥ रुद्रस्य हेतिरित्येकपदा त्रिष्टुप् । ध्रुवा अस्मिन्नित्यपि तद्वत् । मेयमगादिति त्रिष्टुप् । सहस्रवल्शा इत्येकपदा त्रिष्टुप् । उर्वन्तरिक्षमित्येकपदा १५ गायत्री । सं पृच्यध्वमिति गायत्री । देवो वः सवितोत्पुनात्विति गायत्री । अवधूतमित्येकपदा गायत्री । परापूतमित्यपि । दीर्घामनुप्रसितिमित्येकपदा त्रिष्टुप् । यानि घर्मे इत्यनुष्टुप् । समापो अद्भिरित्युपरिष्टाद्बृहती । अद्भ्यः परीत्येकपदा गायत्री । अन्तरितमित्येकपदा गायत्री । देवस्य सवितुः सव इति द्विपदा गायत्री । ध्रुवा कृतस्येत्येकपदा त्रिष्टुप् । उदादायेति त्रिपदा त्रिष्टुप् । आशासाना, सुप्रजसस्त्वेत्यनुष्टुभौ । इमं वि ष्यामीति त्रिष्टुप् । समायुषेत्यनुष्टुप् । देवो वः सवितोत्पुनात्विति गायत्री । धीतिहोत्रमिति २० गायत्री । घृता असदन्नित्येकपदा त्रिष्टुप् । अग्ने वयुरित्येकपदा गायत्री । पाहि माऽग्न इति द्विपदा गायत्री । वाजस्य मा प्रसवेनेत्यनुष्टुभौ । यं परिधिमिति पुरस्ताज्ज्योतिस्त्रिष्टुप् । संस्रावभागा इति त्रिष्टुप् । ननु इतरेषामपि मन्त्राणामनेन न्यायेनाक्षरमात्रासंख्याविशेषमुपजीव्य यत्किंचित् छन्दः कल्प्यतामिति चेत् । न । यजुषां छन्दःकल्पने श्रुतिविरोधप्रसङ्गात् । तथा च ब्राह्मणं पूर्वमेवोदाहृतम्— "यत्रोभयोर्मीमांसा । जामि स्यात् । यद्यजुषाऽऽज्यं यजुषाऽप उत्पुनीयात् । छन्दसाऽप उत्पुनात्य- २५ जामित्वाय" (तैब्रा ३.३.४) इति । तत्र यजुर्निषेध्य छन्दोऽभिधीयते[९६] । ततो यजुषां छन्दो न श्रुतेरभिमतम् । तथा [९७]सति स्वशक्त्या[९७] किंचिन्नूतनं छन्दः कल्पयितुं न शक्यते । किंतु पूर्वप्रसिद्धसंप्रदायागत छन्दोलक्षणं यत्र यत्रास्ति तस्या तस्यामृचि छन्दो जानीयात् ॥ [९८]ऋचामेव छन्दोविधानात्[९८] ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
प्रथमकाण्डे प्रथमप्रपाठके त्रयोदशोऽनुवाक ॥ १३ ॥

---

३० ९३–९३. ठ.तं.हा–'यथायोग्यम्' नास्ति, ई–'यथायोग्यमुन्नेयम्' नास्ति । ९४–९४ आ पा. हा–तामामृचं विविच्यात्र वच्मि; त–तां तामृचं विविच्यात्र तस्मिन् । ९५. आ पा हा–सर्व° । ९६. तं–छन्दो विधीयते । ९७–९७. त–च स्वबुद्ध्या ९८–९८, इ.उ त.पा.मा हा–'ऋचामेव छन्दोविधानात्' नास्ति ।

त्रयोदशानुवाके दर्शपूर्णमाससमन्त्राः [1]समाप्ताः। अथ तद्विकृतिमन्त्रा वक्तव्याः। विकृतिषु चाऽऽध्वर्यवमन्त्राणाम् [2]अतिदेशे वैधप्राप्तत्वात्[2] हौत्रा एवानुशिष्यन्ते। ततः प्रपाठकानामन्त्यानुवाकेषु काम्येष्टीनां याज्यापुरोनुवाक्याः क्रमेणोच्यन्ते। ताश्चेष्टयो द्वितीयकाण्डस्य द्वितीयतृतीयचतुर्थप्रपाठकेषु क्रमेण विधीयन्ते। [3]तत्रास्मिन्ननुवाके द्वितीयकाण्डस्थद्वितीयप्रपाठकस्य सार्धप्रथमानुवाकोक्तकाम्येष्टीनां याज्यापुरोनुवाक्या उच्यन्ते[3]। काम्या याज्या इति याज्ञिकसमाख्याबलादिष्टिकाण्डस्य याज्याकाण्डस्य च परस्परं संबन्धः। इष्टिविशेषमन्त्रविशेषसंबन्धस्तु लिङ्गक्रमाभ्यामवगन्तव्यः। यद्यप्येकैक एव मन्त्रः स्वस्वदेवताप्रकाशकस्तथापि दर्विहोमत्वव्यावृत्तये प्रतीष्टि मन्त्रद्वयं प्रयोक्तव्यम्। एतच्च [4]वास्तोष्पतीयहोमप्रस्तावे समाम्नास्यते —“ यदेकया जुहुयात्, दर्विहोमं कुर्यात्। पुरोनुवाक्यामनूच्य याज्यया जुहोति सदेवत्वाय ” ( तैसं ३·४·१० ) इति। एतयोश्च लक्षणमाज्यभागब्राह्मणे पठ्यते— “ पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवति। जातानेव भ्रातृव्यान् प्र णुदते। उपरिष्टाल्लक्ष्मा याज्या जनिष्यमाणानेव प्रति नुदते ” ( तैसं २·६·२ ) इति। यस्या ऋचः पूर्वार्धे देवतालिङ्गं सा पुरोनुवाक्या। उत्तरार्धे तल्लिङ्गं चेद् याज्या सा भवति। एतस्य लक्षणस्य प्रदर्शनार्थत्वात् क्वचिदेतद् व्यभिचरति। तत्र सर्वत्राम्नानक्रमो नियामकः। पुरस्तादाम्नाताः पुरोनुवाक्याः, पश्चादाम्नाताः याज्याः। तस्मादिष्टिक्रमं मन्त्रक्रमं च परीक्ष्यैकैकस्याम् इष्टावेकैकं मन्त्रयुग्मं प्रयोज्यम्। ननु यत्र युग्मादधिकस्तद्युग्मसमानलिङ्गो मन्त्र आम्नायते तत्र क्रमानुसारेणोत्तरेष्टौ [5]मन्त्रयोजने लिङ्गं[5] बाध्येत, पूर्वेष्टौ तद्योजने क्रमो बाध्येतेति चेत्। न। बाध्यतां नाम [6]क्रमः, अस्य[6] दुर्बलत्वात्। [7]यदि पूर्वेष्टौ तृतीयमन्त्रस्य [8]पृथक्प्रयोजनाभावः तर्हि तत्र याज्या विकल्पताम्। यत्र तु युग्मान्तरं पूर्वयुग्मेण समानलिङ्गं तत्र याज्यापुरोनुवाक्यायुग्मस्यैव विकल्पोऽस्तु। यद्वा इष्ट्यैक्ये मन्त्रयुग्माधिक्ये युग्मविकल्पस्तद्वन्मन्त्रयुग्मस्यैकत्वे सति तदीयदेवताविषयाणामिष्टीनाम् [9]आधिक्ये वा इष्टयोऽपि विकल्प्यन्ताम्। तद्यथा— इहैव तावत्तादृशम् [10]उपलभ्यते। ‘ उभा वामिन्द्राग्नी ’ इत्यादय इन्द्राग्निलिङ्गकाश्चत्वारो मन्त्राः। ऐन्द्राग्नेष्टयस्तु फलभेदेन पञ्चाम्नाताः। तत्र [11]प्रथममन्त्रयुग्मविषये तिस्र आद्या इष्टयो विकल्प्यन्ते ॥

तासु तिसृषु प्रथमामिष्टिं विधातुं प्रस्तौति— “ प्रजापतिः प्रजा असृजत ताः सृष्टा इन्द्राग्नी अपागूहताम्। सोऽचायत् प्रजापतिरिन्द्राग्नी वै मे प्रजा अपाघुक्षतामिति स एतमैन्द्राग्नमेकादशकपालमपश्यत् तं निरवपत् तावस्मै प्रजाः [12]प्रासाधयताम् ” ( तैसं २·२·१ ) इति। अपागूहतामाच्छादितवन्तौ। अचायदचिन्तयत्। प्रासाधयतां प्रकटीकृतवन्तौ ॥

प्रस्तुतामिष्टिं विधत्ते — “ इन्द्राग्नी[12] वा एतस्य प्रजामपगूहतो योऽलं प्रजायै सन् प्रजां न विन्दत ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम इन्द्राग्नी एव स्वेन भागधेयेनोप धावति तावेवास्मै प्रजां प्र साधयतो विन्दते प्रजाम् ” (तैसं २·२·१) इति। यः पुरुषो यौवनादिना प्रजोत्पादनसमर्थोऽपि प्रजां न लभते तस्यैन्द्राग्नी प्रतिबन्धकौ। तयोरुक्तः पुरोडाशो भागस्तेन तौ सेवते ॥

द्वितीयामिष्टिं विधत्ते — “ ऐन्द्राग्नमेकादशकपालं निर्वपेत् स्पर्धमानः क्षेत्रे वा सजातेषु वेन्द्राग्नी एव स्वेन भागधेयेनोप धावति ताभ्यामेवेन्द्रियं वीर्यं भ्रातृव्यस्य वृङ्क्ते वि पाप्मना भ्रातृव्येण

---

१. तं–समापिताः। २–२. तं–अतिदेशेनैव प्राप्तत्वात्। ३–३. इ.उ.तं.पा.मां.हा–‘ तत्रास्मिन्ननुवाके.... उच्यन्ते ’ नास्ति। ४. इ.उ.पा.मां.हा–वास्तोष्पतीये होम॰। ५–५. तं–तन्मन्त्रयोजनलिङ्गम्। ६–६. आ१.तं–क्रमस्य। ७. आ–यदि न, इ.उ.हा–यदि तु; पा.मां–यदि ननु। ८. आ.पा–पृथक्प्रयोजनता। ९. तं–बाहुल्ये। १०. तं–उपपद्यते। ११. इ.उ–प्रथममन्त्रविषये; तं–प्रथमयुग्मविषये। १२–१२. इ–‘ प्रासाधयताम्···इन्द्राग्नी ’ नास्ति; उ.पा.मां.हा–प्रासाधयतामिन्द्राग्नी।

उभा वामिन्द्राग्नी आहुवध्यां उभा राधसः सह मादयध्यै ।
उभा दातारविषाᳫँ रयीणामुभा वाजस्य सातये हुवे वाम् ॥
उभा । वाम् । इन्द्राग्नी इतीन्द्र-अग्नी । आहुवध्यै । उभा । राधस । सह । मादयध्यै ।
उभा । दातारौ । इषाम् । रयीणाम् । उभा । वाजस्य । सातये । हुवे । वाम् ॥

५ " प्रजापतिः प्रजा असृजत । ता सृष्टा इन्द्राग्नी अपागूहताम् " ( तैस २.२.१ ) इत्यस्मिन्[1] प्रश्ने काम्या इष्टय आम्नाताः । तत्र " ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः" इति प्रथमा । तस्यामियं पुरोनुवाक्या — ' उभा वामिन्द्राग्नी ' इति त्रिष्टुप् चतुष्पदा ॥ अयं च सर्वोऽनुवाको वैश्वदेवकाण्डम् । हे [v]इन्द्राग्नी, [v]वा [2]युवा [v]उभा उभौ । द्वितीयाद्विवचनस्य " सुपां सुलुक्° " ( पा ७.१.३९ ) इत्याकारः । "एकादेश उदात्तेनोदात्त " ( पा ८.२.५ )

१० इत्युदात्तत्वम् एकादेशस्य[3] । ' हुवे ' इति वक्ष्यमाणेन सबन्ध । युवाम् आह्वयामि । किमर्थम् ? [v]आहुवध्यै आभिमुख्येन होतु आहुतिप्रदानेनाराधयितुम् । जुहोते " तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः " ( पा ३.४.९ ) इति कध्यैप्रत्यय । किंच राधः [4]अन्नं हविर्लक्षणम् । " सुपा सुपो भवन्ति° " ( द्र. पाभा ७.१.३९ ) इति

जयते " ( तैसं २.२.१ ) इति । सजाता समानजन्मानो [13]बन्धुभृत्यादय. । अचेतनं क्षेत्रविषयं,
१५ [14]चेतनं भृत्यविषयं[14] च वैरिणो यत्सामर्थ्यं तदुभयमिन्द्राग्नी बलात् विनाशयतः । स्वयं तु पापिष्ठेनैव वैरिणा विरुध्यमानो जयं प्राप्नोति ॥

तृतीयामिष्टिं विधत्ते — " अप वा एतस्मादिन्द्रियं वीर्यं क्रामति य संग्राममुपप्रयात्यैन्द्राग्नमेकादशकपालं निर्वपेत् संग्राममुपप्रयास्यन्निन्द्राग्नी एव स्वेन भागधेयेनोप धावति तावेवास्मिन्निन्द्रियं वीर्यं धत्त सहेन्द्रियेण वीर्येणोप प्र याति जयति त९ संग्रामम् " ( तैस २.२.१ ) इति । युद्धार्थं
२० [15]परसैन्य प्रति[15] प्रयास्यतो भयावेशात् [16]हस्तपादादीन्द्रियगता शक्तिरपक्रामति । इन्द्राग्नी तस्य धैर्यमुत्पाद्येन्द्रियशक्तिं समाधत्त [17] ॥

उभेति ॥ एतासु तिसृष्विष्टिषु पुरोनुवाक्यामाह — " उभा वामिन्द्राग्नी आहुवध्या उभा राधस सह मादयध्यै । उभा दातारविषाᳫँ रयीणामुभा वाजस्य सातये हुवे वाम् " इति ॥ हे [v]इन्द्राग्नी, युवामुभौ [v]हुवे आह्वयामि । किमर्थम् ? [v]आहुवध्यै साकल्येन होतुम् । न त्वाग्राश्वमेधपुरुषमेधादावश्वादेरिव
२५ युवयोर्हविर्द्रव्यत्व[18] शङ्कनीयम् । अस्ति ह्यत्र राधशब्दवाच्य पुरोडाशद्रव्यस्समग्रम् । तेनान्नेन युवामुभौ [19]परस्परयुक्तौ हर्षयितुमाह्वयामि । इष्टाभ्यामाराभ्यां किं तवेति चेत् । युवामुभावन्नानां धनानां च [v]दातारौ, अतोऽन्नस्य लाभाय युवामुभावाह्वयामि ॥

१ मे–' अस्मिन् ' नास्ति । २. मे–' युवाम् ' नास्ति । ३. तं.ति– इन्द्राग्नी इत्यस्य । ४. मे– ओदनम् ।

१३ तं–त्र बुभ्रानृभ्यादय । १४–१४ तं–चेतनविषयम् । १५–१५ अ१.आ क तं.पा.मा हा–पर-
३० सैन्यप्रतीम् । १६ इ.उ पा.मा हा–हस्तपादादिगता । १७ तं–समादधाते । १८ इ.उ.पा.मा.हा–°द्रव्यम् । १९. आ,क–परस्परं युक्तौ ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

**अश्र॑व॒ꣳ हि भू॑रि॒दाव॑त्तरा वां॒ विजा॑मातुरु॒त वा॑ घा स्या॒लात् ।**

**अथा॒ सोम॑स्य॒ प्रय॑ती यु॒वभ्या॒मिन्द्रा॑ग्नी॒ स्तोमं॑ जनयामि॒ नव्य॑म् ॥**

अश्र॑वम् । हि । भू॒रि॒दाव॑त्त॒रेति॑ भू॒रि॒दाव॑त्-त॒रा । वा॒म् ।
विजा॑मातु॒रिति॑ वि-जा॒मा॒तुः । उ॒त । वा॒ । घ॒ । स्या॒लात् ।
अथ॑ । सोम॑स्य । प्रय॒तीति॒ प्र-य॒ती । यु॒वभ्या॒मिति॑ यु॒व-भ्या॒म् । ५
इन्द्रा॑ग्नी॒ इतीन्द्र॑-अ॒ग्नी । स्तोम॑म् । ज॒न॒या॒मि॒ । नव्य॑म् ॥

---

तृतीयार्थे षष्ठी । हेतौ वा पञ्चमी । ^Vउभा युवां ^Vसह एव यौगपद्येनैव नैकैकश्येन राधसा ^Vमादयध्यै मादयितुं सहैव तर्पयितुं वा आह्वयामि । मदेर्ण्यन्तात् तेनैव सूत्रेण शध्यैप्रत्ययः (पा ३·४·९)। सार्वधातुकत्वात् णिलोपो (पा६·४·५१) न क्रियते। अनयोरेवाह्वाने कारणमाह—युवामेव ह्युभौ ^Vइषाम् अन्नानां ^Vरयीणां धनानां क्षेत्रपुत्रपश्वादीनां ^Vदातारौ । "सावेकाचः°" (पा ६·१·१६८) इति, "नामन्यतरस्याम्" (पा ६·१·१७७)इति च षष्ठीबहुवचनस्योदात्तत्वम्। तस्मात् ^Vवाजस्य अन्नस्य ^Vसातये लाभाय। "ऊतियूति°" (पा ३·३·९७) इत्यादिना उदात्तः क्तिन्निपातितः। "जनसनखनां सञ्झलोः" (पा ६·४·४२) इत्यात्वम्। तौ तादृशौ उभौ युवां ^Vहुवे आह्वयामि । ह्वयतेः "बहुलं छन्दसि" (पा २·४·७३) इति शपो लुक् । १० "ह्वः संप्रसारणम्" (६·१·३२), "अभ्यस्तस्य च" (पा ६·१·३३), "बहुलं छन्दसि" (पा ६·१·३४) इति संप्रसारणम् ॥ १५

तत्रैव याज्या—'अश्रवम्' इति चतुष्पदा त्रिष्टुप् ॥ इतश्च युवामेवाह्वयामीति हेत्वन्तरमाह—भूरि ददातीति भूरिदावा । "आतो मनिन्°" (पा ३·२·७४) इत्यादिना वनिप्प्रत्ययः ।

---

**अश्रवमिति ॥** अथ याज्यामाह — "अश्रवꣳ हि भूरिदावत्तरा वां विजामातुरुत वा घा स्यालात् । अथा सोमस्य प्रयती युवभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम्" इति ॥ लोके हि २० स्वदुहितुरत्यन्तप्रियो विशिष्टो जामाता दौहित्रादिरूपाः प्रजा बह्वीर्ददाति, स्यालश्च स्वयं दक्षो भगिनीस्नेहेन गृहधनरक्षणाय दासदासीरूपाः प्रजाः बह्वीः प्रददाति। ताभ्यामपि ^Vवाम्[२०] अतिशयेन बहुप्रजाप्रदौ युवामित्यश्रृणवम्। [२१]अतो हे ^Vइन्द्राग्नी[२२], युवाभ्यां[२३] सोमसदृशस्य पुरोडाशस्य प्रदानेन भवदीये चित्ते नूतनं हर्षरूपचित्तवृत्तीनां ^Vस्तोमं संपादयामि ॥ अत्रोदाहृतयोराद्यो मन्त्रः पुरोनुवाक्या। यागात् पुरस्ताद्देवताह्वानायाध्वर्युप्रैषमनु होत्रा वक्तव्यत्वात्। 'इन्द्राग्निभ्यामनुब्रूहि' इत्येतादृशोऽध्वर्युप्रैषः। २५ द्वितीयो मन्त्रो याज्या। इज्यतेऽनयेति तद्व्युत्पत्तिः। अत एवात्र 'यज' इति प्रैषः पठ्यते ॥

उत्तरासु विसृष्टिष्टिषु प्रथमां विधत्ते — "वि वा एष इन्द्रियेण वीर्येणर्ध्यते यः संग्रामं जयत्यैन्द्राग्नमेकादशकपालं निर्वपेत् संग्रामं जित्वेन्द्राग्नी एव स्वेन भागधेयेनोप धावति। तावेवास्मिन्निन्द्रियं

---

२०. आ.क-'वाम्' इत्यस्यानन्तरं 'भूरिदावत्तरौ'। २१. आ.क-अथातः। २२. आ.क-'इन्द्राग्नी' इत्यस्यानन्तरं 'युवभ्याम्'। २३. आ.क-'युवाभ्याम्' इत्यस्यानन्तरं 'सोमस्य प्रयती'। ३०

ततः प्रकर्षविवक्षायां तरप्प्रत्ययः । "भूरिदाव्नस्तुट्" (पा ८.२.१७ वा २) इति तुडागमः । द्वितीयाद्विवचनस्य "सुपा सुलुक्" (पा ७.१.३९) इत्याकारः । कृदुत्तरपदप्रकृतिस्वरत्वम्[५] (पा ६.२.१३९)। यस्मादह युवां भूरिदावत्तरौ ^v^अश्रव युवा दातृतमावशृणवम्। शृणोतेर्लङि शपो लुक् (पा २.४.७३)। कस्मात् पुनरतिशयिनावित्यत आह—^v^विजामातु । विद्यावयोरूपादि-
५ भिर्गुणैः[६] विहीनो जामाता विजामाता । अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६.२.२)। विजामाता हि कन्यालोभात् कन्यावते भूरि धन ददाति, [७]तस्मै यथा वैगुण्यमनादृत्य कन्यां प्रयच्छति, तस्मादपि युवा दातृतमावशृणवम् । ^v^उत ^v^वा अपि वा ^v^स्यालात् युवां दातृतमावशृणवम् । स्यालो [८]भार्याया भ्राता[८] । सोऽपि भगिनीस्नेहेन[९] तद्भर्त्रे भूरि धन ददाति । यस्मादेवमाभ्यामपि युवां दातृतमावशृणवं, तस्मात् युवामेवाह्वयामि । घशब्दः पादपूरणे प्रसिद्धौ वा ।
१० "ऋचि तुनुघ*" (पा ६.३.१३३) इत्यादिना तस्य संहितायां दीर्घः । "अथादावुत्तरे विभागे ह्रस्वं व्यञ्जनपरं । देवाशीकासुम्नाश्वतीनयुनाहृदयाघोवयाशुद्धा*" (तैप्रा ३.१–२) इति पदकाले ह्रस्वत्वम् । ^v^अथ एतस्मात् कारणात् । "निपातस्य च" (पा ६.३.१३६) इति संहितायां दीर्घत्वम् । ^v^सोमस्य सोमसदृशस्यास्य हविषः ^v^प्रयती प्रयत्या प्रदानेन । "तादौ च निति कृत्यतौ" (पा ६.२.५०) इति गतेः प्रकृतिस्वरत्वम् । तृतीयैकवचनस्य
१५ "सुपा सुलुक्*" (पा ७.१.३९) इति पूर्वसवर्णदीर्घत्वम् । हे ^v^इन्द्राग्नी । पादादित्वात् षाष्ठिकमामन्त्रिताद्युदात्तत्वम् (पा ६.१.१९८)। ^v^युवभ्यां युवाभ्याम् । आत्वाभावश्छान्दसः । ^v^स्तोमं स्तोत्रं ^v^जनयामि करोमि ^v^नव्यम् अभिनवम् । "वस्वपसोकक्विक्षेमरचोनिष्केयछोक्यजनपूर्वनवसूरमर्तयविष्ठेभ्यश्छन्दसि स्वार्थे यद्वक्तव्यः" (द्र. पावा ५.४.३०) इति यत्प्रत्ययः । "यतोऽनावः" (पा ६.१.२१३) इत्याद्युदात्तत्वम् । एवमनेन स्तोत्रेण तुष्टौ
२० युवां दातृतमौ प्रजां मे दत्तमिति । "इन्द्राग्नी वा एतस्य प्रजामपगूहतः" (तैसं २.२.१) इत्यादि ब्राह्मणम् ॥

---

वीर्यं यस्तो नेन्द्रियेण वीर्येण व्यृध्यते"१ (तैसं २.२.१) इति । युद्धश्रमेणेन्द्रियगतस्य वीर्यस्य व्यृद्धिः ॥

द्वितीयामिष्टिं विधत्ते — "अप वा एतस्मादिन्द्रियं वीर्यं क्रामति य एति जनतामैन्द्राग्नमेका-
२५ दशकपालं निर्वपेज्जनतामेष्यन्निन्द्राग्नी एव स्वेन भागधेयेनोप धावति तावेवास्मिन्निन्द्रियं वीर्यं धत्तः

---

५.ब–°स्वर । ६. मै– ' गुणै ' नास्ति । ७ ब– ' तस्मै ' नास्ति, त. ति. पं– ष° । ८–८. मै– भार्याभ्राता । ९. त. नि. ब– °स्नेहात् । * "हृदया अघा" इत्यादिश्छेदः तैप्रा–व्याख्यात्कर्त्रा माहिषेयेणेष्यते। सूत्रेणानेन, संहितायां दीर्घं 'अघायुः' पदकाले 'अघयु' इति ह्रस्वो भवतीति माहिषेयस्य अभिप्रायः ।

काम्ये द्वियाज्यापुरोनुवाक्याः ]

इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् । साकमेकेन कर्मणा ॥
शुचिं नु स्तोमं नवजातमद्येन्द्राग्नी वृत्रहणा जुषेथाम् (१) ।
उभा हि वां सुहवा जोहवीमि ता वाजं सद्य उशते धेष्ठा ॥

इन्द्राग्नी इतीन्द्र-अग्नी । नवतिम् । पुरः । दासपत्नीरिति दास-पत्नीः । अधूनुतम् ॥
साकम् । एकेन । कर्मणा ॥ ५
शुचिम् । नु । स्तोमम् । नवजातमिति नव-जातम् । अद्य ।
इन्द्राग्नी इतीन्द्र-अग्नी । वृत्रहणेति वृत्र-हना । जुषेथाम् ( १ ) ।
उभा । हि । वाम् । सुहवेति सु-हवा । जोहवीमि ।
ता । वाजम् । सद्यः । उशते । धेष्ठा ॥

अथ "ऐन्द्राग्नमेकादशकपालं निर्वपेत् संग्रामं जित्वा" (तैसं २.२.१) इत्यस्य १० पुरोनुवाक्या— "इन्द्राग्नी नवतिम्" इति गायत्री त्रिपदा ॥ हे ${}^{v}$इन्द्राग्नी । पाष्ठिकमाद्युदात्तत्वम् (पा ६.१.१९८) । ${}^{v}$नवतिं नवतिसंख्याकाः[10] ${}^{v}$पुरः असुराणां पुरीः शत्रूणां वा । ${}^{v}$दासपत्नीः दासाः उपक्षपयितारः प्रजानां, तादृशाः पतयः स्वामिनो यासां पुराम् । दसिः सौत्रो धातुरुपक्षयवृत्तिः । "दंसेष्टटनौ न आ च" (उ ६९८) इति टप्रत्ययः । बहुव्रीहौ "विभाषा सपूर्वस्य" (पा ४.१.३४) इति नकारः । ${}^{v}$साकं सहैव ${}^{v}$एकेन ${}^{v}$कर्मणा प्रहरणलक्षणेन १५ तादृशीः पुरः ${}^{v}$अधूनुतम् अकम्पयतं नाशितवन्तौ । धूञ् कम्पने स्वादिः । वर्णव्यत्ययेन दीर्घः । क्रैयादिकाद्वा धूञो विकरणव्यत्ययेन श्नुप्रत्ययः । तस्मादेवं महानुभावौ युवाम् इमं यजमानं संग्रामे जितवन्तमनुगृह्णीतम् अस्मिन्निन्द्रियादिकं धत्तम् । "वि वा एष इन्द्रियेण वीर्येणर्ध्यते" (तैसं २.२.१) इत्यादि ब्राह्मणम् ॥

तत्रैव याज्या—'शुचिम्' इति चतुष्पदा त्रिष्टुप् ॥ ${}^{v}$शुचिं निर्दोषं ${}^{v}$स्तोमं स्तोत्रं ${}^{v}$नव- २० जातं नवम् अभूतपूर्वं जातं जननम् अस्येति । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् (पा ६.२.१) ।

सहेन्द्रियेण वीर्येण जनतामेति" (तैसं २.२.१) इति । [24]विजिगीषुकथायै स्वविद्याप्रकटनाय वा सभां जिगमिषोर्धैर्यभ्रंशरूपं [25]वीर्यापक्रमणं भवति ॥

तृतीया त्वैन्द्राग्नेष्टिः पौष्णचरुक्षैत्रपत्यचरुभ्यामुपरिष्टात्[26] विधास्यते ॥

इन्द्राग्नी इति ॥ तासु त्रिसृष्विष्टिषु पुरोनुवाक्यामाह — "इन्द्राग्नी नवतिं पुरो दासपत्नीरधू- २५ नुतम् । साकमेकेन कर्मणा" इति ॥ दासाः प्रजानामुपक्षपयितारस्तस्करप्रभवस्ते पतयो यासां पुरीणां ता दासपत्न्यः । हे ${}^{v}$इन्द्राग्नी, तादृशीर्नवतिसंख्याकाः ${}^{v}$पुरः युगपत् एकेनैव प्रहारकर्मणा युवां क्षपयतम् ॥

शुचिमिति ॥ याज्यामाह — "शुचिं नु स्तोमं नवजातमद्येन्द्राग्नी वृत्रहणा जुषेथाम् । उभा हि वां सुहवा जोहवीमि ता वाजं सद्य उशते धेष्ठा" इति ॥ हे वृत्रहणौ इन्द्राग्नी,

१०. व- °संख्यायुक्ताः । ३०

२४. आ.पा.हा–विजिगीषुकथासु । २५. तं–वीर्यापकुण्ठनम् । २६. आ.तं– °चरुभ्यामूर्ध्वम् ।

अथ अस्मिन्नहनि। हे इन्द्राग्नी, पादादित्वात् न निहन्यते। पाष्ठिकमामन्त्रिताद्युदात्तत्वम् (पा ६·१·१९८)। वृत्रहणा वृत्रस्य पापस्य हन्तारौ युवाम्। "सुपां सुलुक्" (पा ७·१·३९) इत्यादिना आकार। "नामन्त्रिते समानाधिकरणे सामान्यवचनम्" (पा ८·१·७३) इति पूर्वस्याविद्यमानवत्त्वनिषेधात् निहन्यते। जुषेथां सेवेथां, नु क्षिप्रम्। "[११]आमन्त्रितं पूर्वमविद्यमानवत्" (पा ८·१ ७२) इत्यविद्यमानवत्त्वात्[११] न निहन्यते। सार्वधातुकानुदात्तत्वे (पा ६·१·१८६) विकरणस्वरः। हि यस्मात् उभा उभौ वां युवां सुहवा स्वाह्वानौ आहूयमानावप्यरोषौ। "बहुलं छन्दसि" (पा ६·१·३४) इति प्राप्तेन प्रत्ययोत्पत्तेः अनैमित्तिके संप्रसारणे कृते, आतोयुचोऽप्रसङ्गात्* (पा ३·३·१२८) "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्" (पा ३·३ १२६) इति खल्प्रत्ययः। कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६·२·१३९)। 'उभा सुहवा' इति "सुपां सुलुक्" (पा ७·१·३९) इत्याकारः। ईदृशौ वां युवां जोहवीमि भृशमाह्वयामि। ह्वयतेर्यङ्लुक्। "अभ्यस्तस्य च" (पा ६·१·३३) इति सम्प्रसारणम्। "यङो वा" (पा ७·३·९४) इति ईडागमः। "हि च" (पा ८·१·३४) इति निघाते निषिद्धे "अभ्यस्तानामादिः" (पा ६·१·१८९) इत्याद्युदात्तत्वम्। ता तौ युवां वाजम् अन्नम् उशते कामयमानाय यजमानाय। "शतुरनुमो नद्यजादी" (पा ६·१·१७३) इति विभक्तेरुदात्तत्वम्। सद्यः तदानीमेव धेष्ठा धातृतमौ। धानकर्मणो दधातेस्तृचि "तुश्छन्दसि" (पा ५·३·५९) इति इष्ठन्प्रत्ययः। "तुरिष्ठेमेयःसु" (पा ६·४ १५४) इति तृशब्दस्य लोपः। पूर्ववत् विभक्तेराकारः। तौ तादृग्गुणौ युवां यस्मात् जोहवीमि, तस्मादिमं स्तोमं जुषेथाम्। अस्मिन्निन्द्रियादिकं च धत्तमिति॥

अद्य स्तोमं जुषेथां सेवेथाम्। कीदृशम्? शुचिं निर्दोषं, नवैः [२७]उक्तिविशेषैर्जातं जन्म यस्य तं नवजातम्। सुहवा[२८] रोषगर्वादिरहिततया सुखेन होतुं शक्यौ युवामुभौ, यस्मात् जोहवीमि आह्वयामि तस्मात् तावुभौ युवां कामयमानाय यजमानाय वाजं सद्यः [२९]धत्तम्। तदिदमुक्तरार्चोक्तम् [३०]अत्रं, न[३०] स्तोत्रम्॥

यथोक्तकर्मप्रयोगान्तःपातिनमपरं यागं विधत्ते—"पौष्णं चरुमनु निर्वपेत् पूषा वा इन्द्रियस्य वीर्यस्यानुप्रदाता पूषणमेव स्वेन भागधेयेनोप धावति स एवास्मा इन्द्रियं वीर्यमनु प्र यच्छति" (तैसं २ २·१) इति। वीर्यं प्रददानाविन्द्राग्नी अनु पूषा प्रयच्छति॥

११-११ त. ति ब-द्वयोरप्यामन्त्रितयोरविद्यमानवत्त्वात्। *शुद्धीकृतोऽयं पाठः। मैसूर पुस्तके लिखितपुस्तकेषु 'आतोयुजोऽ°' इति लभ्यते।

२७. आ.क पा.हा-अन्नविशेषै। २८. आ१.इ उ त.मा हा-'सुहवा' नास्ति। २९. क-'धत्तम्' इत्यस्यानन्तरं 'दत्तम्'। ३०-३०. हा-अन्नमेव न; आ१.तं-नूतन°, क-नूतनमन्न न।

-काम्येष्टियाज्यापुरोनुवाक्याः ]

वयमु त्वा पथस्पते रथं न वाजसातये। धिये पूषन्नयुज्महि ॥
पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानडर्कम्।
स नो रासच्छुरुधश्चन्द्राग्रा धियंधियं सीषधाति प्र पूषा ॥

वयम्। उ। त्वा। पथः। पते। रथम्। न। वाजसातय इति वाज-सातये।
धिये। पूषन्। अयुज्महि ॥ ५
पथस्पथ इति पथः-पथः। परिपतिमिति परि-पतिम्। वचस्या।
कामेन। कृतः। अभीति। आनट्। अर्कम् ॥
सः। नः। रासत्। शुरुधः। चन्द्राग्रा इति चन्द्र-अग्राः।
धियंधियमिति धियम्-धियम्। सीषधाति। प्रेति। पूषा ॥

अथ संग्रामं जित्वा जनतामेष्यतः "पौष्णं चरुमनु निर्वपेत्" (तैसं २.२.१) इति पौष्णश्चरुः अनुनिर्वाप्यत्वेनाम्नातः। [12]तत्रेयं पुरोनुवाक्या—'वयम्' इति गायत्री त्रिपदा ॥ हे ^v^पथः ^v^पते [13]सन्मार्गस्य [14]दर्शयितः। "षष्ठ्याः पतिपुत्र°" (पा ८.३.५३) इत्यादिना विसर्जनीयस्य सकारः। "सुबामन्त्रिते पराङ्गवत् स्वरे" (पा २.१.२) इति षष्ठ्यन्तस्य पराङ्गवद्भावात् षष्ठ्यन्तामन्त्रितसमुदायो निहन्यते। हे ^v^पूषन्, ^v^वयम् ^v^उ वयमेव त्वाम् ^v^अयुज्महि योजयामः। "छन्दसि लुङ्लङ्लिटः" (पा ३.४.६) इति लङ्। "बहुलं छन्दसि" (पा २.४.७३) इति शपो लुक्। कमिव ? ^v^रथं ^v^न रथमिव। उपरिष्टादुपाचारत्वात्* उपमानार्थो नशब्दः (द्र. निरुक्त १.४)। किमर्थम् ? ^v^धिये कर्मणे कर्मसिद्ध्यर्थम्। "सावेकाचः°" (पा ६.१.१६८) इति विभक्तेरुदात्तत्वम्। धीर्विशेष्यते, ^v^वाजसातये वाजोऽन्नं स सन्यते लभ्यते अस्याम् इति। [15]अधिकरणार्थे क्तिनि[15] "जनसनखनाम्°" (पा ६.४.४२) इत्यात्वम्। "[16]मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः" (पा ६.२.१५१) इत्युत्तरपदान्तोदात्तत्वं[16] बाधित्वा दासीभारादित्वात् (पा ६.२.४२) पूर्वपदप्रकृतिस्वरत्वम्। ईदृशकर्मसिद्ध्यर्थं त्वां योजयाम इति ॥

तत्रैव याज्या—'पथस्पथः' इति चतुष्पदा त्रिष्टुप्। ^v^पथस्पथः सर्वस्य मार्गस्य।

वयमिति ॥ तत्र पुरोनुवाक्यामाह— "वयमु त्वा पथस्पते रथं न वाजसातये। धिये पूषन्नयुज्महि" इति ॥ हे सुमार्गपते ^v^पूषन्, ^v^वयम् एव त्वां ^v^रथम् इव योजयामः। किमर्थम् ? ^v^धिये धीयते अनुष्ठीयत इति धीः कर्म। कीदृश्यै धिये ? वाजस्यान्नस्य सातिर्लाभो यस्याः सा वाजसातिस्तस्यै ॥ २५

पथस्पथ इति ॥ याज्यामाह— "पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानडर्कम्। स नो रासच्छुरुधश्चन्द्राग्रा धियंधियं सीषधाति प्र पूषा" इति ॥ फलकामेन प्रेरितोऽहं

१२. मै- तत्र। १३. व- सर्वस्य मार्गस्य ; मै- मार्गस्य। १४. मै- पालयितः। *निरुक्तमनुसृत्य शुद्धतामापादितोऽयं पाठः। मैसूरपुस्तके लिखितपुस्तकेषु च 'उपरिष्टादुपचारत्वात्' इत्यस्ति। ३०
१५. ति-अधिकरणे क्तिन्। १६-१६. ति. व- मन्क्तिन्व्याख्यानेत्यादिनोत्तर°।

"कस्कादिषु च" (पा ८·३·४८) इति विसर्जनीयस्य सकारः । "अनुदात्तस्य च यत्रोदात्तलोपः" (पा ६·१·१६१) इति विभक्तेरुदात्तत्वम् । "अनुदात्तं च" (पा ८·१·३) इत्याम्रेडितस्यानुदात्तत्वम् । [V]परिपतिं परिपालयितारम् । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ( पा ६·२·२ ) । [V]अर्कं स्तोतव्यम् । अर्क स्तवने । कर्मणि घञ् ( पा ३·३·१९ ) । अर्चतेर्वा घञ् । " चजोः कु घिण्ण्यतोः " ( पा ७·३·५२ ) इति कुत्वम् । उभयत्रापि उञ्छादित्वात् ( पा ६·१·१६० ) अन्तोदात्तत्वम् । ईदृशं हि पूषणम् । [V][17]कामेन [V]कृत.[17]कामेन वशीकृतो जनः । [V]वचस्या वचसा स्तोत्ररूपेण । तृतीयैकवचनस्य याजादेश.(पा७ १·३९) । [V]अभ्यानट् अभिप्राप्नोति तस्मादहमपि [18]अथ त्वाम्[18] उपागतोऽस्मीति भाव· । अशू व्याप्तौ ।"छन्दसि लुङ्लङ्लिट."(पा ३·४·६) इति लङ् । श्नम् । परस्मैपदे व्यत्ययेन हल्ङ्यादिलोपे ( पा ६·१·१६८ ) व्रश्चादिना षत्वम् ( पा ८·२·३६ ) । यद्वा नशेर्गतिकर्मण लुङि " मन्त्रे घस° " ( पा २·४·८० ) इति लेर्लुक् । " छन्दस्यपि दृश्यते " ( पा ६·४·७३ ) [19]इत्याडागमः । [V]स पूषा [V]न. अस्मभ्यं [V]रासत् ददातु । रातेर्लेटि " सिब्बहुलं लेटि " ( ३·१·३४ ) इति सिप् । " लेटोऽडाटौ " ( पा ३·४·९४ ) इत्यडागमः । किं ददातु ? [20][V]शुरुधः शोकस्य रुधः निवारयित्रीः । क्विप् ( पा ३·२·१७८ ), कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६ २·१३९) । पृषोदरादित्वात् (पा ६·३·१०९) व्यञ्जनस्य लोप । काः पुनस्ता.? [V]चन्द्राग्राः ओषधी ,चन्द्रः हिरण्यम् असितजातिर्वा चन्द्रः, स अग्रं प्रधानमीश्वरो वा यासा ता·, अस्मभ्य ददातु[20] इदानीं प्रज्ञारतामेन धनरत्नया प्रयोजनमिति ता प्रार्थयते ' धियं धियम् ' इत्यादिना चतुर्थेन पादेन ॥ सर्वां धिय प्रज्ञाम् । स. [V]पूषा [V]प्रसीषधाति[21] प्रकर्षेण सीषधाति साधयत्वस्माकम् । सिध्यतेर्ण्यन्तात्, धातुत्वे [22]कृते लेटि " बहुलं छन्दसि " ( पा २·४·७६ ) इति शप. श्लु , द्विर्वचनादि[23], " बहुलं छन्दसि " ( पा ७·४·७८ ) इत्यभ्यासस्येत्त्वम् । तुजादित्वात् ( पा ६·१·७ ) अभ्यासस्य दीर्घत्वम्[24] । वर्णव्यत्ययेन धातोर्ह्रस्वत्वम् । " लेटोऽडाटौ " ( पा ३·४ ९४ ) इत्याट्[25] । " छन्दस्युभयथा " (पा ३·४·११७) इति लेट आर्धधातुकत्वात् णिलोप । " इण्को "

तस्य तस्य [31]सन्मार्गस्य परिपालकं पूषापरपर्यायमर्कं स्तोत्ररूपेण वचसाऽभिव्याप्तवानस्मि । सोऽस्मभ्य शोकनिरोधिका [V]रासत् प्रयच्छतु । कास्ताः ? [V][32]चन्द्राग्राः [33]चन्द्रवदाह्लादनसाधनमग्रं यासा ता ओषधी. । किं च [V]पूषा [V][34]धियंधियं तत्तद्विषया[34] प्रज्ञा [V][35]प्र [V]सीषधाति प्रकर्षेण साधयतु ॥

१७–१७. मै– ' कामेन कृत ' नास्ति । १८–१८. ति. प. ब– असुम् । १९ ब–इत्यादिनाऽऽडागम । २०–२० स ति. प ब– शुरुध शुध्रुवो निरोधीरेव चन्द्राग्रा निर्मला । यद्वा शु शुच दारिद्र्यं वा निरुणद्धीति शुरुध । २१ मै–' प्रसीषधाति ' नास्ति । २२ स.ति ब– आर्ये । २३–२३ मै–शप्श्लुद्विर्वचनानि । २४ मै–दीर्घ । –२५ मै–इत्यात्वम् ।

३१. आ क.पा.हा– मार्गस्य । ३२. आ१.इ.उ स मा.हा–' चन्द्राग्र ' नास्ति । ३३ पा मा हा–चन्द्रवदास्वादन° । ३४–३४ इ.उ हा–धिय तत्तद्वियम्, पा.मा– धियं न तत्तद्विय । ३५–३५. आ१. इ.उ.स.पा.मा.हा–' प्रसीषधाति ' नास्ति ।

क्षेत्र॑स्य॒ पति॑ना व॒यꣳ हि॒तेने॑व॒ जया॑मसि ।
गाम॑श्वं॑ पोषयि॒त्न्वा स नो॑ (२) मृडाती॒दृशे॑ ॥
क्षेत्र॑स्य पते॒ मधु॑मन्तमू॒र्मिं धे॒नुरि॑व॒ पयो॑ अ॒स्मासु॑ धुक्ष्व ।
म॒धु॒श्चुतं॑ घृ॒तमि॑व॒ सुपू॑तमृ॒तस्य॑ नः॒ पत॑यो मृडयन्तु ॥

क्षेत्र॑स्य । पति॑ना । व॒यम् । हि॒तेन॑ । इ॒व । जया॑मसि ।
गाम् । अश्व॑म् । पो॒षयि॒त्नु । एति॑ । सः । नः॒ (२) । मृ॒डा॒ति॒ । ई॒दृशे॑ ॥
क्षेत्र॑स्य । प॒ते॒ । मधु॑मन्त॒मिति॒ मधु॑-म॒न्त॒म् । ऊ॒र्मिम् । धे॒नुः । इ॒व॒ । पयः॑ । अ॒स्मासु॑ । धु॒क्ष्व॒ ।
म॒धु॒श्चुत॒मिति॑ मधु-श्चुत॑म् । घृ॒तम् । इ॒व॒ । सु॒पूत॒मिति॒ सु-पू॒तम् । ऋ॒तस्य॑ । नः॒ । पत॑यः । मृ॒ड॒य॒न्तु॒ ॥

( पा ८.३.५७ ) इति षत्वम् । यद्वा—विकरणव्यत्ययेन च्लेः " णिश्रि° " ( पा ३.१.४८ ) इत्यादिना चङ्द्विर्वचनादिः । णौ चङ्युपधाया ह्रस्वत्वम् ( पा ७.४.१ ) ॥

" क्षेत्रपत्यं चरुं निर्वपेत् जनतामागत्य " ( तैसं २.२.१ ) इत्यस्य पुरोनुवाक्या [26-]' क्षेत्रस्य ' इति[-26] चतुष्पदाऽनुष्टुप् ॥ [v]क्षेत्रस्य [27]सस्यनिष्पत्त्याधारस्य । [v]पतिना पत्याधिष्ठात्रा । " षष्ठीयुक्तश्छन्दसि वा " ( पा १.४.९ ) इति घिसंज्ञा । तेनानुगृह्यमाणा [v]वयं [v]जयामसि जयामः । " इदन्तो मसि " ( पा ७.१.४६ ) इति इकारः । केनेव ? [v]हितेन [v]इव । यथा हितेन मित्रेण जनेन [28]अमित्रं जयति, एवं क्षेत्रपतिना जयेम । किं जयेम ?— [v]गाम् [v]अश्वं [v]पोषयित्नु पोषकमन्नादिकं प्रजाम् । आकारः समुच्चये । गां चाश्वं च पोषयित्नु च । पुषेर्ण्यन्तात् " स्तनिहृषिपुषि° " ( उ ३१६ ) इत्यादिना इत्नुच्प्रत्ययः । " अयामन्ताल्वाय्येत्न्विष्णुषु " ( पा ६.४.५५ ) इति णेरयादेशः । [v]सः च क्षेत्रपतिः [v]नः अस्मान् [v]मृडाति मृडयतु सुखयतु । मृड सुखने तौदादिकः । "लेटोऽडाटौ" ( पा ३.४.९४ ) इत्याडागमः । [v]ईदृशे यथोक्ते [29]गवादावर्थे अस्मान् स्वामित्वेन स्थापयित्वा सुखयतु । "त्यदादिषु दृशः°" ( पा ३.२.६० ) इति कञ् । इदम ईशादेशः ( पा ६.३.९० ) । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६.२.१३९ ) । अत्र यणादेशसवर्णदीर्घयोरकरणेन[30] तृतीयचतुर्थपादौ [31]पूरयितव्यौ ॥

तत्रैव याज्या—' क्षेत्रस्य पते ' इति चतुष्पदा त्रिष्टुप् ॥ हे [v]क्षेत्रस्य [v]पते । पराङ्-

इष्ट्यन्तरं विधत्ते—" क्षेत्रपत्यं चरुं निर्वपेत् जनतामागत्येयं वै क्षेत्रस्य पतिरस्यामेव प्रतितिष्ठति " ( तैसं २.२.१) इति ॥ क्षेत्राणां भूभागत्वात् भूमेः क्षेत्रपतित्वम् । [36]अर्थवादगतप्रतिष्ठाकामोऽत्राधिकारी ॥

क्षेत्रस्येति ॥ तत्र पुरोनुवाक्यामाह— " क्षेत्रस्य पतिना वयꣳ हितेनेव जयामसि । गामश्वं पोषयित्न्वा स नो मृडातीदृशे " इति ॥ [v]हितेन पुत्रादिना यथा गवादिजयस्तथा [v]क्षेत्रस्य [v]पतिना [v]गाम् [v]अश्वं पोषकमन्नादिकं च [v]वयम् [v]आ समन्तात् जयामः । [v]सः क्षेत्रस्य पतिः [v]ईदृशे गवादौ मां सुखयतु ॥

क्षेत्रस्य पत इति ॥ याज्यामाह — " क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु

२६–२६. मै– ' क्षेत्रस्य इति ' नास्ति । २७. मै–निष्पत्याधारस्य । २८. पं. अधिष्ठाता; तं. ति. य– अधिष्ठिता । २९. तं. ति. य–गवाश्वार्थे । ३०.तं. ति– °दीर्घत्वयोरकरणेन । ३१. य– पूर्यौ ।

३६. इ.उ.पा.भं.हा–अर्थवादागत° ।

यद्भावेन पष्ठ्यामन्त्रितसमुदायस्य पाष्ठिकमामन्त्रितायुदात्तत्वम्- ( पा ६.१.११८ )। [V]मधु-
मन्तम् [V]ऊर्मि मधुरेण क्षीरादिना तद्वन्तमूर्मिम् । अरणशील गवादिसमुदायम् । "अर्तेरूच"
( उ ४९३ ) इति ऋ गतौ इयस्मात् मिप्रत्यय । ऊकारश्चान्तादेश । [V]मधुश्चुत मधुर
क्षीरादिकमासिञ्चन्त [V]न केवल मधुमन्तम्, अपि तु [32]सर्वदा प्राणिभ्य स्रवन्तम् । श्चुतिर्
५ आसेचने । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६.२.१३९ )। [V]घृतम् [V]इव [V]सुपूतम् ।
"सु पूजायाम्" (पा१.४.९४) इति कर्मप्रवचनीयत्वम् । "स्वती पूजायाम्"
( द्र. पाभा २.२.१८ वा ४ ) इति प्रादिसमासः । तेनाव्ययपूर्वपदप्रकृतिस्वरत्वम्
( पा ६.२ २ )। गतित्वाभावात् "सूपमानात् क्तः" (पा ६.२.१४५) इत्येवं न
भवति। ईदृश गवादिसमुदायम् [V]अस्मासु [V]धुक्ष्व[33] स्वयमेव धुक्ष्व अस्मद्दातृत्वेन, यथा
१० [V]धेनु. [V]पयः स्वयमेव दुग्धे दोग्धृदातृत्वेन । कर्मकर्तरि लकारः । "न दुहस्नुनमाम्"
( पा ३.१.८९ ) इति यक्प्रतिषेधः ।[34]यद्वा—'क्षेत्रम्' इत्यध्याहियते । गवादिसमुदाय क्षेत्राणि ।
दुहि. स्वरितेत् ( पा १.३.७२ )। किंच [V]ऋतस्य [V]यज्ञस्य पतय. अग्न्यादयो देवाः [V]नः
अस्मानस्मदीयं वा त्वया दीयमान गवादिसमुदायं [V]मृडयन्तु सुखयन्तु। "छन्दस्युभयथा"
( पा ३.४.११७ ) इति णिच सार्वधातुकत्वेन टित्वाल्लघूपधगुणाभाव· ( पा ७.३.८६ ) ॥

---

१५ धुक्ष्व । मधुश्चुत घृतमिव सुपूतमृतस्य न. पतयो मृडयन्तु" इति॥ हे [V]क्षेत्रस्य [V]पते, [V]धेनु
[V]पय [V]इव त्वम् [V]अस्मासु माधुर्यरसोपेतमूर्मिवत् पुन पुनराद्रुवत्युपेत द्रव्यान्तरेष्वपि स्वमाधुर्य-
स्राविण घृतवत् पर्युषितत्वदोषाभावेन [V]सुपूत नारिकेरफलेक्षुखण्डगुडादिभोग्यपदार्थसमूह [V]धुक्ष्व ।
यज्ञस्य [V]पतय. अस्मान् [V]मृडयन्तु ॥

अवशिष्टामैन्द्राग्नेष्टिं विधत्ते — "ऐन्द्राग्नमेकादशकपालमुपरिष्टान्निर्वपेदृस्यामेव प्रतिष्ठायेन्द्रिय
२० वीर्यमुपरिष्टादात्मन् धत्ते" ( तैस २ २ १ ) इति । क्षेत्रपत्यचरोरूर्ध्वमियमिष्टि । अत्रापि वीर्यकामोऽधि-
कारी । जनतामागत्येति क्षेत्रपत्यस्य काल उपरिष्टादादित्यस्य काल· । अत्र याज्यानुवाक्ये
पूर्वमेवोक्ते ॥

इष्ट्यन्तर विधत्ते — "अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी
२५ सन्नमावास्यां वा पौर्णमासीं वातिपादयेत् पथो वा एषोऽध्यपथेनैति । यो दर्शपूर्णमासयाजी
सन्नमावास्यां वा पौर्णमासीं वातिपादयत्यग्निमेव पथिकृत स्वेन भागधेयेनोप धावति स
एवैनमपथात् पन्थामपि नयत्यनड्वान् दक्षिणा वह्नी ह्येष समृद्ध्यै" ( तैस २.२.२ ) इति ।

---

३२. तं. ति प– तत्सर्वदा। ३३. तं. ति. ब–'धुक्ष्व' इत्यस्यानन्तर 'तं गवादिसमुदायं यथं
दुग्धः स्वम्' । ३४. ति. ब– यथा ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

अग्ने॒ नय॑ सु॒पथा॑ रा॒ये अ॒स्मान् विश्वा॑नि देव व॒युना॑नि वि॒द्वान् ।
यु॒यो॒ध्य॑स्मज्जु॑हुरा॒णमेनो॒ भूयि॑ष्ठां ते॒ नम॑उक्तिं विधेम ॥

अग्ने॑ । नय॑ । सु॒पथेति॑ सु-पथा॑ । रा॒ये । अ॒स्मान् । विश्वा॑नि । दे॒व । व॒युना॑नि । वि॒द्वान् । यु॒यो॒धि । अ॒स्मत् । जु॒हु॒रा॒णम् । एनः॑ । भूयि॑ष्ठाम् । ते॒ । नम॑उक्तिमिति॒ नमः॑—उ॒क्तिम् । वि॒धेम ॥

“ अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयेत् ” ( तैसं २·२·२ ) इत्यस्य पुरोनुवाक्या—‘ अग्ने नय ’ इति त्रिष्टुप् चतुष्पदा ॥ हे Vअग्ने Vदेव, Vसुपथा शोभनेन मार्गेण शास्त्राविरुद्धेन । “ परादिश्छन्दसि ” ( पा ६·२·१९९ ) इत्युत्तरपदाद्युदात्तत्वम् । “ आद्युदात्तं द्व्यच् छन्दसि ” ( पा ६·२·११९ ) इति तु न भवति, अन्तोदात्तत्वात् पथिन्शब्दस्य, क्रत्वादिर्वा द्रष्टव्यः ( पा ६·२·११८ ) । “ न पूजनात् ” ( पा ५·४·६९ ) इति समासान्तप्रतिषेधः । ईदृशेन मार्गेण Vअस्मान् Vनय । किमर्थम् ? Vराये धनाय हविर्लक्षणाय; त्वदीयहविःसंपादनयोग्या वयं यथा भवामः तथा कुर्वित्यर्थः । त्वं हि Vविश्वानि Vवयुनानि ज्ञानान्यभिप्रायान् Vविद्वान् । “ अजियमिशीङ्भ्यश्च ” ( उ ३४८ ) इत्यजेरुनन्प्रत्ययः । “ अजेर्व्यघञपोः ” ( पा २·४·५६ ) इति वीभावश्च । किंच— Vएनः पापं दर्शपूर्णमासातिपत्तिलक्षणम् Vअस्मत् अस्मत्तः Vयुयोधि अपनय । यौतिः पृथग्भावे । लोटि “ बहुलं छन्दसि ” ( पा २·४·७६ ) इति शपः श्लुः । “ वा छन्दसि ” ( पा ३·४·८८ ) इत्यपित्त्वाभावेन अङित्त्वात् “ अङितश्च ” ( पा ६·४·१०३ ) इति धिभावः । कीदृशमेनः ? Vजुहुराणं कुटिलस्वभावम् । हुर्च्छा कौटिल्ये इत्यस्मात् धातोः[35] “ हुर्च्छेः सनो लुक् छलोपश्च ” ( उ २५७ ) इत्यानच्प्रत्ययः ।

पर्वणि पर्वण्यप्रमादेन तदिष्टेरनुष्ठानं [37]विद्यमानः पन्थाः । कस्मिंश्चित्[38] [39]पर्वणि प्रमादेनानुष्ठानाभावोऽपथः । [40]अस्मिन् विषये प्रायश्चित्तरूपेयमिष्टिः । अस्मादेषोऽनड्वान् भारं वहति तस्मात् समृद्ध्यै भवति ॥

अग्न इति ॥ तत्र पुरोनुवाक्यामाह —“ अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ” इति ॥ हे Vअग्ने, त्वं दर्शपूर्णमासेष्टिफलरूपाय धनाय Vअस्मान् अतिपाददोषरहितेन सुमार्गेण Vनय । हे Vदेव , त्वं विश्वान् मार्गान् वेत्सि । नरकहेतुत्वेन [41]कुटिलम् अतिपादरूपं पापमस्मत्तो वियोजय । बहुतमां नमस्कारोक्तिं तव करवाम ॥

३५. मै–‘ धातोः ’ नास्ति ।

३७. आ.पा.भां.हा–विद्यमानम् । ३८. इ.उ.पा.भां.हा–कस्मिन् । ३९. तं– ‘ पर्वणि ’ नास्ति । ४०. तं–तस्मिन् । ४१. इ.उ–क्रूरफलम् ।

आ दे॒वाना॒मपि॒ पन्था॑मगन्म॒ यच्छ॒क्नवा॑म॒ तदनु॒ प्रवो॑ढुम् ।
अ॒ग्निर्वि॒द्वान्त्स य॑जा॒त् (३) सेदु॒ होता॒ सो अ॑ध्व॒रान्त्स ऋ॒तून् क॑ल्पयाति ॥

एति । दे॒वाना॑म् । अपीति॑ । पन्था॑म् । अ॒ग॒न्म॒ ।
यत् । श॒क्नवा॑म । तत् । अन्विति॑ । प्रवो॑ढु॒मिति॒ प्र-वो॒ढु॒म् ॥
५ अ॒ग्नि । वि॒द्वान् । स । य॒जा॒त् (३) । स । इत् । उ॒ । होता॑ ।
सः । अ॒ध्व॒रान् । सः । ऋ॒तून् । क॒ल्प॒या॒ति॒ ॥

ह्वर्छितुमिच्छति जुहुराणम् । यद्वा—हृ प्रसह्यकरणे, [३६]जौहोत्यादिकः, तस्मात् ताच्छीलिके (पा ३·२·१२९) चानशि शपः श्लुः (पा २·४·७५) । "बहुलं छन्दसि" (पा ७·१·१०३) इत्युत्वम् । तदर्थं नय ते तुभ्य भूयिष्ठा बहुतमा नमउक्तिं नमस्कारोक्तिं
१० विधेम क्रियास्म । विध विधाने । आशिषि लिङ् । "लिङयाशिषि" (पा ३·१·८६) इत्यङ् । यासुडादिः (पा ३·४ १०३) । "छन्दस्युभयथा" (पा ३·४·११७) इति सार्वधातुकत्वात् सलोपः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६·२·२) । नमस आद्युदात्तत्वम् । "पयो वा एषः" (तैस २·२·२) इत्यादि ब्राह्मणम् ॥

तत्रैव याज्या— 'आ देवानाम्' इति चतुष्पदा त्रिष्टुप् ॥ देवानां पन्था पन्थानं कर्म-
१५ मार्गं वयम्[३७] आ अगन्म आगता भूयास्म । "मन्त्रे घसह्वर" (पा २·४·८०) इत्यादिना च्लेर्लुक् । यद्वा—"बहुलं छन्दसि" (पा २·४·७३) इति शपो लुक् । "पथिमथोः सर्वनामस्थाने" (पा ६·१·१९९) इति पथिन्शब्दस्याद्युदात्तत्वम् । द्वितीयैकवचनेऽपि व्यत्ययेन (पा ३·१·८५) "पथिमथ्यृभुक्षामात्" (पा ७ १·८५) इत्यात्वम् । ये वयं कालातिपत्त्या कर्ममार्गात् प्रच्युतास्तेऽपि वयम् । यद्वा— यतः कर्ममार्गात् प्रच्युताः तमपि पन्थानमागन्म ।
२० किं कार्त्स्न्येन सर्वं निर्वोढुं शक्यत इत्यत आह— यत् शक्नवाम यावद् किंचिदेव विषये अनुष्ठातुं शक्नुयाम । लेट्याडागमः (पा ३·४·९२) । सतिशिष्टो विकरणस्वरः (पा ६·१·१५८वा ९) । तद् अनु प्रवोढुं तच्छक्यं कर्मजातम् अनुक्रमेणाविच्छेदेन निर्वोढुं पन्थानमगन्म । अविच्छेदेन च अनुष्ठानं प्रवाहः । प्रवोढुमित्यत्र "तादौ च निति कृत्यतौ" (पा ६·२·५०) इति गते प्रकृतिस्वरत्वम् । शक्त्या कर्मप्रवाहो लक्ष्यत इति लक्षणे अनोः कर्मप्रवचनीयत्वम्

२५ आ देवानामिति ॥ तत्र याज्यामाह—"आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोढुम् । अग्निर्विद्वान्त्स यजात् सेदु होता सो अध्वरान्त्स ऋतून् कल्पयाति" इति ॥ यस्मात् पयो वय पूर्वं भ्रष्टाः तम् अपि देवानाम् पन्थानमिदानीमागताः । किं कर्तुम् ? यद् कर्मानुष्ठातुं शक्नुमः तद् अनु क्रमेण प्रवोढुम् । अविच्छेदेनानुष्ठानं प्रवाहः । यद्यप्यहं न जानामि तथाप्ययं पथिकृत् अग्निः अपराधं समाधातु वेत्ति । अतः स अस्मदर्थं यक्ष्यति ।
३० स एव देवानामाह्वाता । स पुत्रातिपत्रान् यज्ञानृत्विकांश्च कल्पयिष्यति ॥

३६. मै— जुहोत्यादिकः । ३७ मै— 'वयम्' नास्ति ।

(पा १.४.८४)। यद्वा—तदिति लिङ्गव्यत्ययेन (पा ३.१.८५) नपुंसकत्वम्। तं पन्थानमनु प्रवोढुं यस्माद्वयं शक्नवाम। संभावने लोट्। तस्मात् तमागन्म[38] वयमिति। ननु तदवस्यमेव कर्मणो वैकल्यं, कथं वा [39]तन्निर्वोढुं शक्यत इत्यत आह— ^V^सः एव खलु ^V^अग्निः पथिकृत्तमा ^V^यजात् यजेत्। अविगुणं यागं निर्वर्तयिष्यति अनतिपन्नतां कर्मणः संपादयिष्यति। लेट आडागमः (पा ३.४.९४)। कोऽस्य विशेष इत्यत आह— ^V^विद्वान् सम्यग्यागसंपादनोपायज्ञः। ननु देवानां यागेऽतिपन्ने किमग्निना शक्यमित्यत आह— ^V^सः एव खल्वग्निः ^V^होता देवानां साधु आह्वाता। ह्वयतेस्तृनि "बहुलं छन्दसि" (पा ६.१.३४) इति संप्रसारणम्। देवाः खल्वग्निना हूयमानाः कर्मणो वैगुण्यमनादृत्य आगमिष्यन्तीति। अधुना किमग्निना [40]अशक्यं कर्तुमिति प्रतिपाद्यते। ^V^सः खल्वग्निः ^V^अध्वरान् यागान् ^V^कल्पयाति कल्पयति अकालकृतानपि फलप्रदानसमर्थान् करोति। यद्वा— अध्वरान् ध्वरैः कर्मणो धारकैः कालातिपत्त्यादिदोषैः रहितानस्मान् अस्मद्यागान् वा करोतु। एवं हि "नञ्सुभ्याम्" (पा ६.२.१७२) इत्युत्तरपदान्तोदात्तत्वं लभ्यते। ननु कालो बलवान्, तत् कथं तदतिपत्तिः अग्निना परिहर्तुं शक्यत इत्यत आह—^V^सः एव खल्वग्निः ^V^ऋतून् कालावयवान् कल्पयाति, आदित्यात्मनाप्यग्नेरेवावस्थितत्वात्। यः कालस्यैव स्रष्टा स कथं [41]विपन्नं कालम्[41] अविपन्नं कर्तुं न शक्नुयात् इति भावः। [42]अत्र 'सः' इति पदं चतुः प्रयुज्यते। तत्र संहितायां प्रथमस्य "एतत्तदोः°" (पा ६.१.१३२) इति प्रथमा लुप्यते। द्वितीयस्य तु "सोऽचि लोपे चेत्°" (पा ६.१.१३४) इति लुप्यते। तृतीयस्य तु "अतो रोः°" (पा ६.१.११३) इति रोरुत्वे गुणे च कृते, "अनुदात्ते च कुधपरे" (पा ६.१.१२०) इति रोः प्रकृतिभावः। चतुर्थस्य तु "भोभगोअघोअपूर्वस्य योऽशि" (पा ८.३.१७) इति यत्वे कृते, "लोपः शाकल्यस्य" (पा ८.३.१९) इति लुप्यते। लोपस्य च असिद्धत्वात् (पा ८.२.१) गुणो न क्रियते॥

इष्ट्यन्तरं विधत्ते — "अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद्य आहिताग्निः सन्नव्रत्यमिव चरेदग्निमेव व्रतपतिँ स्वेन भागधेयेनोप धावति स एवैनं व्रतमा लम्भयति। व्रत्यो भवति" (तैसं २.२.२) इति। अव्रत्यं यागव्रतविरोध्यनृतवादादिकं सोऽग्निरेवैनमव्रत्यधारिणं व्रतं प्रापयति। तत उत्तरेषु यागव्रतेषु योग्यो भवति। अत्र मन्त्रकाण्डे पथिकृल्लिङ्गकं मन्त्रयुग्मं पूर्वमाम्नातमुदाहृतम्। [43]व्रतलिङ्गमुपर्युदाहरिष्यते। [44]मध्यवर्तिनि तु युग्मे विशेषलिङ्गाभावेऽप्युभयसाधारणाल्लिङ्गदर्शनात्[44] पूर्वत्र विकल्पितमित्याहुः केचित्। अपरे तूत्तरत्र विकल्पितमिति मन्यन्ते। आचार्यास्तु पूर्वत्रैव स्विष्टकृतः संयाज्ये इति मन्यन्ते॥

३८. मैं—तमागताः। ३९. मैं—निर्वोढुम्। ४०. व—न साधु शक्यम्। ४१–४१. मै—विपन्नकालम्। ४२. ति. व—तत्र।

४२. क—व्रतलिङ्गकमुप°। ४३. आ. मां—मध्यवर्ति। ४४. ला—°साधारणलिङ्गदर्शनात्।

[ काम्येष्टियाज्यापुरोनुवाक्या

यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो । महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ॥

यत् । वाहिष्ठम् । तत् । अग्नये । बृहत् । अर्च । विभावसो इति विभा-वसो ॥

महिषी। इव । त्वत् । रयिः । त्वत् । वाजाः । उदिति । ईरते ॥

तत्रैव स्विष्टकृत पुरोनुवाक्या—'यद्वाहिष्ठम्' इति चतुष्पदानुष्टुप् ॥ वाहिष्ठ वाहयितृतम प्रीते प्रापयितृ । स्तोत्रमेन त्वेदृश भवति । तस्मादीदृश यत् स्तोत्र तत् अग्नये अग्न्यर्थमेव । अग्निरेव रमणीय स्तोत्रमर्हति । तस्मादीदृशेन स्तोत्रेण त्वामेव स्तौमीति भाव । वाहयितृशब्दात "तुश्छन्दसि" (पा ५.३.५९) इति इष्ठन्प्रत्यय । "तुरिष्ठेमेयःसु" (पा ६.४.१५४) इति तृशब्दलोप । व्यत्ययेन तस्यासिद्धत्वम् अनादृत्य "टे" (पा ६.४.१५५) इति टिलोप । यद्वा—वाहृ प्रयत्ने इत्यस्मात् धातो तृजन्तात् इष्ठन्प्रत्यय । अभीष्टनिर्वहण प्रयत्न । हे विभावसो तेजोधन, त्वमपि बृहत् प्रशस्त मदीय स्तोत्रम् अर्च बहु मन्यस्व अङ्गीकुरु । किमिति देवतान्तर मुक्त्वा अग्निरेव स्तूयत इत्यत आह—त्वत् त्वत्त रयि धनम् उत्पद्यते । उदीरते इति वक्ष्यमाणबहुवचना-न्तमत्र एकवचनान्तविपरिणामेन सबध्यते। कस्मादिव? महिषी इव। महान् ऋषि महर्षि महेश्वर । पृषोदरादित्वात् (पा ६.३.१०९) आकारस्येत्वम्, रेफलोपश्च । तत पञ्चम्येकवचनस्य "सुपा सुलुक्" (पा ७.१ ३९) इति लुक् । महाराजादिव त्वत्तो धनमुत्पद्यते । वृषादित्वात् (पा ६ १.२०३) आद्युदात्तत्वम्। यद्वा— महिष्येव गृह्यते, यथा राजभार्याया रत्नादिक धन लभन्ते एव त्वत्तोऽपि । "अविमह्योष्टिषच्" (उ ४८) इति महे टिषचि कृते, टित्वात् ङीप् (पा ४.१.१५) । उदात्तनिवृत्तिस्वरेण (६.१.१७४) ङीप उदात्तत्वे प्राप्ते, "महिष्याषाढयोर्जायेष्टकाख्या चेत्" (फि ६८) इत्याद्युदात्तत्वम् । किंच— वाजा अन्नान्यपि त्वत्त उदीरते उत्पद्यन्ते । ईर गतौ कम्पने च, इत्यदादिकोऽनुदात्तेत् ॥ "आत्मनेपदेष्वनत" (पा ७ १ ५) इत्यदादेश ॥

यद्वाहिष्ठमिति ॥ तत्र पुरोनुवाक्यामाह— "यद्वाहिष्ठ तदग्नये बृहदर्च विभावसो । महिषीव त्वद्रयिस्त्वद्वाजा उदीरते" इति॥ यत् प्रायणीय हवि, तत् अग्नये बृहत् भवतु । हे विभावसो, फलप्रदानेन मा पूजय । यथा महिषी मया दत्त कार्पासबीज तिलपिष्टादिकं भक्षयित्वा बहुक्षीरादिना प्रीणयति तद्वत् । तथा सति त्वदनुग्रहात् धनं लभ्यतेऽन्नानि चोत्कर्षेण सपद्यन्ते ॥

४३ ब-अनाश्रित्य। ४४-४४. तै. ति, प, ब-पूर्वसवर्णे इकार आद्युदात्तप्रकरणे दिवोदासादीनां (ब-दिवोदासादीनां) छन्दस्युपसंख्यानम् । यद्वा— महिषीव राजभार्या, साऽपि महिषी । मत्वर्थीय ईकारः। पञ्चम्येकवचनस्य 'सुपां सुलुक्' इति लुक् । महाराजादिवत् । ४५. मै-'धन' नास्ति। ४६ मै-लभते।
* शुद्धीकृतोऽयं पाठ । मैसूरपुस्तके लिखितपुस्तकेषु च 'महिष्याषाढयोरिष्टकाख्यायाम्' इति पाठ दृश्यते।
इ. डॉ. देवस्थली-सम्पादित-फिट्सूत्रवृत्तौ टिप्पण्य (पृ ५२, १२१)।

काम्येष्टियाज्यापुरोनुवाक्याः ]

अग्ने॒ त्वं पा॑रया॒ नव्यो॑ अ॒स्मान्त्स्व॒स्तिभि॒रति॑ दु॒र्गाणि॒ विश्वा॑ ।
पू॒श्च॑ पृ॒थ्वी ब॑हु॒ला न॑ उ॒र्वी भवा॑ तो॒काय॒ तन॑याय॒ शं योः ॥
अग्ने॑ । त्वम् । पा॒र॒य॒ । नव्यः॑ । अ॒स्मान् ।
स्व॒स्तिभि॒रिति॑ स्व॒स्ति-भिः॑ । अतीति॑ । दु॒र्गाणीति॑ दुः-गानि॑ । विश्वा॑ ॥
पूः । च॒ । पृ॒थ्वी । ब॒हु॒ला । नः॒ । उ॒र्वी ।
भव॑ । तो॒काय॑ । तन॑याय । शम् । योः ॥　　५

तत्रैव याज्या– ' अग्ने त्वम् ' इति चतुष्पदा त्रिष्टुप् ॥ हे [V]अग्ने, [V]त्वं [V]नव्य, [४७]नव एव नव्यः[४७] " वस्श्यसोकक्रविक्षेमवर्चोनिष्केयल्लोक्यजनपूर्वनवसूरमर्तयविष्टेभ्य-श्छन्दसि स्वार्थे यद्वक्तव्यः " ( द्र. पाभा ५.४.३० ) इति स्वार्थे यत्प्रत्ययः । " यतोऽनावः " ( पा ६.१.२१३ ) इत्याद्युदात्तत्वम् । [V]अस्मान् [V]अति [V]पारय　१०
अतिक्रम्य पारय । पार तीर कर्मसमाप्तौ । अविकलकर्मणः कुरु । किमतिक्रम्य ? [V]विश्वा विश्वानि । " शेश्छन्दसि बहुलम् " ( पा ६.१.७० ) इति लोपः । [V]दुर्गाणि दुःखेन गच्छन्ति येषु तानि दुर्गाणि विघ्नपराधलक्षणानि पापानि । " सुदुरोरधिकरणे " ( पा ३.२.४८ वा ३ ) इति गमेर्डः । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६.२.१३९ ) । तान्यतिक्रम्यास्मान् पारय । " अन्येषामपि दृश्यते " ( पा ६.३.१३७ ) इति संहितायां दीर्घत्वम् । नव्यो अस्मानिति　१५
" प्रकृत्यान्तःपादमव्यपरे " ( पा ६.१.११५ ) इति प्रकृतिभावः । [V]स्वस्तिभिः शोभनैर्मार्गैः दुर्गातिक्रमणोपायभूतैः । [४८]अस गतौ[४८] । " क्तिच्क्तौ च संज्ञायाम् " ( पा ३.३.१७४ ) इति क्तिच् । " तितुत्र° " ( पा ७.२.९ ) इतीट्प्रतिषेधः । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६.२.१३९ ) । किंच [V]नः अस्माकं तत्र वसतां [V]पूः नगरी निवासस्थानं [V]पृथ्वी विस्तीर्णा महावकाशा अविकलकर्मफलोपभोगयोग्या भवत्विति शेषः । पृथुशब्दः कुप्रत्ययान्त-　२०
त्वादन्तोदात्तः । ° " वोतो गुणवचनात् " ( पा ४.१.४४ ) इति ङीष् । " उदात्तयणो

अग्न इति ॥ याज्यामाह — " अग्ने त्वं पारया नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शं योः " इति ॥ हे [V]अग्ने, [४५]मत्क्रियापराधपरिहारायेदानीं प्रवृत्तत्वात् नूतनः [V]त्वम् [V]अस्मान् फलपर्यन्तानां कर्मणां पारं नय । किं कृत्वा ? [V]स्वस्तिभिः यथाशास्त्रानुष्ठानैरतिपादरूपाण्यवत्यरूपाणि वा [V]दुर्गाणि पापानि　२५
विश्वान्यतिक्रमय्य । किंच—अस्माकं निवासाय नगरी विस्तृता भवतु । [४६]सस्यसंपत्त्यर्थम् [V]उर्वी [V]बहुला भवतु । किंच– त्वमस्मदीयाय पुत्राय दुहितृरूपापत्याय च सुखप्रदो भव ॥

४७–४७. तं. ति.पं.च– नित्ययुवा । ४८–४८ ति– अस्तेः ।

४५. आ.क.तं–मदीयापराध° । ४६. तं–सस्यनिष्पत्त्यर्थम् ।

त्वमग्ने व्रतपा असि देव आ (४) मर्त्येष्वा । त्वं युज्ञेष्वीड्यः ॥
त्वम् । अग्ने । व्रतपा इति व्रत-पा । असि । देवः । एति (४) । मर्त्येषु । आ ॥
त्वम् । यज्ञेषु । ईड्यः ॥

हलपूर्वात्'' (पा ६ १·१७४) इति नद्या उदात्तत्वम् । किंच—अस्माक तत्र वसताम् ᵛउर्वी
५ मेदिनी। स एव स्वर. । सा ᵛबहुला भवतु । बहुभिर्धनधान्यपश्वादिभिस्तद्वती भवतु ।
सिध्मादिलक्षणो लच् (पा ५·२·९७)। यद्वा—बहूनामर्थानां लात्री आदात्री उत्पादयित्री
भवतु। लाते "आतोऽनुपसर्गे" (पा ३·२·३) इति क. । किंच ᵛतोकाय
अस्मदीयाय अपत्याय ᵛतनयाय तस्यापत्याय अस्मत्पौत्राय ᵛश शमयिता रोगाणा ᵛभव।
शमेर्ण्यन्तात् क्विप् (पा ३·२ ७६)। "मिता ह्रस्व" (पा ६·४·९२), "णेरनिटि"
१० (पा ६·४·५१) इति णिलोप । किंच—ᵛयो· ᵛयापयिता पृथक्कर्ता आगामिनां भयानाम्
अस्मदीयजनसकाशादपनेता च भव । यौतेः "अन्येभ्योऽपि दृश्यन्ते" (पा ३·२·७५)
इति विच् । "ओतो णित्" (द्र. पा ७·१·९०) इति बहुलवचनान्न[49] भवति । "पष्ठ्यर्थे
चतुर्थी वक्तव्या" (पा २·३·६२ वा १) इति वा, "क्रियार्थोपपदस्य च कर्मणि स्थानिनः"
(पा २·३·१४) इति वा चतुर्थी । तोकं तनयं च रक्षितुं शं योश्च भव । "द्व्यचोऽ-
१५ तस्तिङ." (पा ६·३ १३५) इति संहितायाम् 'अ'-स्य दीर्घत्वम् ॥

"अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद्य आहिताग्निः सन्नव्रत्यमिव चरेत्"
(तैसं २·२·२) इत्यस्य पुरोनुवाक्या—'त्वमग्ने' इति त्रिपदा गायत्री ॥ "अष्टकसप्तक-
षट्कपदा प्रतिष्ठानाम्नी, षट्कसप्तकाष्टकैर्वर्धमाना। विपरीता प्रतिष्ठा" (पिसू ३·१४·१५)
इति वचनात् । 'देव' इति सप्तमीबहुवचनस्य "सुपां सुलुक्" (पा ७·१·३९)
२० इत्यादिना स्वादेशः । आकारौ समुच्चयवाचिनौ । हे ᵛअग्ने, देवेषु च ᵛमर्त्येषु मनुष्येषु[50] च
ᵛत्वम् एव ᵛव्रतपा· व्रतानां पाता रक्षक नान्य कश्चित् । पातेः 'अन्येभ्योऽपि दृश्यन्ते"
(पा ३·२·७५) इति वचनात् विच् । कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६·२·१३९)।
किंच— ᵛत्वम् एव ᵛयज्ञेषु ᵛईड्य· स्तुत्यः । "ईडवन्दवृशंसदुहां ण्यतः" (पा ६·१·२१४)
इत्याद्युदात्तत्वम् । अतोऽस्मानखण्डितव्रतान् पाहि । त्वामेव वयं स्तुम इति भावः ॥

२५ त्वमग्न इति ॥ अथ व्रतपत्ययागस्यासाधारणे युग्मे पुरोनुवाक्यामाह— "त्वमग्ने
व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यः" इति ॥ हे ᵛअग्ने ᵛत्वम् आगत्य मनुष्येषु
व्रतपालकः ᵛदेवः ᵛअसि । ᵛआ समन्तात् ᵛयज्ञेषु[47] ᵛत्वं स्तुत्योऽसि ॥

४९. त, वि– यावयिता । *द्र. "ओतोऽम्शसो" इति सूत्रे सिद्धान्तकौमुदी । "ओतो णित्"-
इत्यनेन प्राप्त· णिद्वद्भावो न भवतीत्यर्थ । ५०. मै– 'मनुष्येषु' नास्ति ।

४७. इ उ–देवेषु ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

यद्वो वयं प्रमिनाम व्रतानि विदुषां देवा अविदुष्टरासः ।
अग्निष्टद् विश्वमा पृणाति विद्वान् येभिर्देवाꣳ ऋतुभिः कल्पयाति ॥

[ जुपेयामास नो यजा दा त्रयोविꣳशतिश्च ]

यत् । वः । वयम् । प्रमिनामेति प्र–मिनाम । व्रतानि ।
विदुषाम् । देवाः । अविदुष्टरास इत्यविदुः–तरासः ॥
अग्निः । तत् । विश्वम् । आ । इति । पृणाति । विद्वान् ।
येभिः । देवान् । ऋतुभिरित्यृतु–भिः । कल्पयाति ॥ १४ ॥

[ इषे त्वा यज्ञस्य शुन्धध्वं कर्मणे देवोऽवर्धूतं धृष्टिः सं वपाम्या ददे प्रत्युष्टं कृष्णोऽसि भुवनमसि वाजस्योभा वां चतुर्दश ]

[ इषे ईꣳहृ भुवनमष्टाविꣳशतिः ] [ इषे त्वा कल्पयाति ]

तत्रैव याज्या– 'यद्वः' इति चतुष्पदा त्रिष्टुप् ॥ हे [V]देवाः, [V]वः युष्माकं [V]विदुषाम् अखण्डितज्ञानानां संबन्धीनि [V]व्रतानि कर्माणि [V]वयम् [V]अविदुष्टरासः अविद्वत्तराः क्षणे क्षणे संभाव्यमानप्रमादाः । अयस्मयादित्वेन (पा १·४·२०) [51]भत्वात् वसोः संप्रसारणम् । "आज्जसेरसुक्" (पा ७·१·५०)। अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६·२·२)। ईदृशा वयं [V]यत् यस्मात् [V]प्रमिनाम हिंसितवन्तः[52] । मीङ् हिंसायां [53]क्र्यादिः । तस्मात् "उपसंवादाशङ्कयोश्च" (पा ३·४·८) इत्याशङ्कायां लेट् । [54]कारणात् कार्यानुमानमाशङ्का । अज्ञानातिशयेन कर्मलोप आशङ्क्यते । "लेटोऽडाटौ" (पा ३·४·९४) इत्याडागमः । "स उत्तमस्य" (पा ३·४·९८) इति सकारलोपः । "मीनातेर्निगमे" (पा ७·३·८१) इति धातोः ह्रस्वत्वम् । "हिनुमीना" (पा ८·४·१५) इति णत्वं बहुलवचनान्न भवति । [V]तद् तस्माद् कारणात् [V]विश्वम् अखण्डितं सर्वं कर्मजातम् [V]अग्निः एवायमिज्यमानः व्रतपतिनामा [V]आ [V]पृणाति [55]आभिमुख्येन पूरयतु, अखण्डितमापादयतु । पृ पालनपूरणयोः । लेट् । "प्वादीनां ह्रस्वः" (पा ७·३·८०) इति ह्रस्वत्वम् । विकरणव्यत्ययो वा । तत्रैव हेतुः, [V]विद्वान्, यस्मादयमग्निर्विद्वान्, "विदेः शतुर्वसुः"

यद्विति ॥ याज्यामाह — "यद्वो वयं प्रमिनाम व्रतानि विदुषां देवा अविदुष्टरासः । अग्निष्टद्विश्वमापृणाति विद्वान् येभिर्देवाꣳ ऋतुभिः कल्पयाति" इति । हे [V]देवाः, [V]विदुषां युष्माकं संबन्धीन्यस्मदनुष्ठेयव्रतान्यत्यन्तमविद्वांसः [V]वयं प्रकर्षेण विनाशयाम इति [V]यत्, [V]तद् सर्वं [V]विद्वान् [V]अग्निः आपूरयतु । यैरृतूपलक्षितकालविशेषैः [V]देवान् हविर्भोक्तुं कल्पयति तैः कालविशेषैः [56]व्रतं पूरयतु ॥

५१. व- भसंज्ञकत्वात् । ५२. तं. ति. व- लुप्तवन्तः । ५३. व- क्रैयादिकः । ५४. मै- कारणतः । ५५. ति- 'आभिमुख्येन' इत्यत आरभ्य अनुवाकसमाप्तिं यावत् नास्ति ।

४८. उ-प्रीतम् ; हा-प्रीतिम् ।

(पा ७.१.३६)। "उगिदचाम्" (पा ७.१.७०) इति नुम्। "सान्तमहतः संयोगस्य" (पा ६.४.१०) इति दीर्घ। संयोगान्तलोपः (पा ८.२.२३)। सर्वज्ञ इत्यर्थः। तस्मादापूरणोपायज्ञो यथा स्यात्तथा कर्तुं समर्थ एवेति भावः। के पुनस्त उपाया इत्यत आह— येभिः यैः। "बहुलं छन्दसि" (पा ७.१.१०) इति भिस ऐस्। ऋतुभिः कालावयवैः ५ पौर्णमास्यादिभिः युष्मान् देवान् अग्न्यादीन् कल्पयाति। देवशब्दवाच्यहविर्लाजादीन् [दीन् यैः] कल्पयति कल्पयितुमर्हति। "अर्हे कृत्यतृचश्च" (पा ३.३.१६९) इति लिङर्थे लेट्। पूर्ववदाडागमः (पा ३.४.९४)। तत्कालादीनवयवान् विदुषोऽग्ने व्रतस्याखण्डितत्वापादनमात्रं क्रियदिति भावः। तस्मात् व्रतमनेन खण्डितमिति भवद्भिरुद्वेगो न कार्यः। अत्र संहितायाम् 'अग्निष्टत्' इति "युष्मत्तत्ततक्षुःष्वन्तः पादम्" (पा ८.३.१०३) इति १० षः। ऋतुभिरित्यत्र "दीर्घादटि समानपादे" (पा ८.३.९) इति रुत्वम्। "आतोऽटि नित्यम्" (पा ८.३.३) इत्यनुनासिकः। एतदुक्तं भवति—अयमग्निः यैः पर्वभिरस्माभिः अननुष्ठितैरसंतुष्टस्तद्विद्वान् वर्तते। तैः सर्वैरदुष्टै[ नुष्ठितै ]रिव अस्मदनुग्रहाय सतुष्टः स देवानपीडानिव इष्टानस्मद्विषये प्रसन्नान् करोतु ॥

॥ इति प्रथमकाण्डे प्रथमप्रपाठके चतुर्दशोऽनुवाकः ॥

१५ इति [56]भट्टभास्करविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये [57]प्रथमकाण्डे प्रथमः प्रपाठकः[57] ॥

---

अत्र विनियोगसंग्रहः—

"अन्त्यानुवाके याज्यानुवाक्याः काम्येष्टिसंगताः।
काण्डस्य तु द्वितीयस्य द्वितीये प्रश्न ईरिताः ॥ १ ॥
उभैन्द्राग्नद्वये युष्मामिन्द्रैन्द्राग्नद्वये तथा।
वयं पौष्णे [58]चरौ क्षेत्र क्षेत्रपत्यचरौ[58] तथा ॥ २ ॥
२० अग्ने पाथिकृते यद्वा व्रातपत्ये द्वियुग्मकम्।
विकल्पेनेति मन्त्राः स्युरनुवाके चतुर्दश" ॥ ३ ॥

अथ मीमांसा ॥ तृतीयाध्यायस्य द्वितीयपादे चिन्तितम्—

"ऐन्द्राग्नादीष्टयः काम्या याज्या अप्युदिताः क्रमात्।
२५ काण्डयोस्ता यथालिङ्गं संचार्या नियमोऽथ वा ॥
लिङ्गं क्रमसमाख्याभ्यां प्रबलं तद्वशादमू।
अकाम्यास्वपि संचार्या याज्याः सर्वत्र का क्षतिः ॥

---

56. तै तिः पे—भट्टकौशिकभास्कर; व—भट्टकौशिकभास्करमिश्र। 57–57. ति व—प्रथमे काण्डे प्रथमे प्रपाठके चतुर्दशोऽनुवाकः। इति समाप्तः प्रथमः प्रश्नः (ति—इति प्रथम प्रश्न समाप्त)।

३० 58–58. व—चरुक्षेत्रे क्षेत्रपत्ये।

काम्येष्टियाज्यापुरोनुवाक्याः ]

समाख्यानात् काण्डयोगः क्रमादिष्टिषु योजनम् ।

अपेक्षते [50]देवमात्रं शक्तिः[50] काम्यैकगास्ततः ” ॥ (जैन्या ३.२.१६–१८) इति ॥

काम्येष्टयस्तत्काण्डे क्रमेणाम्नाताः—“ ऐन्द्राग्नमेकादशकपालं निर्वपेद्यस्य सजाता वी(या)युः ” ( मैसं २.१.१ ) इत्यादिना । सजाता ज्ञातयो वीयुः विमताः[51] विप्रतिपन्ना इत्यर्थः । “ इन्द्राग्नी रोचना ” (मैसं ४.११.१) इत्यादिके मन्त्रकाण्डे याज्यानुवाक्याः क्रमेणाऽऽम्नाताः। तत्रेदं काम्ययाज्यानुवाक्याकाण्डमिति याज्ञिकानां समाख्ययाऽवगम्यते । तयोरिष्टिकाण्डमन्त्रकाण्डयोः प्रथमायामिष्टौ प्रथमपठिते याज्यानुवाक्ये इत्यादिव्यवस्था । [52]कर्मस्वरूपमात्रप्रकाशनं लिङ्गम् । न च तावन्मात्रेण मन्त्रकर्मणोरङ्गाङ्गिभावः । ततः समाख्यावलात् मन्त्रकाण्डकर्मकाण्डयोः [53]संबन्धावगमेन सामान्येन मन्त्रकर्मणोः संबन्धोऽवगम्यते । विशेषतस्त्वस्मिन् प्रथमे कर्मणि अयं मन्त्र इति क्रमादवगम्यते । ऐन्द्राग्नेष्टावैन्द्राग्नमन्त्रः, वैश्वानरेष्टौ वैश्वानरमन्त्र इत्येतादृशो विशेषो [54]लिङ्गेनैवावगम्यत इति चेत् । न । लिङ्गसाधारण्ये क्रमापेक्षणात् । “ ऐन्द्राग्नमेकादशकपालं निर्वपेत् भ्रातृव्यवान् ” ( मैसं २.१.१ ) इति द्वितीयेष्टिरपि । तत्रेन्द्राग्नी पठितौ । मन्त्रकाण्डेऽपि “ इन्द्राग्नी नवतिम् ” ( मैसं ४.११.१ ) इत्यादिकमपरमैन्द्राग्नं याज्यानुवाक्यायुगलम्[55] आम्नातम् । न हि तत्र क्रममन्तरेण निर्णेतुं शक्यम् । न च क्रमेणैव तत्सिद्धेलिङ्गमप्रयोजकमिति वाच्यम् । क्वचित् लिङ्गस्यैव व्यवस्थापकत्वात् । ऐन्द्राबार्हस्पत्येष्टिरेकैवाम्नाता—“ यं कामयेत राजन्यमनपोढ्यो जायेत वृत्रान् घ्नंश्चरेदिति तस्मा एतमैन्द्राबार्हस्पत्यं चरुं निर्वपेत् ” ( तैसं २.४.१३ ) इति । यं राजपुत्रं जायमानं राज्ञः पुरोहितस्य वा काम एवं भवति—अयं मातृगर्भे देवकृतविघ्नेन केनाप्यप्रतिबद्धो जायतां, जातश्च शत्रून् मारयन् संचरेदिति । तद्राजपुत्रार्थेयमिष्टिः । मन्त्रकाण्डे तदिष्टिक्रमे याज्यापुरोनुवाक्ये ऐन्द्राबार्हस्पत्ये द्विविधे आम्नाते । “ इदं वामास्ये हविः ” ( तैसं ३.३.११ ) इत्येकं [55]युगलम् । “ अस्मे इन्द्राबृहस्पती ” ( तैसं ३.३.११ ) इत्यादिकम् अपरम्[56] । तयोः प्रथमयुगलस्य[57] क्रमेण विनियोगेऽपि द्वितीययुगलं लिङ्गेनैव विनियोक्तव्यम् । तस्मात् क्रमसमाख्यासहकृतेन लिङ्गेन काम्येष्टिष्वेवैता याज्या नियम्यन्ते ॥

द्वादशाध्यायस्य चतुर्थपादे चिन्तितम् —

“ इदं वां युग्मयोः किं स्यात् साहित्यं वा विकल्पनम् ।

साहित्यं पूर्ववन्मैवं देवताबोधमैक्यतः ” ॥ ( जैन्या १२.४.२ ) इति ॥

ऐन्द्राबार्हस्पत्ये कर्मणि “ इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती ” ( तैसं ३.३.११ ) इति याज्यानुवाक्ये द्विविधे आम्नाते । तयोः सारस्वतादिवत् समुच्चयः । यथा “ सारस्वतीमनूच्य वाग्यन्तव्या, वैष्णवीमनूच्य वाग्यन्तव्या ” ( मैसं ३.६.८ ) इत्यत्र अदृष्टार्थत्वात्[58] समुच्चयस्तद्वदिति चेत् । मैवम् । दृष्टप्रयोजनस्य देवताबोधनस्यैकत्वात् । तस्मात् विकल्पः ॥

तत्रैवान्यच्चिन्तितम् —

“ पुरोनुवाक्यया याज्या विकल्प्या वा समुच्चिता ।

पुरेवाऽऽद्यः समाख्यानात् वचनात् तु समुच्चयः ” ॥ ( जैन्या १२.४.३ ) इति ॥

[59]देवताप्रकाशनकार्यस्यैकत्वात् युग्मयोर्यथा न समुच्चयः, किंतु विकल्प एव तथैवैकयुग्मगतयोरिति चेत् । मैवम् । पुरोनुवाक्येति समाख्याया उत्तरकालीनयाज्यामन्तरेण[60] अनुपपत्तेः ।

५०–५०. आ.मां.ह्रा–देवमात्रसक्तिः ; इ.उ.क–देवमात्रशक्तिः । ५१. इ. उ. पा.मां.ह्रा–विमनाः । ५२. तं–क्रमरूप° । ५३. तं–संबन्धावगतौ । ५४. तं–लिङ्गेनैव गम्यते आ;.इ.उ.पा.मां.ह्रा–लिङ्गादवगम्यते । ५५. आ–युगुलम् । ५६. इ.उ.पा–‘ अपरम् ’ इत्यस्यानन्तरं ‘ युगलम् ’ । ५७ आ–°युगुलस्य । ५८. इ.उ–अदृष्टहेतुत्वात् ; तं–अदृष्टभेदात् । ५९. आ–देवताप्रकाशनरूपकार्ये° ; उ.पा.मां.ह्रा–देवताप्रकाशरूपकार्ये° । ६०. इ.उ.पा.मां.ह्रा–°कालीनयागमन्तरेण ।

किंच " पुरोनुवाक्यामनूच्य याज्यया जुहोति " ( तैसं ३.४.१० ) इति प्रत्यक्षवचनेन देवतोपलक्षणहविःप्रदानकार्यभेदोऽपि पुरःसरं साहित्यं विधीयते । तस्मात् समुच्चयः ॥

दशमाध्यायस्य चतुर्थपादे चिन्तितम् —

" पर्यायेणापि देवोक्तिर्वैधेनैव पदेन वा ।
अर्थाभेदादाद्यिमोऽन्त्यः शब्दपूर्वान्वयित्वतः " ॥ ( जैन्या १०.४.२२ ) इति ॥

दर्शपूर्णमासयोर्ये निगमास्तेष्वग्न्यादिर्देवताः किं पावकशुच्यादिना येन केनापि पर्यायेणाभिधातव्या किंवा तत्तद्विध्युद्देशगतेन[61] अग्न्यादिपदेनैवेति संशयः । तत्र शब्दस्यार्थप्रत्यायनार्थत्वात् पर्यायाणां स्वरूपेण भेदेऽप्यर्थाभेदाद्येन केनाप्यभिधानमिति [62]प्राप्तः पूर्वपक्षः[62] । यत्र ह्यर्थे [63]कार्यमासज्यते तत्र शब्दोऽर्थप्रत्यायनार्थो[64] भवति । यत्र पुनः [65]शब्द एव[65] कार्यं तत्र कार्यसंबन्धार्थं शब्द एव प्रत्याययितव्यः । तद्यथा — देवदत्ते गौरवमापादयितुं[66] राजसभायामाचार्योपाध्यायादिशब्दैस्तं व्यवहरन्ति । [67]पितृमातृमातुलादयश्च तत्तत्संबन्धविशेषवाचिशब्देन यथा तुष्यन्ति तथा न नामग्रहणेन, प्रत्युत कुप्यन्ति, तद्वदत्राप्यग्न्यादिर्वैधशब्द एव कार्यमासज्य, विधिं विना यागदेवतयोः संबन्धाभावात् । विधिकृते तु तत्संबन्धे वैधशब्दस्य प्रयोजकत्वं दुर्वारम् । अत एवाज्यादिस्वाहाकारोऽग्न्यादिनिगमेषु नियमेन वैधा एवाग्न्यादिशब्दा प्रयुज्यन्ते — " अयाडग्नेः प्रिया धामानि अयाट् सोमस्य प्रिया धामानि " ( तैब्रा ३.५.७ ), " स्वाहाग्निꣳ स्वाहा सोमम् " ( तैब्रा ३.५.६ ), " अग्नेरहमुज्जितिमनूज्जेषꣳ सोमस्याहमुज्जितिमनूज्जेषम् " ( तैसं १.६.४ ) इत्यादिना । तस्माद्वैधपदैरेव तत्तद्देवताभिधानम् ॥

तत्रैवान्यच्चिन्तितम् —

" निगमे पावकाग्न्योः किमग्निः स्यादथवोभयम् ।
अग्निश्चोदकतो मैवं वैधोऽग्निः सगुणो यतः " ॥ ( जैन्या १०.४.२४ ) इति ॥

आधाने श्रूयते — " अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचये " ( द्र. तैसं २.२.४, तैब्रा १.१.५ ) इति । तत्र [68]गुणगुणिनोः पावकाग्न्योर्मध्येऽग्निशब्द एव निगमेषु प्रयोक्तव्यः । कुतः ? तस्यैव चोदकप्राप्तमन्त्रपठितत्वात्[69] । मैवम् । पावकगुणयुक्तस्याग्नेर्विधानेन सर्वप्रयोगेषु तथैव प्राप्तत्वात् । तस्मात् शब्दद्वयं पठितव्यम् । अनेन न्यायेन प्रकृतेऽप्यैन्द्राग्नयागे इन्द्राग्निशब्देनैव निगदेषु देवताऽभिधातव्या । पथिकृद्यागे त्वग्निपथिकृच्छब्दद्वयेनेति द्रष्टव्यम् ॥

अथ व्याकरणम् ॥ उभेरत्र पूर्वसवर्णकादेशस्वरौ । इन्द्रा॑ शब्दे त्वाष्टमिकामन्त्रितनिघातः ( पा ८.१.१९ ) । आहुत्या इत्यत्र तुमर्थे विहितस्य ( पा ३.४.९ ) कध्यैप्रत्ययस्याऽऽदिरुदात्तः । तत्समासे कृत्स्वरः ( पा ६.२.१३९ ) । एवं सर्वमूह्यम् । अस्मिन् प्रथमप्रपाठके [70]शब्दस्वरप्रक्रिया लेशतः प्रदर्शिता ॥ साकल्येन तु प्रकृतिप्रत्ययविकरणतत्तदादेशादिपरिज्ञानमन्तरेण दुर्बोधत्वात् तस्य च सर्वस्यास्माभिर्माधवीयधातुवृत्तौ निरूपितत्वादत्रापि तन्निरूपणे ग्रन्थगौरवप्रसङ्गात् तत्रैव सर्वमवगन्तव्यम् ॥

---

६१ इ उ त पा भां—तत्तद्विध्युद्देशगतेन । ६२–६२ आ—पूर्वपक्षः, पा.हा—प्राप्तः पूर्वः पक्षः, क त—पूर्वः पक्षः । ६३. आ क.पा हा—कार्यमासाद्यते । ६४ इ उ क पा भां.हा—°प्रत्ययनार्थः । ६५–६५ त—शब्दे । ६६. इ उ.आ—गौरवादिमापादयितुम्, आ क—गौरवातिशयमापादयितुम्, हा—अतिगौरवमापादयितुम् । ६७. इ उ—पितृमातुलादयश्च । ६८. इ.उ पा भां.हा—गुणिनोः । ६९. तं.— °मन्त्रे पठितत्वात् । ७०. इ.उ पा भां हा—शब्दप्रक्रिया, तं—स्वरप्रक्रिया ।

तदिदं याज्याकाण्डं वैश्वदेवम् । तथा चानुक्रमणिकायामुक्तम् —

" राजसूयः सब्राह्मणः [71]पशुबन्धः सहेष्टिभिः[72] ।
उपानुवाक्यं याज्याश्च अश्वमेधः सब्राह्मणः ॥
सत्रायणं च होमाश्च सूक्तानि च सहेष्टिभिः ।
सौत्रामणी सहाच्छिद्रैः पशुर्मेधश्च षोडश " ॥ ( काण्डानुक्रमणी २.५–६ ) इति ॥ ५

" अनुमत्यै पुरोडाशम् " ( तैसं १.८ ) इत्यादिको मन्त्रकाण्डस्थोऽष्टमप्रपाठको राजसूयः । " अनुमत्यै " ( तैब्रा १.६–८ ) इत्यादिका विधिकाण्डस्थाः षष्ठसप्तमाष्टमप्रपाठकाः त्रयो राजसूयस्य ब्राह्मणम् । " वायव्यꣳ श्वेतमालभेत " ( तैसं २.१ ) इत्यादिप्रपाठकोक्ताः पशुबन्धाः । " प्रजापतिः प्रजा असृजत " ( तैसं २.२–४ ) इत्यादि प्रपाठकत्रयोक्ता इष्टयः । " प्रजापतिरकामयत प्रजाः सृजेय " ( तैसं ३.१–५ ) इत्यादिकमुपानुवाक्यम् । " उभा १० वामिन्द्राग्नी " ( तैसं १.१.१४ ) इत्यादयो याज्याः । " जीमूतस्य " ( तैसं ४.६.६ ) इत्यादिकस्तत्र तत्रोक्तोऽश्वमेधः । " सांग्रहण्येष्ट्या " ( तैब्रा ३.८.१ ) इत्यादिकं तद्ब्राह्मणम् । " प्रजननं ज्योतिः " ( तैसं ७.१–५ ) इत्यादिप्रपाठकपञ्चकं सत्रायणम् ॥ " जुष्टो दमूनाः " ( तैब्रा २.४–५ ) इत्यादि-प्रपाठकद्वयोक्ता मन्त्रा होमाः । " पीवोन्नाꣳ रयिवृधः सुमेधाः " ( तैब्रा २.८ ) इत्यादिप्रपाठकोक्तानि सूक्तानि । " अग्निर्वा अकामयत " (तैब्रा ३.१.४–६ ) इत्याद्यर्धप्रपाठकोक्ता इष्टयः । " स्वाद्वीं त्वा स्वादुना " १५ ( तैब्रा २.६, १.४.२; तैसं १.८.२१, तैब्रा १.८.५–६ ) इत्यादिः सौत्रामणी । " सर्वान् वा एषोऽग्नौ कामान् प्रवेशयति " ( तैब्रा ३.७ ) इत्यादीन्यच्छिद्राणि । " अञ्जन्ति त्वाम् " ( तैब्रा ३.६ ) इत्यादिकः पशुः । " ब्रह्मणे ब्राह्मणमालभते " ( तैब्रा ३.४ ) इत्यादिर्मेधः ॥

अत्र याज्यानां विश्वे देवा ऋषयः ॥ ' उभा वाम् ' इति द्वे त्रिष्टुभौ । ' इन्द्राग्नी नवतिम् ' इति गायत्री । ' शुचिं नु स्तोमम् ' इति त्रिष्टुप् । ' क्षेत्रस्य पतिना ' इत्यनुष्टुप् । ' क्षेत्रस्य पते ' इति तिस्रः २० त्रिष्टुभः । ' यद्वाहिष्ठम् ' इत्यनुष्टुप् । ' अग्ने त्वम् ' इति त्रिष्टुप् । ' त्वमग्ने व्रतपाः ' इति गायत्री । ' यद्वो वयम् ' इति त्रिष्टुप् । देवतास्तु तत्तन्मन्त्रव्याख्यानेनैव प्रकाशिताः । ता एता ऋषिच्छन्दोदेवता अनुष्ठानकाले स्मरणीयाः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये २५
प्रथमकाण्डे प्रथमप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयात् विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्या-ऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये ३०
प्रथमकाण्डे प्रथमः प्रपाठकः ॥ १ ॥

---

७१. तं–पशुबन्धाः । ७२. आ.क.पा.हा–सहेष्टिकः ।

# ( अथ प्रथमकाण्डे द्वितीयः प्रपाठकः )

अतः परम् अग्निष्टोममन्त्राः येषाम् आध्वरिका इत्याख्या। एषां च सोमः काण्डऋषिः, 'कृणुष्व पाजः' ( तैसं १.२.१४ ) इत्यतः प्राक् अध्वरग्रहदाक्षिणानां सोमार्षेयत्वात् ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
आद्यप्रपाठके दर्शपूर्णमासेष्टिरीरिता ।
प्रपाठकत्रयेणाथ सोमयागः प्रवक्ष्यते ॥ २ ॥

तदिदं [1]सौम्यं काण्डम् । तथा चानुक्रमणिकायामुक्तम्—

" अध्वरप्रभृतित्रीणि तद्विधिर्वाजपेयिके[2]
सत्रं शुक्रियकाण्डे च नवेन्द्रोऽग्निरिति धारणा " ॥ ( काण्डानुक्रमणी २.२ ) इति ।

" आप उन्दन्तु " ( तैसं १.२.१–१३, १.३.१–१३, तैब्रा १.४.८, ३.१.१ ) इत्यादिकमध्वरकाण्डम् । " आ ददे ग्रावासि " ( तैसं १.४.१–४२, तैब्रा ३.१६ ) इत्यादिकं ग्रहकाण्डम् । " उदु त्यं जातवेदसम् " ( तैसं १.४.४३–४५ ) इत्यादिकं [3]दक्षिणाकाण्डम् । तान्येतानि त्रीणि । " प्राचीनवंशं करोति " ( तैसं ६.१–६, ७.१.१–३, तैब्रा १.४.१, १.५.४, १.५.९–१२ ) इत्यादिकं [4]त्रयाणामेतेषां[4] विधिः ॥ " देव सवितः प्रसुव " ( तैसं १.७.७–१२ ) इत्यादिकं वाजपेयस्य मन्त्रकाण्डम् । " देवा वै यथादर्शं यज्ञानाहरन्त " ( तैब्रा १.३.२–९ ) इत्यादिकं वाजपेयस्य विधिकाण्डम् । " त्रिवृत्स्तोमो भवति " ( तैब्रा २.७ ) इत्यादिका सवाः । " नमो वाचे या चोदिता " ( तैआ ४.१–४२ ) इत्यादिकं शुक्रियमन्त्रकाण्डम् । " देवा वै सत्रमासत " ( तैआ ५.१–१२ ) इत्यादिकं तद्विधिकाण्डम् । तान्येतानि नवसङ्ख्याकानि चन्द्रस्य काण्डानि । अतस्तेषु ' चन्द्र ऋषिः ' इति ध्यायेत् ।

सोमाङ्गे दीक्षणीयादौ दर्शमन्त्रातिदेशनात् ।
दर्शोर्ध्वत्वं [5]तत्र युक्तमग्निष्टोमोऽत्र वर्ण्यते ॥

[6]त्रिविधः सोमयागः एकाहाहीनसत्रनामकः[6] । एकस्मिन्नेवाहनि सवनत्रयेण निष्पाद्य एकाहः । द्विरात्रमारभ्यैकादशरात्रपर्यन्ता अहीनाः । त्रयोदशरात्रमारभ्य सहस्रसंवत्सरपर्यन्तानि सत्राणि । द्वादशाहस्तु द्विरूपः । तत्राहीनरूपेण द्विरात्रादीनां प्रकृतिः, सत्ररूपेण त्रयोदशरात्रादीनाम् । तस्य च द्वादशाहस्यैकाहरूपो ज्योतिष्टोमः प्रकृतिः । अत एवाऽऽम्नायते—" एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः " ( ता. ब्रा १६.१.२ ) इति । यद्यपि सप्तसंस्थो ज्योतिष्टोमः— अग्निष्टोमोऽत्यग्निष्टोम उक्थ्य

१. आ क ना–सोम्य° । २ आ क.ना.पा–°पेयको । ३. उ.त्रि २.ना.पा.भा.म१.मै१–दाक्षिणकाण्डम् । ४–४. ६.उ.त्रि१ ना.पा.मै१.मै९–त्रयाणां तेषाम्; म३–त्रयाणाम् । ५ क.तं.म२.मै१.मै१–तस्य । ६–६. मै९–त्रिविधाः सोमयागाः एकाहाहीनसत्रनामकाः ।

षोडश्यतिरात्रोऽप्तोर्यामो वाजपेयश्चेति, तथाप्यग्निष्टोमे कृत्स्नाङ्गजातस्योपदिष्टत्वात् स एवेतरेषां प्रकृतिः। अतः प्रथमं स एवाभिधीयते। तत्र [7]प्रपाठकत्रयस्यानुवाकानां चार्थभेदो विनियोगसंग्रहे दर्शितः —

" द्वितीयप्रश्नमारभ्य प्रश्नत्रय उदीर्यते।
सोमयागे मन्त्रजातं तत्रावान्तरभेदतः ॥ १ ॥
क्रयः पशुर्ग्रहश्चेति[8] प्रश्नभेदोऽवगम्यताम्।
क्रयप्रश्नेऽनुवाकाः स्युरर्थभेदात् चतुर्दश ॥ २ ॥
प्राग्वंशावेशनं दीक्षा स्यात् देवयजनग्रहः।
सोमक्रयण्यानयनं तदीयपदसंग्रहः ॥ ३ ॥
सोमोन्मानं क्रयस्तस्य शकटारोपणं गतिः।
आतिथ्योपसदस्तद्वत् भवेदुत्तरवेदिका ॥
हविर्धानं काम्ययाज्या इत्यर्थो अनुवाकगाः " ॥ ४ ॥

तत्र प्रथमानुवाके [9]"क्षौरादिभिः संस्कृतस्य"[9] यजमानस्य प्राचीनवंशाख्यशालाप्रवेशोऽभिधीयते। 'आप उन्दन्तु' इत्यादयः क्षौरमन्त्राः। क्षौरात् प्रागेव शाला निर्मातव्या। ततो बौधायनो दीक्षासाधनद्रव्यसंपादनपूर्वकं शालानिर्माणमाह—" अग्निष्टोमेन यक्ष्यमाणो भवति। स उपकल्पयते कृष्णाजिनं च कृष्णविषाणं च वासश्च मेखलां च " ( बौश्रौ ६·१ ) इति, " जुष्टे देवयजने शाला कारिता भवति " ( बौश्रौ ६·१ ) इति च। आपस्तम्बोऽपि— " सोमेन यक्ष्यमाणो ब्राह्मणानार्षेयानृत्विजो वृणीते " ( आपश्रौ १०·१·१ ) इत्युपक्रम्य वरणं देवयजनाध्यवसानं दीक्षणीयेष्टिं चाभिधायेदमाह—" प्राचीनवंशं करोति पुरस्तादुन्नतं [10]पश्चान्निनतं सर्वतः परिश्रितम् " ( आपश्रौ १०·५·१ ) इति। एतदेवाभिप्रेत्य वपनविधेः पूर्वं शालां विधत्ते—" प्राचीनवꣳशं करोति देवमनुष्या दिशो व्यभजन्त प्राचीं देवा दक्षिणा पितरः प्रतीचीं मनुष्या उदीचीꣳ रुद्रा यत् प्राचीनवꣳशं करोति देवलोकमेव तद्यजमान उपावर्तते" ( तैसं ६·१·१ ) इति। प्रागायतः पृष्ठवंशो यस्य गृहविशेषस्य स प्राचीनवंशः। केचित्तु 'यस्य देवयजनस्य' इति विगृह्य कृत्स्नदेवयजनविधिमेतमाहुः। देवयजनैकदेशरूपगृहसंबद्धो वंशो देवयजनसंबद्धो भवति। वंशस्य प्रागग्रत्वेन तद्गृहं यजमानो देवलोकं करोति ॥ गृहस्य कुड्यस्थानीयमावरणं विधत्ते— " परि श्रयत्यन्तर्हितो हि देवलोको मनुष्यलोकात् " ( तैसं ६·१·१ ) इति। स्वर्गस्य मनुष्यैरदृश्यत्वादत्रापि तदर्थं परिश्रयणम् ॥ द्वाराणि विधत्ते— " नास्माल्लोकात् स्वेतव्यमित्याहुः को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वेति दिक्ष्वतीकाशान् करोत्युभयोर्लोकयोरभिजित्यै " ( तैसं ६·१·१ ) इति। इह लोके तावत् सुखं प्रत्यक्षसिद्धम्। गृहक्षेत्रपुत्रमित्रादिभिस्तदुत्पादात्। स्वर्गे तु संदिग्धम्। यद्यविघ्नेनेदं कर्म साङ्गं समाप्येत तदा सुखमस्ति नान्यथा। भवदपि तत् सुखं नेदानीं भवति किंतु मरणादूर्ध्वम्। तदापि प्रबलेन केनचित् नरकप्रदेन कर्मणा प्रतिबन्धे सति ततोऽपि विलम्ब्येत। तस्मादिदानीमेवास्माल्लोकान्न सर्वात्मना निर्गन्तव्यमिति बुद्धिमन्त आहुः। तत एतल्लोकदर्शनाय द्वारेषु कृतेषु लोकद्वयजयो भवति ॥

---

७. मै२–प्रथमप्रपाठके क्रमस्य। ८. आ–पशुर्ग्रहश्चेति; तं–पशुर्ग्रहश्चेति; मै१.मै२–पशुग्रहश्चेति।
९–९. इ.उ.पा.भां.हा–क्षौरादिसंस्कृतस्य; ना–क्षौरादिना संस्कृतस्य। १०. त्रि२–पश्चादवनतम्।

हरिः ॐ ॥ आप॑ उन्दन्तु जी॒वसे॑ दीर्घायु॒त्वाय॒ वर्च॑से

ओष॑धे॒ त्राय॑स्वैन॒ꣳ स्वधि॑ते॒ मैन॑ꣳ हिꣳसीः

आपः॑ । उ॒न्दन्तु । जी॒वसे॑ । दी॒र्घा॒यु॒त्वायेति॑ दीर्घायु-त्वाय॑ । वर्च॑से ।

ओष॑धे । त्राय॑स्व । ए॒नम् । स्वधि॑त॒ इति॒ स्व-धि॒ते । मा । ए॒नम् । हि॒ꣳसीः ।

५ तत्र दीक्षिष्यमाणस्य यजमानस्य दक्षिणं गोदानमुनत्ति 'आप.' इति द्विपदया गायत्र्या ॥ [v]आप [v]उन्दन्तु क्लेदयन्तु आर्द्रीकुर्वन्तु । उन्दी क्लेदने रौधादिकः । "श्नसोरल्लोप" (पा ६·४·१११), "श्नान्नलोपः" (पा ६·४·२३)। [v]जीवसे जीवयितुम् इमं यजमानम् । जीवेर्ण्यन्तात् "तुमर्थे सेसेन्" (पा ३ ४·९) इत्यादिना असेप्रत्यय· । णिलोप (पा ६·४·५१)। किं दिवसमात्र जीवयितुम् ? नेत्याह । [v]दीर्घायुत्वाय ।

१० बहुव्रीहेर्भावप्रत्यय. । दीर्घमायुरस्य यथा स्यादित्येवमर्थम् । "इणश्छन्दसि" (द. उ २) इत्युण्प्रत्ययः । किं च [v]वर्चसे दीप्त्यै[1] ।

ऊर्ध्वाग्र बर्हिरनूच्छ्रयति 'ओषधे' इति ॥ हे [v]ओषधे बर्हिरात्मिके । आमन्त्रिताद्युदात्तत्वम् (पा ६ १·१९८)। [v]एन यजमान [v]त्रायस्व रक्ष । स्वधितिव्यवधानमेव रक्षणं बर्हिषा ॥

१५ तस्मिन् बर्हिषि स्वधितिं तिर्यञ्च निदधाति 'स्वधिते' इति ॥ स्वस्मिन् प्रयोजने धिति अवस्थानमस्येति स्वधिति स्वकार्यसमर्थः । धात्र आकारस्येकार । बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरत्वम् (पा ६·२·१)। इह ॥ आमन्त्रिताद्युदात्तत्वम् (पा ६·१·१९८)। हे [v]स्वधिते क्षुर, [v]एनं यजमान [v]मा [v]हिंसीः । हिंसाप्रतिषेधो वप्तुरप्रमादाय ।

आप इति ॥ कल्प — "अथास्य प्राङ्मुखस्य दक्षिण गोदानमद्भिरुनत्ति[11] । आप उन्दन्तु

२० जीवसे दीर्घायुत्वाय वर्चस इति" (बौश्री ६·१-२) इति ॥ गोदान शिरसो भाग. । जीवनायुर्वृद्धि ब्रह्मवर्चसेभ्य आपः शिर आर्द्रीकुर्वन्तु ॥

ओषध इति ॥ कल्प —"ऊर्ध्वाग्रं बर्हिरनूच्छ्रयत्योषधे त्रायस्वैनमिति । स्वधितिं तिर्यञ्चं निदधाति स्वधिते मैनꣳ हिꣳसीरिति । प्रवपति देवश्रूरेतानि ॥ वप इति" (बौश्री ६·२) इति[12] ॥ स्वधिति क्षुर' । देवेषु प्रसिद्धत्वेन श्रूयत इति [v]देवश्रू. देवनापितस्तद्रूपोऽहं वपनं कुर्वे । [v]एतानि केशादीनि ॥

२५ १ मै–तेजसे, ति. प –जीवसे।

११. आ.इ.बा.श–गोदानमद्भिरनुबन्ध्य, हा–गोदानमद्भिरनुवेध्य, मै २–गोदानमद्भिरुन्दन्ति । १२ ॥ उ. तं.ति१ पा मा.म३ हा–' इति ' नास्ति ।

देवश्रूरेतानि प्र वपे स्वस्त्युत्तराण्यशीयाऽऽपो
अस्मान् मातरः शुन्धन्तु घृतेन नो घृतपुवः पुनन्तु

देवश्रूरिति देव-श्रूः । एतानि । प्रेति । वपे । स्वस्ति । उत्तराणीत्युत्-तराणि । अशीय । आपः । अस्मान् । मातरः । शुन्धन्तु । घृतेन । नः । घृतपुव इति घृत-पुवः । पुनन्तु ।

प्रवपति 'देवश्रूः' इति ॥ देवश्रूर्नाम देवनापितः देवेषु श्रूयते । तत्र प्रसिद्धिं गच्छतीति ५ कृत्वा । शृणोतेः "अन्येभ्योऽपि दृश्यन्ते" (पा ३·२·७५) इति कर्मणि क्विप् । दृशिग्रहणस्य विध्यन्तरोपसंग्रहणार्थत्वात्[2] दीर्घत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६·२·१३९)। [V]देवश्रूः एव भूत्वा अहम् [V]एतानि श्मश्रूप्रभृतीनि [V]प्र [V]वपे प्रकृष्टं वपे छिनद्मि । वपतिः स्वरितेत् । "केशश्मश्रु वपते" (तैसं ६·१·१) इत्यादिब्राह्मणम् ॥

उक्तदेशं यजमानोऽभिमृशति 'स्वस्ति' इति ॥ [V]स्वस्ति अविघ्नेन [V]उत्तराणि १० कर्माणि [V]अशीय व्याप्नुयाम् । अश्नोतेर्लिङि "बहुलं छन्दसि" (पा २·४·७३) इति शपो लुक् । सीयुडादि (पा ३·४·१०२) ॥

यजमानमभिषिञ्चति 'आपो अस्मान्' इति द्विपदया विराजा ॥ [V]आपः [V]मातरः मातृस्थानीयाः [V]अस्मान् यजमानान् [V]शुन्धन्तु शोधयन्तु ॥ किंच घृतेन उदकेन पुनन्तीति [V]घृतपुवः । "तन्वादीनां छन्दसि बहुलम्" (पा ६·४·७७ वा १) इत्युवङादेशः । १५ कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६·२·१३९) । पर्जन्यादय उच्यन्ते । ते चास्मान् [V]घृतेन उदकेन पुनन्तु अपापान् कुर्वन्तु । घृ क्षरणे । घृतं क्षरणात् । "अप्सु दीक्षातपसी प्रावेशयन्[3]" (तैसं ६·१·१) इत्यादिब्राह्मणम् ॥

स्वस्तीति ॥ बौधायनः — "[13]स्वस्त्युत्तराण्यशीयेत्युक्त्वा तं[13] प्रत्यभिमृशते" (बौश्रौ ६·२) इति । आपस्तम्बः—"स्वस्त्युत्तराण्यशीयेति यजमानो जपति" (आपश्रौ १०·५·१०) २० इति ॥ अविघ्नेन [V]उत्तराणि कर्माणि प्राप्नुयाम् ॥ विधत्ते—"केशश्मश्रु वपते नखानि नि कृन्तते मृता वा एषा त्वगमेध्या यत् केशश्मश्रु मृतामेव त्वचममेध्यामपहत्य यज्ञियो भूत्वा मेधमुपैति" (तैसं ६·१·१) इति ॥

आप इति ॥ बौधायनः — "अथैनमद्भिरभिषिञ्चत्यापो अस्मान् मातरः शुन्धन्तु घृतेन नो घृतपुवः पुनन्त्विति । संप्रधाव्य रजः [14]प्रप्लावयति विश्वमस्मत् प्रवहन्तु रिप्रमिति" (बौश्रौ ६·२) २५ इति । आपस्तम्बस्त्वेकमन्त्रतां मन्यते (आपश्रौ १०·६·१) ॥ [V]अस्मान् अस्मदीयान् यजमानान् । क्षरदुदकमत्र घृतम् । तेन पुनन्ति पर्जन्यादयो [V]घृतपुवः । [V]रिप्रं पापम् । इमाः [V]आपः सर्वं पापमस्मत्तोऽपनयन्तु ॥

२. मै-°संग्रहार्थत्वात् । ३. मै-'प्रावेशयन्' नास्ति ।

१३-१३. इ.उ.नं.त्रि२.भां.म२ म३.मै१-°येत्युक्त्वा तम् (बौश्रौसूत्रे "°येत्युक्त्वान्तम्") । ३०
१४. आ.पा.हा-प्रक्षालयति ।

विश्वमस्मत् प्र वहन्तु रिप्रमुदाभ्यः शुचिरा पूत एमि
सोमस्य तनूरसि तनुवं मे पाहि

विश्वम् । अस्मत् । प्रेति । वहन्तु । रिप्रम् । उदिति । आभ्यः । शुचिः । एति । पूतः । एमि ।
सोमस्य । तनूः । असि । तनुवम् । मे । पाहि ।

५ संप्रधाव्य रज प्लावयति–' विश्वम् ' इति विराजैकपदया ॥ अस्मत् [4]अस्मत्तः अस्मदीयेभ्यो यजमानेभ्य· विश्व रिप्र पापमिमा आपः प्र वहन्तु देशान्तरं प्रापयन्तु नाशयन्त्विति यावत् ॥

एति यजमान.– ' उदाभ्यः ' इति विराजैकपदया ॥ शुचिः स्नानेन बाह्यत. शुद्धः । पूतः [5]आचमनेनान्तरत शुद्धः । " अपोऽश्नात्यन्तरत एव मेध्यो भवति " ( तैस ६·१·१ )
१० इति ब्राह्मणम् । एवभूत सन् अहम् आभ्य. अद्भ्य उत्तीर्य [6]आ एमि आगच्छामि[6] ।
आभ्य इति " इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ " ( पा २·४·३२ )[7]इत्यशादेशोऽनुदात्तः ।

वासः परिधत्ते– ' सोमस्य ' इति ॥ सोमस्य तनूः शरीरम् असि शरीरमिव प्रियतममसि, तदेनत्यरत्वाद्वाससः । " सौम्य वै क्षौम देवतया " ( तैस ६·१·१ ) इति च ब्राह्मणम् । ईदृश त्व मे मम तनुव शरीर पाहि पालय । " कृषिचमितनि° " ( उ ८४ )
१५ इत्यादिना तनोतेरूप्रत्यय. । " तन्वादीना छन्दसि बहुलम् " ( पा ६·४·७७ वा १ ) इत्युवडादेश । " अग्नेस्तूपाधानम् " ( तैसं ६·१·१ ) इत्यादिब्राह्मणम् ॥

उदाभ्य इति ॥ कल्प— " उदाभ्य. शुचिरापूत एमीत्युदुगाहमानो जपति " (आपश्रौ १० ६·२) इति ॥ स्नानाचमनाभ्या बहिरन्तश्च[15] शुद्ध सन्नहर उद्गम्याऽऽगच्छामि ॥ विधत्ते–" अङ्गिरस सुवर्गं लोक यन्तोऽप्सु दीक्षातपसी प्रावेशयन्नप्सु स्नाति साक्षादेव दीक्षातपसी अव रुन्धे " (तैस ६·१·१) इति ।
२० मुण्डनादिसंस्कारो दीक्षा । आहारादिनियमस्तप । अप्सु [16]स्नानेन तदुभयमप्यवधानेनैव प्राप्नोति ॥ [17]अवतरणप्रदेश विधत्ते – " तीर्थे स्नाति तीर्थे हि ते ता प्रावेशयन् " ( तैस ६ १·१ ) इति ॥ [18]ता दीक्षाम्[18] । उक्तमेवार्थमनूद्य स्तौति—" तीर्थे स्नाति तीर्थमेव समानाना भवति " (तैस ६ १·१) इति । ज्ञातिसख्यादीना[19] तीर्थवत् सेव्यो भवति ॥ आचमन विधत्ते –" अपोऽश्नात्यन्तरत एव मेध्यो भवति " ( तैसं ६·१·१ ) इति ॥
२५ सोमस्येति ॥ कल्प. — " अथ प्रदक्षिणमहतं वास परिधत्ते सोमस्य तनूरसि तनुव मे पाहीति " ( बौश्रौ ६ ? ) इति ॥ क्षौमवस्त्रस्य सोमोऽभिमानी देव इति [20]तस्य वस्त्र शरीरम् ॥ विधत्ते— " वाससा दीक्षयति सौम्यं वै क्षौमं देवतया सोममेव देवतामुपैति यो दीक्षते " ( तैसं ६ १ १ ) इति ।

४. मे–अस्मभ्यम् । ५. मे–आचमनेनान्त । ६–६. मे–एमि गच्छामि । ७. मे–इत्येकादेशो° ।

१५. इ.उ.पा भां हा–बहिरन्त. । १६. इ उ त.त्रि२.ना.पा.भां म१.मे१हा–' स्नानेन ' नास्ति ।
३० १७. ना–अवान्तरप्रदेशम्, पा हा–अवतरप्रदेशम् । १८–१८. भा–' तां दीक्षाम् ' नास्ति, क–तामेव दीक्षाम् । १९. भा–सख्यादीनां समानानां, म ३–ज्ञातिसख्यादिना, त्रि२–ज्ञातिसख्यादीनाम्, क–ज्ञातिसख्यादीनां समानानाम् । २० इ.उ.ना.पा भां हा–'तस्य' नास्ति ।

यजमानस्य क्षौरादिसंस्काराः ]

## महीनां पयोऽसि वर्चोधा असि वर्चो (१) मयि धेहि

महीनाम् । पयः । असि । वर्चोधा इति वर्चः-धाः । असि । वर्चः (१) । मयि । धेहि ।

नवनीतेन [मुखमभ्यङ्क्ते ' महीनाम् ' इति ॥ Vमहीनां गवाम् । " नामन्यतरस्याम् " ( पा ६·१·१७७ ) इति विभक्तेरुदात्तत्वम् । Vपयः Vअसि । [8]पयसो जातत्वात्[8] पय इत्युच्यते। तत्कार्यत्वात् ताच्छब्द्यम् । किंच वर्चसो दीप्तेः Vधाः धारकं च Vअसि । लिङ्गव्यत्ययेन ( पा ३·१·८५ ) [10]पुंलिङ्गता । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६·२·१३९ ) । [11]ईदृक् त्वं Vमयि Vवर्चः Vधेहि । " घृतं देवानां मस्तु पितृणाम् " ( तैसं ६·१·१ ) इत्यादि ब्राह्मणम् ॥

दीक्षयति संस्करोति ॥ मन्त्रस्य पूर्वोत्तरभागौ व्याचष्टे—" सोमस्य तनूरसि तनुवं मे पाहीत्याह स्वामेव देवतामुपैत्यथो आशिषमेवैतामा शास्ते " ( तैसं ६·१·१ ) इति । [21]वस्त्रस्य परिहितस्य सोम एव [22]स्वा देवता[22] ॥ प्रकारान्तरेण स्तौति— " अग्नेस्तूषाधानं वायोर्वातपानं पितृणां नीविरोषधीनां प्रघात आदित्यानां प्राचीनतानो विश्वेषां देवानामोतुर्नक्षत्राणामतीकाशास्तद्वा एतत् सर्वदेवत्यं यद्वासो यद्वाससा दीक्षयति सर्वाभिरेवैनं देवताभिर्दीक्षयति " ( तैसं ६·१·१ ) इति । शलाकोपधानं तूषाः । तत्र तन्तूनां पूरणं तूषाधानम् । वायुना शोषणं वातपानम् । नीविर्बन्धविशेषः । प्रघातो दण्डेन शलाकोपधानेन वा प्रहारः । प्राचीनतानो दीर्घतन्तुप्रसारणम् । ओतुस्तिर्यक्तन्तुप्रसारणम्[23] । अतीकाशाश्छिद्राणि । एतेषु क्रमेणाग्न्यादयोऽभिमानिदेवताः ॥ भोजनं विधत्ते— " बर्हिःप्राणो वै मनुष्यस्तस्याशनं प्राणोऽश्नाति सप्राण एव दीक्षते " ( तैसं ६·१·१ ) इति । प्राणस्थितिहेतुत्वा-दशनस्य प्राणत्वम् । मित्रबन्ध्वादिभिः प्रार्थितो बहु भुञ्जीतेति ॥ विधत्ते— " आशितो भवति यावानेवास्य प्राणस्तेन सह मेधमुपैति " ( तैसं ६·१·१ ) इति ॥

महीनामिति ॥ बौधायनः— "अथास्यैतन्नवनीतं विचितमुदशराव उपहितं[24] । तस्य पाणिभ्यां संगृह्य मुखमेव प्रथममभ्यङ्क्ते महीनां पयोऽसि वर्चोधा असि वर्चो मयि धेहीति । अनुलोममा पादाभ्याम्" ( बौश्रौ ६·२ ) इति । आपस्तम्बो मन्त्रभेदमाह—" महीनां पयोऽसीति दर्भपुञ्जीलाभ्यां नवनीतमुत्पूय । वर्चोधा [25]असीति तेन प्राचीनं शिरोऽभ्यङ्क्ते " ( आपश्रौ १०·६·२८–२९ ) इति ॥ हे नवनीत, त्वं गवां Vपयः कार्यम् Vअसि । स्निग्धतारूपं वर्चो धारयसि । अतो Vमयि ब्रह्मवर्चसंV धेहि ॥ अभ्यङ्गं विधत्ते— " घृतं देवानां मस्तु पितृणां निष्पक्वं मनुष्याणां तद्वा एतत् सर्वदेवत्यं यन्नवनीतं यन्नवनीतेनाभ्यङ्क्ते सर्वा एव देवताः प्रीणाति" ( तैसं ६·१·१ ) इति । नवनीतस्य पाकजन्यास्तिस्रोऽवस्थाः—पक्वम्, [26]ईषत्पक्वं, निःशेषपक्वं चेति[27] । द्रव्यान्तरप्रक्षेपेण सुरभि निःशेषपक्वम् । अत एव बह्वृचः पठन्ति— " आज्यं वै देवानां सुरभि घृतं मनुष्याणामायुतं पितॄणां नवनीतं गर्भाणाम् " ( ऐब्रा १·३ ) इति ॥ प्रकारा-न्तरेण [28]नवनीताभ्यङ्गं प्रस्तौति[28]— " प्रच्युतो वा एषोऽस्माल्लोकादगतो देवलोकं यो दीक्षितोऽ-न्तरेव नवनीतं तस्मान्नवनीतेनाभ्यङ्क्ते " ( तैसं ६·१·१ ) इति । दीक्षितस्य स्वर्गसाधने प्रवृत्तत्वादेतल्लोकप्रच्युतिः । यागस्यासमाप्तत्वात् देवलोकाप्राप्त्यभावः । नवनीतमपि क्षीरभावात् प्रच्युत्य

८. तं.ति-मुखमभ्यङ्क्ते । ९-९. मै-पयोजातत्वात् । १०. मै-पुंलिङ्गत्वम् । ११. मै-ईदृशम् ।

२१. । आ.क.त्रि२. पा.मै १.मै२-वस्त्र० २२-२२. तं.त्रि२.मै१.मै२-देवता; इ.उ.पा.भां.म३-स्वदेवता । २३. इ.उ.तं.पा.भां-प्रसरणम् । २४. आ.म-उपहिते । २५. इ.उ-असि वर्चो मयि धेहीति । २६. आ.ना.पा-किंचित्पक्वम् । २७. आ.क.त्रि२.म२.म३-च । २८-२८. क-नवनीताभ्यञ्जनं स्तौति ।

[ यजमानस्य क्षौरादिसंस्कारा:

वृत्रस्य॑ कनीनि॑काऽसि चक्षु॒ष्पा अ॑सि॒ चक्षु॑र्मे पाहि

वृत्रस्य॑ । क॒नीनि॑का । अ॒सि॒ । च॒क्षु॒ष्पा इति॑ चक्षुः॒-पा. । अ॒सि॒ । चक्षुः॑ । मे॒ । पा॒हि॒ ।

अञ्जनेनाङ्क्ते 'वृत्रस्य' इति ।। वृत्रस्य असुरस्य कनीनिका अक्षिस्थकृष्णमण्डलम् असि । "इन्द्रो वृत्रमहन् तस्य कनीनिका परापतत्" ( तैसं ६.१.१ ) इत्यादिब्राह्मणम् । किञ्च चक्षुष्पा. चक्षुषः पालयितृ[12] त्वम् असि । पातेर्विच् ( पा ३.२.७४ ) पूर्ववल्लिङ्गव्यत्ययः स्वरश्च । "नित्यं समासेऽनुत्तरपदस्थस्य" (पा ८.३.४५) इति विसर्जनीयस्य षत्वम्[13] । "आदेशप्रत्यययोः" (पा ८.३.५९) इति (वा) षत्वम् । ईदृशस्त्वं मम चक्षुः पाहि पालन कुरु । दोषरहितं कुरु ।।

घृतभाव न प्राप्नोति । अतः [29]अन्तरालवर्तित्वसाम्यात् तेन तस्याभ्यङ्गो युक्तः ॥ गुणद्वय विधत्ते– "अनुलोम यजुषा व्यावृत्त्यै" ( तैसं ६.१.१ ) इति । मनुष्याणा नास्त्यानुलोम्ये नियमः । न चाऽभ्यञ्जने[30] मन्त्रोऽस्ति । तस्मात् व्यावृत्त्यै तदुभयमत्रेति नियम्यते ॥

वृत्रस्येति ॥ कल्प.— "अथास्यैतदाञ्जनं पिष्ट दर्भपुञ्जीले[31] *सतूलया च शरेषीकयास्य[32] प्राङ्मुखस्य प्रत्यङ्मुख उपविश्य सव्येन पाणिना दक्षिणमक्ष्यनक्ति वृत्रस्य कनीनिकाऽसि चक्षुष्पा असि चक्षुर्मे पाहीति " ( बौश्रौ ६ २ ) इति ॥ मन्त्रार्थं विशदयन्नञ्जनं विधत्ते — "इन्द्रो वृत्रमहन् तस्य कनीनिका पराऽपतत् तदाञ्जनमभवत् यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते" ( तैसं ६.१.१ ) इति । विनाशयतीत्यर्थः ॥ क्रमेण गुणान् विधत्ते—"दक्षिणं पूर्वमाऽङ्क्ते सव्यं हि पूर्वं मनुष्या आञ्जते न नि धावते नीव हि मनुष्या धावन्ते पञ्च कृत्व आऽङ्क्ते पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे परिमितमाऽङ्क्तेऽपरिमितं हि मनुष्या आञ्जते सतूलयाऽऽङ्क्तेऽपतूलया हि मनुष्या आञ्जते व्यावृत्त्यै" ( तैसं ६.१.१ ) इति । [33]मनुष्येषु [34]योषितां अञ्जने वामभागपूर्वत्वं प्रसिद्धम् । अञ्जनोपेताङ्गुलेश्चक्षुषि सहसा पुन पुन. पर्यावर्तनं निधावनं तच्च मनुष्या कुर्वन्ति । यज्ञे [35]सवनीयपुरोडाशद्रव्याणा पञ्चसंख्यया पङ्क्तिच्छन्दोगताक्षरसाम्यात् यज्ञस्य पाङ्क्तत्वम् । तथा च पञ्चमप्रपाठके वक्ष्यति— "ब्रह्मवादिनो वदन्ति नर्चा न यजुषा पङ्क्तिराप्यतेऽथ किं यज्ञस्य पाङ्क्तत्वमिति धाना करम्भ परिवाप पुरोडाश पयस्या तेन पङ्क्तिराप्यते तद्यज्ञस्य पाङ्क्तत्वम्" ( तैसं ६.५.११ ) इति । परिमितमल्पं पञ्चसंख्यानियमो वा । न [36]त्वयं नियमो मनुष्येष्वस्ति । अग्रसहिता शरेषीका सतूला । मनुष्याणामिषीकानियम एव नास्ति, कुत सतूलत्वनियम ॥ [37]विपक्षबाधकपूर्वकं स्वपक्षं निगमयति— "यदपतूलयाऽञ्जीत वज्र इव स्यात् सतूलयाऽऽङ्क्ते मित्रत्वाय" ( तैसं ६ १ १ ) इति । तूलरहितशरकाष्ठस्य[38] तीक्ष्णाग्रत्वात् वज्रसमत्वम् ॥

---

१२. तं.ति–पातृ । १३. मे–सत्वम् ।

---

२९. इ.ठ.ना.पा.मां–अन्तरावर्तित्व° । ३०. आ.पा–चाऽभ्यञ्जने । ३१. आ क–दर्भपुञ्जीले । • ( बौश्रौसूत्रे 'सतूला' ) । ३२. आ क–शरेषीकया चास्य, मे१.मे२–शरेषीकया ( बौश्रौसूत्रे 'शरेषीका तस्य' ) । ३३. आ–मनुष्यस्य । ३४. क–योषित्सु । ३५. तं मे१.मे २–सांनाय्यपुरो° । ३६. आ.ना.पा हा–ह्ययम् । ३७ आ–विपक्षे बाधकपूर्वकम्, त्रि१ म२.मे१.मे२–विपक्षबाधपूर्वकम् । ३८ इ.ठ.ना पा. मां हा–°रहितकाष्ठस्य ।

यजमानस्य क्षौरादिसंस्कारः ]

चि॒त्पति॑स्त्वा पुनातु वा॒क्पति॑स्त्वा पुनातु दे॒वस्त्वा॑ सवि॒ता पु॑ना॒त्वच्छि॑द्रेण प॒वित्रे॑ण व॒सोः सूर्य॑स्य र॒श्मिभि॑–

चि॒त्पति॒रिति॑ चित्–पतिः॑ । त्वा॒ । पु॒ना॒तु॒ । वा॒क्पति॒रिति॑ वाक्– पतिः॑ । त्वा॒ ।
पु॒ना॒तु॒ । दे॒वः । त्वा॒ । स॒वि॒ता । पु॒ना॒तु॒ । अच्छि॑द्रेण । प॒वित्रे॑ण ।
वसोः॑ । सूर्य॑स्य । र॒श्मिभि॒रिति॑ र॒श्मि–भिः॒ । ५

दर्भपुञ्जीलैर्यजमानं पवयति– ' चित्पतिः ' इत्यादिभिः त्रिपदाभिर्गायत्रीभिः ॥ ' अच्छिद्रेण ' इति सर्वत्रानुषज्यते । चित् चैतन्यं ज्ञानं चेतयतेः । " अन्येभ्योऽपि दृश्यते " ( पा ३.२.१७८ ) इति क्विप् । तस्य पतिरुत्पादकः पालकः चित्पतिः मनइन्द्रियमुच्यते । " मनो वै चित्पतिः " ( तैसं ६.१.१ ) इति ब्राह्मणम् । स त्वां पुनातु मानसा दोषा यथा न स्युः तथा करोतु । किंच वाचः शब्दस्य पतिरुत्पादकः वाक्पतिः वागिन्द्रियमुच्यते, १० मनोऽनन्तरं यस्य प्रवृत्तिः । " यद्धि मनसा ध्यायति तद्वाचा वदति " ( तैसं ६.१.७ ) इति ब्राह्मणम् ॥ स च त्वां पुनातु, वाचिकेभ्यो दोषेभ्यो निवृत्तिं करोतु । " वाचैवैनं पवयति " ( तैसं ६.१.१ ) इति ब्राह्मणम् । अत्र " न भूवाक्चिद्दिधिषु " ( पा ६.२.१९ )

चित्पतिरिति ॥ कल्पः— " अथैनमेकविंशत्या दर्भपुञ्जीलैः पवयति चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति " १५ ( बौश्रौ ६.२ ) इति ॥ प्रथमद्वितीयमन्त्रयोः ' अच्छिद्रेण ' इत्यनुषज्यते । हे यजमान, चितां ज्ञानानां पतिर्मनो देवः त्वां पुनातु[३९] । वाचां शब्दानां पतिः सरस्वती । असौ वा आदित्यः, अच्छिद्रं पवित्रं, तद्रूपोऽयं दर्भस्तोमः । जगन्निवासहेतोः सूर्यस्य रश्मिरूपा दर्भाः ॥ दर्भस्तोमविशिष्टं[४०] मार्जनं विधत्ते—" इन्द्रो वृत्रमहन्त्सोऽपोऽभ्यम्रियत तासां यन्मेध्यं यज्ञियꣳ सदेवमासीत् तदपोदक्रामत् ते दर्भा अभवन् यद्दर्भपुञ्जीलैः पवयति या एव मेध्या यज्ञियाः सदेवा आपस्ताभिरेवैनं पवयति " २० ( तैसं ६.१.१ ) इति । मेध्यं शुद्धं, यज्ञियं यज्ञार्हं, सदेवं देवताप्रियम् । उदपवनब्राह्मणेऽपीयं[४१] ( तैब्रा ३.२.५ ) दर्भोत्पत्तिर्व्याख्याता । [४२]दर्भस्तोमस्य [४३]संख्याविशेषान् विधत्ते— " द्वाभ्यां पवयत्यहोरात्राभ्यामेवैनं पवयति त्रिभिः पवयति त्रय इमे लोका एभिरेवैनं लोकैः पवयति पञ्चभिः पवयति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञायैवैनं पवयति षड्भिः पवयति षड् वा ऋतव ऋतुभिरेवैनं पवयति सप्तभिः पवयति सप्त छन्दाꣳसि छन्दोभिरेवैनं पवयति नवभिः पवयति २५ नव वै पुरुषे प्राणाः सप्राणमेवैनं पवयत्येकविंशत्या पवयति दश हस्त्या अङ्गुल्यो दश पद्या आत्मैकविꣳशो यावानेव पुरुषस्तमपरिवर्गं पवयति " ( तैसं ६.१.१ ) इति ॥ " गायत्री त्रिष्टुब्जगत्यनुष्टुप् पङ्क्त्या सह । बृहत्युष्णिहा ककुत् सूचीभिः शिम्यन्तु त्वा " ( तैसं ५.२.११ ) इत्यश्वमेधे[४४] कश्चिन्मन्त्र आम्नायते । तत्रोष्णिक्ककुभोरवान्तरभेदपरित्यागेन सप्त छन्दांसि । संचारस्थानभूतच्छिद्राभिप्रायेण प्राणानां नवत्वम् ।

३९. क.तं.त्रि२.म२.मै१.मै२–शोधयतु । ४०. इ.त–°स्तोमनिष्ठम् । ४१. आ.ना.पा– ३० °ब्राह्मणे । ४२. तं.त्रि२.मै१.मै२–दर्भस्तोमस्य° । ४३. तं. त्रि२.मै१.मै२–संख्याविकल्पितान् । ४४. आ.ना.पा–इति ।

तस्यं ते पवित्रपते पुवित्रेण यस्मै कं पुने तच्छंकेयमा

तस्यं। ते। पुवित्रपत इतिं पवित्र-पते। पुवित्रेण। यस्मैं।
कम्। पुने। तत्। शकेयम्। एतिं।

इत्युत्तरपदलक्षणे पूर्वपदप्रकृतिस्वरे निषिद्धे "परादिश्छन्दसि बहुलम्" (पा ६.२.१९९)
५ इत्युत्तरपदाद्युदात्तत्वम्[१४]। किंच–देव सविता सर्वस्य प्रेरक [१५]मन प्रभृतीनां च प्रवर्तक[१५], स च त्वा पुनातु। 'अच्छिद्रेण' इति व्याख्यात[१६] "देवो व सवितोत्पुनातु" (तैसं १.१.५) इत्यत्र। "इन्द्रो वृत्रमहन् सोऽपोऽभ्यम्रियत" (तैस ६ १.१) इति ब्राह्मणम्॥

यजमानं वाचयति स च ब्रूते– 'तस्य ते' इति॥ हे पवित्रपते, अच्छिद्रपवित्रा-
१० त्मका आदित्यस्य रश्मय इत्युक्ता, तेषां पते, तस्य [१७]जगत्पालयितृत्वगुणविशिष्टस्य [१८]तव पवित्रेण रश्मिलक्षणेन यस्मै प्रयोजनाय कम् आत्मानमहं पुने शोधयामि। [१९]श्नाप्रत्ययस्योदात्तत्वे शेषस्य चानुदात्तत्वे[१९] "श्नाभ्यस्तयोरातः" (पा ६.४.११२) इत्याकारलोपे उदात्तनिवृत्तिस्वरेणोत्तमैकवचनस्योदात्तत्वम्। यद्वा–'सतिशिष्टस्वरो बलीयानन्यत्र विकरणेभ्यः'
१५ (द्र.पाभा ६.१.१५८ वा ११) इति श्नास्वर बाधित्वा लसार्वधातुकस्वर (पा ६.१.१८६)
१५ एव प्रवर्तते। तत् अहं त्व प्रसादात् शकेयम् निर्वर्तयितुम् शक्तो भूयासम्[२०]। शकेराशिषि

अपरिवर्गं निर्दोषम्। एकविंशतिपक्ष एवात्रानुष्ठेयः। "एकविंशत्या दर्भपिञ्जूलैः पावयन्ति" (ऐब्रा १.३) इति बह्वृचब्राह्मणे तस्यैव[४५] आम्नातत्वात्। तत्रसाधर्म्यमितरे पक्षा अवस्तुत्यानुवाद॥
मन्त्र व्याचष्टे–"चित्पतिस्त्वा पुनात्वित्याह मनो वै चित्पतिर्मनसैवैन पवयति वाक्पतिस्त्वा पुनात्वित्याह वाचैवैन पवयति देवस्त्वा सविता पुनात्वित्याह सवितृप्रसूत एवैन पवयति" (तैस ६ १.१)
२० इति॥

तस्येति॥ कल्प –"यजमान *वाचयति तस्य ते पवित्रेण यस्मै कं पुने तच्छकेयमिति" (बौश्रौ ६.) इति॥ आदित्यरूपस्याऽच्छिद्रपवित्रस्य पति प्रेरकोऽन्तर्यामी। हे पवित्रपते, तादृशस्य तव पवित्रेण यस्मै अग्निष्टोमकर्मणे कम् आत्मान शोधयामि तत् कर्तुं शक्तो भूयासम्॥ एतमभिप्राय दर्शयति–"तस्य ते पवित्रपते पवित्रेण यस्मै क पुने तच्छकेयमित्याहाऽऽ-
२५ शिषमेवैतामा शास्ते" (तैस ६.१.१) इति॥

१४. त.ति–इत्याद्युदात्तत्वम्। १५–१५. मै–मनःप्रभृतेश्च प्रेरक। १६ ति–गतम्। १७. तं. ति–जगद्भासयितृत्व°। १८ मै–'तव' नास्ति। १९–१९. त–उदात्तस्य इटोऽनुदात्तत्वे, ति–उदात्तस्य चानुदात्तत्वे। २०. मै–भवेयम्।

४५. आ.ना.पा–'तस्यैव' नास्ति। * बौश्रौसूत्रे 'अति वाचयति'।

यजमानस्य क्षौरादिसंस्काराः ]

वो देवास ईमहे सत्यधर्माणो अध्वरे यद्वो देवास आगुरे यज्ञियासो हवामहे

वः । देवासः । ईमहे । सत्यधर्माण इति सत्य-धर्माणः । अध्वरे ।

यत् । वः । देवासः । आगुर इत्या-गुरे । यज्ञियासः । हवामहे ।

लिङि " लिङ्याशिष्यङ् " ( पा ३·१·८६ ) इत्यङ् । " छन्दस्युभयथा " ( पा ३·४·११७ ) इति सार्वधातुकत्वात् सलोपः ॥ ५

शालां यजमानमानयति– 'आ वः' इति चतुष्पदयाऽनुष्टुभा । हे [v]देवासः । " आज्जसेरसुक् " ( पा ७·१·५० ) । [v]वः युष्मान् [v]एमहे[२१] आभिमुख्येन ईमहे याचामहे । ईङ् गतौ दैवादिकः[२२] ( पा ३·१·६९ ) छन्दसि याच्ञाकर्मा । " बहुलं छन्दसि " ( पा २·४·७३ ) इति शपो लुक् । यद्वा–भजामहे । [v]सत्यधर्माणः सदा सत्यशीलाः । " धर्मादनिच् केवलात् " ( पा ५·४·१२४ ) इति समासान्तः । किमर्थमित्यत आह–[v]अध्वरे यज्ञे निमित्तभूते । १० " निमित्तात् कर्मसंयोगे सप्तमी " ( पा २·३·३६ वा ६ ) । अध्वरसिद्ध्यर्थमीमहे । बहुव्रीहौ " नञ्सुभ्याम् " ( पा ६·२·१७२ ) इत्युत्तरपदान्तोदात्तत्वम् । एवं देवान् याचित्वा इदानीं तस्याध्वरस्य प्रस्तावं[२३] देवेभ्यो निवेदयति—हे [v]देवासः [v]यज्ञियासः यज्ञार्हाः । " यज्ञर्त्विग्भ्यां घखञौ " ( पा ५·१·७१ ) इति घप्रत्ययः । उभयत्रापि पूर्ववदसुक् ( पा ७·१·५० ) [v]आगुरे उद्योगे यज्ञमारब्धुम् । गुरी उद्यमने । " घञर्थे कविधानम्° " ( पा ३·३·५८ वा ४ ) १५ इति कः । थाथादिस्वरेणान्तोदात्तत्वम् ( पा ६·२·१४४ ) । यद्वा क्विपि ( पा ३·२·७६ ) छान्दसं विभक्त्युदात्तत्वम् । चतुर्थ्या उदात्तत्वम्[२४] ( पा ६·१·१६८ ) । [v]यत् यस्मात् [v]वः युष्मान् [v]हवामहे आह्वयामः । " बहुलं छन्दसि " ( पा ६·१·३४ ) इति संप्रसारणम् । पूर्वस्यामन्त्रितस्याविद्यमानत्वान्निघाताभावः ( पा ८·१·७२ ) । " °अदुपदेशात्° " ( पा ६·१·१८६ ) इति लसार्वधातुकानुदात्तत्वम् । यस्मादेवं तस्मादस्माभिः प्रस्तूयतेऽध्वरः । २० अतस्तत्सिद्ध्यर्थं याचामह इति ।

---

वृत्ति ॥ बौधायनः—" अथैनं सव्ये पाणावभिपाद्य[४६] शालामानयत्या वो देवास ईमहे सत्यधर्माणो अध्वरे यद्वो देवास आगुरे यज्ञियासो हवामह इति " ( बौश्रौ ६·२ ) इति । आपस्तम्बः— " आ वो देवास ईमहे इति पूर्वया द्वारा [४७]प्राग्वंशं प्रविश्य " ( आपश्रौ १०·८·१ ) इति ॥ हे देवाः युष्माकं संबन्धिनि अस्मिन् [v]अध्वरे वयं [v]सत्यधर्माणः अवश्यंभाव्यनुष्ठानपरा आगच्छामः । २५ हे यज्ञसंबन्धिनो देवाः, यस्माद् [v]आगुरे कर्मोद्यमे युष्मानाह्वास्यामस्तस्माद्वयमत्राऽऽगच्छामः ।

---

२१. मै–'एमहे' नास्ति । २२. मै–भौवादिकः । २३. मै–प्रस्थानम् । २४. [ शुद्धीकृतः पाठः ] मै–चतुर्थ्या ह्युदात्तत्वम् ।

---

४६. मै२–पाणी बर्हिः प्रतिपाद्य; तं–पाणावर्हिपाद्य (?); ( बौश्रौसूत्रे 'पाणावभिपाद्य' ) । ४७. आ.ना.पा.ह्रा–प्राग्वंशे । ३०

[ यजमानस्य क्षौरादिसंस्कारः

इन्द्राग्नी द्यावापृथिवी आप ओषधी(२)स्त्वं दीक्षाणामधिपतिरसीह मा सन्तं पाहि ॥१॥

[ यर्वे ओषधीरष्टौ च ]

इन्द्राग्नी इतीन्द्र–अग्नी। द्यावापृथिवी इति द्यावा–पृथिवी। आपः। ओषधीः (२)। त्वम्। दीक्षाणाम्। अधिपतिरित्यधि–पतिः। असि। इह। मा। सन्तम्। पाहि ॥ ॥ १ ॥

५ [ मैसं १,२.१, काठसं २.१; कपिसं १.१३; वास ४.१–५ ]

शालां यजमानं प्रवेशयति– 'इन्द्राग्नी' इति। हे [v]इन्द्राग्नी। पाष्ठिकमामन्त्रिताद्युदात्तत्वम् (६·१·१९८)। हे [v]द्यावापृथिवी द्यावापृथिव्यौ। "दिवो द्यावा" (पा ६·३·२९) इति द्यावादेशः। "वा छन्दसि" (पा ६·१·१०६) इति पूर्वसवर्णदीर्घत्वम्। पूर्वस्याविद्यमानवत्त्वात् (पा ८·१·७२) इदमप्याद्युदात्तमेव। हे [v]आपः। पूर्ववत् स्वरः, द्वयोरप्य-
१० विद्यमानवत्त्वात्[२४]। हे [v]ओषधीः ओषध्यः। "कृदिकारादक्तिनः" (गणसूत्रम् पा ४·१·४५) इति ङीप्। पूर्वसवर्णदीर्घत्वं पूर्ववत् (पा ६·१·१०६)। ओषधिशब्देनौषधिकारणभूता आप एव[२५] उच्यन्ते। तेन सामानाधिकरण्यात् "विभाषितं विशेषवचने बहुवचनम्" (पा ८·१·७४) इति पूर्वस्य विद्यमानत्वात् ओषधीरित्यामन्त्रितं निहन्यते। अथ यजमानः शालां प्रविशति एनमनुजानीतेति भावः। "बहिः पवयित्वान्तः प्र पादयति" (तैसं ६·१·२)
१५ इत्यादि ब्राह्मणम् ॥

आहवनीयमन्वीक्षयति–'त्वम्' इति॥ हे आहवनीय [v]त्वं [v]दीक्षाणाम् [v]अधिपतिः

---

इन्द्राग्नीति ॥ बौधायनः—"पूर्वया द्वारा शालां प्रपादयतीन्द्राग्नी द्यावापृथिवी आप ओषधीरिति" (बौश्रौ ६·२) इति। आपस्तम्बः— "इन्द्राग्नी[४८] द्यावापृथिवीरमपरेणाऽऽहवनीयं दक्षिणाऽतिक्रम्य" (आपश्रौ १०·८·१) इति ॥ हे इन्द्रादयः, [४९]एनमनुजानीतेति शेषः ॥

२० त्वमिति ॥ बौधायनः— "अथैनमग्रेणाऽऽहवनीयं [५०]पर्याणीय दक्षिणत उदङ्मुखमुपवेश्याहवनीयमीक्षयति। त्वं दीक्षाणामधिपतिरसीह मा सन्तं पाहीति" (बौश्रौ ६·२) इति। आपस्तम्बः— "त्वं दीक्षाणामधिपतिरसीत्याहवनीयमुपोपविशति" (आपश्रौ १०·८·१) इति ॥ हे आहवनीय, [v]त्वं दीक्षारूपाणां नियमानां पालकः [v]असि, अतस्त्वत्समीपे स्थितं मां पालय ॥
पूर्वोक्तपूतत्वप्रशंसापूर्वकं प्राचीनवंशप्रवेशं विधत्ते—"यावन्तो वै देवा यज्ञायापुनत त एवाऽभवन्
२५ य एवं विद्वान् यज्ञाय पुनीते भवत्येव बहिः पवयित्वाऽन्तः प्र पादयति मनुष्यलोक एवैनं पवयित्वा पूतं देवलोकं प्र णयति" (तैसं ६·१·२) इति। अभवन् ऐश्वर्यं प्राप्ताः। भवत्येवैश्वर्यं प्राप्नोत्येव ॥

---

२४. ति–°प्यविद्यमानत्वम्। २५. मै–'एव' नास्ति।

---

४८. आ.क.म२–'द्यावापृथिवी' इत्यस्यानन्तरम् 'आप ओषधी.'। ४९. तं–एतमनु°;
३० मै१–मामनु°। ५०. आ–पर्याहृत्य।

स्वामी [v]असि। अव्ययपूर्वपदप्रकृतिस्वरत्वम् ( पा ६.२.२ )। [२६]अतो मामपि दीक्षितं कुर्विति भावः।

यजमान आत्मानमीक्षते– 'इह' इति॥ [v]इह एतस्यां दीक्षायां [v]सन्तं वर्तमानं [v]मा मां [v]पाहि॥

॥ इति प्रथमकाण्डस्य द्वितीयप्रपाठके प्रथमोऽनुवाकः॥ ५

अत्र[५१] विनियोगसंग्रहः —

"आपः शिर उनत्त्योष दर्भोऽत्रान्तर्हितः स्वधि।
क्षुरं निधाय देवश्रूर्वपेत् स्वस्ति तदा जपेत्॥ १॥
आपः स्नायादुदा जप्यं सोम वस्त्रपरिग्रहः।
महीति नवनीतस्य ग्रहो वर्चोऽतिलेपनम्॥ २॥ १०
वृत्रेत्याङ्क्ते चित्पतिस्त्वा त्रिभिर्दर्भेण पावयेत्।
तस्येति जपति स्वामी ह्या यः प्राग्वंशवेशनम्॥ ३॥
इन्द्राग्नी दक्षिणे गत्वा त्वमित्युपविशेदिह।
प्रथमे ह्यनुवाकेऽस्मिन् मन्त्रा अष्टादशेरिताः"॥ ४॥ इति॥

अथ मीमांसा॥ चतुर्थाध्यायस्य तृतीयपादे चिन्तितम्— १५

"किं दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन याजकः[५२]।
[५३]अङ्गाङ्गिभावः कालो वा ह्यपारार्थ्याय चाङ्गता॥
दर्शादिलक्षिते काले सोमयागो विधीयते।
स्वतन्त्रफलवत्त्वेन[५४] न युक्ताऽङ्गाङ्गिता तयोः॥"

( जैन्या ४.३.२४–२५ ) इति। २०

इदमाम्नायते—"दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" ( द्र. तैसं २.५.६ ) इति। तत्रोभयोराग्निमारुतानूयाजवदन्याधीनत्वाभावात् दर्शपूर्णमासोक्तेः पारार्थ्यपरिहाराय सोमस्य दर्शपूर्णमासाङ्गत्वबोधकोऽयं संयोग इति चेत्। नैवम्। स्वतन्त्रफलवतः सोमयागस्याङ्गत्वासंभवात्। "[५५]फलवत्संनिधावफलं तदङ्गम्" ( द्र. मीसू ४.४.३४ ) इति न्यायात्। न चात्र बृहस्पतिसवन्यायेन सोमधर्मकमफलं कर्मान्तरं विधीयत इति शक्यं वक्तुम्। सोमशब्दस्य बृहस्पतिसवशब्दवन्नामत्वाभावेन धर्मातिदेशकत्वाभावात्। क्त्वाप्रत्ययस्तु असत्यङ्गाङ्गिभावे कर्त्रैक्यमात्रेणोपपद्यते। तस्मात् दर्शपूर्णमासशब्दस्य पारार्थ्यमभ्युपेत्यापि तदिष्ट्युपलक्षित उत्तरकाले सोमविधिरयम्। एतदेवाभिप्रेत्य रथरूपकमाम्नायते—"एष वै देवरथो यद्दर्शपूर्णमासौ यो दर्शपूर्णमासाविष्ट्वा सोमेन यजते रथस्पष्ट एवावसाने वरे देवानामव स्यति" ( तैसं २.५.६ ) इति। अवसाने निश्चिते, वरे मार्गे, यथा रथेन क्षुण्णे मार्गे गन्तुः कण्टकपाषाणादिबाधराहित्येन सुखं भवति तथा प्रथमं [५६]दर्शपूर्णमासाविष्टवतः तदुत्तरकाले[५७] तदिष्टिविकृतिषु सोमाङ्गभूतदीक्षणीयाप्रायणीयादिषु कर्मानुष्ठानं सुकरं भवतीत्यर्थः। तस्मात् कालार्थः संयोगः।

२६ तं.ति–अनेन।

५१. तं.मै१.मै२–अथ। ५२. मै१.मै२–याजकः। ५३. आ.ना,पा.ह्य–अङ्गाङ्गिता वा। ५४. त्रि२–°फलयुक्तेन। ५५. म३–फलवत्स्य ह्°। ५६. तं.मै२–दर्शपूर्णमासाभ्यामिष्टवतः। ५७. आ. तं–उत्तरकाले। ३५

[58]पञ्चमाध्यायस्य चतुर्थपादे[58] चिन्तितम् —

"[59]दर्शादीष्ट्वा सोमयाग क्रमोऽस्य नियतो न वा ।
उक्तेराद्यो न सोमस्याऽऽधानानन्तरता श्रुतेः ॥" ( जैन्या ५.४.५ ) इति ॥

" दर्शपूर्णमासाविष्ट्वा सोमेन यजेत " ( द्र. तैस २.५.६ ) इति क्त्वाप्रत्ययेनावगम्यमानः क्रमो नियत इति चेत् । नैवम् । " सोमेन यक्ष्यमाणोऽग्नीना दधीत " ( द्र. काठसं ८.१ ) इत्याधानानन्तरताया अपि श्रवणात् । तस्मादिष्टिसोमयोः पौर्वापर्यं न नियतम् ।

[60]तत्रैवान्यच्चिन्तितम् —

" विप्रस्य सोमपूर्वत्व नियत वा न वाऽग्रिम.[61] ।
उत्कर्षतो नैवमग्नीषोमीयस्यैव तच्छ्रुते ॥ " ( जैन्या ५.४.६ ) इति ॥

इष्टिपूर्वत्व सोमपूर्वत्व च विकल्पितमिति यदुक्त तत्र ब्राह्मणस्य सोमपूर्वत्वमेव नियतम् । कुत ? उत्कर्षश्रवणात् । " आग्नेयो वै ब्राह्मणो देवतया स सोमेनेष्ट्वाऽग्नीषोमीयो भवति यदेवाद पौर्णमास हविस्तत् तर्ह्यनु निर्वपेत् तर्ह्युभयदेवत्यो भवति " ( द्र. काठस ८.१०, तैब्रा २.७.३ ) इति । अस्यायमर्थ — प्रजापतेर्मुखादग्निर्ब्राह्मणश्चेत्युभावुत्पन्नौ । [62]ततो ब्राह्मणस्याग्निरेव देवतेत्याग्नेय एव ब्राह्मणो न तु सौम्य. सोमस्य तद्देवतात्वाभावात् । यदा स ब्राह्मण. सोमेन [63]यजति तदा सोमोऽप्यस्य देवतेत्यग्नीषोमीयो भवति । तस्याग्नीषोमीयस्य ब्राह्मणस्यानुरूपं पौर्णमासमग्नीषोमीयपुरोडाशरूपं हविः सोमादूर्ध्वमनुनिर्वपेत् । तदा स ब्राह्मणो देवताद्वयसम्बन्धी भवतीति । यद्यप्यत्र कर्मान्तर किंचित् विधीयत इति कश्चित् मन्येत तथाऽपि पौर्णमास हविरिति [64]विस्पष्ट प्रत्यभिज्ञानान्न कर्मान्तरं किंतु दर्शपूर्णमासयोः सोमादूर्ध्वमुत्कर्षः । तस्मात् विप्रस्य सोमपूर्वत्वमेव नियतमिति प्राप्ते ब्रूमः— नात्र दर्शशब्दः पूर्णमासशब्दो वा कश्चित् यागवाची श्रूयते । पौर्णमासमित्येष तद्धितान्तो हविर्विशेषणत्वे-नोपन्यस्यते । तच्च हविरग्नीषोमीयपुरोडाशरूपमिति देवताद्वयेन सहपाठादवगम्यते । तस्मादेकस्यैव हविष [65]उत्कर्षो न तु कृत्स्नयोर्दर्शपूर्णमासयोः । तथा सति ब्राह्मणस्यैकस्मिन्नग्नीषोमीयपुरोडाशे सोमपूर्वत्व-नियम । [66]इतरत्र क्षत्रियवैश्ययोरिव [67]अत्रापीष्टिपूर्वत्वसोमपूर्वत्वे विकल्प्येते ।

तृतीयाध्यायस्य चतुर्थपादे चिन्तितम्—

" दिशं प्रतीचीं [68]मनुजा व्यभजन्तेत्यसौ विधि ।
वादो वाऽत्र पुराकल्पस्तुत्यर्थो विधिमर्हति ॥
प्राचीनवंशवाक्योक्तेर्विधानस्यैकवाक्यतः ।
[69]दिग्विभागार्थवादोऽयमुपवीते निवीतवत् ॥ "
( जैन्या ३.४.१०-११ ) इति ॥

ज्योतिष्टोमे श्रूयते—" प्राचीनवंश करोति देवमनुष्या दिशो व्यभजन्त प्राचीं देवा दक्षिणा पितरः प्रतीचीं मनुष्या उदीचीं रुद्रा यत् प्राचीनवंश करोति देवलोकमेव तद्यजमान उपा-वर्तते " ( तैस ६.१.१ ) इति । तत्र देवादीना कर्मानधिकारात् न तत्र विधिशङ्का । मनुष्या प्रतीचीं विभजेयुरित्येव[70] विधि स्यात् । कुत । पुराकल्परूपेणार्थवादेन स्तूयमानत्वात् । पूर्व-पुरुषाचरितत्वाभिधानं पुराकल्पः । व्यभजन्तेत्यनेन भूतार्थवाचिना तदभिधीयते । तस्मात् विधि

५८-५८. इ.उ-पञ्चमस्य चतुर्थे । ५९. इ.उ.पा-मासाविष्ट्वा । ६०. इ.उ.ना पा.हा-तत्रैव चिन्तितम् । ६१. त्रि१-ऽन्तिम । ६२. इ.उ.त्रि१.ना.पा-तत्र । ६३. त्रि१-यजेत । ६४. इ.उ. तं ना.पा.हा-स्पष्टम्; मो-' विस्पष्टम् ' नास्ति । ६५. इ.उ-उत्सर्ग. । ६६. म२-उतरत्र । ६७. आ. -अत्रापीष्टि° ६८. ना.हा-मनुष्या । ६९. आ.क.ना.पा.हा-दिग्विभागार्थ° । ७०. त्रि२मै१मै२-°रित्येवम् ।

यजमानस्य क्षौरादिसंस्कारः]

भयमिति पूर्वः पक्षः । यस्य मण्डपविशेषस्योपरि वंशाः प्रागग्रा भवन्ति स प्राचीनवंशः । तद्विध्येकवाक्यत्वावगमात्[७१] अर्थवादः । सायंकालीनाभ्यां दौ प्रतीची प्राशा ।

तृतीयाध्यायस्य सप्तमपादे चिन्तितम्—

"[७२]वपनाद्युपकारः किं द्वयोर्मुख्याङ्गयोरुत ।
मुख्य एव [७३]द्वयोरस्य कृत्स्नकर्तृगतत्वतः ॥
युक्तः शास्त्रीयसंस्कारो मुख्यस्य[७४] फलभोगिनः[७५] ।
विनाऽपि[७६]संस्कृतिं दृष्टं [७७]कर्तृत्वं तस्य नास्ति सः ॥" ( जैन्या ३.७.३–४ ) इति ॥

ज्योतिष्टोमे केशश्मश्रुवपनपयोव्रतादयो यजमानसंस्कारा आम्नाताः । ग्रहैः सोमहोमो ज्योतिष्टोमे मुख्यः । अग्नीषोमीयपश्वादिकमङ्गम् । तत्र द्वयोर्मुख्याङ्गयोरेते वपनादय उपकुर्वन्ति । कुतः ? कर्तृधर्मत्वात् । यजमानो हि कर्तृतया वपनादिभिः संस्क्रियते । कर्तृत्वं च यथा मुख्यं प्रति तस्य विद्यते तथाऽङ्गं प्रत्यप्यस्ति । तस्मादुभयोरुपकार इति चेत् । मैवम् । द्वौ हि यजमानस्याकारौ [७८]क्रियाकर्तृत्वं फलभोक्तृत्वं चेति । तयोरदृष्टः फलभोगः । क्रियानिष्पत्तिश्च दृष्टा । तथा सति वपनादिकृतोपकारस्याप्यदृष्टत्वात् भोक्तृशेषा वपनादयः फलभोगसाधने मुख्य एव पर्यवस्यन्ति । वपनादिसंस्काररहितैर्ऋत्विग्भिः कृषीवलादिभिश्च क्रिया निष्पाद्यमाना दृश्यते । ततस्तत्र कर्तृत्वाकारे वपनादिकृतः स उपकारो नास्ति । तस्माददृष्टफलभोगिनो यजमानस्य योऽयमदृष्टरूपः शास्त्रीयसंस्कारः सोऽयं मुख्ये कर्मणि युक्तो नाङ्गेषु । नात्र पूर्ववद् वाक्यमस्ति येन परंपरया फलसाधनाङ्गेषु[७९] वपनाद्युपकारः शङ्क्येत । प्रकरणं तु मुख्यस्यैव न त्वङ्गानाम् । तस्मान्न तेषूपकारः ।

तत्रैवाष्टमे पादे चिन्तितम्—

" संस्कारा वपनाद्याः किमध्वर्योः स्वामिनोऽथ वा ।
अध्वर्योस्तत्र शक्तत्वात् तद्वेदोक्तेश्च तस्य ते ॥
संस्कारैर्योग्यतां प्राप्य स्वकार्यं कर्तुमृत्विजः ।
[८०]क्रीणात्यतः क्रिया तेषां [८१]संस्क्रिया यजमानगा ॥ " ( जैन्या ३.८.४–५ ) इति ॥

" आप उन्दन्तु जीवसे " इत्याद्याः संस्कारमन्त्राः । तद्विधयश्चाध्वर्युवेदे समाम्नाताः— " केशश्मश्रु वपते नखानि नि कृन्तते " ( तैसं ६.१.१ ) इति । शक्तश्चाध्वर्युर्वपनादौ । तस्मात् तस्याध्वर्योर्वपनादिसंस्कारा इति चेत् । मैवम् । वपनादिसंस्कारा यजमानगतमालिन्यमपनीय यागयोग्यतामुत्पादयितुं क्रियन्ते । तथा च ब्राह्मणम्—" केशश्मश्रु वपते नखानि नि कृन्तते मृता वा एषा त्वगमेध्या यत् केशश्मश्रु मृतामेव त्वचममेध्यामपहत्य यज्ञियो भूत्वा मेधमुपैति " ( तैसं ६.१.१ ) इति । न ह्यध्वर्युवपनेन यजमानगता मृता त्वगपैति । योग्यस्य हि कर्माधिकारे सति पश्चात् प्रयासरूपेषु व्यापारेषु स्वयमशक्तः सन् कर्मकरानृत्विजः परिक्रीणाति । लोकेऽपि रोगिणः स्वामिन [८२]औषधानयन एव भृत्यो[८२] जीवितदानेन [८३]परिक्रीयते । न तु तदौषधं [८४]भृत्यः सेवते[८४] । [८५]तस्मादितरा क्रियर्त्विजाम्[८५] । [८६]संस्कारास्तु यजमानस्य । कश्चित् तु वपनादिरृत्विजामपि संस्कारोऽस्तु ।

७१. आ.क.ना.पा.हा—°वाक्यत्वाभ्युपगमात् । ७२. आ.पा.हा—वपनादीद्युपकारः । ७३. त्रि२.म२.म३.मै१.मै२—द्वयोरस्तु । ७४. आ.ना.पा. म२—मुख्येऽस्य । ७५. म३—फलभागिनः । ७६. तं.त्रि२.म३.मै१.मै२—संस्कृताम् । ७७. त्रि२—कर्तृत्वात् । ७८. इ. उ—कर्तृत्वम् । ७९. त्रि२.मै१. मै२—°साधनेष्वङ्गेषु । ८०. आ—क्रीणात्यन्य°; ना.हा—क्रीणात्यन्या । ८१. त्रि२—संस्कृतिः । ८२–८२. आ—औषधानयन एव भृत्याः; हा—औषधानयन एव भृत्यः, ना—औषधानयन एव भृत्याः; उ—औषधानयन एव चेतन एव भृत्याः । ८३. आ.ना.पा.हा—परिक्रीयन्ते । ८४–८४. आ.ना.पा.हा—भृत्याः सेवन्ते । ८५–८५. आ.त्रि२.म२.म३.मै१—तस्मादितरक्रियार्त्विजाम् । ८६. आ.ना.पा.मै१.मै२.हा—संस्कारस्तु ।

चतुर्थाध्यायस्य तृतीयपादे चिन्तितम् —

" जुह्वाः पर्णमयीत्वेन न पापश्रुतिरञ्जनात् ।
वैरिदृग्वर्जनं [87]वर्म प्रयाजे॰ पुरुषाय किम् ॥
क्रतवे वाऽग्रिमो मानात् फलस्य न हि साध्यता[88] ॥
विभाति क्रतवे [89]तस्मादर्थवादः फलं भवेत् ॥ " ( जैन्या ४.३.१–२ ) इति ॥

इदमाम्नायते—" यस्य पर्णमयी जुहूर्भवति न पापꣳ श्लोकꣳ शृणोति " ( तैसं ३.५.७ ), " यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते " ( तैसं ६.१.१ ), " यत् प्रयाजानूयाजा इज्यन्ते वर्मैव तद्यज्ञाय क्रियते वर्म यजमानाय भ्रातृव्याभिभूत्यै " ( तैसं २.६.१ ) इति । तत्र यज्जुह्वाः प्रकृतिमूलं पर्णद्रव्यं यश्चाञ्जनेन चक्षुःसंस्कारो यच्च प्रयाजानूयाजरूपं [90]वर्म तत् त्रितयं पुरुषार्थत्वेन विधीयते । कुतः ? पापश्लोकश्रवणराहित्यादेः पुरुषसंबन्धिफलस्य [91]प्रतिभानादिति चेत् । नैवम् । फलं हि साध्यं भवति । न चात्र साध्यता प्रतिभासते । ' न शृणोति, ' ' वृङ्क्ते, ' ' वर्म क्रियते ' इति वर्तमानत्वनिर्देशात् । अतः क्रत्वर्था एते त्रयः । तत्र पर्णमयीत्वस्यानारभ्याधीतस्यापि वाक्येन क्रतुसंबन्धः । [92]संस्कारवर्मणोस्तु प्रकरणेन । क्रत्वर्थानां क्रतुनिष्पत्त्यनन्यतिरेकेण फलाकाङ्क्षाया [93]असंभवात् वर्तमाननिर्देशस्य विपरिणामं कृत्वाऽपि फलं कल्पयितुं न शक्यम् । तस्मात् [94]फलत्वभ्रमहेतुः पापश्लोकश्रवणराहित्यादिरर्थवादः ।

द्वितीयाध्यायस्य प्रथमपादे चिन्तितम् —

" नानुषङ्गोऽनुषङ्गो वाऽच्छिद्रेणेत्यत्र शेषिणी[95] ।
चित्पतिस्त्वेत्यनाकाङ्क्षावतो नात्रानुषज्यते ॥
करणत्वं [96]क्रियापेक्षं क्रिया चैका पुनात्विति ।
मन्त्रत्रयेऽतस्तद्द्वारा सर्वशेषोऽनुषज्यते ॥ " ( जैन्या २.१.३६–३७ ) इति ॥

ज्योतिष्टोमे दीक्षाप्रकरणे पठ्यते—" चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः " ( तैसं १.२.१ ) इति । तत्र तृतीयमन्त्रशेषः ' अच्छिद्रेण ' इत्यादिभागः प्रथमद्वितीयमन्त्रयोर्नानुषज्यते । [97]कुतः ? [98]निराकाङ्क्षत्वात् । न हि " चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु " इत्यनयोर्मन्त्रयोः शेषिणोः संपूर्णवाक्ययोः काचित् शेषाकाङ्क्षाऽस्तीति प्राप्ते ब्रूम — मा भूत् शेषिणोराकाङ्क्षा तथाऽपि शेषस्याऽऽकाङ्क्षाऽस्ति । ' पवित्रेण, रश्मिभिः ' इत्युक्तं करणत्वं क्रियामपेक्षते । क्रिया च ' पुनातु ' इत्येषा त्रिष्वपि मन्त्रेष्वेका । तथा च क्रियया संबद्धः शेषः क्रियाद्वारा तृतीयमन्त्रे निरपेक्षेऽपि यथाऽन्वेति तथा पूर्वयोरप्यन्वेतु । तस्मादस्त्यनुषङ्गः[99] ॥

अथ छन्दः ॥ " आप उन्दन्तु " इति द्विपदा गायत्री । " आपो अस्मान् " इति द्विपदा विराट् । " विश्वम् " इत्येकपदा विराट् । " उदाभ्यः " इति तद्वत् । " चित्पतिः " इत्यनुषङ्गे सति तिस्रो गायत्र्यः । " आ वो देवासः " इत्यनुष्टुप् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

८७. उ.पा.भा–कर्म । ८८ त्रि२.पा.म२.म३– साध्यत । ८९. मै१.मै२–तस्मादर्थ° । ९०. इ.उ.क.त.त्रि२.ना.पा.मै१.मै२.मा.हा–कर्म । ९१. म३–प्रतिभातीति, तं.मै१.मै२–प्रतिपादनात् । ९२. आ.क.पा–°कर्मणोऽस्तु, त.म१.म३.मै१.मै२–°कर्मणस्तु । ९३. तं.मै१.मै२–अभानात्; त्रि१.म२.म३–अभावात् । ९४. इ.उ.क.तं.त्रि१.ना.पा.मा.म२.म३.मै१.मै२.हा–फलत्व° । ९५. इ.उ.पा.मा.म२.म३–शेषिता । ९६. म१–क्रियापेक्षि । ९७. मै१.मै२.हा–' कुतः ' नास्ति । ९८. आ.पा– ' निराकाङ्क्षत्वात् ' नास्ति । ९९. आ.ना.पा.हा–तस्मादनुषङ्गः ।

आकूत्यै प्रयुजेऽग्नये स्वाहा मेधायै मनसेऽग्नये स्वाहा
दीक्षायै तपसेऽग्नये स्वाहा सरस्वत्यै पूष्णेऽग्नये

आकूत्या इत्या-कूत्यै । प्रयुज इति प्र-युजे । अग्नये । स्वाहा । मेधायै । मनसे । अग्नये । स्वाहा । दीक्षायै । तपसे । अग्नये । स्वाहा । सरस्वत्यै । पूष्णे । अग्नये ।

स्रुवेण चतस्रो दीक्षाहुतीर्जुहोति—' आकूत्यै ' इति ॥ आकूतिः संकल्पः । " तादौ च निति कृत्यतौ " ( पा ६.२.५० ) इति गतेः प्रकृतिस्वरत्वम् । प्रयुङ्क्ते इति प्रयुक्, कर्मणां प्रयोक्ता । क्विपि कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६.२.१३९ ) । य आकूतिर्भूत्वा कर्माणि प्रयुङ्क्ते प्रवर्तयति तस्मै [v]अग्नये [v]स्वाहा हुतमिदमस्तु । " आकूत्या हि पुरुषः " ( तैसं ६.१.२ ) इत्यादि ब्राह्मणम् । मेधा ग्रन्थार्थधारणशक्तिः । मनुत इति मनः । मनोतेरसुन् ( उ ६३८ ) । यो मेधा भूत्वा सर्वान् दुर्बोधानपि[१] मनुते जानाति तस्मै [v]अग्नये [v]स्वाहा इति । दीक्षा मौञ्ज्यस्नानादि- ५ १० लक्षणा । तपतीति तपः । तपतेरसुन् ( उ ६३८ ) । यो दीक्षा भूत्वा तपति दुःखयति तस्मै [v]अग्नये[v] स्वाहा । सरस्वती वाक् । पुष्णाति इति पूषा । " श्वन्नुक्षन्° " ( उ १६५ ) इति पुष्णातेः कनिन्प्रत्ययो निपातितः । यः सरस्वती भूत्वा सर्वानर्थान् पुष्णाति । यद्वा—पृथिवी पूषा, सर्वार्थपोषणत्वात् । " पृथिवी पूषा " ( तैसं ६.१.२ ) इति च ब्राह्मणम् । यः सरस्वत्यात्मना पृथिव्यात्मना च स्थित्वा यागं निर्वर्तयति तस्मै [v]अग्नये [v]स्वाहा । " वाचैव पृथिव्या यज्ञं १५ प्रयुङ्क्ते " ( तैसं ६.१.२ ) इति ब्राह्मणम् । पूष्णे इत्युदात्तनिवृत्तिस्वरेण ( पा ८.२.४ ) विभक्तेरुदात्तत्वम् ॥

प्रथमानुवाके प्राचीनवंशप्रवेशोऽभिहितः । अथ प्रविष्टस्य दीक्षानियमरूपेण तपसा [१]शरीर-शुद्धौ सत्यां पश्चात् देवयजनस्वीकाराद्यियोग्यतेति द्वितीयानुवाके दीक्षा विधीयते[२] । तत्र दीक्ष-णीयेष्टौ [३]अध्वरमन्त्राणामतिदेशतः प्राप्तत्वात् दीक्षाहुत्यादिमन्त्रा एवोच्यन्ते । २०

आकूत्या इति ॥ कल्पः—" आज्यस्थाल्याः स्रुवेणोपघातं दीक्षाहुतीर्जुहोति । आकूत्यै प्रयुजेऽग्नये स्वाहा मेधायै मनसेऽग्नये स्वाहा दीक्षायै तपसेऽग्नये स्वाहा सरस्वत्यै पूष्णेऽग्नये स्वाहेति । अथ स्रुचि चतुर्गृहीतं गृहीत्वा स्रुचा पञ्चमीं जुहोति आपो देवीर्बृहतीर्विश्वशंभुवो द्यावापृथिवी उर्वन्तरिक्षं बृहस्पतिर्नो हविषा वृधातु स्वाहेति " ( बौश्रौ ६.३-४ ) ॥ यज्ञं करिष्यामीत्येवंविधो मानसः संकल्प आकूतिः । तत्संपूर्त्यर्थमविघ्नेन मां प्रेरयते वह्नये हविरिदं हुतमस्तु । श्रुतयोः २५ [४]फलसाधनयोर्धारणाशक्तिर्मेधा । तत्सिद्ध्यर्थं मदीयमनोभिमानिने वह्नये हुतमस्तु । दीक्षा व्रतनियमः । तत्सिद्ध्यर्थं मदीयशरीरतपोभिमानिने वह्नये हुतमस्तु । मन्त्रोच्चारणशक्तिः सरस्वती । तत्सिद्ध्यर्थं

१. तं.पं-अर्थानवबोधानपि ।

१. तं-शिरःशुद्धौ । २. तं-अभिधीयते । ३. क.तं.म१-अध्वर्यवमन्त्रा° । ४. तं-मन्त्रतन्त्र-योर्धारणा°; म२-मन्त्रतन्त्रयोर्धारण°; द्रा. ना-फलसाधनयोर्धारण° । ३०

स्वाहाऽऽपो देवीर्बृहतीर्विश्वशंभुवो द्यावापृथिवी उर्वन्तरिक्षं
बृहस्पतिर्नो हविषा वृधातु स्वाहा

स्वाहा । आपः । देवीः । बृहतीः । विश्वशंभुव इति विश्व-शंभुवः । द्यावापृथिवी
इति द्यावा-पृथिवी । उरु । अन्तरिक्षम् । बृहस्पतिः । नः । हविषा । वृधातु । स्वाहा ।

५ स्रुचा पञ्चमीं जुहोति—'आप' इति त्रिपदया विराजा । एकादशाक्षरास्त्रयः पादाः । उक्तं च 'ईशीध्व' (?) इति ॥ हे आपः । पाष्ठिकमामन्त्रिताद्युदात्तत्वम् (पा ६.१ १९८)। हे देवी देव्य दीप्तिमत्य बृहती बृहत्यः। उभयत्रापि[2] "वा छन्दसि" (पा ६.१.१०६) इति पूर्णसवर्णदीर्घत्वम्। हे विश्वशंभुव, विश्वस्य लोकस्य शं सुखं भावयन्तीति । भवतेर्ण्यन्तात् क्विप् (पा ३.२.७६)। "बहुलमन्यत्रापि संज्ञाछन्दसोः"
१० (उ १९०) इति णिलुक् । वर्ष्या आप सस्यादिनिष्पादनद्वारेण सर्वस्य लोकस्य[3] सुखं भावयन्तीति। ता इहामन्त्र्यन्ते। "या वै वर्ष्या" (तैसं ६.१.२) इत्यादि ब्राह्मणम्। अत्र "विभाषितं विशेषवचने बहुवचनम्" (पा ८.१.७४) इति प्रथमस्य विद्यमानत्वाद् अतः परमामन्त्रितद्वय निहन्यते । हे एवंविधा आपः, येषां लोकानां भवत्यः शं भावयन्ति तान् लोकान् द्यावापृथिवी दिवं च पृथिवीं च। "दिवो द्यावा" (पा ६.३.२९) इति द्यावादेशः,
१५ आद्युदात्त.[4] । पृथिवीशब्दो ङीषन्तोऽन्तोदात्तः । "देवताद्वन्द्वे च" (पा ६.२.१४१) इति पूर्वोत्तरपदयोः प्रकृतिस्वरत्वम् । उरु च अन्तरिक्षम् अस्ति । त्रीनपि लोकान् नः अस्माकं अनेन हविषा बृहस्पति ब्रह्मा वृधातु वर्धयतु । "ब्रह्म वै देवानां बृहस्पतिः"

वागिन्द्रियपोषकाय वह्नये हुतमस्तु । बृहस्पतिरस्माक हविषा वर्धताम् । हे आप, भवत्योऽपि[5] वर्धन्ताम् । द्यावापृथिव्यौ वर्धेताम् । विस्तीर्णमन्तरिक्षं च वर्धताम् । कीदृश्य आप ? देवीः
२० वृष्टिरूपेण द्युलोकादागताः । बृहती बहुला । विश्वशंभुव सस्यपाचनेन सर्वस्य जगतः सुखं कुर्वत्यः॥ आहुतीर्विधत्ते—"अदीक्षित एकयाऽऽहुत्येत्याहु स्रुवेण चतस्रो जुहोति दीक्षितत्वाय स्रुचा पञ्चमीं पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे" (तैसं ६.१.२) इति ॥ प्रथममन्त्र आकूत्युपयोगमाह—"आकूत्यै प्रयुजेऽग्नये स्वाहेत्याहाऽऽकूत्या हि पुरुषो यज्ञमभि प्रयुङ्क्ते यजेयेति।" (तैसं ६ १.२) इति । यदा[6] "मनसाऽऽकूतिः[7]" तदा पुरुष ऋत्विजामग्रे यज्ञमभिलक्ष्य यजेयेति वाचं
२५ प्रयुङ्क्ते॥ द्वितीयमन्त्रे मेधोपयोगमाह—"मेधायै मनसेऽग्नये स्वाहेत्याह मेधया हि मनसा पुरुषो यज्ञमभिगच्छति" (तैसं ६ १.२) इति॥ श्रुतयोः फलसाधनयोरविस्मरणेन धृतयोर्मेनमा यज्ञकर्तव्यतां

२. मै–'अपि' नास्ति। ३ मै–'सर्वस्य' नास्ति। ४. मै–'आद्युदात्त.' नास्ति।

५. ड़ै–भवत्योऽपि°। ६. आ,क,ना पा–सदयम्। ७–७. त,मर–मनस्याकूतिर्भवति; क–मनसाऽऽकूतेर्वेति।

(तैसं ६·१·२) इति ब्राह्मणम्। वृधेर्ण्यन्ताल्लोट् (पा ३·३·१६२)। "बहुलमन्यत्रापि" (उ १९०) इति णिलुक्। विकरणव्यत्ययेन शः। आगमव्यत्ययेनाडागमः (पा ३·४·९४) उत्तमस्योक्तः प्रथमस्यापि भवति॥ यद्वा लेट उक्तो लोटोऽपि भवति। एवं यज्ञस्यैव वृद्ध्यर्थं तदाधाराणां लोकानां वृद्धिः प्रार्थ्यते। "द्यावापृथिव्योर्हि यज्ञः" (तैसं ६·१·२) इत्यादि ब्राह्मणम्। वनस्पत्यादित्वात् बृहस्पतिशब्दे पूर्वोत्तरपदयोर्युगपत् प्रकृतिस्वरत्वम् (पा ६·२·१४०)। बृहच्छब्दोऽवृत्तावाद्युदात्त- ५
(द्र.पा ६·१·१७३ वा १)। [5]स्वाहा [5]सुहुतं चेदमस्तु[5]। युष्मभ्यं [6]वर्धयितव्येभ्यो लोकेभ्यः वर्धयित्रे च बृहस्पतये। एवं स्वाहाकाराधिक्यात् यजुरन्ता विराडियं वेदितव्या। एवं ऋग्यजुषसमुदायत्वादस्य यजुरित्यपि व्यपदेष्टुं शक्यते। यथा "यदेतद्यजुर्न ब्रूयात्" (तैसं ६·१·२) इति। भवति ह्यवयवधर्मेणापि [7]समुदायव्यपदेशः यथा 'कुष्ठेषु[7] चूर्णम्' इति। अनवसानत्वाद्वा यजुष्ट्वम्॥ १०

प्रतिपद्यते। तपोऽभिमानिनो वह्नेरनुग्रहेण दीक्षासिद्धिः स्पष्टेत्यभिप्रेत्य तृतीयमन्त्रो न व्याख्यातः॥ चतुर्थमन्त्रे पदवाक्ययोरर्थमाह—"सरस्वत्यै पूष्णेऽग्नये स्वाहेत्याह वाग्वै सरस्वती पृथिवी पूषा वाचैव पृथिव्या यज्ञं प्र युङ्क्ते" (तैसं ६·१·२) इति। वाचा मन्त्रोच्चारणसिद्धिः॥ पृथिव्या यज्ञस्य देवयजनव्रीह्यादिद्रव्यसिद्धिः[8]॥ पञ्चममन्त्रस्य पूर्वभागे [9]बहुविशेषणाभिप्रायमाह—"आपो देवीर्बृहती-विश्वशंभुव इत्याह या वै वर्ष्यास्ता आपो देवीर्बृहतीर्विश्वशंभुवः" (तैसं ६·१·२) इति। वर्षे भवा १५
वर्ष्याः॥ विपक्षे बाधमाह—"यदेतद्यजुर्न ब्रूयाद्दिव्या आपोऽशान्ता इमं लोकमा गच्छेयुः" (तैसं ६·१·२) इति। दिव्यत्वादशनिवदपामशान्तत्वम्॥ यस्मान्मन्त्रोक्तगुणस्तुत्या जलदेवतायाः शान्तिस्तस्माच्छान्ताः सुखकारिण्य इत्येतं स्वपक्षमुपसंहरति—"आपो देवीर्बृहतीर्विश्वशंभुव इत्याहास्मा एवैना लोकाय शमयति तस्माच्छान्ता इमं लोकमा गच्छन्ति" (तैसं ६·१·२) इति। मन्त्रस्य द्वितीयतृतीयभागयोरपयोगमाह—"द्यावापृथिवी इत्याह द्यावापृथिव्योर्हि यज्ञ उर्वन्त- २०
रिक्षमित्याहान्तरिक्षे हि यज्ञः" (तैसं ६·१·२) इति। भूमौ देवयजनमन्तरिक्षेऽनुष्ठानाय संचारो दिवि फलमिति यज्ञस्य लोकत्रयवर्तित्वम्॥ मन्त्रस्य चतुर्थभागाभिप्रायमाह—"बृहस्पतिर्नो हविषा वृधात्वित्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै यज्ञमव रुन्धे" (तैसं ६·१·२) इति। देवानां मध्ये बृहस्पतेर्गुरुत्वेन परब्रह्मस्वरूपत्वम्॥ 'हविषा विधेः' इति [10]शाखान्तरे मन्त्रपाठः[10]। तं निन्दित्वा स्वपाठं प्रशंसति—
"यद् ब्रूयाद्विधेरिति यज्ञस्थाणुमृच्छेत् वृधात्वित्याह यज्ञस्थाणुमेव परि वृणक्ति" (तैसं ६·१·२) इति। २५
'बृहस्पतिर्विदधातु' इत्युक्ते सत्यभिवृद्धेरसूचितत्वात् यज्ञविघ्नं यजमानः प्राप्नुयात्, 'वृधातु' इत्युक्त्या तत्परिहारः॥

५–५. तं.ति–स्वाहुतमिदमस्तु। ६. तं.ति–वर्धयितृभ्यः। ७–७. तं–समुदायस्य तथा व्यपदेशः तद्यैतत्; ति–समुदायस्य तथा व्यपदेशः तद्यैतत्।

८. उ.ना.पा.भा.हा–°व्रीह्यादिसिद्धिः। ९. तं–बहुविशेषणाभि°। १०–१०. आ–शाखान्तर- ३०
मन्त्रपाठः।

विश्वे॑ दे॒वस्य॑ ने॒तुर्मर्तो॑ वृणीत स॒ख्यं विश्वे॑ रा॒य इ॑षुध्यसि द्यु॒म्नं वृ॑णीत पु॒ष्यसे॑
विश्वे॑ । दे॒वस्य॑ । ने॒तुः । मर्तः॑ । वृ॒णी॒त॒ । स॒ख्यम् । विश्वे॑ । रा॒यः । इ॒षु॒ध्य॒सि॒ ।
द्यु॒म्नम् । वृ॒णी॒त॒ । पु॒ष्यसे॑ ।

स्रुचैवौद्ग्रहणं जुहोति– ' विश्वे देवस्य ' इत्यनुष्टुभा चतुष्पदया यजुरन्तया । "सा वा एषर्गनुष्टुक्" ( तैसं ६.१.२ ) इत्यादि ब्राह्मणम् । सप्ताक्षरं प्रथमं पदम्, अष्टाक्षराणि त्रीण्यन्यानि ॥ [V]विश्वे प्राणिनः [V]देवस्य [V]नेतुः प्रेरयितुः स्वभूताः वशवर्तिनः नेतव्यत्वेन वर्तन्ते अस्वतन्त्रा वर्तन्त इति यावत् । कोऽसौ नेता ? सवितेति ब्रूमः । कुत एतत् ? " विश्वे देवस्य नेतुरित्याह सावित्र्येतेन " ( तैसं ६.१.२ ) इति ब्राह्मणदर्शनात् । स हि सर्वस्य प्रेरकः । येन यत्र यदा कृतं कर्म भोक्तव्यं तत्र नयति ग्रामाद् ग्रामं, जागरितात् स्वप्नं, स्वप्नाच्च जागरितम्, इतो लोकादमुं लोकम्, अमुतश्चेमम् इति । एवं तेन[8] सर्वस्येशानेन अस्वतन्त्रा जन्तवः इतश्चेतश्च पशुवन्नीयन्ते । किमधुना [9]विजानता प्रतिपत्तव्यमित्याह– [V]मर्तः [V]वृणीत [V]सख्यम् । मरणधर्मा मनुष्यः । " हसिमृग्रिण्" ( उ ३७३ ) इत्यादिना म्रियतेः तन्प्रत्ययः । यत एवं देवः करोति अतोऽसौ मर्तो विजानन् देवेन[10] सख्यं वरितुमर्हति स्वरसकाशात्[11] । " अर्हे कृत्यतृचश्च " ( पा ३.३.१६९ ) इति लिङ् । समानख्यानः सखा । " समाने ख्यः स चोदात्तः " ( उ ५८६ ) इति ख्यातेरिण्प्रत्ययः ।

विश्व इति ॥ बौधायनः–" अपरं चतुर्गृहीतं [11-]गृहीत्वाऽऽज्यपूर्णां स्रुचमौद्ग्रहणं[-11] जुहोति विश्वे देवस्य नेतुर्मर्तो वृणीत सख्यं विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहेति " ( बौश्रौ १.४ ) इति । आपस्तम्बः–" द्वादशगृहीतेन स्रुचं पूरयित्वा विश्वे देवस्य नेतुरिति पूर्णाहुतिं जुहोति " ( आपश्रौ १०.८.६ ) इति ॥ [V]विश्वे विश्वात्मकस्य [V]नेतुः जगन्निर्वाहकस्य [V]देवस्य [V]सख्यम् अनुमर्तं [V]मर्तः मरणवान् यजमानः सहसा [V]वृणीत । तच्च सख्यमीदृशेन स्तोत्रेण लभ्यते । [V]विश्वे, हे विश्वात्मक, [V]रायः धनस्य [V]इषुध्यसि ईशिषे । स्तुत्वा [V]पुष्यसे यज्ञपोषणाय [V]द्युम्नं धनं याचेत । इदं हविस्तत्र हुतमस्तु ॥ तमिममौद्ग्रहणहोमं[12] विधास्यन्नाख्यायिकया [13]पदं निर्वक्ति–" प्रजापतिर्यज्ञमसृजत सोऽस्मात् सृष्टः पराङैत् स प्र यजुरव्लीनात् प्र साम तमृगुदयच्छद्यदृगुदयच्छत्तदौद्ग्रहणस्यौद्ग्रहणत्वम् " ( तैसं ६.१.२ ) इति । पलायमानं यज्ञपुरुषं ग्रहीतुं प्रजापतिना प्रेरिताना त्रिविधमन्त्रपुरुषाणां मध्ये यजुःसामपुरुषौ स यज्ञः प्रकर्षेणाव्लीनात् आवृणोत् । ऋग्देवता तु तं यज्ञमुदगृह्णात् । तस्मादेतदस्याख्यम्

८. स–तस्य । ९. ति–अजानता । १०. त.ति–देवस्य । ११. व.ति–तत्सकाशात्

११–११. आ.क–गृहीत्वाऽऽज्यपूर्णेन स्रुचौद्ग्रहणम्; पा–गृहीत्वाऽऽज्यपूर्णस्रुचामौद्ग्रहणम्; म२–गृहीत्वाऽऽज्यपूर्णं स्रुचामौद्ग्रहणम्; मा–' आज्यपूर्णां स्रुचमौद्ग्रहणम् ' नास्ति, ( बौश्रौसूत्रे ' गृहीत्वाऽऽज्यस्य पूर्णां स्रुचमौद्ग्रहणम् ' ) । १२. इ–तमिममौद्ग्रहणस्य होमम् । १३. म२–औद्ग्रहणपदम् ।

'समानस्य छन्दसि° " ( पा ६·३·८४ ) इति समावः । यल्लोपः इति तत्रानुवर्तते । तस्य भावः सख्यम् । " सख्युर्यः " ( पा ५·१·१२६ ) इति यः । अयमर्थः—देवेन सवित्रा यत्समानाख्यानत्वं सारूप्यमेकत्वं वा, यस्मिन् सति स एव भूत्वा पारतन्त्र्याद्विमुक्तः सर्वस्य स्वयं नेता संपद्यते[12], [13]तत्क्षिप्रमयं [14]मर्त्यः त्वत्सकाशात्[14] वरीतुमर्हतीति । इदानीमस्य देवेन[15] सख्यं वृतवतः[16] मर्त्यस्याग्निसकाशात् समुपजायमाना[17] सिद्धिरुच्यते । [v]इषुध्यसि त्वमपि देवसख्यं वृतवन्तमिमं [18]जनमिषुधिमिवाचरसि, यथा इषुधिरिषूणां निधानं भवति, एवमिमं [19]सर्वसिद्धीनां भाजनत्वेनाचरसि; तादृशमेनं करोषीति यावत् । " उपमानादाचारे " ( पा ३·१·१० ) इति क्यच् । "कव्यध्वरपृतनस्य°" ( पा ७·४·३९ ) इति विधीयमानो लोपो व्यत्ययेन अस्यापि[20] भवति । अथवा इषुध शरधारणे, इति कण्ड्वादिरयं द्रष्टव्यः (पा ३·१·२७)। देवसख्यं वृतवतोऽस्य[21] त्वमिषुध्यसि, इषूणामिषुधिरिव इषुस्थानीयानां सिद्धीनामपादानत्वेनाधारत्वेन च वर्तस इत्यर्थः । एवमामुष्मिकानां(कीणां) सिद्धीनामग्निरेव दातेत्युक्तम् । इदानीमैहिका(की)नामपि दातृत्वं प्रतिपाद्यते । तत्र धनाधीनत्वात् सर्वसिद्धीनां तन्माहात्म्यं [22]प्रदर्शयति—'विश्वे रायः' इति । [v]रायः धनस्य [23]गोभूमिहिरण्यौदनादिलक्षणस्य, [v]विश्वे प्राणिनः । किम् ? वशवर्तिनः तत्परतन्त्राः सर्वे इतश्चेतश्च नीयन्ते देवा अपि, किं पुनर्मनुष्याः ? कुत एतत् ? " वैश्वदेव्येतेन " ( तैसं ६·१·२ ) इति ब्राह्मणदर्शनात् । यत एवं तस्मादयं मर्त्यः शीघ्रमेव त्वत्सकाशात् [v]द्युम्नं धनं [v]वृणीत वरितुमर्हति । स एव लिङ् । त्वमपि तत् द्युम्नं वृणानं

अनुष्ठानमौद्ग्रहणम् ॥ तदेतद्विधत्ते—" ऋचा जुहोति यज्ञस्योद्धत्यै " ( तैसं ६·१·२ ) इति ॥ तदीयं छन्दः प्रशंसति—" अनुष्टुप्छन्दसामुदयच्छदित्याहुस्तस्मादनुष्टुभा जुहोति यज्ञस्योद्धत्यै " ( तैसं ६·१·२ ) इति ॥ एतन्मन्त्रगतमृक्त्वं छन्दश्च यथा प्रशस्तं तथैव पदसंख्यामपि प्रशंसति—" द्वादश वात्सबन्धान्युदयच्छन्नित्याहुस्तस्मात् द्वादशभिर्वात्सबन्धविदो दीक्षयन्ति " ( तैसं ६·१·२ ) इति । यथा वत्स एकैकेन पाशेन बध्यते तथा 'विश्वे देवस्य' इत्यादिषु द्वादशसु पदेष्वेकैकेन पदेन यज्ञो बध्यतेऽतस्तानि पदानि वात्सबन्धानि । वत्सस्येव बन्धो वात्सबन्धः । तदीयानि पदानि यज्ञमुद्गृह्णन्तीत्याहुः[14] पूर्वेऽभिज्ञाः । तद्विदोऽध्वर्यव इदानीमपि तैः पदैर्जुह्वति ॥ पूर्वमभिज्ञप्रसिद्ध्या छन्दसः प्रशंसा कृता । इदानीं वागात्मकत्वेन [15]तच्छन्दः स्तूयते—" सा वा एषर्गनुष्टुग्वागनुष्टुप्यदेतयर्चा दीक्षयति वाचैवैनꣳ सर्वया दीक्षयति " ( तैसं ६·१·२ ) इति । अनुष्टुभो वाग्विशेषत्वेन वाग्रूपत्वम् । छन्दोऽन्तरस्यापि तत्समिति चेत् तर्हि प्रसङ्गे सति तदपि तथा स्तोतव्यम् । लिङ्गोपजीवनेन मन्त्रं स्तौति—" विश्वे देवस्य नेतुरित्याह सावित्र्येतेन मर्तो वृणीत सख्यमित्याह

१२. तं.ति–भवति । १३. तं.ति.पं–तच्छीघ्रमयम् । १४–१४. तं––अमर्त्यः तत्सख्यम्; ति–मर्त्यः तत्सख्यम् । १५. तं.ति–देवस्य । १६. मै–कृतवतः । १७. ति–जायमाना । १८. ति–इषुधिरिव । १९. तं.ति–सर्वधनस्य । २०. मै–'अस्यापि' नास्ति । २१. मै–गतवतोऽस्य । २२. मै–प्रतिपादयति । २३. तं–गोभूहिरण्यौदनादि°; ति–गोभूहिरण्यादि° ।

१४. इ.व.ना.हा–यज्ञमुद्गृह्णन्तीत्याहुः । १५. आ.तं.मर–छन्दः ।

मर्त्यं ⱽपुष्यसे पोषयसि । पुष पुष्टौ दैवादिक उदात्तेत् । व्यत्ययेनात्मनेपदम् । सर्वाभिमत-
धनसंपत्तिः पुष्टिः । यद्वा—तस्य पुरुषस्य द्युम्नं त्वया पुष्यते । पुरुषव्यत्ययेन मध्यम., न च तिङः
परत्वान्न निहन्यते( पा ८.१.२८ )। "ᵒअदुपदेशात्ᵒ" (पा ६.१.१८६) इति लसार्वधातुक-
त्वानुदात्तत्वे कृते विकरणस्यैव स्वर । ⱽस्वाहा सुहुतमिदमौद्ग्रहणाख्य हविरस्तु । यज्ञस्योद्-
५ ग्रहणहेतुत्वादियम् ऋक् उद्ग्रहणी, इद हविरौद्ग्रहणम् यदनया दीयते । " प्रजापतिर्यज्ञम-
सृजत सोऽस्मात् सृष्टः पराडैत् स प्र यजुरव्लीनात् " ( तैस ६.१.२ ) इत्यादि ब्राह्मणम् ॥

पितृदेवत्यैतेन विश्वे राय इषुध्यसीत्याह वैश्वदेव्यैतेन द्युम्न वृणीत पुष्यस इत्याह पौष्ण्यैतेन सा वा
एषर्क्सर्वदेवत्या यदेतयर्चा दीक्षयति सर्वाभिरेवैन देवताभिर्दीक्षयति " ( तैस ६.१.२ )
इति । प्रथमपादे सवितृपर्यायस्य नेतृशब्दस्य प्रयोगेण [16]सावित्रत्वम् । द्वितीयपादे मर्तशब्देन
१० मृतपितृसूचनात् [17]पितृदेवत्यत्वम् । तृतीयपादे विश्वशब्दस्य । प्रयोगात् वैश्वदेवत्वम् ।
चतुर्थपादे [18]'पुष्यसे' इत्युक्तत्वात्[18] पौष्णत्वम् ॥ अक्षरसङ्ख्यामुपजीव्य स्तौति—
" सप्ताक्षर प्रथम पदमष्टाक्षराणि त्रीणि यानि त्रीणि तान्यष्टावुपयन्ति यानि चत्वारि तान्यष्टौ यदष्टाक्षरा
तेन गायत्री यदेकादशाक्षरा तेन त्रिष्टुब्यद् द्वादशाक्षरा तेन जगती सा वा एषर्क्सर्वाणि
छन्दांसि यदेतयर्चा दीक्षयति सर्वैरेवैन छन्दोभिर्दीक्षयति " ( तैस ६.१.२ ) इति ।
१५ प्रथम पदमृचि प्रथम. पादः । द्वितीयादिषु त्रिषु पादेष्वस्ति प्रत्येकमक्षरगताष्टत्वसंख्या । द्वितीय-
पादे 'मर्तियम्' इत्यक्षरत्रयेणाष्टत्व पूर्णीयम् । प्रथमपादं द्वेधा विभज्य त्रीण्यक्षराणि तृतीयपादे
चत्वारि चतुर्थपादे गणनीयानि । तथा सति द्वितीयतृतीयचतुर्थपादा अक्षरसंख्याभिर्गायत्र्यादिसमा इति
छन्दस्त्रयसंपत्ति । गायत्र्यादीना त्रयाणा सवनत्रये प्राधान्यात् सर्वच्छन्दःसंपत्ति ॥ सप्तसंख्यामुप-
जीव्य स्तौति—" सप्ताक्षर प्रथम पदᳪ सप्तपदा शक्वरी पशव. शक्वरी पशूनेवाव रुन्धे " ( तैस ६.१.२ )
२० इति । " विश्वे देवस्य नेतु " ( तैस १.२.२ ) इत्यत्र सप्ताक्षराणि, " प्रो ष्वस्मै पुरोरथम् "
( ऋस १०.१३३.१ ) इत्यस्या च शक्वर्यामृचि सप्त पादा. । शक्वर्या पशुप्रदत्वात् पशुरूपत्वम् ॥
अक्षोपजगद्व्यवहारसमत्वेन मन्त्र स्तौति — " एकस्मादक्षरादनाप्त प्रथम पद तस्माद्यद्वाचोऽनाप्त
तन्मनुष्या उप जीवन्ति पूर्णया जुहोति पूर्ण इव हि प्रजापति. प्रजापतेराप्त्यै न्यूनया जुहोति
न्यूनाद्धि प्रजापति प्रजा असृजत प्रजाना सृष्ट्यै " ( तैस ६.१.२ ) इति । यस्मादस्यामृचि
२५ प्रथम पाद एकेनाक्षरेण न्यूनस्तस्मान्मनुष्या वाच स्वरूपमनाप्तमसपूर्णमुपजीवन्ति । मूलाधारादुत्पन्नो
[19]वायुर्मूर्धपर्यन्त प्रसृतो वक्त्रे तत्तत्स्थानेषु वर्णानुत्पादयति । तदिद वर्णाभिव्यक्तिलक्षण वाचश्चतुर्थं
पदम् । पूर्वाणि तु त्रीणि [20]पदानि कण्ठादध एव गूढत्वात्[21] नाभिव्यञ्जयितु शक्यन्ते । तथा
चाऽऽम्नायते—" गुहा त्रीणि निहिता नेङ्गयन्ति तुरीय वाचो मनुष्या वदन्ति " ( ऋस
१.१६४.४५ ) इति । एतेनासंपूर्णवाग्व्यवहारसाम्य दर्शितम् । किंचेयमृगुत्तरेषु पादेष्वक्षरपूर्णा,
३० तेन सृष्टिपूर्णप्रजापतिसाम्यात् तदाप्तये भवति । प्रथमपादे यदक्षरन्यूनत्वं तेन सृष्टिशून्यजग-
द्बीजसाम्यात् प्रजोत्पत्तये भवति ॥

१६. मर-सवितृत्वम्, ट.क.ना पा.हा-सावित्रीत्वम् । १७. ट ठ-पितृदेवत्यम्, हा-पितृदेवत्वम् ।
१८-१८. इ उ.ना.पा.ह-पुष्यशब्दप्रयोगात् । १९ उ.ना पा हा-वायु सूर्यपर्यन्तम्; इ-वायुसूर्यपर्यन्तम् ।
२०. आ.ना.पा हा-'पदानि' नास्ति । २१. आ-स्फुटत्वात् ।

**स्वाहर्क्सामयोः शिल्पे स्थस्ते वामा रभे ते मा ( १ ) पातमाऽस्य यज्ञस्योदृचः**

स्वाहा । ऋक्सामयोरित्यृक्—सामयोः । शिल्पे इति । स्थः । ते इति । वाम् । एति । रभे ।
ते इति । मा ( १ ) । पातम् । एति । अस्य । यज्ञस्य । उदृच इत्युत्—ऋचः ।

---

कृष्णाजिनस्य शुक्लकृष्णे अङ्गुष्ठाङ्गुलिभ्यां संमृशति– 'ऋक्सामयोः' इति । अचतुरादिसूत्रेण ( पा ५·४·७७ ) ऋक्सामशब्दोऽच्प्रत्ययान्तो निपातितः । हस्तविषयं कौशलं शिल्पम् । हे शुक्लकृष्णे, ऋक्सामयोः शिल्पे स्थः । तत्र ऋचः शिल्पं शुक्लम् । साम्नः कृष्णम् । "एष वा ऋचो वर्णो यच्छुक्लं कृष्णाजिनस्य" ( तैसं ६·१·३ ) इत्यादि ब्राह्मणम् । ते तादृशे वां युवामहम् आ रभे आलभे स्पृशामि । रलयोरेकत्वं स्मर्यते । ते च मया स्पृष्टे युवां मां पातं रक्षतम् । कुत इत्यत आह—अस्य यज्ञस्य आ उदृच आ [२४]उदर्कात् [२५]आ समाप्तेरिति यावत् । ऋच स्तुतौ, इह तु धातूनामनेकार्थत्वात् गतौ वर्तते । स्तोमाभिप्रायं वा । तत उत्पूर्वात् संपदादिलक्षणः क्विप् ( पा ३·३·१०८ वा ९ ) । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६·२·१३९ ) । "ऋक्सामे वै देवेभ्यो यज्ञायातिष्ठमाने" ( तैसं ६·१·३ ) इत्यादि ब्राह्मणम् ॥

---

ऋगिति ॥ कल्पः— "अथ यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति[२२] । तस्य शुक्लकृष्णे संमृशति शुक्लेऽङ्गुष्ठो भवति [२३]कृष्णेऽङ्गुलिर्ऋक्सामयोः शिल्पे स्थस्ते वामा रभे ते मा पातमाऽस्य यज्ञस्योदृच इति" ( बौश्रौ ६·५ ) इति । हे शुक्लकृष्णे रेखे, युवाम् ऋक्सामयोः संबन्धिनी चित्रे भवथः । एतच्च ब्राह्मणे स्पष्टीभविष्यति । तादृशौ ते युवां स्पृशामि । अस्य यज्ञस्य [२४]येयमृगुत्तमा तयोपलक्षिता या कर्मसमाप्तिस्तत्पर्यन्तं[२४] ते युवां पालयतम् ॥ इमं मन्त्रमवतारयन्त्याख्यायिकया [२५]शिल्पत्वं विशदयति[२५]— "ऋक्सामे वै देवेभ्यो यज्ञायातिष्ठमाने कृष्णो रूपं कृत्वाऽपक्रम्यातिष्ठतां तेऽमन्यन्त यं वा इमे उपावर्त्स्यतः स इदं भविष्यतीति ते उपामन्त्रयन्त ते अहोरात्रयोर्महिमानमपनिधाय देवानुपावर्तेतामेष वा ऋचो वर्णो यच्छुक्लं कृष्णाजिनस्यैष साम्नो यत् कृष्णम्" ( तैसं ६·१·३ ) इति । [२६]ऋक्सामे देवते[२६] केनापि निमित्तेन देवयज्ञार्थमात्मानमप्रकाशयमाने[२७] आत्मतिरोधानाय कृष्णमृगो भूत्वा तदीयं [२८]च रूपं संपूर्णं[२८] कृत्वा देवेभ्योऽपक्रम्य क्वचिद्गूढे व्यतिष्ठताम् । देवा विचारितवन्तो यं पुरुषमिमे ऋक्सामे प्राप्स्यतः [२९]स इदं[२९] यज्ञफलं प्राप्स्यतीति । देवास्तु ऋक्सामे रहसि केनाप्युपायेनोपच्छन्दितवन्तः । ते उभे अहोरात्रमहिमानं शुक्लकृष्णवर्णद्वयं स्वकीये मृगशरीरे स्थापयित्वा देवसमीपमागच्छताम् । कृष्णाजिनस्य यत् शुक्लं स एष ऋचा स्वीकृतोऽह्नो वर्णः । यत् कृष्णं स एष [३०]साम्ना

---

२४. संभावितोऽयं पाठः । तं. ति–उदयनादुत्थानात्; मै–उदयान् । २५. मै 'आ' नास्ति ।

---

२२. इ.उ–°लोमास्तृणाति । २३. उ.ना.पा.हा–कृष्णेऽङ्गुलिरिति ऋक्सामयोः । २४–२४. क–येयमृगुत्तमा तयोपलक्षिता या आकर्मसमाप्तेस्तत्पर्यन्तम् । २५–२५. इ.उ.ना.पा–शिल्पं दर्शयति । २६–२६. इ.उ.तं.ना.पा.हा–ऋक्सामदेवते । २७. इ.उ.पा–°मप्रकाशम् । २८–२८. आ.पा.हा–संपूर्णं रूपम्; इ.उ.पा–संपूर्णम्; क.ना–संपूर्णरूपम् । २९–२९. तं–सदृशम्; इ.उ.ना.पा.हा–सः । ३०. इ.उ.पा–साम्नाम् ।

**इमां धियꣳ शिक्षमाणस्य देव क्रतुं दक्षं वरुण सꣳ शिशाधि**
**ययाऽति विश्वा दुरिता तरेम सुतर्माणमधि नावꣳ॥**

इमाम् । धियम् । शिक्षमाणस्य । देव । क्रतुम् । दक्षम् । वरुण । समिति । शिशाधि ।
यया । अतीति । विश्वा । दुरितेति दु–इता । तरेम । सुतर्माणमिति सु–तर्माणम् । अधीति । नावम् ।

५ कृष्णाजिनमभिसर्पति—'इमाम्' इति त्रिष्टुभा चतुष्पदया ॥ तत्र देवशब्दान्त. प्रथमः । [v]इमाम् अग्निष्टोमविषयां [v]धियं प्रज्ञां [v]शिक्षमाणस्य उपाददानस्य पुरुषस्य । शिक्ष विद्योपादाने । "[v]अदुपदेशात्" ( पा ६.१.१८६ )इति लसार्वधातुकानुदात्तत्वे धातुस्वर (पा ६.१ १६२)। [v]दक्षम् अभिवृद्धिकरम् । दक्ष वृद्धौ शीघ्रार्थे च । [२६]प्रवर्तकं वा । [v]क्रतुम् अग्निष्टोमाख्यमिममस्मदीयं यागं हे [v]देव [v]वरुण, [v]सं [v]शिशाधि सशितं कुरु । स्वकार्यसमर्थमित्यर्थः । श्यतेर्लोटि "बहुलं
१० छन्दसि "( पा २ ४ ७६ )इति शप. श्लु, "बहुलं छन्दसि " ( पा ७ ४ ७८ ) इत्यभ्यासस्येत्वम्, " सेर्ह्यपिच्च " ( पा ३ ४·८७ ) इति, " वा छन्दसि " ( पा ३·४·८८ ) इत्यपित्त्वप्रतिषेधात् पित्त्वेन ङित्त्वाभावात् " अङितश्च " ( पा ६·४·१०३ ) इति धिभाव.[२७] । इदानीं धीर्विशेष्यते–[v]यया धिया [v]विश्वा [v]दुरिता विश्वानि दुरितानि । " शेश्छन्दसि बहुलम् " ( पा ६·१·७० ) इति शिलोप [२८] । दु खेन यन्ति एतेष्विति दुरितानि । " क्तोऽधिकरणे च " ( पा ३·४·७६ )
१५ इत्यधिकरणे निष्ठा । थाथादिस्वरेणोत्तरपदान्तोदात्तत्वम् ( पा ६ २·१४४ ) । श्रेयसो विघातकानि कर्माण्युच्यन्ते । तानि सर्वाणि यया [v]अति [v]तरेम अतिक्रम्य गच्छेम तामिमां धियमिति सबध्यते ।

स्वीकृतो रात्रिवर्णे ॥ शिल्पत्वमुपपाद्य मन्त्रं व्याचष्टे—"ऋक्सामयो शिल्पे स्थ इत्याहर्क्सामे एवाव रुन्धे" ( तैस ६·१·३ ) इति ॥ न केवलमृक्सामप्राप्तिः । किंत्वहोरात्रसारप्राप्तिश्चेत्याह—" एष वा अह्नो वर्णो यच्छुक्लं कृष्णाजिनस्यैष रात्रिया यत् कृष्णं यदेवैनयोस्तत्र न्यक्तं तदेवाव रुन्धे " ( तैस ६ १·३ ) इति ।
२० एतयोरहोरात्रयो सबन्धि यत् सार [३१]तत्रर्क्सामयो गूढं[३१] तदपि प्राप्नोति । विधत्ते—" कृष्णाजिनेन दीक्षयति ब्रह्मणो वा एतद्रूपं यत् कृष्णाजिनं ब्रह्मणैवैनं दीक्षयति " ( तैस ६ १ ३ ) इति । ब्रह्म वेदलक्षणं रूपत्वं कृष्णाजिनस्य । ऋक्सामशिल्पधारित्वात् तदुपपन्नम् । दीक्षयति कृष्णाजिनेन यजमानं योजयति । योजनं द्विविधम् । आस्तीर्णस्य कृष्णाजिनस्याऽऽरोहणमन्यस्य कृष्णाजिनस्य प्रावरणं च । तत्प्रकार आपस्तम्बेन दर्शित — " कृष्णाजिनेन यजमानं दीक्षयति । द्वाभ्याꣳ समस्य दीक्षेतान्तर्लोमाभ्यां
२५ बहिर्लोमाभ्याम् । यद्येकं स्याद्दक्षिणं [३२]पूर्वपादं प्रतिषीव्येत्[३२] " ( आपश्रौ १०·८·११–१३ ) इति ॥

इमामिति ॥ कल्प — " अथ दक्षिणं आन्वाच्याभिसर्पतीमां धियꣳ शिक्षमाणस्य देव क्रतुं दक्षं वरुण सꣳ शिशाधि ययाऽति विश्वा दुरिता तरेम सुतर्माणमधि नावꣳ रुहेमेति " ( बौश्रौ ६·५ ) इति ।

२६ त ति–शीघ्रप्रवर्तकम् । २७. मै–इडभाव । २८. मै–शलोप ।

३१–३१. आ–तत्रर्क्सामयोर्न्यक्तं गूढम् ; ना पा हा–न्यक्तं गूढम्, द.ज–न्यक्तगूढम्, मा–
३० 'तत्रर्क्सामयो गूढम्' नास्ति । ३२–३२. आ ना–पूर्वं पादं प्रतिषीव्येत्, त–पूर्वं पादं प्रतिषिव्येत्, मर –पूर्वपादं प्रतिषिच्येत ।

रुहेमोर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मे यच्छ पाहि मा मा मा

रुहेम । ऊर्क् । असि । आङ्गिरसी । ऊर्णम्रदा इत्यूर्ण–म्रदाः ।

ऊर्जम् । मे । यच्छ । पाहि । मा । मा । मा ।

ननु दुरितसागरं तितीर्षूणां सम्यक्प्रज्ञावतामपि[29] [30]कयाचिन्नावा भवितव्यमित्यत आह–– सुतर्माणम् इति। सुष्ठु दुरितानां तारणकुशलाम् । "अन्येभ्योऽपि दृश्यन्ते" (पा ३·२·७५) ५ इति तरतेर्मनिन्प्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६·२·१३९ ) । ईदृशीं ^V^नावम् अग्निष्टोमात्मिकां वयम् ^V^अधि ^V^रुहेम आरूढा[31] भूयास्म अनेन चर्माधिरोहणेनेति । रुहेराशिषि लिङ्, "लिङ्याशिष्यङ्" ( पा ३·१·८६ ) । "यज्ञो वै सुतर्मा नौः" ( ऐब्रा १·१३ ) इति ब्राह्मणम् ।। "कृष्णाजिनेन दीक्षयति ब्रह्मणो वा एतद्रूपं यत्कृष्णाजिनम्" ( तैसं ६·१·३ ) इति ब्राह्मणम् ।।

मेखलां पर्यस्यति–'ऊर्गसि' इति ।। ऊर्जयतेः संपदादिलक्षणः क्विप् ( पा ३·३·१०८ वा ९ )। १० बलं रसो वाऽभिधीयते। अङ्गिरसामियम् आङ्गिरसीति यामङ्गिरसो व्यभजन्त । "अङ्गिरसः सुवर्गं लोकं यन्त ऊर्जं व्यभजन्त" ( तैसं ६·१·३ ) इत्यादि ब्राह्मणम् ।। हे मेखले, ^V^आङ्गिरसी ^V^ऊर्क् त्वम् ^V^असि । ऊर्क्परिणामभूतैः शरैः निर्मितत्वात् ऊर्ग्व्यपदेशः । पुनश्च विशेष्यते, ^V^ऊर्णम्रदाः

हे ^V^वरुण ^V^देव ^V^इमाम् अग्निष्टोमविषयां ^V^धियम् उपाददानस्य यजमानस्य संबन्धिनं ^V^दक्षं समृद्धमग्निष्टोमं ^V^क्रतुं ^V^सं ^V^शिशाधि सम्यगुपदिश्य पारं नय । वयमपि पारं गन्तुं सर्वाणि विघ्नरूप- १५ दुरितानि ^V^यया नावाऽत्यन्तं ^V^तरेम तां सुखेन तरणे समर्थामिमां कृष्णाजिनरूपां ^V^नावम् ^V^अधि ^V^रुहेम ।। मन्त्रस्य स्पष्टार्थतामाह––"इमां धियश् शिक्षमाणस्य देवेत्याह यथायजुरेवैतत्" ( तैसं ६.१.३ ) इति ।।

ऊर्गिति ।। बौधायनः–– "प्रदक्षिणं मेखलां पर्यस्यत्यूर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मे यच्छ । पाहि मा मा मा हिꣳसीरिति ।...... । अथ यजमानं वाससा प्रोर्णोति विष्णोः शर्मासि शर्म यजमानस्य शर्म मे यच्छेति । वसनस्यातीकाशेषु यजमानं वाचयति नक्षत्राणां माऽतीकाशात् पाहीति" ( बौश्रौ ६.५ ) २० इति ।। हे मेखले, त्वमङ्गिरसां संबन्धिन्यन्नरसरूपा कम्बलवन्मृदुः ^V^असि । अतो अन्नरसं ^V^मे प्रयच्छ । मां पालय । हिंसां [33]त्वद्बन्धनेन वेदनारूपां ^V^मा कुरु । हे वस्त्र, त्वं ^V^विष्णोः सुखप्रदम् ^V^असि। ^V^यजमानस्य सुखं प्रयच्छ, ममापि सुखं प्रयच्छ । हे वस्त्र मां नक्षत्रप्रकाशात् ^V^पाहि । शाखान्तरानुसारेण हे उष्णीष इति वा[34] व्याख्येयम् ।। तदिदं बौधायनेन मन्त्रक्रममनुसृत्योक्तम् । आपस्तम्बस्तु ब्राह्मणक्रममनुसृत्य वस्त्रमेखलयोः पौर्वापर्यमाह–– "विष्णोः शर्मासीत्यनेन वाससा दक्षिणमꣳसं यजमानः प्रोर्णुते । नक्षत्राणां माऽतीका- २५ शात् पाहीति शिरः । उष्णीषेण [35]प्रदक्षिणं शिरो वेष्टयत इति वाजसनेयकम् । शरमयी मौञ्जी वा मेखला त्रिवृत् पृथ्व्यन्यतःपाशा । तया यजमानं दीक्षयति । योक्त्रेण पत्नीम् । ऊर्गसीति" ( आपश्रौ १०.९.८–१४ ) इति । रज्जुसदृशी मेखला । जटासदृशं योक्त्रम् ।। वस्त्रप्रावरणं विधत्ते–– "गर्भो वा एष

२९. पं–सम्यक्‌ज्ञानवताम् । ३०. तं. तिं–कयापि नावा । ३१. मै–अधिरूढाः । *शुद्धीकृतः पाठः । लिखितपुस्तकेषु मुद्रितपुस्तके च 'सुतर्माणम्' इत्यस्ति । ३०

३३. आ.ना.पा.हा–वन्धनेन । ३४. आ.ना.पा.हा–'वा' नास्ति । ३५. आ.ना.पा.हा–'प्रदक्षिणम्' नास्ति ।

हिꣳसीर्विष्णोः शर्मासि शर्म यजमानस्य शर्म मे यच्छ नक्षत्राणां माऽतीकाशात्

हिꣳसी । विष्णो । शर्म । असि । शर्म । यजमानस्य । शर्म । मे ।

यच्छ । नक्षत्राणाम् । मा । अतीकाशात् ।

ऊर्णा अविमूत्र तद्वन्मृद्वी । म्रद मर्दने । असुन्प्रत्यय ( उ ६३८ ) । "ङ्यापो संज्ञाछन्दसो-
१५ र्बहुलम् " ( पा ६ ३ ६३ ) इति पूर्वपदस्य ह्रस्वत्वम् । उपमानपूर्वपदप्रकृतिस्वरत्वम्
( पा ६ २ २ ) । ईदृशी त्वम् ऊर्जं बल मह्य यच्छ देहि पाहि च माम् । निट परत्वान्न
निहन्यते ( पा ८ १ २८ ) । मा च मा हिंसी' ॥

वाससा च यजमान प्रोर्णोति—'विष्णो' इति । विष्णो अपि शर्म सुखम् असि सुख-
हेतुरसि । "यज्ञो व विष्णु " ( तैस ६ १ ४ ) । किंच यजमानस्य शर्म असि । त्सार्वधातुकानु-
२० दात्तत्वे ( पा ६ १ १८६ ) धातुस्वर' ( पा ६ १ १६२ ) । ईदृगस्त्व मह्यमपि शर्म यच्छ देहि ॥

यमनच्छिद्रेषु यजमान वाचयति—'नक्षत्राणाम्' इति ॥ अतीकाशश्छिद्रम् अतीत्य
काशत इत्यतीकाश । पचाद्यच् ( पा ३ १.१३४ ) । घञ् वाऽभिकरणे ( पा ३ ३ १२१ ) ।
उभयत्रापि थायादिस्वरेणान्तोदात्तत्वम् ( पा ६ २ १४४ ) । "इक. काशे" ( पा ६ ३.१२३ )
इति दीर्घत्वम् । नक्षत्राणा सम्बन्धी योऽतीकाश. नक्षत्रदेवत्यत्वात् नक्षत्राणाम् अतीकाश इति ।

२५ "दीक्षित उल्ब वास प्रोर्णुते तस्माद्गर्भा प्रावृता जायन्ते" ( तैस ६.१ ३ ) इति । दीक्षितस्य गर्भरूपत्वं बह्वृचब्राह्मणे प्रपञ्चितम्— "पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति य दीक्षयन्ति" ( ऐब्रा १.३ ) इति । पटमस्य गर्भवेष्टनमुल्बम् ॥ ३६त्रिपक्षबाधपुर सरमाच्छादनस्यापनयनकाल विधत्ते—"न पुरा सोमस्य क्रयादपोर्णुवीत यत् पुरा सोमस्य क्रयादपोर्णुवीत गर्भा प्रजाना परापातुका स्यु क्रीते सोमेऽपोर्णुते जायत एव तदथो यथा वसीयासं प्रत्यपोर्णुते तादृगेव तत्" ( तैस ६ १ ३ ) इति । सोमे क्रीते
२० तत् तदैव जायते ततो वस्त्रापनयन युक्तम् । निचायन्त्यधनवन्त राजानिक प्रति जनानां सिक्षाया पार्श्वदेश *याष्टीकादिभि ३७ सभाया३८ आवरणपटो यथाऽपनीयते तादृगेव तदिति द्रष्टव्यम् ॥ 'ऊर्गस्या-ङ्गिरसी' इत्यस्यार्थमाप्यायिकया दर्शयन् मेखला विधत्ते—"अङ्गिरस सुवर्गं लोक यन्त ऊर्जं व्यभजन्त ततो यदत्यशिष्यत ते शरा अभवन्नूर्ग्वै शरा यच्छरमयी मेखला भवत्यूर्जमेवाव रुन्धे" ( तैस ६.१ ३ ) इति । अङ्गिरोनामकानामृषीणां परस्परसम्भरसे विभज्यमाने यदवशिष्ट तच्छरनामकतृणविशेषरूपेणाऽऽवि-
२५ र्भूत तस्मात् 'ऊर्गसि' इत्यादिमन्त्र उपपन्न । मेखलाबन्धनप्रदेशं विधत्ते—"मध्यत स नह्यति मध्यत एवास्मा ऊर्जं दधाति तस्मान्मध्यत ऊर्जा भुञ्जते" ( तैस ६ १ ३ ) इति । अस्य यजमानस्य शरीरमध्ये रस स्थापयति । तस्मात्सर्वेऽपि मध्य ऊर्जो भुञ्जते रस धारयन्तीत्यर्थ ॥ प्रकारान्तरेण मध्यदेश स्तौति— "ऊर्ध्वं वै पुरुषस्य नाभ्यै मेध्यमवाचीनममेध्यं यन्मध्यत सन्नह्यति मेध्य चैवास्यामेध्य च व्यावर्तयति" ( तैस ६ १ ३ ) इति ॥ शरमयत्वं प्रशंसति—"इन्द्रो वृत्राय वज्रं प्राहरत् स त्रेधा व्यभवत्
३० स्फ्यस्तृतीयं रथस्तृतीय यूपस्तृतीय येऽन्त शरा अशीर्यन्त ते शरा अभवन् तच्छराणा शरत्व वज्रो वै शरा

३६. आ-विपक्षे बाधस्पुर" । *शुद्धीकृत पाठ । लिखितपुस्तकेषु मुद्रित-पुस्तकयोश्च 'याष्टिका-दिभि' इत्यस्ति । 'शक्तियष्ट्योरीकक्' ( पा ४ ४ ५९ ) इति सूत्रेण 'याष्टीक' इत्येव साधु । ३७. त-यानकादिभि । ३८. उ ना पाभा हा—सभायाम् ।

पाहीन्द्रस्य योनिरसि (२) मा मा हिꣳसीः

पाहि। इन्द्रस्य। योनिः। असि (२)। मा। मा। हिꣳसीः।

---

तस्मात् मां [v]पाहि। हे वासः, अतीकाशनिमित्तमनाच्छादनं दोषत्वेन न मन्तव्यम्। नक्षत्राण्येव हि तं दोषं परिहरिष्यन्तीति भावः॥

कृष्णविषाणे यजमानाय प्रयच्छति—'इन्द्रस्य' इति॥ [v]इन्द्रस्य अपि [v]योनिः कारणम् [v]असि त्वम्। ईदृशी [३२]त्वं [v]मा [v]मा [v]हिंसीः। त्वां यजमानाय प्रयच्छामीति भावः। "यज्ञो दक्षिणामभ्यध्यायत्तां समभवत्" इत्यारभ्य "सा कृष्णविषाणाऽभवत्" (तैसं ६·१·३·) इत्यन्ते ब्राह्मणे स्पष्टमिन्द्रयोनित्वमस्याः॥　५

---

क्षुत् खलु वै मनुष्यस्य भ्रातृव्यो यच्छरमयी मेखला भवति चर्जेणैव साक्षात् क्षुधं भ्रातृव्यं मध्यतोऽप हते" (तैसं ६·१·३) इति। ये वज्रस्यान्तःशीर्णाः क्षुद्रावयवास्ते शराख्यास्तृणरूपाः शरा अभवन्। गुणं विधत्ते—"त्रिवृद्भवति त्रिवृद्वै प्राणस्त्रिवृतमेव प्राणं मध्यतो यजमाने दधाति" (तैसं ६·१·३) इति। प्राणापानव्यानवृत्तिभिः प्राणस्य त्रिगुणत्वम्॥ गुणान्तरं विधत्ते– "पृथ्वी भवति रज्जूनां व्यावृत्त्यै" (तैसं ६·१·३) इति। रज्जूनां सूक्ष्माणां खट्वादिस्थितानाम्॥ मेखलायोक्त्रयोर्व्यवस्थां विधत्ते–"मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीं मिथुनत्वाय" (तैसं ६·१·३) इति। मेखला यजमानस्य स्त्री, योक्त्ररूपः पत्न्याः पुमानिति प्रत्येकं मिथुनत्वम्॥　१०　१५

इन्द्रस्येति॥ बौधायनः—"अथास्यैतां कृष्णविषाणां त्रिवलिर्वा पञ्चवलिर्वा शाण्या रज्ज्वा *परितृण्णां तां यजमानाय प्रयच्छतीन्द्रस्य योनिरसि मा मा हिꣳसीरिति यजमानः प्रतिगृह्णाति" (बौश्रौ ६·५) इति। आपस्तम्बो मन्त्रैक्यं मेने (आपश्रौ १०·९·१७)॥ कृष्णविषाणाया इन्द्रयोनित्वमाख्यायिकया विशदयन् विधत्ते–"यज्ञो दक्षिणामभ्यध्यायत् ताꣳ समभवत् तदिन्द्रोऽचायत् सोऽमन्यत यो वा इतो जनिष्यते स इदं भविष्यतीति तां प्राविशत् तस्या इन्द्र एवाजायत सोऽमन्यत यो वै मदितोऽपरो जनिष्यते स इदं भविष्यतीति तस्या अनुमृश्य योनिमाच्छिनत् सा सूतवशाऽभवत् तत् सूतवशायै जन्म ताꣳ हस्ते न्यवेष्टयत तां मृगेषु न्यदधात् सा कृष्णविषाणाऽभवदिन्द्रस्य योनिरसि मा मा हिꣳसीरिति कृष्णविषाणां [illegible] यच्छति सयोनिमेव यज्ञं करोति सयोनिं दक्षिणाꣳ सयोनिमिन्द्रꣳ सयोनित्वाय" (तैसं ६·१·३) इति। यज्ञदेवस्य दक्षिणादेव्या [३९]संयोगमिन्द्रोऽवगत्य[४०] ततो जातः सर्वमिदमैश्वर्यं प्राप्स्यतीति निश्चित्य स्वयमेव दक्षिणां प्रविश्य ततोऽजायत। पुनरपि स्वस्मादपरः तथा[४१] जनिष्यमाणः सर्वं प्राप्स्यतीति मत्वा मातुर्योनिमाच्छिनत्। सा च माता सकृत्प्रसूता पश्चात् वियोनित्वेन वन्ध्याऽभवत्। ततो लोके पश्चान्नष्टबीजा सूतवशा संपन्ना। ततस्तां योनिं हस्ते वेष्टयित्वा पश्चात् वलिभिः　२०　२५

---

३२. तं–त्वमनः।

---

*बौश्रौसूत्रे 'परितृण्णा मण्डचरवद्ग्रथिता'। ३९. आ.ड.पा–सह योगमि°; ना.हा–सह संयोगमि°। ४०. आ.ना.पा.हा–°वगम्य। ४१. तं.म२–ततः।　३०

**कृ॒ष्यै त्वा॑ सुस॒स्यायै॑ सुपिप्प॒लाभ्य॒स्त्वौष॑धीभ्यः**

कृ॒ष्यै । त्वा॒ । सु॒स॒स्याया॒ इति॑ सु-स॒स्यायै॑ । सु॒पि॒प्प॒लाभ्य॒ इति॑ सु-पि॒प्प॒लाभ्यः॑ । त्वा॒ । ओष॑धीभ्य॒ इत्योष॑धि-भ्यः॒ ।

---

तयाऽन्तर्वेदि लोष्टमुद्धन्ति ' कृष्यै त्वा ' इति ॥ हे पृथिवि, या सुसस्या शोभनसस्या
५ कृषि । " नञ्सुभ्याम् " ( पा ६.२ १७२ ) इत्युत्तरपदान्तोदात्तत्वम् । तदर्थं [33]त्वामुद्धरामीति शेष । " इगुपधात् कि ( कित ) " ( उ ५६९ ) इति किप्रत्ययान्तोऽन्तोदात्त कृषिशब्द । " उदात्तयणो हल्पूर्वात् " ( पा ६.१ १७४ ) इति तत परस्याश्चतुर्थ्या उदात्तत्वम् ॥

तया दक्षिण गोदान कण्डूयते-- ' सुपिप्पलाभ्य ' इति ॥ या सुपिप्पला शोभनफला शोभनकर्मणीशा [34] ओषधय, तदर्थं त्वा कण्डूये इति शेष । पूर्ववत् स्वर. । ओषधिशब्दे
१० तु दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् ( पा ६ २ ४२ ) । " ओषधेश्च विभक्तावप्रथमायाम् " ( पा ६.३ १३२ ) इति दीर्घ । " यद्धस्तेन कण्डूयेत " ( तैस ६.१ ३ ) इत्यादि ब्राह्मणम् ॥

---

युक्ता सा योनि कृष्णसूत्रेषु निरूपी । तत इय कृष्णविषाणा यज्ञस्य भोग्या योनिर्दक्षिणाया अवयवभूता योनिरिन्द्रस्य कारणभूता योनि ॥

कृष्या इति ॥ कल्प --" कृष्यै त्वा सुसस्याया इति तया वेदेर्लोष्टमुद्धन्ति " ( आपश्रौ
१५ १०.१० १ ) इति ॥ हे लोष्ट शोभनसस्योपेत, कृष्यर्थं त्वामुद्धन्मि ॥ मन्त्रसामर्थ्यं दर्शयति-- " कृष्यै त्वा सुसस्याया इत्याह तस्मादकृष्टपच्या ओषधय पच्यन्ते " ( तैस ६.१ ३ ) इति । नीवाराद्योऽकृष्टपच्या ॥

सुपिप्पलाभ्य इति ॥ कल्प --" सुपिप्पलाभ्यस्त्वौषधीभ्य इत्यर्धे प्राप्ते शिरसि कण्डूयते " ( आपश्रौ १० १० २ ) इति । यदा कण्डूयनप्रयोजन प्रसक्त तदा कण्डूयेत । हे शिर , त्वां शोभनफलो-
२० पेतौषध्यर्थं कण्डूये ॥ पिप्पलशब्दसूचितमाह-- " सुपिप्पलाभ्यस्त्वौषधीभ्य इत्याह तस्मादोषधय फल गृह्णन्ति " ( तैस ६ १.३ ) इति ॥ विपक्षबाधपुर सर द्रव्य विधत्ते-- " यद्धस्तेन कण्डूयेत पामनंभावुका प्रजा स्युर्यत् स्मयेत नग्नभावुका कृष्णविषाणया कण्डूयतेऽपिगृह्य स्मयते प्रजानां गोपीथाय " ( तैस ६.१ ३ ) इति । पामाख्यरोगयुक्ता दारिद्र्येण वस्त्ररहिताश्च स्यु ॥ विपक्षबाधपूर्वक कृष्णविषाणाया त्याग विधत्ते--" न पुरा दक्षिणाभ्यो नेतो कृष्णविषाणामव चृतेद्यत् पुरा दक्षिणाभ्यो नेतो कृष्णविषाणा-
२५ मव चृतेद्योनि प्रजाना परापातुका स्यान्नीतासु दक्षिणासु चात्वाले कृष्णविषाणा प्रास्यति योनिर्वै यज्ञस्य चात्वाल योनि कृष्णविषाणा योनावेव योनिं दधाति यज्ञस्य सयोनित्वाय " ( तैस ६.१.३ ) इति । दक्षिणाभ्यो नेतोर्दक्षिणानामृत्विग्भिरपनयनात् । अवचृतेन परित्यजेत । " चात्वालाद्धिष्णियानुप वपति " ( तैस ६ ३.१ ) इति । चात्वालनामकात् गर्तात् धिष्णियानामुत्पत्तेर्विधास्यमानत्वात् ( तैस ६.३.१ ) चात्वालस्य यज्ञयोनित्वम् ।

---

३० ३३. प--त्वां धारयामीति । ३४ मे--'करणिका' (?) ।

सूपस्था देवो वनस्पतिरूर्ध्वो मा पाह्योदृचः स्वाहा यज्ञं मनसा स्वाहा
द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिक्षात् स्वाहा यज्ञं वातादा रभे ॥ २ ॥
[ मा योनिरसि त्रिꣳशच्च । ]

सूपस्था इति सु-उपस्थाः । देवः । वनस्पतिः । ऊर्ध्वः । मा । पाहि । एति । उदृच इत्युत्-ऋचः ।
स्वाहा । यज्ञम् । मनसा । स्वाहा । द्यावापृथिवीभ्यामिति द्यावा-पृथिवीभ्याम् । स्वाहा । ५
उरोः । अन्तरिक्षात् । स्वाहा । यज्ञम् । वातात् । एति । रभे ॥ २ ॥
[ मैसं १.२.२; कासं २.२-३; कपिसं १.१४-१५; वासं ४.७-१०. ]

औदुम्बरं दण्डं यजमानाय प्रयच्छति—'सूपस्थाः' इति ॥ सुष्ठु उपस्थीयते अवष्टभ्य स्थीयते मैत्रावरुणेन प्रैषे कृते । तिष्ठतेः "अन्येभ्योऽपि दृश्यते" (पा ३.२.१७८) इति कर्मणि क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६.२.१३९) । यद्वा उपस्थानमुपस्थाः । भावे क्विप् (द्र.पा ३.३.१८; १० पा ३.३.१०८ वा ९) । शोभनमुपस्थानं यस्मिन् इति बहुव्रीहौ "नञ्सुभ्याम्" (पा ६.२.१७२) इत्युत्तरपदान्तोदात्तत्वम् । अस्त्रीप्रत्ययान्तत्वात् ह्रस्वाभावः (द्र.पाभा १.२.४८ वा २) । [v]देवः दीप्तिमान् [v]वनस्पतिः वनस्पतिविकारः, कार्ये कारणशब्दः । "उभे वनस्पत्यादिषु युगपत्" (पा ६.२.१४०) इति पूर्वोत्तरपदयोः युगपत् प्रकृतिस्वरत्वम् । पारस्करप्रभृतित्वात् (पा ६.१.१५७) सुट् । [v]ऊर्ध्वः अकुटिलः । ईदृशस्त्वं मां [v]पाहि रक्ष । [v]आ [v]उदृचः आसमाप्तेर्यज्ञस्य । पूर्ववत् प्रत्ययः स्वरश्च । ईदृशं त्वां १५ यजमानाय प्रयच्छामीति भावः । "वाग्वै देवेभ्योऽपाक्रामत्" (तैसं ६.१.४) इत्यादि ब्राह्मणम् ॥

यजमानं वाचयति—'स्वाहा' इति ॥ आ रभ इति सर्वत्र संबध्यते । यस्मादित्थं

---

सूपस्था इति ॥ बौधायनः—"अथास्मा ऊर्ध्वाग्रमौदुम्बरं दण्डं प्रयच्छति मुखेन संमितꣳ सूपस्था देवो वनस्पतिरित्यूर्ध्वो मा पाह्योदृच इति यजमानः प्रतिगृह्णाति" (बौश्रौ ६.५) इति । आपस्तम्बो मन्त्रैक्यमाह—"सूपस्थाः देवो वनस्पतिरिति । तं यजमानः प्रतिगृह्य" (आपश्रौ १०.१०.६) २० इति ॥ दण्डरूपो वनस्पतिकार्यः देवः [v]सूपस्थाः सुष्ठूपस्थीयतेऽवष्टभ्यते मैत्रावरुणेन प्रैषकाले इति सूपस्थाः । हे तादृग्दण्ड, त्वमूर्ध्वस्थित आ समाप्तेर्मां पालय ॥ यजमानाय दण्डप्रदानं विधत्ते—"वाग्वै देवेभ्योऽपाक्रामत् यज्ञायातिष्ठमाना सा वनस्पतीन् प्राविशत् सैषा वाग्वनस्पतिषु वदति या दुन्दुभौ या तूणवे या वीणायां यद्दीक्षितदण्डं प्रयच्छति वाचमेवाव रुन्धे" (तैसं ६.१.४) इति । तूणवो वेणुः ॥ क्रमेण गुणौ विधत्ते—"औदुम्बरो भवत्यूर्ग्वा उदुम्बर ऊर्जमेवाव रुन्धे मुखेन संमितो भवति । मुखत २५ एवास्मा ऊर्जं दधाति तस्मान्मुखत ऊर्जा भुञ्जते (तैसं ६.१.४) इति ॥ यजमानस्य दण्डत्यागं विधत्ते—"क्रीते सोमे मैत्रावरुणाय दण्डं प्र यच्छति मैत्रावरुणो हि पुरस्तादृत्विग्भ्यो वाचं विभजति तामृत्विजो यजमाने प्रति ष्ठापयन्ति" (तैसं ६.१.४) । मैत्रावरुणस्तत्र तत्र प्रैषैस्तेभ्यः ऋत्विग्भ्यो मन्त्रान् विभजति । ते च ऋत्विजो यजमानार्थं तान् मन्त्रान् पठन्ति । अतो मैत्रावरुणस्य वाग्रूपो दण्डो युक्तः ॥

स्वाहेति ॥ बौधायनः—"अथैनं यज्ञस्यान्वारम्भं वाचयति स्वाहा यज्ञं मनसा स्वाहा द्यावा- ३० पृथिवीभ्यां स्वाहोरोरन्तरिक्षात् स्वाहा यज्ञं वातादा रभ इति" (बौश्रौ ६.५) इति । आपस्तम्बः—

कर्तव्यमिति स्वयमेनाहं शक्तः तस्मात् त्वयाऽनुज्ञातोऽहं प्रथमं तावत् $^{v}$मनसा $^{v}$यज्ञम् $^{v}$आ $^{v}$रभे यज्ञाभिमुखं मनः करोमीति । "मनसा हि पुरुषो यज्ञमभिगच्छति" ( तैसं ६.१.४ ) इति ब्राह्मणम् । किंच तस्या एव वचनेन $^{v}$द्यावापृथिवीभ्याम् यज्ञमारभे यज्ञसाधनानां यज्ञाङ्गानां द्यावापृथिव्योः स्थितत्वात् ॥ "द्यावापृथिव्योर्हि यज्ञः" ( तैसं ६.१.४ ) इति च ब्राह्मणम् ।
५ यद्वा—द्यावापृथिव्योः स्थित्यर्थं यज्ञमारभे । द्यावापृथिव्योर्हि यज्ञः स्थितिहेतुत्वेन कथ्यते । "देवताद्वन्द्वे च" ( पा ६.२.१४१ ) इति युगपत् पूर्वोत्तरपदयोः प्रकृतिस्वरत्वम् । द्यावाशब्द आद्युदात्तः । पृथिवीशब्दो ङीबन्तोऽन्तोदात्तः । किंच पुनरपि तस्या एव वचनेन $^{v}$उरोः $^{v}$अन्तरिक्षात् यज्ञमारभे । अन्तरिक्षानुगृहीतत्वात् सर्वार्थानाम् । "अन्तरिक्षे हि यज्ञः" ( तैसं ६.१.४ ) इति च ब्राह्मणम् । किंच पुनरपि तस्या एव वचनेन $^{v}$वातात् यज्ञमारभे । आत्मसमवेतक्रियाजनित-
१० रूपपरिस्पन्दात्मा प्राणो वातः । ततो यज्ञमारभे, तदधीनत्वात् सर्वव्यापाराणाम् । "वातादा अध्वर्युर्यज्ञं प्रयुङ्क्ते" ( तैब्रा ३.३.९ ) इति ब्राह्मणम् ॥

॥ इति प्रथमकाण्डस्य द्वितीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

"अथाङ्गुलीर्न्यञ्चति । स्वाहा यज्ञं मनसेति द्वे । स्वाहा दिवः इति द्वे । स्वाहा पृथिव्या इति द्वे । स्वाहोरोरन्तरिक्षादिति द्वे । स्वाहा यज्ञं वाताद् आ रभ इति मुष्टी करोति वाचं यच्छति" ( आपश्रौ
१५ १० ११ १-४ ) इति ॥ स्वाहाशब्देनाध्ययेन यथाब्राह्मणमर्था $^{42}$उपलक्षणीया । $^{v}$मनसा $^{v}$यज्ञम् अभिगच्छामि । द्यावापृथिव्योरन्तरिक्षे च यज्ञ आश्रितः । साक्षादेव $^{v}$यज्ञं वायोः प्रसादात् $^{v}$आ रभे सोऽयमुपलक्षणप्रकारः ॥ तदेतद्दर्शयति—"स्वाहा यज्ञं मनसेत्याह मनसा हि पुरुषो यज्ञमभिगच्छति स्वाहा द्यावापृथिवीभ्यामित्याह द्यावापृथिव्योर्हि यज्ञः स्वाहोरोरन्तरिक्षादित्याहान्तरिक्षे हि यज्ञः स्वाहा यज्ञं वाताद् आ रभ इत्याहायं वाव यः पवते स यज्ञस्तमेव साक्षादा रभते" ( तैसं ६.१.४ ) इति । वातस्य $^{43}$क्रियाहेतुप्राणरूपत्वम् ।
२० अत्र द्वयोर्हस्तयोः कनिष्ठिकामारभ्य चतसृणामङ्गुलीनां चतुर्भिर्मन्त्रैर्न्यग्भावः । पञ्चमेन मन्त्रेणाङ्गुष्ठाभ्यां सह मुष्टिबन्धो वाङ्नियमश्च । तदेतद्विधत्ते—"मुष्टी करोति वाचं यच्छति यज्ञस्य धृत्यै" ( तैसं ६.१.४ ) इति । अथ मतत्त्व यज्ञधृतिः ॥ अध्वर्युः कंचिन्मन्त्रमुत्पाद्य विनियुङ्क्ते— "अदीक्षिष्टायं ब्राह्मण इति त्रिरुपांश्वाह देवेभ्य एवैनं प्राऽऽह त्रिरुच्चैरुभयेभ्य एवैनं देवमनुष्येभ्यः प्राऽऽह" ( तैसं ६.१.४ ) इति ॥ स्वीकृतवाङ्नियमस्य नक्षत्रोदयात् पुरा विमोकं निषेधति— "न पुरा नक्षत्रेभ्यो वाचं वि सृजेत् यत् पुरा
२५ नक्षत्रेभ्यो वाचं वि सृजेत् यज्ञं विच्छिन्द्यात्" ( तैसं ६.१.४ ) इति ॥ कालविशेषे वाग्विमोकं विधत्ते, विमोककाले च वक्तव्यं कंचित् प्रैषमन्त्रमुत्पादयति—"उदितेषु नक्षत्रेषु व्रतं कृणुतेति वाचं वि सृजति यज्ञव्रतो वै दीक्षितो यज्ञमेवाभि वाचं वि सृजति" ( तैसं ६.१.४ ) इति । यज्ञार्थं स्वीकृत वाङ्नियमादिरस्य व्रतं यस्यासौ यज्ञव्रतः । तथा सति अस्य लौकिकपदप्रैषस्यापि यज्ञार्थत्वान्नायं वाग्विमोको दोषकारी ॥ नक्षत्रोदयात् पुरा लौकिकवागुच्चारणे प्रायश्चित्तमाह— "यदि विसृजेद्वैष्णवीमृचमनुब्रूयाद्यज्ञो वै विष्णुः
३० यज्ञेनैव यज्ञं सं तनोति" ( तैसं ६.१.४ ) इति । वैष्णवी "विष्णो त्वं नो अन्तमः" ( तैसं ३.१.१० ) इति केचित् । "इदं विष्णुः" ( तैसं १.२.१३ ) इत्यन्ये ॥

अथ विनियोगसंग्रहः—" आकूत्यै जुहुयात् षड्भिर्ऋक्सामेत्यजिनं स्पृशेत् ।
इमामजिनमारोहेद्ध्यानात्पूर्गीति मेखलाम् ॥ १ ॥

---

४२ इ ड मा पा भो द्वा–लक्षणीया । ४३ इ मा भो द्वा–क्रियात्पलायन" । ४४ इ ड–इमामूजिन" ।

विष्णोर्वस्त्रेणोर्णुते तं नक्षेत्यावेष्टयेच्छिरः ।
इन्द्र दधात् कृष्णशृङ्गं कृष्यै लोष्टोद्धतिस्तथा ॥ २ ॥
सुषि कण्डूयनं मूर्ध्नि सूप दण्डपरिग्रहः ।
स्वाहाऽङ्गुलीर्द्वयोर्न्यञ्चेत् पञ्चभेदेन विंशतिः ॥ ३ ॥ " इति ॥

अथ मीमांसा ॥ पञ्चमाध्यायस्य तृतीयपादे चिन्तितम्—
" इष्टिदण्डादिभिर्दीक्षा किं वेष्टयैवोक्तितः क्रमात् ।
युक्तः संस्कार इष्ट्यैव दण्डादेर्व्यञ्जकत्वतः ॥ " ( जैन्या ५·३·१६ ) इति ॥

ज्योतिष्टोमे [४५]दीक्षाप्रकरणे श्रूयते—" आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः " ( द्र· तैब्रा १·५·९; मैसं ३·६·१ ) इति । अन्यदपि [४६]श्रुतम्—" दण्डेन दीक्षयति " । " मेखलया दीक्षयति " ( तैसं ६·१·३ ) " कृष्णाजिनेन दीक्षयति " ( तैसं ६·१·३ ) इति । तत्र [४७]इष्टिवत् दण्डादीनामपि साधनत्वाभिधानात् सर्वैरियं दीक्षेति चेत् । मैवम् । इष्टेः क्रियारूपत्वात् संस्कारहेतुत्वं युक्तम् । दण्डादयस्तु द्रव्यरूपा न पुरुषं संस्कर्तुं प्रभवन्ति । न चैतावता दण्डादिवैयर्थ्यम् । ' दीक्षितोऽयम् ' इत्यभिव्यक्तिरूपस्य [४८]दृष्टस्य प्रयोजनस्य सद्भावात् । तस्मादिष्ट्यैव दीक्षा सिध्यति ॥ १०

तृतीयाध्यायस्य सप्तमपादे चिन्तितम्—
" दण्डदीक्षा दक्षिणा तु शतं द्वादशभिर्युतम् ।
द्व्यर्थमुत मुख्यार्थं सोमस्यैवयुक्तिसंभवात् ॥
मुख्याङ्गद्वयगं मैवं पारंपर्यविडम्बना ।
वचनस्य न युक्ताऽतः प्रधानार्थमिदं स्थितम् ॥ "
( जैन्या ३·७·९–१० ) इति ॥ १५

ज्योतिष्टोमे दीक्षादक्षिणे श्रूयेते—" दण्डेन दीक्षयति " इति । " तस्य द्वादशशतं दक्षिणा " ( तांब्रा १६·१·११ ) इति च । तत्र दीक्षा [५०]मुख्याङ्गयोरुभयोरुपकरोति । तथा दक्षिणाऽपि । न च वाच्यं ' दीक्षा सोमस्य, दक्षिणा सोमस्य ' इति वाक्ये षष्ठ्या मुख्यसंबन्ध एवावगम्यते न त्वङ्गसंबन्ध इति । दीक्षादक्षिणे साक्षात् सोमेनैव संबध्नीताम् । स सोमः पुनरङ्गैः संबध्यत इति परंपरया दीक्षादक्षिणयोरङ्गैरपि संबन्धोऽस्ति । तस्मादुभयार्थं दीक्षादिकमिति प्राप्ते ब्रूमः—अव्यवहितसंबन्ध एव षष्ठ्या अभिधेयोऽर्थः । तदसंभवे तु परंपरया[५१] संबन्धः कथंचित् गृह्येत । इह तु तत्संभवात् पारंपर्यं न युक्तम् । तस्मात् प्रधानार्थं दीक्षादिकम् । २० २५

[५२]चतुर्थस्य द्वितीयपादे[५२] चिन्तितम्—
" मैत्रावरुणके दण्डदानस्य प्रतिपत्तिता ।
उतार्थकर्मताऽऽद्योऽस्तु धारणे कृतकृत्यतः ॥

---

४५. ना.मर–अग्रिमः । ४६. इ.उ.तं.ना.पा.भां.मर२.हा– ' दीक्षाप्रकरणे ' नास्ति । ४७. इ.उ.ना.पा.भां.हा– ' श्रुतम् ' नास्ति । ४८. इ.उ.ना.पा.भां.हा– ' इष्टिवत् ' नास्ति । ४९. तं.मर२–दृष्ट° । ५०. आ.तं.ना.मर२.हा–मुख्याङ्गयोरुप° । ५१. तं–परंपरा° । ५२–५२. इ.उ–चतुर्थस्य द्वितीये पादे ; आ.क–चतुर्थाध्यायस्य द्वितीयपादे । ३०

युक्तोपयुक्तसंस्कारादुपयोक्ष्यसंस्क्रिया ।
स्थित्वा प्रैषानुवचने दण्डोऽपेक्ष्योऽर्थकर्म तत् ॥ " (जैन्या ४ २ १२–१३ ) इति ॥

ज्योतिष्टोमे श्रूयते—" क्रीते सोमे मैत्रावरुणाय दण्ड प्रयच्छति " ( तैस ६·१ ४ ) इति । तदेतद्दण्डदानं प्रतिपत्तिकर्म । कुत ? दण्डस्य यजमानधारणेन कृतकृत्यत्वात् । यजमानो ह्यध्वर्युणा दीक्षासिद्ध्यर्थं दत्त दण्डमा सोमक्रयाद्धारयति । अत एवाऽऽम्नातम् " दण्डेन दीक्षयति " इति, " यद्दीक्षितदण्ड प्रयच्छति " (तैस ६·१ ४ ) इति च । तस्मादुपयुक्तस्य [54]दण्डस्य दान प्रतिपत्तिरिति चेत् । मैवम् । दण्डे भविष्यदुपयोगस्यापि [55]सद्भावात् । यदा मैत्रावरुण स्थित्वा प्रैषानन्वक्ष्यति तदानीमवलम्बनाय दण्डोऽपेक्षित । अत एवाऽऽम्नातम्— " दण्डी प्रैषानन्वाह " इति । तथा [56]प्रतिपत्तिकर्मत्वादुपयुक्तसंस्कारादर्थकर्मत्व उपयोक्ष्यमाण संस्कार प्रशस्त । उपयोक्ष्यितुमेव हि सर्वत्र संस्कारस्य प्रवृत्ति । उपयुक्ते तु प्रतिपत्तिरूपस्य संस्कारस्याऽऽदरमात्रपर्यवसायित्वेन तत्कार्यपर्यवसानाभावादप्रशस्तत्वम् । तस्मात् मैत्रावरुणसंस्काराय [57]दण्डदानमर्थकर्म । तथा सति निरूढपशावसत्यपि दीक्षिते दण्डसंपादनमेतद्दान [58]प्रयोजकम् ॥

तृतीयाध्यायस्य द्वितीयपादे चिन्तितम्—

" उत्सिद्ध्वन् प्रवर्तयदग्नीदग्नीनित्यादिकं तथा ।
कृणुत व्रतमित्येवं पठन् वाचो विसृज्यते ॥
मन्त्रौ विधेयौ कालो वा मन्त्रावुत्थानमोकयो ।
विनियोज्यौ न कालस्य लक्षणा युज्यते विधौ ॥
मन्त्रार्थानन्वयात्तत्र तद्विधिर्नैव शक्यते ।
अगत्या लक्षणाऽप्यस्तु तेन कालो विधीयते ॥ "

( जैन्या ३ २ ९–११ ) इति ॥

ज्योतिष्टोमे समामनन्ति—" उत्सिद्ध्वाहाग्नीदग्नीन् विहर " ( द्र तैस ६·३·१ ) इति । तथा " व्रतं कृणुतेति वाचं विसृजति " ( तैस ६·१·४ ) इति । तत्राऽऽग्नीध्र सर्वोप्याग्निविहरणादिमेपरूपो मन्त्रोऽनेन वाक्येनोत्थानक्रोडतया विनियुज्यते । तथा मुष्टिं कृत्वा विदयमितवाचो दीक्षितस्य वाग्विमोके " व्रतं कृणुत " ( तैस ६ १ ४ ) इति मन्त्रो विनियुज्यते । न चाग्नोत्थानविमोकशब्दौ काललक्षकौ । [59]तत्कालयोर्विधेयत्वे सति लक्षणाया [60] अन्याय्यत्वादिति प्राप्ते ब्रूम —अग्निविहरणप्रैषे पयःपानरूपव्रतसंपादनप्रैषे चान्वितावेतौ मन्त्रौ, न तूत्थाने वाग्विमोके च । अतोऽसमर्थयोर्विनियोगासंभवादगत्या लक्षणामप्यङ्गीकृत्य कालो विधीयते ॥

अथ छन्द ॥ ' आपो देवी ' इति त्रिपदा विराट् । ' विश्वे देवस्य ' इत्यनुष्टुप् । ' इमां धियम् ' इति त्रिष्टुप् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके द्वितीयोऽनुवाक ॥ २ ॥

---

५३. इ उ–' दण्डस्य ' नास्ति । ५४. मर–संभवात् । ५५ आ ड ना पा ह्रा–प्रतिपत्तिरूपा° । ५६ सं–तद्दण्डोपादान° , मर–दण्डप्रदान° । ५७. त–प्रयोजनं । ५८–५८. इ उ.मा–तत्काल्योर्विधेयवाचके लक्षणया, ना पा ह्रा–तत्काल्योर्विधेयवाचके लक्षणाया ।

**दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसꣳ सुपारा नो असद्वशे ।**

दैवीम् । धियम् । मनामहे । सुमृडीकामिति सु–मृडीकाम् । अभिष्टये । वर्चोधामिति वर्चः–धाम् । यज्ञवाहसमिति यज्ञ–वाहसम् । सुपारेति सु–पारा । नः । असत् । वशे ।

मध्यरात्रे प्रबुद्धो यजमान आचामति –'दैवीं धियम्' इत्यनुष्टुभा चतुष्पदया ॥ देवानामियं दैवी, यया देवान् यष्टुं शक्नोति । "देवायजञौ" (द्र. पाभा ४·१·८५ वा ३) इत्यञ् । ञित्वा- ५ दाद्युदात्तत्वम् (पा ६·१·१९७) । तां धियं मनामहे अभ्यस्यामः, भूयो भूयोऽपि संपादयामः । "पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः" (पा ७·३·७८) इति मनादेशः । व्यत्ययेनात्मनेपदम् । सा पुनर्धीः कीदृशीत्याह–ᐯसुमृडीकाम् । शोभना मृडीका यस्यामिति बहुव्रीहौ "नञ्सुभ्याम्" (पा ६·२·१७२) इत्युत्तरपदान्तोदात्तत्वम् । मृड सुखने । तस्मात् "मृडेरीकन्कननौ*" (द्र.उ ४७२) इति (ई)कन्प्रत्ययः । सुखयितारः सुख- १० हेतवः उच्यन्ते । ᐯवर्चोधां वर्चसो दीप्तेर्धात्रीम् । "आतोऽनुपसर्गे कः" (पा ३·२·३) । कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६·२·१३९) । ᐯयज्ञवाहसं यज्ञं वहतीति यज्ञवाहाः, ᐯतां यज्ञनिर्वहणक्षमाम् । "गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च" (द्र.उ ६७६) इति वचनात् "वहिहाधाञ्भ्यश्छन्दसि" (उ ६७०) इत्यसुन्प्रत्ययः कारकपूर्वादपि भवति । "वसेर्णित्" (उ ६६७) इति तत्रानुवर्तते । ᐯततो वृद्धिः । यज्ञशब्दो नङ्प्रत्ययान्तोऽन्तोदात्तः (पा ३·३·९०, ३·१·३) । किमर्थं मनामहे ? ᐯअभिष्टये १५ आभिमुख्येन या इष्टिः देवानां तदर्थम् । "एमन्नादिषु पररूपं वक्तव्यम्" (द्र.पाभा ६·१·९४ वा ६) इति पररूपत्वम् । वर्णव्यत्ययेन वा ह्रस्वः । "तादौ च निति कृत्यतौ" (पा ६·२·५०) इति

द्वितीयेऽनुवाके दीक्षा वर्णिता । दीक्षितेन देवयजने स्वीकृते सति सोमक्रयणादिरूपः क्रतुव्यवहारस्तत्र कर्तुं शक्यते इति तृतीयेऽनुवाके देवयजनस्वीकारो ᐯवर्ण्यते । तत्स्वीकारात्पूर्वं सोमार्थे देवयजने सोमक्रयस्यैव वक्तुमुचितत्वात् तत्स्वीकारात् पूर्वमनुवाकादौ व्रतपानद्रव्यसंपादने ᐯअभिधीयेते ᐯ । २०

दैवीमिति ॥ बौधायनः—"अथाप आचामति दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसꣳ सुपारा नो असद्वश इति" (बौश्रौ ६·७) इति । आपस्तम्बः—"दैवीं धियं मनामह इति हस्ताववनिज्य" (आपश्रौ १०·१७·९) इति ॥ अभीष्टार्थसिद्धये वयं ᐯदेवताविषयां कर्मानुष्ठानबुद्धिमनया ᐯबुद्ध्या ᐯसंपादयामः । कीदृशीं ᐯबुद्धिम् ? ᐯसुमृडीकां सुखहेतुं ब्रह्मचर्यसाधारणहेतुं यज्ञनिर्वाहिकाम् । सेयं बुद्धिः सुष्ठु पारं गताऽस्माकं वशे भवतु ॥ सुमृडीकामिति पदस्याभिप्रायमाह—"दैवीं २५ धियं मनामह इत्याह यज्ञमेव तन्म्रदयति" (तैसं ६·१·४) इति । मृदूकरोतीत्यर्थः ॥ सुपारेति पदेन यत्सूचितं तदाह—"सुपारा नो असद्वश इत्याह व्युष्टिमेवाव रुन्धे" (तैसं ६·१·४) इति । व्युष्टिः सुप्रभातं ᐯकृत्स्नयज्ञप्रकाशनमित्यर्थः ॥

*'मृडः कीकच्कङ्कणौ' इति कौमुदीस्थः पाठः । सूत्रेऽस्मिन् 'मृडः कीकन्निलुज्ज्वलदत्तादिपाठः प्रामादिकः' इत्यादिका तत्त्वबोधिनीव्याख्यापि परामर्शमर्हति । १. मै–'ताम्' नास्ति । २. तं.ति–तस्मात् । ३०

१. इ.उ–वक्ष्यते । २. आ–संपादनम् । ३. आ.क.–अभिधीयते । ४–४. ना–देवताविषयकामनुष्ठानबुद्धिम् । ५. मर–शुद्धया; ना.हा–'बुद्ध्या' नास्ति । ६. मर–धियम् । ७. तं–कृत्स्नप्रकाश इत्यर्थः; मर–कृत्स्नयज्ञप्रकाश इत्यर्थः; क–कृतयज्ञप्रकाशनमित्यर्थः ।

ये देवा मनोजाता मनोयुजः सुदक्षा दक्षपितारस्ते नः पान्तु ते
नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा-

ये। देवा । मनोजाता इति मनः-जाता । मनोयुज इति मनः-युजः । सुदक्षा इति सु-दक्षाः ।
दक्षपितार इति दक्ष-पितारः । ते । नः । पान्तु । ते । नः । अवन्तु ।
तेभ्यः । नमः । तेभ्यः । स्वाहा ।

पूर्वपदप्रकृतिस्वरत्वम् । "उपसर्गाश्चाभिवर्जम्" ( फि ८१ ) इत्यभिशब्दोऽन्तोदात्तः । व्युत्पत्त्य-नवधारणात् नावगृह्यते । आभिमुख्येन देवान् यष्टुं देवीं धियं मनामहे । सा च धीः सुपारा शोभनावसाना सुष्ठु कर्मणा समाप्तिसाधनभूता । "नञ्सुभ्याम्" ( पा ६ २ १७२ ) इत्युत्तरपदान्तो-दात्तत्वम् । यद्वा–पारं तीरं कर्मसमाप्तौ । सुष्ठु पारयित्री कर्मणः । पचाद्यच् ( पा ३ १ १३४ ) ।
१० कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६ २ १३९ ) । थाथादिस्वरो वा ( पा ६ २ १४४ ) । ईदृशी भूत्वा नः अस्माकं वशे असत् अस्तु अस्मद्वशे वर्तताम् । अस्तेर्लेटि "लेटोऽडाटौ" ( पा ३ ४ ९४ ) इत्यडागमः । "इतश्च लोपः परस्मैपदेषु" ( पा ३ ४ ९७ ) ॥

व्रतयति–'ये देवाः' इति ॥ "प्राणा वै देवा मनोजाता मनोयुजः" ( तैसं ६.१ ४ ) इति ब्राह्मणदर्शनात् चक्षुरादयः प्राणाः देवाः, ते हि देवनवन्तः । मनोजाताः जातमनसः,
१५ मनोव्यापारमन्तरेण स्वकार्यकरणासंभवात् । "निष्ठाया पूर्वनिपाते जातिकालसुखादिभ्यः परवचनम्" ( पा २ २ ३६ वा १ ) इति जातशब्दस्य परवचनम् । "वा जाते" ( पा ६ २ १७१ ) इत्युत्तरपदान्तोदात्तत्वाभावे "बहुव्रीहौ प्रकृत्या°" ( पा ६ २ १ ) इति पूर्वपदप्रकृतिस्वरत्वम् । मनस्शब्दोऽसुन्प्रत्ययान्त आद्युदात्तः । मनोयुजः मनसा मननेन विषयावधारणलक्षणेन युज्यन्त इति । "सत्सूद्विष°" ( पा ३ २ ६१ ) इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६ २ १३९ ) ।

२० ये इति ॥ कल्पः—"अथास्मै कंसे वा चमसे वा निषिच्य व्रतं प्रयच्छति । तद्दक्षिणतः परिश्रित्य व्रतयति ये देवा मनोजाता मनोयुजः सुदक्षा दक्षपितारस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहेति" ( बौश्रौ ६.७ ) इति ॥ चक्षुरादिप्राणाभिमानिनो ये देवाः सन्ति तेऽस्मान् पयःपानव्रतानुष्ठायिनोऽन्तर्बहिश्च शुद्धिसंपादनेन पालयन्तु । कीदृशा देवाः ? उत्पत्तिकाले मनसा सहोत्पन्नाः । व्यवहारकालेऽपि मनसा युज्यन्ते । अन्यमनस्कस्य चक्षुरादिभिः संनिहितविषयाणामप्यनव-
२५ गमात् । सति [[ मनःसाहाय्ये स्वस्वविषयेषु सुदक्षाः कुशलाः । दक्षः प्रजापतिरुत्पादको येषां ते दक्षपितारः ॥ विचारपुरःसरं व्रतं विधत्ते—"ब्रह्मवादिनो वदन्ति होतव्यं दीक्षितस्य गृहा३इ न होतव्या३मिति हविर्वै दीक्षितो यज्जुहुयाद्यजमानस्यावदाय जुहुयाद्यन्न जुहुयाद्यज्ञपरुरन्तरियाद्ये देवा मनोजाता मनोयुज इत्याह प्राणा वै देवा मनोजाता मनोयुजस्तेष्वेव परोक्षं जुहोति । तन्नेव हुतं नेवाहुतम्" ( तैसं ६.१ ४ ) इति ॥ हविष्ट्वमर्थवादान्तरे श्रूयते—"पुरा खलु वावैष मेधायाऽऽत्मानमारभ्य चरति
३० यो दीक्षितो यदग्नीषोमीयं पशुमालभत आत्मनिष्क्रयण एवास्य स तस्मात् तस्य नाऽऽश्यं पुरुषनिष्क्रयण इव

८. ग उ.ना ह.पा.मा–दक्षाः ।

ऽग्ने॒ त्वꣳ सु जा॑गृहि व॒यꣳ सु म॑न्दिषीमहि गोपा॒य नः॑ स्व॒स्तये॑ प्र॒बुधे॑ नः॒ पुन॑र्ददः ।
अग्ने॑ । त्वम् । स्विति॑ । जा॒गृ॒हि॒ । व॒यम् । स्विति॑ । म॒न्दि॒षी॒म॒हि॒ । गो॒पा॒य॒ । नः॒ । स्व॒स्तये॑ ।
प्र॒बुध॒ इति॑ प्र–बुधे॑ । नः॒ । पुन॒रिति॑ । द॒दः॒ ॥

[v]सुदक्षाः, दक्षन्त इति दक्षाः निपुणाः प्रतिपत्तारः । दक्ष वृद्धौ । पचाद्यच् ( पा ३·१·१३४ ) । वृषादित्वादाद्युदात्तः ( पा ६·१·२०३ ) । शोभना दक्षा येषु मनोयुक्तेषु प्रवर्तमानेषु ते सुदक्षाः । "आद्युदात्तं द्व्यच् छन्दसि" ( पा ६·२·११९ ) इत्युत्तरपदाद्युदात्तत्वम्[३] । यद्वा—दाक्षिण्यं दक्षः । घञन्त आद्युदात्तः ( पा ६·१·१९७ ) । सुष्ठु दाक्षिण्यं येषामिति बहुव्रीहौ पूर्ववदुत्तरपदाद्युदात्तता ( पा ६·२·१ ) । यद्वा—सुष्ठु दक्षाः सुदक्षाः । "परादिश्छन्दसि बहुलम्" ( पा ६·२·१९९ ) इत्युत्तरपदाद्युदात्तत्वम् । [v]दक्षपितारः, दक्षं पिता पितृस्थानीयं मनो येषां ते दक्षपितारः । "ऋतश्छन्दसि" ( पा ५·४·१५८ ) इति कपः प्रतिषेधः । वर्णव्यत्ययेन उपधादीर्घत्वम् । ते तादृशा [v]देवाः [v]नः अस्मान् [v]पान्तु रक्षन्तु । पा रक्षणे । किंच [v]ते [v]नः अस्मान् [v]अवन्तु रक्षन्तु अनुप्रविशन्तु सदा अस्मासु तिष्ठन्तु । अव [४]रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु[४] । [५]तेभ्यः [v]नमः नमस्कुर्मः । किंच [v]तेभ्यः [v]स्वाहा स्वाहुतमिदं पीतं पयोऽस्तु[५] । एतौ [६]चाचमनव्रतमन्त्रौ पातुः सामर्थ्यादिति संवेशनप्रबुद्धयजुर्भ्याम् उत्तरौ द्रष्टव्यौ । सुप्त्वा प्रबुद्ध्वा(ध्य) चाचम्य व्रतयितव्यमिति क्रमः । "ब्रह्मवादिनो वदन्ति होतव्यं दीक्षितस्य गृहा३इ" ( तैसं ६·१·४ ) इत्यादि ब्राह्मणम् ॥

संविशति—'अग्ने त्वम्' इति अनुष्टुभा चतुष्पदया ॥ हे [v]अग्ने, [v]त्वं [v]सु [v]जागृहि अनिद्र आस्स्व । त्वयि तथाकारिणि सति [v]वयं [v]सु [v]मन्दिषीमहि सुष्ठु निर्भयाः स्वप्यास्म । मदि

ह्यथो खल्वाहुरग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन्निति यदग्नीषोमीयं पशुमालभते वार्त्रघ्न एवास्य स तस्माद्वाऽऽहुर्य वारुण्यर्चा परि चरति स्वयैवैनं देवतया परि चरति" ( तैसं ६·१·११ ) इति ॥ शाखान्तरेऽपि— "सर्वाभ्यो वा एष देवताभ्य आत्मानमालभते यो दीक्षितः" ( द्र. मैसं ३·६·७ ) इति । तथा सति दीक्षितस्य गृहे यद्यग्निहोत्रं जुहुयात् तर्हि यजमान एव हुतो भवेत् । [९]अहोमे तु[९] नित्याग्निहोत्रस्य परः प्रतिदिनानुष्ठानरूपं पर्व विच्छिद्येत । तत्र पूर्वप्रसिद्धेन मन्त्रेणाऽऽहवनीयाग्नौ [१०]यो होमः स प्रत्यक्ष इत्युच्यते अयं तु परोक्षोऽग्निहोत्रहोमः । अन्यमन्त्रेण प्राणाग्निषु हूयमानत्वात् । अतस्तृतीयकोटित्वेन मुख्ययोर्होमाहोमयोरभावाद्योक्तदोषद्वयम् । तस्मादनेन मन्त्रेण व्रतं कुर्यादित्यभिप्रायः ॥

अग्ने इति ॥ बौधायनः—"अथ संवेशनयजुर्जपति । अग्ने त्वꣳ सु जागृहि वयं सु मन्दिषीमहि गोपाय नः स्वस्तये प्रबुधे नः पुनर्ददः इति" ( बौश्रौ ६·६–७ ) इति । आपस्तम्बः—"अग्ने त्वꣳ सु जागृहीति स्वप्स्यन्नाहवनीयमभिमन्त्रयते" ( आपश्रौ १०·१८·१ ) इति ॥ [v]सु [v]मन्दिषीमहि निर्भयाः

३. मै–इत्युदात्तत्वम् । ४–४. ति–रक्षणगतीत्यादिषु । [कौमुदीस्थो धातुपाठस्तु भट्टभास्करीयात् किंचिद्भिद्यते । ] ५–५. ति–किंच तेभ्यो नमः तेभ्यश्च स्वाहा । ६. मै–चाचमनमन्त्रौ ।

९–९. इ.उ.पा.भां–अहुते । १०. आ.तं–'यः' नास्ति ।

त्वम॑ग्ने व्रत॒पा अ॑सि दे॒व आ मर्त्ये॒ष्वा । त्वम् (१) य॒ज्ञेष्वीड्यः ॥
त्वम् । अ॒ग्ने॒ । व्र॒त॒पा इति॑ व्रत–पा । अ॒सि॒ । दे॒व॒ । एति॑ । मर्त्ये॑षु । आ ॥
त्वम् ( १ ) । य॒ज्ञेषु॑ । ईड्य॑ ॥

स्तुतिमोदमदस्वप्नकान्तिगतिषु । " स्वपन्त वै दीक्षितम् " ( तैस ६ १·४ ) इत्यादि ब्राह्मणम् । त्व
५ चास्मान् स्वपतो गोपाय रक्ष । " सनाद्यन्ता धातव " (पा ३ १ ३२) इति धातुत्वात्, " धातो "
( पा ६·१ १६२ ) इत्यन्तोदात्तत्वम् । पादादित्वात् न निहन्यते । स्वस्तये अविनाशार्थम् ।
विभक्त्यन्तप्रतिरूपको निपात. । यद्वा–अस गतौ इत्यस्मात् सुपूर्वात् " क्तिच्क्तौ च
सज्ञायाम् " ( पा ३ ३ १७४ ) इति क्तिच् । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६ २·१३९ ) ।
व्युत्पत्त्यनवधारणान्नावगृह्यते । शोभनगत्यर्थं गोपाय यथा रक्षोभिर्न बाध्यामहे । किंच न अस्मान्
१० पुन पश्चात् मध्यरात्रे प्रबुधे प्रबोधनाय । सपदादित्वात् क्विप् (पा ३·३ १०८ वा ९)। कृदुत्तर-
पदप्रकृतिस्वरत्वम् ( पा ६ २ १३९ )। प्रबोधार्थं दद देहि, प्रबुद्धान् कुर्विति यावत् । ददातेर्लेटि
" लेटोऽडाटौ " ( पा ३ ४ ९४ ) इत्यडागम । " घोर्लोपो लेटि वा " ( पा ७ ३ ७० )
इत्याकारलोप । " इतश्च लोप " ( पा ३ ४ ९७ ) इतीकारलोप ॥

प्रबुद्ध यजमान वाचयति—' त्वमग्ने ' इति गायत्रीं त्रिपदा प्रतिष्ठानाम्नीम । " त्रिपरीता
१५ प्रतिष्ठा " ( पिसू ३ १५ ) इति वचनात् । व्याख्याता चेयमृक् " उभा वामिन्द्राग्नी "
( तैस १ १ १४ ) इत्यनुवाके । " अव्रत्यमिव वा एष करोति यो दीक्षित " ( तैस ६ १ ४ )
इत्यादि ब्राह्मणम् ॥

सन्त स्वप्स्याम । न अस्माकं स्वमये विनाशाभावार्थम । प्रबुधे जागरणाय दद सामर्थ्यं देहि ॥
स्तोमप्रसक्तिं दर्शयन् मन्त्र व्याचष्टे—" स्वपन्त वै दीक्षितं रक्षांसि जिघांसन्त्यग्नि खलु वै
२० रक्षोहाऽग्ने रक्ष सु जागृहि वयं सु मन्दिषीमहीत्याहाग्निमेवाधिपा कृत्वा स्वपिति रक्षसामपहत्यै "
( तैसं ६ १·४ ) इति ॥

त्वमिति ॥ करप —" अथाध्वर्युर्मध्यरात्र आदृत्य प्रबुद्धयजुर्वाचयति त्वमग्ने व्रतपा असि देव
आ मर्त्येष्वा त्व यज्ञेष्वीड्य इति " ( बौश्रौ ६ ७ ) इति ॥ याज्यासु ( तैसं १·१·१४ ) "व्याख्यातो
मन्त्र " ॥ व्रतप्रशप्रसक्तिं दर्शयन् प्रथम पाद व्याचष्टे—" अव्रत्यमिव वा एष करोति यो दीक्षित
२५ स्वपिति त्वमग्ने व्रतपा असीत्याहाग्निर्वै देवाना व्रतपति स एवैनं व्रतमालम्भयति " ( तैसं ६ १ ४ ) इति ।
अविकल करोतीत्यर्थं ॥ मनुष्येषु स्थित्व व्रत मनुष्यान्तरेण पालयनीति शङ्का वारयन् द्वितीयपाद
व्याचष्टे—" देव आ मर्त्येष्वेत्याह देवो ह्येष सन् मर्त्येषु " ( तैसं ६·१·४ ) इति । अतो व्रतं समाधातु
शक्नोति ॥ ' अग्निर्मूर्धा दिव ककुत् ' ( तैसं १·५ ११ ) इत्यादियाज्यापुरोनुवाक्यास्विमन्त्रेष्वग्नि स्तूयत
इत्यभिप्रायं तृतीयपादे स्वय दर्शयति—" त्व यज्ञेष्वीड्य इत्याहैतं हि यज्ञेष्वीडते " (तैसं ६·१ ४) इति॥

३० ७ ति–' इत्यस्मात् ' इत्यस्यानन्तरं ' धातो ' ।

११–२१. आ ना–व्याख्यातम् । १२. तं म०–स्थितम् ।

[देवयजनस्वीकारः ]

**विश्वे देवा अभि मामाऽवंवृत्रन् पूषा सन्या सोमो राधसा देवः सविता वसोर्वसुदावा**

विश्वे । देवाः । अभीति । माम् । एति । अववृत्रन् । पूषा । सन्या । सोमः ।
राधसा । देवः । सविता । वसोः । वसुदावेति वसु–दावा ।

सनिहारान् प्रहिणोति—" विश्वे देवाः " इत्येकपदया त्रिष्टुभा यजुरन्तया ॥ [V]विश्वे सर्वेऽपि [V]देवाः [V]माम् [V]अभि [V]आ [V]अववृत्रन् । व्यत्ययेन ( पा ३·१·८५) परस्मैपदम् । आभिमुख्येन मां प्रत्यावर्तन्ताम् । धनान्यादाय [8]अभ्यागच्छन्त्विति यावत् । वृतेर्लुङि " द्युद्भ्यो लुङि " ( पा १·३·९१ ) इति परस्मैपदम् । व्यत्ययेन च्लेश्चङादेशः ( पा ३·१·८५ ) । " बहुलं छन्दसि " (पा ६·४·७५) इत्यडागमः । को देवः केन धनेनेत्याह—[V]पूषा [V]सन्या सनिना सनिमादाय मामागच्छतु । याञ्चालब्धं हिरण्यादिधनं सनिः । याञ्चानन्तरं दीयत इति कृत्वा । षणु दाने । " खनिकषि " ( उ ५८९ ) इत्यादिना कर्मणि इप्रत्ययः । " उदात्तयणः " ( पा ६·१·१७४ ) इति विभक्तेरुदात्तत्वम् । [V]सोमः [V]राधसा आगच्छतु । राधो वासः क्षौमदुकूलादि, राध्यते प्रसाध्यते अनेन देह इति कृत्वा । यश्च [V]देवः [V]सविता सर्वस्य प्रेरकः[9] [V]वसुदावा वसूनां प्रशस्तानां उस्रादिचेतनपदार्थानां दाता । " आतो मनिन् " ( पा ३·२·७४ ) इति वनिपि[10], कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६·२·१३९ ) । सोऽपि [V]वसोः वसुनाऽऽगच्छतु[11] । " सुपां सुपो भवन्ति " ( द्र.पाभा ७·१·३९ ) इति तृतीयैकवचनस्य षष्ठ्येकवचनम् । यद्वा—[12]वसोर्वसुसमुदायात् कांचिदुस्रां[12] हयं छागं वाऽऽदायागच्छतु ।

विश्व इति ॥ बौधायनः—" अथ सनिहारान् प्रहिणोति । स यं मन्यते न मा प्रत्याख्यास्यतीति तं प्रथममभि प्रहिणोति[13] विश्वे देवा अभि मामाऽववृत्रन् पूषा सन्या सोमो राधसा देवः सविता वसोर्वसुदावेत्याहरन्तं दृष्ट्वा जपति नानाहरन्तं रास्वेयत्सोमाऽऽभूयो भर मा पृणन् पूर्त्या वि राधि माऽहमायुषेति " ( बौश्रौ ६·७ ) इति ॥ सनिशब्देन हिरण्यवस्त्रादि देयद्रव्यमुच्यते । सनिहारा द्रव्याणामानेतारः ॥ आपस्तम्बस्तु प्रकारान्तरेण मन्त्रविनियोगविच्छेदावाह—" विश्वे देवा अभि मामाऽववृत्रन्निति प्रबुध्य जपति ।......। पूषा सन्येति सनिहारान् संशास्ति । चन्द्रमसीत्येतैः[14] यथालिङ्गं प्रतिगृह्णाति । देवः सविता वसोर्वसुदावेत्यन्यानि[15] " ( आपश्रौ १०·१८·३; ५–७ ) इति ॥ सर्वे [V]देवाः [16]अभितः पालयितुं[16] [V]माम् आवृत्य तिष्ठन्तु । [V]पूषा [V]सन्या पोषको देवो देयेन हिरण्यद्रव्येण सहाऽऽयातु । [V]सोमः [V]राधसा [17]साधकेन वस्त्रेण सहाऽऽयातु । [V]वसोः वस्त्वन्तरस्य गवादेः प्रेरकः [V]देवः वसुप्रदः सवितायातु ।

८. तं.ति–मागच्छन्त्विति । ९. तं. ति–प्रसविता । १०. तं.ति–इति क्वनिप् । ११. तं.ति–वसुमादाय मामागच्छतु । १२–१२. ति– वसोः सर्वस्य समुदायात् काश्चिदुस्राः ।

१३. तं–प्रथममतिप्रहिणोति । १४. आ.क–' चन्द्रमसीत्येतैः ' इत्यस्यानन्तरम् ' प्रतिमन्त्रम् ' । १५. तं.म२.हा.ना–अन्यानिति । १६–१६. ड.उ.ना.पा.भां.हा–अभिपालयितुम् । १७. तं–साधनेन ।

'रास्वेयत् सोमाऽऽभूयो भर मा पृणन् पूर्त्या वि राधि माऽहमायुषा ।
रास्व । इयत् । सोम । आ । भूयः । भर । मा । पृणन् । पूर्त्या ।
वि । राधि । मा । अहम् । आयुषा ।

" चन्द्रमसि मम भोगाय भव " (तैस १-२ ३ ) इत्यादि ग्रहणमन्त्रानुसारेण "च एतेषां"
५ विशिष्टविषयत्व द्रष्टव्यम । " अप वै दीक्षितात् सुषुपुष " (तैम ६ १-४ ) इत्यादि ब्राह्मणम् ॥

आहरन्त दृष्ट्वा जपति—'रास्व' इति गायत्रीं त्रिपदाम् ॥ तत्र प्रथमे पादे आङ सवर्णदीर्घत्वमकृत्वा छन्दो गणयेत । द्वितीयस्तु "इयादेशेन पूरयितव्य " भर मा पृणन् पूर्तिया " इति । " वि राधि माहमायुषा " इति तृतीय स्वयमेवाष्टाक्षर । केचित्तु यजुरादिका एकपदा गायत्रीयाहु । आह च " यदेतद्यजुर्न ब्रूयात् " ( तैस ६-१ ४ ) इति । अस्मिन् पक्षे ' "भर '
१० इत्यस्य" अपादादित्वात (पा ८ १ १८ ) निघातो (पा ८ १-२८ ) न दुर्लभ । पूर्वत्र तु पादादित्वात व्यत्ययेन (पा ३ १ ८५ ) निघातो वेदितव्य । हे "सोम, "इयत एता यत इद मया लब्धमिति हस्ताभिनयेन दर्शयन्नाह । इद परिमाणमस्य इति मतुपि, " किमिदंभ्या वो घ " (पा ५ २ ४० ) इति वकारस्य च "घादेशे " इद मिमोरीश्की " (पा ६ ३ ९० ) इतीशादेशस्य " यस्य " ( पा ६ ४ १४८ ) इति लोपे प्रत्ययमात्रमवशिष्यते ।
१५ तस्य "सत्यपि पित्त्वे उदात्तनिवृत्तिस्वरेण ( पा ६ १ १६१ ) इयादेश उदात्त । एतावन्मे "रास्व देहि । रा दाने । व्यत्ययेनात्मनेपदम् । सतिशिष्टोऽपि लसार्वधातुकस्वर धातुस्वरेण बाध्यते ( द्र पाभा ६ १ १५८ वा ११ ) व्यत्ययेन च ( पा ३ १ ८५ ) । यद्वा रासृ शब्दे, अनुदात्तेत् । " बहुल छन्दसि " ( पा २ ४ ७३ ) इति शपो लुक् । " तास्यनुदात्तेत् " (पा ६-१ १८६ ) इत्यादिना लसार्वधातुकानुदात्तत्वम । अयमर्थ —हे सोम, यदिद मया लब्धम एतन्मे शब्दय यथा भवेत्

२० हे "सोम, अस्मिन कर्मण्यपेक्षितम् "इयत देहि । सपूर्त्या मा पूरयत 'भूय "आ "भर" "अहम् "आयुषा "मा "वि "राधि वियुक्तो मा भूवम् ॥ ऋजुई। ब्राह्मणेदित्येतत् व्याचष्टे—" अप वै दीक्षितात् सुषुपुष इन्द्रिय देवता क्रामन्ति विश्वे देवा अभि सामाऽऽयुरवनियाहेन्द्रियमेव देवतामि सं नयति " ( तैस ६.१ ४ ) इति ॥ सुषुपुष सुप्तान । "अर्थान्द्रियसामर्थ्येन तदभिमानिदेवताभिश्चाय मन्त्र सयोजयति ॥ विपक्षबाधपुर सरम् ' आ भूयो भर ' इत्यमु मन्त्रभाग व्याचष्टे—" यदेतद्यजुर्न ब्रूयाद्यावत एव पशूनभि दीक्षेत तावन्तोऽस्य
२५ पशव स्यु रास्वेयत्सोमाऽऽभूयो भरेत्याहापरिमितानेव पशूनव रुन्धे " ( तैस ६-१-४ ) इति । दीक्षाकाले विद्यमानान यावत पशूनभिप्राप्य दीक्षेत मन्त्रानुक्तौ तावन्त एव स्यु । मन्त्रोक्तौ तु तत्सामर्थ्यादपरिमिता

१३–१३ त ति–तेषां पदार्थानाम । १४. त ति–इदकादेशेन । १५–१५. त ति–विरार्थये-तस्य । १६. त ति–' घादेशे ' इत्यस्यानन्तर ' घस्य च इयादेशे ' । १७ ति–सत्त्वेपि ।

१८. मर–इर । १९. मर–अप्रक्रान्तेन इन्द्रियसामर्थ्येन ।

चन्द्रमसि मम भोगाय भव वस्त्रमसि मम भोगाय भवोस्राऽसि मम भोगाय भव

चन्द्रम् । असि । मम । भोगाय । भव । वस्त्रम् । असि । मम । भोगाय । भव ।
उस्रा । असि । मम । भोगाय । भव ।

भवति तथैव वक्तुमर्हसीति । यद्वा–रासतिरयं छन्दसि दाने वर्तते । दानार्थेषु नैरुक्तैः पठितत्वात् ( निघण्टु ३-२०-५ ) । किंच इतोऽपि [v]भूयः बहुतरं धनम् [v]आ [v]भर । "हृग्रहोर्भः" ( पा ८-२-३२ वा १ ) इति भत्वम् । "यावत एव पशूनभि दीक्षेत" ( तैसं ६-१-४ ) इति ब्राह्मणम् । किंच इदं चाप्यस्तु–अस्मान् [v]पृणन् धनेन पूरयन्[18] [v]पूर्त्या धनपोषणेन [v]मा [v]वि [v]राधि धनपोषेण[19] वियुक्तो मा कारि । [v]अहं च [v]आयुषा [v]मा विराद्धि वियुक्तो मा कार्षि । पृ पालनपूरणयोः क्रैयादिकः । प्वादित्वात् ह्रस्वः ( पा ७-३-८० ) । शतरि कृते *लसार्वधातुकस्वरस्तु विकरणस्वरेण न बाध्यत इति शतुरेवोदात्तत्वम् । सत्यामपि सतिशिष्टेन बाधायां "श्नाभ्यस्तयोरातः" (पा ६-४-११२) इत्याकारलोपे उदात्तनिवृत्तिस्वरेण (पा ६-१-१६१) शतुरेवोदात्तत्वम् । ततः क्तिनि तु सति "ऋकारल्वादिभ्यः" ( पा ८-२-४४ वा १ ) इति निष्ठावद्भावे प्राप्ते "न ध्याख्यापॄमूर्च्छिमदाम्" ( पा ८-२-५७ ) इति प्रतिषिध्यते । तत्र व्यत्ययेन विभक्तेरुदात्तत्वम् । यद्वा–पूर्यते पुरुषोऽनया इति पूर्तिः । धनस्येयं संज्ञा । "क्तिच्क्तौ च संज्ञायाम्" ( पा ३-३-१७४ ) इति क्तिचि "उदात्तयणो हल्पूर्वात्" ( पा ६-१-१७४ ) इति विभक्तेरुदात्तत्वम् ॥

हिरण्यं प्रतिगृह्णाति—'चन्द्रमसि' इति ॥ [v]चन्द्रं ह्लादनम् [v]असि सर्वेषाम् । चदि आह्लादने । "स्फायितञ्चि" ( उ १७८ ) इत्यादिना रक्प्रत्ययः । ईदृक् त्वं प्राणिनां क्षीरप्रदानेनासि । [v]मम [v]भोगाय दानाद्युपभोगाय [v]भव पर्याप्नुहि ॥

वस्त्रं प्रतिगृह्णाति—'वस्त्रम्' इति ॥ [v]वस्त्रं छादनम् । वस आच्छादने । येन देहः संछाद्यते । समानमन्यत् । "हुयामाश्रुभसिभ्यस्त्रन्" ( द्र. उ ६१७ ) इति त्रन्प्रत्ययः ॥

[20]उस्रां प्रतिगृह्णाति—'उस्रा' इति ॥ [v]उस्रा वासहेतुः त्वं प्राणिनां क्षीरादिप्रदानेन [v]असि । शिष्टं स्पष्टम् । वस निवासे । 'स्फायितञ्चि' ( उ १७८ ) इत्यादिना रक् प्रत्ययः । वच्यादिना ( पा ६-१-१५ ) संप्रसारणम् । बहुलवचनात् "शासिवसिघसीनां च" ( पा ८-३-६० ) इति षत्वाभावः ॥

परिलोके भवन्ति ॥ पञ्चभिर्द्रव्यान्तराण्युपलक्ष्यन्ते—"चन्द्रमसि मम भोगाय भव वस्त्रमसि मम भोगाय भवोस्राऽसि मम भोगाय भव हयोऽसि मम भोगाय भव छागोऽसि मम भोगाय भव मेषोऽसि मम भोगाय भव" इत्येभिर्मन्त्रैर्यथालिङ्गं [20]वस्तु स्वीकर्तव्यम् । चन्द्रं हिरण्यम् । उस्रा गौः ॥ तेन तेन मन्त्रेण तत्तद्द्रव्याभिमानिदेवतास्तुष्यन्तीत्याह—"चन्द्रमसि मम भोगाय भवेत्याह यथादेवतमेवैनाः प्रति गृह्णाति" ( तैसं ६-१-४ ) इति । एना हिरण्यादिरूपा दित्सिता दक्षिणाः ॥

१८. मै–'पूरयन्' इत्यस्यानन्तरं 'पुर [न?] स्वयमपि'। १९. तं. ति–धनपोषणेन । *[ संभावितोऽयं पाठः । लिखितपुस्तकेषु मैसूरमुद्रितपुस्तके च 'विकरणस्वरस्तु लसार्वधातुकस्वरेण' इति पाठः । द्र. पाभा ६-१-१५८ वा ११. ] २०. तं.ति.पं–'उस्राम्' इत्यस्यानन्तरं 'गाम्'।

२०. आ.ना.हा–वसु ।

हयोऽसि मम भोगाय भव (२) छागोऽसि मम भोगाय भव मेषोऽसि मम भोगाय भव
वायवे त्वा वरुणाय त्वा निर्ऋत्यै त्वा रुद्राय त्वा

हय॑ । असि । मम॑ । भोगाय । भव ( २ ) । छाग॑ । असि । मम॑ । भोगाय । भव ।
मेष । असि । मम॑ । भोगाय । भव ।
५ वायवे । त्वा । वरुणाय । त्वा । निर्ऋत्या इति नि —ऋत्यै । त्वा । रुद्राय॑ । त्वा ।

अश्वं प्रतिगृह्णाति—' हय ' इति ॥ हय गतिकान्त्योः । हयिता विक्रमिता [र]असि । पचाद्यच् ( पा ३ १ १३४ ), " वृषादीनां च " ( पा ६ १ २०३ ) इत्याद्युदात्तत्वम् । गतमन्यत् । " निश्वजनादीनां छन्दसि लुग्वा " वक्तव्यम् " ( द्र. पा ६ १ ७६ वा १ ) इति भवेत्यस्य संहितायां " छे च " ( पा ६.१ ७३ ) इति तुगभावः ॥

१० छागं प्रतिगृह्णाति—' छाग ' इति ॥ छदनमगतिर्वा छातेर्वा । छातीति [र]छागः । यद्वा- छादनं छेदनं गच्छति करोति जानातीति वा छागः । " अन्यत्रापि दृश्यते " ( द्र पाभा ३ २.४८ वा ४ ) इति गमेर्डः । पृषोदरादित्वात् ( पा ६ ३ १०९ ) रुपरूपविशेषः । स्वरविशेषश्चानुसरणीयः । संस्कारविशेषानिर्णयात्स्वागृह्यते । ईदृशस्त्वं [र]मम [र]भोगाय [र]भव छेत्ता मा भूः ॥

मेषं प्रतिगृह्णाति—' मेष ' इति ॥ [र]मेषः अभिभविता । मिष स्पर्धायाम् । पचाद्यच् १५ ( पा ३ १ १३४ ) । असीत्यनेन संहितायां " स्वरितो वाऽनुदात्ते पदादौ " ( पा ८ २ ६ ) इति स्वर्यते । शिष्टं स्पष्टम् । सर्वत्र लिङ्गसंख्ययोरविवक्षा ॥

नष्टां मृतां वाऽनुदिशति—' वायवे ' इति ॥ त्वा नष्टां मृतां वा [र]वायवे अनुदिशामीति शेषः । ददामीत्यर्थः । " यद्देवमेता नानुदिशेत् " ( तैसं ६ १ ४ ) इत्यादि ब्राह्मणम् ॥

अप्सु वा पाशे वा मृतामनुदिशति—' वरुणाय त्वा ' इति ॥

२० या स्रवा शीर्यते गर्तं वा पद्यते तामनुदिशति—' निर्ऋत्यै त्वा ' इति ॥ प्रादिसमासः ( द्र. पाभा २ २ १८ वा ४ ), निर्गता ऋतेः निर्ऋतिः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ( पा ६ २ २ )॥

यामहिर्व्याघ्रो वा हन्ति तामनुदिशति—' रुद्राय त्वा ' इति ॥

वायव इति ॥ कल्प—" ता समुदायुत्य [२१]रक्षन्ति । तासां या नश्यति म्रियते वा वायवे त्वेति तामनुदिशति । याऽप्सु वा पाशे वा वरुणाय त्वेति ताम् । या स्रं वा शीर्यते [२२]गर्तं वा[२२] पतति २५ निर्ऋत्यै त्वेति ताम् । [२३]यामहिर्वा व्याघ्रो वा हन्ति[२३] रुद्राय त्वेति ताम् " ( बौश्रौ ६ ८ ) इति ॥ अनुदिशामीति शेषः ॥ विपक्षस्वपक्षयोर्दूषणभूषणे दर्शयति—" वायवे त्वा वरुणाय त्वेति यद्देवमेता नानु- दिशेद् दयादेवत दक्षिणा गमयेदा देवताभ्यो वृश्च्येत यद्देवमेता अनुदिशति यथादेवतमेव दक्षिणा गमयति न देवताभ्य आ वृश्च्यते " ( तैसं ६.१ ४ ) इति ॥

२१. मै–त्युवेति ।

३० २१ आ पा-रक्षति । २२-२२. आ त-गर्ते वा इ उ मा हा-'वा' नास्ति । २३-२३ आ ना हा-अहिर्व्याघ्रो वा हन्ति, तं-अहिर्वा व्याघ्रोऽवहन्ति ।

देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान् मदिन्तमस्तं वो माऽवं क्रमिषमच्छिन्नं तन्तुं पृथिव्या अनु गेषं

देवीः । आपः । अपाम् । नपात् । यः । ऊर्मिः । हविष्यः । इन्द्रियावानितीन्द्रिय—वान् । मदिन्तम इति मदिन्—तमः । तम् । वः । मा । अवेति । क्रमिषम् । अच्छिन्नम् । तन्तुम् । पृथिव्याः । अन्विति । गेषम् । ५

दीक्षितोऽप उत्तरति— 'देवीरापः' इति उपरिष्टाज्ज्योतिषा त्रिष्टुभा अष्टाक्षरचतुर्थ्या ॥ केचिदिमामनुष्टुभं यजुरन्तामाचक्षते, तेषाम् 'अच्छिन्नम्' इत्यादि यजुः। हे [v]देवीः [v]आपः। "विभाषितं विशेषवचने बहुवचनम्" (पा ८·१·७४) इति पूर्वस्य विद्यमानत्वात् 'आपः' इति निहन्यते। हे [v]अपां [v]नपात्, चतुर्थो नप्ता, अपां नप्तः। अग्नेराहुतिः, आहुत्या आदित्यः, आदित्याद्वृष्टिः, अद्भ्य ओषधयः, ओषधीभ्योऽन्नम्, अन्नादग्निः, इत्युभयथाऽपि अपां नपात् अग्निः। न पातयतीति नपात्। क्विपि णिलोपः (पा ३·२·७६, ६·४·५१)। नञ्समासे "नभ्राण्नपात्" (पा ६·३·७५) इति नलोपाभावः। 'आपो' इत्यस्य संहितायां "आपो जुषाणो" (पा ६·१·११८) इत्यादिना प्रकृतिभावः। "सुबामन्त्रिते पराङ्गवत् स्वरे" (पा २·१·२) इति 'अपाम्' इत्यस्य पराङ्गवद्भावः। तेन षष्ठ्यामन्त्रितसमुदायो निहन्यते (पा २·१·२ वा १, पा ८·१·१९)। युष्मदीयः [v]यः [v]ऊर्मिः [v]हविष्यः। हविरर्हतीति "छन्दसि च" (पा ५·१·६७) इति यत्प्रत्ययः। [v]इन्द्रियावान् वीर्यवान्। "मन्त्रे सोमाश्वेन्द्रिय" (पा ६·३·१३१) इति दीर्घः। [v]मदिन्तमः मादयितृतमः। मदी हर्षे। अस्मादन्तर्भावितण्यर्थात् "शमित्यष्टाभ्यो घिनुण्" (पा ३·२·१४१)

देवीरिति ॥ बौधायनः—"अथ [*]यद्यपरियाणा आप उपाधिगच्छन्ति तज्जपति देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तं वो माऽव क्रमिषमच्छिन्नं तन्तुं पृथिव्या अनु गेषमिति स वा गाहते स वा तरति" (बौश्रौ ६·९) इति ॥ अपरियाणा गमनविरोधिन्यो मार्गप्रतिरोधिकाः[24] ॥ आपस्तम्बः— २० "[*]प्रयाणे देवीराप इत्यपोऽवगाहते। अच्छिन्नं तन्तुं पृथिव्या अनुगेषमिति हस्तेन लोष्टं विमृद्नात्यापारात्[25]" (आपश्रौ १०·१९·८–१०) इति ॥ यदा केनाऽपि निमित्तेन देवयजनादन्यत्र दीक्षेत तदानीं पृथगरणीष्वग्नीन् समारोप्य देवयजनं गच्छन् मध्ये प्राप्तायां नद्यामवगाह्योत्तरेत्। 'अपां नपात्' इत्यग्निसंबोधनम्। हे देव्यः [v]आपः, युष्माकं [v]यः [v]ऊर्मिः तं पादेन [v]मा [v]अव [v]क्रमिषम्। कीदृश ऊर्मिः ? प्रोक्षाद्युत्पादनेन हविर्योग्यः। [26]स्वकीयजलपानेनेन्द्रियशक्तिकारी तृषां [27]निवर्तयन् अतिहर्षप्रदः। भुवि लोष्टरूपं २५ [v]पृथिव्याः [v]अच्छिन्नं [v]तन्तुं सेतुम् [v]अनु[28] प्राप्य तस्योपरि गच्छामि ॥ हविष्यशब्दाभिप्रायमाह—"देवीरापो अपां नपादित्याह यद्वो मेध्यं यज्ञियꣳ सदेवं तद्वो माऽव क्रमिषमिति वावैतदाह" (तैसं ६·१·४) इति। इति वाव इत्येव ॥ तन्तुशब्दाभिप्रायमाह—"अच्छिन्नं तन्तुं पृथिव्या अनु गेषमित्याह सेतुमेव कृत्वाऽत्येति" (तैसं ६·१·४) इति ॥

[*बौश्रौसूत्रे "यद्यपर्याणा अप उपाधिगच्छति"] २४. म.२– °प्रतिबन्धिकाः। [*आपश्रौसूत्रे 'भद्रादभि श्रेय इति प्रयाणः' इति सूत्रच्छेदः।] २५. इ.ज.ना.पा.भां.हा–मृद्नात्या°। २६. इ.उ.ना.पा.भां.हा– स्वकार्यजल°। २७. इ.उ.पा–निर्वर्तयन्। २८. आ.ना.पा–'अनु' नास्ति। ३०

भ्द्रादुभि श्रेयुः प्रेहि बृहस्पतिः पुरएता ते अस्त्व-
भ्द्रात् । अभीति । श्रेयः । प्रेति । इहि । बृहस्पतिः । पुरएतेति पुरः-एता । ते । अस्तु ।

इति विनुण् । घटादित्वात् " मितां ह्रस्वः " ( ६ ४ ९२ ) इति ह्रस्वत्वम् । " नाद् घस्य " ( पा ८ २ १७ ) इति तमपो नुडागम । ^व^त तादृश ^व^व युष्मत्सम्बन्धिनमूर्मिं ^व^मा ^व^अव ५ ^व^क्रमिष पद्भ्यामवक्रम्य मा गाम् । " नेटि " ( पा ७ २ ४ ) इति वृद्धिप्रतिषेध । ननु क्रियमाणमेव कथम् अपह्रियते ? तत्राह—युष्मत्प्रसादात् अहम् ^व^अच्छिन्न ^व^तन्तु यज्ञाख्यम् ^व^अनु ^व^गेषम् अनुगतो भूयासमविघ्नेन प्राप्यासम् । को हि हविष्यत्वादिगुणविशिष्ट युष्मदीयमूर्मिं पृथाक्रामेत् ? तस्माद्यज्ञ एवाय मया युष्मदवक्रमणरूपोऽनुष्ठीयत इति भाव । गा स्तुतौ छन्दसि जौहोत्यादिक । तस्माद्धातूनामनेकार्थत्वात् गतिकर्मण आशिषि लिङि " लिङ्याशिष्यङ् " १० ( पा ३ १ ८६ ), आतो लोप ( पा ६ ४ ६४ ), यासुडादि ( पा ३.४.१०३ ) । यद्वा— " इणानुविधि छन्दसि " (पामा १.१.६ वा १ ) इति इण एव चाशिषि लिङि गादेश । कस्यायमच्छिन्नतन्तुत्वेन यज्ञो रूप्यते तत्राह—^व^पृथिव्या अयमच्छिन्नस्तन्तु, पृथिव्यनयनानुस्यूतावयवत्वात् । ' अन्यत्र हि दीक्षन्ते अन्यत्र देवान् यजन्ते अन्यत्रावभृथमवयन्ति ' इति पृथिव्या तायमानत्वात् ^२२^तन्तुरेवाय पृथिव्या । " उदात्तयण " ( पा ६ १.१७४ ) इति पृथिव्या. १५ परस्या विभक्तेरुदात्तत्वम् । तस्माद्यज्ञरूपत्वात् युष्माभिर्युष्मदवक्रमण सोढव्यमिति । यद्वा— सेतुत्वेनाय यज्ञो रूप्यते । स हि पृथिव्या उभयतीरस्पर्शित्वात् अच्छिन्नस्तन्तु इति वक्तुं शक्यते । ^२३^तमेवाहमनुगच्छामि । सेतुना हि गच्छन्नपोऽतिक्रामन्नप्यपो नातिक्रामति । तस्माद्यज्ञाख्येन सेतुना युष्मानतिक्रमतो मे नापराध इति । " सेतुमेव कृत्वाऽत्येति " ( तैस ६ १ ४ ) इत्यादि ब्राह्मणम् ॥

२० प्रयाणे कर्तव्ये प्रयाति—' भद्रात् ' इति विराजा गायत्र्या, वस्वेकपादत्वात् ॥ अय च मन्त्र सामर्थ्यात् नदीतरणमन्त्रात् पूर्वो द्रष्टव्य ॥ ^व^भद्रात् प्रशस्तादस्मात् स्थानाद् ^व^श्रेय प्रशस्यतर स्थान योगक्षेमोपपन्नम् ^व^अभि ^व^प्रेहि आभिमुख्येन गच्छ । अन्तरात्मानमाह, समारूढ वाऽग्निम् । किंच ^व^बृहस्पति । " तद्बृहतो करपत्यो " ( द्र.पामा ६ १ १५७ ) इति सुट् । वनस्पत्यादित्वात् पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् (पा ६.२ १४० )। ^व^पुरएता अग्रगामी ^व^ते तव २५ ^व^अस्तु । प्रार्थनकाले लोट् । " पुरोऽव्ययम् " ( पा १ ४.६७ ) इति गतित्वात् " गतिकारकोपपदात् कृत् " ( पा ६ २ १३९ ) इति कृदुत्तरपदप्रकृतिस्वरत्वम् । " ब्रह्म वै देवाना बृहस्पति तमेवान्वारभते " ( तैस ३.१.१ ) इत्यादि ब्राह्मणम् ॥

२२. तं ति—तन्तुरिवायम् । २३. तं ति—ततोऽहमनु° ।

**– अ॒थेम॑व॒ स्य ( ३ ) वर॒ आ पृ॑थि॒व्या आ॒रे शत्रू॑न् कृणु॒हि सर्व॑वीर॒**

अथ॑ । ईम् । अ॒वेति॑ । स्य ( ३ ) । वरे॑ । एति॑ । पृ॒थि॒व्याः ।
आ॒रे । शत्रू॑न् । कृ॒णु॒हि॒ । सर्व॑वीर॒ इति॒ सर्व॑–वी॒रः॒ ।

देवयजनादर्वाक् यत्र वत्स्यन् भवति तदवस्यति—' अथ ' इति त्रिष्टुभैकपदया ॥ अत्रापि स्वात्मानमाह । [V]अथ इत्यानन्तर्ये । [V]ईम् इति खल्वर्थे । [V]आ इत्युपसर्गस्य श्रुतेः योग्यं क्रियापद-मध्याह्रियते । [V]पृथिव्याः पृथिवीमात्रात् स्थानान्तरादागतस्त्वं यदि देवयजनादर्वाक् वस्तुमिच्छसि, अथेदानीं खलु [V]वरे उत्कृष्टेऽस्मिन् प्रदेशे [V]अव [V]स्य अवसितो भव । यद्वा–पृथिव्या उत्कृष्टेऽस्मिन् प्रदेशे आगतस्त्वमिदानीम् अत्रैवाव स्य ॥

आदित्यमुद्यन्तमुपतिष्ठते—' आरे ' इति त्रिष्टुभैकपदया ॥ सर्वेऽप्यात्मीयाः पुरुषा वीरा यस्य तादृशस्त्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ( पा ६.२.१ ) । सर्वानस्मदीयान् [V]शत्रून् [V]आरे दूरे [V]कृणुहि स्थापय । कृवि हिंसाकरणयोः । " धिन्विकृण्व्योर च " ( पा ३.१.८० ) इत्युप्रत्ययः । " उतश्च प्रत्ययाच्छन्दोवावचनम् " ( पा ६.४.१०६ वा १ ) इति हेर्लुगभावः ॥

यत्र यक्ष्यमाणो भवति तदभिप्रेतं देवयजनमधितिष्ठति—' एदम् ' इति त्रिष्टुभा चतुष्पदया ॥ देवा इज्यन्तेऽस्मिन्निति [V]देवयजनम् । अधिकरणे ल्युट् ( पा ३.३.११७ ) । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६.२.१३९ ) । ईदृशम [V]इदं स्थानम् [V]अगन्म अगन्महि आगता वयम् । गमेर्लेङि* " बहुलं छन्दसि " ( पा २.४.७३ ) इति शपो लुक् । यद्वा–लुङि

**भद्रादिति** ॥ बौधायनः—" बृहस्पतिवत्स्यर्षो प्रयाति भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्त्विति । अथ यत्र वत्स्यन् भवति तदवस्यत्यथेमव स्य वर आ पृथिव्या इत्यथाऽऽदित्यमुद्यन्तमुपतिष्ठत आरे शत्रून् कृणुहि सर्ववीर इति " ( बौश्रौ ६.९ ) इति । आपस्तम्बस्तु त्रीन् मन्त्रानेकीकृत्य विनियुङ्क्ते—" पृथगरणीष्वग्नीन् समारोप्य रथेन प्रयाति । [२९]तदभावे रथाङ्गमादाय । भद्रादभि श्रेय इति " ( आपश्रौ १०.१९.६–८ ) इति ॥ अत्रार्थक्रमेण ' देवीरापः ' इत्यस्मात् पूर्वमेवायं मन्त्रोऽवगन्तव्यः । हे रथ, [V]भद्रात् प्रशस्तादस्मन्नित्याग्निहोत्रस्थानादतिप्रशस्तं सौमिकं देवयजनमभिप्रयाहि । [V]बृहस्पतिः तव पुरतो गन्ता भवतु । [V]अथ प्रयाणादूर्ध्वं [V]पृथिव्याः संबन्धिनी [V]आ समन्तात् [V]वरे श्रेष्ठे स्थाने [V]ईम् इमां गतिम् [V]अव [V]स्य समापय । हे रथाभिमानिन्नादित्य, [V]शत्रून् राक्षसादीन् [V]आरे देवयजनाद्दूरे कुरु ॥

**एदमिति** ॥ [३०]कल्पः—" अथ यत्र यक्ष्यमाणो भवति तदवस्यत्येदमगन्म देवयजनं पृथिव्या इत्यन्तादनुवाकस्य " ( बौश्रौ ६.९ ) इति ॥ स च मन्त्र [३१]एवमाम्नायते—" एदमगन्म देवयजनं पृथिव्या विश्वे देवा यदजुषन्त पूर्व ऋक्सामाभ्यां यजुषा सन्तरन्तो रायस्पोषेण समिषा मदेम " इति ॥ [V]पृथिव्याः संबन्धि यत् [V]देवयजनं तद् [V]इदम्[३२]– [V]आ [V]अगन्म–[३२] वयं प्राप्ताः । [V]यत् देवयजनं

*[ संभावितोऽयं पाठः । लिखितपुस्तकेषु मैसूरमुद्रितपुस्तके तु ' लुङि ' इत्युपलभ्यते । अत्र विषये ' म्वोश्च ' ( पा ८.२.६५ ) इति सूत्रे काशिका द्रष्टव्या । ]

२९. आ.ना.भां.हा–एतदभावे । ३०. इ.उ.तं.पा.भां.मर–' कल्पः ' नास्ति । ३१. तं.मर–एवमाम्नातः । ३२–३२. तं.मर–आगत्य ।

एदम॑गन्म देव॒यज॑नं पृथि॒व्या विश्वे॑ दे॒वा यदजु॑षन्त॒ पूर्वे॑
ऋक्सा॒माभ्यां॒ यजु॑षा स॒न्तर॑न्तो रा॒यस्पोषे॑ण॒ समि॒षा म॑देम ॥
[ त्व मॆव स्य पञ्चविंशश्च । ]

एति॑ । इ॒दम् । अ॒ग॒न्म॒ । दे॒व॒यज॑न॒मिति॑ देव-यज॑नम् । पृ॒थि॒व्या । विश्वे॑ । दे॒वाः ।
यत् । अजु॑षन्त । पूर्वे॑ ।
ऋ॒क्सा॒माभ्या॒मित्यृ॑क्साम-भ्याम् । यजु॑षा । स॒न्तर॑न्त॒ इति॑ स-तर॑न्तः ।
रा॒यः । पोषे॑ण । समिति॑ । इ॒षा । म॒दे॒म ॥
[ मैसं १ २ ३, काम २ ४; कपिस १ १६, वास ४ ११–१६. ]

"मन्त्रे घस" ( पा २.४.८० ) इत्यादिना लेर्लुक् । "म्वोश्च" ( पा ८.२ ६५ ) इति मकारस्य नकार । कीदृशम् ? पृथिव्या. सबन्धि । यद्वा–पृथिवीमात्रात् प्रदेशान्तरात् इद देवयजनमागता । "उदात्तयण." ( पा ६ १.१७४ ) इति विभक्तेरुदात्तत्वम् । पुनश्च विशेष्यते—विश्वे पूर्वे अस्मदीया. पित्रादय देवा. भूमिदेवा. यत् अजुषन्त [२४]यादृशमसेवन्त । आद्युदात्तत्वम् ( पा ६ ४ ७१ ) । अत्र चागता वय ऋक्सामाभ्या यजुषा सतरन्त सम्यक् याग निर्वर्तयन्त । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६ २.१३९ ) । अचतुरादिसूत्रेण ( पा ५ ४ ७७ ) ऋक्सामशब्दोऽच्प्रत्ययान्तो निपातित । राय धनस्य पोषेण पुष्टया इषा अन्नेन च सम्यक् मदेम हृष्टा भवेम । मदी हर्षग्लपनयो इति भौवादिक उदात्तेत् । "षष्ठया पतिपुत्र" ( पा ८ ३ ५३ ) इत्यादिना पोषे विसर्जनीयस्य सत्वम् । "सावेकाच" ( पा ६ १ १६८ ) इतीषं परस्यास्तृतीयाया उदात्तत्वम् । "ऋक्सामाभ्या ह्येष यजुषा सतरति, यो यजते" ( तैस ३ १ १ ) इति ब्राह्मणम् ॥

॥ इति द्वितीये तृतीयोऽनुवाक ॥

पूर्वे सर्वे देवा अजुषन्त असेवन्त तद्वयमागत्य वेदत्रयगतैर्मन्त्रै सोमयागं सतरन्त सम्यक्पार नयन्त रायस्पोषेण[३३] धनसमृद्धया सम् इषा समीचीनेनान्नेन च मदेम[३४] हृष्यास्म ॥ 'भद्रादभि' इत्यादि-मन्त्रार्थं स्पष्ट इत्यभिप्रेत्य ब्राह्मणेनात्र व्याख्यानमुपेक्षितम् । औपानुवाक्यकाण्डे तु ( तैस ३.१.१ ) दीक्षितनियमप्रसङ्गाद्व्याख्यानं कृतम् । तत्र बृहस्पतेरुपयोगमाह—"अग्निर्वै दीक्षितस्य देवता सोऽस्मादेतर्हि तिर इव यर्हि याति तमीश्वरꣳ रक्षाꣳसि हन्तोर्भद्रादभि श्रेय. प्रेहि बृहस्पति पुरएता ते अस्त्वित्याह ब्रह्म वै देवाना बृहस्पतिस्तमेवान्वारभते स एनꣳ सं पारयति" ( तैसं ३.१ १ ) इति । यदा दीक्षितोऽग्नि-स्थानात् प्रयाति तदाग्निस्तिरोहित इव नैन पालयति । ततो रक्षांस्येनं मार्गे हन्तुमीश्वराणि भवन्ति । तत्र बृहस्पतौ पुरतो गच्छति सत्यनुगच्छन्तमेन रक्षोबाधपरिहारेण[३५] बृहस्पति सम्यक् पार नयति ॥ उत्तरमन्त्रस्य चतुर्षु भागेषु प्रतिपाद्योऽर्थ प्रसिद्ध इत्याह—"एदमगन्म देवयजनं पृथिव्या इत्याह देवयजनꣳ ह्येष पृथिव्या

२४ त ति–सेवन्ते ।

३३ इ उ,न ना पाभां मर हा–' रायस्पोषेण ' नास्ति । ३४. [illegible] ना मर हा–' मदेम ' नास्ति ।
३५. आ तं मर–' 'परिहारेण ' इत्यस्यानन्तर ' स ' ।

आगच्छति यो यजते विश्वे देवा यदजुषन्त पूर्व इत्याह विश्वे ह्येतद्देवा जोषयन्ते यद्ब्राह्मणा ऋक्सामाभ्यां यजुषा सन्तरन्त इत्याहर्क्सामाभ्यां ह्येष यजुषा संतरति यो यजते रायस्पोषेण समिषा मदेमेत्याहाऽऽशिषमेवैतामा शास्ते" ( तैसं ३·१·१ ) इति । अध्वर्युप्रभृतयो ब्राह्मणा यद्देवयजनमिदानीमधितिष्ठन्ति तद्देवाः स्वयं सेवमाना एतान् सेवन्ते । यो यजते स एष संतरतीत्यन्वयः ॥

अत्र विनियोगसंग्रहः—

देवीं हस्तौ शोधयित्वा ये द्वे व्रतपयः पिबेत् ।
अग्ने स्वप्स्यन्निमाह त्वं प्रबुद्धो जपेत्तया ॥ १ ॥
विश्व इत्यपि पूयेति सनिहारानुशासनम् ।
देवो वसुग्रहश्चन्द्रं षड्भिस्तत्र प्रतिग्रहः ॥ २ ॥
चाथ नद्यामप्सु कृतां सत्राभूम्यां च गां स्पृशेत् ।
देवीरापो विगाह्याच्छि[36] लोष्टमप्सु विमर्दयेत् ॥ ३ ॥
भद्रादयेन यात्येदं[37]यागभूमिव्यवस्थितिः ।
अनुवाके तृतीयेऽस्मिन्नुदिता एकविंशतिः ॥ ४ ॥" इति ॥

अथ मीमांसा ॥ एकादशाध्यायस्य चतुर्थपादे चिन्तितम्—

"स्वप्नादिमन्त्रा आवर्त्या नो वाऽऽद्योऽस्त्वन्तरायतः ।
कृत्स्नोद्देशप्रवृत्तत्वान्निमित्तमेदतः सकृत् ॥" ( जैन्या ११·४·२४ ) इति ।

दीक्षितस्य स्वप्ननद्युत्तरणवृष्टिक्लेदनामेध्यदर्शननिमित्तकालत्तन्मन्त्रजपाः पठिताः । "त्वमग्ने व्रतपा असि" ( तैसं १·२·३ ) इत्यादिकः स्वप्नमन्त्रः । "देवीरापो अपां नपात्" ( तैसं १·२·३ ) इत्यादिर्नदीतरणमन्त्रः । "उन्दतीर्बलं धत्त" ( तैसं ३·१·१ ) इत्यादिर्वृष्टिक्लेदनमन्त्रः । "अबद्धं मनः" ( तैसं ३·१·१ ) इत्यादिरमेध्यदर्शनमन्त्रः । यदा निद्रा मध्ये प्रबोधैरल्पैर्व्यवधीयेत, नदी च [38]बहुभःस्रोतोयुक्ता द्वीपैः, वृष्टिश्च विच्छेदैः[39], अमेध्यानि च देशैस्तदा तैरन्तरायैर्निमित्तेषु [40]भिद्यमानेषु [41]नैमित्तिका मन्त्राः आवर्तनीया इति प्राप्ते ब्रूमः—रात्रिगतां कृत्स्नां निद्रामुद्दिश्य मन्त्राभिधानान्निमित्तमेकम् । [42]एवमन्यत्रापि योज्यम् । तस्मान्नास्त्यावृत्तिः ।

तत्रैवान्यच्चिन्तितम्—

"प्रयाणे प्रत्यहं मन्त्रो भिन्नो नो वाऽत्र विश्रमैः ।
प्रयाणमेदान्निन्नो नो गत्यैक्यादा निवृत्तितः ॥" ( जैन्या ११·४·२५ ) इति ।

"भद्रादभि श्रेयः" ( तैसं १·२·३ ) इत्यादिः प्रयाणमन्त्रः । तत्र दीक्षितस्य निर्गमनमारभ्य पुनः प्रवेशपर्यन्तं विश्रमव्यवधानेऽपि प्रयोजनैक्यादेकमेव प्रयाणम् । ततो न मन्त्रावृत्तिः ॥

अथ छन्दः ॥ 'देवीं धियम्' इति 'अग्ने त्वम्' इति चैते अनुष्टुभौ । 'त्वमग्ने' इति गायत्री । 'विश्वेदेवाः' इत्येकपदा[43] । 'एदमगन्म' इति त्रिष्टुप् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

३६. इ—विगाह्याप्सु । ३७. तं—यागभूमिं व्यवस्यति ; मर—यागभूमिं व्यवस्थितिः, क—यागभूमिं व्यवस्थितः । ३८. तं.मर—बहु° । ३९. [ जैमिनीयन्यायमालाविस्तरमनुसृत्य संभावितोऽयं पाठः ], इ.उ.क.तं.ना.पा.भां.मर.हा—देशैः । ४०. [ जैमिनीयन्यायमालाविस्तरमनुसृत्य संभावितोऽयं पाठः ], इ.क.तं.ना.पा.मर.हा—विद्यमानेषु । ४१. इ.उ.ना.पा.भां.हा—नैमित्तिक° । ४२. तं.मर—एवमितरत्रापि । ४३. तं.मर—इत्येकपात् त्रिष्टुप् ।

तृतीये देवयजन स्वीकृतम्। अथ तस्मिन्नेव देवयजने सोमयागोपयोगिसोमं क्रेतुं सोमक्रयणी-विषयं होमादिकं चतुर्थेऽभिधीयते। 'इय ते शुक्र' (तैम १ २·४) इत्यादयस्तन्मन्त्राः। प्रायणीया-सम्बन्धि ध्रौवाज्यम्। तेनाऽऽज्येन सोमक्रयणीमीक्षमाणो जुहुयात्। ततो मन्त्रव्याख्यानात् पूर्वं प्रायणीया सोमक्रयणी चानुवाकद्वयेन ब्राह्मणेऽभिधीयते।

तत्र प्रायणीयां प्रस्तौति—"देवा वै देवयजनमध्यवसाय दिशो न प्राजानन् तेऽन्योऽन्यमुपाधावन् त्वया प्र जानाम त्वयेति तेऽदित्याः समध्रियन्त त्वया प्र जानामेति साऽब्रवीत् वरं वृणै मत्प्रायणा एव वो यज्ञा मदुदयना असन्निति तस्मादादित्यः प्रायणीयो यज्ञानामादित्य उदयनीयः" (तैस ६·१ ५) इति। देवयजनार्थमयं प्रदेशः समीचीनो न विकल्प इति निश्चेतु परिभ्रम्य स [1]प्रदेशं निश्चित्य परिभ्रमणेन दिग्भ्रमं प्राप्य प्राचीनवंशादावसमर्थाः सन्तः। ततस्त्वमेव 'दिशं ज्ञापय' इत्येव[2] परस्परं वदन्तो दिग्बोधकत्वशक्तिमदित्या निश्चितवन्तः। सा चादितिः सोमयागारम्भ-समाप्त्योरहमेव देवता भूयासमिति वरमयाचत। प्रयन्ति प्रारभन्तेऽनेन देवतारूपेणेति प्रायणम्। उद्यन्ति उत्तिष्ठन्ति समापयन्ति अनेनेति उदयनम्। अहमेव [4]"प्रायणमारम्भदेवता येषां" यज्ञानां ते मत्प्रायणाः। [5]"अहमेवोदयनं समाप्तिदेवता येषां यज्ञानां ते मदुदयनाः"[5]। तस्मादेव वृतवरादर्दितिदेवताकः प्रायणीययाग-कर्तव्यः। तत्प्रसङ्गादुदयनयागोऽपि विधीयते। अदितिरत्र प्रधानदेवता चतस्रस्त्वङ्गदेवता इत्यभिप्रेत्य संख्यां विधत्ते—"पञ्च देवता यजति पञ्च दिशो दिशां प्रज्ञात्या अथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे" (तैस ६ १ ५) इति॥ दिग्विशेषेषु देवताविशेषान् [6]विधातुं प्रस्तौति—"पथ्यां स्वस्ति-मयजन् प्राचीमेव तया दिशं प्राजानन्नग्निना दक्षिणां सोमेन प्रतीचीं सवित्रोदीचीमदित्योर्ध्वाम्" (तैसं ६ १·५) इति। स्वस्तिसंज्ञा देवता, पथ्या पथि साधुः॥ दिग्विशेषबोधनरूपे मार्गे कुशलाम् विधत्ते—"पथ्यां स्वस्तिं यजति प्राचीमेव तया दिशं प्रजानाति पथ्यां स्वस्तिमिष्ट्वाऽग्नीषोमौ यजति चक्षुषी वा एते यज्ञस्य यदग्नीषोमौ ताभ्यामेवानु पश्यत्यग्नीषोमाविष्ट्वा सवितारं यजति सवितृप्रसूत एवानु पश्यति सवितारमिष्ट्वाऽदितिं यजतीयं वा अदितिरस्यामेव प्रतिष्ठायानु पश्यति" (तैसं ६·१ ५) इति। [7]अर्थानुसारेण होमविशेषा दिग्विशेषेषूह्याः। चक्षुर्द्वयरूपेण प्रशंसितुमग्नीषोमयोः सह निर्देशः। होमस्तु तयोः क्रमभावी, दिग्भेदात् याज्यानुवाक्याभेदाच्च। तत 'अग्निमिष्ट्वा सोमं यजति' इत्यपि वाक्यं द्रष्टव्यम्। तयोश्चक्षुष्ट्वं दार्शिनाज्यब्राह्मणे (तैस २ ६ २) प्रपञ्चितम्। अत्रादितेश्चरुहोमः। "आदित्य प्रायणीय पयसि चरुः" (द्र. मैस ३·७·१,२) इति शाखान्तरे समाम्नानात्। आज्येन तु देवतान्तराणाम्। तथा च सूत्रम्—"चतुर आज्यभागान् प्रतिदिशं यजति" (आपश्रौ १० २१·११) इति॥ ऋगनुवचनमध्वर्योर्विधत्ते—"अदितिमिष्ट्वा मारुतीमृचमन्वाह मरुतो वै देवानां विशो देवविशं खलु वै कल्पमानं मनुष्यविशमनु कल्पते यन्मारुतीमृचमन्वाह विशां क्लृप्त्यै" (तैस ६·१·५) इति। "मरुतो यद्ध व" (तैम १ ५ ११) इत्येषा मारुती। तथा च सूत्रम्—"मारुतीमृचमन्वाह मरुतो यद्ध वो दिव इति" (बौश्रौ ६·११) इति। एकोनपञ्चाशत्संख्याकाः सप्तगणरूपा मरुतो मनुष्यवैश्य-

१ इ उ.ना पा मा हा—देशम्। २. इ उ.ना पा मा हा—एवम्। ३. आ—दिग्बोधकशक्ति॰, तं म २—दिग्विबोधकत्वशक्ति॰ क—दिग्विलोकनशक्ति॰ ४–४ इ उ.पा मा—प्रायणमेषाम्। ५–५ इ.उ. तं पा मा म २—'अहमेवोदयनं मदुदयनाः' नास्ति। ६ इ उ ना पा.मा हा.—'विधातुम्' नास्ति। ७ तं. म २—अर्थवादानुसारेण।

चद्देवानां धनसंपादकाः प्रजाः । अनेन [8]मन्त्रानुवचनेन देवविशां समूहः स्वव्यापारे क्लृप्तो भवति । तं च कल्पमानमनुसृत्य मनुष्यप्रजासंघः कल्पते । अतो मन्त्रानुवचनं प्रजानां क्लृप्त्यै भवति ॥ पूर्वपक्षत्वेन चोदकप्राप्तं किंचिदङ्गमपवदति—" ब्रह्मवादिनो वदन्ति प्रयाजवदननूयाजं प्रायणीयं कार्यमनूयाजवदप्रयाजमुदयनीयमितीमे वै प्रयाजा अमी अनूयाजाः सैव सा यज्ञस्य संततिः " ( तैसं ६·१·५ ) इति । प्रमुखे यष्टव्याः समिदादिनामकाः पञ्च प्रयाजा अनु पश्चात् समाप्तौ यष्टव्या बर्हिरादिनामकास्त्रयोऽनूयाजाः । तदुभयं प्रायणीयोदयनीययोरिष्टयोरतिदेशतः प्राप्तम् । यत्र प्रायणीयेष्टयामनूयाजानुष्ठाने यागः समाप्येत, तद्वदुदयनीयायां प्रयाजानुष्ठाने यागान्तरं प्रारभ्येत । तथा [9]सति सोमयागो मध्ये विच्छिद्येत । उभयवर्जने तु सोमयागस्य प्रारम्भरूपायां प्रायणीयेष्टाविदानीमनुष्ठीयमाना इमे प्रत्यक्षाः प्रयाजाः समाप्तिरूपायामुदयनीयेष्टावनुष्ठीयमाना अमी परोक्षा अनूयाजाः । तथा सति प्रयाजानूयाजद्वयेन दर्शयागस्य या संततिः सैवास्य सोमयागस्य मध्ये विच्छेदराहित्यलक्षणा सा संततिः संपद्यते ॥ पूर्वपक्षं दूषयति—" तत्तथा न कार्यमात्मा वै प्रयाजाः प्रजाऽनूयाजा यत् प्रयाजानन्तरियादात्मानमन्तरियाद्यदनूयाजानन्तरियात् प्रजामन्तरियाद्यतः खलु वै यज्ञस्य विततस्य न क्रियते तदनु यज्ञः परा भवति यज्ञं पराभवन्तं यजमानोऽनु परा भवति " ( तैसं ६·१·५ ) इति । आत्मनो वा पुत्रादेर्वा नान्तरायः सोढुं शक्यते यतो द्वयं तदङ्गमित्यर्थः ॥ सिद्धान्तमाह—" प्रयाजवदेवानूयाजवत्प्रायणीयं कार्यं प्रयाजवदनूयाजवदुदयनीयं नाऽऽत्मानमन्तरेति न प्रजां न यज्ञः पराभवति न यजमानः " ( तैसं ६·१·५ ) इति । विच्छेदपरिहाराय विधत्ते—" प्रायणीयस्य निष्कास उदयनीयमभि निर्वपति सैव सा यज्ञस्य संततिः " ( तैसं ६·१·५ ) इति । प्रायणीययागसंबन्धि चरुपात्रमप्रक्षाल्य निष्कासे पात्रलिप्तेऽन्ने निर्वापात्तलेपस्य या संततिः सैव सोमयागस्याविच्छेदरूपा [10]सा संततिर्भवति ॥ प्रायणीयोदयनीययोर्दैवतैक्येन याज्याया अप्येकत्वप्राप्तौ व्यत्यासं विधत्ते—" याः प्रायणीयस्य याज्या यत् ता उदयनीयस्य याज्याः कुर्यात् पराङमुं लोकमा रोहेत् प्रमायुकः स्याद्याः प्रायणीयस्य पुरोनुवाक्यास्ता उदयनीयस्य याज्याः करोत्यस्मिन्नेव लोके प्रति तिष्ठति " ( तैसं ६·१·५ ) इति । " स्वस्तिरिद्धि प्रपथे श्रेष्ठा " ( ऋ १०·६३·१६ ब्र. मैत्रा १·९ ) इत्याद्याः प्रायणीयस्य याज्याः । उदयनीयस्यापि तथैवेत्येवं केचिदाहुः । तथा सति प्रतिनिवृत्तेरभावात् यजमानोऽस्माल्लोकात् पराङ्मुखः स्वर्गमारोढुं सहसा म्रियेत । तस्मात् तेषां पक्षो न युक्तः । बाऽस्तु " स्वस्ति नः पथ्या(सु) " ( ऋ १०·६३·१५ ब्र. मैत्रा १·९ ) इत्याद्याः प्रायणीयस्य पुरोनुवाक्यास्तासां याज्यात्वे सति ' स्वस्तिरिद्धि ' इत्यादीनां पूर्वोक्तानां पुरोनुवाक्यात्वाय प्रतिनिवृत्तेर्यजमानोऽप्यस्मिँल्लोके प्रतितिष्ठत्येव ॥

[11]इत्थं प्रायणीयेष्टिमुक्त्वा सोमक्रयणीं वक्तुं सोमाहरणं सोपाख्यानमाह—" कद्रूश्च वै सुपर्णी चाऽऽत्मरूपयोरस्पर्धेतां सा कद्रूः सुपर्णीमजयत् साऽब्रवीत् तृतीयस्यामितो दिवि सोमस्तमा हर तेनात्मानं निष्क्रीणीष्वेति " ( तैसं ६·१·६ ) इति । कद्रूः सुपर्णी चोभे सपत्न्यौ परस्परं शालीनत्वमभ्युपेत्य ममैव सौन्दर्यं ममैवेत्यस्पर्धेताम् । तत्र अभ्यस्याः कद्रुवा जयमूचिरे । सा च कद्रूः [12]सुपर्णी दासीत्वेन परिगृह्य तस्मोचनोपायं स्वयमेवोपदिदेश । इतोऽस्माल्लोकादारभ्य गणनायां तृतीया द्यौः स्वर्गलोकस्तस्मिन् सोमो वर्तते । महर्जनस्तपः सत्यमित्येतेऽपि लोका द्युशब्दाभिधेयास्तस्मादितस्तृतीयस्यामिति विशेष्यते ।

८. इ.ट—मन्त्रेणानुवचनेन; तं—मन्त्रेऽनुवचनेन । ९. इ.ठ.पा.मां.ना.हा—' सति ' नास्ति । १०. तं— ' सा ' नास्ति । ११. मर—अथ । १२. आ. ना. हा—सपत्नीम् ।

सोम आहृत्य दत्ते सति त्वा मुञ्चामीति ॥ सोमाहरणं संभावयितुं श्रुतिराह—“ इयं वै कद्रूरसौ सुपर्णी छन्दांसि सौपर्णेयाः ” ( तैसं ६ १·६ ) इति । भूलोकरूपत्वात् कद्रूः स्वयमाहर्तुं न शक्नोति । सुपर्णी तु द्युलोकरूपत्वात् उत्पतनसमर्थानां गायत्र्यादिरूपाणामपत्यानां सद्भावाच्च शक्नोति ॥ अथ सा सुपर्णी स्वपुत्राणां गायत्र्यादीनामग्रे स्ववृत्तान्तं स्पष्टीकरोतीत्याह—“ साऽब्रवीदस्मै वै पितरौ पुत्रान् बिभृतस्तृतीयस्यामितो दिवि सोमस्तमा हर तेनाऽऽत्मानं निष्क्रीणीष्वेति मा कद्रूरवोचदिति ” ( तैसं ६ १·६ ) इति । पुन्नामनरकोपलक्षितादृदोषात् दुःखात् त्रायन्त इति पुत्रास्तान् पुत्रानस्मा एतादृशोपद्रवपरित्राणाय मातापितरौ पुष्णीतः । हे गायत्र्यादिपुत्राः, कद्रूवचनमवगत्य यदुचितं तत् [13]कुरुध्वम् । गायत्र्यादीनामैच्छिकशरीरधारित्वात् पुत्रत्वमविरुद्धम् । तत्र प्रौढत्वादादौ जगती प्रवृत्त इत्याह—“ जगत्युदपतच्चतुर्दशाक्षरा सती साऽप्राप्य न्यवर्तत तस्यै द्वे अक्षरे अमीयेताꣳ सा पशुभिश्च दीक्षया चाऽऽगच्छत् तस्माज्जगती छन्दसां पशव्यतमा तस्मात् पशुमन्तं दीक्षोप नमति ” ( तैसं ६·१ ६ ) इति । पुरा जगतीपादस्य चतुर्दशाक्षराण्यासन् । तादृशी जगती [14]द्युलोकगतस्वानभ्रानादिसोमरक्षकैः सह युद्ध्वा सोममप्राप्याग्नीषोमीयसवनीयानूबन्ध्याख्यपशुनिष्ठिसाध्यां दीक्षां च गृहीत्वा [15]स्वकीये चाक्षरद्वये[15] स्वानादिभिर्गृहीते सति पराजित्य समागता । यस्माज्जगती पशूनानयत् तस्मात् सैवात्यन्तं पशुप्रदा । यतः पशुभिः सह दीक्षाऽऽनीता ततः [16]स्वाधीनसंपत्तौ सत्यां दीक्षाया प्रवर्तते ॥ तथैव त्रिष्टुभो युद्धं दर्शयति—“ त्रिष्टुगुदपतत् त्रयोदशाक्षरा सती साऽप्राप्य न्यवर्तत तस्यै द्वे अक्षरे अमीयेताꣳ सा दक्षिणाभिश्च तपसा चाऽऽगच्छत् ” ( तैसं ६·१ ६ ) इति । गौश्चाश्वश्चेत्यादयो दक्षिणा । अशनपरित्यागमुष्टिबन्धवाग्यमनवनीताभ्यङ्गकृष्णाजिनप्रावरणादिक्लेशसहिष्णुत्वं तपः । प्राणवत्प्रियस्य गवाश्वादेर्दानमधिकं तपः ॥ त्रिष्टुभा तदानयनमुपपादयति—“ तस्मात् त्रिष्टुभो लोके माध्यन्दिने सवने दक्षिणा नीयन्त एतत् खलु वाव तप इत्याहुर्यः स्वं ददाति ” ( तैसं ६ १ ६ ) इति । [17]माध्यन्दिनसवनस्य त्रिष्टुगभिमानिनी देवता । ततस्तदेतत् त्रिष्टुभो लोकः स्थानम् । शरीरप्रयासादपि धनहानिरूपस्य मानसप्रयासस्याधिकत्वात् दत्तेन धनेन परोपजीवनाच्च दानमेव महत् तप इत्यभिज्ञानां मतम् ॥ गायत्र्या युद्धे जयं दर्शयति—“ गायत्र्युदपतच्चतुरक्षरा सत्यजया ज्योतिषा तमस्या अजाऽभ्यरुन्ध तदजाया अजत्वꣳ सा सोमं चाऽऽहरच्चत्वारि चाक्षराणि साऽष्टाक्षरा समपद्यत ” ( तैसं ६ १ ६ ) इति । सहायरहितयोः पूर्वयोः [18]पराजयं दृष्ट्वा गायत्री स्वयमजया सहोदपतत् । सा त्वजा गायत्र्यर्थं स्वकीयेन तेजसा [19] ॥ सोममभितो रुरोध । तस्मात् रोधनपर्यायक्षेपणार्थात् अजधातोरजेति नाम निष्पन्नम् ॥ प्रश्नोत्तराभ्यां गायत्रीं प्रशंसति—“ ब्रह्मवादिनो वदन्ति कस्मात् सत्यात् गायत्री कनिष्ठा छन्दसाꣳ सती यज्ञमुखं परीयायेति यदेवाद सोममाहरत् तस्माद्यज्ञमुखं पर्यैत् तस्मात् तेजस्विनीतमा ” ( तैसं ६ १ ६ ) इति । सत्यात् कारणात् । कनिष्ठा न्यूनाक्षरा । यज्ञमुखं प्रातःसवनम् । तत्र बहिष्पवमाननाम्नि प्रथमस्तोत्रे “ उपास्मै गायता नरः ” ( सास २·१·१ ) इत्याद्या ऋचो गायत्र्यः । सेयं यज्ञमुखप्राप्तिः । ब्रह्मवादिष्वेव बुद्धिमन्तो ‘ यदेव ’ इत्याद्युत्तरमाहुः । यस्मादियमदोऽमुष्माल्लोकात् सोममाहरत् तस्मादस्या मुखप्राप्तिर्युक्ता । मुखत्वादेवास्यास्तेजोबाहुल्यम् । आहरणप्रकारं दर्शयति—“ पद्भ्यां द्वे सवने समगृह्णान्मुखेनैकं यन्मुखेन समगृह्णात् तदधयत् तस्माद्द्वे सवने शुक्रवती प्रातःसवनं च माध्यन्दिनं च तस्मात् तृतीयसवन ऋजीषमभि षुण्वन्ति धीतमिव हि मन्यन्ते ” ( तैसं ६·१ ६ ) इति । पक्षिरूपा गायत्री सवनद्वयपर्याप्तौ सोमभागौ [20]पद्भ्यां

१३ इ उ पा.भा—कुरुध्वं । १४. आ.क—द्युलोकं गत्वा स्वान°, त म २—द्युलोके गत्वा स्वान°, भा—लोकगतस्वान° । १५–१५ इ उ ना.पा भा हा—स्वकीयाक्षरद्वये । १६ क—पश्वधिकस्वाधीनसंपत्तौ, इ.उ—पश्वाधीनसंपत्तौ । १७ तं—माध्यन्दिने सवने । १८ ना हा—परिक्षयम् ; इ.उ पा भा—परीक्षयम् । १९ त—ज्योतिषा । २०–२० इ उ ना पा भा हा—‘ पद्भ्या... सोमभागौ ’ नास्ति ।

[21]-उरसि परिगृह्य-[21] तृतीयसवनपर्याप्तं सोमभागं चञ्चुपुटाभ्यां संदश्य तदीयं रसं पपौ। यस्मात् पद्भ्यां धृतौ सोमभागौ[20] न पीतौ, तस्मात् प्रातःसवनमाध्यन्दिनसवने शुक्रशब्दाभिधेयेन सोमरसेनोपेते। यस्मात् तृतीयो भागः पीतस्तस्मात् पीतत्वं मन्यमानास्तत्सादृश्यार्थमृजीषमभिषुणुयुरिति प्रासङ्गिकं किंचिद्विधाय तत्रापरं [22]विशेषं विधत्ते—"आशिरमव नयति सशुक्रत्वायाथो सं भरत्येवैनत्" ( तैसं ६·१·६ ) इति। [23]-आशिरं क्षीरम्। सशुक्रत्वं सरसत्वम्। किंच क्षीरसेचनादृजीषगतसोमरसरूपहविः संभरति सम्यक् पोषयत्येव॥ पुनरप्यन्यद्विधत्ते—"तꣳ सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्यमुष्णात् स तिस्रो रात्रीः परिमुषितोऽवसत् तस्मात् तिस्रो रात्रीः क्रीतः सोमो वसति-[23]" ( तैसं ६·१·६ ) इति। उपसद्दिवसेषु त्रिष्वभिषवमकृत्वा सोमं निवासयेदित्यर्थः॥

इत्थं सोमाहरणं निरूप्य सोमक्रयणीं निरूपयितुमारभते—"ते देवा अब्रुवन् स्त्रीकामा वै गन्धर्वाः स्त्रिया निष्क्रीणामेति ते वाचꣳ स्त्रियमेकहायनीं कृत्वा तया निरक्रीणन्" ( तैसं ६·१·६ ) इति। एकसंवत्सरवयस्कया स्त्रीरूपया वाग्देवतया सोमस्य निष्क्रयः कृतः। गन्धर्वेष्वपरक्तायास्तस्याः स्त्रिया रोहितगोरूपतां दर्शयति—"सा रोहिद्रूपं कृत्वा गन्धर्वेभ्योऽपक्रम्यातिष्ठत् तद्रोहितो जन्म" ( तैसं ६·१·६ ) इति। [24]देवेष्वनुरक्ततया पुनर्देवताप्राप्तिं दर्शयति—"ते देवा अब्रुवन्नप युष्मदक्रमीन्नास्मानुपावर्तते वि ह्वयामहा इति ब्रह्म गन्धर्वा अवदन्नगायन् देवाः सा देवान् गायत उपावर्तत तस्माद्गायन्तꣳ स्त्रियः कामयन्ते" ( तैसं ६·१·६ ) इति। विह्वयामहै विलक्षणं यथा भवति तथैवाऽऽकारयामः। ब्रह्म वेदः॥ एतद्वृत्तान्तवेदनं प्रशंसति—"कामुका एनꣳ स्त्रियो भवन्ति य एवं वेदाथो य एवं विद्वानपि जन्येषु भवति तेभ्य एव ददत्युत यद्बहुतया भवन्ति" ( तैसं ६·१·६ ) इति। वरस्य स्निग्धा वरार्थं कन्यामन्वेष्टुं प्रवृत्ता बान्धवा जन्याः। तादृशानां च जन्यानां द्वौ वर्गौ। तत्रैकस्मिन् वर्गे यथोक्तवेदनरहिता अनेकगुणान्तरोपेता बहवो वरा यद्यपि सन्ति तथापि तं वर्गमुपेक्ष्य येषु जन्येष्वेकोऽप्येवंविद्वान् वरो भवति, तेभ्य एव जन्येभ्यः कन्यां तदितरो ददाति॥ सोमक्रयण्या[25] गुणं विधत्ते—"एकहायन्या क्रीणाति वाचैवैनꣳ सर्वया क्रीणाति तस्मादेकहायना मनुष्या वाचं वदन्ति" ( तैसं ६.१·६ ) इति। वाग्देवतायाः सोमक्रयणीरूपस्वीकारात् सर्वया वाचा क्रय उपपद्यते। एकसंवत्सरस्वीकारश्च तस्मिन् वयसि सति [26]वचनव्यवहारोपक्रमात्। वर्ज्यदोषान् विशदयति—"अकूटयाऽकर्णयाऽकाणयाऽश्लोणयाऽसप्तशफया क्रीणाति" ( तैसं ६·१·६ ) इति। कूटा कुटिलशृङ्गी, कर्णी छिन्नकर्णोपेता, काणा त्वेकाक्षी, श्लोणा कुण्ठादिदूषिता, सप्तशफा न्यूनाङ्गी, एता वर्ज्याः। उपादेयां दर्शयति—"सर्वयैवैनं क्रीणाति" ( तैसं ६·१·६ ) इति। [27]-सर्वाऽवयवसंपूर्णेत्यर्थः। विपक्षबाधपुरःसरं स्वपक्षं विधत्ते—"यच्छ्वेतया क्रीणीयाद्दुश्चर्मा यजमानः स्याद्यत् कृष्णयाऽनुस्तरणी स्यात् प्रमायुको यजमानः स्याद्यद्द्विरूपया वार्त्रघ्नी स्यात् स वाऽन्यं जिनीयात् तं वाऽन्यो जिनीयादरुणया पिङ्गाक्ष्या क्रीणात्येतद्वै सोमस्य रूपꣳ स्वयैवैनं देवतया क्रीणाति" ( तैसं ६·१·६) इति-[27]। मृतं पुरुषमनु हन्यमाना गौरनुस्तरणी। कृष्णायास्तादृक्त्वेन यजमानो म्रियेत। वर्णद्वयोपेता यद्यपि विरोधिघातिनी तथाऽपि यजमानतद्वैरिणोरन्योन्यविरोधित्वात् को हन्ति को वा हन्यत इति न ज्ञायते। अरुणत्वं पिङ्गाक्षत्वं च सोमदेवतायाः स्वरूपम्। अतस्तादृशी गौः सोमक्रयाय सदृशी भवति। इत्थं चतुर्थानुवाकोक्तमन्त्रव्याख्यानस्योपोद्घातत्वेन ब्राह्मणेन प्रायणीयासोमक्रयण्यावनुवाकाभ्यामभिहिते॥

अथ मन्त्रा व्याख्यातव्याः—

---

२१–२१. आ.क–संगृह्य; ना–'उरसि परिगृह्य' नास्ति। २२. इ.उ.ना.पा.भां.हा–'विशेषम्' नास्ति। २३–२३. इ.उ.पा.भां.हा–'आशिरं...वसति' नास्ति। ना–'आशिरं सम्यक्पोषयत्येव' नास्ति। २४. आ.क–देवेष्वनुरक्तायाः। २५. आ.इ.उ.ना.पा.भां.हा–सोमक्रयण्याम्। २६. आ.इ.पा.हा–वदनव्यवहार°। २७–२७. इ.उ.पा.भां.हा–'सर्वावयवसंपूर्णेत्यर्थः क्रीणाति......इति' नास्ति।

इयं ते शुक्र तनूरिदं वर्चस्तया सं भव भ्राजं गच्छ

इयम् । ते । शुक्र । तनूः । इदम् । वर्चः । तया । समिति । भव । भ्राजम् । गच्छ ।

हिरण्य स्रुच्यवदधाति—'इयम्' इति ॥ हे शुक्र शुद्धहिरण्य, इयं स्रुक् तव तनूः शरीरम् । उप्रत्ययान्तस्तनूशब्दः ( उ ८१ ) । इदं सुवस्थमाज्यं तव वर्चः बलम् । अतस्त्वं तया शरीरभूतया स्रुचा सं भव सगच्छस्व । अन्तः प्रविश्येत्यर्थः । भ्राजं गच्छ प्रज्वलीभव । "तद्धिरण्यमभवत्" ( तैसं ६ १ ७ ) इत्यादि ब्राह्मणम् । "आपो वरुणस्य पत्नय आसन्" ( तैब्रा १ १ ३ ) इत्यादिरस्य शेषः ॥

इयमिति ॥ "अथैतद्ध्रुवाज्यमाप्याय्य स्रुचि चतुर्गृहीतं गृहीत्वा सूत्रेण हिरण्यं निष्टर्क्यं बद्ध्वा [२८]दर्भनाड्यां प्रबध्य[२८] स्रुच्यवदधातीयं ते शुक्र तनूरिदं वर्चस्तया सं भव भ्राजं गच्छेति" ( बौश्रौ ६ १२ ) इति ॥ हे शुक्र, दीप्तिमद्धिरण्य, तव इयं जुहूः तनूः, इदं घृतं तव तेजोऽतस्तया जुह्वा [२९]सं गच्छ सं भव । हे हिरण्य, आज्यरूपां भ्राजं दीप्तिं प्राप्नुहि[२९] । अथवा—हे शुक्र वह्ने, इयमाज्यरूपा तव तनूः, इदं हिरण्यं तव तेजः, इत्येवं ब्राह्मणानुसारेण व्याख्यातव्यम् । आधानब्राह्मणोक्तं हिरण्यस्य महिमानं तत्रत्यपदत्रयोच्चारणेन प्रत्यभिज्ञाप्य प्रशंसति—"तद्धिरण्यमभवत् तस्मादद्भ्यो हिरण्यं पुनन्ति" ( तैसं ६·१·७ ) इति । आधानब्राह्मणे त्वेवमाम्नायते—"आपो वरुणस्य पत्नय आसन् । ता अग्निरभ्यध्यायत् । ताः समभवन् । तस्य रेतः परापतत् । तद्धिरण्यमभवत्" ( तैब्रा १ १·३ ) इति । तस्माद्धिरण्यस्य वह्निः पिता आपो मातरः । तस्मात् स्वतःशुद्धं हिरण्यं यदि कदाचिद् रजस्वलादिस्पर्शेन शोधनीयं [३०]भवेत् तदाऽप्यद्भ्यः[३०] पुनन्ति जलेनैव शोधयन्ति न तु कांस्यताम्रादेरिव [३१]भस्माम्लादिकमपेक्षन्ते ॥ जुह्वां हिरण्यप्रक्षेपेण विशिष्टं होमं विधत्ते—"ब्रह्मवादिनो वदन्ति कस्मात् सत्यादनस्थिकेन प्रजाः प्रवीयन्तेऽस्थन्वतीर्जायन्त इति यद्धिरण्यं घृतेऽवधाय जुहोति तस्मादनस्थिकेन प्रजाः प्रवीयन्तेऽस्थन्वतीर्जायन्ते" ( तैसं ६·१ ७ ) इति । तस्मादनस्थिकेन वीर्येण प्रजाः प्रवीयन्ते गर्भाः क्रियन्ते । उत्पत्तिकाले त्वस्थियुक्ता जायन्ते । तत्र वीर्यसदृशमाज्यमस्थिसदृशं हिरण्यम् । तदिदं सादृश्यं निर्दिदुमीश्वरेणास्थि निर्मीयत इत्यर्थः ॥ [३२]वह्निमयन्धगोधनपरतया मन्त्रं व्याचष्टे—"एतद्वा अग्नेः प्रियं धाम यद्घृतं तेजो हिरण्यमियं ते शुक्र तनूरिदं वर्च इत्याह सतेजसमेवैनꣳ सतनुं करोत्यथो सं भरत्येवैनम्" ( तैसं ६·१ ७ ) इति । एनमग्निं समरति सम्यक् [३३]करोत्येव । वह्निसंबोधनेन[३३] तदीयतेजोरूपेण हिरण्यमत्र प्रकाश्यते ॥ हिरण्यस्य सूत्रेण बन्धनं विधत्ते—"यदबद्धमवदध्याद्गर्भाः प्रजानां परापातुकाः स्युर्बद्धमव दधाति गर्भाणां धृत्यै" ( तैसं ६ १ ७ ) इति ॥ सूत्राग्राकर्षणेन यथा सहसा [३४]मुच्यते तथा बध्नीयादिति विशेषं विधत्ते—"निष्टर्क्यं बध्नाति प्रजानां प्रजननाय" ( तैसं ६·१ ७ ) इति । निर्दोषेण सहसा मोचनयोग्यं निष्टर्क्यम् ॥

१ तै ति—उज्वर्गीभव ।

२८—२८ आ क—दर्भाभ्यां प्रबध्य । २९—२९ म—सगच्छ स्वहिरण्यरूपां भ्राजं दीप्तिं प्राप्नुहि, उ—संगच्छति आज्यरूपां भ्राजं दीप्तिमाप्नुहि, हा—संगच्छते आज्यरूपां भ्राजं दीप्तिमाप्नुहि । ३०—३०. आ क—भवति तदाद्भ्य । ३१ आ क—भस्मादन्यादिकमपेक्षते, मर—भस्मादन्यादिकमपेक्षन्ते, इ उ ना पा भा हा—भस्माम्लादिकमपेक्षेन । ३२. तै—वह्निसंबन्धो धनपरतया । ३३—३३ तै—रोपयत्येव वह्निसंबोधनेन, मर—करोति एष ह्येव वह्निसंबोधनेऽपि, क—करोति । एष ह्येव वह्निसंबोधनेन । ३४ तै—मुच्यन्ते ।

जूरसि धृता मनसा जुष्टा विष्णवे तस्यास्ते सत्यसवसः प्रसवे वाचो यन्त्रमशीय स्वाहा
जूः । असि । धृता । मनसा । जुष्टा । विष्णवे । तस्याः । ते । सत्यसवस इति सत्य-सवसः ।
प्रसव इति प्र-सवे । वाचः । यन्त्रम् । अशीय । स्वाहा ।

तदाज्यमाहवनीये जुहोति—' जूरसि ' इति ॥ जूरिति सोमक्रयण्युच्यते । तस्याश्च वाग्रूपत्वात् तद्रूपेण वर्ण्यते । यथा—" ते वाचं स्त्रियमेकहायनीं कृत्वा " ( तैसं ६·१·६ ) इत्यादि । " वाग्वा एषा यत्सोमक्रयणी " ( तैसं ६·१·७ ) इत्यादि ब्राह्मणम् । सोमक्रयणि वाग्रूपे, जूः असि प्रत्यर्थं गन्त्र्यसि । जवतेर्गतिकर्मणः " क्विब्वचिप्रच्छि " ( अ.पा ३·२·१७८ वा २ ) इत्यादिना क्विब्दीर्घौ । " यद्धि मनसा जवते तद्वाचा वदति " ( तैसं ६·१·७ ) इति ब्राह्मणम् । मनसो यत्र जवः वागपि तत्र जवं करोतीत्यर्थः । कीदृशी पुनरसौ ? आह—धृता मनसा त्वमसि मनःपूर्वकत्वात् । " मनसा हि वाग्धृता " ( तैसं ६·१·७ ) इत्यादि । जुष्टा सेवितास्माभिः । विष्णवे व्यापकाय यज्ञाय प्रिया वाऽसि । " यज्ञो वै विष्णुर्यज्ञायैवैनां जुष्टां करोति " ( तैसं ६·१·७ ) इत्यादि । तस्याः तादृश्यास्तव वाग्रूपाया एकहायनीभावमापन्नाया यन्त्रं यमनं स्थितिम् अशीय प्राप्नुयाम् । अश्नोतेर्लिङि " बहुलं छन्दसि " ( पा २·४·७३ ) इति शपो लुक् । " गुधृवीपचि " ( उ ६१६ ) इत्यादिना यमेस्त्रप्रत्ययः । " सावेकाचः " ( पा ६·१·१६८ ) इति वाचः परस्याः षष्ठ्या उदात्तत्वम् । आत्मन्येव स्थापनं यमनम् । यद्यपि त्वया सोमं क्रीणामि तथापि त्वद्विरहो मे मा भूदित्यर्थः । " पुनरेहि सह रय्या " ( तैसं १·२·४ ) इत्यस्मिन् मन्त्रेऽप्ययमर्थः स्पष्टो भविष्यति । " वाचैव विक्रीय " ( तैसं ६·१·७ ) इत्यादि । कथमस्या यमनं लभत इत्याह— सत्यसवसः प्रसवे । सत्यममोघं सवः प्रेरणं यस्य स सत्यसवाः सविता । सुवतेरसुन् ( उ ६३८ ) । तस्य देवस्य प्रसवे अनुज्ञाने लब्धे सर्वमिष्टं संपद्यत इति ।

जूरसीति ॥ कल्पः—" [24]दर्भनाडीं स्रुग्दण्ड[25] उपसंगृह्याहवनीये जुहोत्यन्वारब्धे यजमाने जूरसि धृता मनसा जुष्टा विष्णवे तस्यास्ते सत्यसवसः प्रसवे वाचो यन्त्रमशीय स्वाहेति " ( बौश्रौ ६·१२ ) इति ॥ हे सोमक्रयणि, वाग्रूपा त्वं जूः वेगयुक्ता असि । मनसा नियमिताऽसि । यज्ञाय प्रियाऽसि । तादृश्या अमोघप्रेरणायास्तव प्रेरणे सति मन्त्रोच्चारणरूपाया वाचः यन्त्रं नियमम् अशीय प्राप्नुयाम् । इदमाज्यं हुतमस्तु ॥ यथोक्तार्थं मन्त्रं दर्शयति—" वाग्वा एषा यत्सोमक्रयणी जूरसीत्याह यद्धि मनसा जवते तद्वाचा वदति धृता मनसेत्याह मनसा हि वाग्धृता जुष्टा विष्णव इत्याह यज्ञो वै विष्णुर्यज्ञायैवैनां जुष्टां करोति तस्यास्ते सत्यसवसः प्रसव इत्याह सवितृप्रसूतामेव वाचमवरुन्धे " ( तैसं ६·१·७ ) इति । जवते [26]तूर्णं कर्तव्यमित्यवगच्छति ॥

२. तं-सखि सोमक्रयणि; ति-सन्वे सोमक्रयणि । ३. तं.ति-प्रत्यर्थम् । ४. मै-व्यापनाय । ५. तं. ति-मन्त्रे त्वयमर्थः ।

२४-२५. आ. पा-नाडीस्रुग्दण्डे; क-दर्भकाण्डे स्रुग्दण्डे । २६. इ.उ.पा.मा-जूर्णम् ।

शुक्रम॑स्य॒मृत॑मसि वैश्वदे॒व५ ह॒विः
सूर्य॑स्य॒ चक्षु॒राऽरु॑हम॒ग्नेर॒क्ष्णः क॒नीनि॑कां
यदेत॑शेभि॒रीय॑से॒ भ्राज॑मानो विप॒श्चिता॑

शु॒क्रम् । अ॒सि । अ॒मृत॑म् । अ॒सि । वै॒श्व॒दे॒वमिति॑ वै॒श्व-दे॒वम् । ह॒विः ।
५ सूर्य॑स्य । चक्षुः॑ । एति॑ । अ॒रु॒ह॒म् । अ॒ग्नेः । अ॒क्ष्णः । क॒नीनि॑काम् । -
यत् । एत॑शेभिः । ईय॑से । भ्राज॑मानः । वि॒प॒श्चिता॑ ।

थायादिस्वरेण प्रसवशब्दोऽन्तोदात्त ( पा ६ २ १४४ ) । " सवितृप्रसूतामेव वाचमव रुन्धे " ( तैस ६ १ ७ ) इति ब्राह्मणम् ॥

अपर चतुर्गृहीत गृहीत्वा तद्यजमानमवेक्षयति—' शुक्रम् ' इति । ^v^शुक्रम् । शुचे-
१० र्दीप्तिकर्मण सपदादिलक्षण क्विप् ( पा ३ ३ १०८ वा ९ ) । " लुगकारेकाररेफाश्च वक्तव्या." ( द्र पा ४ ४ १२८ वा २ ) । यद्वा—मत्वर्थे रप्रत्यय । "अयस्मयादित्वात् ( पा १ ४ २० ) पदत्वात् कुत्वम् । किंच ^v^अमृतम् ^v^असि देवानाममरणहेतुत्वात् । " नञो जरमरमित्रमृता " ( पा ६ २ ११६ ) इत्युत्तरपदाद्युदात्तत्वम् । ^v^वैश्वदेव, विश्वेदेवप्रिय ^v^हवि. त्वमसि ॥

हिरण्यमन्तर्धाय यजमानमादित्यमुदीक्षयति—' सूर्यस्य ' इति चतुष्पदया अनुष्टुभा ॥
१५ सूर्यो मण्डलान्तर्गत. पुरुष स्थावरजङ्गमानामात्मा । यथा " सूर्य आत्मा " ( तैस १ ४ ४३ ) इति । तस्य तत्र चक्षुर्भूत यदेतन्मण्डल ^v^आ ^v^अरुहम् आरूढोऽस्मि । रुहेर्लुङि " कृमृदृरुहिभ्यश्छन्दसि " ( पा ३ १ ५९ ) इति च्लेरङादेश । पुनरपि विशेष्यते—^v^अग्ने रत्नभूतस्य ^v^अक्ष्णः

शुक्रमिति ॥ बौधायन.—" अग्रेण ३६शाला तिष्ठन् यजमानमाज्यमवेक्षयति शुक्रमस्यमृतमसि वैश्वदेव५ हविरिति " ( बौश्रौ ६ १२ ) इति ॥ आपस्तम्ब —" सोमक्रयणीमीक्षमाणो जुहोति
२० जूरसीति । अपर चतुर्गृहीत गृहीत्वा शुक्रमसीति हिरण्य *घृतादुद्धृत्य वैश्वदेव५ हविरित्याज्यमवेक्ष्य " ( आपश्रौ १० २२ ६-७ ) इति ॥ ^v^शुक्र दीप्तिमत् । ^v^अमृत नाशरहितम् । हे आज्य हे हिरण्य इति वा योज्यम् । हे आज्य, त्व सर्वदेवप्रियं ^v^हवि असि ॥ तदिदं स्पष्टत्वात् ब्राह्मणे व्याख्यातम् ॥

सूर्यस्येति ॥ कल्प —" अथैनद्धिरण्यमन्तर्धायाऽऽदित्यमुदीक्षयति सूर्यस्य चक्षुराऽऽरुहमग्नेरक्ष्ण कनीनिका यदेतशेभिरीयसे भ्राजमानो विपश्चितेति " ( बौश्रौ ६.१२ ) इति ॥ सूर्यसम्बन्धि मदीय
२५ चक्षुरिन्द्रियं, कनीनिका त्वग्निसम्बन्धिनी, तदुभयम् ^v^आ ^v^अरुह प्राप्तोऽस्मि । यतो हे सूर्य, त्वमेतशनामकै अश्वैर्गच्छसि, हे वह्ने, त्व ^v^विपश्चिता तेजसा ^v^भ्राजमान असि तस्मात् रक्षोनिवारणाय युवामुभौ प्राप्तोऽस्मि ३८एतदभिप्राय दर्शयति—" काण्डेकाण्डे वै क्रियमाणे यज्ञ५ रक्षा५सि जिघा५सन्त्येष खलु वा अरक्षोहत पन्था योऽग्नेश्च सूर्यस्य च सूर्यस्य चक्षुराऽऽरुहमग्नेरक्ष्ण कनीनिकामित्याह य एवारक्षोहत पन्थास्त५ समारोहति " ( तैस ६ १ ७ ) इति । काण्डेकाण्डे तत्तदुपाङ्गेयुक्त एकैकस्मिन् यज्ञाङ्गे ॥

३० ६ तं—' अयस्मयादित्वात् ' इत्यस्यानन्तरं ' भत्वात् जश्त्वाभाव ', ति—' अयस्मयादित्वात् ' इत्यस्यानन्तर ' भत्वाभाव ' । ७. त—ति—' चक्षुर्भूतम् ' इत्यस्यानन्तर ' सर्वेषां वा चक्षुर्भूतम् ' ।

३७ इ उ क पा मा—शालायाम् । *[आपश्रौसूत्रे 'पश्चादुद्धृत्य']। ३८. तं म २—एतमेवाभिप्रायम् ।

चिद॑सि म॒नाऽसि॒ धीर॑सि॒ दक्षि॑णा(१)ऽसि य॒ज्ञिया॑ऽसि
क्ष॒त्रिया॒ऽस्यदि॑तिरस्युभ॒यतः॑शीर्ष्णी॒ सा नः॒ सुप्रा॑ची॒ सुप्र॑तीची॒ सं भ॑व

चित् । अ॒सि॒ । म॒ना । अ॒सि॒ । धीः । अ॒सि॒ । दक्षि॑णा । ( १ ) अ॒सि॒ । य॒ज्ञिया॑ । अ॒सि॒ ।
क्ष॒त्रिया॑ । अ॒सि॒ । अदि॑तिः । अ॒सि॒ । उ॒भ॒यतः॑शीर्ष्णीत्यु॑भ॒यतः॑-शी॒र्ष्णी ।
सा । नः॒ । सु॒प्राची॒ति॒ सु॒-प्रा॒ची॒ । सु॒प्र॑तीची॒ति॒ सु॒-प्र॒ती॒ची॒ । समिति॑ । भ॒व॒ । ५

[v]कनीनिकां तारकास्थानीयमेतत् मण्डलमारूढोऽस्मि । उदात्तनिवृत्तिस्वरेणाक्ष्णः परस्याः षष्ठ्या उदात्तत्वम् ( पा ६·१·१६१ )। तदारोहणं च [v]तरयेन पुरुषेण सह स्वात्मैक्यम् । यथा– "[*]स यश्चायं पुरुषे" ( द्र. तैउ २·८ ) इति । तस्मिन् सति सूर्यस्याग्नेश्च पन्थानमारूढो रक्षोभिर्न बाध्यते । "एष खलु वा अरक्षोहतः पन्थाः" ( तैसं ६·१·७ ) इत्यादि ब्राह्मणम् ॥ कीदृशस्य सूर्यस्य इत्याह—[v]यत् यस्त्वम् । यच्छब्दात् परस्य सोः "सुपां सुलुक्" ( पा ७·१·३९ ) इत्यादिना लुक् । [v]चक्षुष्ट्वापेक्षया नपुंसकत्वं वा । यस्त्वम् [v]एतशेभिः शुक्लवर्णैरश्वैः [v]ईयसे गच्छसि । ईङ् गतौ दैवादिकः । एतशब्दाल्लोमादित्वाच्छः ( पा ५·२·१०० )। वृषादित्वादाद्युदात्तत्वम् ( पा ६·१·२०३ )। यद्वा–" "एतेः "तशन्तशसुनौ" ( उ ४७३ ) इति तशन्प्रत्ययः"* । गमनकुशलाः । यद्वा–एतशरीराः एतशाः । पृषोदरादित्वात् ( पा ६·३·१०९ ) यथाभिमतस्वरूपस्वरसिद्धिः । पुनश्च विशेष्यते—[v]विपश्चिता मेधाविना महर्षिगणेन [v]भ्राजमानः शोभमानः । सह वा तेन । यस्त्वमीयसे तस्य ते मण्डलमारुहमिति ॥ १५

सोमक्रयणीमनुमन्त्रयते—'चिदसि' इति ॥ चेतयतीति [v]चित् । "बहुलं संज्ञाछन्दसोः" ( द्र. उ १९० ) इति णिलुक् । हे सोमक्रयणि वाग्रूपे, चेतयमाना [v]असि चैतन्यकार्यत्वात् ।

चिदसीति ॥ बौधायनः–"अथैतां[३९] सोमक्रयणीमग्रेण शालामुदीचीमभिवित्सयन्ति[३९] । तामनुमन्त्रयते चिदसि मनाऽसीत्याऽन्तादनुवाकस्य" ( बौश्रौ ६·१२ ) इति ॥ स च मन्त्र एवमाम्नायते– 'चिदसि मनाऽसि धीरसि दक्षिणाऽसि यज्ञियाऽसि क्षत्रियाऽस्यदितिरस्युभयतःशीर्ष्णी सा नः सुप्राची सुप्रतीची संभव मित्रस्त्वा पदि बध्नातु पूषाऽध्वनः पात्विन्द्रायाध्यक्षायानु त्वा माता मन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनु सखा सयूथ्यः सा देवि देवमच्छेहीन्द्राय सोमꣳ रुद्रस्त्वाऽऽवर्तयतु मित्रस्य पथा स्वस्ति सोमसखा पुनरेहि सह रय्या" इति ॥ आपस्तम्बस्तु त्रेधा विभज्य विनियुङ्क्ते—"चिदसि मनासीति सोमक्रयणीमभिमन्त्रयते । कर्णगृहीता पदिबद्धा भवति । मित्रस्त्वा पदि बध्नात्विति दक्षिणं पूर्वपादं प्रेक्षते । पूषाध्वनः पात्विति प्राचीमायतीमनुमन्त्रयते" ( आपश्रौ १०·२२·७–९ ) इति ॥ हे वाग्देवतारूपे सोमक्रयणि, त्वं [४०-v]चित् [v]असि[-४०] चिदादिशब्दप्रतिपाद्याऽसि । अन्तःकरणस्य चित्तं मनो बुद्धिरिति २० २५

८. मै–तरस्थाने । *[तैत्तिरीयोपनिषदि 'सः' नास्ति ।] ९. मै–चक्षुरपेक्षया । *···*[शुद्धीकृतः पाठः । लिखितपुस्तकेषु मैसूरमुद्रितपुस्तके तु 'एतेरतशतसुनौ इति तसुन्प्रत्ययः' इत्युपलभ्यते ।]

३९. आ.क–'मभिवर्तयन्ते; तं–'मभिवर्तयति; ह्या–'मभिवित्सयति; [ बौश्रौसूत्रे–'मतिवित्सयन्ति' ] । ४०–४०. आ.क.तं.२–'चित् असि' नास्ति । ३०

" यद्धि मनसा चेतयते तद्वाचा वदति " ( तैस ६ १ ७ ) [10]इति ब्राह्मणम्[10] । किंच मना मन्याना असि मन पूर्वकत्वात् मनसा सह प्रवृत्ते । " यद्धि मनसाऽभिगच्छति " ( तैस ६ १ ७ ) इति । मन अवबोधने । पचाद्यच् ( पा ३ १ १३४ ) । [11]अपि च[11] धी प्रज्ञा असि[12] " यद्धि मनसा ध्यायति तद्वाचा वदति " ( तैस ६ १ ७ ) इति । " ध्यायते संप्रसारण च " ( पा ३ २ १७८ वा ४ ) इति क्विपि संप्रसारणम् । एव चेतनचिदात्मकतया[13] सर्वप्रवृत्तिहेतुत्वमस्या उक्तम् । यद्वा—धी कर्मासि । अस्मिन् पक्षे कर्तृकरणक्रियारूपतया सर्वार्थसाधनत्वमस्याः प्रतिपाद्यते । दक्षिणा शीघ्रगामिनी च असि । दक्ष वृद्धौ शीघ्रार्थे च । " द्रुदक्षिभ्यामिनन् " ( उ २१८ ) इति शीघ्रार्थकदक्षे इनन्प्रत्यय । एव यज्ञिया यज्ञकर्मार्हा च असि । " यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम् " ( पा ५ १ ७१ वा १ ) इति घ[14] । यज्ञसंपादिनीत्यर्थ । एव क्षत्रिया च असि, क्षत्र धन सोमलक्षण तस्यापत्यमसि । तत्प्रभवत्वात् बलप्रभवत्वाच्च । " क्षत्राद्घ " ( पा ४ १ १३८ ) । अपि च अदिति अखण्डिता देवमाता च असि । नञ्समास ( पा २ २ ६ ) । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ( पा ६ २ २ ) । कीदृश्यदिति ? उभयत शीर्ष्णी उभयत शिरस्का यज्ञानामाद्यन्तयोरुभयो [15]शिरःस्थानीयौ प्रधानभूतौ प्रायणीयोदयनीयाख्यौ[15] चरू यस्यास्तादृशी । " शीर्षंश्छन्दसि " ( पा ६ १ ६० ) इति शीर्षन्नादेश । " नित्य सञ्ज्ञाछन्दसो " ( पा ४ १ २९ ) इति ङीप् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ( पा ६ २ १ ) । उभयशब्दात् " इतराभ्योऽपि दृश्यन्ते " ( पा ५ ३ १४ ) इति सप्तम्यर्थे तसिल् । (लिति) प्रत्ययात् पूर्वस्योदात्तत्वम् ( पा ६ १ १९३ ) । " यदेनादित्य प्रायणीयो यज्ञानामादित्य उदयनीय " ( तैस ६ १ ७ ) इत्यादि ब्राह्मणम् । तादृशी सा त्व न स भव सगच्छ स्वात्मनाऽस्मत्प्रकाशे वर्तस्व । यद्वा—न अस्माक सभव । मा कदाचिदुपेक्षिष्ठा ।

चित्तो वृत्तय । देहादिसघातस्याचेतनत्व व्यावर्त्य चेतनत्व सपादयन्ती बाह्यवस्तुषु वा निर्विकल्परूप सामान्यप्रज्ञान जनयन्ती वृत्तिश्चित्तम् । अय पदार्थ एव भवति वा न वेति विचाररूपा वृत्तिर्मन । भवत्येवेति निश्चयरूपा बुद्धि । एतत्त्रितयमिह चिन्मनोधीशब्दैरुच्यते । दक्षिणा कुशला देवद्रव्यरूपा[41] । यज्ञिया [42]सोमक्रयद्वारेण यज्ञसंबन्धिनी । क्षत्रिया देवेषु सोम [43]क्षत्रियजात्यभिमानी । तथा च ब्राह्मणेऽपि आमनन्ति—" यान्येतानि [44]देव(त्रा) क्षत्राणीन्द्रो वरुण सोमो रुद्र पर्जन्यो यमो मृत्यु रीशान " ( बृउ १ ४ ११ ) इति । तेन सोमेनाभिमन्तव्यस्य सोमलताद्रव्यस्य क्रयहेतुत्वेन क्षत्रिया । ज्योतिष्टोमस्याऽऽद्यन्तयो प्रायणीयोदयनीययोरदितेर्देवतात्वात् सेयम् उभयतःशीर्ष्णी तद्रूपा त्वमसि । सा तादृशी त्वमस्मदर्थं सुप्राची सुप्रतीची स भव । प्रथमं सोमस्य क्रेतार [45]प्रति सुष्ठु

१०–१० मै–' इति ब्राह्मणम् ' नास्ति । ११–११ मै–' अपि च; ' नास्ति । १२ मै–चासि । १३ मै–( चित्तमनो )ध्यात्मकतया, त ति–चेतनचिदात्मतया । १४ मै–घप्रत्यय । १५–१५ मै–शिर स्थानीयतया प्रधानभूता ।

४१ इ उ तै ना पा भां मर हा–' पा ' नास्ति । ४२. इ उ तै पा भां मर–क्रयद्वारेण । ४३ इ. च पा.मर–क्षत्रजात्यभिमानी । ४४ इ उ पा भां हा–देवनक्षत्राणीन्द्र ; क–देवतानि क्षत्राणीन्द्र । ४५. इ उ. ना.पा.भां हा–' प्रति ' नास्ति ।

मित्रस्त्वा पदि बध्नातु पूषाऽध्वनः पात्विन्द्रायाध्यक्षायानु त्वा माता मन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनु सखा सयूथ्यः

मित्रः । त्वा । पदि । बध्नातु । पूषा । अध्वनः । पातु । इन्द्राय । अध्यक्षायेत्यधि–अक्षाय । अन्विति । त्वा । माता । मन्यताम् । अन्विति । पिता । अन्विति । भ्राता । सगर्भ्य इति स–गर्भ्यः । अन्विति । सखा । सयूथ्य इति स–यूथ्यः ।

कथंभूता इत्याह—सुप्राची सुप्रतीची च भूत्वा । प्रागञ्चतीति प्राची । सोमक्रयणं प्रति प्रथमं प्राचीनगतिर्भूत्वा पुनरपि प्रतीची अस्मत्सकाशं प्रत्यागता भूत्वाऽस्माकमेव भवेति । " ऋत्विक्° " ( पा ३·२·५९ ) इत्यादिनाऽञ्चेः क्विन्प्रत्ययः । " अञ्चतेश्चोपसंख्यानम् " ( पा ४·१·६ वा २ ) इति ङीप् । नकाराकारयोर्लुप्तयोः " चौ " ( पा ६·३·१३८ ) इति दीर्घः । ततः शोभना प्राची शोभना प्रतीची । " प्रादिप्रसङ्गे कर्मप्रवचनीयानां प्रतिषेधः " ( द्र. पाभा २·२·१८ वा १ ) इति प्राप्ते " स्वती पूजायाम् " ( द्र. पाभा २·२·१८ वा ३,४ ) इति प्रादिसमासः । " सुः पूजायाम् " ( पा १·४·९४ ) इति कर्मप्रवचनीयत्वेन गतित्वाभावादव्ययपूर्वपदप्रकृतिस्वरत्वम् ( पा ६·२·२ ) । किंच मित्रः त्वा पदि पादे बध्नातु । " ऊडिदम्° " ( पा ६·१·१७१ ) इत्यादिना उदात्तत्वम् । " पद्दन्° " ( पा ६·१·६३ ) इत्यादिना पद्भावः । " यदबद्धा स्यात् " ( तैसं ६·१·७ ) इत्यादि ब्राह्मणम् । अपि च पूषा त्वाम् अध्वनो मार्गात् मार्गस्थाद्भयहेतोः पातु । अपि चास्या इन्द्रः अध्यक्षः स्वामी, इन्द्राय सोमस्वामिने त्वां माता अनु मन्यताम् । इन्द्रार्थं त्वया [16]–सोमक्रयं क्रियमाणम्–[16] अनुजानातु । पिता चानु मन्यताम् । भ्राता चानु मन्यताम् । कीदृशः ? सगर्भ्यः समाने गर्भे भवः । " समानस्य छन्दसि° " ( पा ६·३·८४ ) इति सभावः । " सगर्भसयूथ° " ( पा ४·४·११४ ) इत्यादिना भवार्थे यत् । सभावस्योत्पत्तिकाल एवोदात्तविधानात् सत्यामपि तद्धितवृत्तौ उदात्तत्वं न निवर्तते । यद्वा—" पूर्वादयश्च दृश्यन्ते " ( द्र.पाभा ६·२·१९९ ) इत्याद्युदात्तत्वम् । सखा चानु मन्यताम् । कीदृशः ?—सयूथ्यः समाने

प्राङ्मुखी गत्वा पश्चादस्मान् प्रति सुष्ठु प्रत्यङ्मुखी [46]समागम्यास्माभिः संगच्छस्व ॥ यथोक्तमर्थं मन्त्रे दर्शयति—" वाग्वा एषा यत् सोमक्रयणी चिदसि मनाऽसीत्याह शास्त्येवैनामेतत् तस्माच्छिष्टाः प्रजा जायन्ते " ( तैसं ६·१·७ ) इति । एतेन मन्त्रेण वागात्मिकां सोमक्रयणीं ' चिदादिशब्दवाच्या ' भव इत्येवमनुशास्ति । यस्मादेवं तस्माल्लोकेऽपि प्रजा अनुशिष्यन्ते ॥ [47]कृत्स्नगतात्पर्यमुक्त्वा प्रत्यवयवं व्याचष्टे—" चिदसीत्याह यद्धि मनसा चेतयते तद्वाचा वदति मनाऽसीत्याह यद्धि मनसाऽभिगच्छति तत् करोति घोराऽसीत्याह यद्धि मनसा ध्यायति तद्वाचा वदति दक्षिणाऽसीत्याह दक्षिणा ह्येषा यज्ञियाऽसीत्याह यज्ञियामेवैनां करोति क्षत्रियासीत्याह

१६–१६. तं–सोमं क्रियमाणम् ।

४६. तं.मर–समागत्यास्माभिः । ४७. त.मर–कृत्स्नतात्पर्य° ।

सा देवि देवमच्छेहीन्द्राय सोमं रुद्रस्त्वाऽऽवर्तयतु मित्रस्य पथा
स्वस्ति सोमसखा ( २ ) पुनरेहि सह रय्या ॥ ४ ॥
[ दक्षिणा सोमसखा पञ्च च ]

सा । देवि । देवम् । अच्छ । इहि । इन्द्राय । सोमम् । रुद्र । त्वा । एति । वर्तयतु । मित्रस्य ।
५ पथा । स्वस्ति । सोमसखेति सोम–सखा ( २ ) । पुन । एति । इहि । सह । रय्या ॥ ४ ॥
[ तैस १·२·४,५, कास २ ५, कपिस १·१७, वास ४·१७–२० ]

यूपे भव, सगर्भ्यवत् । हे देवि सोमक्रयणि, सा तादृशी त्व मात्रादिभिरनुज्ञाता देव सोमम् अच्छ आभिमुख्येन इहि गच्छ । "देवी ह्येषा देव सोम" ( तैस ६ १ ७ ) इति ब्राह्मणम् । इन्द्राय इन्द्रार्थम् । "इन्द्राय हि सोम आह्रियते" ( तैस ६ १ ७ ) इति ब्राह्मणम् । किंच रुद्र
१० त्वा आ वर्तयतु कृतक्रयानस्मान् प्रति [17]अभिमुखमानयतु । "यदेतद्यजुर्न ब्रूयात् पराच्येव सोमक्रयणीयात्" (तैस ६ १ ७) इत्यादि ब्राह्मणम् । रुद्रोऽपि न रौद्रभावेन, किं तु मित्रस्य पथा त्वामावर्तयतु निजकीर्तनापराधमनादृत्य शान्तो भूत्वाऽऽवर्तयतु । उदात्तनिवृत्तिस्वरेण (पा ६ १ १६१) तृतीयाया उदात्तत्वम् । "क्रूरमिव वा एतत् करोति यद्रुद्रस्य कीर्तयति" ( तैस ६ १ ७ ) इत्यादि ब्राह्मणम् । हे सोमक्रयणि, त्व च स्वस्ति अविघ्नेन पुन एव सोमविक्रयिण सकाशात्
१५ अस्मसकाशम् एहि आगच्छ । कीदृशी भूत्वा ? सोमसखा भूत्वा, सोम सखा यस्यास्तादृशी भूत्वा । सोमेन सख्या सहागच्छेत्यर्थ । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ( पा ६ २·१ ) । अत एव टजभाव (पा ५·४·९१) । अपि च रय्या धनेनास्मदीयेन [18]सह एवागच्छ[18] । "उदात्तयणो हल्पूर्वात्" (पा ६ १·१७४) इति विभक्तेरुदात्तत्वम् । "वाचा वा एष वि क्रीणीते" ( तैस ६ १ ७ ) इत्यादि ब्राह्मणम् ॥

२० ॥ इति द्वितीये चतुर्थोऽनुवाक ॥ ४ ॥

क्षरित्रया ह्येषाऽदितिरस्युभयत शीर्ष्णीत्याह यदेवाऽऽदित्य प्रायणीयो यज्ञानामादित्य उदयनीयस्तस्मादेव-माह" ( तैस ६ १ ७ ) इति । मनसा [48]वृत्तित्रयसाधारणेनान्त करणेन चेतयते सामान्यतो जानात्यभि-गच्छति विचारयति ध्यायति निश्चिनोति ॥ उत्तरमन्त्रस्यायमर्थ । हे सोमक्रयणि, मित्र हितकारी देवस्त्वा [49]दक्षिणपादे बध्नातु ॥ एवन्मन्त्रनिरुद्ध पक्षत्रयं व्यावर्तयन् मन्त्र व्याचष्टे—"यदबद्धा
२५ स्यादयता स्यादत् यदिपद्धाऽनुस्तरणी स्यात् प्रमायुको यजमानः स्यादत् कर्णगृहीता वार्त्रघ्नी स्यात् स वाऽन्यं जिनीयात् ॥ वाऽन्यो जिनीयान्मित्रस्त्वा पदि बध्नात्वित्याह मित्रो वै शिवो देवाना तेनैवैना पदि बध्नाति" ( तैस ६ १ ७ ) इति । अत्र पादबन्धनं कर्णग्रहण चामन्त्रकमङ्गीचकारेत्यविरोध * । अथवा, अकर्णगृहीता, अपदिबद्धा इति तत्र पदच्छेद ॥ तृतीयमन्त्रस्यायमर्थ —हे सोमक्रयणि, त्वा पूषा पोषको देवो भयोपेतात् मार्गान् पालयतु । यागाध्यक्षाय इन्द्राय त्वा सोमक्रयसाधनत्वेन[51] मातृ( ता )पित्रादय

३० १७ त ति–अभिमुखम्, प–अभिमुखाम् । १८ मै–सहागच्छ, पं–सहैवागच्छतु ।

४८. क–वृत्तित्रयकारणेनान्त* । ४९. आ.क,म२–दक्षिणे पादे । *[ आपस्तम्ब अङ्गीचकार इत्यर्थ । २७१ पृष्ठे २५ पङ्क्ति द्रष्टव्या । ] ५०. आ.ना.द्वा–'तत्र' नास्ति । ५१. आ.क ना द्वा–'साधनेन' ।

सोमक्रयणीहोमादिः ]

अनुमन्यन्ताम् । [V]सगर्भ्यः त्वया सहैकस्मिन् गर्भेऽवस्थितः । हे [V]देवि, [V]सा त्वमिन्द्रार्थं सोमं [V]देवम् अनु गच्छ । तां त्वां [V]रुद्रः देवोऽस्मान् प्रति पुनः [V]आ [V]वर्तयतु । आवर्तयन्नपि न रौद्रेण मार्गेण किं तु [V]मित्रस्य [V]पथा । ततस्ते [V]स्वस्ति सुखं भवतु । सोमः सखा यस्यास्त्व सा त्वं [V]सोमसखा भूत्वा धनेन [V]सह अस्मान् प्रति [V]पुनः आगच्छ ॥ अत्र ' रुद्रस्त्वा ' इत्यादिना पृथङ्मन्त्रेण सोमक्रयादूर्ध्वमेतस्याः प्रत्यावर्तनमिति केचित् ॥ मन्त्रस्य भागान् क्रमेण व्याचष्टे––" पूषाऽध्वनः पात्वित्याहेयं वै पूषेमामेवास्या अधिपामकः समष्ट्या इन्द्रायाध्यक्षायेत्याहेन्द्रमेवास्या अध्यक्षं करोत्यनु त्वा माता मन्यतामनु पिते-त्याहानुमतयैवैनया क्रीणाति सा देवि देवमच्छेहीत्याह देवी ह्येषा देवः सोम इन्द्राय सोममित्याहेन्द्राय हि सोम आह्रियते यदेतद्यजुर्न ब्रूयात् पराच्येव सोमक्रयण्येयाद्रुद्रस्त्वाऽऽवर्तयत्वित्याह रुद्रो वै क्रूरो देवानां तमेवास्यै परस्ताद्दधात्यावृत्त्यै क्रूरमिव वा एतत् करोति यद्रुद्रस्य कीर्तयति मित्रस्य पथेत्याह शान्त्यै वाचा वा एष वि क्रीणीते यः सोमक्रयण्या स्वस्ति सोमसखा पुनरेहि सह रय्येत्याह वाचैव विक्रीय पुनरात्मन् वाचं धत्तेऽनुपदासुकाऽस्य वाग्भवति य एवं वेद " (तैसं ६·१·७) इति । समष्ट्यै सम्यक्प्राप्तये । एतत् ' रुद्रस्त्वा ' इति यजुः । तमेव क्रूरं रुद्रम् । अस्याः सोमक्रयण्या आवृत्तये परस्तात् तामतिलङ्घ्य परभागे स्थापयति । अनुपदासुका क्षयरहिता । तदेतद्वेदनस्य प्रशंसनम् ॥

अथ विनियोगसंग्रहः —

" इयं क्षिप्त्वा घृते स्वर्णं जूरसीति जुहोति हि ।
शुक्रेति स्वर्णमुद्धृत्य वैश्वेत्याज्यमवेक्षते ॥ १ ॥
सूर्यं सूर्यमुपस्थाय चित्सोमक्रयणीं जपेत् ।
मित्रो दृष्ट्वा यद्पादं पूषा तामनुमन्त्रयेत् ॥
रुद्रस्तामावर्तयीत मन्त्राः संकीर्तिता नव ॥ २ ॥ " इति ॥

अथ मीमांसा ॥ एकादशाध्यायस्य द्वितीयपादे चिन्तितम्—

" प्रायणीयस्य निष्काले यो निर्वापोऽर्थकर्म तत् ।
निष्कासप्रतिपत्तिर्वोदयनीयस्य संस्कृतिः ॥ १ ॥
उताऽऽद्यः पूर्ववन्मैवं मुख्यस्य प्रकृतित्वतः ।
मध्योऽस्तु नोपयोक्ष्यसंस्कारस्य गुरुत्वतः ॥ २ ॥ "
(जैन्या ११·२·२१–२२ ) इति ॥

ज्योतिष्टोमे श्रूयते—" प्रायणीयस्य निष्कास उदयनीयमभि निर्वपति " (तैसं ६·१·५ ) इति । अत्र पूर्वन्यायेन निष्कासद्रव्यकमुदयनीयसमानकर्मकमन्यदर्थकर्मेत्याद्यः पक्षः । मुख्यस्योदयनीयस्य प्रकृतत्वात्, भिन्नप्रकरणाम्नातावभृथधर्मातिदेशवत् उदयनीयधर्मातिदेशासंभवात् नार्थकर्मत्वं [52]यदि, तर्हि निष्कासप्रतिपत्तिरिति मध्यमः पक्षोऽस्तु । सोऽपि न संभवति, उपयुक्तसंस्कारादुपयोक्ष्यमाणसंस्कारस्य गरीयस्त्वात् । तस्मात् उदनीयस्य[53] संस्कारः ॥

[54]तृतीयाध्यायस्य प्रथमपादे चिन्तिम्–

" क्रीणात्यरुणयेत्येतत् [55]संकीर्णं वा [56]क्रयैकभाक् ।
क्रयेणानन्वयात् कीर्णः सर्वद्रव्येषु रक्तिमा ॥

५२. आ–' यदि ' नास्ति । ५३. इ.उ–उदयनीय° । ५४. इ.उ.ना.पा.ह्वा–तृतीयस्य ।
५५. इ.उ–संपूर्णम् । ५६. क.मर–क्रयैकता ।

द्रव्यद्वारा क्रये योगात् तद्भागेनान्वय पुन ।
साक्षात्क्रये गुणस्यार्याद्द्रव्ये संनिहितेऽस्तु नौ ॥ ”

(जैन्या ३ १·११–१२ ) इति ॥

ज्योतिष्टोमे श्रूयते–“ अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति ” ( द्र तैस ६ १-६ ) इति । तत्राऽरुणशब्दोऽरुणिमानं गुणमाचष्टे । गुणिविषयतया प्रयुज्यमानस्याऽपि “ नागृहीतविशेषणा विशिष्टे बुद्धि ” ( द्र तवा–जैसू १ ३ ३३ ) इति न्यायेन गुणबोधकत्वात् अन्वयव्यतिरेकाभ्यां गुणमात्रे व्युत्पत्तेश्च[57] । तस्य चारुणिमगुणस्य तृतीयाश्रुत्या सोमक्रयसाधनत्वं प्रतीयते । तच्चानुपपन्नम् । अमूर्तस्य गुणस्य वासोहिरण्यादिवत् क्रयसाधनत्वासंभवात् । ततस्तृतीयाश्रुतेर्विनियोजकत्वाभावेन प्रकरणस्य अत्र[58] विनियोजकत्वं वक्तव्यम् । प्रकरणं च ग्रहचमसादिष्वखिलद्रव्येष्वरुणिमानं विनिवेशयति । न चानेन न्यायेन पिङ्गाक्ष्येकहायनीशब्दयोरपि सर्वद्रव्यगामित्वं शङ्कनीयम्[59], तयो शब्दयोर्द्रव्यवाचित्वात् । पिङ्गलवर्णे अक्षिणी यस्या गो[60] सा गौ पिङ्गाक्षी । एवमेकहायनी । यद्यप्येकगोवाचिनौ शब्दौ तथाऽपि विशेषणीभूतधर्मभेदात् शब्दद्वयम् । तच्च युगपत् प्रवृत्त सत् धर्मद्वयविशिष्टं गोद्रव्यं क्रयसाधनत्वेन विदधाति । न चैतद्द्रव्यमितरद्रव्ये विनिवेशयितुं शक्यम् । अरुणिमगुणो द्रव्येषु विशेषणत्वेनान्वेतु योग्यत्वात् तेषु निवेश्यते । तत्रैपाऽक्षरयोजना–‘ अरुणया ’ इत्येतत् पृथग्वाक्यम् । तत्र तृतीयाश्रुत्या प्राकरणिकानि साधनद्रव्याणि सर्वाण्यनूद्य प्रातिपदिकेन गुणो विधीयते यानि ज्योतिष्टोमे साधनद्रव्याणि तानि सर्वाण्यरुणानि कर्तव्यानीति । तस्माद्गुण संकीर्ण इति प्राप्ते ब्रूम–यद्यप्यमूर्तो गुणस्तथाऽपि हायनवल्लक्षितमेव गोद्रव्यमवच्छिनत्ति । तच्च द्रव्यं साधनमिति तद्द्वारा गुणस्य[61] क्रयेणान्वयो भवति । एवं सति वाक्यभेदो न भविष्यति[62] । ननु वाक्यभेदाभावेऽपि लक्षणा दुर्वारा । गुणवाचिन शब्दस्य गुणिद्रव्यपरत्वाङ्गीकारात् । नैवम् । गुणस्यैवात्र तृतीयाश्रुत्या साधनत्वमुच्यते । “तच्च द्रव्यद्वारमन्तरेण[63] न समर्पनीयमित्यर्थापत्त्या द्रव्यावच्छेदक कल्प्यते । तर्हि ग्रहचमसादिद्रव्यमवच्छिद्यतामिति चेत् । न । तस्य द्रव्यस्य क्रयसाधनत्वाभावेन “तदवच्छेदकगुणस्य[64] श्रूयमाणक्रयसाधनत्वासिद्धे । तर्हि “वाससा क्रीणाति”, “ अजया क्रीणाति ” ( तैस ६·१ १० ) इति वस्त्रादीनां क्रयसाधनत्वात् तदवच्छेदोऽस्त्विति चेत् । न । तेषां क्रयान्तरसाधनत्वात् । न हि तत्राग्निहोत्रे “पयोदध्यादि[65]विकल्पवत् क्रयानुवादेन वस्त्रादिविकल्पो युक्त । अनुवाद्यस्य क्रयमात्रस्याग्निहोत्रवदन्यत्राविधानात्[66] । ततो वस्त्रादिद्रव्यविशिष्टा क्रयान्तरविषय । न हि स्ववाक्यगतमेकहायनीद्रव्यमुपेक्ष्य वस्त्राद्यवच्छेदो युक्त । तस्मात् क्रयेण साक्षादन्वितयो द्रव्यगुणयो प्रश्चादन्यथाऽनुपपत्त्या परस्परावच्छेदकत्वेनान्वय । तथा सत्यारुण्यविशिष्टयैकहायन्या क्रीणीतेत्यर्थं पर्यवस्यति । तस्मादारुण्यगुण क्रयहेतुमेकहायनीमेव भजते ॥

अथ छन्द ॥ ‘ सूर्यस्य चक्षुरारुहम् ’ इत्यनुष्टुप् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके चतुर्थोऽनुवाक ॥ ४ ॥

---

५७. न–तद्व्युत्पत्तेश्च । ५८. द.उ.त.ना पा हा–‘ अत्र ’ नास्ति । ५९. न मर–‘ शङ्कनीयम् ’ नास्ति । ६०. आ–‘ गो ’ नास्ति । ६१. द उ ना पा हा–अरुणस्य । ६२ द उ ना पा हा–भवति । ६३–६३ ना हा–तच्च द्रव्यमन्तरेण, द उ पा–तद्द्रव्यमन्तरेण, भा–‘ तच्च द्रव्यद्वारमन्तरेण ’’ नास्ति । ६४ द उ न पा मर–तदवच्छेदे गुणस्य । ६५. त–पयोदध्यादि° । ६६ द.उ.पा–°न्यत्राविधानात् ।

सोमक्रयण्याः पदसंग्रहः ]

वस्व्य॑सि रु॒द्राऽस्यदि॑तिरस्यादि॒त्याऽसि॑ शु॒क्राऽसि॑ च॒न्द्राऽसि॒
बृह॒स्पति॑स्त्वा सु॒म्ने र॑ण्वतु रु॒द्रो वसु॑भि॒रा चि॑केतु

वस्वी॑ । अ॒सि॒ । रु॒द्रा । अ॒सि॒ । अदि॑तिः । अ॒सि॒ । आ॒दि॒त्या । अ॒सि॒ । शु॒क्रा । अ॒सि॒ । च॒न्द्रा । अ॒सि॒ । बृह॒स्पति॑ः । त्वा॒ । सु॒म्ने । र॒ण्व॒तु॒ । रु॒द्रः । वसु॑भि॒रिति॒ वसु॑–भिः । एति॑ । चि॒के॒तु॒ ।

षट्पदान्यनु नि क्रामति सोमक्रयणीं गच्छन्तीमनुगच्छति 'वस्व्यसि' इत्यादिभिः ॥ एते च षट्सु पदेषु षण्मन्त्राः । तत्र वसुरुद्रादित्याः सवनत्रयस्य देवताः । अदितिः प्रायणीयोदयनीययोः । शुक्रः सोमः । चन्द्रं हिरण्यं दक्षिणादिरूपम् । वस्वादिमतो यज्ञस्य साधनत्वात् सोमक्रयण्यपि तद्वतीत्युच्यते । [v]वस्वी वसुभिर्देवैः तद्वती त्वम् [v]असि । "छन्दसीवनिपौ" (पा ५.२.१०९ वा २) इतीकारो मत्वर्थीयः । आद्युदात्तत्वं चिन्त्यम्, वृषादिर्वा द्रष्टव्यः (पा ६.१.२०३) । यद्वा—वस्वी प्रशस्ता, प्रशस्तता च वसुभिः संबन्धात् । "वोतो गुणवचनात्" (पा ४.१.४४) इति ङीप् । तत्र हि "गुणवचनान्ङीबाद्युदात्तार्थम्" । (पा ४.१.४४ वा १) इत्युक्तम् । [v]रुद्रा रुद्रवती । "लुगकारेकाररेफाश्च" (पा ४.४.१२८ वा २) इति मत्वर्थीयोऽकारः । [v]अदितिः अदितिमती । तेनैव मतुपो लुक् (पा ४.४.१२८ वा २), अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६.२.२) । [v]आदित्या आदित्यवती । तेनैवाकारः । शुक्रवती [v]शुक्रा । स एवाकारः । यद्वा—शुक् दीप्तिः तद्वती । तेनैव रेफः । चन्द्रवती [v]चन्द्रा । स एवाकारः । यद्वा—आह्लादिनी । "स्फायितञ्चि" (उ १७८) इत्यादिना रक्प्रत्ययः । "षट्पदान्यनु नि क्रामति" (तैसं ६.१.८) इत्यादि ब्राह्मणम् ॥

सप्तमं पदमभिगृह्णाति—'बृहस्पतिः' इति ॥ [v]बृहस्पतिः ब्रह्मा । "ब्रह्म वै देवानां बृहस्पतिः" (तैसं ६.१.८) इति । वनस्पत्यादित्वादुभयपदप्रकृतिस्वरत्वम् (पा ६.२.१४०) । स त्वां [v]सुम्ने सुखे प्रदेशे [v]रण्वतु गमयतु पदं कारयतु । रवि मवि धवि गत्यर्थाः भौवादिकाः ।

चतुर्थेऽनुवाके क्रयप्रदेशं प्रति सोमक्रयणीगमनमुक्तम् । गतायां तस्यां क्रयाय सोमोन्मानस्य अवसरः । सप्तमपदसंग्रहस्तु गमनमध्य एव कर्तव्यः । ततः पञ्चमे सोऽभिधीयते ।

**वस्वीति** ॥ कल्पः—"तस्यै षट्पदान्यनु नि क्रामति वस्व्यसि रुद्रास्यदितिरस्याऽऽदित्याऽसि शुक्राऽसि चन्द्राऽसीति" (बौश्रौ ६.१२–१३) ॥ गच्छन्तीं सोमक्रयणीमनुगच्छन् षट्सु तदीयपदेषु षड्भिरेतैर्मन्त्रैः स्वपादं प्रक्षिपेदिति ॥ वसुरुद्रादित्याः सवनत्रयदेवताः । [v]अदितिः प्रायणीयोदयनीययोर्देवता । शुक्रशब्देन दीप्तिमान् सोमो विवक्षितः । चन्द्रशब्देनाह्लादकारि सुवर्णम् । हे सोमक्रयणि, त्वं वस्वादीनां स्वरूपम् [v]असि । तदपेक्षितसोमयागसाधनत्वात् ॥

**बृहस्पतिरिति** ॥ कल्पः—"सप्तमं पदमञ्जलिनाऽभिगृह्णाति[1] बृहस्पतिस्त्वा सुम्ने रण्वतु रुद्रो वसुभिरा चिकेत्विति" (बौश्रौ ६.१३) इति ॥ हे सोमक्रयणीपद, त्वां [v]बृहस्पतिः अस्मिन् सुखप्रदेशे रमयतु । [v]वसुभिः सहितः [v]रुद्रः त्वामनुजानातु आवर्तयतु वा ॥

१. आ.इ.उ.तं.पा.भां.म२.हा–पदमञ्जलिना गृह्णाति; [बौश्रौसूत्रे–'पदमभिगृह्णाति']।

**पृ॒थि॒व्यास्त्वा॑ मू॒र्धन्ना जि॑घर्मि देव॒यज॑न॒ इडा॑याः प॒दे घृ॒तव॑ति॒ स्वाहा॑**

पृ॒थि॒व्याः । त्वा॒ । मू॒र्धन् । आ । जि॒घ॒र्मि॒ । दे॒व॒यज॑न॒ इति॑ दे॒व–यज॑ने ।
इडा॑याः । प॒दे । घृ॒तव॒तीति॑ घृ॒त–व॒ति॒ । स्वाहा॑ ।

इदित्वान्नुम् ( पा ७ १ ५८ ) । तच्च[1] क्रियमाण वसुभि सह रुद्र आ चिकेतु अनुजानातु य. पशूना पति । *"कि ज्ञाने"* [2] जौहोत्यादिक , तस्य [2] प्रथमस्येद लोटि रूपम् ॥

तस्मिन् पदे जुहोति—' पृथिव्या ' इति ॥ पृथिव्या त्वा मूर्धन् मूर्धनि मूर्धस्थानीये पदे । " सुपा सुलुक् " ( पा ७ १ ३९ ) इति सप्तम्या लुक् । " न ङिसबुद्ध्योः " ( पा ८ २ ८ ) इति नलोपाभाव । देवयजने देवा इज्यन्ते अस्मिन् इत्यधिकरणे ल्युट् ( पा ३ ३·११७ ) । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६ २ १३९ ) । " पृथिव्या ह्येष मूर्धा यद्देवयजनम् " ( तैस ६·१·८ ) इत्यादि ब्राह्मणम् । इडाया पदे, इडा सोमक्रयणी । " पशवो वा इडा " ( तैस २ ६ ८ ) । तस्या सप्तमे पदे । कीदृशे ? घृतवति । " यदेतस्यै पदाद्घृतमपीड्यत " ( तैस ६ १ ८ ) इति ब्राह्मणम्, " सा यत्रयत्र न्यक्रामत् ततो घृतमपीड्यत " ( तैस २ ६ ७ ) इति च । हे आज्य, तस्मिन् तादृशे पदे त्वाम् आ जिघर्मि मर्यादया क्षारयामि । घृ क्षरणदीप्त्यो जौहोत्यादिक । " बहुल छन्दसि " ( पा ७ ४ ७८ ) इत्यभ्यासस्येत्त्वम् । स्वाहा[3] स्वाहुत भव । यद्वा—इत्थ कर्तव्यमिति स्वयमेव खलु सरस्वत्याह ॥

पृथिव्या इति ॥ कल्प –" अथैतस्मिन् पदे हिरण्य निधाय सपरिस्तीर्याभिजुहोति पृथिव्यास्त्वा मूर्धन्ना जिघर्मि देवयजन इडाया पदे घृतवति स्वाहेति " ( बौश्रौ ६ १३ ) इति ॥ हे घृत, त्वाम् इडाया[2] सोमक्रयण्या पदे[3] समन्तात् क्षारयामि । कीदृशे पदे ? पृथिव्या मूर्धस्थानीये देवताना[4] यागस्थाने घृतयुक्ते । तथाऽन्यत्राऽऽम्नातम्—" सा यत्रयत्र न्यक्रामत्ततो घृतमपीड्यत तस्माद्घृतपद्युच्यते " ( तैस २·६·७ ) इति ॥ मन्त्रान् व्याचिख्यासु [5] आदावनुष्ठान विधत्ते–" षट् पदान्यनु नि क्रामति षडहं वाङ्नाति वदत्युत संवत्सरस्यायने यावत्येव वाक्तामवरुन्धे " ( तैस ६·१ ८ ) इति । अस्ति कश्चित् पृष्ठ्य षडहाख्यो याग । तत्र षड्विधानि पृष्ठस्तोत्राणि[6] बृहद्रथन्तरवैरूपवैराजशाक्वररैवतनामकै सामभि साध्यानि । तानि च क्रमेण षट्सु दिनेषु गीयन्ते । न तु सप्तम [7] पृष्ठस्तोत्र किंचिदप्यस्ति । तत प्रधानभूतपृष्ठस्तोत्ररूपा[8] वाग्देवता षडहगता सप्तममतीत्य न क्रापि वदति । अपि च संवत्सरकालसबन्धिनि गवामयनेऽपि नाधिक [9] पृष्ठस्तोत्र वदति । तस्मादिडाख्यायाः सोमक्रयण्या षट्पदानामनुक्रमणं युक्तम् । तस्माद्वाक्स्वरूपत्वादेव सर्वां वाचमवरुन्धे ॥ विधत्ते–" सप्तमे पदे जुहोति सप्तपदा शक्वरी पशव शक्वरी पशूनेवाव रुन्धे सप्त ग्राम्या पशव सप्ताऽऽरण्या सप्त छन्दाꣳस्युभयस्यावरुद्ध्यै " ( तैस ६·१ ८ ) इति । [10] गवाश्वादयो ग्राम्या । कृष्णमृगादय आरण्या । तथा च बौधायन —" सप्त ग्राम्या [11] पशवोऽश्वो गौर्महिषी [11] वराहो हस्त्यश्वतरी चेत्यथ [12] सप्ताऽऽरण्या द्विखुराश्चैकखुराश्च पक्षिणश्च सरीसृपाश्च श्वापदाश्च

१ मै–किंच । *–*[ मैसूर–मुद्रितपुस्तके लिखितपुस्तकेषु च ' कित ज्ञाने ' इत्युपलभ्यते । ]
२–२ ति–जौहोत्यादिक तयो , मै–जौहोत्यादिकौ तयो । ३ त ति–तत्र त्वं स्वाहा ।

२ तं मर–' इडायः ' इत्यस्यानन्तर ' गोरूपाया ' । ३ इ उ पा भा–पादे । ४ मर–देवानाम् । ५. आ इ.उ पा भा हा–व्याचख्यासुः । ६. आ–स्तोत्राणि । ७ आ क–पृष्ठ्यस्तोत्रम् । ८. आ क–पृष्ठ्यस्तोत्ररूपा । ९. आ क–पृष्ठ्यस्तोत्रम् । १०. आ हा–गवादय । ११–११. आ–पशवोऽजाऽश्वो गौर्महिषी, इ उ हा–पशवो गौरजाश्वो महिषी; क मर–पशवोऽजाश्वो गौर्महिष । १२. इ.उ पा भा मर–हा–आरण्या ।

**परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान् द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा (१) अपि**

परिलिखितमिति परि—लिखितम् । रक्षः । परिलिखिता इति परि—लिखिताः । अरातयः । इदम् । अहम् । रक्षसः । ग्रीवाः । अपीति । कृन्तामि । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । इदम् । अस्य । ग्रीवाः (१) । अपीति । ५

पदं परिलिखति—'परिलिखितम्' इति । [v]परिलिखितं परितो नाशितं [v]रक्षः अस्तु यदत्र छिद्रान्वेषि । "गतिरनन्तरः" (पा ६.२.४९) इति पूर्वपदप्रकृतिस्वरत्वम् । किंच [v]अरातयः धनस्यादातारः शत्रवः । बहुलवचनात् कर्तरि क्तिन् (पा ३.१.८५,३.३.९६) । अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६.२.२) । तेऽपि [v]परिलिखिताः सन्तु अनेन पदविलेखनेन[4] । कथमित्याह— यदेतत् परिलिखामि [v]इदं खलु [v]अहं [v]रक्षसः [v]ग्रीवाः [v]अपि [v]कृन्तामि यथेष्टं कृन्तामि छिनद्मि । १० अपिशब्दः कामचारं द्योतयति । ग्रीवाशब्दो धमनिवचनः । तासां बहुत्वात् बहुवचनम् । यथा— "ग्रीवाभ्योऽण् च" (पा ४.३.५७) इति । कृती छेदने । "शे मुचादीनाम्" (पा ७.१.५९) इति नुम् । तथा [v]यः [v]अस्मान् [v]द्वेष्टि [v]यं [v]च [v]वयं [v]द्विष्मः, तस्य द्वेष्टुः द्वेष्यस्य शत्रोः ग्रीवाः इदमपि कृन्तामि यदेतत् परिलिखामि । "द्वौ वाव पुरुषौ" (तैसं ६.१.८) इत्यादि ब्राह्मणम् ॥ 'इदम्' इति क्रियाविशेषणत्वान्नपुंसकत्वम् ॥ १५

दारभाश्च मर्कटाश्च" (बौश्रौ २४.५) इति । गायत्रीत्रिष्टुबित्यादीनि [13]सप्त छन्दांसि । पशुजातीयं छन्दोजातीयं चेत्युभयमपि सप्तसंख्ययाऽवरुध्यते ॥ प्रथममन्त्रगतशब्दस्वरूपेणैव सोमक्रयण्या [14]महिमाऽऽख्यायत इत्याह—"वस्व्यसि रुद्राऽसीत्याह रूपमेवास्या एतन्महिमानं व्याचष्टे" (तैसं ६.१.८) इति ॥ द्वितीयमन्त्रे बृहस्पतिशब्दम् आ चिकेत्विति शब्दं च व्याचष्टे—"बृहस्पतिस्त्वा सुम्ने रण्वत्वित्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै पशूनव रुन्धे रुद्रो वसुभिरा चिकेत्वित्याहाऽऽवृत्यै" (तैसं ६.१.८) इति ॥ २० तृतीयमन्त्रार्थस्य प्रसिद्धिं दर्शयति—"पृथिव्यास्त्वा मूर्धन्ना जिघर्मि देवयजन इत्याह पृथिव्या ह्येष मूर्धा यद्देवयजनमिडायाः पद इत्याहेडायै ह्येतत् पदं यत् सोमक्रयण्यै घृतवति स्वाहेत्याह यदेवास्यै पदाद्घृतमपीड्यत तस्मादेवमाह" (तैसं ६.१.८) इति ॥ सोमक्रयणीपदे [15]हिरण्यप्रक्षेपं विधत्ते—"यदध्वर्युरनग्नावाहुतिं जुहुयादन्धोऽध्वर्युः स्याद्रक्षाꣳसि यज्ञꣳ हन्युर्हिरण्यमुपास्य जुहोत्यग्निवत्येव जुहोति नान्धोऽध्वर्युर्भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति" (तैसं ६.१.८) इति ॥ २५

परिलिखितमिति ॥ कल्पः—"[16]अपोद्धृत्य [17]-हिरण्यं शकलेन-[17] वा कृष्णविषाणया वा पदं परिलिखति परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान् द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपि कृन्तामीति" (बौश्रौ ६.१३) इति ॥ [v]परिलिखितं

४. तं.ति–पदपरिलेखनेन ।

१३. तं–'सप्त' नास्ति । १४. तं–महिमा प्रख्यायते; मर–महिमा प्रख्याप्यते । १५. इ.ड– हिरण्यनिक्षेपम् । १६. आ.इ.क.हा–अपोद्धृत्य । १७–१७. आ.क.मर–हिरण्यशकलेन; [बौश्रौसूत्रे 'हिरण्यं स्फ्येन' इति] । ३०

**कृन्तामि॒ अ॒स्मे रा॒य॑स्त्वे रा॒य॑स्तोते॑ रा॒यः॑**

कृ॒न्तामि॒ । अ॒स्मे इति॑ । राय॑ । त्वे इति॑ । राय॑ । तोते॑ । राय॑ ।

पदपांसून् धरण्यां समपति—' अस्मे ' इति ॥ [V]अस्मे अस्मासु । " सुपां सुलुक् " ( पा ७·१·३९ ) इति सप्तमीबहुवचनस्य शे-आदेश । अनेन पदपांसुसमापेन अस्माक [V]राय धनानि पश्वात्मकानि सन्तु । " पशवो वै सोमक्रयण्यै पदम् " ( तैस ६ १ ८ ) इत्यादि ब्राह्मणम् । अत्र चाध्वर्युरात्मार्थमेवाशास्ते, न यजमानार्थम् । " आत्मानमेवाध्वर्यु. पशुभ्यो नान्तरेति " ( तैस ६·१ ८ ) इति दर्शनात् ॥

यजमानाय प्रयच्छति—' त्वे ' इति ॥ [V]त्वे तव । " त्वमावेकवचने " ( पा ७ २ ९७ ) इति त्वादेश । पूर्ववत् सप्तम्येकवचनस्य शे-आदेश ( पा ७·१ ३९ ) । हे यजमान, त्वयि च [V]राय सन्तु ॥

यजमान पत्न्यै प्रयच्छति— ' तोते ' इति ॥ ऊत रक्षितम् । अवतेर्निष्ठाया " ज्वरत्वर " ( पा ६ ४ २० ) इत्यादिना ऊठादेश । त्वया ऊत त्वोतम् । 'त्वदूतम् ' इति वक्तव्ये व्यञ्जनद्वय लुप्यते । पृषोदरादित्वात् रूपसिद्धि ( पा ६ ३ १०९ ) । " तृतीया कर्मणि " ( पा ६ २·४८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । हे पत्नि, त्वया रक्षिते च गृहे [V]राय सन्तु । " अर्धो वा एष आत्मन " ( तैस ६.१·८ ) इत्यादि ब्राह्मणम् । आहुश्च– " तत्सा गृहेषु निदधाति " ( आपश्रौ १० २३·९ ) इति ॥

भाषितम् । [V]रक्ष इति जात्यभिप्रायेणैकवचनम् । [V]ग्रीवा इति व्यक्त्यभिप्रायेण बहुवचनम् । [V]इदम् इति हस्ताभिनय । [V]कृन्तामि छिनद्मि ॥ रक्षस प्रसक्ति पूर्वोक्ता स्मारयन् मन्त्र व्याचष्टे–" काण्डेकाण्डे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति परिलिखितꣳ रक्ष परिलिखिता अरातय इत्याह रक्षसामपहत्या इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान् द्वेष्टि य च वय द्विष्म इत्याह द्वौ वाव पुरुषौ य चैव द्वेष्टि यश्चैन द्वेष्टि तयोरेवानन्तराय ग्रीवा कृन्तति " ( तैस ६·१·८ ) इति । अनन्तराय द्वयोर्मध्य एकतरस्याप्यन्तरायो यथा न भवति तथेत्यर्थ ॥

अस्मे इति ॥ कल्प —" अस्मे राय इति स्वात्या यावन्मूतꣳ समोप्य त्वे राय इति यजमानाय प्रयच्छति । तोते राय इति पत्न्यै " ( आपश्रौ १० २३ ३–४ ) इति । स्पृत घृतेनाऽऽप्लुतम् । तादृशं रज सोमक्रयण्या सप्तमपदस्थाने यावदस्ति तावत् सर्व पात्रे क्षिपेत् ॥ अस्मिन्नध्वर्यौ [V]राय रजोरूप धन विशतु । [V]त्वे त्वयि यजमाने । [V]तोते कलत्रे ॥ अनुष्ठानविधिपुर सर "मन्त्रान् व्याचष्टे– " पशवो वै सोमक्रयण्यै पद यावन्मूतꣳ स वपति पशूनेवाव रुन्धेऽस्मे राय इति स वपत्यात्मानमेवाध्वर्यु पशुभ्यो नान्तरेति त्वे राय इति यजमानाय प्र यच्छति यजमान एव रयिं दधाति तोते राय इति पत्निया अर्धो वा एष आत्मनो यत्पत्नी यथा गृहेषु निधत्ते तादृगेव तत् " ( तैसं ६ १ ८ ) इति ॥

१८ द उ पा मा हा–मन्त्रम् ।

**सं दे॑वि दे॒व्योर्व॑श्या॑ पश्यस्व॒ त्वष्टी॑मती ते सपेय सु॒रेता॒
रेतो॑ दधा॑ना वी॒रं वि॑देय॒ तव॑ सं॒दृशि॑**

समिति॑ । दे॒वि॒ । दे॒व्या । उ॒र्वश्या॑ । प॒श्य॒स्व॒ । त्वष्टी॑मती । ते॒ । स॒पे॒य॒ । सु॒रेता॒ इति॑ सु–रेताः॑ ।
रेतः॑ । दधा॑ना । वी॒रम् । वि॒दे॒य॒ । तव॑ । सं॒दृशीति॑ सं–दृशि॑ ।

पत्नीं सोमक्रयण्या [5]समीक्षयति—'सं देवि' इति ॥ उरूणि महान्ति श्रेयांसि अश्नुते [6]प्राप्नोतीत्युर्वशी । अश्नोतेः "कर्मण्यण्" (पा ३-२-१) । "संज्ञापूर्वको विधिरनित्यः" (परिभाषेन्दुशेखर ९३-१) इत्युपधाया वृद्धिर्न क्रियते । वर्णव्यत्ययेन वा ह्रस्वत्वम् । "परादिश्छन्दसि बहुलम्" (पा ६-२-१९९) इत्युत्तरपदाद्युदात्तत्वम् । [v]देव्या द्योतनवत्या त्वया दृश्यमानया । हे [v]देवि सोमक्रयणि, [v]सं [v]पश्यस्व सम्यग्दर्शनवती भव । यथेयमुरूणि श्रेयांस्यश्नुते तथा पश्येति भावः । "दृशेश्चेति वक्तव्यम्" (द्र. पा १-३-२९ वा २) इत्यात्मनेपदम् । "उदात्तयणो हल्पूर्वात्" (पा ६-१-१७४) इति देव्याः परस्यास्तृतीयायाः उदात्तत्वम् ॥ १०

पत्नी यजमानमीक्षते—'त्वष्टीमती' इति आस्तारबृहत्या त्वष्टदशपङ्क्त्यक्षरया ॥ तक्षू त्वक्षू तनूकरणे । त्वक्षेः क्तिनि (पा ३-३-९४) त्वष्टिः प्रजननविषयं नैशित्यं सामर्थ्यविशेषः, तद्वती [v]त्वष्टीमती [7]मिथुनीभावयोग्या । अहं [v]ते तुभ्यं [v]सपेय मिथुनीभवेयम् । षप समवाये भौवादिकः[8] । व्यत्ययेनात्मनेपदम् (पा ३-१-८५) । "क्रियाग्रहणं च कर्तव्यम्" (द्र. पाभा १-४-३२) इति १५

**समिति** ॥ कल्पः—"अथ पत्नीं [19]सोमक्रयण्या समीक्षयति[19] सं देवि देव्योर्वश्या पश्यस्वेति" (बौश्रौ ६-१३) इति ॥ हे [v]देवि सोमक्रयणि, त्वम् [v]उर्वश्या [v]देव्या सहेमां पश्य ॥ अयं मन्त्रः [20]स्पष्टार्थत्वात् ब्राह्मणेनोपेक्षितः ॥

**त्वष्टीमतीति** ॥ बौधायनः—"अथ पत्नी यजमानमीक्षते त्वष्टीमती ते सपेय सुरेता रेतो दधाना वीरं विदेय तव संदृशीति" (बौश्रौ ६-१३) इति । आपस्तम्बः—"त्वष्टीमती ते सपेयेति पत्नी सोमक्रयणीमभिमन्त्रयते" (आपश्रौ १०-२३-७) इति ॥ हे यजमान, त्वया सह [v]सपेय संगच्छेय । अथवा हे सोमक्रयणि, [v]ते तवानुग्रहेणाहं पत्या संगच्छेय । कीदृशी ? [v]त्वष्टीमती, स्त्रीपुरुषमिथुनरूपाणां पशुमनुष्यादीनां शरीरनिर्माता त्वष्टा । तथा चाग्न्युपस्थानप्रकरणे श्रूयते—"यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि वि करोति तावच्छो वै तत् प्रजायते" (तैसं १-५-९) इति । तादृशस्य त्वष्टुरनुग्रहेणोपेता शोभनसमोघं स्वकीयं रेतो यस्याः सा [v]सुरेताः । तादृशमेव पत्युः [v]रेतः [v]दधाना । [v]तव पत्युः सोमक्रयण्या वा [v]संदृशि अभीक्ष्णं वीक्षणं वर्तमाना [v]वीरं स्वोचितगुणैरुपेतं[21] शूरं पुत्रं [v]विदेय लभेय ॥ त्वष्टीमतीत्येतस्य पदस्याभिप्रायमाह—"त्वष्टीमती ते सपेयेत्याह त्वष्टा वै पशूनां मिथुनानां रूपकृद्रूपमेव पशुषु दधाति" (तैसं ६-१-८) इति ॥ २०, २५

५. तं.ति.पं-संख्यापयति । ६. मै-व्याप्नोती' । ७. मै-मिथुनीभवने योग्या । ८. मै-'भौवादिकः' नास्ति । ३०

१९-१९. इ.उ.पा.मां-सोमक्रयणीमीक्षयति; हा-सोमक्रयण्या ईक्षयति । २०. इ.उ.तं.ग्रा.मां.म२.हा-स्पष्टत्वात् । २१. आ.क.म२.हा-स्वोचितगुणेषु ।

माऽहम् रायस्पोषेण वि यौषम् ॥ ५ ॥

[ अस्य श्रीया एकान्नत्रिंशार्च ]

मा । अहम् । रायः । पोषेण । वीति । योषम् ॥ ५ ॥

[ मैस १ २ ४, कास २ ५, कपिस १ १८, वास ४ २१–२३ ]

५ सम्प्रदानत्वात् 'ते' इति चतुर्थी (पा २ ३ १३)। "पत्ये शेते" (द्र पाभा १ ४.३२) इति यथा। यद्वा—त्वष्टुर्व्यापारास्त्वष्टय । विविधप्रजानिर्माणशक्तय.। "त्वष्टा वै पशूना मिथुनाना रूपकृत्" (तैस ६ १.८) इति ब्राह्मणमप्युपपद्यते। त्वष्टारमाचक्षते (द्र.पा ६.१.२६ वा ६) इति त्वष्टीयते। "सर्वधातुभ्य." (उ ५६७) इतीन्प्रत्यय । तद्वती त्वष्टीमती। सर्वत्र "अन्येषामपि दृश्यते" (पा ६ ३ १३७) इति दीर्घ । किंच सुरेता. शोभनममोघ यस्या निषिक्त शुक्र सा सुरेता.।

१० "सोर्मनसी अलोमोषसी" (पा ६.२.११७) इत्युत्तरपदाद्युदात्तत्वम्। रेत च त्वया निषिक्त दधाना गर्भार्थमन्तर्बिभ्रती। "अभ्यस्तानामादि" (पा ६.१.१८९) इत्याद्युदात्तत्वम्। अहमीदृशी भूत्वा वीर पुत्र विदेय लभेय। वेते प्रजननवृत्ते औणादिको रक्प्रत्ययः (उ १७८)। विदिर्लाभे स्वरितेत्। आशिषि लिङि "लिङ्याशिष्यङ्" (पा ३.१.८६), "सीयुट्" (पा ३ ४ १०२)। "छन्दस्युभयथा" (पा ३.४ ११७) इति सार्वधातुकत्वात्

१५ सलोप । अतो लोपाभावश्छान्दस । तव सदृशि सदर्शने सस्नेहदृष्टिलाभे। सपदादित्वात् क्विप् (पा ३ ३ १०८ वा ९)। कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६ २ १३९)॥

यजमान. सोमक्रयणीमीक्षते—'माऽहम्' इति चतुर्थेन पादेन ॥ अह राय धनस्य पोषेण पुष्ट्या मा वि योष वियुक्तो मा भूवम्, हे सोमक्रयणि, त्वत्प्रसादात्। यौतेर्लिङि "छन्दस्युभयथा" (पा ३.४.११७) इति सिच सार्वधातुकत्वात् इडभाव (द्र पा ७ २ ३५)। "सन्नापूर्वको

२० विधिरनित्य" (परिभाषेन्दुशेखर ९३ १) इति सिचि वृद्धिर्न क्रियते। यद्वा—युङ् बन्धने भ्वा-दिक अनुदात्त, "युगुक्षण" (द्र पाभा, काशिका ७ २ १०) इत्यत्र हि कारिकाया सानुबन्धस्य ग्रहणात। वृद्ध्यभाव पूर्ववत्। यद्वा—"लेटोऽडाटौ" (पा ३.४.९४) इत्याऽडागम। "इतश्च लोप" (पा ३ ४ ९७), "सिब्बहुल लेटि" (पा ३.१ ३४)। "ऊडिदम्" (पा ६.१ १७१) इत्यादिना राय परस्या षष्ठ्या उदात्तत्वम्। "षष्ठ्या पतिपुत्र" 

२५ (पा ८ ३.५३) इत्यादिना विसर्जनीयस्य संहितायां सकार ॥

॥ इति प्रथमकाण्डस्य द्वितीयप्रपाठके पञ्चमोऽनुवाक ॥ ५ ॥

माऽहमिति ॥ बौधायन —"सोमक्रयणीमीक्षते माऽहम् रायस्पोषेण वि योषमिति" (बौश्रौ ६ १३) इति। आपस्तम्ब —"माऽहम् रायस्पोषेण वि योषमिति पत्नी पद प्रदीयमानमनु-मन्त्रयते" (आपश्रौ १०.२३.५) इति ॥ वि योष वियुक्तो मा भूवम् ॥ अयं मन्त्रो ब्राह्मणेन

३० ९. त–विदूल लाभे।

उपेक्षितः ॥ एतस्य सोमक्रयणीपदरजसस्तृतीयं भागं गार्हपत्ये प्रक्षिपेत्। भागान्तरमाहवनीय इति विधत्ते—" अस्मै वै लोकाय गार्हपत्य आ धीयतेऽमुष्मा आहवनीयो यद्गार्हपत्य उपवपेदस्मिँल्लोके पशुमान्त्स्याद्यदा-हवनीयेऽमुष्मिँल्लोके पशुमान्त्स्यादुभयोरुप वपत्युभयोरेवैनं लोकयोः पशुमन्तं करोति " ( तैसं ६·१·८ ) इति। अत्र सूत्रम्—" [22]पदं त्रेधा[22] विभज्य तृतीयमुत्तरतो गार्हपत्यस्य [23]शीते भस्मन्युपवपति। तृतीयमाहवनीयस्य। तृतीयं पत्न्यै प्रयच्छति। तत्सा गृहेषु निदधाति " ( आपश्रौ १०·२३·९ ) इति ॥ ५.

अत्र विनियोगसंग्रहः—

" षट्पदानुक्रमो[24] वस्वी वृहस्तत्पदसंग्रहः।
पृथिव्यास्तत्पदे हुत्वा परि संवेष्ट्य रेखया ॥ १ ॥
अस्मे स्थाल्यां पदं क्षिप्त्वा त्वे दद्यात् स्वामिने पदम्।
तोते पत्न्यै पदं दद्यात् सं क्रयण्या ह्यवेक्षयेत् ॥ २ ॥ १०.
त्वष्टी तां मन्त्रयेत् पत्नी माऽहं तद्दीयते यदा।
पदं तदा मन्त्रयेत मन्त्राः पञ्चदशेरिताः ॥ ३ ॥ " इति ॥

अथ मीमांसा ॥ चतुर्थाध्यायस्य प्रथमपादे चिन्तितम्—

" सोमक्रयण्यानयने पदकर्म प्रयोजकम्।
न वाऽऽद्योऽक्षाञ्जनस्यापि क्रयवत् संनिकर्षतः ॥ १५.
तृतीयया क्रयार्थो गौस्तद्द्वाराऽऽनयनस्य च।
तादर्थ्यात्तत्प्रयुक्तत्वं न प्रयोजकता पदे ॥ " ( जैन्या ४·१·२०—२१ ) इति ॥

ज्योतिष्टोमे सोमक्रय आम्नायते—" एकहायन्या क्रीणाति " ( तैसं ६·१·६ ) इति। [25]सेयमेक-हायनी गौर्यदा सोमं क्रेतुम् [26]आनीयते तदाऽध्वर्युस्तस्याः पृष्ठतोऽनुगच्छति[27]। तदप्याम्नातम्—" षट् पदान्यनु नि क्रामति " ( तैसं ६·१·८ ) इति[25]। ततः सप्तमे पदे हिरण्यं निधाय हुत्वा तत्पदगतं रजो गृह्णीयात्। २० एतदपि श्रूयते—" सप्तमपदमध्वर्युरञ्जलिना गृह्णाति " ( द्र.आपश्रौ १०·२३·२ ) इति। यदेतत् रजः संगृह्यते हविर्धानयोः शकटयोरक्षे तेन रजसा युक्तमञ्जनं क्षिपेत्। एतदपि श्रुतम्—" यर्हि वा एतत् सं भरन्ति यत्सोमक्रयण्यै पदं यज्ञमुख[29] हविर्धाने यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्यात् " ( तैसं ६·१·३ ) इति। तत्र यथा क्रयः संनिकृष्टस्तथैव पदकर्माप्यक्षाञ्जनं संनिकृष्टम्। अथोच्येत दध्यानयनमामिक्षया यथा संयुक्तं न तथाऽक्षाञ्जनं सोमक्रयण्यानयने संयुक्तमिति। तन्न। क्रयेऽपि २५ पदसंयोगस्य तुल्यत्वात्। अथाऽसंयुक्तोऽपि क्रयो गवानयनेन निष्पाद्येत तर्ह्यक्षाञ्जनमपि तेन निष्पाद्यत इति समानत्वात् क्रयवत् पदकर्मापि सोमक्रयण्यानयनस्य[28] प्रयोजकमिति प्राप्ते ब्रूमः—' एकहायन्या क्रीणाति ' इति तृतीयाश्रुत्या गोः क्रयार्थत्वं गम्यते। गोद्वारा तदानयनमपि क्रयार्थमेवेति क्रय एवाऽऽनयने प्रयोजकः। न च पदकर्मार्थत्वं गोर्वा तदानयनस्य वा क्वचित् श्रुतं तस्मात्तदप्रयोजकम् ॥

अस्मिन्ननुवाके सर्वाणि यजूंष्येवेति [29]नात्र छन्द इति ॥ ३०

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

२२-२२. आ.क.हा-पदरजस्त्रेधा; [ आपश्रौसूत्रे ' पदं त्रैधम् ' इति। ]। २३. तं-शान्ते। २४. आ.क.पा.भां.हा-°नुक्रमा। २५-२५. इ.उ.पा.भां.हा-' सेयमेकहायनी ··· इति ' नास्ति। २६. आ.क-नीयते। २७. -आ.क-गच्छति। २८. तं-सोमक्रयण्यानयनेऽस्य। २९. तं.भर-नास्ति। ३५

अ॒ꣳशुना॑ ते अ॒ꣳशुः पृ॑च्यतां॒ परु॑षा॒ परु॑र्ग॒न्धस्ते॒ काम॑मवतु॒
मदा॑य॒ रसो॒ अच्यु॑तो॒ऽमात्यो॑ऽसि शु॒क्रस्ते॒ ग्रहो॑-

अ॒ꣳशुना॑ । ते॒ । अ॒ꣳशुः । पृ॒च्य॒ता॒म् । परु॑षा । परुः॑ । ग॒न्धः । ते॒ । काम॑म् । अ॒व॒तु॒ ।
मदा॑य । रसः॑ । अच्यु॑तः । अ॒मात्यः॑ । अ॒सि॒ । शु॒क्रः । ते॒ । ग्रहः॑ ।

सहिरण्येन पाणिना राजानमभिमृशति—'अशुना' इति ॥ अशुः सूक्ष्मावयव । त्वदीय. अशु अशुना अश्वन्तरेण पृच्यता सर्वदा सयुज्यताम् । प्राणादिना निमित्तेन मा कदाचिदपि तेन विश्लिष्टो भूत् । किंच परु पर्व, तच्च परुषा पर्वणा सपृच्यताम् । अङ्गच्छेदादिना कदाचिदपि तेन विश्लिष्ट मा भूत् । अपि च यागमविघ्नेन निर्वर्तयेमेत्येव योऽयमस्माक काम इच्छा त ते तव गन्ध अवतु रक्षतु उद्दीपयतु वा । मदाय देवतातृप्तये त्वदीयः रस अच्युत भवतु यागान्मादकरणाद्वा मा च्योष्ट । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ( पा ६ २ २ ) । कस्मादेवमुच्यत इति चेत् । अत आह—'अमात्यः असि' इति । अमा सह भवतीति अमात्य । "अव्ययात्त्यप्" (पा ४ २ १०४), "अमेहक्वतसित्रेभ्य एव" ( द्र. पाभा ४ २ १०४ ) । यज्ञस्येन्द्रस्य यजमानस्य वा सहायस्त्वमसि । किंच शुक्र हिरण्य तव ग्रह. परिग्रह., हिरण्येन त्व प्राप्यसे गृह्यसे वा । सहिरण्येन पाणिना ग्रहणात् क्रयणाद्वा ॥

पञ्चमेऽनुवाके सोमक्रयण्या पदसग्रहो मार्गमध्येऽभिहित । अथाऽऽगतया सोमक्रयण्या सोम क्रेतव्य । स च सोमस्य उन्मानपूर्वक इति षष्ठे सोमोन्मानमभिधीयते ।

अꣳशुनेति ॥ बौधायन —" हिरण्यवता पाणिना राजानमभिमृशत्यꣳशुना ते अꣳशु पृच्यता परुषा परुर्गन्धस्ते काममवतु मदाय रसो अच्युतोऽमात्योऽसि शुक्रस्ते ग्रह इति " ( बौश्रौ ६ १४ ) इति । आपस्तम्ब —" अꣳशुना ते अꣳशु पृच्यतामिति यजमानो राजानमभिमन्त्रयते " ( आपश्रौ १०· २४ ५ ) इति ॥ अशु सूक्ष्मोऽवयव । परु पर्व । हे सोम, तवैकेन अशुना अन्य अशु संयुज्यताम् । कोऽप्यशुर्वाय्वाद्युपघातेन मा वियुज्यताम् । तथा परुषा परु संयुज्यताम् । कस्यापि परुषो भङ्गो मा भूत् । त्वदीय गन्ध यजमानस्य कामं पालयतु । त्वदीय रस मदाय देवाना हर्षाय विनाशरहितो भवतु । त्वम् अमात्य असि यजमानेन देवताभिश्च सह सर्वदा तिष्ठसि । तव स्वीकार शुक्र हिरण्य-साध्य ॥ एतं मन्त्र व्याचिख्यासुरादौ सोमविक्रयिण प्रत्यध्वर्यो प्रैषमन्त्रमुत्पादयति—" ब्रह्मवादिनो वदन्ति विचित्य सोमा३ न विचित्या३ इति सोमो वा ओषधीनाꣳ राजा तस्मिन् यदापन्नं ग्रसितमेवाऽस्य तद्यद्विचिनुयाद्यथाऽऽस्याद्ग्रसित निष्खिदति तादृगेव तद्यद्व विचिनुयाद्यथाऽक्षन्नापन्नं विधावति तादृगेव तत् क्षोधुकोऽध्वर्यु स्यात् क्षोधुको यजमान सोमविक्रयिन्त्सोमꣳ शोधयेत्येव ब्रूयाद्यदीतर यदीतरमुभयेनैव सोमविक्रयिणमर्पयति तस्मात् सोमविक्रयी क्षोधुक " ( तैस ६·१ ९ ) इति । विचयो नाम सोमपतितस्य तृणादेरपनयनम् । तस्मिन्नोषधीना राज्ञि सोमे यत्तृणादिकमापन्न पतित तत्तृणादिकमस्य सोमस्य ग्रसितमेव

१ आ इ पा—भाग ; क हा—विभाग । २. ड उ पा मा हा—'त्वम्' नास्ति । ३ क त म२—व्याचिख्यासुरादौ । ४. आ इ क हा—सोमस्य, म२—सोमे पतितस्य ।

सोमोन्मानम् ]

ग्रास एव भवति । तथा सति यदि विचिनुयात् तृणादिकमपनयेत् तदानीं यथा लोके ग्रसितमन्नं निष्क्रिपति मक्षिकाद्युपद्रवेण वमति तत् तृणापनयनं[5] तादृक् स्यात् । यदि न विचिनुयात् तदानीं यथा चक्षुषि पतितमितस्ततो विधावनेन व्यथां जनयति तदविवेचनं तादृक् स्यात् । ततो दोषद्वयपरिहाराय सोमविक्रयिन् इत्यादिप्रैषमन्त्रं ब्रूयात् । तस्मिन्नुक्ते सति यदीतरं[6] विचयदोषः यदीतरं त्वविचयदोषस्तेनोभयेन दोषेण[7] सोमविक्रयिणमेव योजयति । तस्मादसौ क्षोधुको न रक्षितो भवेत् ॥ अत्र सूत्रम्—" उत्तरवेदिदेश उपरवदेशे वा लोहितं[8] चर्मोऽऽनडुहं प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य दक्षिणे चर्मपक्षे राजानं निवपति । उत्तरोऽस्मिन्नुपविशति सोमविक्रयी । उदकुम्भꣳ राजानं सोमविक्रयिणमिति सर्वतः परिश्रित्योत्तरेण द्वारं कृत्वा विचित्यः सोमा३ इत्युक्तम् । सोमविक्रयिन् सोमꣳ शोधयेत्युक्त्वा पराङावर्तते " ( आपश्रौ १०·२०·१३–१५ ) इति ॥ यथोक्तं कर्म विधत्ते–" अरुणो ह स्माऽऽहौपवेशिः सोमक्रयण एवाहं तृतीयसवनमव रुन्ध इति पशूनां चर्मन्मिमीते पशूनेवाव रुन्धे पशवो हि तृतीयꣳ सवनम् " ( तैसं ६·१·९ ) इति । अरुणनामकः कश्चिदुपवेशस्य पुत्रः पशुचर्मणि सोमं मिमीते । अत्रैव हि तृतीयसवनं संपादयिष्यामीति तस्याभिप्रायः । सवनीयानुबन्ध्याख्ययोः पश्वोस्तृतीयसवने सद्भावात् पशवस्तृतीयसवनम् । अतः पशुचर्मणा तत्प्राप्तेः सोमोन्मानं तत्र कुर्यादित्यर्थः ॥ चर्मण उत्तरलोमास्तरणं विधत्ते—" यं कामयेतापशुः स्यादित्यृक्षतस्तस्य मिमीतर्क्षं वा अपशव्यमपशुरेव भवति यं कामयेत पशुमान्त्स्यादिति लोमतस्तस्य मिमीतैतद्वै पशूनाꣳ रूपꣳ रूपेणैवास्मै पशूनव रुन्धे पशुमानेव भवति " ( तैसं ६·१·९ ) इति । ऋक्षतो रूक्षे परुषे निर्लोमभागे । लोमतः सलोमभागे ॥ उदकुम्भसंनिधिं विधत्ते—" अपामन्ते क्रीणाति सरसमेवैनं क्रीणाति " ( तैसं ६·१·९ ) इति ॥ मन्त्रे दुर्बोधभागं व्याचष्टे—" अमात्योऽसीत्याहामैवैनं कुरुते शुक्रस्ते ग्रह इत्याह शुक्रो ह्यस्य ग्रहः " ( तैसं ६·१·९ ) इति । अमैव सहैव स्थित[9] इत्यर्थः । सोमस्वीकारः शुक्रो हि सुवर्णसाध्यो हीत्यर्थः ॥ शकटेन सह सोमं प्राप्तुं गच्छेदिति विधत्ते—" अनसाऽच्छ याति महिमानमेवास्याच्छ याति " ( तैसं ६·१·९ ) इति । शकटरूपेण बहुमानेन सोमस्य महिमा प्रकाशितो भवति ॥ तमेव विधिमनूद्य प्रशंसति—" अनसाऽच्छ याति तस्मादनोवाह्यꣳ समे जीवनम् " ( तैसं ६·१·९ ) इति । समे प्रदेशे जीवनसाधनं धान्यं शकटवाह्यं तद्वत् सोमः ॥ विषमे तु प्रदेशे शिरसा सोमवाहनं विधत्ते— " यत्र खलु वा एतꣳ शीर्ष्णा हरन्ति तस्माच्छीर्षहार्यं गिरौ जीवनम् " ( तैसं ६·१·९ ) इति । यत्र यदा पर्वते सोमलतोत्पत्तिप्रदेशे सोमं क्रीणन्ति तदेति शेषः । लोकेऽपि दुर्गमे गिरौ धान्यं शिरसा वहन्ति[10] । अत्र सूत्रम्—" उद्धृतपूर्वफलकेनानसा परिश्रितेन छदिष्मता प्राञ्चः सोममच्छ यान्ति । शीर्ष्णा गिरौ क्रीतꣳ हरन्ति । अपरेणोत्तरेण वा राजानं प्राग्रीवमुदग्रीवं वा नद्धयुगꣳ शकटं सुवुकप्रतिष्ठितम् " ( आपश्रौ १०·२४·२–४ ) इति । तस्मिञ्छकटे पूर्वस्थापितं मध्यमफलकमुद्धृत्य नूतनं फलकं स्थापनीयम् । अथवोद्धृतमुन्नतं पूर्वफलकरूपं मुखं यस्य शकटस्य तदुद्धृतपूर्वफलकम् । परिश्रयः शकटस्योपरि गृहकुड्यवत् परितो वेष्टनम् । छदिरुपरितनमाच्छादनम् ॥

५. आ–तृणाद्यपनयनम् ; क–तृणाद्यपनयने । ६. आ–यदीतरमितरः । ७. इ.तं.पा.भां.म२– ' दोषेण ' नास्ति । ८. आ.इ.पा.हा–रोहितम् । ९. तं–अवस्थितः । १०. तं.म२–हरन्ति ।

-ऽभि त्यं दे॒वꣳ स॑वि॒तार॑मू॒ण्यो॑ः क॒विक्र॑तु॒मर्चा॑मि
स॒त्यस॑वसꣳ रत्न॒धाम॒भि प्रि॒यं म॒तिमू॒र्ध्वा

अ॒भीति॑ । त्यम् । दे॒वम् । स॒वि॒तार॑म् । ऊ॒ण्यो॑ः । क॒विक्र॑तु॒मिति॑ क॒वि-क्र॒तु॒म् । अर्चा॑मि । स॒त्यस॑व॒समिति॑ स॒त्य-स॒व॒स॒म् । र॒त्न॒धामिति॑ रत्न-धाम् । अ॒भीति॑ । प्रि॒यम् । म॒तिम् । ऊ॒र्ध्वा ।

५ अतिच्छन्दसर्चा सोमं मिमीते—' अभि त्यं देवम् ' इति ॥ अत्यष्टिरियं षोडशाक्षरपादा । ' अर्चामि ' इति द्वितीयस्यादि:, ' ऊर्ध्वा यस्य ' इति तृतीयस्य, ' हिरण्यपाणि ' इति चतुर्थस्य ॥ " अतिच्छन्दा वै सर्वाणि छन्दांसि " ( तैस ६ १ ९ ) इति ब्राह्मणम् । [v]अभि [v]त्यं [v]देवं [v]सवितारं सर्वस्य प्रेरयितारम्, [v]ऊण्यो: सर्वस्यावित्र्यो: द्यावापृथिव्यो: । अवतेरौणादिकेऽनि-प्रत्यये ( उ २६७ ), " ज्वरत्वर " ( पा ६ ४ २० ) इत्यादिना ऊठि छान्दसं णत्वम् । १० " उदात्तस्वरितयो " ( पा ८ २ ४ ) इत्योकार: स्वर्यते । " उदात्तयण " ( पा ६.१ १७४) इति व्यत्ययेन प्रवर्तते । [v]कविक्रतुं कवीनां मेधाविनामिव क्रतु: कर्म यस्य तादृशं कमनीयकर्माणं वा । [v]सत्यसवसं सत्यानुज्ञं सत्यप्रेरणं वा । [v]रत्नधां रत्नानां रमणीयानां धनानां धारयितारं [१-]रत्नानि धारयन्तं वा[-१] । " आतो मनिन् " ( पा ३.२ ७४ ) इति विच् । [v]अभि [v]प्रियं प्रियमभि, प्रियं लक्ष्यीकृत्य सर्वस्य प्रियमुत्पादयामीति रत्नानि धारयन्तम् । यद्वा— आभिमुख्येन

१५ अभीति ॥ बौधायन —" अथैनमतिच्छन्दसर्चा मिमीते । एकयैकयोत्सर्गं मिमीते । अथात-याम्नियायातयाम्नियैवैनं "मिमीते सर्वास्वङ्गुष्ठमुपनिगृह्णात्यभि त्यं देवꣳ सवितारमूण्यो: कविक्रतुमर्चामि सत्यसवसꣳ रत्नधामभि प्रियं मतिमूर्ध्वा यस्यामतिर्भा अदिद्युतत् सवीमनि हिरण्यपाणिरमिमीत सुक्रतु: कृपा स्वरिति । पञ्चकृत्वो यजुषा "मिमीते पञ्चकृत्वस्तूष्णीम् " ( बौश्रौ ६ १४ ) इति । आपस्तम्ब — " क्षौमं वासो द्विगुणं त्रिगुणं वा प्राग्दशमुत्तरदशं चर्मण्यास्तृणाति । उदग्दशं वा । तस्मिन् हिरण्यपाणि-२० रङ्गुष्ठेन कनिष्ठिकया चाङ्गुल्याऽꣳशून् सगृह्णान्यञ्चाभि त्यं देवꣳ सवितारमित्यतिच्छन्दसर्चा मिमीते " ( आपश्रौ १० २४ ७-८ ) इति ॥ तं [v]देवम् [v]अभि [v]अर्चामि । कीदृशम् ? [v]ऊण्यो: द्यावापृथिवीरूपयोर्हस्तयो: [v]सवितारं प्रेरकम् । ऋषीणां वेदार्थविदां क्रतुर्योगो यस्य प्रेरकस्य सोऽयं कविक्रतु: । अत एव सत्य-फलपर्यवसायी सवः प्रेरणं यस्यासौ सत्यसवा: । रत्नानि दधाति इति रत्नधा: । आभिमुख्येन सर्वेषां प्रियं । मति: सर्वैर्मन्तव्यः । तादृशं देवमर्चामि । यस्य सवितुरूर्ध्वलोकवर्तिनी दीप्ति: [v]अमति: मन्तुमशक्या २५ द्योतते प्रकाशते, स्वर्गवर्ती स देव: कृपया मां समागत्य [v]हिरण्यपाणि: सोमं मिमीताम् ॥ एतस्यामृचि वर्तमानं छन्द: प्रशंसति—" अभि त्यं देवꣳ सवितारमित्यतिच्छन्दसर्चा मिमीतेऽतिच्छन्दा वै सर्वाणि छन्दाꣳसि सर्वेभिरेवैनं छन्दोभिर्मिमीते वर्ष्म वा एषा छन्दसां यदतिच्छन्दा यदतिच्छन्दसर्चा मिमीते वर्ष्मैवैनꣳ समानानां करोति " ( तैस ६ १ ९ ) इति । अक्षराधिक्येन गायत्र्यादीनि छन्दांस्यतिक्रम्य

१-१ तै ति म म१–दातारं वा ।

३० ११ आ क–' मिमीते ' इत्यस्यानन्तरं ' तस्मानानावीर्या अङ्गुल्य: ' । [ बौश्रासूत्रे ' मिमीते ' नास्ति । ]

सोमोन्मानम् ]

यस्यामतिर्भा अदिद्युतत् सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा सुवः ।

यस्य । अमतिः । भाः । अदिद्युतत् । सवीमनि ।

हिरण्यपाणिरिति हिरण्य-पाणिः । अमिमीत । सुक्रतुरिति सु-क्रतुः । कृपा । सुवः ।

सर्वस्य प्रियम् । असमस्त एव धात्वर्थं विशिनष्टि । मतिं सर्वैर्मन्तव्यं सर्वस्य वा ज्ञातारम् । " मन्त्रे वृष" ( पा ३.३.९६ ) इति क्तिन उदात्तत्वम् । ईदृशं देवम् अभि अर्चामि आभिमुख्येन पूजयामि । पादादित्वान्न निहन्यते ( पा ८.१.१८ ) । पुनश्च देवोऽपि विशेष्यते । यस्य देवस्य अमतिः अमनशीला व्यापनशीला भाः दीप्तिः ऊर्ध्वा उत्कृष्टा अदिद्युतत् द्योतयति विश्वं, तमभ्यर्चामि । " णौ चङ्युपधाया ह्रस्वः " ( पा ७.४.१ ), " द्युतिस्वाप्योः संप्रसारणम् " ( पा ७.४.६७ ) । अमतेर्गतिकर्मण औणादिकोऽतिप्रत्ययः ( उ ५०८ ) । भासतेः " भ्राजभास " ( पा ७.४.३ ) इति क्विप् । पुनश्च देवो विशेष्यते—यस्य देवस्य सवीमनि सवे अभ्यनुज्ञायां सत्यां येनाभ्यनुज्ञातः सन् । मनिनि ( पा ३.२.७५, उ ५९४ ), छान्दसमिटो दीर्घत्वम् । यद्वा—इमनिचि ( पा ५.१.१२२ ) " तुरिष्ठेमेयःसु " ( पा ६.४.१५४ ) इति लोपः । असदादिः सोमस्य माता हिरण्यपाणिः हिरण्यसहितपाणिः अमिमीत मिमीते सोमम् । छान्दसो लङ् । सुक्रतुः शोभनकर्मा माता । यद्वा—ईदृशोऽहम् *अमिमि इति पुरुषव्यत्ययः ।

वर्तत इत्यतिच्छन्दाः । वर्ष्म शरीरम् ॥ अङ्गुलीषु प्रकारविशेषं विधत्ते—" एकयैकयोत्सर्गं मिमीतेऽयातयाम्नियायातयाम्नियैवैनं मिमीते तस्मान्नानावीर्या अङ्गुल्यः " ( तैसं ६.१.९ ) इति । उत्सर्गमुत्सृज्योत्सृज्य कनिष्ठिकैव प्रथमपर्यायेऽनामिकैव द्वितीये मध्यमैव तृतीये तर्जन्येव चतुर्थे । एवं सति [12]सकृत्प्रवृत्ताया अङ्गुल्याः[12] पुनःप्रवृत्त्यभावाद्यातयामत्वं [13]गतरसत्वं न भविष्यति । यस्मात् पर्यायेण प्रवृत्तास्तस्मात् प्रत्येकमङ्गुष्ठेन संयोक्तुं पृथक्सामर्थ्योपेताः[14] ॥ अङ्गुष्ठस्य पर्यायो नास्तीत्यमुमर्थं विधत्ते—" सर्वास्वङ्गुष्ठमुप नि गृह्णाति तस्मात् समावद्वीर्योऽन्याभिरङ्गुलिभिस्तस्मात् सर्वा अनु सं चरति " ( तैसं ६.१.९ ) इति । कनिष्ठिकादिषु सर्वास्वङ्गुलीषु प्रत्येकमङ्गुष्ठं संयोजयेत् । समावद्वीर्यस्तुल्यसामर्थ्यः । तस्माल्लोकव्यवहारेऽपि प्रत्येकं सर्वा अङ्गुलीरनुसंचरति ॥ विपक्षबाधपूर्वकं पूर्वोक्तं स्वपक्षमुपसंहरति—" यत् सह सर्वाभिर्मिमीत संश्लिष्टा अङ्गुलयो जायेरन् एकयैकयोत्सर्गं मिमीते तस्मात् विभक्ता जायन्ते " ( तैसं ६.१.९ ) इति ॥ समन्त्रकामन्त्रकयोः सोमोन्मानयोरावृत्तिसंख्यां विधत्ते—" पञ्च कृत्वो यजुषा मिमीते पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे पञ्च कृत्वस्तूष्णीं दश सं पद्यन्ते दशाक्षरा विराडन्नं विराड् विराजैवान्नाद्यमव रुन्धे यद्यजुषा मिमीते भूतमेवाव रुन्धे यत्तूष्णीं भविष्यत् " ( तैसं ६.१.९ ) इति । यद्यपि ' अतिच्छन्दसर्चा ' इत्याम्नानात् पदार्थरूपस्य लक्षणस्य सद्भावाच्च ' अभि त्यम् ' इत्येषर्गेव, तथाऽपि ' युज्यते प्रयुज्यते ' इति व्युत्पत्तिमभिप्रेत्य ' यजुषा ' इत्युक्तम् । अङ्गुष्ठस्य क्रमेण कनिष्ठिकादिभिः सह

*[ शुद्धीकृतः पाठः । लिखितपुस्तकेषु ' अमिमे ' इत्यस्ति । ]

१२–१२ तं—कृत्स्नप्रवृत्तायाः अङ्गुलेः ; उ.पा.भां.हा—' अङ्गुल्याः ' नास्ति । १३. म२—गतसारत्वम् । १४. आ.क.हा—सामर्थ्येऽर्पिताः ।

प्रजाभ्यस्त्वा प्राणाय त्वा व्यानाय त्वा
प्रजास्त्वमनु( १ )प्राणिहि प्रजास्त्वामनु प्राणन्तु ॥ ६ ॥
[ अनु सप्त च ]

प्रजाभ्य इति प्र-जाभ्यं । त्वा । प्राणायेति प्र-अनाय । त्वा । व्यानायेति वि-अनाय । त्वा ।
५ प्रजा इति प्र-जा । त्वम् । अनु ( १ ) । प्रेति । अनिहि ।
प्रजा इति प्र-जा । त्वाम् । अनु । प्रेति । अनन्तु ॥ ६ ॥
[ मैसं १ २·५, काम २·६; कपिस १·१९, वास ४·२४-२५ ]

" क्त्वादयश्च " ( पा ६ २ ११८ ) इत्युत्तरपदाद्युदात्तत्वम् । [१]कृपा कल्पनयाङ्गुल्यादिनिपयया [१]सुव. सुष्ठु वृत आगतोऽहम् । यद्वा—कृपा सामर्थ्येन सुव सुष्ठु प्राप्तः यस्य प्रसवेनेति । अन्य
१० आहु —सवीमनीति निमित्तसप्तमी । सर्वस्य प्रसवार्थं यस्य भा(सो) निश्च द्योतयन्ति स देवो हिरण्यपाणि अपहरणशीलरश्मि सुक्रतु शोभनकर्मा सुव आदित्य कृपया मामर्थ्युमानिस्य स्वयमेव सोम मिमीते । अत्र वा सवीमनीति संबध्यते, सर्वस्य प्रसवार्थं स्वयमेव कृपया मामानिस्य सोम मिमीते इति । कृपू सामर्थ्ये । क्विप् ( पा ३ २ ७६ ) । " सावेकाच " ( पा ६ १·१६८ ) इति विभक्तेरुदात्तत्वम् । पक्षान्तरेऽपि क्विबन्तमेव कृपाया वर्तते । तृतीयाया वा आकार ।
१५ सुपूर्वाद्वृतेर्विचि ( पा ३ २ ७५ ) गुणे स्व । " तन्वादीना छन्दसि बहुलम् " ( द्र. पा ६·४·७७ वा १ ) इत्युवङादेश । " न्यङ्स्वरौ स्वरितौ " ( फि ७४ ) इति स्वरितत्वम् ॥

अनविष्ट सोम [२]मिमीते, तेन[२] उपसमूहति—' प्रजाभ्य ' इति ॥ प्रजाना सदस्यानाम् [३]अर्थाय त्वामवशिष्टम्[३] उपसमूहामि मित प्रापयामि । " यद्वै तानानेव सोम स्यात् " ( तैस ६·१ ९ ) इत्यादि ब्राह्मणम् ॥

चत्वार पर्याया । समन्त्रके प्रयोगे कनिष्ठिकाव्यतिरिक्तया कयाचित् सह पञ्चम पर्याय । अमन्त्रके तु
२० कनिष्ठिकयैव सह । तथा च सूत्रम्—" यथा प्रथमं न तथा पञ्चम तथैवोत्तमम् " ( आपश्रौ १० २४ ११ ) इति । विराट्छन्दसोऽक्षमदत्वाद्यत्वम् । समन्त्रकामन्त्रकयो प्रयोगयो पूर्वोत्तरभावसाम्येन भूतभविष्यद्वस्तुप्राप्ति. ॥

प्रजाभ्य इति ॥ कल्प —" [१]अथातिदिष्ट राजानं प्रजाभ्यस्त्वेत्युपसमूहति । समुच्चित्य वसन-स्यान्तान् प्रदक्षिणमुष्णीषेणोपनह्यति प्राणाय त्वेति । व्यानाय त्वेत्यनुशृन्थति । अथोपरिष्टादङ्गुल्याऽवकाशं
२५ [*]शिष्ट्वा यजमानमीक्षयति[*] [**]प्रजाभ्यस्त्वा प्राणाय त्वा व्यानाय त्वा प्रजास्त्वमनु प्राणिहि प्रजास्त्वामनु

२-२ मं-मितेन । ३-३ तं-यं त्वामवमाति शिष्टम् ; वि.म.म १-यं त्वामवमेति( ? )शिष्टम् ।

१५ उ तं पा मां मर-तथातिविशिष्टम् । *[ बौश्रौसूत्रे ' कृत्वा ' इति । ] । **[ बौश्रौसूत्रे ' अवेक्षयति ' । ] । ***[ बौश्रौसूत्रे ' प्रजाभ्यस्त्वा व्यानाय त्वा ' नास्ति । ] ।

उष्णीषेणोपसंनह्यति—'प्राणाय' इति ॥ प्राणार्थं त्वां सोममुपनह्यामीति । "प्राणमेव पशुषु दधाति" ( तैसं ६·१·९ ) इति ब्राह्मणम् ॥

बन्धनं शिथिलीकरोति—'व्यानाय' इति ॥ व्यानार्थं त्वामनुश्रृन्थामीति । "व्यानमेव पशुषु दधाति" ( तैसं ६·१·९ ) इति ब्राह्मणम् ॥

यजमानमवेक्षयति सोमम्—'प्रजाः' इति ॥ हे सोम, [v]प्रजाः [v]अनु [v]त्वं [v]प्राणिहि प्रजार्थं जीवेत्यर्थः । [v]प्रजाः च [v]त्वा प्राणन्तम् [v]अनु [v]प्राणन्तु त्वयि प्राणति ताः प्राणन्तीति ॥

॥ इति प्रथमकाण्डस्य द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

~~~~~~~~~~~~~~~~~~~~

प्राणन्निश्नति" ( बौश्रौ ६·१४ ) इति ॥ हे सोम, अशेषप्रजार्थं त्वां समूहामि । प्राणार्थं त्वामुपनह्यामि । व्यानार्थं त्वां विस्रंसयामि । प्राणतीः [v]प्रजाः [v]अनु [v]त्वं [v]प्राणिहि । प्राणन्तं [v]त्वाम् [v]अनु [v]प्रजाः [v]प्राणन्तु । [16]अनवशेपणे बाधं ब्रुवन् यथोक्तं समूहनादिकं विधत्ते—"यद्वै तावानेव सोमः स्याद्यावन्तं मिमीते यजमानस्यैव स्यान्नापि सदस्यानां प्रजाभ्यस्त्वेत्युप समूहति सदस्यानेवान्वाभजति वाससोप नह्यति सर्वदेवत्यं वै वासः सर्वाभिरेवैनं देवताभिः समर्धयति पशवो वै सोमः प्राणाय त्वेत्युपनह्यति प्राणमेव पशुषु दधाति व्यानाय त्वेत्यनु श्रृन्थति व्यानमेव पशुषु दधाति तस्मात् स्वपन्तं प्राणा न जहति" ( तैसं ६·१·९ ) इति । दशकृत्वोऽङ्गुलिभिर्मितात् सोमस्यानाधिक्ये सत्येतस्मिन् सदस्यवस्थितानामपि सोमो न स्यात् । मन्त्रेण समूहने तु यजमानमनु सदस्यान् सोमं प्रापयति । प्राणव्यानयोः पशुषु स्थापितत्वात् स्वापेऽपि नास्ति प्राणपरित्यागः ॥

अत्र विनियोगसंग्रहः—

"अंशु सोमं मन्त्रयेताभि त्यं क्रतुं मिमीत तम् ।
प्रजा समुह्य तच्छेषं प्राणायेत्येष बध्यते ॥
व्या विस्रस्य प्रजेक्षेत षण्मन्त्रा इह वर्णिताः ॥ १ ॥" इति ॥

अस्मिन्ननुवाके संदिग्धार्थोदाहरणाभावान्नात्र विशेषेण किंचिदपि [17]मीमांस्यते । सामान्यविचारास्तु पूर्वोक्ताः [18]यथायोगमनुसंधेयाः । छन्दस्तु श्रुतायेव 'अतिच्छन्दसर्चा' इति स्पष्टमुदाहृतम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

~~~~~~~~~~~~~~~~~~~~

१६. आ.क.हा–अवशेपणे । १७. तं–विचार्यते । १८. तं–यथायथमनु' ।

सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तं वीर्यावन्तमभिमातिषाहं
शुक्रं ते शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन सम्यत्ते गोरस्मे चन्द्राणि

सोमम् । ते । क्रीणामि । ऊर्जस्वन्तम् । पयस्वन्तम् । वीर्यावन्तमिति वीर्य–वन्तम् ।
अभिमातिषाहमित्यभिमाति–साहम् । शुक्रम् । ते । शुक्रेण । क्रीणामि । चन्द्रम् । चन्द्रेण ।
५ अमृतम् । अमृतेन । सम्यत् । ते । गोः । अस्मे इति । चन्द्राणि ।

हिरण्येन पणते–'सोम ते' इति ॥ हे सोमविक्रयिन्, ते तव सकाशात् सोमं क्रीणामि ।
ऊर्जस्वन्तं रसवन्तं बलवन्तं वा । ऊर्जयतेरसुन्प्रत्ययः (उ ६३८) । पयस्वन्तं क्षीरवन्तम् उदकवन्तं
वा, तद्धेतुत्वात् । वीर्यावन्तं वीरकर्मवन्तम् । "अन्येषामपि दृश्यते" (पा ६ ३ १३७) इति
दीर्घः । अभिमातिषाहम् अभिमातिः पाप्मा तस्याभिभवितारं नाशयितारम् । "छन्दसि सहः"
१० (पा ३ २ ६३) इति ण्विः । "सहेः साडः सः" (पा ८ ३ ५६) इति षत्वम् । शुक्रं
शुद्धं सोमम् । 'ते' इति पुनर्वचनमादरार्थम् । शुक्रेण हिरण्येन क्रीणामि । आख्यातावृत्तिरप्या-
दरार्थेन । यद्वा–क्रीत्यन्तरारम्भाद्धुभयं पुनरुपादीयते मूल्यमपि हिरण्यप्रभृति निर्दिश्यते । चन्द्रम्
आह्लादकरं सोमं चन्द्रेण तादृशेन हिरण्येन । अमृतं देवानां यजमानस्य वा अमरणहेतुं सोमम्
अमृतेन तथाविधेन हिरण्येन । मृतं मरणं यस्य सकाशे नास्तीत्यमृतम् । "नञो जरमरमित्रमृताः"
१५ (पा ६ २ ११६) इत्युत्तरपदाद्युदात्तत्वम् । स्तुत्यर्थमनेकविशेषणोपादानम् । किंच–हे सोमविक्रयिन्,
ते तव गोः वाचः सम्यत् संयतं सङ्गतं यथा तथा क्रीणामीति क्रियाविशेषणम् । सम्पूर्वाद्यमेः क्विप्
(पा ३ २ ७६) । छान्दसे अनुनासिकलोपे (पामा ६ ४ ३७, ४०) तुक् (पा ६ १ ७१) । समो
मकारस्य चानुस्वाराभावश्छान्दसः । यद्वा–तव गोः सम्यत् तव वाचः सङ्गच्छते यथा तथा क्रीणामि ।

षष्ठेऽनुवाके क्रयाय सोमस्योन्मानमुक्तम् । सप्तमे लब्धावसरः क्रयोऽभिधीयते ।
२० सोममिति ॥ बौधायनः–"अथैनं स हिरण्येन पणते । सोम ते क्रीणाम्यूर्जस्वन्तं [१]पयस्वन्तं
वीर्यावन्तमभिमातिषाहं शुक्रं ते शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन सम्यत् ते गोरिति"
(बौश्रौ ६ १४–१५) इति । आपस्तम्बो मन्त्रभेदमाह–"सोमविक्रयिणे राजानं प्रदाय पणते । सोम-
विक्रयिन् क्रय्यस्ते सोमा३ इति । क्रय्य इतीतरः प्रत्याह । सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तमित्युक्त्वा
कलया ते क्रीणानीत्येवमाह । भूयो वा अतः सोमो राजाऽर्हतीति सर्वेषु पणनेषु सोमविक्रयी प्रत्याह
२५ शफेन ... गवा ते क्रीणानीत्यन्ततः शुक्रं ते शुक्रेण क्रीणामीति उक्त्वा हिरण्येन क्रीणाति"
(आपश्रौ १० २५ १–८) इति ॥ हे सोमविक्रयिन्, अहं त्वदीयं सोमं क्रीणामि । कीदृशम् ?
ऊर्जस्वन्तं शारीरबलप्रदं पयस्वन्तं प्रभूतरसोपेतं वीर्यावन्तम् इन्द्रियपाटवहेतुम् अभिमातिषाहं
पापरूपस्य वैरिणो हन्तारम् । शुक्रचन्द्रामृतशब्दैरभिधेयास्तेजःसुखाविनाशास्त्वदीयसोमेऽस्मदीयहिरण्ये च
समाः । अतो हिरण्येन सोमं क्रीणामि, न केवलं हिरण्यं तुभ्यं दीयते किंतु समीचीनं गोरेकहायनीस्वरूप-
३० मपि पूर्वं दत्तं तस्माच्च हिरण्यलाभोऽधिकः ॥

१. त ति–अम्य ।

१ आ पा मा हा–'पयस्वन्तम्' नास्ति ।

सोमक्रयः ]

तर्पसस्तनूरसि प्रजापतेर्वर्णस्तस्यास्ते सहस्रपोषं पुष्यन्त्याश्चरमेणं पशुना क्रीणाम्यस्मे ते बन्धुर्मयि ते रायः श्रयन्तामस्मे ज्योतिः

तपसः । तनूः । असि । प्रजापतेरिति प्रजा–पतेः । वर्णः । तस्याः । ते । सहस्रपोषमिति सहस्र–पोषम् । पुष्यन्त्याः । चरमेण । पशुना । क्रीणामि । अस्मे इति । ते । बन्धुः । मयि । ते । रायः । श्रयन्ताम् । अस्मे इति । ज्योतिः । ५

एतेर्लटः शत्रादेशः ( पा ३·२·१२४ ) । गोः कर्मणि षष्ठी ( पा २·३·६५ ) । "न लोकाव्यय°" ( पा २·३·६९ ) इति प्रतिषेधः व्यत्ययेन न प्रवर्तते । तत्र वाचा संगच्छमानं क्रीणामीत्यर्थः । अथवा—सम्यगित्यस्यान्त्यविकारश्छान्दसः । तत्र वाचः समीचीनमिति यावत् । "समः समि" ( पा ६·३·९३ ) इति समिरादेशः । [2]अन्य आह[3]—षम ष्टम अवैकल्ये । व्यत्ययेन ( पा ३·१·८५ ) श्यन् ( पा ३·१·६९ ) । "छन्दस्युभयथा" ( पा ३·४·११७ ) इति शतुरार्धधातुकत्वात् १० अदुपदेशाल्लसार्वधातुकानुदात्तत्वाभावः ( पा ६·१·१८६ ) । तत्र वाचोऽविकलं क्रीणामीति ॥

यजमानाय प्रयच्छति हिरण्यम्–' अस्मे ' इति ॥ अस्माकमेव चन्द्राणि हिरण्यानि, न सोमविक्रयिणः । ' चन्द्रेण क्रीणामि ' इति तु छलमात्रमुक्तम् इति । "सुपां सुलुक्°" ( पा ७·१·३९ ) इति षष्ठीबहुवचनस्य ' शे ' इत्यादेशः । अस्मानेव हिरण्यं पुनः प्राप्नोत्वित्यर्थः । "देवा वै येन हिरण्येन" ( तैसं ६·१·१० ) इत्यादि ब्राह्मणम् ॥ १५

अजया क्रीणाति–' तपसः ' इति ॥ अजा जातिरुच्यते ॥ तपसः यज्ञस्य तनूः शरीरं त्वम् असि । यागसाधनानां प्रधानभूतासीत्यर्थः । ऊप्रत्ययान्तस्तनूशब्दः ( उ ८१ ) । किंच प्रजापतेः वर्णः स्वरूपं त्वमसि । प्रजापतेः सर्वदेवतात्मकत्वात् सर्वेषां देवानां रूपं त्वमसीत्युक्तं भवति । अस्याश्च सर्वदेवत्यत्वात् सर्वदेवस्वरूपता । यथोक्तम्—"सा वा एषा सर्वदेवत्या यदजा" ( तैसं ३·४·३ ) इति । "पत्यावैश्वर्ये" ( पा ६·२·१८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । तस्याः तादृश्याः ते तव सहस्रपोषं २० सहस्रस्य पुष्टिं वृद्धिं वा पुष्टिं पुष्यन्त्याः [4]पुष्टिमुत्पादयन्त्याः कुर्वन्त्या वा संबन्धी यश्चरमः पशुर्व्यक्तिरूपेण पश्चाज्जातः तेन सोमं क्रीणामि । तत्र कलामात्रेण क्रीणामीति महिमातिशयप्रदर्शनार्थं[5] चरमग्रहणम् । यथा—"पशुभ्य एव तदध्वर्युर्निह्नुते" ( तैसं ६·१·१० ) इत्यादि ब्राह्मणम् ॥

यजमानमीक्षते–' अस्मे ते ' इति । प्रथमाबहुवचनस्य ' शे ' इत्यादेशः ( पा ७·१·३९ ) । हे यजमान, वयं तव बन्धवः । बध्यतेऽस्मिन् कर्मणि बन्धुरध्वर्युरुच्यते । तेनैव सूत्रेण जसः २५

अस्म इति ॥ कल्पः—" अस्मे चन्द्राणीति सोमविक्रयिणो [2]हिरण्यमपादत्ते " ( आपश्रौ १०·२६·६ ) इति ॥ अस्मास्वेव हिरण्यानि चन्द्राणि तिष्ठन्तु । बहुवचनं व्यत्ययेन द्रष्टव्यम् ॥

२. ति,म–सम्यादेशः । ३–३. मै–' अन्य आह ' नास्ति । ४. मै–पुष्कलमुत्पाद° । ५. मै–°प्रतिपादनार्थम् ।

२. इ,उ,तं,पा,भां,म२,हा–राजानमपादत्ते । ३०

तपस इति ॥ बौधायन —" अथैन [3]प्राचीनग्रीवयाऽजया पणते तपसस्तनूरसि प्रजापतेर्वर्णस्तस्यास्ते सहस्रपोषं पुष्यन्त्याश्चरमेण पशुना क्रीणामीति । अस्मे ते बन्धुरिति यजमानमीक्षते । मयि ते राय श्रयन्तामित्यात्मानम्" ( बौश्रौ ६ १५ ) इति । आपस्तम्बस्त्वेकमन्त्रतामाह—" तपसस्तनूरसीति जपित्वाऽजया क्रीणामि[4] " ( आपश्रौ १० २५ ८ ) इति ॥ हे अजे, त्वं तपस पुण्यस्य शरीरम् असि । यज्ञनिष्पादकस्य सोमस्य द्युलोके स्वयैवावरुद्धत्वात् । वर्ण्यत इति वर्णो देहः, प्रजापते वर्ण असि, प्रजापतिवत् सर्वदेवात्मकत्वात् । तच्चोपानुवाक्यकाण्ड आम्नातम्—" सा वा एषा सर्वदेवत्या यदजा " ( तैब्रा ३ ४ ३ ) इति । किंच त्वमपत्यपरंपरया सहस्रसंख्यात पुष्यसि । तादृश्यास्तव संबन्धिना चरमेण सहस्रतमेन पशुना सोम क्रीणामि न तु त्वया । अह तव बन्धु त्वत्संपादितस्य सोमस्य कर्मणि प्रवृत्तत्वात् मयि त्वदीयान्यपत्यरूपाणि धनान्यवतिष्ठन्ताम् ॥ मन्त्रान् व्याचिख्यासुरादावनभिमत निराकृत्य स्वाभिमत पणनमन्त्रमुत्पाद्य विनियुङ्क्ते—" यत् कलया ते शफेन ते क्रीणानीति पणेतागोअर्घं सोम कुर्यादगोअर्घं यजमानमगोअर्घमध्वर्युं गोस्तु महिमान नाव तिरेद्गवा ते क्रीणानीत्येव ब्रूयाद्गोअर्घमेव सोमं करोति गोअर्घं यजमानं गोअर्घमध्वर्युं न गोर्महिमानमव तिरति " ( तैसं ६ १·१० ) इति ॥ "कला अल्पादप्यल्पीय"[5] कोऽप्यवयवलेश । कलया शफेन वा पणने दोषत्रय स्यात् । सोमो गोरूपं मूल्य नार्हति, यजमानस्तद्दातुं न शक्नोति, अध्वर्युश्च न दापयतीत्येव सोमयजमानाध्वर्यवो गोअर्घरहिता इति दोषत्रयम् । किंच [6]सोमो गोमूल्य इत्युक्ते[6] गोर्महिमाऽधिको भवेत् । तं नावजानीयात् । परमते त्वसावज्ञातो भवेत् । " गवा ते क्रीणानि " ( तैसं ६ १·१० ) इत्यनेन मन्त्रेण सर्वं समाहित भवति ॥ यथैव सोमक्रयणी गौस्तथैवाजादीनि नव द्रव्याणि क्रयसाधनानि क्रमेण विधत्ते—" अजया क्रीणाति सतपसमेवैनं क्रीणाति हिरण्येन क्रीणाति सशुक्रमेवैनं क्रीणाति धेन्वा क्रीणाति साशिरमेवैनं क्रीणात्यृषभेण क्रीणाति सेन्द्रमेवैनं क्रीणात्यनडुहा क्रीणाति वह्निर्वा अनड्वान् वह्निनैव वह्नि यज्ञस्य क्रीणाति मिथुनाभ्यां क्रीणाति मिथुनस्यावरुद्ध्यै वाससा क्रीणाति सर्वदेवत्यं वै वास सर्वाभ्य एवैनं देवताभ्य क्रीणाति दश स पद्यन्ते दशाक्षरा विराडन्नं विराड् विराजैवान्नाद्यमव रुन्धे " ( तैसं ६ १ १० ) इति । 'तपसस्तनूरसि' इत्युच्चारणादजया क्रीतस्य सोमस्य सतपस्त्वम् । एवमुत्तरत्रापि योज्यम् । साशिरं दध्यादिगोरसोपेतं, सेन्द्रमिन्द्रियवर्धकं, वह्निर्वाहक यज्ञस्य वह्नि यज्ञनिर्वाहक सोमं, मिथुनाभ्यां वत्सतरो वत्सतरी चेत्येताभ्यां मिथुनावयवाभ्यां, धेनो सवत्साया विवक्षितत्वाद्दशद्रव्यसंपत्ति ॥ मन्त्रत्रय स्पष्टार्थत्वबुद्ध्योपेक्ष्य चतुर्थमन्त्रस्याभिप्रायमाह—" तपसस्तनूरसि प्रजापतेर्वर्ण इत्याह पशुभ्य एव तदध्वर्युर्निह्नुत आत्मनोऽनाव्रस्काय " ( तैसं ६·१ १० ) इति । एतेन मन्त्रपाठेन पशुभ्योऽजाप्रभृतिभ्यो निह्नुतेऽपलपति । न ह्यजा परमार्थत तपस तनूर्भवति, नापि [7]प्रजापतेर्वर्णो रूपम् । तेनापलापेन अजोपचरिता भवति । स चोपचार स्वस्यापराधराहित्याय क्रियते ॥ पशूपचारवेदनं प्रशंसति—" गच्छति श्रियं प्र पशूनाप्नोति य एवं वेद " ( तैसं ६·१ १० ) इति ॥ दत्तस्य हिरण्यस्य पुनरादानं विधित्सुर्हिरण्यप्रकाशकं द्वितीयमन्त्रं स्पष्टार्थमपि पुनरनुसंधत्ते—" शुक्रं ते शुक्रेण क्रीणामीत्याह यथायजुरेवैतत् " ( तैसं ६·१ १० ) इति ॥ [8]पुनरादानं विधत्ते—" देवा वै येन हिरण्येन सोममक्रीणन् तदभीषहा पुनराऽददत को हि तेजसा विक्रेष्यत इति येन हिरण्येन सोमं क्रीणीयात् तदभीषहा पुनरा ददीत तेज एवात्मन् धत्ते " ( तैसं ६·१·१० ) इति । अभीषहा बलात्कारेण । 'को हि' इत्यादिर्देवाभिप्राय ॥

---

३ आ इ पा—प्राचीन° । ४ इ पा हा—क्रीणानि, [ आपश्रौसूत्रे तु—'क्रीणाति' ] । ५—५ आ—स्वल्पादप्यल्पीय , क—दाफः तस्याष्टमावयव कला । ६—६ क—सोमस्य गोमूल्य इत्युक्ते, इ—सोमो गोमूल्यमित्युक्ते, मर—सोमस्य गोर्मूल्यमित्युक्ते । ७ मर—प्रजापते स्वरूपम्, त—प्रजापते स्वरूपा । ८ तं मर—पुनराधानम् ।

सोमविक्र॒यिणि॒ तमो॒ मित्रो॑ न॒ एहि॑ सुमित्र॒धा॒
सो॒म॒वि॒क्र॒यिणीति॑ सोम-वि॒क्र॒यिणि॑ । तमः॑ । मि॒त्रः । नः॒ । एहि॑ । इ॒हि॒ । सु॒मि॒त्र॒धा इति॑ सुमि॒त्र-धाः॑ ।

स्यादेशः ( पा ७·१·३९ ) । यद्वा—' अस्मे ' इति व्यत्ययेन ( पा ३·१·८५ ) बहुवचनम् । अहं तव [v]बन्धुः इत्यर्थः ॥

आत्मानमीक्षते—' मयि ' इति ॥ [v]मयि तव [v]रायः अपत्यलक्षणानि धनानि [v]श्रयन्तां वर्तन्तां ममैव याज्या भवन्त्विति यावत् । ' ते ' इति वचनात् पूर्वशेषत्वं युक्तमिव लक्ष्यते ॥

यजमानं शुक्लोर्णुकया क्षिपति—' अस्मे ज्योतिः ' इति ॥ अस्माकमेव प्रकाशः । पूर्ववत् आमः शे इत्यादेशः ( पा ७·१·३९ ) ॥

कृष्णोर्णया सोमविक्रयिणं विध्यति—[६]' सोमविक्रयिणि ' इति ॥ हे सोमविक्रयिन्, त्वयि [v]तमः अस्तु[६] । " कर्मणीनिर्विक्रियः " ( पा ३·२·९३ ) इतीनिप्रत्ययः ॥ १०

सोमविक्रयिणः सोममादत्ते—' मित्रः ' इति ॥ हे सोम, [v]सुमित्रधाः शोभनानां मित्राणां यजमानानां धारयिता त्वम् अस्मान् मित्रो भूत्वा [v]एहि आगच्छ । व्यत्ययेन कृदुत्तरपदप्रकृतिस्वरत्वं बाधित्वा अव्ययपूर्वपदप्रकृतिस्वरत्वम् ( पा ६·२·२ ) । यद्वा—मित्राणां सुधारयिता सुमित्रधाः । सुमित्रधा इति प्रादिसमासे ( द्र. पाभा २·२·१८ वा ४ ) गतित्वाभावादव्ययादिस्वरत्वम् ( पा ६·२·२ ) । " आतो मनिन् " ( पा ३·२·७४ ) इति विच् । " वारुणो वै क्रीतः सोम उपनद्धः " ( तैसं ६·१·११ ) इति ब्राह्मणम् ॥ १५

अस्म इति ॥ कल्पः—" अस्मे ज्योतिरिति शुक्लामूर्णास्तुकां यजमानाय प्रयच्छति । तां [v]स काले दशापवित्रस्य नाभिं कुरुते " ( आपश्रौ १०·२६·७ ) इति ॥ अविलोमभिर्निर्मितत्वन्तुरूर्णास्तुका । सा च शुक्ला ज्योतिःस्वरूपा । तत् [v]ज्योतिः अस्मास्ववतिष्ठताम् ॥

सोमविक्रयिणीति ॥ कल्पः—" कृष्णामूर्णास्तुकामद्भिः ह्रदयिस्वेदमहꣳ सर्पाणां दन्दशूकानां ग्रीवा उपग्रथ्नामीत्युपग्रथ्य [१०]तया सोमविक्रयिणं विध्यति सोमविक्रयिणि तम इति " ( आपश्रौ १०·२६·१० ) इति ॥ मन्त्रद्वयं व्याचष्टे—" अस्मे ज्योतिः सोमविक्रयिणि तम इत्याह ज्योतिरेव यजमाने दधाति तमसा सोमविक्रयिणमर्पयति " ( तैसं ६·१·१० ) इति ॥ विपक्षे बाधपुरःसरं प्रथममन्त्रमुत्पादयति—" यदनुपग्रथ्य हन्याद्दन्दशूकास्ताꣳ समाꣳ सर्पाः स्युरिदमहꣳ सर्पाणां दन्दशूकानां ग्रीवा उप ग्रथ्नामीत्याहादन्दशूकास्ताꣳ समाꣳ सर्पा भवन्ति तमसा सोमविक्रयिणं विध्यति " ( तैसं ६·१·१० ) इति । कृष्णया विध्येत् । तां समां तं संवत्सरं कृत्स्नम् । ' इदमहम् ' इत्यादिमन्त्रेण सर्पदंशस्य परिहारः ॥ २० २५

मित्र इति ॥ कल्पः—" कौत्सात् राजानमादत्ते मित्रो न एहि सुमित्रधेति तं यजमानस्योरौ दक्षिणत आसादयतीन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तꣳ स्योनः स्योनमिति " ( बौश्रौ ६·१५ ) इति ॥ शोभनं मित्रं सोमरूपं यस्य यजमानस्य स यजमानः सुमित्रस्तं दधाति पोषयतीति सुमित्रधाः । हे सोम, [v]सुमित्रधाः त्वमस्माकं [v]मित्रः प्रियो भूत्वा समागच्छ । हे सोम, [v]इन्द्रस्य यजमानस्य [v]दक्षिणम् [v]ऊरुम् [v]आ [v]विश । कीदृशम् ? [v]उशन्तं कामयमानं [v]स्योनं सुखकरम् । त्वमपि तादृशः ॥ ३०

६–६. मै—सोमविक्रयिणि तमोऽस्तु; तै—हे सोमविक्रयिन् त्वयि तमोऽस्तु ।

९. आ.क.श–' सः ' नास्ति । १०. आ.पा.श–' तया ' नास्ति ।

इन्द्रस्योरुमा विंश दक्षिणमुशन्नुशन्तं॑ स्योनः स्योनं॑ स्वान भ्राजाङ्घारे बम्भारे
हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान् रक्षध्वं मा वो॑ दभन् ॥ ७ ॥
[ ऊरु द्वात्रिं॑शतिश्च ]

इन्द्रस्य । ऊरुम् । एति॑ । विश । दक्षिणम् । उशन् । उशन्तम् । स्योन । स्योनम् ।
५ स्वान । भ्राज । अङ्घारे । बम्भारे । हस्त । सुहस्तेति सु–हस्त । कृशानविति कृश–अनो । एते ।
व । सोमक्रयणा इति सोम–क्रयणा । तान् । रक्षध्वम् । मा । व । दभन् ॥ ७ ॥
[ मैस १ २ ५–६, काम २ ६, कपिस १·१९, वास ४·२६–२७ ]

यजमानस्य दक्षिण ऊरावासादयति—'इन्द्रस्य' इति ॥ [v]इन्द्रस्य ईश्वरस्य यजमानस्य [v]ऊरु [v]दक्षिणम् [v]उशन्तं वामेव कामयमान त्वमेव कामयमानस्त्व [v]स्योन सुखस्त्व [v]स्योन तादृश तम् [v]आ [v]विश । *"स्यमु स्वन ध्वन शब्दे । "शमेथ*" इति नप्रत्यय । "ग्रहिज्या" "( पा ६ १ १६ )
१० इत्यादिना षष्ठे सम्प्रसारणम् । "देवा वै यं सोमम्" ( तैस ६ १ ११ ) इत्यादि ब्राह्मणम् ॥

स्वानादिभ्य सोमक्रयणान् परिददाति—'स्वान' इत्यादिना ॥ स्वानादय सोमस्य रक्षितार देवा । स्वान शब्दयिता । स्वनेर्ण्यन्तात् पचाद्यच् ( पा ३ १ १३४ ) । भ्राजत इति भ्राज दीप्तिमान् । स एवाच् ( पा ३ १ १३४ ) । अहसामरि , अङ्घभानश्छान्दस । यद्वा–अघि
१५ गत्याक्षेपे । अङ्घारि अङ्घमाना अरयो [7]यस्येयङ्घारि पलायमानशत्रु । बम्भारि बम्भ्रम्यमाणोऽरि । तस्मिन्नेवाचि ( पा ३ १ १३४ ) पृषोदरादित्वात् ( पा ६ ३ १०९ ) रूपसिद्धि । हस्त [8]हसनशील अनादृतशत्रुवीर्य । सहेर्वा आद्यन्तविपर्यय । अभिभविता शत्रूणाम् । सुहस्त कल्याणपाणि शोभनहस्तकर्म्यो वा । कृशानु नाशयिता शत्रूणाम् । कृश तनूकरणे । तस्माद् आनुक्प्रत्यय ( उ ४५० ) । यद्वा—कृशान् अनयति जीवयति इति अन्तर्भावितण्यर्थात्
२० अनिते उप्रत्यय । यद्वा—कृशा स्वल्पवीर्या अनन प्राणिनो यस्मिन् तादृश । सर्वत्र चात्र पाष्ठिकमामन्त्रिताद्युदात्तत्वम् । ( पा ६ १ १९८ ) । "आमन्त्रित पूर्वमविद्यमानवद्" ( पा ८ १ ७२ ) इति पूर्वपूर्वाविद्यमानता । हे स्वानादय , [v]एते [v]सोमक्रयणा , सोम क्रीयते यै ते गवादय [v]व युष्मभ्य समर्पिता रक्षार्थम् । अत [v]तान् यूय [v]रक्षध्वम् । युष्माभिरेते रक्षणीया ये यूय सोम रक्षध्वम् । व्यत्ययेनात्मनेपदम् ( पा ३ १ ८५ ) । [v]मा [v]व युष्मान् सोमक्रयणान् रक्षत
२५ केचिदपि [v]दभन् अहिंसिषु । दम्भेश्छान्दस च्लेरङादेश । "एते वाऽमुष्मिन् लोके सोममरक्षन्" ( तैस ६ १·१० ) इत्यादि ब्राह्मणम् ॥

॥ इति द्वितीये प्रपाठके सप्तमोऽनुवाक ॥

स्वानेति ॥ कल्प —"अथ सोमक्रयणाननुदिशति स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते व सोमक्रयणास्तान् रक्षध्व मा वो दभन्निति" ( बौश्रौ ६·१५ ) इति ॥ स्वानादय

३० *–*"श( स्य? )मेथ" इत्यनुपलब्धमूलम् । स्यमे स्योनं व्युत्पिपादयिषन्ति भट्टभास्कराचार्या इत्यनल्पात् व्याख्यानात् स्पष्टीभवति । वस्तुतस्तु 'सिवेष्टेर्यू च' ( उ २९६ ) इत्यनेन सिवेरौणादिके नप्रत्यये स्योनशब्द सिध्यति । "च्छ्वो शूडनुनासिके च" ( पा ६·४ १९ ) इत्यस्मिन्सूत्रे काशिकात्र द्रष्टव्या । 'स्यमु स्वन ध्वन शब्दे' इत्याकारं व्याख्यानं द्वादशपङ्क्तौ 'स्वान शब्दयिता' इत्यस्मात्पूर्वं संभाव्यते । ७ तं ति–अस्येत्य° । ८ त–हननशील ।

सोमरक्षकाः । सोमः क्रीयते यैर्गवादिभिस्ते [४]सोमक्रयणाः । हे स्वानादयः, [४]तान् सोमक्रयणान् पालयत । केऽपि वैरिणो युष्मान् [४]मा हिंसिषत । अत्र मूल्यभूतान् सोमक्रयणाननुदिश्य पश्चात् सोमस्वीकारो युक्तः । अत्रोक्तक्रमेण[११] 'मित्रो नः', 'इन्द्रस्योरुम्' इति मन्त्रद्वयमुपरिष्टाद्व्याख्यास्यते (तैसं ६.१.११)॥ [१२]इमं मन्त्रं व्याचष्टे—" स्वान भ्राजेत्याहैते वा अमुष्मिँल्लोके सोममरक्षन् तेभ्योऽधि सोममाऽहरन्" (तैसं ६.१.१०) इति । अधि अधिकं प्रभूतम् ॥ विपक्षस्वपक्षयोर्दोषतत्समाधाने दर्शयति—" यदेतेभ्यः सोमक्रयणाननुदिशेदक्रीतोऽस्य सोमः स्यान्नास्यैतेऽमुष्मिँल्लोके सोमꣳ रक्षेयुर्यदेतेभ्यः सोमक्रयणाननुदिशति क्रीतोऽस्य सोमो भवत्येतेऽस्यामुष्मिँल्लोके सोमꣳ रक्षन्ति" (तैसं ६.१.१०) इति । सोमं सोमयागफलम् ॥ अथ सोमस्वीकारस्य प्राप्तावसरत्वात् मन्त्रं व्याचष्टे—" वारुणो वै क्रीतः सोम उपनद्धो मित्रो न एहि सुमित्रधा इत्याह शान्त्यै" (तैसं ६.१.११) इति । [१३]बन्धनस्य वरुणपाशरूपत्वात् तद्युक्तः सोमो वारुणः । अतो वरुणवत् क्रूरत्वप्राप्तौ तच्छान्त्यै मित्रत्वं [१४]प्रार्थ्यते ॥ [१५]ऊरुस्थानं पूर्वाचारप्राप्तमित्याह—" इन्द्रस्योरुमा विश दक्षिणमित्याह देवा वै यꣳ सोममक्रीणन् तमिन्द्रस्योरौ दक्षिण आऽसादयन्नेष खलु वा एतर्हीन्द्रो यो यजते तस्मादेवमाह" (तैसं ६.१.११) इति ॥

अत्र विनियोगसंग्रहः —

" सोमं जपेत् क्रयात् पूर्वं शुक्रं स्वर्णेन तत्क्रये ।
अस्मे स्वर्णमपादत्ते तप जप्यं क्येऽजया ॥ १ ॥
अस्मे ज्यो स्वामिने दद्याच्छुक्रामूर्णास्तुकामथ ।
सोम विध्येत् कृष्णयोर्णास्तुकया क्रयकारिणम् ॥ २ ॥
मित्रः सोममुपादायेन्द्रस्योरावुपवेशयेत् ।
स्वान मूल्यानुदिशेदिमे[१६] मन्त्रा नवोदिताः ॥ ३ ॥ " इति ॥

अथ मीमांसा ॥ द्वादशाध्यायस्य चतुर्थपादे चिन्तितम्—

" क्रयणेषु विकल्पः स्यात् साहित्यं वाऽग्रिमो यतः ।
कार्यैक्यमानतेर्लाभात् दशोक्तेश्च समुच्चयः ॥ " (जैन्या १२.४.७) इति ॥

" अजया क्रीणाति" (तैसं ६.१.१०), " हिरण्येन क्रीणाति" (तैसं ६.१.१०), " वाससा क्रीणाति" (तैसं ६.१.१०) इत्यादीनि बहूनि सोमक्रयसाधनद्रव्याण्याम्नातानि । तेषां कार्यैक्याद्विकल्प इति चेत् । मैवम् । बहुभिर्द्रव्यैर्विक्रेतुरानतेः सौलभ्यात् । " दशभिः क्रीणाति" (मैसं ३.७.७) इति संख्योक्तेश्च समुच्चयः ॥ अत्र सर्वाणि [१७]यजूंषीति नास्ति कश्चिच्छन्दोविशेषः[१७] ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

११. आ.म२.हा—अतोऽर्थक्रमेण । १२. तं.म२—इमं तु । १३. तं—संनद्धस्य । १४. आ.पा.हा—प्रतिपादयति । १५. म२—ऊरुस्थापनम् । १६. तं—°दिशेदिति । १७–१७. आ.हा—यजूंषि; क—यजूंषि नास्ति कश्चिच्छन्दोविशेषः ।

उदायुषा स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताꣳ अनु ।
उर्वन्तरिक्षमन्विहि-

उदिति । आयुषा । स्वायुषेति सु-आयुषा । उदिति । ओषधीनाम् । रसेन ।
उदिति । पर्जन्यस्य । शुष्मेण । उदिति । अस्थाम् । अमृतान् । अनु ।
उरु । अन्तरिक्षम् । अन्विति । इहि । ५

सोममादायोत्तिष्ठति—' उदिति ' अनवसानयानुष्टुभा । उच्छब्दादयश्चत्वारोऽपि पादाः । 'अस्थाम्' इति वक्ष्यते, तेन 'उद्' इत्यस्य सम्बन्धः । आयुः सोमः । अयनीयत्वादायुषोऽन्नस्य वा हेतुत्वात् । स एव विशेष्यते—स्वायुषा शोभनमायुर्देयमस्मिन्निति स्वायुः । "नञ्सुभ्याम्" ( पा ६·२·१७२ ) इत्युत्तरपदान्तोदात्तत्वम् । तादृशेन त्वया सहाहम् उद् अस्थाम् उत्तिष्ठामि । छान्दसो लुङ् । "गातिस्था" ( पा २·४·७७ ) इति सिचो लुक् । १० तदिदम् ओषधीनां रसेन सारेण उद् अस्थाम् । पर्जन्यस्य शुष्मेण बलेन उद् अस्थाम् । तदुभयस्यापि तदधीनत्वात् । किंच—अमृतान् अमरणान् देवान् अनु लक्षीकृत्य उदिस्य वा त्वया सह उद् अस्थाम् अमरणान् देवान् कर्तुमिति यावत् । उत्तरपदाद्युदात्तत्वे ( पा ६·२·११६ ) पूर्ववत् रुत्वानुनासिकौ साहितिकौ ( पा ८·३·९, २ ) । "देवता एवान्वारम्योत्तिष्ठति" ( तैस ६·१·११ ) इति ब्राह्मणम् ॥ १५

सोमवाहनमनोऽभिप्रैति—' उरु ' इति गायत्र्यैकपदया ॥ विस्तीर्णमाकाशमनुगच्छ निर्बाधं गच्छेति । व्याख्याता चेयम् ( तैस १·१·२ ) । "अन्तरिक्षदेवत्यो ह्येतर्हि सोमः" ( तैस ६·१·११ ) इति ब्राह्मणम् ॥

सप्तमेऽनुवाके [1]सोमक्रयोऽभिहितः । अथ क्रीतं सोमं [2]प्राचीनवंशे नेतुमष्टमे शकटारोपणं सोमस्योच्यते ॥ २०

उदायुषेति ॥ कल्पः—"अथैनमादायोपोत्तिष्ठति उदायुषा स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताꣳ अन्विति" ( बौश्रौ ६·१५ ) इति ॥ [3]अथ अमृतान् देवाननुलक्ष्याऽऽयुरादिविशेषणविशिष्टेन सोमेन सह उद् अस्थाम् उत्तिष्ठामीति[4] । [5]चिरजीवनमायुः । तत्रापि रोगाद्युपद्रवरहितं स्वायुः । तदुभयप्रदत्वात् सोमस्य तदुभयरूपत्वम् । ओषधीनां पर्जन्यस्य च सोमः सारः । इतरौषधिवत् भूमिविशेषे जायमानत्वात् वृष्ट्या वर्धमानत्वाच्च । चतुर्भिर्विशेषणैः पृथक् क्रियापदमन्वेतुं चत्वार २५ उत्-शब्दाः ॥ अमृतशब्दानुशब्दयोरर्थमाह—"उदायुषा स्वायुषेत्याह देवता एवान्वारभ्योत्तिष्ठति" ( तैसं ६·१·११ ) इति ॥

उर्वित्ति ॥ कल्पः—"उर्वन्तरिक्षमन्विहीति शकटायाभिप्रव्रजति" ( आपश्रौ १०·२७·९ ) इति ॥ उत्थापनमारभ्य पुनर्भूमौ स्थापनपर्यन्तं सोमोऽन्तरिक्षाधार इत्यभिप्रायं दर्शयति—"उर्वन्तरिक्षमन्विहीत्याहान्तरिक्षदेवत्यो ह्येतर्हि सोमः" ( तैसं ६·१·११ ) इति ॥ ३०

१. आ इ.पा हा–सोमक्रयणमभिहितम् । २. क–प्राचीनवंशम् । ३ आ हा–'अथ' नास्ति, क–अहम् । ४ मर–उत्तिष्ठामि । ५ मर–चिर जीवनमायुः, आ इ हा पा–जीवनमायुः ।

-ऽदि॑त्याः सदो॒ऽस्यदि॑त्याः सद॒ आ सी॑दास्तभ्ना॒द्द्यामृ॑ष॒भो अ॒न्तरि॑क्षममिमीत वरि॒माणं॑ पृथि॒व्या आऽसी॑द॒द्विश्वा॒ भुव॑नानि स॒म्राड्विश्वेत्तानि॒ वरु॑णस्य व्र॒तानि॑

अदि॑त्याः । सदः॑ । अ॒सि॒ । अदि॑त्याः । सदः॑ । एति॑ । सी॒द॒ । अस्त॑भ्नात् । द्याम् । ऋ॒ष॒भः । अ॒न्तरि॑क्षम् । अमि॑मीत । व॒रि॒माण॑म् । पृ॒थि॒व्याः । एति॑ । अ॒सी॒द॒त् । विश्वा॑ । भुव॑नानि । स॒म्राडिति॑ सम्–राट् । विश्वा॑ । इत् । तानि॑ । वरु॑णस्य । व्र॒तानि॑ । ५

नीडे कृष्णाजिनमास्तृणाति—‘ अदित्याः ’ इति ॥ $^{v}$अदित्याः देवमातुः $^{v}$सदः सदनं लोकलक्षणं त्वम् $^{v}$असि ॥

तस्मिन् सोमं निदधाति—‘ अदित्याः ’ इति ॥ $^{v}$अदित्याः $^{v}$सदः सदनस्थानीयमेतत् कृष्णाजिनम् $^{v}$आ $^{v}$सीद उपविश अस्मिन् ॥

सोममुपतिष्ठते—‘ अस्तभ्नात् ’ इति त्रिष्टुभा ॥ अमिमीत इति द्वितीयस्य पादस्यादिः, १० अत एव न निहन्यते ( पा ८·१·१८ ) । $^{v}$अस्तभ्नात् स्तब्धां दृढामकरोत् । $^{v}$द्यां द्युलोकम् । $^{v}$ऋषभः वर्षिता $^{v}$अन्तरिक्षम् $^{v}$अमिमीत मितवान् निर्मितवान् । $^{v}$वरिमाणं $^{v}$पृथिव्याः, वरिमाणम् उरुत्वम् । “ प्रियस्थिर ” ( पा ६·४·१५७ ) इत्यादिना वरादेशः । यद्वा—वरिमाणं वारकत्वम् । “ अन्येभ्योऽपि दृश्यन्ते ” ( पा ३·२·७५ ) इति मनिन् । उञ्छादिर्द्रष्टव्यः ( पा ६·१·१६० ) । $^{v}$आसीदत् व्याप्तवान् वर्षेण । $^{v}$विश्वा विश्वानि च $^{v}$भुवनानि भूतजातानि १५ आसीदत् इत्येव । यद्वा— अन्तरिक्षममिमीत वरिमाणं च पृथिव्या अमिमीतेत्येव । विश्वानि भुवनानि आसीददिति, अन्तर्भावितण्यर्थो वा आसादयति विश्वानि भुवनानीति । “ शेश्छन्दसि बहुलम् ” ( पा ६·१·७० ) इति लुक् । $^{v}$सम्राट् संगतदीप्तिः । “ मो राजि समः क्वौ ” ( पा ८·३·२५ ) इति मकारः । यान्येवंविधानि $^{v}$तानि विश्वान्येव $^{v}$वरुणस्य वारकस्य सोमस्य $^{v}$व्रतानि वीर्याणि कर्माणि । त्वमेवेन्द्रो भूत्वा तथा तथा कृतवानित्यर्थः । “ वारुण्यर्चाऽऽसादयति ” २० ( तैसं ६·१·११ ) इत्यादि ब्राह्मणम् ॥

अदित्या इति ॥ बौधायनः—“ तस्य नीडे[६] कृष्णाजिनमास्तृणात्यदित्याः सदोऽसीति । अदित्याः सद आ सीदेति कृष्णाजिने राजानम् । अथैनमुपतिष्ठतेऽस्तभ्नाद्द्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्या आऽसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानीति ” ( बौश्रौ ६·१५ ) इति । आपस्तम्बो द्वितीयतृतीयमन्त्रावेकीचकार ( आपश्रौ १०·२७·१० ) ॥ हे कृष्णाजिन, त्वम् $^{v}$अदित्याः भूमेः २५ $^{v}$सदः स्थानम् $^{v}$असि । हे सोम, तस्याः $^{v}$सदः प्राप्नुहि । $^{v}$ऋषभः श्रेष्ठोऽयं सोमो यथा $^{v}$द्युलोको न पतति तथा[७] स्तम्भनं संचस्कार[८], $^{v}$अन्तरिक्षम् एतावदिति $^{v}$अमिमीत, $^{v}$पृथिव्याः $^{v}$वरिमाणं गुरुत्वं चामिमीत । स सोमदेवः स्वमहिम्ना सम्यक् राजमानः विश्वानि $^{v}$भुवनानि $^{v}$आऽसीदत् व्याप्तवान् । $^{v}$विश्वा $^{v}$इत् $^{v}$तानि सर्वाण्येवोक्तानि कर्माणि सर्ववारकत्वेन वरुणनाम्नः सोमस्य $^{v}$व्रतानि व्रतवन्नियतानि ॥

६. आ.इ.पा.हा—छिद्रे । ७. तं—द्युलोकात् । ८. तं—चकार । ३०

वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पयो अघ्नियासु हृत्सु(१)क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात् सोममद्रावु-

वनेषु । वीति । अन्तरिक्षम् । ततान । वाजम् । अर्वत्स्वित्यर्वत्-सु । पयः । अघ्नियासु । हृत्स्विति हृत्-सु ( १ ) । क्रतुम् । वरुणः । विक्षु । अग्निम् । दिवि । सूर्यम् । अदधात् । सोमम् । अद्रौ । उदिति ।

५

सोम वाससा वेष्टयति—' वनेषु ' इति त्रिष्टुभा ॥ ' वाजम् ' इति द्वितीयस्यादि[१], ' हृत्सु ' इति तृतीयस्य , ' दिवि ' इति चतुर्थस्य ॥ वनेषु वृक्षेषु वृक्षषण्डेषु वा अन्तरिक्ष भूताकाश वि ततान विस्तारितवान् । वाज वेगम् अर्वत्सु अश्वेषु वि ततान । " अर्णणस्सा-वनञ " ( पा ६ ४ १२७ ) इति आदेशः । पय क्षीरम् अघ्नियासु गोषु वि ततान । अहन्तव्या अघ्निया । " अघ्न्यादयश्च " ( उ ५६१ ) इति निपात्यते । हृत्सु हृदयेषु क्रतु विज्ञान वि ततान । वरुण वरुणशब्दवाच्य. सोम विक्षु मर्त्येषु अग्निं विततान । दिवि सूर्यम् अदधात् स्थापितवान् । सोम लतारूपमात्मान अद्रौ अदधादित्येन । त्वमेव यथैतत् सर्वमकरो तथा वाससा आत्मान वेष्टयामीति ॥

१०

प्रथमद्वितीयमन्त्रयो स्पष्टार्थता दर्शयति—" अदित्या. सदोऽस्यदित्या सद आ सीदेत्याह यथायजुरेवैतत् " (तैस ६ १ ११ ) इति ॥ द्वितीयमन्त्रसाध्यं यदासादनं तदेव तृतीयमन्त्रेणापि कर्तव्यमित्यमुमर्थं हेतूपन्यास-पुर सर विधत्ते—" वि वा एनमेतदर्धयति यद्वारुणर सन्त मैत्र करोति वारुण्यर्चाऽऽसादयति स्वयैवैन देवतया समर्धयति " ( तैस ६ १.११ ) इति । उपनद्ध सोमो वरुण, यद्विषये " मित्रो न एहि " ( तैस १ २.७ ) इति मन्त्र पठन् मैत्रं करोतीति "यदीत्त , एतेनैन" सोमं व्यर्धयति समृद्धिहीनं करोति, वारुण्यर्चा तु समर्धयति ॥

१५

वनेष्विति ॥ कल्प —" अथैनं वाससा परितनोति वनेषु व्यन्तरिक्ष ततान वाजमर्वत्सु पयो अघ्नियासु हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात् सोममद्राविति " ( बौश्रौ ६.१५ ) इति ॥ ' विततान ' इति प्रतिवाक्यमन्वेति । वरुणनामकः सोमदेवो जगदीश्वरेणाभिन्न सर्वं निर्ममे । तत्" किम् ? वनेषु वृक्षमध्येषु अन्तरिक्षम् अवकाश वि ततान । ¹¹⁻अर्वत्सु वाजिषु वाज गतिविशेष¹¹, पय गोषु, हृदयेषु चित्तेषु क्रतु सकल्प, विक्षु प्रजासु जाठराग्निं ¹²⁻भौमाग्निं वा¹², द्युलोके सूर्यं, पर्वते सोम-वल्लीम् अदधात् अस्थापयत् ॥ अनेन मन्त्रेण कर्तव्य विधत्ते—" वाससा पर्यानह्यति सर्वदेवत्य वै वास सर्वाभिरेवैन देवताभि समर्धयत्यथो रक्षसामपहत्यै " ( तैस ६.१.११ ) इति ॥ मन्त्रार्थो लोकप्रसिद्ध इत्याह—" वनेषु व्यन्तरिक्ष ततानेत्याह वनेषु हि व्यन्तरिक्ष ततान वाजमर्वत्स्वित्याह वाजर्ह्यर्वत्सु पयो अघ्नियास्वित्याह पयो ह्यघ्नियासु हृत्सु क्रतुमित्याह हृत्सु हि क्रतु वरुणो विक्ष्वग्निमित्याह वरुणो हि विक्ष्वग्निं दिवि सूर्यमित्याह दिवि हि सूर्यः सोममद्रावित्याह ग्रावाणो वा अद्रयस्तेषु वा एष सोम दधाति यो यजते तस्मादेवमाह " ( तैसं ६.१ ११ ) इति । अद्रिशब्देनात्र पाषाणबहुलो गिरिर्विवक्षित । पाषाणमधिषु सोमस्योत्पत्ते. । यजमानस्तेषु पाषाणेषु सोम प्राप्नोति ॥

२०

२५

३०

१ त–द्वितीयस्य पादस्यादि ।

९-९. उ पा मा–यदेनम्, हा–यदेतेनैनम् । १०. क–किम् । ११–११. इ.उ नं पा मा– ' अर्वत्सु गतिविशेषम् ' नास्ति । आ क.–अर्वत्सु वाजिषु वाजं वेग गतिविशेषम्, मर–वाज वेगमश्वेषु । १२–१२ आ क.हा–' भौमाग्निं वा ' नास्ति ।

सोमस्य शकटारोपणम्]

उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम्॥
उस्रावेतं धूर्षाहावनश्रू अवीरहणौ ब्रह्मचोदनौ

उ। त्यम्। जातवेदसमिति जात–वेदसम्। देवम्। वहन्ति। केतवः। दृशे। विश्वाय। सूर्यम्।
उस्रौ। एति। इतम्। धूर्षाहाविति धूः–साहौ। अनश्रू इति। अवीरहणावित्यवीर–हनौ।
ब्रह्मचोदनाविति ब्रह्म–चोदनौ। ५

सौर्यर्चा कृष्णाजिनं पुरस्तात् प्रत्यानह्यत्यूर्ध्वग्रीवम्–'उदु त्यम्' इति गायत्र्या॥ त्यं तं जातवेदसं जातानां वेदितारम्। "*गतिकारकयोरपि" (द.उ ६७६) इत्यसुन्प्रत्ययः*। जातप्रज्ञानं वा। सूर्यं देवं देवनादिगुणयुक्तं उद् वहन्ति ऊर्ध्वं वहन्ति केतवः रश्मयः दृशे द्रष्टुम्। "दृशे विख्ये च" (पा ३.४.११) इति निपात्यते। विश्वाय विश्वार्थम्। विश्वं लोको यथा एनं पश्येत् तदनुरूपमुद्वहन्ति। स्मैभावाभावश्छान्दसः। क्रियमाणेन का संगतिः? १० उच्यते– एतस्य कर्मणः [२]सामर्थ्यादेतदेवं भवतीति[२]॥

सोमवाहनावानीयमानौ प्रतिमन्त्रयते–'उस्रौ' इति विराजैकपदया यजुरन्तया॥ हे उस्रौ बलीवर्दौ, एतम् आगच्छतम्। धूर्षाहौ धूर्वाहौ धुरः सोढारौ धुरं वोढुं समर्थौ। "छन्दसि सहः" (पा ३.२.६३) इति ण्विः। पूर्ववत् षत्वम् (पा ८.३.५६)। अनश्रू अश्रुवर्जितौ अखिन्नौ सन्तावागच्छतम्। "नञ्सुभ्याम्" (पा ६.२.१७२) इत्युत्तरपदान्तोदात्तत्वम्। १५ यद्वा–अनसि शकटे वोढृत्वेन श्रुतौ विख्यातौ। क्विपि (पा ३.२.७६) तुगभावश्छान्दसः। अनो वोढृत्वेन श्रितौ वा। श्रयतेः क्विपि (पा ३.२.७६) वर्णव्यत्ययः तुगभावश्छान्दसः। अवीरहणौ अहिंसकौ दान्तौ सन्तौ। यजुरादित्वान्न निहन्यते। ब्रह्मचोदनौ ब्रह्म अन्नम्, तत्साधनत्वादिह सोम उच्यते। तस्य चोदनौ प्रस्थापयितारौ सन्तौ। कर्तरि करणे वा ल्युटि (पा ३.३.११३) कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६.२.१३९)॥ २०

उदिति॥ कल्पः–"उदु त्यं जातवेदसमिति सौर्यर्चा कृष्णाजिनं पुरस्तात्[१३]प्रत्यानह्यत्यूर्ध्वग्रीवं बहिःप्राद्विशसनम्" (आपश्रौ १०.२७.१०) इति॥ स च मन्त्र एवं पठ्यते–'उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम्' इति॥ केतवः रश्मयः त्यं तं परोक्षं जातवेदसम् उत्पन्नस्य सर्वस्य जगतो वेत्तारं सूर्यं देवम् उद् वहन्ति ऊर्ध्वप्रदेशं प्रापयन्ति। [१४]किमर्थम्? विश्वाय दृशे सर्वस्य जगतो दर्शनार्थम्॥ सौर्यमन्त्रेण रक्षांसि निवार्यन्त इत्याह–"उदु त्यं जातवेदसमिति सौर्यर्चा २५ कृष्णाजिनं प्रत्यानह्यति रक्षसामपहत्यै" (तैसं ६.१.११) इति॥

उस्रावितिति॥ कल्पः–"अथ सोमवाहनावानीयमानौ प्रति मन्त्रयते उस्रावेतं धूर्षाहावनश्रू अवीरहणौ ब्रह्मचोदनाविति" (बौश्रौ ६.१५) इति॥ हे उस्रौ बलीवर्दौ, एतम् आगच्छतम्। कीदृशौ? धूर्षाहौ भारं सहमानौ अनश्रू अनसि [१५]शकटे श्रुतौ ख्यातौ अवीरहणौ वीरं शकटस्थितं सोममबाधमानौ ब्रह्मचोदनौ, ब्रह्म अन्नम्, कृषिद्वारेणान्नप्रवर्तकौ॥ मन्त्रस्य स्पष्टार्थतामाह–"उस्रावेतं ३० धूर्षाहावित्याह यथायजुरेवैतत्" (तैसं ६.१.११) इति॥

*–* 'गतिकारकोपपदयोः...' (उ ६७६) इत्यनेन असिर्विधीयते। ऋग्वेद १.४४.१ इत्यत्र सायणाचार्यैरपि "गतिकारकयोरपि...इति असुन्" इत्येव व्याख्यातम्। २–२ ति–सामर्थ्यादेत एवं वहन्ति।

१३. आ.म२.हा–'पुरस्तात्' नास्ति। १४. इ.उ.पा.मां.हा–'किमर्थम्' नास्ति। १५. इ. उ.पा.मां.हा–'शकटे' नास्ति। ३५

वरु॑णस्य स्कम्भ॑नमसि वरु॑णस्य स्कम्भसर्जनमसि प्रत्य॑स्तो वरु॑णस्य पाशः ॥ ८ ॥

[ हुत्सु पञ्चत्रिंशच्च ]

वरु॑णस्य । स्कम्भ॑नम् । असि । वरु॑णस्य । स्कम्भसर्जनमिति स्कम्भ–सर्जनम् ।
असि । प्रत्य॑स्त इति प्रति–अस्त । वरु॑णस्य । पाशः ॥ ८ ॥

५ [ मैसं १·२ ६ , कास २·६–७ , कपिसं १·१९,२·१ , वास ४ २८–३३ ]

दक्षिण युनक्ति—‘ वरुणस्य ’ इति ॥ वरुणस्य स्कम्भन स्तम्भनमुत्पादयिता त्वम् असि यागद्वारेण । यद्वा—वरुणस्य वरणीयस्य वारयितुर्वा सोमस्य स्कम्भन धारयिता असि ॥

शम्यामवगूहति—‘ वरुणस्य ’ इति ॥ वरुणस्य सोमस्य स्कम्भन स्कम्भ अविचलितमवस्थान तस्य सर्जनम् उत्पादयिता च असि त्वदधीनत्वात् स्कम्भनस्य ॥

१० योक्त्रेण बध्नाति—‘ प्रत्यस्त ’ इति ॥ प्रत्यस्त. उत्क्षिप्त वरुणस्य पाश त्वमसि । यद्वा— त्वया बन्धने कृते वरुणस्य पाश प्रत्यस्त ॥

॥ इति द्वितीयेऽष्टमोऽनुवाक ॥ ८ ॥

वरुणस्येति ॥ बौधायन —“ तयोर्दक्षिण पूर्वं युनक्ति वरुणस्य स्कम्भनमसीति । वरुणस्य स्कम्भसर्जनमसीति शम्यामवगूहति । प्रत्यस्तो वरुणस्य पाश इति योक्त्रम् ” ( बौश्रौ ६·१५ ) इति ।

१५ आपस्तम्ब —“ वरुणस्य स्कम्भनमसीति शम्या [16]प्रतिमुच्योत्तारेत धूर्षाहावित्यनडुवाहावुपाज्य[17] वारणमसीति [18]योक्त्रपाशं परिहृत्य[18] प्रत्यस्तो वरुणस्य पाश इत्यभिधानीं प्रत्यस्यति ” ( आपश्रौ १०·२८ १ ) इति ॥ शाखान्तरानुसारेण “ वारुणमसि ” ( मैसं १·२ ६, कास २ ७, कपिसं २·१ ) इत्युक्तम् । एतच्छाखानुसारेण ‘ वरुणस्य स्कम्भसर्जनमसि ’ इति द्रष्टव्यम् । युगच्छिद्रे प्रक्षेप्य शङ्कु शम्या । हे शम्ये, त्वं वरुणस्य उक्ष्णो निवारणीयस्य बलीवर्दस्य स्कम्भन निवारण कुर्वती असि । गलबन्धनसाधनं

२० योक्त्रम् । हे योक्त्र, त्वमपि पलायनान्निवारणीयस्य शम्येव निवारण सृजसि । दीर्घरज्जु पाश । स च प्रत्यस्त शकटस्योपरि प्रसारित ॥ एते त्रयो मन्त्रा स्पष्टार्था इति ब्राह्मणेनोपेक्षिता ॥

अत्र विनियोगसंग्रह—

“ उदायु सोममादायोरु गच्छेच्छकट प्रति ।
अद्रि स्तृत्वाऽजिन[19] सोममदित्या सेति [20]सादयेत् ॥ १ ॥
२५ वने वस्त्रेण बद्ध्वोदु प्रस्थानहाति चर्मणा ।
उस्रावनडुहोर्योगो वरु शम्यां विनिक्षिपेत् ॥ २ ॥
वर बद्ध्वा योक्त्रपाश प्रति धानीमुपास्यति ।
अनुवाके ह्यष्टमेऽस्मिन् मन्त्रा एते दशोदिता ॥ ३ ॥ ” इति ।

[21]अत्र मीमांसा नास्ति[21] ॥

३० अथ छन्द । ‘ उदायुषा ’ इत्यनुष्टुप् । ‘ उरु ’ इत्येकपदा गायत्री । ‘ अस्कन्नाद् ’ इति, ‘ वनेषु ’ इति च त्रिष्टुभौ । ‘ उदु त्यम् ’ इति गायत्री ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
प्रथमकाण्डे द्वितीयप्रपाठकेऽष्टमोऽनुवाक ॥ ८ ॥

१६. आ पा हा–प्रतिमोच्यो । १७ त–°वुपयुज्य । १८–१८ तं–योक्त्रेण संहृत्य ।
३५ १९ इ उ त.पा भा मर–सत्वाजिनम् । २० मर–सदिशेत् । २१–२१. इ उ.पा.मा–‘ अत्र मीमांसा नास्ति ’ नास्ति, तं मर– अत्र विशेषविचारो नास्ति ।

सोमस्य प्राचीनवंशं प्रति गमनम् ]

प्र च्यवस्व भुवस्पते विश्वान्यभि धामानि मा त्वा परिपरी विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो मा गन्धर्वो विश्वावसुरा

प्रेति । च्यवस्व । भुवः । पते । विश्वानि । अभीति । धामानि । मा । त्वा । परिपरीति परि–परी । विदत् । मा । त्वा । परिपन्थिन इति परि–पन्थिनः । विदन् । मा । त्वा । वृकाः । अघायव इत्यघ–यवः । मा । गन्धर्वः । विश्वावसुरिति विश्व–वसुः । एति । ५

शकटेन सोमं प्रच्यावयति—'प्रच्यवस्व' इति तिसृभिः ॥ तत्र प्रथमा षट्पदा अतिजगती । प्र च्यवस्व प्रकर्षेणास्मात् देशात् गच्छ भुवः भुवनस्य पते सोम । "षष्ठ्याः पतिपुत्र" (पा ८·३·५३) इत्यादिना सत्वम् । "सुबामन्त्रिते" (पा २·१·२) इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायो निहन्यते (पा २·१·२ वा १)। विश्वानि धामानि गन्तव्यानि स्थानानि अभि लक्ष्यीकृत्य गच्छ । "अभिरभागे" (पा १·४·९१) इति १० कर्मप्रवचनीयत्वम् । किंच—तथा गच्छन्तं त्वां परिपरी मा विदत् मा प्रापत् । विन्दतेर्लुङि लृदित्वादङ् (पा ३·१·५५)। "छन्दसि परि" (पा ५·२·८९) इत्यादिना पर्यवस्यातरि निपात्यते । योऽध्वन्याक्रम्य बाधते स पर्यवस्याता । स विश्वावसुर्गन्धर्वोऽभिप्रेतः यः पूर्वं सोमं पर्यमुष्णात् । ब्राह्मणं च भवति—"मा त्वा परिपरी विददित्याह यदेवादः सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्यमुष्णात् तस्मादेवमाहापरिमोषाय" (तैसं ६·१·११) इति । स इदानीं त्वां मा १५ विददिति । किंच सत्रे एव परिपन्थिनः विश्वावसोरन्येऽपि त्वां मा विदन् । तेनैव निपात्यते (पा ५·२·८९)। किंच— वृकाः आदाय गन्तारः । वृक वृक आदाने । इगुपधात्कः (पा ३·१·१३५)। [*]पचाद्यच् (वा ?) (पा ३·१·१३४)। [*]पुषादिर्द्रष्टव्यः । अघायवः[1] अघं पापं वधादिकं तवेच्छन्तः । "छन्दसि परेच्छायाम्" (द्र.प्राभा, काशिका ३·१·८) इति क्यच् । "अश्वाघस्यात्" (पा ७·४·३७) इत्यात्वम् । येऽध्वनि पीडां कुर्वन्तोऽन्यत्र बाधितुम् २० अध्वनोऽपनयन्ति ते त्वां मा दधत् मा आत्मसात्कार्षुः । दध पालने । छान्दसः च्लेरडादेशः । एवं तु वक्ष्यमाणस्यैकवचनस्य[4] [5]विपरिणामेन संबन्धः[5] क्लिष्टः स्यात् । तस्माद्वृका अपि त्वां मा विदन्नित्येव । किंच—विश्वावसुनामा गन्धर्वः त्वां मा दधत् परिपरी च मा भूत्, आदधिता च मा भूत् इति द्वयमस्य निषिध्यते । चतुर्थपादो विवृद्धाक्षरः ॥

[1]अष्टमे सोमस्य शकटारोपणमुक्तम् । आरोपितस्य नवमे गमनमुच्यते । २५

प्रेति ॥ बौधायनः–"सुब्रह्मण्योमिति त्रिरुक्तायां प्रच्यावयन्ति प्र च्यवस्व भुवस्पते विश्वान्यभि धामानि मा त्वा] परिपरी विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो मा गन्धर्वो विश्वावसुरा दवच्छ्येनो भूत्वा परा पत यजमानस्य नो गृहे देवैः संस्कृतमिति प्रदक्षिणं राजानं परि-

१. तं.ति–प्रकर्षेणात्मनास्मात् । २. तं.ति–'सर्वे' इत्यस्यानन्तरं 'ते'। *पचाद्यचि वृका इत्यत्र गुणाभावश्चिन्त्यः । *'वृषादिर्द्रष्टव्यः' (पा ६·१·२०३) इति पाठः संभाव्यते । तेन वृका ३० इत्यस्याद्युदात्तत्वं सेत्स्यति । ३. मै–'अघायवः' नास्ति । ४. तं.ति–'वचनान्तस्य । ५–५. ति–विपरिणामः ।

१. क.म२–'अष्टमे' इत्यस्यानन्तरम् 'अनुवाके'।

अथ द्वितीया—'श्येन' इत्यनुष्टुप्। अत्र तृतीयः पादो ह्रसिष्ठः, चतुर्थो वर्षिष्ठः ॥ श्येनः इव शीघ्रः भूत्वा परा पत निःसंकटं गच्छ अस्मदीयस्य यजमानस्य गृहे प्राग्वंशे। तत्र देवैः ऋत्विग्भिः संस्कृतम् आसन्दीस्थानम्। प्रवृद्धादित्वादुत्तरपदान्तोदात्तत्वम् (पा ६ २ १४७)॥

अध्वर्युयजमानौ गच्छतः—'यजमानस्य स्वस्त्ययनी' इति॥ स्वस्त्ययनमविनाशप्रापणं तद्वान्

५ असि। यजमानस्य स्वस्त्ययनकारी असि, हे सोम। यद्वा—स्वरितमद् अयनम् आश्रयः, तद्वान्। अविनश्वराश्रयत्वात् यजमानस्याप्यविनश्वराश्रयोऽसीति यावत्। सर्वथा "परादिश्छन्दसि बहुलम्" (पा ६ २ १९९) इत्युत्तरपदाद्युदात्तत्वम्। सतिशिष्टत्वादीनि स्वरस्य (पा ६ १ १५८ वा ९)।

अथ तृतीया — 'अपि पन्थाम्' इत्यनुष्टुप्। केचिदाहुः —"प्रथमा धृतिर्नवपदा। यजमानस्य स्वस्त्ययनी' इत्यादिका तु पञ्चपदा पङ्क्तिः" इति॥ अपि च वयं अपि पन्थां

१० पन्थानम् अगस्महि संप्राप्ताः त्वत्प्रसादेन सोम। कीदृशम्? स्वस्तिगाः, स्वस्ति अविनाशं गम्यते येन

वहन्ति। अथैतावज्जतोपनिक्रामतोऽध्वर्युर्यजमानश्च यजमानस्य स्वस्त्ययन्यस्यपि पन्थामगस्महि स्वस्तिगामनेहसं येन विश्वाः परि द्विषो वृणक्ति विन्दते वस्विति" (बौश्रौ ६·१६) इति। आपस्तम्बो मन्त्रद्वयं त्रेधा विभजति—"प्र च्यवस्व भुवस्पत इति प्राञ्चोऽभिप्रयाय प्रदक्षिणमावर्तन्ते। श्येनो भूत्वा परा पतेत्यध्वर्यू राजानमभिमन्त्रयते। अपि पन्थामगस्महीत्यध्वर्युर्यजमानश्च दक्षिणेनोत्तरेण वा राजानमतिक्रामतः"

१५ (आपश्रौ १० २९ १–३) इति॥ भूशब्देन भूमौ स्थितानि भूतानि यजमानाध्वर्युप्रभृतीन्युपलक्ष्यन्ते। तेषां च भूतानां पालकत्वात् पतिः सोमः। हे भुवस्पते सोम, विश्वानि धामानि प्राचीनवंशहविर्धानादिस्थानानि अभिलक्ष्य प्रकर्षेण च्यवस्व गच्छ। परिपरी मार्गे बाधकस्तस्करप्रभुः स त्वा मा जानातु। परिपन्थिनः तद्भृत्यास्तेऽपि त्वा मा जानन्तु। वृकाः अरण्यश्वानः। अघं पापं वधरूपमिच्छन्तीति अघायवः। तेऽपि त्वा मा जानन्तु। विश्वावसुः गन्धर्वः स्वर्गमार्गे सोमस्यापहर्ता। सोऽपि त्वा मा आ दघन्

२० मा प्रतीक्षताम्। हे सोम, त्वं श्येनवदुत्पतनसमर्थो भूत्वा अस्मद्यजमानस्य गृहे प्राचीनवंशे परा पत शीघ्रं गच्छ। देवैर्ऋत्विग्भिरध्वर्युप्रभृतिभिः तवोपवेशनायाऽऽसन्दीरूपं स्थानं संस्कृतम्। स्वस्ति श्रेयोरूपो यत्न तस्यायनं प्राप्तिस्तद्युक्तास्तीति स्वस्त्ययनी यजमानस्य यज्ञप्रापकः असि। अपि च वयं पन्थानम् अनुष्ठानरूपम् अगस्महि प्राप्ताः। कीदृशम्? स्वस्तिगाः श्रेयःप्रापकम्। अनेहसं, नकारस्य व्यत्ययेन हकारः, अनेनसं पापरहितम्। येन पथा विश्वाः द्विषः सर्वान् वैरिणः परि वृणक्ति सर्वतो

२५ वर्जयति। किंच येन पथा द्रव्यं लभते तादृशं पन्थानं प्राप्ताः॥ प्रथममन्त्रे यथोक्तमर्थं ब्राह्मणं स्पष्टयति—"प्र च्यवस्व भुवस्पत इत्याह भूतानां ह्येष पतिर्विश्वान्यभि धामानीत्याह विश्वानि ह्येषोऽभि धामानि प्रच्यवते मा त्वा परिपरी विददित्याह यदेवादः सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्यमुष्णात् तस्मादेवमाहापरिमोषाय" (तैसं ६·१·११) इति। पूर्वं गन्धर्वेण सोमस्यापहृतत्वादस्ति तस्करप्रसक्तिः। तस्मात् 'मा त्वा' इत्यादिकं वक्तव्यम्॥ द्वितीयमन्त्रे स्वस्त्ययनीशब्देन यज्ञ-

३० प्राप्तिर्विवक्षितेत्याह—"यजमानस्य स्वस्त्ययन्यसीत्याह यजमानस्यैवैष यज्ञस्यान्वारम्भोऽनवच्छित्त्यै" (तैसं ६ १ ११) इति॥ तृतीयमन्त्रो ब्राह्मणेनोपेक्षितः॥

२ आ.क—उत्तमन्त्रद्वयम्। ३ आ.क भा. हा—आवर्तते। ४. मर—'पत' इत्यस्यानन्तरं 'यजमानस्य नो गृहे'। ५. क—हि। ६ तं—समतिक्रामत। ७ त—भूपते। ८ क—कीर्शीम्। ९. क—श्रेयःप्राप्तिकरीम्, मर—श्रेयस प्रापकम्। १०–१० इ उ.पा.भां-विश्वा परिद्विष, हा—जन विश्वाः

३५ परिद्विष, क—जन विश्वा द्विषः। ११ इ उ.पा भां—'मा' नास्ति।

सोमस्य प्राचीनवंशं प्रति गमनम् ]

दधच्छ्येनो भूत्वा परा पत यजमानस्य नो गृहे देवैः संस्कृतं
यजमानस्य स्वस्त्ययन्यसि अपि पन्थामगस्महि स्वस्तिगामनेहसं
येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु

दधत् । श्येनः । भूत्वा । परेति । पत । यजमानस्य । नः । गृहे । देवैः । सꣳस्कृतम् ।
यजमानस्य । स्वस्त्ययनीति स्वस्ति–अयनी । असि । अपीति । पन्थाम् । अगस्महि । ५
स्वस्तिगामिति स्वस्ति–गाम् । अनेहसम् । येन । विश्वाः । परीति । द्विषः । वृणक्ति । विन्दते । वसु ।

तादृशम् । 'गाङ् गतौ' इत्यस्मात् धातोः[6] विच् ( पा ३·२·७४ ) । अनेहसम् अपापं पापफलरहितं पन्थानम् अगमाम । व्यत्ययेनात्मनेपदम् ( पा ३·१·८५ ) । "वा गमः" ( पा १·२·१३ ) इति सिचः कित्त्वादनुनासिकलोपः । "पथिमथ्यृभुक्षामात्" ( पा ७·१·८५ ) इत्यात्वं व्यत्ययेन ( पा ३·१·८५ ) द्वितीयायामपि भवति । यद्वा—"आशंसायां भूतवच्च" १० ( पा ३·३·१३२ ) इति लुङ् । तमपि पन्थानं गम्यास्म स्वस्तिगामनेहसम् । पुनश्च पन्था विशेष्यते । येन पथा गच्छन् विश्वाः द्विषः विश्वान् द्वेष्टॄन्[7] । लिङ्गव्यत्ययेन स्त्रीत्वम् । यद्वा— संपदादिलक्षणः स्त्रियां क्विप् ( पा ३·३·१०८ वा ९ ) । परि वृणक्ति परितो[8] वर्जयति । किंच— विन्दते लभते च वसु धनं तं पन्थानम्[9] अगमाम गम्यास्म वा ॥

राजानं प्रत्युपतिष्ठते—'नमो मित्रस्य' इति जगत्या ॥ सूर्यात्मना सोमः स्तूयते । १५ नमस्कारोऽस्तु तस्मै मित्रस्य वरुणस्य चक्षसे चक्षुःस्थानीयाय । महः चतुर्थ्यर्थे षष्ठी ( पा २·३·६२ ) महते देवाय तत् ऋतं यज्ञं सपर्यत तस्मै देवाय सपर्यार्थं यज्ञमपि प्रयुङ्ध्वम् । सपर पूजायां कण्ड्वादिः । विभक्तिव्यत्ययेन ( पा ३·१·८५ ) वा चक्षुःस्थानीयं तं ऋतेन परिचरतेति । एवं नमस्कारेण यज्ञेन च महान् देव आराध्यत इत्युक्तम् । अधुना स्तोत्रेणाप्याराधनीय इत्याह— दूरेदृशे दूरे सर्वदा दृश्यत इति दूरेदृक् । दूरे स्थित्वा सर्वं २० पश्यतीति वा । "तत्पुरुषे कृति बहुलम्" ( पा ६·३·१४ ) इत्यलुक् । देवजाताय जाता देवा यस्मिन् । "निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनम्" ( पा २·२·३६ वा ९ ) इति परनिपातः । केतवे रश्मिमते, मत्वर्थीयो लुप्यते । यद्वा— केतुः प्रज्ञा, तद्धेतवे तदात्मने वा दिवः पुत्राय दीप्तेः पुत्रस्थानीयाय, सदा तत्प्रभवत्वात् । यद्वा— दिवो द्युलोकस्य दुःखात् त्रायकाय । "षष्ठ्याः पतिपुत्र°" ( पा ८·३·५३ ) इत्यादिना २५ सत्वम् । ईदृशाय सूर्याय विश्वस्य सवित्रे शंसत शस्त्राणि कुरुत स्तुवतेति यावत् । एवं लिङ्गात् सूर्योपस्थानमिदं प्रतीयते, सोमोपस्थाने तु विनियुज्यते—"राजानं प्रत्युपतिष्ठते" इति । तत्र चक्षुःस्थानीयस्य सूर्यस्य नमस्कारादिना चक्षुष्मान् देव आराधितो भवतीति आचार्यस्याभिप्रायः । इयं चोपपत्तिः — अत्र प्रकरणे[10] मित्रवरुणशब्दौ सोमवचनौ मन्त्रेषु प्रसिद्धौ । यथा—"मित्रो न एहि" ( तैसं १·२·७ ) इति सोम उच्यते । ३०

६–६. मै–इत्यतः । ७. मै–द्वेष्यान् । ८. तं.पं–सर्वतः । ९. तं.ति.पं–'पन्थानम्' नास्ति ।
१०. तं.ति.पं.–मित्रावरुण° ।

नमो॑ मि॒त्रस्य॒ वरु॑णस्य॒ चक्ष॑से म॒हो दे॒वाय॒ तदृ॒तꣳ स॑पर्यत
दू॒रे॒दृशे॑ दे॒वजा॑ताय के॒तवे॑ दि॒वस्पु॒त्राय॒ सूर्या॑य शꣳसत ॥

नमः॑ । मि॒त्रस्य॑ । वरु॑णस्य । चक्ष॑से । म॒हः । दे॒वाय॑ । तत् । ऋ॒तम् । स॒प॒र्य॒त॒ । दू॒रे॒दृश॒ इति॑ दूरे-दृशे॑ । दे॒वजा॑ता॒येति॑ दे॒व-जा॒ता॒य॒ । के॒तवे॑ । दि॒वः । पु॒त्राय॑ । सूर्या॑य । श॒ꣳस॒त॒ ॥

५ मिते त्रायते इति मित्र । " वरुणो वा एष यजमानमभ्यैति यत्क्रीत सोम उपनद्ध " ( तैस ६.१.११ ) इति च । वरुण इतीदानीं सोमाभिधानम् । वरणीय संरम्भयतीति वरुण । देवायेति षष्ठ्यर्थे चतुर्थी (पा २ ३ ६२ वा १) । अय भाव —मित्रत्वादिगुणविशिष्टस्य महतो देवस्यास्य त्वम् चक्षु स्थानीय [ इति ] सूर्याय नमस्कारादिक कुरुतेति । अनेनैवाभिप्रायेण " राजान प्रत्युपतिष्ठते " इति प्रतिशब्द प्रयुक्त । राजान प्रति राजानमुद्दिश्य सूर्यमुपतिष्ठत इति लिङ्गमप्यनिरुद्धम् ॥

१० नम इति ॥ कल्प — " अथाग्रेण शाला तिष्ठन्नोह्यमानꣳ राजान प्रति मन्त्रयते नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतꣳ सपर्यत दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शꣳसतेति " ( बौश्रौ ६.१६ ) इति ॥ अस्मिन् मन्त्रे सूर्यरूपेण सोम स्तूयते । मित्रस्य मित्राय नम । कीदृशाय ? वरुणस्य स्वरश्मिभिर्जगदावृणते । [12] पुन कीदृशाय ? चक्षसे सर्वज्ञाय [12] । हे ऋत्विज , मह महते तस्मै देवाय देवप्रीत्यर्थं सपर्यत सपर्यां सेवा कुरुत । किं कृत्वा ? तत् ज्योतिष्टोमरूपम् ऋत

१५ सत्यमवश्यफलप्रद कर्म कृत्वा । किंच सूर्याय शंसत सूर्यप्रीत्यर्थं स्तुतिं कुरुत । कीदृशाय सूर्याय ? दूरे दृश्यमानाय देवत्वेन जाताय केतवे अह्नो लक्षणभूताय द्युलोकस्य पुत्रवत् प्रियाय ॥ अस्मिन् मन्त्रे वरुणशब्दाभिप्रायमाह—" वरुणो वा एष यजमानमभ्यैति यत्क्रीत सोम उपनद्धो नमो मित्रस्य वरुणस्य चक्षस इत्याह शान्त्यै " ( तैस ६ १ ११ ) इति । य सोम उपनद्ध एष वरुणरूप सन् यजमानमभिलक्ष्य समागच्छति अतो वरुणनमस्कारेण तत्कृत [13] उपद्रव शाम्यति ॥

२० यद्यप्यग्नीषोमीयस्य पशोर्नायमनुष्ठानकालस्तथाऽपि प्रसङ्गात ▪ पशु विधित्सु प्रसङ्ग तावद्दर्शयति— " आ सोमं वहन्त्यग्निना प्रति तिष्ठते तौ संभवन्तौ यजमानमभि स भवत पुरा खलु वावैष मेधायाऽऽत्मानमारभ्य चरति यो दीक्षित " ( तैस ६ १.११ ) इति । ऋत्विज प्राचीनवंशगतस्याऽऽहवनीयस्याग्ने समीप प्रति सोममानयन्ति । स च सोमोऽग्निना समेत्य प्रतिष्ठितो भवति । तौ चाग्नीषोमौ परस्पर यदा सगच्छेते तदा यजमानमभिलक्ष्य सगतौ भवत । तदेतदवगम्य किल पुरा यो दीक्षित, स एष यज्ञार्थं स्वात्मानमेवाऽऽलभ्य

२५ पशुत्वेनोपाकृत्य प्रचरति, सोऽय प्रसङ्ग ॥ इदानीं विधत्ते—" यदग्नीषोमीय पशुमालभत आत्मनिष्क्रयण एवास्य स " ( तैस ६ १.११ ) इति । अस्य यजमानस्य पश्वालम्भ आत्मनिष्क्रयण । [14] पशुं मूल्यत्वेनाग्नीषोमाभ्या दत्वा तयो [14] स्वभूतमात्मान निष्क्रीणाति ॥ अत्र [15] हवि शेषभक्षण पूर्वपक्षतया निषेधति— " तस्मात् तस्य नाऽऽश्य पुरुषनिष्क्रयण इव हि " ( तैस ६ १ ११ ) इति । यस्मादय पशु पुरुषस्य मूल्यमिव [16] तस्मात् तस्य पशो सगन्धि हविर्न भक्षणीय तद्भक्षणे मूल्यनाशप्रसङ्गात ॥ सिद्धान्तमाह—

३० " अथो खल्वाहुरग्नीषोमाभ्या वा इन्द्रो वृत्रमहन्निति यदग्नीषोमीयं पशुमालभते वार्त्रघ्न एवास्य स तस्माद्वाद्यम् " ( तैस ६ १ ११ ) इति । अथोशब्द पूर्वपक्षव्यावृत्त्यर्थ. । अभिज्ञास्तु अग्नीषोमार्थमिन्द्रो

१२–१२ इ उ तै पा भा म र–' पुन सर्वज्ञाय ' नास्ति । १३ आ क हा–तत्कृत । १४–१४ आ क–पशुं मूल्यत्वेनाग्नीषोमाभ्यां दत्वा तेन तयो , इ पा भा हा–पशुं मूल्यमेवाग्नीषोमाभ्या दत्वा तयो , उ–' पशु तयो ' नास्ति । १५ इ त पा भा हा–हवि शेषम् , उ–' हवि शेषभक्षणम् ' नास्ति । १६ उ–
३५ ' मूल्यमिव ' नास्ति, क हा–मूल्यमेव ।

सोमोन्मानम् ]

वरुणस्य स्कम्भनमसि वरुणस्य स्कम्भसर्जनमस्युन्मुक्तो वरुणस्य पाशः ॥ ९ ॥

[ मित्रस्य त्रयोविंशतिश्च ]

वरुणस्य । स्कम्भनम् । असि । वरुणस्य । स्कम्भसर्जनमिति स्कम्भ–सर्जनम् । असि । उन्मुक्त इत्युत्–मुक्तः । वरुणस्य । पाशः ॥ ९ ॥

[ मैसं १.२.६; कासं २.७; कपिसं २.१; वासं ४.३४–३७ ] ५

शकटमुदगीपमुपस्तम्भयति—‘ वरुणस्य स्कम्भनम् असि ’ इति ॥ व्याख्यातम् ( तैसं १.२.८ ) । इह त्वयं विशेषः – ईषाया उपस्कम्भनमभिधेयम्, तत्र तु गौः ॥

शम्यामुद्वृहति—‘ वरुणस्य स्कम्भसर्जनमसि ’ इति ॥ व्याख्यातमेतत् ( तैसं १.२.८ ) । अत्रापि स एवार्थः ॥ सर्जनं विसर्जनं वेदितव्यम् ॥

योक्त्रमपनयति—‘ उन्मुक्तो वरुणस्य पाशः ’ इति ॥ अपनीतोऽसीत्यर्थः । यद्वा— १० त्वय्यपनीते वरुणस्य पाशः उन्मुक्तः भवतीति ॥

॥ इति द्वितीये नवमोऽनुवाकः ॥ ९ ॥

वृत्रं हतवान् इत्याहुः । अयं वृत्तान्तो द्वितीयकाण्डस्य पञ्चमप्रपाठके “ त्वष्टा हतपुत्रः ” ( तैसं २.५.२ ) इत्यस्मिन्ननुवाके प्रपञ्चितः । यस्मादग्नीषोमार्थमिन्द्रो वृत्रं हतवांस्तस्मादग्नीषोमीयपश्वालम्भो यः सोऽस्य यजमानस्य वैरिघाती । तस्मात् तदीयं [17]हविर्भक्षणीयम् ॥ १५

एवं[17] प्रासङ्गिकं परिसमाप्य प्रकृतमेव ‘ नमो मित्रस्य ’ इति मन्त्रं विनियुङ्क्ते—“ वारुण्यर्चा परि चरति स्वयैवैनं देवतया परि चरति ” ( तैसं ६.१.११ ) इति । उपनद्धस्य सोमस्य वरुणो देवता । परिचरणं नमस्काराद्युपचारः । ततो वरुणमन्त्रेण तदनुष्ठानं युक्तम् । अथ प्राग्वंशे सोममासन्द्यां प्रतिष्ठाप्य तस्मिन् काले, “ एवा वन्दस्व वरुणं बृहन्तम् ” ( तैब्रा २.५.८ ) इत्येतया, “ तत्त्वा यामि ” ( तैसं २.१.११ ) इत्यनया वा वारुण्यर्चोपस्थानरूपं [18]परिचरणं कर्तव्यम् ॥ २०

वरुणस्येति ॥ बौधायनः—“ अथैतत् सोमवाहनमग्रेण* शालामुदगीपमुपस्थापयन्ति । तदुपस्तभ्नाति** वरुणस्य स्कम्भनमसीति । वरुणस्य स्कम्भसर्जनमसीति [19]शम्यामुदूहत्युन्मुक्तो वरुणस्य पाश इति योक्त्रम् ” ( बौश्रौ ६.१६ ) इति । आपस्तम्बः ( १०.२९.८ ) तु[20] शम्यायोक्त्राभिधानीनां क्रमेणोन्मोचनं मन्यते ॥

अत्र विनियोगसंग्रहः — २५

“ प्र च्य प्राग्वंशागमनं श्येनोऽध्वर्युस्तु मन्त्रयेत् ।
अभ्यतिक्रम्य राजानं नम एनं प्रतीक्षते ॥
वरुत्रयेण शम्यादीन् मुञ्चेत् सप्तात्र मन्त्रकाः ॥ १ ॥ ” इति ॥

अत्रापि नास्ति मीमांसा ॥

अथ छन्दः ॥ ‘ प्र च्यवस्व ’ इति षट्पदाऽतिजगती । ‘ श्येनो भूत्वा ’, ‘ अपि पन्थाम् ’ इत्येते ३० अनुष्टुभौ । ‘ नमो मित्रस्य ’ इति जगती ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

१७–१७. आ.इ.उ.तं.पा.भां.मर.हा–हविर्भक्षणीयमेव । १८. इ.उ.पा.भां.हा–परिभ्रमणम् ।
*[ बौश्रौसूत्रे ‘ मनोऽग्रेण ’ इति । ] **[ बौश्रौसूत्रे ‘ स्तभ्नोति ’ इति । ] १९. क–शम्यामुद्गृह्णात्यु’; ३५
[ बौश्रौसूत्रे ‘ शम्यामुद्गूहत्यु’ ।] २०. इ.उ.पा.भां.हा–‘तु’ नास्ति ।

अ॒ग्नेरा॑ति॒थ्यम॑सि॒ विष्ण॑वे त्वा॒ सोम॑स्याऽऽति॒थ्यम॑सि॒ विष्ण॑वे॒ त्वाऽति॑थेराति॒थ्यम॑सि॒
विष्ण॑वे त्वा॒ऽग्नये॑ त्वा रायस्पोष॒दाव्न्ने॒ विष्ण॑वे त्वा
श्ये॒नाय॑ त्वा सोम॒भृते॒ विष्ण॑वे त्वा॒

अ॒ग्ने । आ॒ति॒थ्यम् । अ॒सि॒ । विष्ण॑वे । त्वा॒ । सोम॑स्य । आ॒ति॒थ्यम् । अ॒सि॒ । विष्ण॑वे । त्वा॒ ।
५ अति॑थेः । आ॒ति॒थ्यम् । अ॒सि॒ । विष्ण॑वे । त्वा॒ । अ॒ग्नये॑ । त्वा॒ । रा॒य॒स्पो॒ष॒दाव्न्न॒ इति॑ रायस्पोष–दाव्न्ने॑ ।
विष्ण॑वे । त्वा॒ । श्ये॒नाय॑ । त्वा॒ । सो॒म॒भृत॒ इति॑ सोम–भृते॑ । विष्ण॑वे । त्वा॒ ।

आतिथ्यं निर्वपति—‘ अग्नेरातिथ्यमसि ’ इत्यादिभिः ॥ “ अतिथिरभ्यतितो गृहान् भवति ” (नि ४ ५) इति यास्कः । अतेरिथिन् (उ ४५०) । अतिथये इदमातिथ्यम् । “ अतिथेर्ञ्यः ” (पा ५ ४ २६) । अत्र सर्वदेवतात्मनो विष्णोरङ्गभूता एते अग्न्यादयो राज्ञि गृहमागते आगता
१० भवन्ति । ते च केवलं निर्वपणविशेषणतयोपादीयन्ते । यथा—“ यदग्नावग्निं मथित्वा प्रहरति तेनैवाग्नय आतिथ्यं क्रियते ” (तैस ६ २.१) इति । अत्र नाग्नेर्हविषा सबन्धः । एवमेते अग्न्यादयो न हविर्भजन्ते, विष्णोरेव केवलस्य सर्वदेवतासमष्टिरूपस्य हविषा सबन्धः । ननु निर्वपणमन्त्रेष्वग्न्यादयोऽपि प्रतीयन्ते, तत्कथं केवलं विष्णुः स्यात् हविषः सबन्धी ? उच्यते अग्न्यादिग्रहणस्योपलक्षणार्थत्वादन्येषामपि राज्ञा सहागतानामतिथीनाम्, अत्रागतानां मध्ये कैश्चिन्नि-
१५ र्वापः क्रियते इति । अत्र हि ब्राह्मणं “ यावद्भिर्वै राजाऽनुचरैरागच्छति सर्वेभ्यो वै तेभ्य आतिथ्यं क्रियते ” (तैस ६.२ १) इत्युक्त्वा “ अग्नेरातिथ्यमसि विष्णवे त्वेत्याह गायत्रिया एवैतेन करोति ” (तैस ६ २ १) इत्यादिना अग्न्यादीनामुपलक्षणभूतानां हविषा सबन्धो नास्तीति प्रतिपादयति । तत्राग्न्यादयस्तिस्रो देवता विष्णुना व्यधिकरणभूता निर्दिष्टाः, अन्यास्तु सामानाधिकरण्येन, आतिथ्यपदं च तयोर्मन्त्रयोर्नास्ति । तत्र वैचित्र्यकारणं मृग्यम् । मन्त्रार्थस्तु
२० निरुप्यमाणं द्रव्यमुच्यते । ‘अग्ने अग्न्यात्मनो विष्णवशस्य ‘आतिथ्यम् अतिथिप्रयुक्तं निर्वाप्यं त्वम् ‘असि, तत् त्वा ‘विष्णवे हविष्मते निर्वपामि ॥ ‘सोमस्य सोमरूपात्मनो विष्णवशस्य । शेषं समानम् ॥ अतिथिरतनशीलः, [1]यः सदा[1] गच्छति, आदित्य उच्यते वायुर्वा । समानमन्यत् ॥ रायस्पोषदावा नामाग्निविशेषः, तदात्मने ‘विष्णवे त्वा निर्वपामि । रायो धनस्य पोषो रायस्पोषः । छान्दसः षष्ठ्या अलुक् । “ षष्ठ्याः पतिपुत्र ” (पा ८ ३ ५३) इति सत्वम् । तं ददातीति ।
२५ “ आतो मनिन् ” (पा ३ २ ७४) इति वनिप् । कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६ २.१३९) ॥ श्येनः सोमभृद्देवताविशेषः । गायत्रीत्येके । श्येनः शंसनीय इत्याहुः (नि ४ २४, उ २१३) । [2]श्येनात्मना यः सोमं बिभर्तीति सोमभृत् । गायत्रीपक्षे सोमं हरतीति सोमभृत् । “ हग्रहोर्भश्छन्दसि ” (पा ८ २ ३२ वा १) इति भत्वम् ॥

१-१ मै—यत सर्वदा, ति—‘ य ’ नास्ति । २ मै—श्येनात्मा ।

नवमेऽनुवाके सोमस्य प्राचीनवंशं प्रति गमनमुक्तम्। दशमे तु समीपमागतस्यातिथिरूपस्य सोमस्य सत्कारायाऽऽतिथ्येष्टिरुच्यते।

अग्नेरिति ॥ कल्पः—" आतिथ्यं निर्वपत्यन्वारब्धायां पत्न्याम्। अथ देवस्य त्वा सवितुः प्रसव इति प्रतिपदं कृत्वा। अग्नेरातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामीति। एतामेव प्रतिपदं कृत्वा सोमस्याऽऽतिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामीति। एतामेव प्रतिपदं कृत्वाऽतिथेरातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामीति। एतामेव प्रतिपदं कृत्वाऽग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वा जुष्टं निर्वपामीति। एतामेव प्रतिपदं कृत्वा श्येनाय त्वा सोमभृते विष्णवे त्वा जुष्टं निर्वपामीति। पञ्चकृत्वो यजुषा" (बौश्रौ ६·१६–१७) इति ॥ प्रकृतिगते "अग्नये जुष्टं निर्वपामि" (तैसं १·१·४) इत्येतस्मिन् मन्त्रेऽतिदेशात् प्राप्ते सति तत्रत्यदेवतापदस्यैवात्र पञ्चभिः पर्यायैरपोदितत्वात्[1] पञ्चस्वपि सावित्रं जुष्टं चानुवर्तते। अत्र विष्णुः एक एव हविषो देवता। अग्न्यादयस्तु तदनुचराः। अतति सततं गच्छतीत्यतिथिः। तदर्थं क्रियमाणं सत्काररूपं कर्म आतिथ्यम्। लोके स्वामिने [2]दीयमानेन द्रव्येण तदनुचरा[2] अपि परितुष्यन्ति। तस्मादग्न्यादीनामिदं हविर्मवत्यातिथ्यम्। हे हविः, त्वमतिथिरूपस्य अग्नेः सत्काररूपम् असि। तादृशं त्वां विष्णुशब्दाभिधेयाय सोमाय निर्वपामि। 'सोमस्य' इत्यत्र प्रधानभूतः सोमो न त्वपरः कश्चित् सखासाऽनुचरः, अतिथिनामकोऽन्यः। रायस्पोषदाता धनसमृद्धेर्दाता कश्चिदग्निनामकोऽन्यः। सोमं बिभर्ति पोषयतीति सोमभृत् श्येननामकोऽन्यः। एतावुभावपि सोमस्य राज्ञोऽतिप्रत्यासन्नावनुचरावित्यभिप्रेत्य [3]'अग्नये त्वा', 'श्येनाय त्वा' इति[3] चतुर्थ्या त्वाशब्देन च प्रधानसमतया निर्दिश्येते ॥ मन्त्रान् व्याचिख्यासुरादौ कालविशेषसहितमातिथ्यं कर्म विधत्ते—"यद्युभौ विमुच्याऽऽतिथ्यं गृह्णीयाद्यज्ञं विच्छिन्द्याद् यदुभावविमुच्य यथाऽनागतायाऽऽतिथ्यं क्रियते तादृगेव तद्विमुक्तोऽन्योऽनड्वान् भवत्यविमुक्तोऽन्योऽथाऽऽतिथ्यं गृह्णाति यज्ञस्य संतत्यै" (तैसं ६·२·१) इति। द्वयोर्बलीवर्दयोर्विमुक्तयोः सतोः सोमगमनरूपं कर्म सर्वथा परित्यक्तं भवति। आतिथ्यकर्म तु नोपक्रान्तम्[4]। ततो यज्ञमध्ये यज्ञो विच्छिद्येत। अविमुक्तयोस्तु द्वयोर्गमनस्यासंपूर्णत्वादनागताय सोमाय आतिथ्यं कृतं भवेत्। एकस्मिन् विमुक्ते च विमुक्तत्वादेव गमनं संपूर्णं भवति। इतरस्य विमोकाभावात् पूर्वकर्मापि न त्यक्तम्। अतस्तस्मिन् काले निर्वापाद्यज्ञः संततो भवति ॥ निर्वापकालेऽध्वर्युमनु पत्न्याः शकटस्पर्शं विधत्ते—"पत्न्यन्वारभते पत्नी हि पारीणह्यस्येशे पत्नियैवानुमतं निर्वपति यद्वै पत्नी यज्ञस्य करोति मिथुनं तदथो पत्निया एवैष यज्ञस्यान्वारम्भोऽनवच्छित्यै" (तैसं ६·२·१) इति। परीणत् गृहं, तत्र भवं व्रीह्यादिद्रव्यं पारीणह्यं तस्येशाना पत्नी। किंच यज्ञः पुमान् पत्नी स्त्री इत्येतत् मिथुनम्।

१. क–पर्यायैरापादितत्वात्। २–२. तं–दीयमाने द्रव्ये एतदनुचराः। ३–३. आ.हा–अग्नये श्येनायेति। ४. आ.क.हा– उपक्रान्तम्।

किंच योऽयं पत्न्या [5]शकटस्य यज्ञाङ्गस्य स्पर्शः स यज्ञस्य [6]विच्छेदराहित्याय भवति ॥ मन्त्रान् व्याचष्टे—
" यावद्भिर्वै राजाऽनुचरैरागच्छति सर्वेभ्यो वै तेभ्य आतिथ्यं क्रियते छन्दाꣳसि खलु वै सोमस्य राज्ञोऽनु-
चराण्यग्नेरातिथ्यमसि विष्णवे त्वेत्याह गायत्रिया एवैतेन करोति सोमस्याऽऽतिथ्यमसि विष्णवे त्वेत्याह
त्रिष्टुभ एवैतेन करोत्यतिथेरातिथ्यमसि विष्णवे त्वेत्याह जगत्या एवैतेन करोत्यग्नये त्वा रायस्पोषदाव्ने
५ विष्णवे त्वेत्याहानुष्टुभ एवैतेन करोति श्येनाय त्वा सोमभृते विष्णवे त्वेत्याह गायत्रिया एवैतेन करोति "
( तैस ६ २ १ ) इति । सोमस्य भृत्यैरग्न्यादिभिः भृत्यान्तराणि गायत्र्यादीन्युपलक्ष्यन्ते । उपलक्षक-
विशेषाणामग्न्यादीनामुपलक्ष्यविशेषैर्गायत्र्यादिभिः प्रातिस्विकसम्बन्धविशेषे प्रमाणमिदमेव ब्राह्मणम् ॥
निर्वापावृत्तिसंख्यां विधत्ते—" पञ्च कृत्वो गृह्णाति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे "
( तैसं ६ २ १ ) इति । आद्यन्तयोर्मन्त्रयोर्गायत्र्या द्विरपलक्षितत्वं प्रश्नोत्तराभ्यामुपपादयति—" ब्रह्म-
१० वादिनो वदन्ति कस्मात् सत्याद्गायत्रिया उभयत आतिथ्यस्य क्रियत इति यदेवाद सोममाऽहरत् तस्मा-
द्गायत्रिया उभयत आतिथ्यस्य क्रियते पुरस्ताच्चोपरिष्टाच्च " ( तैस ६·२ १ ) इति । आतिथ्यं क्रियत
इत्यर्थः ॥ निरुप्तैस्तण्डुलैर्नवकपालः पुरोडाशः [7]कार्य इति विधत्ते—" शिरो वा एतद्यज्ञस्य यदातिथ्यं
नवकपालः पुरोडाशो भवति तस्मान्नवधा शिरो विष्यूतम् " ( तैस ६·२ १ ) इति । आतिथ्येष्टेः
सत्काररूपत्वेन शिरोवदुत्तमाङ्गत्वम् । यस्मादत्र कपालेषु नवसंख्या तस्मात् दृष्टान्तभूतं शिरोऽपि नवभिः
१५ कपालविशेषैः स्यूतम् । पौरोडाशिकब्राह्मणेऽप्येवमाम्नातम्—" तस्मादष्टाकपालः पुरुषस्य शिरः "
( तैब्रा ३ २ ७ ) इति । ततोऽष्टानां कपालानां परस्परसम्बन्धाः स्यूतिः तदग्रतात्समग्रहरूपस्य शिरसोऽधस्तनेन
कबन्धेन सहैकधा स्यूतिः ॥ उक्तमेव विधिमनूद्य प्रशंसति—" नवकपालः पुरोडाशो भवति ते त्रयस्त्रि-
कपालास्त्रिवृता स्तोमेन संमितास्तेजस्त्रिवृत् तेज एव यज्ञस्य शीर्षन् दधाति " ( तैस ६ २·१ ) इति ।
त्रिवृन्नामके स्तोमे त्रीणि सूक्तानि । तेष्वेकैकस्मिन् सूक्ते तिस्रस्तिस्र ऋचः । अतः संख्यासाम्यान्नव-
२० कपालस्य त्रिवृद्रूपत्वम् । त्रिवृच्च प्रजापतेर्मुखादग्निना सह जातत्वात् तेजोरूपम् । तथा सति यज्ञ-
शिरोरूप आतिथ्ये तेजः स्थापितं भवति ॥ पुनरप्यनूद्य प्रशंसति—" नवकपालः पुरोडाशो भवति ते
त्रयस्त्रिकपालास्त्रिवृता प्राणेन संमितास्त्रिवृद्वै प्राणस्त्रिवृतमेव प्राणमभिपूर्वं यज्ञस्य शीर्षन् दधाति "
( तैस ६ २·१ ) इति । त्रिभिः कपालैः संस्कृतः पुरोडाशस्त्रिकपालः । तादृशाश्च पुरोडाशास्त्रयः ।
नवसंख्यायां विभज्यमानायामेवं संपद्यते । तथा सति यत्कपालगतं त्रित्वं यच्च पुरोडाशगतं तेन सदृशी
२५ प्राणसंख्या प्राणस्योर्ध्वाधोमध्यवृत्तिभिस्त्रिगुणत्वात् । अथ वा नवसु छिद्रेषु [10]वर्तमानतया नवसंख्याकः
प्राणः । तस्य त्रेधा विभागे सति प्रकृतनवकपालसादृश्यं भवति । तादृशं प्राणमभिपूर्वमनुक्रमेण

---

५ क त मर—शकटस्पस्य । ६ इ उ पा.भा हा—अवच्छेदकत्वाय, मर—अवच्छेदकराहित्याय ।
७. क—कार्यते । ८ आ इ उ व पा भा मर हा—ब्राह्मणे ह्येवमाम्नातम् । ९ त मर—त्रित्वम्, हा—त्रिवृतम् ।
१० आ इ.उ पा भा हा—वर्तमान ।

यज्ञस्य शिरस्यातिथ्ये स्थापयति ॥ अस्यामातिथ्येष्टौ प्रकृतिवत् प्रस्तरस्य विधृत्योश्च कुशमयत्वे प्राप्ते तद्बाधितुं द्रव्यान्तरं विधत्ते—"प्रजापतेर्वा एतानि पक्ष्माणि यदश्ववाला ऐक्षवी तिरश्ची यदाश्ववालः प्रस्तरो भवत्यैक्षवी तिरश्ची प्रजापतेरेव तच्चक्षुः सं भरति" (तैसं ६·२·१) इति। पक्ष्माण्यक्षिरोमाणि। अश्ववालाः काशाख्या दर्भविशेषाः। ऐक्षवी इक्षुपत्रिके। तिरश्ची चक्षुपश्चर्मपुटिके। यथा सोमपर्णस्य पलाशवृक्षरूपेणोत्पत्तिर्यथा चाप्सु मेध्यांशो दर्भरूपेणोत्पन्नस्तथैव "प्रजापतेः पक्ष्मणी" "चर्मपुटयोश्च काशरूपेणेक्षुपत्ररूपेण चाऽऽविर्भावोऽर्थवादान्तरे द्रष्टव्यः। एवं सति प्रशस्तत्वादत्र प्रस्तराख्यस्तृणमुष्टिराश्ववालः कर्तव्यः। तस्याधस्तात् "तिर्यक्त्वेन स्थापनीये विधृती ऐक्षव्यौ कुर्यात्। तावता प्रजापतेः तच्चक्षुः संपादितं भवति ॥ परिधिषु श्रीपर्णीवृक्षं विधत्ते—"देवा वै या आहुतीरजुहवुस्ता असुरा निष्कावमादन् ते देवाः कार्ष्मर्यमपश्यन् कर्मण्यो वै कर्मैनेन कुर्वीतेति ते कार्ष्मर्यमयान् परिधीनकुर्वत तैर्वै ते रक्षाꣳस्यपाघ्नत यत् कार्ष्मर्यमयाः परिधयो भवन्ति रक्षसामपहत्यै" (तैसं ६·२·१) इति। निष्कावं निःशब्दं चर्वणादिजन्येन देवा ज्ञास्यन्तीति मत्वा चौर्येणाभक्षयन्। कार्ष्मर्यवृक्षो रक्षोनिवारकत्वेन कर्मण्यः। तस्मात् तेनैव कर्म कुर्वीतेति मत्वा तन्मयान् परिधीनकुर्वत। तथैवान्येनापि कर्म कर्तव्यम् ॥ मध्यमपरिधेर्दक्षिणोत्तरपरिधिभ्यां सह संस्पर्शं विधत्ते—"सꣳस्पर्शयति रक्षसामनन्ववचाराय" (तैसं ६·२·१) इति। स्पर्शाभावे परिध्योः संधौ रक्षसामन्तरनुप्रवेशः स्यात् ॥ पूर्वस्यां दिशि रक्षःप्रवेशनिवारणाय प्रसक्तं चतुर्थपरिधिं निषेधति—"न पुरस्तात् परि दधात्यादित्यो ह्येवोद्यन् पुरस्ताद्रक्षाꣳस्यप हन्ति" (तैसं ६·२·१) इति ॥ आघारसमिधोर्द्वयोराहवनीयपूर्वभागे" स्थापनं विधत्ते—"ऊर्ध्वे समिधावा दधात्युपरिष्टादेव रक्षाꣳस्यप हन्ति" (तैसं ६·२·१) इति। यद्यप्यूर्ध्वायां दिशि रक्षसां निवारणायोपरिष्टादेव समिधौ स्थापनीये तथापि व्योम्नि स्थापयितुमशक्यत्वात् ऊर्ध्वदिशि" स्थापनीये ॥ तत्र कंचिद्विशेषं विधत्ते—"यजुषाऽन्यां तूष्णीमन्यां मिथुनत्वाय" (तैसं ६·२·१) इति। "वीतिहोत्रं त्वा कवे" (तैसं १·१·११) इति मन्त्रेण दक्षिणामादध्यात् तूष्णीमुत्तराम्। समन्त्रकामन्त्रकयोः स्त्रीपुरुषलक्षणत्वात् मिथुनत्वम् ॥ समित्संख्यां विधत्ते—"द्वे आ दधाति द्विपाद्यजमानः प्रतिष्ठित्यै" (तैसं ६·२·१) इति। द्वित्वं पादद्वयप्रतिष्ठायै भवति। ननु संस्पर्शादिविधयः प्रकृतौ दर्शपूर्णमासेष्टावपि सन्तीत्यतिदेशादेव तदनुष्ठानस्यात्र प्राप्तत्वात् न "पृथग्विध्यपेक्षेति चेत्। न। उपसदर्थं विधेयत्वात्। तर्हि तत्रैव विधीयतामिति चेत्। न। आतिथ्योपसदोः परिध्यादिभेदं वारयितुं साधारणत्वेनात्रैव विधेयत्वात् ॥

११-११. ड.ञ.तं.पा.मां.मर.ह्रा—प्रजापतिपक्ष्मणाम्। १२. तं—चर्मपुटिकायाश्च। १३. क—तिर्यगाधारत्वेन। १४. क.तं.मर—आहवनीयात् पूर्वभागे। १५. मर.क—ऊर्ध्वदिग्बुद्ध्या दूरे; तं—इध्मादूरे (?)। १६. क—पृथग्विध्यन्तरापेक्षेति।

या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञं
गयस्फानः प्रतरणः सुवीरोऽवीरहा प्र चरा सोम दुर्यान्

या । ते । धामानि । हविषा । यजन्ति । ता । ते । विश्वा । परिभूरिति परि–भूः । अस्तु ।
यज्ञम् । गयस्फान इति गय–स्फानः । प्रतरण इति प्र–तरणः । सुवीर इति सु–वीरः ।
५ अवीरहेत्यवीर–हा । प्रेति । चर । सोम । दुर्यान् ।

यजमानः सोममादत्ते—' या ते ' इति त्रिष्टुभार्धर्चेन ॥ हे सोम, या यानि तव धामानि स्थानानि नामानि जन्मानि वा हविषा यजन्ति ता तानि विश्वान्यपि धामानि परिभूः परितो भावयिता रक्षिता अस्तु । कः ? भवान् । यद्वा—पुरुषव्यत्यय ( पा ३·१ ८५ )। एधीत्यर्थ । यज्ञं च परिभूरस्तु । " ततोऽन्यत्रापि दृश्यते " ( द्र पाभा २ ३·२ वा १ )
१० इति द्वितीया । तसिल्प्रत्ययलोपो[३] वा ( द्र.पा ५ ३ ९ ) । तत्र " अभित परित समयानिकषाहाप्रतियोगेष्वपि दृश्यते " ( पाभा, काशिका २ ३ २ वा १ ) इति द्वितीया । यद्वा—लक्षणे परे कर्मप्रवचनीयसंज्ञा ( पा १ ४ ९० ) । " कर्मप्रवचनीयानां प्रतिषेध " ( द्र पाभा २·२ १८ वा १ ) इत्येतद्बाधित्वा व्यत्ययेन समासः ॥

शालां प्रवेशयति—' गयस्फान ' इति द्वितीयेनार्धर्चेन ॥ गय इति गृहनाम । गयानां
१५ गृहाणां स्फायिता वर्धयिता गयस्फानः । ओस्फायी वृद्धौ । " कृत्यल्युटो बहुलम् " ( पा ३ ३·११३ ) इति कर्तरि ल्युट् । धातोरन्त्यलोपश्छान्दस । आकारान्त वालन्तर वा द्रष्टव्यम् । प्रतरणः प्रकर्षेण दुर्गान्यस्तारयिता । सुवीरः शोभनैः पुत्रपौत्रादिभिरस्मदीयैस्तद्वान् । " वीरवीर्यौ च " ( पा ६ २ १२० ) इत्युत्तरपदाद्युदात्तत्वम् । अवीरहा कस्यचिदप्यस्मदीयस्य पुत्रपौत्रादेरहन्ता सर्वदा प्रसन्न एव सन्, हे सोम, दुर्यान् प्राग्वंशादीन् गृहान् प्र चर प्रकर्षेण प्रविश्य चर ॥

२० येति ॥ बौधायन.—" अथ यजमानो नीडात् राजानमादत्ते[१७] ' या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञमिति । । पूर्वया द्वारा शालां प्रपादयति गयस्फान. प्रतरण सुवीरोऽवीरहा प्र चरा सोम दुर्यानिति " ( बौश्रौ ६ १७ ) इति । आपस्तम्बो मन्त्रैक्यं मन्यते—" या ते धामानीति पूर्वया द्वारा प्राग्वंशं प्रविश्य " ( आपश्रौ १०·२९२ ) इति ॥ हे सोम, या ते धामानि त्वदीयेषु येषु[१८] स्थानेषु प्रात सवनादिषु हविषा यजन्ति यज्ञमुद्दिश्य ता ते विश्वा त्वदीयानि तानि सर्वाणि
२५ परिभू. अस्तु परित प्राप्तवान् भव । हे सोम, त्व दुर्यान् गृहान् प्राचीनवंशरूपान् प्र चर प्राप्नुहि । कीदृशस्त्वम् ? गयस्फान गृहाभिवर्धक । प्रतरण प्रकर्षेण यज्ञपारं प्रति अस्मांस्तारयिता । सुवीर. शोभना त्वत्प्रसादलब्धा वीरा अस्मत्पुत्रपौत्रा यस्य तव स त्वं सुवीर । अवीरहा यथोक्तानां वीराणाम् अहन्ता परिपालक इत्यर्थ. ॥

३ मै–तसिप्रत्ययान्तो ।

३० १७ आ.पा हा–राजानमपादत्ते । १८. इ उ.पा.मै.हा–' येषु ' नास्ति ।

**-नदि॑त्याः सदो॒ऽस्यदि॑त्याः सद॒ आ ( १ ) सी॑द॒ वरु॑णोऽसि धृ॒तव्र॑तो वारु॒णम॑सि शं॒योर्दे॒वाना॑ꣳ स॒ख्यान्मा दे॒वाना॑म॒पस॑श्छित्स्म॒ह्याप॑तये**

अदि॑त्याः । सदः॑ । अ॒सि॒ । अदि॑त्याः । सदः॑ । एति॑ ( १ ) । सी॒द॒ । वरु॑णः । अ॒सि॒ । धृ॒तव्र॑त॒ इति॑ धृ॒त-व्र॒तः । वा॒रु॒णम् । अ॒सि॒ । शं॒योरिति॑ शं-योः । दे॒वाना॑म् । स॒ख्यात् । मा । दे॒वाना॑म् । अ॒पसः॑ । छि॒त्स्म॒हि॒ । आप॑तय॒ इत्या-प॒त॒ये॒ ।

कृष्णाजिनस्तरणसोमस्थापनमन्त्रौ व्याख्यातौ—' अदित्याः सदः ' ( तैसं १·२·८ ) इति ॥

सोममुपतिष्ठते—' वरुणोऽसि ' इति गायत्र्यैकपदया यजुरन्तया ॥ हे सोम, [v]वरुणः त्वम् [v]असि । वरणीयत्वात्, वृतत्वाद्वा वाससा आच्छादितत्वात् । " वरुणो वा एष यजमानमभ्यैति यत्क्रीतः सोम उपनद्धः " ( तैसं ६·१·११ ) इति ब्राह्मणम् । [v]धृतव्रतः धृतकर्मा धारणत्वात् कर्मणाम् । [v]वारुणं वरुणस्य तव यत् स्वभूतं द्रव्यमिति[4] सर्वं त्वमेव, त्वदधीनत्वात् ॥

वंशे बध्नाति—' शंयोः ' इति ॥ शं च योश्च [v]देवानां भव । समाहारद्वन्द्वः ( पा २·२·२९ ) । छान्दसं पुँल्लिङ्गत्वम् । विद्यमानानां रोगादीनां शमनं शम् । आगामिनां यावनं पृथक्करणं उत्पत्तिनिरोधः योः । उभयत्रापि शाम्यतेर्यौतेश्च विच् ( पा ३·२·७५ ) ॥

सोमस्य पादौ प्रक्षालयति—' सख्यान्मा देवानाम् ' इति ॥ [v]देवानां संबन्धि यत् अपः कर्म ततः [v]सख्यात् च तत एव हेतोः [v]मा [v]छित्स्महि विच्छिन्ना मा भूम । " सख्युर्यः " ( पा ५·१·१२६ ) ॥

अदित्या इति ॥ कल्पः—" अथैनामासन्दीमग्रेणाऽऽहवनीयं पर्याहृत्य दक्षिणतो [19]निदधाति । तस्यां कृष्णाजिनमास्तृणात्यदित्याः सदोऽसीति । अदित्याः सद आ सीदेति कृष्णाजिने राजानम् " ( बौश्रौ ६·१७ ) इति ॥ ' [20]उदायुषा ' ( तैसं १·२·८ ) इत्यस्मिन्ननुवाके व्याख्यातौ मन्त्रौ[20] ॥

वरुण इति ॥ [21]बौधायनः—अथैनमुपतिष्ठते वरुणोऽसि धृतव्रतो वारुणमसीति । समुच्चित्य कृष्णाजिनं[21] तस्यान्तान् स्यन्दया [22]विग्रथ्य [23]वंशे प्रग्रथ्नाति शंयोर्देवानाꣳ सख्यादित्यथ परावासन्दीपादावन्तरेण [24]ब्राह्मणोऽभिषिञ्चति शूद्रः प्रक्षालयति मा देवानामपसश्छित्स्महीति " ( बौश्रौ ६·१७ ) इति । आपस्तम्बोऽत्र प्रथममन्त्रोत्तरार्धस्य द्वितीयतृतीयमन्त्रयोश्चैकतां[25] मन्यते—" वरुणोऽसि धृतव्रत इति राजानमभिमन्त्रयते । वारुणमसीति वाससा पर्यानह्यति " ( आपश्रौ १०·३१·४–५ ) इति ॥ हे सोम, [26]त्वं वरुणपाशस्य निवारकः [v]असि । धृतं यज्ञरूपं व्रतं येन त्वया स त्वं[27] [v]धृतव्रतः । हे सोम, त्वमुपनद्धस्वरूपत्वात् वरुणसंबन्धी [v]असि । तथा सति त्वदीयात् [v]शंयोः सुखमिश्राद्ववरुणादिदेवानां [v]सख्यात् वयम् [v]अपसः [v]मा [v]छित्स्महि । सकारान्तः

४. ति. पं–द्रव्यं तदिति ; तं–' द्रव्यमिति ' नास्ति ।

१९. आ.तं.पा.मर–निदधाति ; इ.उ.पा–दधाति । २०–२०. आ.क–' उदायुषा...मन्त्रौ ' नास्ति । २१–२१. इ.उ.पा–' बौधायनः...कृष्णाजिनम् ' नास्ति । २२. मर–विश्रथ्य । २३. क–पाशेषु । २४. इ.उ.पा–ब्राह्मणो निषिञ्चति । २५. इ.उ.पा.हा–मन्त्रयोस्त्वैकताम् । २६. इ.उ.पा.हा–' त्वम् ' नास्ति । २७. तं–' त्वम् ' नास्ति ।

त्वा गृह्णामि परिपतये त्वा गृह्णामि तनूनप्त्रे त्वा गृह्णामि
शाक्वराय त्वा गृह्णामि शक्मन्नोजिष्ठाय त्वा

त्वा । गृह्णामि । परिपतय इति परि–पतये । त्वा । गृह्णामि । तनूनप्त्र इति तनू–नप्त्रे ।
त्वा । गृह्णामि । शाक्वराय । त्वा । गृह्णामि । शक्मन् । ओजिष्ठाय । त्वा ।

५ तानूनप्त्र गृह्णाति—' आपतये ' इति ॥ आवृत्त्या आभिमुख्येन वा पतति पातीति वा आपति प्राण । " प्राणो वा आपति " ( तैस ६ २ २ ) इति च ब्राह्मणम् ॥ अव्ययपूर्व पदप्रकृतिस्वरत्वम ( पा ६ २ २ ) । तस्मै तदविनाशाय त्वा [v]गृह्णामि ध्रुवात स्रुवेण गृह्णामि हे आज्य । परित सर्वत पाति पततीति वा परिपति मन । पातेर्डति ( उ ५०६ ) । पते " इन् सर्वधातुभ्य " ( ऋ उ ५६७ ) इति इन् । " मनो वै परिपति " ( तैस ६ २ २ )
१० इति च ब्राह्मणम् ॥ तस्मै त्वा [v]गृह्णामि तनूनामपां नप्ता चतुर्थ तनूनप्ता अग्नि शरीरस्य । तस्मै [v]गृह्णामि । वनस्पत्यादित्वात पूर्वोत्तरपदयो युगपत्प्रकृतिस्वरत्वम् ( पा ६ २ १४० ) ॥ [v] शाक्वराय शक्तये । शकनशील शक्वर , तस्य भाव शाक्वर शक्तिरेव । " शक्त्यै हि ते ता समनाधन्त " ( तैस ६ २ २ ) इति च ब्राह्मणम् । तस्मै [v]गृह्णामि [v]शक्मन् शक्मेषु, जातावेकवचनम् ( पा १ २ ५८ )। शकेर्मनिन् ( पा ३ २ ७४ )। " सुपां सुलुक् "
१५ ( पा ७ १ ३९ ) इति ङेर्लुक् । " न ङिसम्बुद्ध्यो " ( पा ८ २ ८ ) इति नलोपप्रतिषेध । शक्ताना मध्ये [v]ओजिष्ठाय अतिशयेन वक्तते प्राणाय त्वा [v]गृह्णामि । ओजस्विशब्दादिष्ठनि ( पा ६ ४ १५४ ), " विन्मतोर्लुक् " ( पा ५ ३ ६५ ) । " टे " ( पा ६ ४ १५५ ) इति

---

अपस् शब्द कर्मवाची । अस्माक कर्मविच्छेदो मा भूदित्यर्थ । ' या ते धामानि ' इत्यादयो मन्त्रा ब्राह्मणेनोपेक्षिता ॥ आतिथ्येष्टिमध्ये वह्निमन्थनपूर्वकमाहवनीये मथिताग्निप्रक्षेप विधत्ते—" ब्रह्मवादिनो
२० वदन्त्यग्निश्च वा एतौ सोमश्च कथा सोमायाऽऽतिथ्य क्रियते नाग्नय इति यदग्नावग्निं मथित्वा प्रहरति तेनैवाग्नय आतिथ्य क्रियते " ( तैस ६ २ १ ) इति । अग्निश्च सोमश्चेत्येतावुभावपि यागनिर्वाहकौ देवौ । तयो साम्ये सति कथमग्नय आतिथ्य नेति प्रश्न । अग्निं मथित्वाऽऽहवनीये प्रहरेत् । तदिदमाहवनीयाग्नेरातिथ्यम् ॥ 'मन्थनस्य काल विधत्ते—" अथो खल्वाहुरग्नि सर्वा देवता इति यद्धविरासाद्याग्निं
" मन्थति हव्यायैवाऽऽसन्नाय सर्वा देवता जनयति " ( तैस ६ २ १ ) इति । अपि चैते ब्रह्मवादिन
२५ काल निक्षावन्तस्तदुपोद्घातत्वेन वह्ने सर्वात्मकत्वमाहु । तच्च सर्वदेवतात्मकत्वमेकवह्नितत्रिधानामुत्पत्तौ[२९] विस्पष्टमाम्नातम् ( तैब्रा ३ २ ९ )। [३०]यदातिथ्यपुरोडाशं वेद्यामासाद्य तस्मिन् कालेऽग्निं मथ्नीयात् तथा मथ्यमानाग्नावन्तर्भूता सर्वा अपि देवता आसन्नहविर्भोक्तुमुत्पादिता भवन्ति [३१]तत् स एव काल इत्यर्थ । मथनमन्त्रास्त्वाध्वर्यवा अग्नीषोमीयपशुप्रस्तावे ( तैस १ ३ ७ ) समाम्नास्यन्ते । हौत्रास्तु बह्वृचब्राह्मण आतिथ्येष्टिसमीपे ( ऐब्रा १ १६ ) एवोदाहृता ॥

---

३० २८. आ पा मथनस्य । २९ आ क–'मेकवह्नित्रिधानामुत्पत्तौ ह्रा–'मेकनादीनामुत्पत्तौ । ३०. त-मर–यथा' । ३१ त मर ह्रा–तदा । ३२ इ ह ह्रा–तस्मात् ।

आपतये इति ॥ कल्पः—“ [अ]अथैतद्ध्रौवमाज्यमाप्यायय कंसं वा चमसं वा [आ]नयति । तमन्तर्वेदि निधाय तस्मिन्नेतत्तानूनप्त्रं *समवद्य विगृह्णाति* । आपतये त्वा गृह्णामि परिपतये त्वा गृह्णामि तनूनप्त्रे त्वा गृह्णामि शाक्कराय त्वा गृह्णामि शक्मन्नोजिष्ठाय त्वा गृह्णामीति ” ( बौश्रौ ६.१८—१९ ) इति । आपतिर्निःश्वासरूपेण बहिर्गतः पुनराभिमुख्येनान्तः पततीत्यापतिः प्राणः । हे आज्य, प्राणार्थं त्वामस्मिन् पात्रे [३३]गृह्णामि । परितो नानाविषयेषु पततीति परिपतिर्मनः । [३४]तनूं शरीरं न पातयति न विनाशयतीति तनूनपा जाठरोऽग्निः । शकनशीलः शक्करः शक्तिमान् पुरुषस्तस्य संबन्धि शाक्करं शक्तिस्वरूपम् । [३५]शक्मन् शक्तिमस्तु यदोजिष्ठं तस्मै । ओजो नामाष्टमो धातुस्तस्य सारमोजिष्ठम् । तदवष्टम्भेनैव शक्तिरवतिष्ठते । एवंमन्त्रैस्तानूनप्त्रं ग्राह्यम् ॥ तनूनप्तृसंज्ञकजाठरवह्निविषयस्य शपथकर्मणो हेतुभूतमाज्यं तानूनप्त्रम् । तस्य ग्रहणं विधातुं[३४] प्रस्तौति– “ देवासुराः संयत्ता आसन् ते देवा मिथो विप्रिया आसन् तेऽन्योऽन्यस्मै ज्यैष्ठ्यायातिष्ठमानाः पञ्चधा व्यक्रामन्नग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वैर्देवैस्तेऽमन्यन्तासुरेभ्यो वा इदं भ्रातृव्येभ्यो रध्यामो यन्मिथो विप्रियाः स्मो या न इमाः प्रियास्तनुवस्ताः समवद्यामहै ताभ्यः स निर्ऋच्छाद्यो नः प्रथमोऽन्योऽन्यस्मै द्रुह्यादिति तस्माद्यः सतानूनप्त्रिणां प्रथमो द्रुह्यति स आर्तिमार्च्छति ” ( तैसं ६.२.२ ) इति । संयत्ताः संग्रामं प्राप्ताः । मिथः परस्परं ते च देवाः सर्वेऽपि स्वातिरिक्तस्य ज्यैष्ठ्यमनङ्गीकुर्वाणाः पञ्चव्यूहा अभवन् । तेषु व्यूहेष्वग्न्यादयः पञ्च देवाः[३५] सेनान्यः, वस्वादयः पञ्च गणाः [३६-]सेनाः । ते[-३६] कंचित् कालं परस्परविरोधिनो भूत्वा पश्चादेवं विचारितवन्तो यदि वयमन्योन्यविरोधिनस्तदा वैरिणामसुराणामिदं जयरूपं कार्यं वयमेव साधयामः । ततस्तद्विरोधपरिहारहेतुं शपथं कर्तुमस्मदीयाः प्रियाः पुत्रभार्यादिरूपा इमास्तनूरेकत्र संधीकुर्म इति विचार्य संधीकृत्य शपथमेवं परिभाषितवन्तः । अस्माकं मध्ये यः प्रथमं द्रुह्यति स ताभ्यस्तनूभ्यो [३७-]निर्गच्छतु भ्रष्टो[-३७] भवत्विति । यस्माद्देवानामेवं वृत्तं तस्मान्मनुष्याणामपि शपथं कृतवतां मध्ये यः प्रथमं द्रुह्यति स विनाशं प्राप्नोति । समान एकस्मिन् विषये तानूनप्त्रिणः शपथवन्तः सतानूनप्त्रिणः ॥ इदानीं विधत्ते—“ यत् तानूनप्त्रं समवद्यति भ्रातृव्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृव्यो भवति ” ( तैसं ६.२.२ ) इति ॥ समवद्यति संभूयावदानं कुर्यात् । स्वयं भूतिमान् भवति । वैरी तु पराभवति । इयमेव भ्रातृव्याभिभूतिः ॥ अवदानसंख्यां विधत्ते—“ पञ्च कृत्वोऽवद्यति पञ्चधा हि ते तत् समवाद्यन्ताथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे ” ( तैसं ६.२.२ ) इति । ते देवाः तत् तदानीं पञ्चधा विभक्ताः पश्चात् संभूयैकवत्[३८] [३९]प्रियतनूरवाद्य(न्त) स्थापितवन्तः ॥ मन्त्रान् व्याचष्टे—“ आपतये त्वा गृह्णामीत्याह प्राणो वा आपतिः प्राणमेव प्रीणाति परिपतय इत्याह मनो वै परिपतिर्मन एव प्रीणाति तनूनप्त्र इत्याह तनुवो हि ते ताः समवाद्यन्त शाक्करायेत्याह शक्त्यै हि ते ताः समवाद्यन्त शक्मन्नोजिष्ठायेत्याहौजिष्ठं हि ते तदात्मनः समवाद्यन्त ” ( तैसं ६.२.२ ) इति[४०] । [४१-]तनूशाक्करौजिष्ठशब्दैर्दैववृत्तान्तः सूच्यते[-४१] । ते देवास्तदानीं स्वात्मसंबन्धं पुत्रादितनुरूपमोजः सारं समवाद्यन्त ॥

---

[अ][ बौश्रौसूत्रे ‘ अत्रैतद्ध्रुवाज्य० ’ ] । *...*[ बौश्रौसूत्रे ‘ निगृह्णाति ’ ] । ३३. इ.उ.पा.हा–तनूः; मर–तनुम् । ३४. इ.उ.पा.हा–‘ विधातुम् ’ नास्ति । ३५. क–देवताः । ३६–३६. आ.इ.उ.पा.हा–ततस्ते । ३७–३७. आ.पा.हा–निर्गच्छेन्निर्भ्रष्टः; तं–निर्गच्छेन् भ्रष्टः । ३८. मर–संभूयैकत्र । ३९. मर–प्रियतनूरेवा० । ४०. क–‘ इति ’ इत्यस्यानन्तरम् ‘ आपतिपरिपतितनूनप्तृशाक्करशक्मन्नोजिष्ठशब्दैर्दैववृत्तान्तः सूच्यते ’ । ४१–४१. इ.उ.पा–तनूशक्मन्नोजिष्ठ......सूच्यते; हा–‘ तनू...सूच्यते ’ नास्ति ।

गृह्णाम्यनाधृष्टमस्यनाधृष्यं देवानामोजोऽभिशस्तिपा अनभिशस्तेन्यमनु

गृह्णामि । अनाधृष्टमित्यना–धृष्टम् । असि । अनाधृष्यमित्यना–धृष्यम् । देवानाम् । ओजः ।
अभिशस्तिपा इत्यभिशस्ति–पा । अनभिशस्तेन्यमित्यनभि–शस्तेन्यम् । अन्विति ।

---

टिलोपः । अयमेककार्यानुवृत्त्यर्थं समयः क्रियते । यदीह समयो न क्रियेत तदा परस्पराभिप्रायेण
५ द्रोहेण विप्रतिपद्यमाना यागं न कुर्युः । अतस्तन्या भूदिति तानूनप्त्रं गृह्यते ॥

अवमृशति—' अनाधृष्टमसि ' इति ॥ आज्यमुच्यते । अनाधृष्टं केनचिदप्यनभि
भूतम् असि । अनाधृष्यं केनचिदप्यभिभवितुमशक्यं चासि । " ऋदुपधाच्चाक्लृपिचृतेः "
( पा ३ १ ११० ) इति क्यप् । " ययतोश्चातदर्थे " ( पा ६ २ १५६ ) इत्युत्तरपदान्तो
दात्तत्वम् । देवानाम् ओजः बलं चासि । त्वया हि देवा ऋत्विजो बलवन्तो यजन्ते । यद्वा—
१० त्वया हि देवा इन्द्रादयो बलवन्तो भवन्ति । अभिशस्तिपाः अभिशस्तिरभिशंसनमभिशापः ।
अतस्त्वं पासि । विचि लिङ्गव्यत्ययः ( पा ३ २ ७४, ३ १ ८५ ) । अनभिशस्तेन्यम्
अनभिशसनीयं केनचिदपि नाभिशस्यते, न दूष्यत इत्यर्थः । एन्यप्रत्ययस्तुडागमश्च ।
उत्तरपदान्तोदात्तत्वं च छन्दसि । [ यद्वा ]—अभिशस्तेन योगं नार्हति इत्यनभिशस्तेन्यम् ।
" छन्दसि च " ( पा ५ १ ६७ ) इति यः । विभक्तेर्लुगभावश्छान्दसः । योगं नार्हतीत्यर्थे
१५ तद्धितः, " ययतोश्चातदर्थे " ( पा ६ २ १५६ ) इत्युत्तरपदान्तोदात्तत्वम् ॥ यद्वा—अभिशसनम
भिशस्तं तन्नार्हतीति एन्यप्रत्ययश्छान्दसः । " नञो गुणप्रतिषेधे " ( पा ६ २ १५५ )
इत्युत्तरपदान्तोदात्तत्वम् । ईदृशं त्वमसीति आज्यस्तुतिः ॥

यजमानं वाचयति—' अनु ' इति ॥ दीक्षापतिः विष्णुः मम दीक्षाम् अनु
मन्यताम् अनुजानातु । " पत्यावैश्वर्ये " ( पा ६ २ १८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । तपः
२० उपसत्, तस्य पतिः तपस्पतिः अग्निः । सोऽपि मम तपः अनु मन्यताम् । अञ्जसा ऋजुना
आशास्येन सत्यं समयं तानूनप्त्राभिमर्शनेन उप गेषम् उपसप्राप्तोऽस्मि । अत एतद्विज्ञाय

---

अनाधृष्टमिति ॥ कल्पः—" स यावन्तः[42] *ऋत्विजस्त एतत् समवमृशन्त्यनाधृष्टमस्यनाधृष्यं
देवानामोजोऽभिशस्तिपा अनभिशस्तेन्यमिति " ( बौश्रौ ॥ १९ ) इति ॥ हे तानूनप्त्र आज्य, त्वमेव
पूर्वं केनाप्यतिरस्कृतम् असि । इतः परमप्यतिरस्कार्यं[43] देवानाम् ओजः सारमसि । अभिशस्तेर्हिंसा
२५ रूपादन्योन्यविरोधादस्मान् पालयसि । त्वं पुनरभिशस्तेरविषयभूतमसि[44] ॥ मन्त्रस्य यथोक्तार्थं प्रसिद्ध
इत्याह—" अनाधृष्टमस्यनाधृष्यमित्याहानाधृष्टः ह्येतदनाधृष्यं देवानामोज इत्याह देवानाꣳ ह्येतदोजोऽ
भिशस्तिपा अनभिशस्तेन्यमित्याहाभिशस्तिपा ह्येतदनभिशस्तेन्यम् " ( तैसं ६ २ २ ) इति ॥

---

१ ४२ आ–यावन्तः । *[ बौश्रौमूले ' एनम् ' ] । ४३ क–'रस्कृतम् । ४४ क ग–'रविषयमसि ।

मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिरञ्जसा
सत्यमुप गेषꣳ सुविते मा धाः ॥ १० ॥

[आ मैकं च]

मे । दीक्षाम् । दीक्षापतिरिति दीक्षा–पतिः । मन्यताम् । अन्विति । तपः । तपस्पतिरिति तपः–पतिः । अञ्जसा । सत्यम् । उपेति । गेषम् । सुविते । मा । धाः ॥ १० ॥ ५

[मैसं १·२·४; कासं २·५; कपिसं १·१८; वासं ४·२१–२३]

मां सुविते धाः धेहि स्थापय । हे आज्य, सुविते सूतौ अपत्ये मां धेहि अपत्यवन्तं मां कुरु । छान्दस इडागमः । यद्वा—सुविते स्विते सुष्ठुप्राप्ते अस्मत्प्राप्ते अस्मत्पूर्वचरिते यज्ञे वा मां धेहि । स्थाने वा सुखवति अस्मत्पूर्वैरिते मां स्थापय । "तन्वादीनां बहुलं छन्दसि" (पा ६·४·७७ वा १) इत्युवङादेशः । "सूपमानात् क्तः" (पा ६·२·१४५) इत्युत्तर- १० पदान्तोदात्तत्वम् । अन्य आहुः—अञ्जसा ऋजुना यथाशास्त्रीयेण सत्यं सति साधु परानिन्दात्मकं वस्तु उपगेषम् उपगतो भूयासम् । तदर्थमामन्त्रितं श्रेयोऽर्थिभिः सुष्ठु सेविते सुष्ठु ज्ञाते वा पथि मां ज्ञा[स्था]पयतेति । अस्मिन् पक्षे इणो गादेशः छान्दसः (द्र.पा २·४·४५) । "आशिषि लिङ्" (पा ३·३·१७३), "लिङ्याशिष्यङ्" (पा ३·१·८६) । "आतो लोपः" (पा ६·४·६४) । यासुट् (पा ३·४·१०३) । "अतो येयः" (पा ७·२·८०) १५ आर्धधातुकत्वात् सलोपाभावः (पा ७·२·७९) । बहुलवचनाद्यलोपः । पूर्वस्मिन् पक्षे लुङि "इणो गा लुङि" (पा २·४·४५) इति गादेशः, छान्दसः इत्वं विकारः । व्यत्ययेन "गातिस्था" (पा २·४·७७) इति न प्रवर्तते । "बहुलं छन्दस्यमाङ्योगेऽपि" (पा ६·४·७५) इत्यडभावः ॥

॥ इति द्वितीये प्रपाठके दशमोऽनुवाकः ॥ १० ॥ २०

अन्विति ॥ कल्पः—"यजमानमतिवाचयति अनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिरञ्जसा सत्यमुप गेषं सुविते मा धा इति" (बौश्री ६·१९) इति ॥ दीक्षणीयेष्टौ यो देवः स दीक्षापतिः ममेमां दीक्षाम् अनुजानातु । तथ उपसत्, तत्रत्यो देवः [45] तपस्पतिः मदीयं तपः अनुजानातु । अहं च [46] अञ्जसा सत्यम् उप गेषम् आर्जवेन तानूनप्त्रस्पर्शनरूपं [47] शपथं प्राप्तोऽस्मि । हे तानूनप्त्र, मां सुविते शोभनमार्गे यज्ञकर्मणि स्थापय ॥ मन्त्रस्य स्पष्टार्थतामाह—"अनु मे दीक्षां २५ दीक्षापतिर्मन्यतामित्याह यथायजुरेवैतत्" (तैसं ६·२·२) इति ॥

४५. आ–'तपस्पतिः' नास्ति । ४६. तै.मर.हा–च । ४७. मर–चयम् ।

अत्र विनियोगसंग्रहः —

" अग्ने पञ्चकनिर्वापो या ते प्राग्वंशवेशनम् ।
अद्यामन्या क्षिपेच्चर्म ह्यदि सोमं तु सादयेत् ॥ १ ॥
वरं त मन्त्रयेद्दारु वाससा परिणह्यति ।
आप तानूनप्त्रमाज्यं समवद्यति पञ्चभिः ॥ २ ॥
अना [48]सर्वं ऋत्विजस्तु[48] तानूनप्त्रं स्पृशन्ति हि ।
अनु स्वामी स्पृशेदेतदिति सप्तदशेरिताः ॥ ३ ॥ " इति ॥

अथ मीमांसा ॥ सप्तमाध्यायस्य तृतीयपादे चिन्तितम्—

" वैष्णवे त्रिकपाले वैष्णवानवकपालतः ।
धर्मातिदेशः स्यान्नो वा विधत्तेऽग्निहोत्रवत् ॥
[49]श्रुत्या वैष्णवशब्दोऽयं देवताया विधायकः ।
न गौणवृत्तिमाश्रित्य धर्मानतिदिशत्यतः ॥ " ( जैन्या ७ ३ १४-१५ ) इति ॥

आतिथ्येष्टौ वैष्णवो नवकपालो विहितः ( तैसं ६-२-१ )। तत्र श्रुत्या[50] वैष्णवशब्दो राजसूयगते वैष्णवे त्रिकपाले ( तैसं १ ८ ८ ) प्रयुज्यमानोऽग्निहोत्रवन्नवकपालधर्मानतिदिशतीति पूर्वः पक्षः । " [51]विष्णुर्देवताऽस्य " इति विग्रहे सति विहितस्तद्धितप्रत्ययो ( पा ४ २-२४ ) देवतामभिधत्ते न तु धर्मान् । [52]तस्मान्नातिदिशति[52] ।

चतुर्थाध्यायस्य द्वितीयपादे चिन्तितम्—

" [53]यदातिथ्यं बर्हिस्तदुपसत्स्वतिदेशनम् ।
[54]साधारण्यविधिर्वाऽऽद्यस्तद्धीयस्योपसंहृतेः ॥
बर्हिः प्रत्येकताभानान्नातिदेशस्य लक्षणा ।
आतिथ्ययोपसद्भिश्च बर्हिरेतत् प्रयुज्यते ॥ " ( जैन्या ४ २-२४-२५ ) इति ॥

ज्योतिष्टोमे श्रूयते—" यद्दातिथ्यं बर्हिस्तदुपसदां तदग्नीषोमीयस्य च " ( द्र आपश्रौ ११ २ ११ ) इति । क्रीतं सोमं शकटेऽवस्थाप्य प्राचीनवंशं प्रत्यानीयमानेऽभिमुखे यामिष्टिं निर्वपति सेयमातिथ्या । तत ऊर्ध्वं त्रिषु दिनेष्वनुष्ठीयमाना उपसदः । औपवसथ्ये दिनेऽनुष्ठेयोऽग्नीषोमीयः । तत्राऽऽतिथ्येष्टौ विहितं यद्बर्हिस्तद्यदि [55]तस्या इष्टेराच्छिद्योपसत्सु विधीयेत तदानीमातिथ्याया विधानमनर्थकं स्यात् । यदि च तत्रोपयुक्तमितरत्र विधीयेत विनियुक्तविनियोगरूपो विरोधः स्यात् । तस्मादातिथ्यबर्हिषो ये धर्मा [56]आश्वबालत्वादयस्ते धर्मा उपसत्सु आह्रियन्त[57] इत्यतिदेशपरं वाक्यमिति प्राप्ते ब्रूमः —बर्हिः शब्दस्य धर्मातिदेशपरत्वे लक्षणा प्रसज्येत । श्रुत्या तु बर्हिषु आतिथ्योपसदग्नीषोमीयेषु एकत्वं प्रतिभाति । अतः साधारण्यमत्र विधेयम् । आतिथ्यार्थं यद्बर्हिरुपादीयते तन्न केवलमातिथ्यार्थं किं तूपसदर्थमग्नीषोमीयार्थं चोपादेयमिति विधिवाक्यार्थः । तस्मादातिथ्योपसदग्नीषोमीयाख्यास्त्रयोऽप्यस्य बर्हिषः प्रयोजकाः । एवं परिधिसंम्नहनादिविधीनां साधारण्यं द्रष्टव्यम् ॥

अथ छन्दः ॥ ' या ते धामानि ' इति त्रिष्टुप् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
प्रथमकाण्डे द्वितीयप्रपाठके दशमोऽनुवाकः ॥

---

४८-४८ त मर-मवऽयृत्विजस्तन् । ४९. इ उ पा-श्रुत्या । ५० त मर-ध्रुन । ५१ त-विष्णुर्देवता यस्येति । ५२-५२ इ उ पा-धर्मानतिदिशति । ५३ आ त मर-यदातिथ्या° । ५४ त मर-साधारणवि° । ५५. क-ततस्या । ५६ इ उ क पा मर द्वा-आश्ववालादयः । ५७ आ क-उपह्रियन्ते ।

**अ॒ꣳशुर॑ꣳशुस्ते देव सोमाऽऽ प्या॑यता॒मिन्द्रा॑यैकधन॒विदे॑
आ तुभ्य॒मिन्द्रः॑ प्याय॒ता॒मा त्वमिन्द्रा॑य प्याय॒स्वाऽऽ
प्या॑यय॒ सखी॑न्त्स॒न्या मे॒धया॑ स्व॒स्ति ते॑ देव सोम सु॒त्याम॑शी॒येष्टाः॑**

अ॒ꣳशुर॑ꣳशु॒रित्य॒ꣳशुः–अ॒ꣳशुः । ते॒ । दे॒व । सो॒म॒ । एति॑ । प्या॒य॒ता॒म् । इन्द्रा॑य । ए॒क॒ध॒न॒विद॒ इत्ये॑कधन–वि॑दे । एति॑ । तुभ्य॑म् । इन्द्रः॑ । प्या॒य॒ता॒म् । एति॑ । त्वम् । इन्द्रा॑य । प्या॒य॒स्व॒ । एति॑ । प्या॒य॒य॒ । सखी॑न् । स॒न्या । मे॒धया॑ । स्व॒स्ति । ते॒ । दे॒व॒ । सो॒म॒ । सु॒त्याम् । अ॒शी॒य॒ । एष्टाः॑ । ५

सोममा प्याययति—'अंशुरंशुः' इति ॥ हे ᵛदेव ᵛसोम, ᵛते त्वदीयः ᵛअंशुरंशुः सर्वोऽवयवः ᵛआ ᵛप्यायतां वर्धताम् । वीप्सायां द्विर्वचनम् (पा ८·१·४) । "अनुदात्तं च" (पा ८·१·३) इति द्वितीयस्यानुदात्तत्वम् । ᵛइन्द्राय इन्द्रार्थम् । इन्द्रो विशेष्यते—ᵛएकधनविदे, एकं प्रधानं धनम् उदकं येषु घटेषु ते एकधनाः । तान् विन्दति लभत इत्येकधनवित् । इन्द्रो हि तान् विन्दति, इन्द्रार्थत्वात् । ᵛइन्द्रः अपि ᵛतुभ्यं त्वदर्थं त्वत्पानार्थम् ᵛआ ᵛप्यायतां पातुं समर्थो भवतु । ᵛत्वं चाप्यायमानसर्वांशुः इन्द्रार्थम् ᵛआ ᵛप्यायस्व पर्याप्तो भव ॥ १०

यजमानं वाचयति—'आ प्यायय' इति ॥ ᵛसखीन् समानख्यानान् ऋत्विजः ᵛसन्या धनेन ᵛमेधया च यागनिर्वर्तनसमर्थया ᵛआ ᵛप्यायय संपन्नान् कुरु । सनिशब्दोऽन्तोदात्तः । तेन "उदात्तयणः" (पा ६·१·१७४) इति ततः परस्या विभक्तेरुदात्तत्वम् । किंच— १५
हे ᵛदेव ᵛसोम, ᵛस्वस्ति ᵛते अविनाशेन अविघ्नेन तव ᵛसुत्याम् अभिषवम् ᵛअशीय प्राप्नुयाम् । आशिषि लिङ् (पा ३·३·१७३) । "छन्दस्युभयथा" (पा ३·४·११७) इति सार्वधातुकत्वात् सीयुटि (पा ३·४·१०२) सलोपः (पा ७·२·७९) । सुनोतेः "संज्ञायां समजनिषद" (पा ३·३·९९) इति क्यप् । 'उदात्तः' (पा ३·३·९६) इति हि तत्रानुवर्तते ।

दशमेऽनुवाक आतिथ्येष्टिरुक्ता । तन्मध्ये सोमः प्राग्वंशे स्थापितः । तेन सोमेन करिष्यमाणस्य [1]यागस्य विघ्नकारिणोऽसुराः प्रथमं जेतव्या इति तद्विजयार्थमुपसद एकादशे वर्ण्यन्ते । तत्रादौ तावदतिथेः सोमस्य [2]बन्धनोपद्रवपरिहारेणाप्यायनाद्युपचाराः क्रियन्ते[2] ॥ २०

अꣳशुरिति ॥ बौधायनः—"अथ मदन्तीरुपस्पृश्योपोत्थाय विस्रस्य हिरण्यमवधाय राजानमा [3]प्याययन्ति अꣳशुरꣳशुस्ते देव सोमाऽऽ प्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वेति । [4]यजमानमतिवाचयत्या प्यायय सखीन्त्सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीयेति" (बौश्रौ ६·१९) इति । आपस्तम्बस्य तु एक एव मन्त्रः (आपश्रौ ११·१·११) ॥ मदन्तीः २५

१. इ.उ.पा.भां.हा–'यागस्य' नास्ति । २–२. आं.इ.उ.पा.भां–बन्धनोपद्रवपरिहारेणाप्याप्यायनाद्युपचारः क्रियते ; तं.म२–बन्धनोपद्रवपरिहारेणाप्यायनाद्युपचारः क्रियते । ३. आं.कं–आप्याययति । ४. आ.क.पा–यजमानमि° ।

रायः प्रेषे भगा॑यर्तमृ॑तवादिभ्यो नमो दि॒वे नमः पृथि॒व्यै

रायै । प्रेति॑ । इ॒षे । भगा॑य । ऋ॒तम् । ऋ॒तवादिभ्य इत्यृ॑तवादि॒–भ्यः॒ ।

नमः॑ । दि॒वे । नमः॑ । पृथि॒व्यै ।

प्रस्तरे पाणिं निधाय नमस्कुर्वन्ति—' एष्टा रायः ' इति ॥ प्रस्तर उच्यते—हे [१-२]एष्ट एषणशील, प्रयोगनिर्वृत्तिद्वारेण[२] फलं प्रापयितुं त्वरमाण, यस्मादीदृशस्त्वमसि तस्मात् [३]रायः धनानि अस्माकं सन्तु त्वन्महिम्ना । यद्वा—ईदृशस्त्वमेव रायो धनानि, रैहेतुत्वात् रैत्वमुपचर्यते । इषेस्तृन् (पा ३ ३ १३५) । " तीषसहलुभरुषरिषः " (पा ७ २.४८) इतीडभावः । पाष्ठिकमामन्त्रिताद्युदात्तत्वम् (पा ६ १ १९८) । सम्बुद्धिगुणे (पा ७ ३ १११), " रो रि " (पा ८.३ १४) इति लोपे, " ढ्रलोपे पूर्वस्य दीर्घोऽणः " (पा ६.३ १११) इति दीर्घत्वम् ॥ केचिन्निष्ठाया (पा १.१.२६) [४]वर्णव्यत्ययेन इकारस्यैकारमाहु, अनामन्त्रितत्वं च मन्यन्ते, तदा आद्युदात्तत्वं दुर्लभम् । रेफस्य संहितायां " हशि च " (पा ६ १.११४) इत्युत्वं प्राप्नोति । शाखान्तरे तु—आ इष्ट एष्ट इति मत्वा अवग्रहं कुर्वन्ति (वाम ५ ८) । तदा—" गतिरनन्तरः " (पा ६ २.४९) इत्याद्युदात्तत्वं सिद्धम् । रायः इति च षष्ठ्यन्तं केचिदाहु । तेषां " ऊडिदंपदाद्यप् " (पा ६ १ १७१) इति विभक्तेरुदात्तत्वं प्राप्नोति । आमन्त्रितेन तु सम्बन्धे " परमपि च्छन्दसि " (पा २ १ २ वा ६) इत्यामन्त्रितानुप्रवेशात् पृथक् स्वरत्वाप्रसङ्गः । एवं प्रस्तरं स्तुत्वेदानीं स्वाभिलषितं प्रार्थयते । तत्र ' ससाधनां क्रियामुपसर्ग आह '

सता आप । मशु सूक्ष्मोऽवयवः । हे [१]सोम [२]देव, [३]ते य [४]मशु शुष्यति, यश्च [५]मशु क्षीयते [६]स सर्वोऽप्यशुर्वर्धताम् । किमर्थम् ? इन्द्रार्थम् । कीदृशायेन्द्राय ? एकः मुख्यः शोभनं सोमरूपं धनं वेत्ती त्येकधनवित् तस्मै । हे सोम, [१]तुभ्य त्वदर्थम् [२]इन्द्र [३]आ [४]प्यायतां त्वां पातुमुत्सहताम् । [५]त्वम् अपि इन्द्रार्थम् [६]आ [७]प्यायस्व वर्धस्व । [८]सखीन् ऋत्विजः [९]सन्या धनलाभेन [१०]मेधया प्रज्ञया च वर्धस्व । हे [११]सोम [१२]देव, [१३]ते [१४]स्वस्ति शुभमस्तु । त्वत्प्रसादेनाहं [१५]सुत्याम् अभिषवतन्त्रम् [१६]अशीय प्राप्नवानि ॥ एतन्मन्त्रं व्याख्यातुं प्रस्तौति—" वृत्रं वै देवा वज्रं कृत्वा सोममघ्नन्नन्तिकमिव खलु वा अस्यैतच्चरन्ति यत् तानूनप्त्रेण प्रचरन्ति " (तैस ६ २ ७) इति । पुरा कदाचित् स्वसामर्थ्यात् वज्रीकृतेन घृतेन सोमस्य देवैस्ताडितत्वात् सोमो घृतात् बिभेति । ऋत्विजश्च येषा तानूनप्त्रेणाऽऽज्येन प्रचरन्तीति [७]यत्त दस्य सोमस्यान्तिकं यथा भवति तथा चरन्ति, आहवनीयदक्षिणभागे सोमस्य स्थितत्वात् । [७-७]अतो भीतः सोम आप्यायितव्य । आप्यायनस्य प्रसङ्गं दर्शयित्वा तन्मन्त्रं व्याचष्टे—" अंशुरंशुस्ते देव सोमाऽऽप्यायतामित्याह यदेवास्यापुवायते यन्मीयते तदेवास्यैतेनाऽऽप्याययत्या तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय

१–२ त ति प–एषण यागनिष्पत्तिद्वारेण । ३ ति.प–वर्णव्याप्त्या ।

५ क–यजमानेन । ६ आ–यदेतदस्य । ७–७ तं म२–अताऽभित ।

( द्र. पाभा ५.२.२८ ) इति योग्यं क्रियापदमध्याह्रियते । इषे अन्नाय, भगाय ऐश्वर्याद्याय च प्र भव तत्संपादनसमर्थोऽस्माकं भव । " सावेकाचः " ( पा ६.१.१६८ ) इतीषो विभक्तिरुदात्ता । " ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ " ( विष्णुपुराण ६.५.७४ ) ॥ यद्वा—भगम् एतुं प्रभवतु । " तुमर्थे सेसेन् " ( पा ३.४.८ ) इति क्सेप्रत्ययः । किंच ऋतं सत्यम् ऋतवादिभ्यः सत्यवादिभ्यः अस्मभ्यं भव, ऋतवदनफलेन[३] अस्मान् योजय । यद्वा—ऋतं यज्ञः यज्ञवादिभ्योऽस्मभ्यं यज्ञो भव । शीघ्रं यज्ञं निर्वर्तयेति यावत् । किंच नमः दिवे द्युरूपाय । " ऊडिदम् " ( पा ६.१.१७१ ) इति विभक्तेरुदात्तत्वम् । नमः पृथिव्यै पृथिवीरूपाय, द्यावापृथिवीभ्यामेव वा नमस्कारः । " द्यावापृथिवीभ्यामेव नमस्कृत्याऽस्मिँल्लोके प्रतितिष्ठन्ति " ( तैसं ६.२.२ ) इति ब्राह्मणम् ॥ " उदात्तयणः " ( पा ६.१.१७४ ) इति पृथिव्या विभक्तेरुदात्तत्वम् ॥

---

प्यायस्वेत्याहोभावेवेन्द्रं च सोमं चाऽऽ प्याययत्या प्यायय सखीन्त्सन्या मेधयेत्याहर्त्विजो वा अस्य सखायस्तानेवाऽऽ प्याययति स्वस्ति ते देव सोम सुत्यामशीयेत्याहाऽऽशिषमेवैतामा शास्ते " ( तैसं ६.२.२ ) इति । अस्य सोमस्य यदङ्गमपुवायते क्षुभ्यति यच्च मीयते ॥

एष्टेति ॥ कल्पः—" न प्रस्तरायाऽऽश्रावयति । न बर्हिरनुप्रहरति । तं दक्षिणार्धे वेद्यै निधाय तस्मिन् दक्षिणोत्तरेण निह्नुवत एष्टा रायः प्रेषे भगायर्तमृतवादिभ्यो नमो दिवे नमः पृथिव्या इति " ( बौश्रौ ६.१९ ) इति ॥ आतिथ्येष्टौ यः प्रस्तरो यच्च तत्रत्यं बर्हिस्तदुभयमग्नौ न प्रहरणीयं किंतु तं प्रस्तरं वेद्या दक्षिणार्धे निधाय तस्मिन् प्रस्तरे दक्षिणपाणीनुत्तानान्[८] कृत्वा सव्यानीचैः[९] कृत्वा सर्वे निह्नवमपलापसदृशं नमस्कारोपचारं कुर्युः । मन्त्रार्थस्तु—पूषशब्द इच्छावन्तं द्यावापृथिव्यभिमानिनं देवमाचष्टे । स हि दयालुतया भक्तेषु पुरुषेष्विच्छावान् । हे तादृग्देव, त्वम् ऋतवादिभ्यः यज्ञवादिभ्योऽस्मभ्यम् ऋतं यज्ञं प्रकृष्टं देहीत्यध्याहारः । किमर्थम् ? रायः राये धनार्थम्, इषे अन्नार्थम्, भगाय ऐश्वर्यादिषड्गुणार्थम् । ते च गुणा एवं स्मर्यन्ते—" ऐश्वर्यस्य समग्रस्य [१०]धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा " ॥ ( विष्णुपुराण ६.५.७४ ) इति ॥ वयं पुनर्द्युदेवतायै भूदेवतायै च नमस्कुर्मः ॥ नायमकाण्डे नमस्कारः । किंतु तस्य निमित्तमस्तीत्याह—" प्र वा एतेऽस्माल्लोकाच्च्यवन्ते ये सोममा प्याययन्त्यन्तरिक्षदेवत्यो हि सोम आप्यायित एष्टा रायः प्रेषे भगायेत्याह द्यावापृथिवीभ्यामेव नमस्कृत्यास्मिँल्लोके प्रति तिष्ठन्ति " ( तैसं ६.२.२ ) इति । आप्यायितस्य सोमस्य नाभिदघ्याम् आसन्द्यां[११] पर्यवस्थितत्वादन्तरिक्षदेवत्यत्वम् । तादृशस्य सोमस्याऽऽ प्याययितारोऽपि तथाविधा इत्यस्माल्लोकात् प्रच्युताः, अतोऽस्मिँल्लोके प्रतिष्ठित्यै नमस्कारः क्रियते ॥

---

३. तं.ति–°वदनवलेन ; मै–°वदनफले ।

---

८. इ.उ.पा.मां–' दक्षिण ' नास्ति । ९. इ.उ.क.तं.पां.भा.म२–नीचः ; हा–नीचाः । १०. क–वीर्यस्य । ११. तं–आसन्द्या उपरि ।

अग्ने॑ व्रतपते॒ त्वं व्र॒तानां॑ व्र॒तप॑तिरसि
या मम॑ त॒नूरे॒षा सा त्वयि॑ (१)
या तव॑ त॒नूरि॒यꣳ सा मयि॑
स॒ह नौ॑ व्रतपते व्र॒तिनो॑र्व्र॒तानि॑

५ अग्ने॑ । व्र॒तप॒त॒ इति॑ व्रत—प॒ते॒ । त्वम् । व्र॒ताना॑म् । व्र॒तप॑ति॒रिति॑ व्र॒त—प॑तिः । अ॒सि॒ ।
या । मम॑ । त॒नूः । ए॒षा । सा । त्वयि॑ (१) ।
या । तव॑ । त॒नूः । इ॒यम् । सा । मयि॑ ।
स॒ह । नौ॒ । व्र॒त॒प॒त॒ इति॑ व्रत—प॒ते॒ । व्र॒तिनोः॑ । व्र॒तानि॑ ।

यजमानमवान्तरदीक्षामुपनयति—'अग्ने' इति ॥ हे अग्ने व्रतपते व्रतानां पालयितः, १० त्वं व्रतानां सर्वेषां संबन्धिनां व्रतपतिः असि न पुनरेकस्य, व्रतस्य पतित्वात् व्रतपतिरुच्यते । समासे सत्यविशेषस्याप्रतिपत्तेः बहुत्वप्रतिपादनाय व्रतानामित्युक्तम् । नित्यसंबन्धनिप्रतिपत्त्यर्थं वृत्तिश्च कृता । पतिः पालयिता स्वामी वा । सर्वेषां व्रतानां सर्वदा सर्वात्मना च पतिः त्वमसि । या मम यजमानस्य तनूः शरीरं सा त्वयि मया निवेशिता । एषा इत्यङ्गुल्या अग्नेस्तनूं दर्शयति । या तव तनूः सा मयि त्वया निवेशिता । इयम् इत्यात्म-१५ शरीरमङ्गुल्या दर्शयति । प्रत्यक्पराग्रूपसंनिहितविषयत्वात् इदमेतदादीनामेवमुक्तम् । यस्मादेवं तस्मात् हे व्रतपते अग्ने, नौ आवयोः व्रतिनोः व्रतानि अतः परं सह भवन्ति । न परस्पर-व्यावृत्तानि । यन्मया कृतं तत्त्वयाऽपि कृतं भवतीति । "आ मानमेव दीक्षया पाति" (तैसं ६ २ २) इति ब्राह्मणम् ॥

अग्न इति ॥ कल्पः—"अथ यजमानमवान्तरदीक्षामुपनयत्यग्ने व्रतपते त्वं व्रतानां व्रत-२० पतिरसि या मम तनूरेषा सा त्वयि या तव तनूरियꣳ सा मयि सह नौ व्रतपते व्रतिनोर्व्रतानीति" (बौश्रौ ६.१९) इति ॥ अनेन मन्त्रेण आहवनीयस्योपस्थानम् । अत्रावान्तरदीक्षोपक्रमः । हे अग्ने व्रतपते, त्वं व्रतपतिः असि । नैकस्य व्रतस्य पतिः किंतु सर्वेषामिति विवक्षां द्योतयितुं व्रतानाम् इत्युक्तम् । व्रतमाचरन्ती मदीया तनूः त्वयि मनसा समर्पिता । त्वदीया तु व्रतं पालयन्ती तनूः मयि मनसा स्थापिता । तथा सति आवामुभावपि व्रतिनौ संपद्यावहे । तयोः व्रतानि सह प्रवर्तन्ताम् ॥

२५ ४ मै-पते । ५ तं ति प—व्रतानाम् । ६ त ति.प—प्रत्यक् अपराग्रूपं संनिहितं । ७. ति. पं—इदमेव तदसावेव कर्तव्यम्, त—इदमेव तदावाभ्यामेव कर्तव्यम् । ८-८ तं ति—त्वया कृतं मया ।

१२-१२. त मर हा—आहवनीयोपस्थानमन्त्रदीक्षोपक्रमः, इ उ पा भा—आहवनीयस्योपस्थानम्, अत्र दीक्षोपक्रमः ।

या ते॑ अग्ने रु॒द्रि॑या त॒नूस्तया॑ नः पाहि॒ तस्या॑स्ते॒ स्वाहा॑

या । ते॒ । अ॒ग्ने॒ । रु॒द्रि॑या । त॒नूः । तया॑ । नः॒ । पा॒हि॒ । तस्याः॑ । ते॒ । स्वाहा॑ ।

उपसत्सु व्रतयति—'या ते' इति ॥ हे [V]अग्ने, [V]रुद्रिया रुद्रार्हा, यो रुद्रस्त्रिस्रोऽसुरपुरीर्दहत् तद्वीर्यानुरूपा [V]ते तव [V]तनूः महावीर्या । [V]तया [V]नः अस्मान् [V]पाहि । रुद्रशब्दादर्हत्यर्थे छान्दसो घः । यद्वा—"रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोराऽन्या शिवाऽन्या" (तैसं ५·७·३·) इत्युक्तम् । तत्र घोरा तनूः रुद्रिया क्रूरा । "रुद्रो वै क्रूरः" ( तैसं ६·२·३ ) इति । तदर्हत्वात् तया तन्वा नः अस्मान् पाहि भ्रातृव्यादिभ्यो रक्ष । [V]तस्याः तन्वाः पतिभूताय [V]ते तुभ्यं [V]स्वाहा हुतमिदं पयोऽस्तु । चतुर्थ्यर्थे वा षष्ठी ( पा २·३·६२ ) । तदीयायै तस्यै तन्वै स्वाहेति ॥

येति ॥ कल्पः—"अथैनꣳ संदास्ति संतरां मेखलाꣳ समायच्छस्व संतरां मुष्टी कुरुष्व तप्तमत एधि मदन्तीभिर्मार्जयस्वोरपूर्वं [13]प्रव्रतꣳ सृज[13] या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यास्ते स्वाहेत्येतेनै- व्रातोऽधिव्रतय" (बौश्रौ ६·१९) इति ॥ या मेखला पूर्वं [14]मध्ये संनद्धा[14] सा संकुचिततरा यथा भवति तथा नियन्तव्या, ये च मुष्टी कृते ते अप्यतिसंकोचेन दृढीकर्तव्ये, [15]उष्णक्षीरो भवेदुष्णोदकैर्मार्जयेत्, पूर्वं व्रतमुत्सृजेत्[15] ॥ तत्र 'या ते अग्ने' इत्ययं मन्त्रः । अनेनैव मन्त्रेणात ऊर्ध्वं व्रतं पिबेत् । हे [V]अग्ने, [V]या तव [V]तनूः त्वयि [V]रुद्रिया क्रूरा [V]तया अस्मान् पालय । त्वदीयायाः [V]तस्याः तन्वा इदं हुतमस्तु ॥ 'अग्ने व्रतपते' इत्यस्य मन्त्रस्य स्पष्टार्थतामभिप्रेत्यावान्तरदीक्षारम्भं विधत्ते—"देवासुराः संयत्ता आसन् ते देवा बिभ्यतोऽग्निं प्राविशन् तस्मादाहुरग्निः सर्वा देवता इति तेऽग्निमेव वरूथं कृत्वाऽसुरानभ्य- भवन्नग्निमिव खलु वा एष प्र विशति योऽवान्तरदीक्षामुपैति भ्रातृव्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृव्यो भवति" (तैसं ६·२·२) इति । परकायप्रवेशहेतुना" (योसू ३·३८) योगशास्त्रप्रसिद्धेन संयमविशेषेण (योसू ३·४) देवा अग्निमग्निशरीरं प्राविशन् । तपोरूपत्वेनाग्निसमानाऽवान्तरदीक्षा, सतस्तामुपेयात् ॥ पूर्वोक्तां दीक्षामिदानीमुच्यमानावान्तरदीक्षां च प्रशंसति—"आत्मानमेव दीक्षया पाति प्रजामवान्तरदीक्षया" (तैसं ६·२·२) इति ॥ अवान्तरदीक्षानियमान् विधत्ते—"संतरां मेखलाꣳ समायच्छते प्रजा ह्यात्मनोऽन्तरतरा तप्तव्रतो भवति मदन्तीभिर्मार्जयते निर्ह्यग्निः शीतेन वायति समिद्ध्यै" (तैसं ६·२·२) इति । सर्वो जनः स्वात्मानं क्लेशयित्वाऽप्यपत्यानि सम्यक् परिपालयति । अतः स्वस्मादपि [17]प्रजाऽभ्यन्तरतरा । मेखलायास्तु प्रजास्थानीयत्वेनान्तरतरत्वात् संश्लिष्टतरं यथा भवति तथा समा- च्छादयेत् । शीतेन क्षीरेण शीताभिरद्भिश्चाग्निर्निर्वायति । तस्मादुदराग्निसमिन्धनाय पेयस्य क्षीरस्य मार्जनहेतोरुदकस्य चौष्ण्यं कर्तव्यम् ॥ व्रतमन्त्रे रुद्रियाशब्दाभिप्रायमाह—"या ते अग्ने रुद्रिया तनूरित्याह स्वयैवैनद्देवतया व्रतयति सयोनित्वाय शान्त्यै" (तैसं ६·२·२) इति । स्वोदराग्नेरपरं रूपं रुद्रिया [18]तनूस्तया दुग्धे तप्ते[18] सति स्वया देवतया सह पूनत् दुग्धं व्रतयति भुङ्क्ते । तच्च भोजनं सयोनित्वाय योनिभूतेनाग्निना साहित्याय । तच्च साहित्यमुग्रस्याग्नेः शान्त्यै भवति ॥

१३–१३. आ–व्रतं सृज ; क–तद्व्रतं संसृज । १४–१४. मर–मध्ये संनता ; क–मध्यसंनद्धा° । १५–१५. आ.इ.उ.पा.भां–उष्णक्षीरी भवेदुष्णोदकी भवेत् पूर्वंचमसमुत्सृजेत् ; क–उष्णक्षीरी भवेदुष्णोदकेन मार्जयेत् पूर्वं व्रतं मन्त्रमुत्सृजेत् ; हा–उष्णक्षीरी भवेत् उष्णोदकी च भवेत् पूर्वं मन्त्रमुत्सृजेत् । १६. आ. मर.हा–हेतुत्वात् । १७. आ–प्रजाऽभ्यन्तरा ; इ.उ.पा.भां.हा–प्रजाः अभ्यन्तराः , क–प्रजाया अभ्यन्तरतमत्वम् । १८–१८. तं.मर–तनूः तत्पाठे (?) ।

या ते॑ अग्नेऽयाश॒या॑ रजाश॒या॑ हराश॒या॑ त॒नूर्वर्षि॑ष्ठा

या । ते॒ । अ॒ग्ने॒ । अ॒या॒श॒येत्य॑या-श॒या । र॒जा॒श॒येति॑ र॒जा-श॒या ।
ह॒रा॒श॒येति॑ ह॒रा-श॒या । त॒नूः । वर्षि॑ष्ठा ।

उपसदाहुतीर्जुहोति—तिसृषूपसत्सु अनुक्रमेण 'या ते' इति तिसृभिरनुष्टुम्भिः । तत्र प्रथमायां 'या तेऽग्नेऽयाशया' इति ॥ 'तनूर्वर्षिष्ठा' इत्यादि तिसृष्वपि समन्वयते । हे अग्ने, या ते त्वदीया तनू अयाशया, अस्यां पृथिव्यां शेते इत्ययाशया । इदम सप्तम्येकवचनस्य "सुपा सुलुक्" (पा ७ १·३९) इति यादेश. । "हलि लोपः" (पा ७·२·११३) इति इदूपस्य लोप । त्यदाद्यत्वम् (पा ७ २·१०२) । अस्यां शेते इति "अधिकरणे शेते" (पा ३ २ १५) इत्यच् । "शयनासनासिष्वकालात्" (पा ६ ३ १८) इत्यलुक् । कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६ २·१३९) । वर्षिष्ठा वृद्धतमा । "प्रियस्थिर" (पा ६ ४ १५७) इत्यादिसूत्रेण वृद्धशब्दस्य वर्षादेशः[9] । गह्वरे गहने, तिष्ठतीति गह्वरेष्ठा । "सुपि स्थ" (पा ३·२ ४) इति क । "तत्पुरुषे कृति बहुलम्" (पा ६ ३ १४) इत्यलुक् । 'तया' इत्यध्याह्रियते, तया तन्वा उग्रम् उद्गूर्णमविक्षेप वच अपावधीम् अपहन्मि, तस्य प्रयोक्तारमपहन्मीति यावत् । "अशनयापिपासे ह वा उग्र वच." (तैब्रा १ ५ ९) इत्यादि ब्राह्मणम् । तन्निमित्तत्वात्ताद्दशवचनश्रुते । छान्दसो लुङ् (पा ३·४ ६) । "हनो वध लिङि*" (पा २ ४·४२) इति वधादेश । "अमो मश्" (पा ७·१ ४०) इति मशादेश. । त्वेष दीप्त क्रूरं राक्षसादिसमीरितं श्रुत्या भीतिजनकम् । "एनश्च वैरहत्य च त्वेष वच" (तैब्रा १ ५ ९) इत्यादि ब्राह्मणम् । एनस्त्रिभिर्वीरहादिभिश्च प्रयोज्यत्वात् । तच्च वच अपावधीम् । तस्य प्रयोक्तार च अपहन्मि त्वत्प्रसादात् नाशयेयम्[12] । इदमुभय तदर्थं तस्यै तन्वै स्वाहा सुहुतमिदमस्तु ॥

द्वितीयस्यां जुहोति—'या ते अग्ने रजाशया तनू' इत्यादि ॥ रजोऽन्तरिक्ष, तस्मिन् शेत इति रजाशया मध्यमात्मिका । रज.शब्दात्, परस्या सप्तम्या डादेश (पा ७ १·३९) । पूर्ववदलुक् (पा ६·३ १८) । शेष समानम् ॥

तृतीयाया जुहोति—'हराशया तनू' इत्यादि ॥ भौमान् रसान् हरतीति हरो द्युलोक, तस्मिन् शेते हराशया सूर्यात्मिका । डादेशादि समानम् (पा ७ १·३९, ६·३ १८) ॥ यद्वा—'या सा' इत्यध्याह्रियते । 'अपावधीम्' इति च पुरुषव्यत्ययः (पा ३ १·८५) 'अपावधीत्' इति ।

९. तै ति—'वर्षादेश' इत्यस्यानन्तरं 'गह्वरेष्ठा' । *[ सर्वेषु लिखितपुस्तकेषु मुद्रितपुस्तके च 'हनो वध लुङि' इत्युपलभ्यते, सूत्रपाठमनुसृत्य शुद्धोऽत्र पाठ । वस्तुतस्तु 'लुङि च' (पा २ ४ ४३) इत्यनेनात्र वधादेशो द्रष्टव्य ।] । १०. तै त्रि—'दीप्तम्' इत्यस्यानन्तरम् 'उग्रम्' । ११ तै ति–तस्य । १२ त ति पं—नाशयामि । १३ त—अस्यै । १४. तै ति. प—स्वाहुतम् ।

गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीꣳ स्वाहा ॥ ११ ॥

[ त्वयि चत्वारिꣳशच्च ]

गह्वरेष्ठेति गह्वरे—स्था । उग्रम् । वचः । अपेति । अवधीम् । त्वेषम् ।
वचः । अपेति । अवधीम् । स्वाहा ॥ ११ ॥

[ मैसं १·२·७; कासं २·८; कपिसं २·२–३; वासं ५·७–८ ]

सा उग्रं त्वेषं वचो अपहन्त्विति । शाखान्तरे च ( कासं २·८, कपिसं २·३, वासं ५·८ ) 'अपावधीत्' इति पाठः । "तेषामसुराणां तिस्रः पुर आसन्नयस्मय्यवमाऽथ रजताऽथ हरिणी" ( तैसं ६·२·३ ) इति ब्राह्मणानुसारेणाऽन्यथा व्याख्यायते । अयसि अयस्मय्यां पुरि शेते इत्ययाशया । डादेशादि समानम् ( पा ७·१·३९, ६·३·१८ ) । रजतं रजस्तन्मय्यां पुरि शेत इति रजाशया । हरितं हरः तन्मय्यां पुरि शेत इति हराशया । गतमन्यत् ॥

॥ इति द्वितीये एकादशोऽनुवाकः ॥ ११ ॥

येति ॥ कल्पः—"आज्यस्थाल्याः स्रुवेणोपहत्य प्रथमामुपसदं जुहोति या ते [२०]अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीꣳ स्वाहेति" ( बौश्रौ ६·२१ ) इति ॥ अत्र 'या ते अग्नेऽयाशया रजाशया हराशया तनूर्वर्षिष्ठा गह्वरेष्ठा' [२०]इत्येतादृशः (मन्त्रः) आम्नातः[२०], तस्मिन् अयाशयादिपदत्रयेण त्रयो मन्त्रा भवन्ति । तेषु प्रथममन्त्रे 'तनूः' इत्यादिरनुषज्यते, द्वितीये तु 'या ते अग्ने' इति 'तनूः' इति चोभयमनुषज्यते, तृतीये तु 'या ते अग्ने' इत्ययमेवानुषज्यते । तैरेतैस्त्रिभिर्मन्त्रैस्त्रिषु दिनेषु क्रमेणोपसदाख्या आहुतयो होतव्याः । अयसि शेत इति [v]अयाशया लोहनिर्मिता । तथा [२१]रजते शेत इति [v]रजाशया । हिरण्ये शेत इति [v]हराशया । [v]वर्षिष्ठा वृद्धतमा । गह्वरे दुर्गमशब्दे [२२]सप्तलोहे सप्तरजते सप्तहिरण्ये वा तिष्ठतीति [v]गह्वरेष्ठा । अन्नपानयोरलाभेन क्षुधितोऽहं पिपासितोऽहमित्युक्तिः [v]उग्रं [v]वचः, तदेतदैहिकम् । आमुष्मिकं तु [v]त्वेषं दीपकं मनसः संतापजनकं [v]वचः । यत्तु जना इत्थं वदन्ति–अयं गोवधाद्युपपातकलक्षणमेनः प्राप्तं, विद्वद्ब्राह्मणवधादिरूपा वीरहत्या प्राप्ता इति । इदं तु पदव्याख्यानमन्यत्र ब्राह्मणे स्पष्टमाम्नातम्—"अशनयापिपासे ह वा उग्रं वचः । एनश्च वैरहत्यं च त्वेषं वचः" ( तैब्रा १·५·९ ) इति । अत्रायं वाक्यार्थः । हे [v]अग्ने, [v]या तव अयाशया [v]तनूः तयाऽहं द्वे अपि वचसी [v]अपावधीं नाशितवानस्मि । [२३]एवमितरयोरपि योज्यम् । तस्मा अग्नय इदं हुतमस्तु ॥ त्रीनेतान् उपसद्धोमान् विधातुं प्रस्तौति—"तेषामसुराणां तिस्रः पुर आसन्नयस्मय्यवमाऽथ रजताऽथ हरिणी ता देवा जेतुं नाशक्नुवन् ता उपसदैवाजिगीषन् तस्मादाहुर्यश्चैवं वेद यश्च नोपसदा वै महापुरं जयन्तीति त इषुꣳ समस्कुर्वताग्निमनीकꣳ सोमꣳ शल्यं विष्णुं तेजनं तेऽब्रुवन् क इमामसिष्यतीति रुद्र इत्यब्रुवन् रुद्रो वै क्रूरः सोऽस्यत्विति सोऽब्रवीद्वरं वृणा अहमेव पशूनामधिपतिरसानीति तस्माद्रुद्रः पशूनामधिपतिस्ताꣳ रुद्रोऽवासृजत् स तिस्रः पुरो भित्त्वैभ्यो लोकेभ्योऽसुरान् प्राणुदत" ( तैसं ६·२·३ ) इति ॥ ये पूर्वमग्निना वरूथेन पराभूता असुरास्तेषामसुराणां पृथिव्यन्तरिक्षद्युलोकेषु स्वरक्षार्थं तिस्रः पुरो दुर्गरूपा आसन् । तासु पृथिवीवर्तिनी लोहप्राकारवेष्टिता । अन्तरिक्षवर्तिनी रजतप्राकारवेष्टिता । द्युलोकवर्तिनी हिरण्यप्राकारवेष्टिता । तादृशीः पुरो देवा अग्निना वरूथेनापि जेतुमशक्ता युद्धं परित्यज्योपसदैव जेतुमैच्छन् । दुर्ग

१९. क.हा–अग्नेऽयाशया रजाशया हराशया । २०–२०–इत्येतादृशमाम्नातं । २१. इ.उ.तं.पा.भां.म२.हा–रजसि । २२. आ.क.हा–तप्ते लोहे । २३. आ.क–एवमुत्तरयोरपि ।

परितोऽवरुध्य चिरं तत्समीपेऽवस्थाय तमुपासन् । चिरकालावस्थाने सति दुर्गमध्येऽन्नपानादिक्षयादन्त-र्भेदाद्वा जयो भवतीति । यस्माद्वैरिनिरवासो जयोपायत्वेन विचारितस्तस्माल्लोकेऽप्याहुः । के किमाहुः ? यश्च ब्राह्मणादिर्वेदाध्ययनेन वेदविचारं जानाति यश्च शूद्रादिर्न जानाति ते सर्वेऽपि युद्धेनाजेयं महापुरमुपसदा जेतुं शक्यमित्याहुः । ततो देवा कालविलम्बो मा भूदिति विचार्य युद्धेनैव जेतुमिषुं संस्कृतवन्तः । अग्निं सोमं विष्णुं च समूहैकबाणं कृत्वा तेन जेतुमुद्युक्ताः । अनीकशब्दो बाणस्य प्रथमभागरूपमाचष्टे, शल्यशब्दो लोहम्, तेजनशब्दस्तदग्रम् । तामिमां देवताऽत्रयसमष्टिरूपामिषुं स्त्रीबालसहितकृत्स्नासुर-घातिनीं को नाम मोक्ष्यतीति [२४]"विचार्य शक्तो निर्घृणश्च रुद्र [२५]"एवेति निश्चित्य तस्मै वरं दत्तवन्तः । स रुद्रस्तामिषुं मुक्त्वा तया प्राकारत्रयं विभिद्य त्रिभ्यो लोकेभ्योऽसुरान्निःसारयामास ॥ विधत्ते—" यदुपसद उपसद्यन्ते भ्रातृव्यपराणुत्त्यै " ( तैस ६·२ ३ ) इति । वैरिदुर्गोपसदनकार्यकारित्वादेता आहुतय उपसद इत्युच्यन्ते । तत्राग्नि सोमो विष्णुरित्येतस्यास्तिस्रो देवता, तासां याज्यापुरोनुवाक्या [२६]"हौत्र एवाऽऽ-म्नायन्ते"[२६] । अयाडयाडितशुधारी वह्निश्चतुर्थी देवता । तदीयमन्त्र आध्वर्यवत्वादत्रैवाऽऽम्नातः ॥ उपसदाम् [२७]"आज्यहविष्ट्वेनोपांशुयाजवत् प्रयाजाज्यभागाद्याहुतिप्रसक्तौ प्रतिषेधति—" नान्यामाहुतिं पुरस्ताज्जुहुया-द्यदन्यामाहुतिं पुरस्ताज्जुहुयादन्यन्मुखं कुर्यात् " ( तैस ६·२ ३ ) इति । ' अग्निमनीकम् ' ( तैस ६·२·३ ) इति [२८]"बाणव्यापेनाग्ने [२९]"प्रथमभावित्वलक्षणं मुखत्वमुक्तम् । तत्र प्रयाजादिहोमे वह्नेर्मुखत्वं हीयेत ॥ आहुत्यन्तराणां सर्वेषां निषेधप्राप्तौ काचिदाहुतिं विधत्ते—" स्रुवेणाऽऽघारमा-घारयति यज्ञस्य प्रज्ञात्यै " ( तैस ६·२ ३ ) इति । दर्शपूर्णमासादियज्ञानामाघारोपेतत्वा दुपसदामपि[३०] यज्ञत्वप्रत्यभिज्ञानाय [३१]"स्रुवाघारः ॥ तिसृणामुपसदां होमप्रकारं विधत्ते—" पराङतिक्रम्य जुहोति पराच एवैभ्यो लोकेभ्यो यजमानो भ्रातृव्यान् प्र णुदते " ( तैस ६·२·३ ) इति । पराङ् पुनरा-वृत्तिरहितो वेद्याहवनीययोर्मध्यमतिक्रम्य दक्षिणस्यां दिश्युदङ्मुखः स्थित्वा क्रमेणाग्नेः सोमस्य विष्णोश्च तिस्र आहुतीर्जुहुयात् । तथा सति वैरिणोऽपि पुनरावृत्तिरहितानेव कृत्वा लोकत्रयान्निःसारयति ॥ चतुर्था-हुतिप्रकारं विधत्ते—" पुनरत्याक्रम्योपसदं जुहोति प्रणुद्यैवैभ्यो लोकेभ्यो भ्रातृव्याञ्जित्वा भ्रातृव्यलोक-मभ्यारोहति " ( तैस ६·२·३ ) इति । दक्षिणदेशादुत्तरस्यां दिशि समागत्य चतुर्थीमुपसदं जुहुयात् । तथा सति वैरिणो निःसार्य [३२]"स्वयं जित्वा"[३२] वैरिस्थाने पुरत्रयमधितिष्ठति । अत्र सूत्रम्—" ध्रौवादष्टौ जुह्वां गृह्णाति । चतुरुपभृति । घृतवति शब्दे जुहूपभृतावादाय दक्षिणा सकृदतिक्रान्त उपांशुयाजवत् प्रचरति । अर्धेन जौहवस्याग्निं यजति । अर्धेन सोमम् । औपभृतं जुह्वामानीय विष्णुमिष्ट्वा प्रत्याक्रम्य या ते अग्नेऽयाशया तनूरिति स्रुवेणोपसदं जुहोति " ( आपश्रौ ११ ३·९–१२ ) इति । कालद्वये तदनुष्ठानं विधत्ते—" देवा वै याः प्रातरुपसद उपासीदन्नह्नस्ताभिरसुरान् प्राणुदन्त याः सायꣳ रात्रियै ताभिर्यत् सायं प्रातरुपसद उपसद्यन्तेऽहोरात्राभ्यामेव तद्यजमानो भ्रातृव्यान् प्र णुदते " ( तैसं ६·२·३ ) इति । उपासीदन् अनुष्ठितवन्तः । प्रातरनुष्ठिताभिरह्नो वैरिनिःसारणं, सायमनुष्ठिताभिस्तु रात्रेः ॥ कालद्वये याज्यानु-वाक्ययोर्व्यत्यासं विधत्ते—" याः प्रातर्याज्याः स्युस्ताः सायं पुरोनुवाक्याः कुर्यादयातयामत्वाय " ( तैस ६·२·३ ) इति । यातयामत्वं गतरसत्वं, तद्वर्जनाय व्यत्यासः ॥ दिनत्रये तदनुष्ठानं विधत्ते— " तिस्र उपसद उपैति त्रय इमे लोका इमानेव लोकान् प्रीणाति " ( तैस ६·२·३ ) इति ॥ त्रिषु दिनेषु कालद्वयेऽनुष्ठानं प्रशंसति—षट् सं पद्यन्ते षड्वा ऋतव ऋतूनेव प्रीणाति " ( तैस ६·२·३ ) इति ॥

---

२४ इ उ.पा भां.हा–' विचार्य ' नास्ति । २५ आ क म र हा–' एव ' नास्ति । २६–२६ त म र–हौत्रन्वाखाम्नायन्ते । २७. क त म र–आज्यहविष्कत्वेन । २८ तं–ब्राह्मण' । २९ तं–इ.पा प्रथमभागत्व' । ३०. इ उ.पा भा हा–°त्वा दुपसद्यपि । ३१ क म र–स्रौवाघारः । ३२–३२ आ भां हा–स्वर्गं गत्वा ।

सौमिकी वेदिः ]

प्रसङ्गादहीने द्विरात्रादावुपसद्दिनसंख्यां विधत्ते—"द्वादशाहीने सोम उपैति द्वादश मासाः संवत्सरः संवत्सरमेव प्रीणाति" ( तैसं ६·२·३ ) इति। अहःसंघेन निष्पाद्यः सोमयागोऽहीनः। सत्रमप्यनेनोपलक्ष्यते। अहःसमूहस्य समानत्वात्॥ द्वादशदिनेषु कालद्वयानुष्ठानं प्रशंसति—"चतुर्विंशतिः सं पद्यन्ते चतुर्विंशतिरर्धमासा अर्धमासानेव प्रीणाति" ( तैसं ६·२·३ ) इति॥ एतेषूपसद्दिनेष्ववान्तरदीक्षाङ्गे[33] व्रतपाने स्तनसंख्यां विधत्ते—"आराग्रामवान्तरदीक्षामुपेयाद्यः कामयेतास्मिन् मे लोकेऽर्धुकः स्यादित्येकमग्रेऽथ द्वावथ त्रीनथ चतुर एषा वा आराग्राऽवान्तरदीक्षाऽस्मिन्नेवास्मै लोकेऽर्धुकं भवति" ( तैसं ६·२·३ ) इति। बलीवर्दप्रतोदनं लोहम् आरं, तद्वदल्पमग्रं मुखं यस्याः साऽऽराग्रा। अर्धुकं समृद्धिशीलं फलम्। सोमक्रयादिने सायमेकं स्तनं दुह्यात्[34], अपरेद्युः प्रातर्द्वौ स्तनौ, सायं त्रीन् स्तनान्, परेद्युः[35]प्रातश्चतुरः॥ यस्तु परलोकसमृद्धिकामः तस्योक्तवैपरीत्यं विधत्ते—"परोवरीयसीमवान्तरदीक्षामुपेयाद्यः कामयेतामुष्मिन् मे लोकेऽर्धुकः स्यादिति चतुरोऽग्रेऽथ त्रीनथ द्वावथैकमेषा वै परोवरीयस्यवान्तरदीक्षाऽमुष्मिन्नेवास्मै लोकेऽर्धुकं भवति" ( तैसं ६·२·३ ) इति। परःशब्देनात्र श्रेष्ठत्वाद् उपक्रमो[36] विवक्षितः। उपक्रमे वरीयोऽधिकं यस्याः सा परोवरीयसी। अयं पक्षः सूत्र उपन्यस्तः—"यद्यहः सोमं *क्रीणीयुस्तदहश्चतुरः* सायं दुहुस्त्रीन् प्रातर्द्वौ सायमेकमुत्तमे" ( आपश्रौ ११·४·१० ) इति॥ अशक्तस्य क्षीरव्रतादूर्ध्वमाहारमल्पमनुजानाति—"सुवर्गं वा एते लोकं यन्ति य उपसद उपयन्ति तेषां य उन्नयते हीयत एव स नोदनेषीति सूनीयमिव" ( तैसं ६·२·४ ) इति। उपसदां स्वर्गप्राप्तिहेतुत्वात् तदनुष्ठायिभिरवहितैर्भवितव्यम्। तेषां मध्ये यः कोऽपि हीनमनस्को यथोक्तव्रतादूर्ध्वमोदनादिकमन्तर्नयेत् स स्वर्गाद्धीयत एव। तस्मादशक्तोऽपि श्रद्धालुतया नोदनेषि न किंचिदपि व्रतादूर्ध्वमन्तर्नेष्यामीति यदि मन्येत तेन सूनीयमिव शोभनं वाक्यान्तराभ्यनुज्ञातं वस्तूनीतमिव कुर्यात्। अशक्तिपरिहारमात्रोपयुक्तं किंचिदेव स्वीकर्तव्यम्। वाक्यान्तरं तु कूश्माण्डहोमप्रकरणे समाम्नायते—"पयो ब्राह्मणस्य व्रतं यवागू राजन्यस्याऽऽमिक्षा वैश्यस्याथो सौम्येऽप्यध्वर एतद्व्रतं ब्रूयाद्यदि मन्येतोपदस्यामीत्योदनं धानाः सक्तून् घृतमित्यनुव्रतयेदात्मनोऽनुपदासाय" ( तैआ २·८ ) इति। उपदस्याम्युपक्षीणो भवामि॥ अनुमते कृतेऽपि फलभ्रंशो नास्तीत्यस्मिन्नर्थे दृष्टान्तमाह—"यो वै स्वार्थेतां यतां श्रान्तो हीयत उत स निष्टाय सह वसति" ( तैसं ६·२·४ ) इति। स्वार्थं यन्ति गच्छन्तीति स्वार्थेतस्तेषां स्वार्थेताम्। यतन्त इति यतः तेषां यताम्। मकरमासे प्रयागस्नानं केषांचित् स्वार्थः, तं प्राप्तुं प्रयतमानानां स्वग्रामान्निर्गत्य गच्छतां मध्ये यः कश्चिच्छ्रान्तो गन्तुमशक्तः संक्रान्तिकालीनस्नानात् हीयते सोऽपि निष्टाय परेद्युर्निर्गत्य तीर्थे गत्वा तैस्तीर्थवासिभिः सहावशिष्टं मासं वसति तद्वदयमप्येकेनानुव्रतेनाशक्तिं परिहृत्य शिष्टं नियममनुतिष्ठेत्। तमिममर्थं निगमयति—"तस्मात् सकृदुन्नीय नापरमुन्नयेत" ( तैसं ६·२·४ ) इति॥ सकृदुन्नयने द्रव्यं विधत्ते—"दध्नोन्नयेतैतद्वै पशूनाः रूपः रूपेणैव पशूनव रुन्धे" ( तैसं ६·२·४ ) इति॥

अथ सौमिकीं वेदिं विधातुं प्रस्तौति—"यज्ञो देवेभ्यो निलायत विष्णू रूपं कृत्वा स पृथिवीं प्राविशत् तं देवा हस्तान्त्सः रभ्यैच्छन् तमिन्द्र उपर्युपर्यत्यक्रामत् सोऽब्रवीत् को माऽयमुपर्युपर्यत्यक्रमीदित्यहं दुर्गे हन्तेत्यथ कस्त्वमित्यहं दुर्गादाहर्तेति सोऽब्रवीद्दुर्गे वै हन्ताऽवोचथा वराहोऽयं वाममोषः सप्तानां गिरीणां परस्ताद्वित्तं वेद्यमसुराणां बिभर्ति तं जहि यदि दुर्गे हन्ताऽसीति स दर्भपुञ्जीलमुद्वृह्य सप्त गिरीन् भित्त्वा तमहन्त्सोऽब्रवीद्दुर्गाद्वा आहर्ताऽवोचथा एतमा हरेति तमेभ्यो यज्ञ एव यज्ञमाहरद्यत्तद्वित्तं वेद्यमसुराणामविन्दन्त तदेकं वेद्यै वेदित्वम्" ( तैसं ६·२·४ ) इति। स्वर्गलोके स्थितो यज्ञपुरुषस्तिरोधानाय विष्णुर्भूत्वा वैष्णवं रूपं संपूर्णं कृत्वा देवेभ्यः पलाय्य पृथिवीं प्राविशत्।

---

३३. आ.इ.उ.पा.भां.हा–'दीक्षा'। ३४. इ.उ.पा.भां.हा–'दुह्यात्' नास्ति। ३५. इ.उ.पा.भां.हा–'प्रातः' नास्ति। ३६. इ.उ.पा.भां.हा–उपक्रमः। *–*[आपश्रौसूत्रे 'क्रीणीयुश्चतुरः']।

प्रातश्च सायं चासुराणां निर्मध्यं क्षुधोरूपं ततस्ते पराऽभवन् मध्यंदिने मध्यरात्रे देवानां ततस्तेऽभवन्
सुवर्गं लोकमायन्" (तैसं ६·२·५) इति। अहनि त्रिषु कालेषु व्रतं भोजनं कुर्वतो मनोरेकस्मिन्नेव
काले व्रतं कुर्वतां देवानां च मध्याह्नकाले व्रतमस्ति। स च कालः क्षुधः स्वरूपम्। तस्मिन् व्रतरहिता
असुराः पराभूताः व्रतयुक्तास्तु मनुर्देवाश्च पुष्टिं स्वर्गं च प्राप्ताः। ततो मध्याह्नकालः प्रशस्तः॥ विधत्ते—
५ "यदस्य मध्यंदिने मध्यरात्रे व्रतं भवति मध्यतो वा अन्नेन भुञ्जते मध्यत एव तदूर्जं धत्ते भ्रातृव्याभि-
भूत्यै भवत्यात्मना पराऽस्य भ्रातृव्यो भवति" (तैसं ६·२·५) इति। मुखमध्येऽन्नस्य भोजनम्
उदरमध्ये[५१] च धारणं यथा लोके, तथैवात्रापि मध्याह्ने मध्यरात्रे च व्रतं कर्तव्यम्॥ दीक्षितस्य स्वनिवास-
स्थानात् प्रवासं निषेधति—"गर्भो वा एष यद्दीक्षितो योनिर्दीक्षितविमितं यद्दीक्षितो दीक्षितविमितात्
प्रवसेद्यथा योनेर्गर्भः स्कन्दति तादृगेव तत् प्रवस्तव्यमात्मनो गोपीथाय" (तैसं ६·२·५) इति।
१० दीक्षितो विशेषेण क्षीयते प्रक्षिप्यते [५२]यस्मिन्शालास्थाने तद्दीक्षितविमितं तस्य योनिरूपत्वात्। ततोऽस्य
निर्गमनं गर्भस्रावसमम्। तत आत्मरक्षणार्थं न निर्गन्तव्यम्॥ एतमेव निषेधं प्रकारान्तरेण प्रशंसति—
"एष वै व्याघ्रः कुलगोपो यदग्निस्तस्माद्यद्दीक्षितः प्रवसेत् स एनमीश्वरोऽनूत्थाय हन्तोर्न
प्रवस्तव्यमात्मनो गुप्त्यै" (तैसं ६·२·५) इति। एष एवाऽऽहवनीयोऽग्निः प्रवसतो व्याघ्रवत्
हिंसको निवसतः कुलरक्षकः। तस्मात् सोऽग्निः[५३] प्रवसन्तमेनमनु स्वयमुत्थाय हन्तुं समर्थः। प्रवासा-
१५ भावस्त्वात्मनो रक्षणाय भवति॥ आहवनीयस्य दक्षिणदेशे शयनार्थं[५४] विधत्ते—"दक्षिणतः शय एतद्वै
यजमानस्याऽऽयतनं स्व एवाऽऽयतने शये" (तैसं ६·२·५) इति। शेत इत्यर्थः॥ [५५]शयनस्याऽऽहव-
नीयाभिमुख्यं विधत्ते—"अग्निमभ्यावृत्य शये देवता एव यज्ञमभ्यावृत्य शये" (तैसं ६·२·५) इति॥
अथ काम्यानि देवयजनानि विधीयन्ते। तत्र पुरोहविरादयः सप्तविशेषा दवष्यपोऽइत्यति-
रात्राणुत्तरयज्ञाः। स्वर्गकामिनं प्रति विधत्ते—"पुरोहविषि देवयजने याजयेद्यं कामयेतोपैनमुत्तरो
२० यज्ञो नमेदभि सुवर्गं लोकं जयेदिति" (६·२·६) इति। अनेन प्रकारेण यं
यजमानमुद्दिश्य कामयेत तं [५६]पुरोहविर्नामके याजयेत्॥ तस्य लक्षणमाह—"एतद्वै पुरोहवि-
र्देवयजनं यस्य होता प्रातरनुवाकमनुब्रुवन्नग्निमप आदित्यमभि विपश्यति" (तैसं ६·२·६) इति॥
यस्य देवयजनस्य हविर्धानमण्डप आसीनः प्राङ्मुखो होता प्रातरनुवाकनामकं शस्त्रं [५७]पठन् पुरोवर्तिन-
माहवनीयाग्निं ततः प्राग्वर्तिनं नदीतडागादिजलं ततोऽपि प्राग्दिश्युदयन्तमादित्यं चाऽऽभिमुख्येन युगपत्
२५ पश्यति, एतादृक् देवयजनं पुरोहविरित्युच्यते॥ कामितफलसिद्धिं दर्शयति—"उपैनमुत्तरो यज्ञो नम-
त्यभि सुवर्गं लोकं जयति" (६·२·६) इति॥ अन्यद्विधत्ते—"आप्ते देवयजने याजयेद्भ्रातृव्य-
वन्तम्" (तैसं ६·२·६) इति॥ आप्तनामकस्य लक्षणमाह—"पन्थां वाऽधिस्पर्शयेत् कर्तं
वा यावन्नानसे यातवै न रथायैतद्वा आप्तं देवयजनम्" (तैसं ६·२·६) इति। प्रौढं राजमार्गं
प्रौढं गर्तं वा विलोक्याऽधिकत्वेन तत्स्पर्शो यथा भवति तथा देवयजनं निर्मातव्यम्। देवयजनगर्तयोर्मध्ये
३० शकटस्य वा रथस्य वा यातवै गन्तुं[५८] यावदन्तरं न पर्याप्तं तावदेवान्तरं कर्तव्यम्। सोऽयमधिस्पर्शः।
एवदेवाऽऽप्तनामकम्॥ कामितार्थसिद्धिं दर्शयति—"आप्नोत्येव भ्रातृव्यं नैनं भ्रातृव्य आप्नोति"
(तैसं ६·२·६) इति। जयतीत्यर्थः॥ विधत्ते—"एकोन्नते देवयजने याजयेत् पशुकामम्"
(तैसं ६·२·६) इति॥ प्रशंसति—"एकोन्नताद्वै देवयजनादङ्गिरसः पशूनसृजन्त" (तैसं ६·२·६)
इति॥ लक्षणमाह—"अन्तरा सदोहविर्धाने उन्नतं स्यादेतद्वा एकोन्नतं देवयजनम्" (तैसं ६·२·६)

---

५१ आ पा हा—'उदरमध्ये' इत्यस्यानन्तरम् 'अन्नस्य'। ५२ उ.पा मा हा—अस्मिञ्छाला। 
३५ ५३ इ उ पा मा हा—अग्नि। ५४ पा मा—सवनार्थम् (?)। ५५ क—यजमानस्य। ५६ तै—
पुरोहविर्नामकेन। ५७ क हा—पठेत्। ५८ मर—यातुम्।

इति । प्राचीनवंशात् पुरतः प्रत्यासन्नं सदः, उत्तरवेदेः पश्चात् प्रत्यासन्नं हविर्धानं, तयोर्मध्यमुन्नतं कुर्यात् ॥ फलमाह—" पशुमानेव भवति " ( तैसं ६·२·६ ) इति ॥ विधत्ते—" व्युन्नते देवयजने याजयेत् सुवर्गकामम् " ( तैसं ६·२·६ ) इति ॥ प्रशंसति—" व्युन्नताद्वै देवयजनादङ्गिरसः सुवर्गं लोकमायन् " ( तैसं ६·२·६ ) इति ॥ लक्षणमाह—" अन्तराऽऽहवनीयं च हविर्धानं चोन्नतꣲ स्यादन्तरा हविर्धानं च सदश्चान्तरा सदश्च गार्हपत्यं चैतद्वै व्युन्नतं देवयजनम् " ( तैसं ६·२·६ ) ५ इति ॥ उत्तरवेदिहविर्धानसदःप्राचीनवंशानां चतुर्णामन्तरालप्रदेशेषु विपून्नतं कुर्यात् ॥ फलमाह—" सुवर्गमेव लोकमेति " ( तैसं ६·२·६ ) इति ॥ विधत्ते—" प्रतिष्ठिते देवयजने याजयेत् प्रतिष्ठाकामम् " ( तैसं ६·२·६ ) इति ॥ लक्षणमाह—" एतद्वै प्रतिष्ठितं देवयजनं यत् सर्वतः समम् " ( तैसं ६·२·६ ) इति ॥ फलमाह—" प्रत्येव तिष्ठति " ( तैसं ६·२·६ ) इति ॥ अथ नामविशेषमनुक्त्वा लक्षणपुरःसरं विधत्ते—" यत्रान्या अन्या ओषधयो व्यतिषक्ताः स्युस्तद्याजयेत् पशुकामम् " ( तैसं ६·२·६ ) इति । यत्र- १० गोधूमप्रियङ्गुकोद्रवादिबीजानि परस्परविलक्षणानि यस्मिन् प्रदेशे सहोप्यन्ते[५९] तत्र पशुकामं याजयेत् ॥ प्रशंसति—" एतद्वै पशूनाꣲ रूपꣲ रूपेणैवास्मै पशूनव रुन्धे " ( तैसं ६·२·६ ) इति ॥ फलमाह—" पशुमानेव भवति " ( तैसं ६·२·६ ) इति ॥ विधत्ते—" निर्ऋतिगृहीते देवयजने याजयेद् यं कामयेत निर्ऋत्याऽस्य यज्ञं ग्राहयेयमिति " ( तैसं ६·२·६ ) इति । निर्ऋतिर्यज्ञविघाती राक्षसः ॥ लक्षणमाह—" एतद्वै निर्ऋतिगृहीतं देवयजनं यत् सदृश्यै सत्या ऋक्षम् " ( तैसं ६·२·६ ) इति । १५ [६०]निम्नोन्नतभावराहित्येन सदृश्याः सत्या भूमेः संबन्धि यदक्षं तृणादिशून्यं स्थानं तन्निर्ऋतिगृहीतम् ॥ कामितार्थसिद्धिमाह—" निर्ऋत्यैवास्य यज्ञं ग्राहयति " ( तैसं ६·२·६ ) इति ॥ विधत्ते—" व्यावृत्ते देवयजने याजयेद्व्यावृत्कामं यं पात्रे वा तल्पे वा मीमाꣲसेरन् " ( तैसं ६·२·६ ) इति । पात्रोपलक्षिते सहपङ्क्तिभोजने तल्पोपलक्षिते विवाहे वा बन्धुमित्रादयो यं पुरुषमुद्दिश्य मीमांसेरन् संदिहीरन् स पुरुषः संदेहहेतोरपवादादेः पाप्मनो व्यावृत्तिं कामयते तं व्यावृत्ते याजयेत् ॥ व्यावृत्तस्य लक्षणमाह— २० " प्राचीनमाहवनीयात् प्रवणꣲ स्यात् प्रतीचीनं गार्हपत्यादेतद्वै व्यावृत्तं देवयजनम् " ( तैसं ६·२·६ ) इति । उभयतःप्रवणं [६१]क्रमनिम्नम् ॥ फलसिद्धिमाह—" वि पाप्मना भ्रातृव्येणाऽऽवर्तते नैनं पात्रे न तल्पे मीमाꣲसन्ते " ( तैसं ६·२·६ ) इति । पापरूपेण वैरिणा व्यावर्तते वियुज्यते ततो न संदिहते ॥ विधत्ते—" कार्ये देवयजने याजयेद्भूतिकामम् " ( तैसं ६·२·६ ) इति । कार्ये[६२] मृच्छिलादिभिरुन्नती-करणीये ॥ प्रशंसति—" कार्यो वै पुरुषः " ( तैसं ६·२·६ ) इति । उपनयनादिसंस्कारैरुन्नतीकरणीयः[६३] २५ पुरुषः ततस्तस्येदं योग्यम् ॥ फलसिद्धिं दर्शयति—" भवत्येव " ( तैसं ६·२·६ ) इति । ऐश्वर्यं प्राप्नोत्येव । तदेतत् सर्वं 'या ते अग्नेऽयाशया रजाशया' इत्यनेन मन्त्रेण साध्ययोः [६४]प्रातःकालीनसायंकालीनोप-सदोर्मध्ये कर्तव्यम् ॥

अत्र विनियोगसंग्रहः—

" अंशुराप्याययेत् सोममेष्टा प्रस्तरनिह्नवः । ३०
अग्ने पूर्वाग्निमामन्त्र्य या ते मार्जयते तथा ॥ १ ॥
व्रतं च तेन कुरुते या ते व्युपसदाममी ।
[६५]आज्यहोमा अयाशेति रजेति च हरेति च ॥ २ ॥
त्रिविधो मन्त्रभेदः स्यान्मन्त्राः सप्तेह [६६]वर्णिताः ॥ " इति[६६] ॥

५९. आ.क–सहोत्पद्यन्ते । ६०. आ.उ.मां.हा–निम्नोन्नतत्वराहित्येन; क–निम्नोन्नतभागराहित्येन । ३० ६१. आ.पा.हा–निम्नम् । ६२. इ.उ.पा.मां.हा–' कार्ये '-नास्ति । ६३. इ.उ.तं.मर–°कर्तव्यः । ६४. इ. उ–प्रातःकालीनसन्ध्याकालीनो° । ६५. तं.मर–अन्त्या होमाः । ६६–६६. आ.इ.उ.पा.मां.हा–ईरिताः ।

अथ मीमांसा ॥ पञ्चमाध्यायस्य तृतीयपादे चिन्तितम्—

" आवृत्तिरुपसत्स्वेषा संघस्यैकैकगाऽथ वा ।
त्रिरध्याय पठेत्यादाविव स्यात् समुदायगा ॥
प्रथमा मध्यमाऽन्त्येति प्राकृतक्रमसिद्धये ।
एकैकस्या द्विरभ्यासे षट्संख्याऽपि प्रसिध्यति ॥ " ( जैन्या ५.३.२-४ ) इति ॥

अग्नौ श्रूयते—" षडुपसद " ( आपश्रौ १६.२५.६ ) इति । तत्र चोदकप्राप्तानां तिसृणामुपसदां पूर्वन्यायेनाऽऽवृत्त्या षट्संख्या संपादनीया । यथा पूर्वाधिकरणे प्रयाजेषु सकृदावृत्त्यैकादशसंख्या संपादिता तद्वदत्रापि [67]"साऽऽवृत्तिर्दण्डकलितवत् समुदायस्य[67]" युक्ता । यथा दण्डेन भूप्रदेशं समिमानः पुरुष आमूलाग्रं कृत्स्नदण्डं पुनः पुनः पातयति, न तु दण्डस्य प्रत्यवयवं पृथगावृत्तिं करोति, यथा वा 'त्रिवारं रुद्राध्यायं जपति' इत्यत्र कृत्स्न एवाध्याय आवर्त्यते, न रुद्राध्यायैकदेश एकैकोऽनुवाकः [68]पृथगावृत्त्य पठ्यते तथा तिसृणामुपसदां समुदाय आवर्तनीय इति चेत् । मैवम् । प्राकृतक्रमबाधप्रसङ्गात् । प्रकृतौ हि दीक्षानन्तरभाविनि दिने होतव्या प्रथमोपसत् । तत ऊर्ध्वदिने द्वितीया । ततोऽप्यूर्ध्वदिने तृतीया । ता एताः सकृदनुष्ठाय पुनरुपरितनदिनेष्वनुष्ठीयन्ते चेत् । पुनरनुष्ठीयमानायाः प्रथमायाः प्रथमात्वमपैति चतुर्थीत्वमायाति । तस्मात् प्राकृतक्रमसिद्धये प्रथमां द्विरभ्यस्य ततो द्वितीयां द्विरभ्यस्येत्येवं स्वस्थानवृद्ध्या तासामावृत्तिः कार्या । न चाध्यायदृष्टान्तो युक्तः, अनुवाकसमुदायस्यैवाध्यायत्वात् तस्यैव चाऽऽवृत्तिविधानात् । न त्विह समुदायस्योपसत्त्वमस्ति । तस्मात् प्रत्येकमुपसदावर्तनीया । अनेन न्यायेन " द्वादशाहीनस्य " ( तैसं ६.२.५ ) इत्यत्रैकैकोपसच्चतुर्वारमावर्तनीया ।

तृतीयाध्यायस्य तृतीयपादे चिन्तितम्—

" तिस्र एव हि साह्नस्युरहीने द्वादशोपसद ।
ज्योतिष्टोमे द्वादशत्वमथ वाऽहर्गणे भवेत् ॥
अस्तु प्रकरणादाद्यो नाहीनत्वं विरुध्यते ।
प्रकृतित्वाच्च केनापि हीनोऽतोऽत्र विकल्प्यताम् ॥
साह्नाद्भिन्नाऽहीनसंज्ञा रूढैषाऽहर्गणे भवेत् ।
षष्ठीश्रुत्या द्वादशत्व प्रक्रियातोऽपकृष्यताम् ॥ " ( जैन्या ३.३.२१-२२ ) इति ॥

ज्योतिष्टोमप्रकरणे श्रूयते—" तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य " ( तैसं ६.२.५ ) इति । एकेनाह्ना निष्पाद्यत्वात् साह्नो ज्योतिष्टोमः । दीक्षादिवसादूर्ध्वं[69] सोमाभिषवदिवसात् पूर्वं कर्तव्या होमा उपसदः, तासां द्वादशत्वं प्रकरणबलात् ज्योतिष्टोमे निविशते । अहीनशब्दश्च तस्मिन्नवकल्प्यते । ज्योतिष्टोमस्य निखिलसोमयागप्रकृतित्वेन सर्वेषामङ्गानां तत्रोपदेशे सति तदुपदेशविकलविकृतीनामिव हीनत्वाभावात् । अतो द्वादशत्वत्रित्वयोर्विकल्प इति प्राप्ते ब्रूमः—आवृत्तसोमयागरूपो द्विरात्रत्रिरात्रादिरहर्गणः । तस्मिन्नहीनशब्दो रूढः । यौगिकत्वे तु 'न हीन' इति विगृह्य समासे कृते सति नयज्ञादिवदाद्युदात्तः स्यात् । मध्योदात्तस्त्वाम्नायते । रूढिश्च विग्रहनिरपेक्षत्वाच्छीघ्रबुद्धिहेतुः । अतो ज्योतिष्टोमवाचिनः साह्नशब्दाद्भिन्नेयमहीनसंज्ञा ज्योतिष्टोमाद्भिन्नमहर्गणमभिधत्ते । तस्मिन्नहर्गणे षष्ठीश्रुत्या तदुक्तं द्वादशत्वं निविश्यते । तत्सिद्ध्यर्थं प्रकरणादिदमपनेतव्यम्[70] ॥

---

६७–६७ उ–मा वृत्तिं करोति । यथा वा त्रिर्वा दण्डकलितं समुदायस्य, त–वृत्तिर्दण्डकलितवत् समुदायस्य । ६८ इ उ पा भा हा–पृथगेवैक त्रि, आ र म२–पृथगेव त्रि । ६९ त म२– दिवसेभ्य ऊर्ध्वम् । ७० इ उ पा भा हा–प्रकरणादपनेतव्यम्, क–प्रकरणादिदमुन्नेतव्यम् ।

तृतीयाध्यायस्य सप्तमपादे चिन्तितम्—

" मुख्यार्था सौमिकी वेदिरुभयार्थेति मुख्यगा ।
चिकीर्षितत्वात् मुख्यस्य वेद्यां तत्कृतिसंभवात् ॥
मुख्यपौष्कल्यहेतुत्वात् तदङ्गं च चिकीर्षितम् ।
मुख्यवत् तेन तद्वेदिरङ्गेष्वप्युपकारिणी ॥ " ( जैन्या ३·७·५–६ ) इति ॥ ५

दार्शिकीं वेदिं मध्येऽन्तर्भाव्य प्राचीनवंशो मण्डपोऽवस्थितः । ततः पूर्वस्यां दिशि सद्गोहविर्धानादीनां पर्याप्तो भूभागविशेषः । सः सदःप्रभृतिभिः सह सौमिकी वेदिरित्युच्यते । सेयं मुख्यस्य सोमयागस्यैवोपकारं करोति, न त्वमुख्यानामग्नीषोमीयाद्यङ्गानाम् । कुतः ? मुख्यस्य चिकीर्षितत्वात् । न चाङ्गान्यपि चिकीर्षितानीति वाच्यम् । चिकीर्षास्वरूपस्य वेदेर्मन्त्रेणाभिहितत्वात् । एवं श्रूयते—" षट्त्रिंशत्-प्रक्रमाः प्राची चतुर्विंशतिरग्रेण त्रिंशज्जघनेन " ( मैसं ३·८·४ ), " इयति शक्ष्यामहे " ( द्र.तैसं ६·२·४ ) १० इति । अस्यायमर्थः—श्रूयमाणेनानेन दैर्घ्यप्रमाणेन तिर्यक्प्रमाणेन च प्रमिते भूभागे फलहेतुं सोमयागं कर्तुं शक्ष्यामह इति निश्चित्य तत्रैव कुर्यादिति । सेयं चिकीर्षा मुख्यविषया । ' इयति शक्ष्यामहे ' इति परिमाणस्य शक्तेश्चोपन्यासात् । अङ्गानां तु पशूनामिष्टीनां च सद्गोहविर्धानादिमण्डपनिरपेक्षाणां यथोक्तपरिमाणमन्तरेणाप्यनुष्ठातुं शक्यत्वात् स उपन्यासस्तत्र निरर्थकः । सोमस्य त्वनुष्ठानं यथोक्तवेद्यामेव संभवति न त्वन्यत्र । तस्मात् सा वेदिर्मुख्यस्यैवोपकरोतीति प्राप्ते ब्रूमः—' इयति शक्ष्यामहे ' इत्यत्र साङ्गप्रधानानु- १५ ष्ठाने शक्तिरुक्ता । साङ्गस्यैव फलं प्रति [71]पुष्कलहेतुत्वात् । अतो मुख्याङ्गयोश्चिकीर्षायास्तुल्यत्वाद्वेदिरुभयार्था । न चात्र वपनादिसाम्यं शङ्कनीयम् । इष्टोपयोगाभावस्य तत्रोक्तत्वात् । इह तु हविरासादनादिरिष्ट उपयोगः । स च मुख्याङ्गयोः सम इत्युभयार्थत्वम् ॥

षष्ठाध्यायस्याष्टमे पादे चिन्तितम्—

" अन्याभावेऽन्यभावेऽपि पयोभक्षादयोऽग्रिमः । २०
निमित्ते सत्यनुष्ठानान्नियमादृष्टतोऽन्तिमः ॥ " ( जैन्या ६·८·९ ) इति ॥

ज्योतिष्टोमे श्रूयते—" पयो ब्राह्मणस्य व्रतम् " ( तैब्रा २·८ ) इति । तदेतदसत्यन्यस्मिन् भक्ष्ये कर्तव्यम् । कुतः ? अन्याभावस्य निमित्तत्वात् । निमित्ते सति नैमित्तिकस्यावश्यानुष्ठेयत्वात् इति चेत् । नैवम् । न ह्यत्रान्याभावो निमित्तत्वेन श्रुतः । तस्मात् सत्यप्यन्यस्मिन् भक्ष्ये नियमादृष्टाय पय एव [72]भक्षयेत् ॥ २५

तत्रैवान्यच्चिन्तितम्—

" [73]अजीर्णसंभवे कार्यं [74]व्रतं नो वाऽग्रिमो विधेः[74] ।
रोगोत्पत्त्या प्रधानस्य विरोधान्न पयोव्रतम् ॥ " ( जैन्या ६·८·१० ) इति ॥

ज्योतिष्टोमे श्रूयते—" मध्यंदिने मध्यरात्रे व्रतं व्रतयति " ( द्र. तैसं ६·२·५ ) इति । तत्र [75]यस्याजीर्तिः संभाविता तेनापि विहितत्वात् पयो व्रतयितव्यमेवेति चेत् । नैवम् । प्रधानानुष्ठान- ३० विघ्नप्रसङ्गात् । तस्मात् तथाविधवेलायां पयो वर्जयेत् ॥

अत्र सर्वाणि यजूंष्येवेति नास्ति छन्दः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठक एकादशोऽनुवाकः ॥

---

७१. क–दृष्टफलहेतुत्वात् । ७२. क.मर–व्रतयेत् । ७३. आ–अजीर्णसंभवे । ७४–७४. क– ३५ व्रतं नैवाग्रिमो विधिः; इ.उ.तं.पा.मर.हा–व्रतं नैवाग्रिमो विधेः । ७५. आ–यस्याजीर्णिः ।

वित्तायनी मेऽसि तिक्तायनी मेऽस्यवतान्मा नाथितमवतान्मा व्यथितं
वित्तायनीति वित्त-अयनी । मे । असि । तिक्तायनीति तिक्त-अयनी । मे । असि ।
अवतात् । मा । नाथितम् । अवतात् । मा । व्यथितम् ।

शम्यया चात्वाल परिमिमीते—' वित्तायनी ' इति ॥ शम्यया परिमीयमाणा
५ भूमिरुच्यते । वित्त धनमग्निलक्षण, तस्यायनी प्रापणी त्वम् [४]असि । एते करणे ल्युट्
( पा ३ ३-११७ ) । ममाग्निप्राप्तिहेतुस्त्वमसि ॥

दक्षिणतो मिमीते—' तिक्तायनी ' इति ॥ तिक्त तेज । तिज निशाने[1] । अग्नि-
लक्षणस्य तेजसो [२]मे प्रापणी [३]असि ॥

पश्चान्मिमीते—' अवतात् ' इति । [४]अवतात् रक्षतात् तर्पयताद्वा । [५]मा [६]नाथितम् ।
१० कर्तरि निष्ठा ( पा ३ २ १०२ ) । नाथमानमग्निं याचमान तत्प्रदानेनावतात् ॥

उत्तरतो मिमीते—' अवतात ' इति ॥ [७]अवतात् रक्षतात् [८]मा [९]व्यथित भीतम् ।
किमत्राग्निर्लभ्यत उत न लभ्यत इति संशयेन भीत चकित याऽग्निप्रदानेन रक्षतु ॥

एकादशेऽनुवाक उपसदोऽभिहिता । तत्र मध्यमोपसहिने षट्त्रिंशत्पदपरिमितो योऽयं वेदि-
प्रदेश स्वीकृतस्तस्य पूर्वभाग उत्तरवेदिर्द्वादशेऽनुवाकेऽभिधीयते ।

१५ वित्तायनीति ॥ बौधायन —" उत्तरेण वेदिं द्वयोर्वा त्रिषु वा प्रक्रमेषु स्फ्येनोद्धत्यावोक्ष्य
शम्यया चात्वाल परिमिमीते । वित्तायनी मेऽसीति पुरस्तादुदीचीनकुम्बयाऽन्तरत स्फ्येनोल्लिखति ।
तिक्तायनी मेऽसीति दक्षिणत प्राक्कुम्बयाऽन्तरत स्फ्येनोल्लिखति । [१]"अवतान्मा नाथितमिति पश्चादुदी-
चीनकुम्बयाऽन्तरत स्फ्येनोल्लिखति अवतान्मा व्यथितमित्युत्तरत प्राचीनकुम्बयाऽन्तरत स्फ्येनोल्लिखति"
( बौश्रौ ४ २ ) इति"[१] । आपस्तम्ब —"अपरेण यूपावटदेशं संचरमवशिष्य वेद्यामुत्तरवेदिं[२] दशपदां सोमे
२० करोति । अष्टापदीं पुरस्तादित्येके । तां युगेन यजमानस्य वा पदैर्विमाय शम्यया परिमिमीते । शम्यामात्री
निरूढपशुबन्धस्योत्तरवेदि । शम्या पुरस्तादुदगग्रां निधाय स्फ्येनोदीचीमभ्यन्तरमुपलिखति वित्तायनी
मेऽसीति । एव दक्षिणत प्राचीं तिक्तायनी मेऽसीति । पश्चादुदीचीमवतान्मा नाथितमिति । उत्तरत -
प्राचीमवतान्मा व्यथितमिति । उत्तरस्माद्वेद्यंसादुदक्प्रक्रमे चात्वाल । तमुत्तरवेदिवत् तूष्णीं शम्यया परि-
२५ मित्य " ( आपश्रौ ७ ३-१०–७-४ २ ) इति । अत्रोत्तरवेदेर्द्वावाकारौ । महावेद्या [३]प्राग्भागे मृत्तिकाप्रक्षेपेण
निष्पाद्यमान एक आकार । आपस्तम्बमते तद्विषया मन्त्रा उक्ता । [४]मृत्तिका चात्वालगतेति तद्रूपोऽपर
आकार । तद्विषया बौधायनमते मन्त्रा ॥ हे उत्तरवेदे, त्वं मम [६]वित्तायनी वह्निरूपस्य वित्तस्य
प्रापिका [४]असि । तिक्तस्य [५]वह्नितेजसो ज्वालारूपस्य प्रापिका [४]असि । [५]नाथित वह्नियाचक
माम् [४]अवतात् रक्ष । [४]व्यथित [६]वह्न्यलाभाद्भीत मा रक्ष ॥ मन्त्रान् व्याचिख्यासु शम्यया वेदिपरिमाणं
३० विधातुमाख्यायिकया वेदिं प्रस्तुवन् प्रसङ्गात् व्याघारणमभिधत्ते[७]—" तेभ्य उत्तरवेदि सिंही रूपं
कृत्वोभयानन्तराऽपक्रम्यातिष्ठत् ते देवा अमन्यन्त यतरान् वा इयमुपावर्त्स्यति त इदं भविष्यन्तीति

१ प–निशामने; मै–निशानने।

१–१ इ.उ पा हा–' अवतान्मा. .इति ' नास्ति । २. इ उ–' उत्तरवेदिम् ' इत्यस्यानन्तरं
' करोति ' । ३ आ–प्राग्भागे । ४. इ उ.पा–तन्मृत्तिका । ५. त–वह्नेस्तेजस । ६ इ.उ.क पा–
वह्न्यभाव् । ७ क न म२–विधत्ते ।

उत्तरवेदिः ]

विदेर॒ग्निर्नभो॒ नामाग्ने॑ अङ्गिरो॒ योऽस्यां पृ॑थि॒व्यामस्यायु॑षा॒ नाम्नेहि॑

विदेः । अ॒ग्निः । नभः॑ । नाम॑ । अग्ने॑ । अ॒ङ्गि॒रः॒ । यः । अ॒स्याम् । पृ॒थि॒व्याम् । असि॑ । आयु॑षा । नाम्ना॑ । एहि॑ । इ॒हि॒ ।

चात्वालस्थे बर्हिषि स्फ्येन प्रहरति—'विदेः' इति ॥ हे ᵛअग्ने ᵛअङ्गिरः अङ्गनादिगुणयुक्त। *अङ्गेरसुनि ( उ ६३८ ) इरुडागमः । ᵛयः त्वम् ᵛअस्यां ᵛपृथिव्याम् ᵛअसि वर्तसे स त्वं ᵛविदेः वेदितुमर्हसि । कथम् ? ᵛनभः ᵛनाम ᵛअग्निः अहम् इति । यद्वा—नभो नामाग्निस्त्वमसि, एतद्वेदितुमर्हसि । वेत्तेर्लिङि विकरणव्यत्ययेन ( पा ३·१·८५ ) शः । एवंनामानमग्निं यागसिद्ध्यर्थम् आदातुं स्फ्येन बर्हिषि प्रहरामि । तस्मात् तन्नामाहमिति यत्ते[2] वेदनं प्रयोजनवदेवेति अवश्यं त्वमेवं वेदितुमर्हसीत्यर्थः । 'नहनात् नभः ( द्र. उ ६६१ ) । तत्र पुरीषनद्धोऽग्निर्नभ इत्येके[3] । लोकत्रयनद्धः सूक्ष्मोऽग्निरित्यपरे । पुरीषादाने[4] पृथिवीस्थस्य तस्याग्नेरादानं भवतीति तदर्थं मया स्फ्येन बर्हिषि प्रहारः क्रियत इति ॥ १०

पुरीषमादत्ते—'आयुषा' इति ॥ हे अग्ने पार्थिव, ᵛआयुषा अस्मभ्यं देयस्यायुषः साधनेन ᵛनाम्ना नभ इत्यनेन त्वया विदितेनोपलक्षितः ᵛआ ᵛइहि आगच्छ । त्वामहं ग्रहीतुमारभ इति ॥

तामुपामन्त्रयन्त साऽब्रवीद्वरं वृणै सर्वान् मया कामान् व्यश्नवथ पूर्वां तु माऽग्नेराहुतिरश्नवता इति तस्मादुत्तरवेदिं पूर्वामग्नेर्व्याघारयन्ति वारेवृतं[९] ह्यस्यै" ( तैसं ६·२·७ ) इति । अत्रोभयोरन्तरेण इत्यभिधानात्तेभ्यो देवासुरेभ्य इति लभ्यते । ते देवास्तामुपामन्त्रयन्त प्रार्थितवन्तः । मया मदनुग्रहेण भ्रातृव्याभिभवात् सर्वान् कामान् यूयं व्यश्नवथ विशेषेण प्राप्स्यथ, तदर्थं तु आद्याऽऽहुतिर्व्याघारणरूपा युष्माभिर्हुता प्रणेष्यमाणादग्नेः पूर्वभाविनी मां व्यश्नवतै विशेषेण व्याप्नोतु मामेवोद्दिश्य हूयताम् । सोऽयं वरः । यस्मात् वरो वृतः तस्मात् तथा व्याघारयेयुः । तत्प्रकारस्तु 'सिꣳहीरसि'[८] इत्यादिमन्त्रव्याख्यानावसरे[९] वक्ष्यते ॥ विधत्ते—"शम्यया परि मिमीते मात्रैवास्यै साऽथो युक्तेनैव युक्तमव रुन्धे" ( तैसं ६·२·७ ) इति । [१०]गदया सदृशी[१०] बाहुपरिमिता शम्या । तया चतुर्दिक्षु उत्तरवेदिं १५ परिमिमीते । अस्या उत्तरवेदेः [११]सेयं भूमिः[११] शम्यया [१२]परिमिता निर्णीता मात्रैव न न्यूना अहृत्वमसाद्विप्रचारस्य पर्याप्तत्वात् । नाप्यधिका यथोक्तप्रचारानुपयुक्तभागस्याभावात् । किंतु युक्तेनैव योग्येनैवोत्तरवेदिप्रमाणेन योग्यफलं प्राप्नोति ॥ मन्त्रान् व्याचष्टे—"वित्तायनी मेऽसीत्याह वित्ता ह्येनानावत् तिक्तायनी मेऽसीत्याह तिक्तान् ह्येनानावदवतान्मा नाथितमित्याह नाथितान् ह्येनानावदव्यतान्मा व्यथितमित्याह व्यथितान् ह्येनानावत्" ( तैसं ६·२·७ ) इति । वित्तं वह्निरूपम् । वित्तार्थिन एतान् यज्ञकर्तॄन् वह्निप्रापणेनेयमुत्तरवेदिररक्षत् । तिक्तं वह्निज्वालारूपं तेजः तदर्थिन एतान् [१३]यागकर्तॄन् ॥ २० २५

विदेरिति ॥ बौधायनः—"अथ चात्वाले बर्हिर्निधाय तस्मिन् स्फ्येन प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो योऽस्यां *-पृथिव्यामस्यायुषा-* नाम्नेहीति । **तत् हृत्वोत्तरवेद्यां निवपति यत्तेऽनाधृष्टं नाम

*[' अङ्गतेरसिरिरुडागमश्च ' ( उ ६८५ ) इत्यनेनापि अङ्गिरस्-शब्दः सिध्यति। तथापि अङ्गिरस्-शब्दस्य आद्युदात्तत्वं विचिन्त्य असुन्नन्तत्वेन भट्टभास्करमिश्रैर्व्याख्यातः इति प्रतीयते। ]। ३०

२. ति.तं-यज्ञे। ३. मै-नभनात्। ४. ति-इत्युच्यते। ५. तं.ति.पं-पुरीषनामाग्नेः।

८. आ.क-' सिंहीरसि ' इत्यस्यानन्तरं ' महिषीरसि '। ९. इ.उ.पा.म.र-°व्याख्याने। १०-१०. तं.म.र-गदासदृशा। ११-११. इ.उ.तं.पा.म.र-सा। १२. आ-' परिमिता ' नास्ति। १३. तं.म.र-यज्ञकर्तॄन्। *- -* [ बौश्रौसूत्रे ' पृथिव्यामसीत्यादत्त आयुषा ' ]। **[ बौश्रौसूत्रे ' तत् ' नास्ति ]।

यत् तेऽनाधृष्टं नाम॑ य॒ज्ञियं॒ तेन॒ त्वाऽऽद॑धे॒ऽग्ने॑ अङ्गिरो॒ यो द्वि॒तीय॑स्यां* तृ॒तीय॑स्यां*
पृ॒थि॒व्याम॒स्यायु॑षा॒ नाम्ने॒हि॒ यत् तेऽनाधृष्टं नाम॑ ( १ ) य॒ज्ञियं॒ तेन॒ त्वाऽऽ द॑धे ।

यत । ते॒ । अना॑धृष्टमित्यना॑–धृ॒ष्टम् । नाम॑ । य॒ज्ञिय॑म् । तेन॑ । त्वा॒ । एति॑ । द॒धे॒ । अग्ने॑ ।
अङ्गि॒र । य । द्वि॒तीय॑स्याम् । तृ॒तीय॑स्याम् । पृ॒थि॒व्याम् । असि॑ । आयु॑षा । नाम्ना॑ । एति॑ ।
५ इ॒हि॒ । यत् । ते॒ । अना॑धृष्टमित्यना॑–धृ॒ष्टम् । नाम॑ (१) । य॒ज्ञिय॑म् । तेन॑ । त्वा॒ । एति॑ । द॒धे॒ ।

उत्तरवेद्या निवपति—' यत्ते ' इति ॥ हे अग्ने, यत् ते तव अनाधृष्टम अनभिभूत केनचिदपि राक्षसादिना, यज्ञिय यज्ञार्हं यज्ञसंपादनसमर्थं नाम नभ इत्येतत्, तेन त्वाम् आ दधे स्थापयामि । उत्तरवेद्यामाहवनीयधारणार्थं पुरीषात्मना स्वयमेव धारयितुं शक्यते । न हि त्वदन्यस्तद्धारयितुं समर्थः । तस्मादेतन्नाम बिभ्रदुत्तरवेद्यामात्मनो महिमानमाहवनीयं धारयितुं
१० संनिहितो भूत्वा यज्ञं संपादयेति भावः । एवं द्वितीयं तृतीयं च करोति । ' विदेरग्निर्नभो नाम ' इत्यादिकं सर्वत्रानुवर्तते । अयं तु विशेषः, द्वितीयपर्याये— ' अग्ने अङ्गिरो यो द्वितीयस्या पृथिव्यामसि ' इति भवति । द्वितीया पृथिवी अन्तरिक्षम् । तृतीये तु—' अग्ने अङ्गिरो यस्तृतीयस्या पृथिव्यामसि ' इति । तृतीया पृथिवी द्युलोकः । पृथुत्वात् पृथिवी । समानमन्यत् । " विदेरग्निर्नभो नामाग्ने अङ्गिर इति त्रिर्हरति " ( तस ६.२ ७ ) इति ब्राह्मणम् ॥

१५ यज्ञिय तेन त्वाऽऽदध इति " ( बौश्रौ ४ २ ) इति । आपस्तम्बस्त्वेकमन्त्रतामाह—" तूष्णीं आनुदश्च त्रिरितस्ते"[१४] वा व्यायतोत्तरवेद्यर्थान् पांसून् [१५]"हरति विदेरग्निरिति " ( आपश्रौ ७ ४.२ ) इति ॥ विदे उत्तरवेदे संबन्धी यः अग्नि तस्य नभ इत्येतत् नाम । अङ्गाना रस इत्यङ्गिर शब्दस्य निर्वचनम् । तथा च छन्दोगा प्राणोपास्तावामनन्ति—" एतमु एवाऽऽङ्गिरसं मन्यन्तेऽङ्गाना यद्रस । तेन " ( छाउ १२ १०–११ ) इति । वाजसनेयिनोऽप्यधीयते—" [१६]सोऽयास्य आङ्गिरसोऽङ्गाना (हि) रस "
२० ( बृउ १३ १९ ) इति । अयं चाग्नि सोमाहुत्याधारत्वात् गार्हपत्यदक्षिणाग्न्याहवनीयाना[१७] मध्ये सारः । हे अङ्गिर , य त्वम् अस्या चात्वालगतमृद्रूपाया पृथिव्याम् असि वर्तसे स त्वमायुष्प्रदेन नभोनाम्ना सहित एहि उत्तरवेद्यामागच्छ । यत् तव अनाधृष्ट अनाप्यतिरस्कृत नाम यज्ञसंबद्ध तेन नाम्ना व्यवहृत्य त्वामुत्तरवेद्याम् आ दधे ॥

अग्न इति ॥ बौधायन —" द्वितीयं प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो यो द्वितीयस्या
२५ पृथिव्यामसीति । आदत्त आयुषा नाम्नेहीति । हृत्वोत्तरवेद्या निवपति यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वा दध इति । तृतीयं प्रहरति विदेरग्निर्नभो नामाग्ने अङ्गिरो यस्तृतीयस्या पृथिव्यामसीति । आदत्त आयुषा नाम्नेहीति । हृत्वोत्तरवेद्या निवपति यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वा दध इति । तूष्णीं चतुर्थं[१८] हरति सह बर्हिषा " ( बौश्रौ ४ २ ) इति । आपस्तम्ब —" एतेनैव यो द्वितीयस्यामिति द्वितीयं यस्तृतीयस्यामिति तृतीयम् । तूष्णीं चतुर्थं [१९]"हृत्वा " ( आपश्रौ ७.४ ४–५ ) इति । अत्र ' अग्ने अङ्गिरो यो

३० १४ आ क भ२—त्रिरितस्तिम् । १५. हा—प्रहरति । १६ आ क— य अङ्गि", इ उ— योऽस्याङ्गि", पा हा— या अङ्गि" । १७. आ हा—"दक्षिणाग्न्यादीनाम् । १८ आ—हरति ।

सि९ह्नीर॑सि महि॒षीर॑स्यु॒रु प्र॑थस्वो॒रु ते॑ य॒ज्ञप॑तिः प्रथतां
ध्रु॒वाऽसि॑ दे॒वेभ्यः॑ शुन्धस्व

सि॒९ह्रीः । अ॒सि॒ । म॒हि॒षीः । अ॒सि॒ । उ॒रु । प्र॒थ॒स्व॒ । उ॒रु । ते॒ । य॒ज्ञप॑ति॒रिति॑ य॒ज्ञ–प॒तिः ।
प्र॒थ॒ता॒म् । ध्रु॒वा । अ॒सि॒ । दे॒वेभ्यः॑ । शु॒न्ध॒स्व॒ ।

पुरीषं संप्रयौति—' सि९ह्रीः ' इति ॥ हे उत्तरवेदे, ᵛसि९ह्रीः ᵛअसि । सहनात् सिंहीः शत्रूणामभिभवित्रीति । हिनस्तेर्वाऽऽद्यन्तविपर्ययः ( नि ३·१८ ) । सिंहीरूपं कृत्वा वा सिंहीः । ब्राह्मणं च भवति—" तेभ्य उत्तरवेदिः सिं९ही रूपं कृत्वा " (तैसं ६·२·७) इत्यादि । व्यत्ययेन ( पा ३·१·८५ ) " हल्ङ्याभ्यः " ( पा ६·१·६८ ) इति सुलोपो न प्रवर्तते । किंच ᵛमहिषीः ᵛअसि महती महनीया वा । " अविमह्योष्टिषच् " ( उ ४८ ) । महति वा यागे सीदतीति महिषी । पृषोदरादिः ( पा ६·३·१०९ ), पूर्ववत् सुलोपाभावः ( पा ३·१·८५; ६·१·६८ ) । यस्मादीदृशी त्वमसि, तस्मात् त्रिलोकाग्निभिः पुरीषरूपैस्त्वां संप्रयौमीति ॥

प्रथयति—' उरु ' इति ॥ व्याख्यातम् ( तैसं १·१·८ ) ॥

स्फ्येन दृढीकरोति—' ध्रुवासि ' इति ॥ ᵛध्रुवा निश्चला ᵛअसि भवेत्यर्थः । लेटि लोपाभावे रूपम् ( द्र. पा ३·४·९७ ) ।

अद्भिरवोक्षति—' देवेभ्यः ' इति ॥ देवार्थं ᵛशुन्धस्व शुद्धा भव । शुन्ध शौचकर्मणि चुरादिरात्मनेपदीयः ॥

'द्वितीयस्याम् ' इत्याम्नातो द्वितीयमन्त्रः, तस्याऽऽदौ ' विदेः ' इत्यादिरनुषज्यते । अवसाने च ' पृथिव्याम् ' इत्यादिरनुषज्यते । ' तृतीयस्याम् ' इत्यादिश्चरममन्त्रः, तस्य ' विदेः ' इत्यादिरेवानुषज्यते । चात्वाल-स्थितायाः पृथिव्या अंशभेदेन द्वितीयत्वं तृतीयत्वं च द्रष्टव्यम् ॥ विधत्ते—" विदेरग्निर्नभो नामाग्ने अङ्गिर इति त्रिर्हरति य एवैषु लोकेष्वग्नयस्तानेवाव रुन्धे तूष्णीं चतुर्थं हरति अनिरुक्तमेवाव रुन्धे " (तैसं ६·२·७) इति । लोकत्रयवर्तिनां त्रयाणामग्नीनामवरोधाय त्रिर्हरणमेतल्लोकवर्तीति निश्चित्य वक्तुमशक्यत्वेनानिरुक्तस्याग्निसामान्यस्यावरोधाय तूष्णीं हरणम् ॥

सि९ह्रीरिति ॥ बौधायनः—" अथाऽध्वर्युरुत्तरवेदौ पुरीषं संप्रयौति सि९ह्रीरसि महिषी-रसीति " ( बौश्रौ ४·२ ) इति । संप्रयौति मिश्रयति । आपस्तम्बः—" सि९ह्रीरसीत्युत्तरवेद्यां निवपति " ( आपश्रौ ७·४·३ ) इति ॥ वेदेः सिंहमृगत्वं दर्शयति—" सि९ह्रीरसि महिषीरसीत्याह सि९ह्रीर्ह्येषा रूपं कृत्वोभयानन्तराऽपक्रम्यातिष्ठत् " ( तैसं ६·२·७ ) इति । [19]–[19]महिषीः महती महनीया वा[19] । ब्राह्मणान्तरे वा [20]महिषीजातित्वं द्रष्टव्यम् ॥

उर्विति ॥ कल्पः—" उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामिति प्रथयित्वा ध्रुवाऽसीति शम्यया संहृत्य* देवेभ्यः शुन्धस्वेत्यद्भिरवोक्ष्य[21] देवेभ्यः शुम्भस्वेति सिकताभिरवकीर्य " (आपश्रौ ७·४·५) इति ॥

१९–१९. आ.हा–महिषीर्महनीया; म२–महिषीर्महतीर्वहनीया वा । २०. तं.म२–महिषजातित्वम् । *[ आपश्रौसूत्रे ' संहृत्य ' इत्यस्यानन्तरं ' देवेभ्यः कल्पस्वेत्यभिमन्त्र्य ' ] । २१. आ.पा.हा–प्रोक्ष्य ।

देवेभ्यः शुम्भस्वेन्द्रघोषस्त्वा वसुभिः पुरस्तात् पातु मनोजवास्त्वा पितृभिर्दक्षिणतः पातु प्रचेतास्त्वा रुद्रैः पश्चात् पातु विश्वकर्मा त्वाऽऽदित्यैरुत्तरतः पातु

देवेभ्यः । शुम्भस्व । इन्द्रघोष इतीन्द्र–घोष । त्वा । वसुभिरिति वसु–भिः । पुरस्तात् । पातु ।
मनोजवा इति मनः–जवा । त्वा । पितृभिरिति पितृ–भिः । दक्षिणतः । पातु ।
प्रचेता इति प्र–चेताः । त्वा । रुद्रैः । पश्चात् । पातु । विश्वकर्मेति विश्व–कर्मा ।
त्वा । आदित्यैः । उत्तरत इत्युत्–तरतः । पातु ।

सिकताभिरनुप्रकिरति—‘देवेभ्यः’ इति ॥ देवार्थं [v]शुम्भस्व शोभस्व उज्ज्वला भव । शुभ शुम्भ शोभनार्थे ॥

उत्तरवेदेः प्राग्भागं प्रोक्षति—‘इन्द्रघोष’ इति ॥ इन्द्रस्य घोषः [v]इन्द्रघोषः स्तनयित्नुः, स [v]वसुभिः सह त्वा [v]पुरस्तात् पूर्वस्यां दिशि [v]पातु रक्षतु । अनेन प्रोक्षणेन हे उत्तरवेदे, त्वदीयं पूर्वभागं पातु ॥

दक्षिणभागं प्रोक्षति—‘मनोजवाः’ इति ॥ मनसो जव इव जवो वेगो यस्य स [v]मनोजवा यमः । तस्य हि मनस इव जवो भवति । जवतेरसुनि ( उ ६३८ ) जवः । सः [v]पितृभिः सह त्वा [v]दक्षिणतः [v]पातु त्वदीयं दक्षिणभागं पातु ॥

पश्चिमभागं प्रोक्षति—‘प्रचेताः’ इति ॥ प्रकृष्टचेताः प्रकृष्टविज्ञानो वरुणः । स [v]रुद्रैः सह त्वा [v]पश्चात् [v]पातु पश्चाद्भागं पातु ॥

उत्तरभागं प्रोक्षति—‘विश्वकर्मा’ इति ॥ विश्वानि कर्माण्यस्मिन्निति [v]विश्वकर्मा त्वष्टा । लोकपालाधिकाराद्वैश्रवणो वा । “बहुव्रीहौ विश्वं संज्ञायाम्” ( पा ६.२.१०६ ) इति पूर्वपदान्तोदात्तत्वम् । स [v]आदित्यैः सह त्वाम् [v]उत्तरतः [v]पातु तवोत्तरभागं पातु । “असुरा यज्ञमुखस्य देवानभ्यायन्त” ( तैसं ६ २ ७ ) इत्यादि ब्राह्मणम् ॥

[v]प्रथस्व प्रसर । [v]ध्रुवा दृढा । [v]शुन्धस्व शुद्धा भव । [v]शुम्भस्व शोभिता भव ॥ व्याचक्षाणः क्रमेण विधत्ते—“उरु प्रथस्वोरु ते यज्ञपतिः प्रथतामित्याह यजमानमेव प्रजया पशुभिः प्रथयति ध्रुवाऽसीति सं हन्ति धृत्यै देवेभ्यः शुन्धस्व देवेभ्यः शुम्भस्वेत्यव चोक्षति प्र च किरति शुद्ध्यै” ( तैसं ६.२ ७ ) इति ॥

इन्द्रघोष इति ॥ कल्पः—“प्रोक्षणीभिरुत्तरवेदिं प्रोक्षति । इन्द्रघोषस्त्वा वसुभिः पुरस्तात् पात्विति पुरस्तात् । मनोजवास्त्वा पितृभिर्दक्षिणतः पात्विति दक्षिणतः । प्रचेतास्त्वा रुद्रैः पश्चात् पात्विति पश्चात् । विश्वकर्मा त्वाऽऽदित्यैरुत्तरतः पात्वित्युत्तरतः” ( बौश्रौ ४.२–३ ) इति ॥ इन्द्रघोषादिनामका देवाः परिवृढास्तदनुचरा वस्वादिगणाः तैर्गणैः सहितास्ते देवाः पान्तु ॥ ‘पुरस्तात्’ इत्यादिदिग्वाचकशब्द-प्रयोगेण दिग्देवतातुष्टिकरं प्रोक्षणमित्याह—“इन्द्रघोषस्त्वा वसुभिः पुरस्तात् पात्वित्याह दिग्भ्य एवैनां प्रोक्षति” ( तैसं ६ २.७ ) इति ॥ प्रोक्षणं विधातुं प्रस्तौति—“देवाश्च वा उत्तरवेदिरुपावर्तीहैव वि जयामहा इत्यसुरा यज्ञमुखस्य देवानभ्यायन्त तानिन्द्रघोषो वसुभिः पुरस्तादपानुदत मनोजवाः पितृभिर्दक्षिणतः प्रचेता रुद्रैः पश्चात् विश्वकर्माऽऽदित्यैरुत्तरतः” ( तैसं ६.२ ७ ) इति । अपक्रम्य देवासुरसेनयोर्मध्ये

उत्तरवेदिः ]

सिꣳहीरसि सपत्नसाही स्वाहा सिꣳहीरसि सुप्रजावनिः स्वाहा
सिꣳही(२)रसि रायस्पोषवनिः स्वाहा

सिꣳहीः । असि । सपत्नसाहीति सपत्न–साही । स्वाहा । सिꣳहीः । असि । सुप्रजावनिरिति सुप्रजा-वनिः । स्वाहा । सिꣳहीः (२)। असि । रायस्पोषवनिरिति रायस्पोष–वनिः । स्वाहा ।

उत्तरवेदिमक्षणया व्याघारयति—'सिꣳहीः' इति पञ्चभिः ॥ तत्र दक्षिणेंऽसे—सिꣳहीः त्वम् असि सपत्नसाही सपत्नानां शत्रूणामभिभवित्री । स्वाहा सुहुतं तवेदमस्तु ॥ उत्तरस्यां श्रोण्याम्—सिꣳहीः त्वम् असि सुप्रजावनिः शोभनानां प्रजानां संभक्त्री त्वमसि । "छन्दसि वनसन" (पा ३.२.२७) इतीन् ॥ दक्षिणस्यां श्रोण्याम्—सिꣳहीः त्वम् असि रायस्पोषस्य धनपुष्टेः संभक्त्री त्वमसि । छान्दसः षष्ठ्या अलुक् । "षष्ठ्याः पतिपुत्र" (पा ८.३.५३) इति सत्वम् ॥ उत्तरेंऽसे—सिꣳहीः त्वम् असि आदित्यवनिः अदितिपुत्राणां संभक्त्री ॥ मध्ये—सिꣳहीः त्वम् असि सा त्वम् आ वह देवान् यजमानाय यजमानार्थम् । कीदृशाय? देवयते देवान् कामयमानाय । देवानात्मन इच्छतीति क्यच् (पा ३.१.८)। "न छन्दस्यपुत्रस्य" (पा ७.४.३५) इतीत्वाभावो दीर्घश्च निषिध्यते । "शतुरनुमः" (पा ६.१.१७३) इति चतुर्थ्या उदात्तत्वम् । "सोत्तरवेदिरब्रवीत्" (तैसं ६.२.८) इत्यादि ब्राह्मणम् ॥ 

तिष्ठन्तीमुत्तरवेदिं यदा देवा उपामन्त्रयन्त तदानीमसुरा एवमचिन्तयन् । यद्येषा देवानुपावर्तेत तदा त एव विजयेरन् । तस्मादिहैव इदानीमेव तदुपावर्तनात् प्रागेव देवान् विजयामह इति विचिन्त्य वज्रमुद्यत्य देवानभिलक्ष्य[22] प्रहर्तुमागताः । तानसुरानिन्द्रघोषादयो दिग्भ्योऽपाकुर्वन् ॥ विधत्ते—"यदेवमुत्तरवेदिं प्रोक्षति दिग्भ्य एव तद्यजमानो भ्रातृव्यान् प्र णुदते" (तैसं ६.२.७) इति ॥ प्रोक्षणशेषस्य निनयनं विधत्ते—"इन्द्रो यतीन्त्सालावृकेभ्यः प्रायच्छत् तान् दक्षिणत उत्तरवेद्या आदन् यत्प्रोक्षणीनामुच्छिष्येत तद्दक्षिणत उत्तरवेद्यै नि नयेद्यदेव तत्र क्रूरं तत्तेन शमयति" (तैसं ६.२.७) इति । यतयो देवान् हन्तुं सर्वदा प्रयतमाना उत्तमाश्रमेण प्रच्छन्नवेषा असुरास्तान् हत्वा सालावृकेभ्यः [23]आरण्येभ्यः श्वभ्यो दत्तवान् ॥ निनयनकाले ध्यानं विधत्ते—"यं द्विष्यात् तं ध्यायेत् शुचैवैनमर्पयति" (तैसं ६.२.७) इति । शुचा शोकेनार्पयति योजयति ॥ 

सिꣳहीरसीति ॥ कल्पः—"अथैनाꣳ हिरण्यमन्तर्धायाक्षणया पञ्चगृहीतेन व्याघारयति । सिꣳहीरसि सपत्नसाही स्वाहेति दक्षिणेऽꣳसे । सिꣳहीरसि सुप्रजावनिः स्वाहेत्युत्तरस्याꣳ श्रोण्याम् । सिꣳही- 

६. तं.ति–स्वाहुतम् । ७–७. मै–शोभनानामपत्यानां संभक्त्री; पं–शोभमानानां प्रजानां संभवित्री ।

२२. इ.ऊ.पा.भां.हा–'अभिलक्ष्य' नास्ति । २३. आ.पा.हा–'आरण्येभ्यः' नास्ति; क–आरण्य' ।

सि॒ꣳही॒र॑स्यादित्य॒व॒नि॒: स्वाहा॑ सि॒ꣳही॒र॒स्या वह॑ दे॒वान् दे॑व॒य॒ते यज॑मानाय॒ स्वाहा॑ भू॒तेभ्य॑स्त्वा

सि॒ꣳही । अ॒सि॒ । आ॒दि॒त्य॒व॒नि॒रित्या॑दित्य-व॒नि॒ । स्वाहा॑ । सि॒ꣳही । अ॒सि॒ । एति॑ । व॒ह॒ । दे॒वान् । दे॒व॒यत॒ इति॑ दे॒व-य॒ते । यज॑मानाय । स्वाहा॑ । भू॒तेभ्य॑ । त्वा॒ ।

स्रुचमुद्गृह्णाति—' भूतेभ्य ' इति ॥ सर्वभूतार्थं त्वामुद्गृह्णामि । यागसाधनद्वारेण सर्वभूतार्थतोद्ग्रहणस्य । " य एव देवा भूता " ( तैस ६.२.८ ) इत्यादि ब्राह्मणम् ॥

रसि रायस्पोषवनि स्वाहेति दक्षिणस्याꣳ श्रोण्याम्। सिꣳहीरस्यादित्यवनि स्वाहेत्युत्तरेऽꣳसे। सिꣳहीरस्या वह देवान् देवयते यजमानाय स्वाहेति मध्ये " ( बौश्रौ ४.३ ) इति ॥ हे उत्तरवेदे, त्वं [24]सिंहीरूपधारिणी असि । सपत्नसाही वैरिघातिनी । सुप्रजावनि शोभनापत्यभृत्यप्रदा । रायस्पोषवनि पश्वादिधनसमृद्धिदा । आदित्यवनि [25]भूमिसमृद्धिप्रतिष्ठाप्रदा । देवयते देवानिच्छते यजमानाय देवान् आ नय, तवेदं हुतमस्तु ॥ उत्तरवेदेर्वरवाक्यमनुसृत्य पञ्च कामं पञ्चकाहुत्या प्राप्नुवन्नित्येन मन्त्रसूचितमर्थं दर्शयति—" सोत्तरवेदिरब्रवीत् सर्वान् मया कामान् व्यश्नवथेति ते देवा अकामयन्ता-सुरान् भ्रातृव्यानभि भवेमेति तेऽजुहवु: सिꣳहीरसि सपत्नसाही स्वाहेति तेऽसुरान् भ्रातृव्यानभ्यभवन् तेऽसुरान् भ्रातृव्यानभिभूयाकामयन्त प्रजा विन्देमहीति तेऽजुहवु सिꣳहीरसि सुप्रजावनि स्वाहेति ते प्रजामविन्दन्त ते प्रजा वित्त्वाऽकामयन्त पशून् विन्देमहीति तेऽजुहवु सिꣳहीरसि रायस्पोषवनि स्वाहेति ते पशूनविन्दन्त ते पशून् वित्त्वाऽकामयन्त प्रतिष्ठा विन्देमहीति तेऽजुहवु सिꣳहीरस्यादित्यवनि स्वाहेति त इमां प्रतिष्ठामविन्दन्त त इमा प्रतिष्ठां वित्त्वाऽकामयन्त देवता आशिष उपेयामेति तेऽजुहवु सिꣳहीरस्या वह देवान् देवयते यजमानाय स्वाहेति ते देवता आशिष उपाऽऽयन " ( तैस ६.२.८ ) इति । [26]आशिष इष्यमाणा[26] हवि:स्वीकारिणीर्देवता उपेयाम प्राप्नुयाम इति कामयमाना यदा तेऽस्ते देवाश्चरमाहुत्या तथैव प्राप्नुवन् । कर्मफलानि चाऽऽशीःशब्देनोच्यन्ते ॥ [27]आहुतिसंख्यां विधत्ते—" पञ्च कृत्वो व्याघारयति पञ्चाक्षरा पङ्क्ति पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे " ( तैस ६.२.८ ) इति ॥ [28]गुणं विधत्ते—" अक्ष्णया व्याघारयति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै " ( तैस ६.२.८ ) इति । अक्ष्णया वक्रतया । दक्षिणेऽꣳस उत्तरश्रोणिरित्यादिका वक्रगतिः । पशव शयनकाले पादाद्यङ्गानि वक्रत्वेन प्रहरन्ति सकोचयन्ति । अत आहुतिवक्रत्व प्रतिष्ठित्यै भवति ॥

भूतेभ्य इति ॥ कल्प —" भूतेभ्यस्त्वेति स्रुचमुद्गृह्य " ( आपश्रौ ७.५.५ ) इति ॥ हे जुहू , त्वा भूतेभ्य चिरतनेभ्यो देवेभ्य उद्गृह्णामि ॥ विधत्ते—" भूतेभ्यस्त्वेति स्रुचमुद्गृह्णाति य एव देवा भूतास्तेषा तद्भागधेय तानेव तेन प्रीणाति " ( तैस ६.२.८ ) इति । भूतोद्देशेन स्रुगुद्ग्रहणे सत्कृता सन्त प्रीयन्ते ॥

२४ आ क म र२-सिंहरूप° । २५ आ हा—भूतिमन्धि° । २६–२६ ह.उ पा मा हा—आशिस्नाणा । २७ ह ड हा—आहुत्या सग्याम्, पा मा—आहुत्यां संख्याम्, २८ क ग म र२—गुणान्तरम् ।

उत्तरवेदिः ]

विश्वायु॑रसि पृथि॒वीं दृ॑ꣳह ध्रुव॒क्षिद॑स्य॒न्तरि॑क्षं दृꣳहाच्युत॒क्षिद॑सि॒ दिवं॑ दृꣳहा॒ग्नेर्भस्मा॑स्य॒ग्नेः पुरी॑षमसि ॥ १२ ॥

[ नाम॑ सिꣳहीः पञ्च॑त्रिꣳशच्च ]

वि॒श्वायु॒रिति॑ वि॒श्व–आ॒युः । अ॒सि॒ । पृ॒थि॒वीम् । दृ॒ꣳह॒ । ध्रु॒व॒क्षिदिति॑ ध्रु॒व–क्षित् । अ॒सि॒ । अ॒न्तरि॑क्षम् । दृ॒ꣳह॒ । अ॒च्यु॒त॒क्षिदित्य॑च्युत–क्षित् । अ॒सि॒ । दिव॑म् । दृ॒ꣳह॒ । अ॒ग्नेः । भस्म॑ । अ॒सि॒ । अ॒ग्नेः । पुरी॑षम् । अ॒सि॒ ॥ १२ ॥

[ मैसं १·२·८; कासं २·९; कपिसं २·३; वासं ५·९–१३ ]

पौतुद्रवान् परिधीन् परिदधाति । " अग्नेस्त्रयो ज्यायांसो भ्रातर आसन् " ( तैसं ६·२·८ ) इत्यादि ब्राह्मणम् । तत्र मध्यमं परिदधाति—' विश्वायुः ' इति ॥ विश्वमायुर्जीवनमन्नं वा अस्मिन्निति यागसाधनद्वारेण तादृशः [V]असि, स त्वं [V]पृथिवीं [V]दृंह दृढामग्निधारणसमर्थां कुरु ॥

दक्षिणं परिदधाति—' ध्रुवक्षित् ' इति ॥ ध्रुवे निश्चलेऽन्तरिक्षे क्षियतीति [V]ध्रुवक्षित्, तादृशः [V]असि । स त्वमन्तरिक्षे वसन् [V]अन्तरिक्षं [V]दृंह ॥

उत्तरं परिदधाति—' अच्युतक्षित् ' इति ॥ अच्युतेऽविनष्टे दिवि क्षियतीति [V]अच्युतक्षित् । "–स त्वं–" [V]दिवं [V]दृंह ॥

संभाराञ्निवपति—' अग्नेः ' इति ॥ [V]अग्नेः [V]भस्म दीप्तिसाधनं त्वम् [V]असि । भस भर्त्सनदीप्त्योः । अग्नेः [V]पुरीषं पूरणं प्रीणनं वा त्वम् [V]असि । तस्मादग्निं भासय पूरय प्रीणय वा । " यदेतान् संभारान् संभरति " ( तैसं ६·२·८ ) इति ब्राह्मणम् ॥

॥ इति द्वितीये द्वादशोऽनुवाकः ॥

विश्वायुरिति ॥ कल्पः—" अथ पौतुद्रवान् परिधीन् परिदधाति । विश्वायुरसि पृथिवीं दृꣳहेति मध्यमम् । ध्रुवक्षिदस्यन्तरिक्षं दृꣳहेति दक्षिणम् । अच्युतक्षिदसि दिवं दृꣳहेत्युत्तरम् " ( बौश्रौ ४·३ ) इति ॥ हे मध्यमपरिधे, त्वं कृत्स्नायुःप्रदः [V]असि, [V]पृथिवीं दृढां कुरु । हे दक्षिणपरिधे, त्वं स्थिरनिवासः [V]असि । हे उत्तरपरिधे, त्वमविनष्टनिवासः [V]असि ॥ विधत्ते—" पौतुद्रवान् परिधीन् परि दधात्येषां लोकानां विधृत्यै " ( तैसं ६·२·८ ) इति । परिधित्रयेण त्रयो लोका विधृता भवन्ति । [29]पूतुदुर्देवदारुः ॥

अग्नेरिति ॥ कल्पः—" अथातिशिष्टान् संभाराञ्निवपति [30]गुल्गुलु सुगन्धितेजनꣳ शुक्लामूर्णास्तुकामग्नेर्भस्मास्यग्नेः पुरीषमसीति " ( बौश्रौ ४·२ ) इति ॥ हे संभारस्वरूप, त्वम् [V]अग्नेः भासकं पूरकं च [V]असि ॥ संभारान् विधातुं प्रस्तौति— " अग्नेस्त्रयो ज्यायाꣳसो भ्रातर आसन् ते

८–८. पं–तादृशः स त्वम्; तं.ति–तादृशः असि स त्वम् ।

२९. इ.उ.पा.भां.हा–पौतुद्रुः । ३०. इ.उ.क.पा.हा–गुग्गुलु ।

देवेभ्यो हव्यं वहन्त प्रामीयन्त सोऽग्निरबिभेदित्थं वाव स्य आर्तिमाऽऽरिष्यतीति स निलायत स यां वनस्पतिष्ववसत्तां पूतुद्रौ यामोषधीषु तां सुगन्धितेजने यां पशुषु तां पेत्वस्यान्तरा शृङ्गे तं देवता प्रैषमैच्छन् तमन्वविन्दन् तमब्रुवन् उप न आ वर्तस्व हव्यं नो वहेति सोऽब्रवीद्वरं वृणै यदेव गृहीतस्याहुतस्य बहिः परिधि स्कन्दात् तन्मे भ्रातृणां भागधेयमसदिति तस्माद्यद्गृहीतस्याहुतस्य बहिः परिधि स्कन्दति तेषां तद्भागधेयं तानेव तेन प्रीणाति सोऽमन्यतास्थन्वन्तो मे पूर्वे भ्रातरः प्रामेषतास्थानि शातया इति स यान्यस्थान्यशातयत तत् पूतुद्रवभवद्यन्मांसमुपमृतं तद्गुल्गुलु" ( तैस ६.२.८ ) इति। भ्रातरो हविर्वहनप्रयासेन यथा मृता इत्थमेव स्य[31] अन्य. अपि मृतिं [32]प्राप्स्यतीति भीतोऽग्निर्निगूढो वनस्पत्योषधिपशुष्वेकैकां रात्रिमवसत्। देवदारुवृक्षे सुगन्धयुक्ततृणे पेत्वस्य[33] मेषस्य[34] शृङ्गयोर्मध्ये च क्रमेण त वसन्तं देवा हविर्वहने प्रेरयितुमैच्छन्। तमन्विष्यालभन्त। स्रुगुद्गृहीतस्य हविषो यद्देशरूप होमात् पूर्वं परिधिभ्यो बहिः हवि स्कन्देत् स भ्रातृभागोऽस्त्विति [35]अग्नेर्वरः। अस्थन्वन्त[35] स्वगास्थिमासोपेताः प्रामेषत मृतास्तदीयान्यस्थीनि मांसानि च शातयै परित्यक्तानि। [36]परित्यक्तानि तानि पूतुद्रगुल्गुल्वभवताम्[36]॥ विधत्ते—"यदेतान्त्संभारान्त्संभरत्यग्निमेव तत् सं भरति" ( तैस ६ २ ८ ) इति॥ मन्त्रगतेन पुरीषशब्देन संभाररूपं वह्निपूरणं विवक्षितमित्याह—"अग्नेः पुरीषमसीत्याहाग्निर्ह्येतत् पुरीषं यत्संभाराः" ( तैस ६ २ ८ ) इति। [37]गुल्गुलुसुगन्धितेजनशृङ्गोर्णास्तुपाः संभाराः॥ किंच देवदारुपरिधिरूपेण वह्निना भ्रातरोऽस्य संनिधीयन्त इत्याह—"अथो खल्वाहुरेते वावैनं ते भ्रातरः परि शेरे यत् पौतुद्रवाः परिधय इति" ( तैसं ६ २.८ ) इति। एनमग्निं परितः शेरते॥

अत्र[38] विनियोगसंग्रहः—

"वित्तोत्तरात्यवेद्यर्थं चतुर्भिः परितो लिखेत्।
निदेत्त्रिभिर्हरेत् पांसून् सिंहीर्वेद्यां विनिक्षिपेत्॥ १॥
उरु प्रथयते वेदिं ध्रुवा संहत्य शम्यया।
देवेभ्यो प्रोक्ष्य तथा देवे सिकताऽऽत्रावकीर्यते॥ २॥
इन्द्र प्रोक्ष्य चतुर्दिक्षु सिंहीरंसद्वये तथा।
श्रोणिद्वये च मध्ये च व्याघारयति पञ्चभिः॥ ३॥
भूतेभ्यः स्रुचमुद्गृह्य त्रिधा परिधयन्त्यपि।
अग्निं संस्थाप्य संभारान् मन्त्राः षड्विंशतिर्मताः॥ ४॥" इति॥

नात्र निशेषमीमांसा॥ नापि छन्दः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके द्वादशोऽनुवाकः॥ १२॥

31. आ पा – स.; क–अस्य। 32 इ उ पा भा–प्राप्स्यामीति। 33 त.मर–'पेत्वस्य' नास्ति। 34 इ उ.पा.भा हा–'मेषस्य' नास्ति। 35–35 इ.उ पा भा हा–'अग्नेर्वर। अस्थन्वन्त' नास्ति। 36–36 इ.उ पा भा मर–'परित्यक्तानि अभवताम्' नास्ति। 37 इ उ पा भा हा–गुग्गुलु। 38 आ क–अथ।

युञ्जते मन॑ उ॒त यु॑ञ्जते॒ धियो॒ विप्रा॒ विप्र॑स्य बृह॒तो वि॑प॒श्चितः॑ ।
वि होत्रा॑ दधे वयुना॒विदेक॒ इन्म॒ही दे॒वस्य॑ सवि॒तुः परि॑ष्टुतिः ॥
युञ्जते॑ । मनः॑ । उ॒त । यु॒ञ्जते॒ । धियः॑ । विप्राः॑ । विप्र॑स्य । बृ॒ह॒तः । वि॒प॒श्चितः॑ ॥
वीति॑ । होत्राः॑ । द॒धे । व॒यु॒ना॒विदिति॑ वयुन--वित् । एकः॑ । इत् ।
म॒ही । दे॒वस्य॑ । स॒वि॒तुः । परि॑ष्टुति॒रिति॒ परि॑--स्तु॒तिः । ५

शालामुखीये [1]सावित्रं जुहोति--'युञ्जते' इति जगत्या ॥ [v]युञ्जते [v]मनः विषयेभ्यः प्रत्याहृत्य इष्टे विषये स्थापयन्ति । [v]उत अपि च, [v]धियः च युञ्जते यागादिलक्षणानि कर्माणि कुर्वते । यद्वा--धियः प्रज्ञाः धर्मार्थकाममोक्षविषयाः युञ्जते भावयन्ति । यद्वा--धिय इतीन्द्रियाण्युच्यन्ते, तानि युञ्जते इष्टे विषये प्रवर्तयन्ति, अनिष्टेभ्यश्च निवर्तयन्ति । [v]विप्राः मेधाविनः [v]विप्रस्य मेधाविनः [v]बृहतः यजमानस्य संबन्धिनः [v]विपश्चितः पण्डिता ऋत्विजः । " बृहन्महतोरुपसंख्यानम् " १० ( पा ६·१·१७३ वा १ ) इति विभक्तेरुदात्तत्वम् । एवमेतत्कुर्वाणा बृहतो विपश्चितो भवन्ति ॥ [v]एक [v]इत् एक एव, [v]वयुनावित् वयुनानां ज्ञानोपायानां वेदिता । " अन्येषामपि दृश्यते " ( पा ६·३·१३७ ) इति दीर्घत्वम् । वयुनावित् एक एव [v]होत्राः स्तुतिलक्षणा वाचः [v]वि [v]दधे विदधाति विविधमुत्पादयति । छान्दसो लिट् । यद्वा--होत्राः ऋत्विग्विशेषान् होमस्य, कर्तॄन् मैत्रावरुणादीन् विदधाति विभज्य स्थापयति । [2]युञ्जते मनश्च धियश्च [3]युञ्जानाः । एतत्तु न १५ कर्तुं सर्वे शक्नुवन्ति । एक एव वयुनाविदेवंविधं कर्तुं शक्नोतीति कारणमाह--[v]मही महती महनीया खलु [v]देवस्य [v]सवितुः [v]परिष्टुतिः परितः सर्वतः रूपकर्मबान्धवाध्यवसायेन कर्तुं न शक्यते, तस्मादेक एव वयुनावित् होत्रा विधातुं शक्नोति । तस्मात् महानयं देव इति सवितुः प्रशंसा । तस्मै सवित्रे इदं स्वाहुतमस्त्विति । अन्य आह--मेधाविनो यजमानस्य संबन्धिनो विपश्चितो विप्रा युञ्जते । एक एव वयुनावित् होत्रा विदधाति । सा खलु सर्वा देवस्य सवितुः महती २० परिष्टुतिः सर्वतः प्रस्तुतिः प्रेरणेति यावत् । तस्मात्तदनुज्ञाता वयमिदं कर्मारभामहे इति भावः । " तादौ च० " ( पा ६·२·५० ) इति परेः प्रकृतिस्वरत्वम् ॥

द्वादशेऽनुवाक उत्तरवेदिरभिहिता । तत्समीपवर्ति हविर्धानं त्रयोदशेऽनुवाकेऽभिधीयते ॥
युञ्जत इति ॥ कल्पः --" गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा शालामुखीये सावित्रं जुहोत्यन्वारब्धे यजमाने युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । २५ वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः स्वाहेति " ( बौश्रौ ६·२४ ) इति । होमार्थं स्वाहाशब्दोऽध्याहृतः ॥ [v]विप्रस्य ब्राह्मणस्य यजमानस्य संबन्धिनः [v]विप्राः ब्राह्मणा ऋत्विजः [v]मनः [v]युञ्जते लौकिकचिन्ताभ्यो मनो निवार्य यज्ञचिन्तायां तत् प्रथमं नियमयन्ति । ततः [v]धियः इन्द्रियाण्यपि

१. मै--थामित्रम् । २. तं.तिं.पं --युञ्जताम् । ३. तं.ति--युञ्जताम्; पं--युञ्जतां मनः ।

। सुवाग्देव दुर्याँ॒ऽआ वद देव॒श्रुतौ॑ दे॒वेष्वा घोषेथामा

सुवागिति सु-वाक् । देव । दुर्यान् । एति ॥ वद । ।

देवश्रुताविति देव-श्रुतौ । देवेषु । एति । घोषेयाम् । एति ।

अक्षोत्सर्जने जपति—' सुवाक् ' इति ॥ हे ᵛदेव देवनशील, अक्षेषु ᵛसुवाक् शोभनवाक् ५ भूत्वा ᵛदुर्यान् गृहान् यजमानस्य सवन्वित ᵛआ ᵛवद आभिमुख्येन वद । कल्याणीं गृहाणां शान्तिकरीं वाच वदेत्यर्थ । " नञ्सुभ्याम् " ( पा ६.२ १७२ ) इत्युत्तरपदान्तोदात्तत्वम् । सुवागिति । दुर्यान् इति नकारस्य पूर्ववत् रुत्वादि ( पा ८ ३ ९,३,१७,१९ ) । " वरुणो वा एष दुर्वागुभयतो बद्धो यदक्ष " (तैस ६ २ ९) इत्यादि ब्राह्मणम् ॥ अथ " देवश्रुतौ देवेष्वाघोषेयाम् " इत्यस्य द्विवचनान्तत्वान्न पूर्वेण सवन्ध. । आचार्यवचनाच—" सुवाग्देव दुर्यो९ आ वद " इत्येव

१० यज्ञार्थेषु' स्वस्वव्यापारेषु नियमयन्ति । कीदृशस्य विप्रस्य ? ᵛबृहत ᵛविपश्चित । अधीतवेदत्वात् बृहत्त्वम्, अर्थाभिज्ञत्वात् विपश्चित्त्वम् । कीदृशा विप्रा ? ᵛहोत्रा होमकर्तार । यदिद विप्राणा मनोनियमनादिसामर्थ्यम् ᵛएक ᵛइत् ᵛवि ᵛदधे एक एव ससर्ज । कीदृश एक ? ᵛवयुनावित् मार्गान् वेत्ति सर्वज्ञ इत्यर्थ' । न चैकस्य 'सर्वसृष्टौ विस्मेतव्यम् । यत ᵛसवितु प्रेरकस्यान्तर्यामिण ᵛदेवस्य ᵛपरिष्टुति सर्ववेदोक्तस्तुति ³ ᵛमही महती । तथा चाऽऽथर्वणिका अधीयते—" य सर्वज्ञ' सर्वविद्यस्य ज्ञानमय तप "

१५ ( मुड १.१ ९ ) इति । वाजसनेयिनश्च—" स एष सर्वस्येशान ⁴ सर्वस्याधिपति. सर्वमिद प्रशास्ति यदिद किंच " ( बृड ५ ६.१ ) इति । श्वेताश्वतराश्च—" पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च " ( श्वेउ ६.८ ) इति । एवं सर्वत्रोदाहार्यम् ॥ एत मन्त्रं विनियोक्तुमुपोद्घातत्वेनानुष्ठेयं विधत्ते— " बद्धमव स्यति वरुणपाशादेवैने मुञ्चति प्र णेनेक्ति मेध्ये एवैने करोति " ( तैस ६ २ ९ ) इति । हविर्धाननामकयो शकटयो यदक्षं पूर्वं बद्धमासीत् तदवस्यति मुञ्चेत् । ⁵ णेनेक्ति प्रक्षालयेत् । अत्र

२० सूत्रम्—"⁶⁻प्रयुक्तपूर्वे शकटे⁻⁶ नद्धयुगे ⁷प्रतिहततराम्बे प्रक्षाल्य तयो प्रथमग्रथितान् मन्थीन् विस्रस्य नवान् प्रज्ञातान् कृत्वाऽग्रेण प्राग्वंशमभित पृष्ठ्यामभ्यवनयन् परिश्रिते सच्छदिषी अवस्थापयति " (आपश्रौ ११.६ ६ ) इति । पृष्ट्या वेदिमध्ये प्राक्प्रतीच्यो शङ्कोर्बद्धा रज्जु मध्येऽव्यवनयन् व्यवधानमकुर्वन् ॥ मन्त्रविनियोगपूर्वक शाखान्तरेण विधत्ते—" सावित्रियर्चा हुत्वा हविर्धाने प्र वर्तयति सवितृप्रसूत एवैने प्र वर्तयति " ( तैस ६ २९ ) इति ॥

२५ । । सुवागिति ॥ कल्प —" स्याच्चेदक्षशब्द सुवागित्यनुमन्त्रयते* " ( आपश्रौ ११ ६.१२ ) इति ॥ स च मन्त्र एवमाम्नात —" सुवाग्देव दुर्यो९ आ वद देवश्रुतौ देवेष्वा घोषेयाम् " इति ॥ हे अक्षदेव, ᵛदुर्यान् गृहान् प्रति ᵛसुवाक् भूत्वाऽऽसमन्ताच्छ्रेयस्करीं वाच ᵛवद । हे ᵛदेवश्रुतौ ⁸⁻देवैश्रुतौ⁻⁸ प्रख्यातौ अक्षौ, यजमानोऽयं युष्मान यजतीति ᵛदेवेषु ᵛआ ᵛघोषेयाम् ॥ सुवाक्शब्दोपयोग दर्शयति—" वरुणो वा एष दुर्वागुभयतो बद्धो यदक्ष स यदुत्सर्जेद्यजमानस्य गृहानभ्युत्सर्जेत् सुवाग्देव

३० . ⁶ मै-इत्येवम् ।

१. इ उ पा भां हा-' यज्ञार्थेषु ' नास्ति । २ त-स्वसृष्टौ । ३ आ हा-' सर्ववेदोक्तस्तुति ' नास्ति । ४ इ उ पा.आ हा-सर्वस्य वशी सर्वस्येश, त मर-सर्वस्य वशी सर्वस्येशान , क-सर्वस्य वशी सर्वस्य स्रष्टा । ५ आ-' अक्ष ' नास्ति । ६-६. आ.पा-प्रयुक्तपूर्वशकटे । ७ आ पा भां-प्रविहित', क हा-अप्रतिहित', मर-परिहित' । *[ आपश्रौसूत्रे ' अनुमन्त्रयेत ' ] । ८-८ आ क.हा-' देवै श्रुतौ ' नास्ति ।

**नो वीरो जायतां कर्मण्यो यꣳ सर्वेऽनुजीवाम यो बहूनामसंद्वशी ।**

नः । वीरः । जायताम् । कर्मण्यः । यम् । सर्वे ।

अनुजीवामेत्यनु–जीवाम । यः । बहूनाम् । असत् । वशी ॥

तत्र जपतीति । द्विवचनसंबन्धादेवोपरितनेनाक्षधुरोऽभ्याञ्जने न च संबध्यते । न च प्रकरणादुत्कृष्य विकृतिमासाद्य यदयं करिष्यति तत्प्रतीयते । तस्मादत्र विनियोगः कल्पयितव्यः । स च द्विवचनात् पुंलिङ्गाच्चाक्षद्वयोत्सर्जनजपे युक्त इव लक्ष्यते । अयमर्थः—देवाः शृण्वन्ति यौ तौ देवश्रुतौ । कर्मणि क्विप् ( पा ३.२.७६ ) । निष्ठायां वा । " परादिश्छन्दसि बहुलम् " ( पा ६.२.१९९ ) इत्युत्तरपदाद्युदात्तत्वम् । हे अक्षौ, ईदृशौ युवाम् आत्मीयोत्सर्जनेन देवेषु आ घोषेथाम् । *अयं यजमानो युष्मान् यजते इत्येवं महता शब्देन घोषणं कुरुतम्* । घुषि कान्तिकरणे उदात्त अनुदात्तेत् भौवादिकः ॥

अक्षधुरमवाञ्जयति—' आ नः ' इति ॥ नः अस्माकं वीरः पुत्रादिकः कर्मण्यः कर्मयोग्यः आ जायताम् । कर्मणि साधुः इति यत् (पा ४.४.९८) । पुनरपि विशेष्यते—यं सर्वे अपि च वयम् अनु जीवाम । लोटि सलोपः (पा ३.४.९९) । यः च बहूनां वशी नियन्तृत्वादिशक्तिमान् असत् स्यात् । अस्तेर्लेटि " इतश्च लोपः " (पा ३.४.९७) । " लेटोऽडाटौ " (पा ३.४.९४) इत्यडागमः । इयं च विराड्गायत्री, प्रथमे पादे ब्यक्षराधिक्यात् । पुरउष्णिक् वा, प्रथमस्य पादस्य द्वादशाक्षरत्वात्, द्वाभ्यामूनत्वाच्च विराडुष्णिक् । तत्र ' यं सर्वेऽनुजीवाम ' इति द्वितीयः पादः ॥

दक्षिणस्यां चक्रवर्तिन्यां जुहोति—' इदम् ' इति गायत्र्या ॥ इदं विश्वं विष्णुः व्यापी भगवान् वि चक्रमे विभज्य क्रमते स्म । " वृत्तिसर्गतायनेषु क्रमः " ( पा १.३.३८ ) इति वृत्तावात्मनेपदम् । " वेः पादविहरणे " ( पा १.३.४१ ) इति वा । कतिधा विचक्रम इत्यत आह—त्रेधा त्रिधा पदं पादं नि दधे स्थापयामास । पृथिव्यामन्तरिक्षे दिवि चेत्याधार-

दुर्वाꣳ आ वदेत्याह गृहा वै दुर्याः शान्त्यै " ( तैसं ६.२.९ ) इति । अक्षस्य बन्धनहेतुपाशोपेतत्वात् वरुणत्वम् । वरुणश्च क्रूरत्वात् दुर्वाक् । उत्सर्जन् शब्दं कुर्यात् ॥

**आ न** इति ॥ कल्पः—" अथैने पत्नी पदतृतीयेनाऽऽज्यमिश्रेणोपानक्ति । आ नो वीरो जायतामिति " ( आपश्रौ ११.६.४-५ ) इति ॥ स चैवमाम्नातः—" आ नो वीरो जायतां कर्मण्यो यꣳ सर्वेऽनुजीवाम यो बहूनामसद्वशी " इति ॥ कर्मणि साधुः कुशलः वीरः आलस्यरहितः पुत्रोऽस्माकम् आ जायताम् । यं जीवाम यश्च बहूनां वशी नियमनशक्तिमान् असत् भवेत्, तादृशो जायताम् । अत्र कल्पे पदतृतीयशब्देन सोमक्रयणीपदरजसस्तृतीयांशः पूर्वं संगृहीतो विवक्षितः ॥ अक्षोपाञ्जनं विधत्ते—" पत्न्युपानक्ति पत्नी हि सर्वस्य मित्रं मित्रत्वाय यद्वै पत्नी यज्ञस्य करोति मिथुनं तदथो पत्निया एवैष यज्ञस्यान्वारम्भोऽनवच्छित्त्यै " ( तैसं ६.२.९ ) इति ॥

५. तं.ति–इति ।

इ॒दं विष्णु॒र्वि च॑क्रमे त्रे॒धा नि द॑धे प॒दम् । समू॑ढमस्य (१) पाꣳसु॒र

इ॒दम् । विष्णुः॑ । वीति॑ । च॒क्र॒मे॒ । त्रे॒धा । नीति॑ । द॒धे॒ । प॒दम् ।

समू॑ढ॒मिति॒ सम्-ऊ॒ढ॒म् । अ॒स्य॒ (१) । पा॒ꣳसु॒रे ।

मेदेन पदस्य त्रैविध्यम् । त्रीणि पदानीति यावत् । यथा—" त्रीणि पदा वि चक्रमे " ( तैआ २.४.६ ) इति । " एधाच्च " ( पा ५.३.४६ ) इत्येधाच्प्रत्यय । यस्मादेव तस्मात् अस्य विष्णो पासुरे पासुमति पादे । र मत्वर्थीय ( द्र पा ५ २ १०७ काशिका, पाभा ८ २ १८,)। यद्वा—सिध्मादिलक्षणो ल ( पा ५ २.९७ ), रलयोरेकत्व स्मर्यते ( द्र पाभा ८ २.१८ )। पासवो ' रजासि लोका ' ( नि ४ १९ ) उच्यन्ते। तै रेणुकल्पे तद्वति विष्णो पदकमले समूढ सम्यगूढ तेनैव समवस्थापितम् । किमिद विश्व यद्विचक्रमे। " गतिरनन्तर " ( पा ६ २ ४९ ) इति गते प्रकृतिस्वरत्वम् । अस्येति " इदमोऽन्वादेशेऽशनुदात्त " ( पा २ ४.३२ ) इत्यशादेशोऽनुदात्त । य इत्थमर्थमकरोत् स विष्णुरनेन होमेनेम यज्ञ समापयत्विति भाव । अपरा योजना—इद विष्णुरेव स्वय वि चक्रमे विक्रमते यद्धविर्धान विक्रमते गच्छति। " छन्दसि लुङ्लङ्लिट " ( पा ३ ४ ६ ) इति लिट् । विष्णोरेवेद क्रमण यद्धविर्धानस्येति यावत् । विष्णुर्निरोप्यते—त्रेधा निदधे पद तस्मादस्य हविर्धानस्य पासुरे पासुमति च मार्गे समूढ सम्यगूढ प्रापितमिदमाज्यमस्त्विति । अन्ये पुनराहु—इद विश्व विष्णुर्व्यापी आदित्यात्मा वि चक्रमे विक्रमते विभज्य प्राप्नोति, त्रेधा पृथिव्यामन्तरिक्षे दिवि च पद निदधाति अग्निविद्युत्सूर्यात्मना त्रिषु स्थानेषु पादन्यास करोति । अस्य विष्णो पासुरे त्वन्तरिक्षे यत्पद विद्युद्रूप तदेव समूढ सम्यगूढ कारणानित्यत्वात् सर्वदा न दृश्यते, यथेतरे ज्योतिषी सम्यग्गृह्येते दृष्टया । सोऽयमादित्य इम यज्ञमनेन होमेन समापयत्विति ॥

इदमिति ॥ कल्प —" दक्षिणस्य हविर्धानस्य पश्चादक्षमुपसृप्य दक्षिणस्यां वर्तन्यां स्येनोत्करयावोक्ष्य हिरण्य निधाय संपरिस्तीर्याभिजुहोतीदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे स्वाहेति । । अपर चतुर्गृहीत गृहीत्वोत्तरस्य हविर्धानस्य पश्चादक्षमुपसृप्योत्तरस्या वर्तन्यां स्येनोत्करयावोक्ष्य हिरण्यं निधाय संपरिस्तीर्य अभिजुहोतीरावती धेनुमती हि भूतꣳ सूयवसिनी मनवे यशस्ये । व्यस्कभ्नाद्रोदसी विष्णुरेते दाधार पृथिवीमभितो मयूखै स्वाहेति " ( बौश्रौ ६ २४ ) इति ॥ विष्णु त्रिविक्रमावतार एवा इदं विश्व विभज्य क्रमते स्म । भूमावेकं पदमन्तरिक्षे द्वितीय दिवि तृतीयमित्येव त्रेधा पद नि दधे। पांसवो भूम्यादिलोकरूपा यस्य पदस्य सन्ति तत् पांसुरम् । अस्य विष्णोरस्मिन्

६ मै–रज करणकर्ये । ७ मै–इममर्थं । ८ त ति–' विक्रमते ' नास्ति । ९ त ति, प मै–आदित्यात्मना । *लिखितपुस्तकेषु ' सत् पदम् ' इत्युपलभ्यते १०. मै–समूढम् ।

९. आ पा हा–पश्चादुपसृप्यो । १०. –आ हा जुहोतीरा ।

**इरावती धेनुमती हि भूतꣳ सूयवसिनी मनवे यशस्ये ।**
**व्यस्कभ्नाद्रोदसी विष्णुरेते दाधार पृथिवीमभितो मयूखैः ।**

इरावतीतीरा—वती । धेनुमती इति धेनु—मती । हि । भूतम् ।
सुयवसिनी इति सु—यवसिनी । मनवे । यशस्ये इति ।
वीति । अस्कभ्नात् । रोदसी इति । विष्णुः । एते इति ।
दाधार । पृथिवीम् । अभितः । मयूखैः ॥

उत्तरस्यां वर्तन्यां जुहोति—‘ इरावती ’ इति त्रिष्टुभा ॥ द्यावापृथिव्यात्मना स्तूयते । हे हविर्धानात्मिके द्यावापृथिव्यौ इरावती इरावत्यौ अन्नवत्यौ भूतं भवतं यज्ञसाधनद्वारेण । लोटि “ बहुलं छन्दसि ” ( पा २·४·७३ ) इति शपो लुक् । “ हि च ” ( पा ८·१·३४ ) इति निघातप्रतिषेधः । धेनुमती धेनुमत्यौ च भवतम् । “ ह्रस्वनुड्भ्यां मतुप् ” ( पा ६·१·१७६ ) इति मतुप उदात्तत्वम् । हिशब्दश्चार्थे । इरावती धेनुमती च भवतमिति । “ वा छन्दसि ” ( पा ६·१·१०६ ) इति द्वयोरपि पूर्वसवर्णदीर्घत्वम् । हविर्धानविशेषणत्वे “ नपुंसकाच्च ” ( पा ७·१·१९ ) इति शीभावः । सूयवसिनी शोभनैर्यवसैरभ्यवहार्यैस्तद्वत्यौ, सूयवसिन्यौ च भवतम् । सोः सांहितिको दीर्घः । यशस्ये यशसो निमित्ते च भवतम् । “ गोद्व्यचः° ” ( पा ५·१·३९ ) इति यत्प्रत्ययः । मनवे मन्त्रवते मननवते यजमानाय [११]इत्थमित्थं भवतमिति । कस्मादेवमुच्यत इति चेत् ? श्रूयतां युवयोर्महाभाग्यम्—एते युवां रोदसी रोदःसंज्ञां भजमाने विष्णुः एव [१२]प्रजापत्यात्मा स्वयं व्यस्कभ्नात् विभज्य स्थापितवान् अधः उपरि च । यथा—“ यदप्स्ववापद्यत । सा पृथिव्यभवत् ” ( तैब्रा २·२·९ ) इत्यादि । तदानीं युवां

एवं विधं समूढं सम्यगन्तर्भूतम् । [११-]किंच इरावती अन्नवती धेनुमती धेनुर्बहुक्षीरा गौस्तद्वत्यौ[-११] सूयवसिनी शोभनैर्यवसैरभ्यवहार्यैर्युक्ते [१२-]मनवे मानवप्रजार्थं[-१२] यशस्ये यशोनिमित्ते भवतम् । एते रोदसी द्यावापृथिव्यौ विष्णुः व्यस्कभ्नात् विभज्य स्थापितवान् । तां च पृथिवीं मयूखैः स्वकीयतेजोरूपैर्नानाजीवैः अभितः दाधार पुपोष । स विष्णुरनयोस्तद्धविर्धानमार्गोहुत्या प्रीयताम् ॥ विधत्ते—“ वर्त्मना वा अन्वित्य यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति वैष्णवीभ्यामृग्भ्यां वर्त्मनोर्जुहोति यज्ञो वै विष्णुर्यज्ञादेव रक्षाꣳस्यप हन्ति ” ( तैसं ६·२·९ ) इति । वर्त्मना शकटमार्गेण । अन्वित्यानुप्रविश्य । “ यज्ञो देवेभ्यो निलायत विष्णू रूपं कृत्वा ” ( तैसं ६·२·४ ) इत्युक्तत्वाद्यज्ञस्य विष्णुत्वम् । अत एव वैष्णवमन्त्रोऽत्र न व्यधिकरणः । यज्ञादेव विष्णुरूपयज्ञद्वारेणैव ॥ होमाधारत्वेन हिरण्यप्रक्षेपं विधत्ते—“ यदध्वर्युरनग्नावाहुतिं जुहुयादन्धोऽध्वर्युः स्यात् रक्षाꣳसि यज्ञꣳ हन्युर्हिरण्यमुपास्य जुहोत्यग्निवत्येव जुहोति नान्धोऽध्वर्युर्भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति ” ( तैसं ६·२·९ ) इति ॥

११. मे–इत्थम् ।　१२. तं.पं–प्रजापत्यात्मना ।

११–११. इ.उ.तं.पा.भां.म२–हा–‘ इरावती ...... गौस्तद्वत्यौ ’ नास्ति । १२–१२. इ.उ.तं.पा.भां–‘ मनवे मानवप्रजार्थम् ’ नास्ति ।

प्राची॒ प्रेत॑मध्व॒रं क॒ल्पय॑न्ती ऊ॒र्ध्वं य॒ज्ञं न॑यतं॒ मा जी॑ह्वरत॒मत्र॑

प्राची इति॑ । प्रेति॑ । इ॒त॒म् । अ॒ध्व॒रम् । क॒ल्पय॑न्ती इति॑ । ऊ॒र्ध्वम् ।
य॒ज्ञम् । न॒य॒त॒म् । मा । जी॒ह्व॒र॒त॒म् । अत्र॑ ।

रोदःसंज्ञे चाभूतमिति भाव. । किंच—विस्तीर्णां वा "पृथिवीम् अन्तरिक्षं च । पृथिवीशब्देन पृथुलात्
५ त्रयो लोका उच्यन्ते । यथा—"यो द्वितीयस्यां तृतीयस्यां पृथिव्याम्" (तैस १.२.१२)
इति । इमां च विष्णु "दाधार अविचलितां स्थापयामास । "अभित अधस्तादुपरिष्टाच्च "मयूखै
अंशुभि" । "पर्यभिभ्यां च" (पा ५ ३ ९) इति तसिल् । धारयतेश्छान्दसे लिटि व्यत्यये-
नाम्प्रत्ययो न क्रियते (पा ३ १.३५,) । यद्वा—"बहुलमन्यत्रापि संज्ञाछन्दसो"
(उ १९०) इति प्रत्ययोत्पत्ते प्रागेव णेर्लोप । "तुजादीनाम्" (पा ६.१.७)
१० इत्यभ्यासस्य दीर्घत्वम् । एवं महाभागधेयाभ्यां युवाभ्यां किं नाम कर्तुं न शक्यते ? तस्माद्यथोक्त
भवतमिति । आदित्यपक्षे—व्यस्कम्नात रोदसी विष्णुरादित्य एते युवां विविध स्थापयति । तत
एते एव स्थापिते दाधार धारयति पृथिवीमभितः पृथिव्यामन्तरिक्षस्याधस्तादुपरिष्टाच्च । "अभित -
परित" (द्र. पाभा २ ३ २ वा १) इति द्वितीया । मयूखै. रश्मिभिरधोमुखैः पृथिवीम्, ऊर्ध्वमुखैश्च
दिवं, स्वयं मध्ये अन्तरिक्षे वर्तमान इति । तस्मादनयाऽऽहुत्या युवामन्नादिमत्यौ भवतम् ।
१५ युवां युवयोरन्तरालं च विष्णुरपि दृढीकरोत्विति ॥

हविर्धाने प्रवर्तयन्ति—'प्राची' इति द्विपदया त्रिष्टुभा जगत्या वा ॥ हे हविर्धाने
"प्राची प्रागञ्चितगमनवती । "प्रेत प्रकर्षेणेत गच्छतम् । "अध्वरं बाधकरहितं यज्ञं "कल्पयन्ती
अभिमतसंपादनसमर्थं कुर्वाणे । "शप्श्यनोर्नित्यम्" (पा ७.१.८१) इति नुम् । —किंच
"ऊर्ध्वम् उपरि देवान् प्रति "यज्ञं "नयतं प्रापयतम् । किंच—"मा "जीह्वरत मा कुटिलं कार्ष्टम्,
२० मा अदेवगामिनं कुरुतम् । ह्वृ कौटिल्ये, हेतुमण्ण्यन्ताल्लुङि चङादि (पा ३.१.२६,
३ २ ११०, ३.१ ४८) ॥

प्राचीति ॥ कल्प.—"अथैने सपरिगृह्य सप्रैषमाह । हविर्धानाभ्यां "प्रवर्त्यमानाभ्यामनु-
ब्रूहीति त्रिरुक्ताया प्रवर्तयन्ति । प्राची प्रेतमध्वरं कल्पयन्ती ऊर्ध्वं यज्ञं नयतं मा जीह्वरतमिति"
(बौश्रौ ६ २४, २५) इति ॥ हे शकटे, प्राङ्मुखे गच्छतम् । कीदृशे ? "अध्वरं "कल्पयन्ती देवकर्म-
२५ बाधरहितं कुर्वाणे । किंच "ऊर्ध्वम् उपरिवर्तिदेवान् प्रति "यज्ञं "नयतं "मा कुटिलं भवतमसुरान् मा
प्रापयतम् ॥ "प्राचीशब्दतात्पर्यमाह— "प्राची प्रेतमध्वरं कल्पयन्ती इत्याह सुवर्गमेवैनं लोकं गमयति"
(तैसं ६.२.९) इति ॥

१३ ग ति-शङ्कुभि ।

१३ क ते-प्रवर्तमाना° । २४ मर-दृढ कर्म । २५ आ-आख्शब्द° ।

रमेथां वर्ष्मन् पृथिव्या

दिवो वा विष्णवुत वा पृथिव्या महो वा विष्णवुत वाऽन्तरिक्षा-
द्धस्तौ पृणस्व बहुभिर्वसव्यैरा प्र यच्छ (२) दक्षिणादोत सव्यात् ।

रमेथाम् । वर्ष्मन् । पृथिव्याः ।
दिवः । वा । विष्णो । उत । वा । पृथिव्याः । महः । वा । विष्णो । उत । वा । अन्तरिक्षात् । ५
हस्तौ । पृणस्व । बहुभिरिति बहु-भिः । वसव्यैः ।
आ । प्रेति । यच्छ ( २ ) । दक्षिणात् । एति । उत । सव्यात् ॥

अध्वर्यू हविर्धाने स्थापयतः—'अत्र' इति विराजैकपदया ॥ [v]अत्र एतस्मिन् [v]वर्ष्मन् [v]पृथिव्याः संबन्धिन्युच्छ्रिते देशे [v]रमेथाम् अत्रैव स्यातं रुचिं भजतम् । "सुपां सुलुक्" (पा ७·१·३९) इति वर्ष्मणः सप्तम्याः लुक् । "न ङिसंबुद्ध्योः" (पा ८·२·८) इति १०· नलोपाभावः । "उदात्तयणः°" (६·१·१७४) इति पृथिव्या विभक्तेरुदात्तत्वम् ॥

अध्वर्यू हविर्धानयोर्मेथ्यौ निहतः—'दिवः' इति त्रिष्टुभा ॥ हे [v]विष्णो व्यापकात्मन्, [v]दिवः [v]वा देवलोकाद्वा [v]उत [v]वा अपि वा [v]पृथिव्याः [v]महः [v]वा महतो वा इतो दिवः पृथिव्याश्च महतोऽन्यस्माद्वा कुतश्चिन्महर्लोकादेः । महतेः क्विबन्तात् पञ्चम्येकवचने "सावेकाचः°" (पा ६·१·१६८) इति विभक्तेरुदात्तत्वम् । हे [v]विष्णो, पुनरामन्त्रणमादरार्थम् । अथवा १५·

अत्रेति ॥ कल्पः—"आहवनीयात् त्रीन् प्रतीचः प्रक्रमानुच्छ्रित्याऽत्र रमेथामिति नभ्यस्थे स्थापयित्वा" (आपश्रौ ११·७·३) इति । नभ्यशब्देन फलकत्रयोपेते चक्रे नाभियुक्तं मध्यमफलकम् उच्यते । तस्मिन् यथा शकटं तिष्ठति तथा स्थापयेत् । प्राचीनवंशस्थो यः पुरातन आहवनीयस्तस्यैव ऊर्ध्वं गार्हपत्यत्वम् । आहवनीयस्तूत्तरवेदिस्थ एव । [16]तत्रत्यपुरातनगार्हपत्यस्य शालामुखीयत्वमिति[16] । तथा च सूत्रम्—"प्रवर्ग्यमुद्वास्य पशुवन्धवदग्निं प्रणयति । एष सोमस्याऽऽहवनीयः । यतः प्रणयति स २०· गार्हपत्यः" (आपश्रौ ११·५·९–१०) इति ॥ मन्त्रपाठस्तु—"अत्र रमेथां वर्ष्मन् पृथिव्याः" इति ॥ हे शकटे, देवयजनाख्ये पृथिव्याः शरीरे उत्तरवेद्याः पश्चिमभागे प्रक्रमत्रयमवशेष्य यत् स्थानमस्ति [v]अत्र स्थाने क्रीडतम् । देवयजनरूपाया वेदेः पृथिवीशरीरत्वं "यदिमामविन्दन्त तद्वेदेर्वेदित्वम्" (तैसं ६·२·४) इत्येतस्मिन् [17]ब्राह्मणे प्रसिद्धम् ॥ आह—"अत्र रमेथां वर्ष्मन् पृथिव्या इत्याह वर्ष्म ह्येतत् पृथिव्या यद्देवयजनम्" (तैसं ६·२·९) इति ॥ २५·

दिव इति ॥ कल्पः—"दिवो वा विष्णवित्यध्वर्युर्दक्षिणस्य हविर्धानस्य दक्षिणं कर्णातर्दमनु मेथीं नि हन्ति । तस्यामीषां निनह्यति । एवमुत्तरस्य प्रतिप्रस्थाता विष्णोर्नुकमित्युत्तरस्योत्तरं कर्णातर्दमनु" (आपश्रौ ११·७·३–४) इति । युगस्य दक्षिणोत्तरभागौ शकटस्य कर्णस्थानीयौ । तयोरातर्दं ईषास्यां सह दृढबन्धनम् । दक्षिणबन्धनसमीपे मेथी निखातव्या ॥ मन्त्रौ त्वेवं पठितौ—"दिवो वा विष्णवुत वा पृथिव्या महो वा विष्णवुत वाऽन्तरिक्षाद्धस्तौ पृणस्व बहुभिर्वसव्यैरा प्रयच्छ दक्षिणादोत सव्यात् ॥ ३०·

१६–१६. इ.ड.तं.पा.भां.मर–'तत्रत्य...शालामुखीयत्वम्' नास्ति । १७. इ.ड.पा.भां.मर– ब्राह्मण° ।

विष्णोर्नुकं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायो

विष्णोः । नुकम् । वीर्याणि । प्रेति । वोचम् । यः । पार्थिवानि । विमम इति वि-ममे ।
रजांसि । यः । अस्कभायत् । उत्तरमित्युत्-तरम् । सधस्थमिति सध-स्थम् ।
५ विचक्रमाण इति वि-चक्रमाणः । त्रेधा । उरुगाय इत्युरु-गाय ।

अन्तरिक्षात्, आनीतैरित्यवगम्यते, बहुभिः वसव्यैः बहूनां धनानां समूहैः । "वसोः समूहे च" ( पा ४ ४ १४० ) इति यत् । हस्तौ मदीयौ पृणस्व पूरय । महाधनं मां कुर्वित्यर्थः । हस्तपूरणत्वेन महाधनत्वं लक्ष्यते । लोके हि महाधनः पूर्णहस्त इत्युच्यते, धनहीनो रिक्तहस्त इति । तस्माद् बहुभिः धनराशिभिः वर्धमानं मां कुर्विति प्रतिपादितं भवति । पुनरपि देवस्यौदार्यातिशयप्रकटनार्थमाह—आ दक्षिणात् हस्तात् प्रसारितात् उत अपि च आ च सव्यात् हस्तात् धनराशिं प्र यच्छ, प्रसारितयोर्दक्षिणसव्ययोर्हस्तयोः अन्तरालं यावता धनपुञ्जेन पूर्यते तावद्देहीत्यर्थः । अथवा बहुभिर्वसव्यैः द्युलोकादिभ्य आनीतैस्त्वदीयौ हस्तौ पूरय, प्रभूतं धनराशिं हस्ताभ्यां गृहाणेत्यर्थः । ततस्तं प्रभूतं धनराशिं दक्षिणात् हस्तादाप्रयच्छ सव्याच्चाप्रयच्छ । तस्मादाभिमुख्येन धनराशिं निःसारय । हस्त(वि)शेषो न निरूपणीयः । आ-कारेणाभिमुख्यं, १५ योऽस्याध्वनो ग्रामादागच्छतीति यथा । अत एव द्वाभ्यामपि पञ्चम्यन्ताभ्यामावृत्तं सम्बध्यते । प्रशब्दस्तु विपर्यासान्नानर्तते । "दक्षिणस्यादिगाख्यायाम्" ( इ. फि ८,९ ) इति दक्षिणशब्द आद्युदात्तः ।

अध्वर्युः मेथीं बध्नीत —'विष्णोर्नुकम्' इति त्रिष्टुभा ॥ नुकम् इति क्षिप्रनाम । विष्णोः वीर्याणि वीरकर्माणि प्र वोचं प्रकर्षेण ब्रवीमि । छान्दसो लुङ् । "बहुलं छन्दस्यमाङ्योगेऽपि" ( पा ६ ४ ७५ ) इत्यडभावः । विष्णुर्विशेष्यते—यः पार्थिवानि पृथिव्यन्तरिक्षद्युलोकभवानि, २० पृथिवीशब्देन त्रयो लोका उच्यन्ते । यथा—"यो द्वितीयस्यां तृतीयस्यां पृथिव्याम्" ( तैस

विष्णोर्नुकं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगाय" इति ॥ हे विष्णो, द्युलोकात् वा भूलोकात् वा महर्लोकात् वा अन्तरिक्षलोकात् वा समानीतैः बहुभिः धनसमूहैः स्वहस्तौ पूरय । हे विष्णो, पूर्णधनात् दक्षिणात् सव्यात् च हस्तात् आ प्र यच्छ बहुकृत्वः आवृत्य प्रकृष्टं मणिमुक्तादिकं देहि ॥ नुकम् इत्यव्ययं कर्मवाचकम् । विष्णोः २५ वीर्याणि कर्माणि प्र वोचं ब्रवीमि । कानि तानि[18] कर्माणि ? यः विष्णुः पार्थिवानि रजांसि परमाणून् विममे निर्मितवान् [19]परिगणितवांश्च । पुनरपि यः विष्णुः उत्तरम् उपरिवर्ति सधस्थं देवानां सहवासस्थानं द्युलोकम् अस्कभायत्, यथाऽधो न पतति तथा स्तम्भितवान् । पुनरपि यः त्रेधा विचक्रमाणः त्रिषु लोकेषु पदत्रयं निदधौ, उरुभिर्महद्भिरभिगीयते

[ शुद्धोऽस्ताऽयं पाठः । लिखितपुस्तकेषु मुद्रितपुस्तके च 'अभिकारेण' इत्युपलभ्यते । ] ।

३० १८ आ— 'तानि' नास्ति । १९ इ उ पा भा—परिगुणितवांश्च ।

विष्णो॑ र॒राट॑मसि
विष्णोः॑ । र॒राट॑म् । अ॒सि॒ ।

१-२-१२ ) इति । " पृथिव्या ञाञौ " ( पा ४-१-८५ वा २ ) इत्यञ्प्रत्ययः । यः पार्थिवानि रजांसि ज्योतींषि अग्निविद्युत्सूर्यात्मकानि विममे विनिर्मितवान् । यद्वा—पार्थिवानि पृथुषु भवानि रजांसि वसूनि विममे । किंच—यः उत्तरं सधस्थं सहस्थानं सर्वेषामन्तरिक्षम् । " सुपि स्थः " ( पा ३-२-४ ) इति कः । " सध मादस्थयोः " ( पा ६-३-९६ ) इति सधादेशः । तत् अस्कभायत् अस्तम्भयत् अधारयत् अस्कम्नादिति वक्तव्ये । " स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च " ( पा ३-१-८२ ) इति श्नाप्रत्ययः ॥ " छन्दसि शायजपि " ( पा ३-१-८४ ) इति व्यत्ययेन हेरभावेऽपि श्नः शायजादेशः । किं कुर्वन्नित्याह—" विचक्रमाणः त्रेधा त्रिषु लोकेषु विभज्य क्रममाणः पदत्रयं कुर्वन् । लिटः कानजादेशः ( पा ३-२-१०६ ) । उरुगायः उरुभिर्महात्मभिर्गीयत इति उरुगायः । कै गै शब्दे । घञि " आतो युक्चिण्कृतोः " ( पा ७-३-३३ ) इति युक् । थाथादिना उत्तरपदान्तोदात्तत्वम् ( पा ६-२-१४४ ) । यद्वा—उरुभिर्गन्तव्यः । गाङ् गतौ । य इत्थमित्थमकरोत् तस्य विष्णोर्वीर्याणि प्रवोचम् । स मे धीदार्ढ्यं करोत्विति ॥

रराटीमासञ्जयति—' विष्णो रराटमसि ' इति ॥ हे रराटि, विष्णोः यज्ञात्मनो ललाटमिव प्रधानम् असि । कपिलकादित्वाल्लत्वं विकल्प्यते ( द्र. पाभा ८-२-१८ ) ॥

च ॥ मेथ्या निखननं विधत्ते—" शिरो वा एतद्यज्ञस्य यद्धविर्धानं दिवो वा विष्णवुत वा पृथिव्या इत्याशीःपदयर्चा दक्षिणस्य हविर्धानस्य मेथीं नि हन्ति शीर्षत एव यज्ञस्य यजमान आशिषोऽवरुन्धे " ( तैसं ६-२-९ ) इति । यथा शिरसि चक्षुरादीनि गोलकानि निधीयन्ते तथा हविर्द्रव्याणि शकटे निधीयन्त इति हविर्धानस्य यज्ञशिरस्त्वम् । ' हस्तौ पृणस्व ', ' आ प्रयच्छ ' इत्याशीर्यस्यां ऋचः पदेषु प्रतीयते सेयमृगाशीःपदा । यद्यप्येषा मेथीं न प्रकाशयति तथाऽपि वाचनिकोऽत्र विनियोगः । अनेन मन्त्रेण यज्ञशिरसो हविर्धानाद्यजमान आशिषः प्राप्नोति ॥ आच्छादकं विधत्ते—" दण्डो वा औपरस्तृतीयस्य हविर्धानस्य वषट्कारेणाक्षमच्छिनद्यत् तृतीयं छदिर्हविर्धानयोरुदाह्रियते तृतीयस्य हविर्धानस्यावरुद्ध्यै " ( तैसं ६-२-९ ) इति । दण्डो नाम कश्चिदसुर उपरनामकस्यासुरस्य पुत्रो वषट्कारदेवेन सह मैत्रीं कृत्वा तद्द्वारा प्रविश्य तृतीयस्य शकटस्याक्षमच्छिनत् । अतस्तृतीयस्य शकटस्य प्रतिनिधित्वेनैकैकस्य शकटस्योर्ध्वं तृणादिनिर्मितं छदिः स्थापयेत् । तत्र दक्षिणोत्तरपार्श्वयोः परिश्रयणार्थे द्वे छदिषी अपेक्ष्य तृतीयम्[२०] । अथ शकटे अन्तर्भाव्य हविर्धानाख्यं मण्डपं निर्मातव्यम् । तत्र दक्षिणशकटात् पुरतो प्रहासादनायावकाशं शिष्ट्वा [२१]दक्षिणोत्तररूपेण षट्संख्याकाः स्थूणा निखातव्याः । एवं पश्चाद्भागे षट् स्थूणा निखातव्याः[२२] । तयोः स्थूणापङ्क्त्योरुदञ्चौ वंशावादधाति[२३] ॥

विष्णोरिति ॥ अत्र कल्पः—" तासूदञ्चौ वंशौ प्रोहत्यध्यस्यति पुरस्ताद्रराटीं विष्णो रराटमसीति " ( बौश्रौ ६-२५ ) इति ॥ हविर्धानमण्डपस्य विष्णुदेवताकत्वाद्विष्णुत्वम् । पूर्वद्वारवर्तिस्तम्भयोर्मध्ये काचिद्दर्भमाला अध्यस्यते, तां मालां[२४] तद्बन्धनाधारं तिर्यग्वंशं वा संबोध्य पुरुषललाटत्वेनोपचरितुं ' विष्णो रराटमसि ' इत्युच्यते ॥

१४. ति—इत्थम् ।

२०. तं—' तृतीयम् ' नास्ति; इ.ऊ.पा.भां—तृतीये । २१. मर—दक्षिणोत्तरपङ्क्तिरूपेण । २२. इ. तं.पा.भां.म—' निखातव्याः ' नास्ति । २३. तं.मर—वंशावत्यादधाति । २४. आं.क—दर्भमालाम् ।

विष्णोः पृष्ठमसि विष्णोः ᴹश्नप्त्रे स्थो विष्णोः स्यूरसि
विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा ॥ १३ ॥

[ अस्य पञ्चैकाशच्चत्वारिंशच्च ]

विष्णोः । पृष्ठम् । असि । विष्णोः । श्नप्त्रे इति । स्थः । विष्णोः । स्यूः । असि ।
५ विष्णोः । ध्रुवम् । असि । वैष्णवम् । असि । विष्णवे । त्वा ॥ १३ ॥

[ मैस १·२ ९, काम २·१०, कपिसं २·४, वासं ५·१४–२१ ]

मध्यम छदिरभिनिदधाति—' विष्णो ' इति ॥ ᵛविष्णो ᵛपृष्ठ पृष्ठसदृशम् ᵛअसि ॥,

पार्श्वयोश्छदिषी निदधाति—' विष्णो श्नप्त्रे स्थ ' इति ॥ ᵛश्नप्त्रे शोधके ᵛस्थ. । सकारस्य शकारापत्ति । स्नपतिश्छान्दस. शुद्धिकर्मा, औणादिक ष्ट्रन्प्रत्यय (उ ६०८)। १० स्नातेर्णौ णिचि पुगादि (पा ७ ३ ३६) ॥

दक्षिणबाहौ[ᵃ] कुशमुपसगृह्य स्पन्त्वा प्रवर्तयति—' विष्णो स्यू ' इति ॥ ᵛविष्णो ᵛस्यू सेवनी त्वम् ᵛअसि यज्ञस्य । षिवु तन्तुसन्ताने । " क्विप् च " (पा ३ २·७६) इति क्विप् । " च्छ्वो शूडनुनासिके च " (पा ६ ४ १९) इत्यूठ् ॥

द्वारग्रन्थि करोति—' विष्णोर्ध्रुवमसि ' इति ॥ विष्णुना ᵛध्रुवम् अचलित करणीयम् ᵛअसि ॥

१५ हविर्धानमण्डपमभिमृशति—' वैष्णवम् ' इति ॥ ᵛवैष्णव विष्णुदेवत्य त्वम् ᵛअसि । अतो ᵛविष्णव त्वामभिमृशामि । " वैष्णव हि देवतया हविर्धानम् " (तैस ६ २ ९) इति ब्राह्मणम् ॥

॥ इति द्वितीये प्रपाठके त्रयोदशोऽनुवाक ॥

विष्णोरिति ॥ कल्प —" प्राचो वशानत्याधाय विष्णो पृष्ठमसीति तेषु मध्यमं छदिरध्यूहत्य-रत्निविस्तार* नवायामम् " (आपश्रौ ११·८·१) इति ॥ यज्ञपुरुषस्य हविर्धानाख्य मण्डपं शिर २० इरसाम्य मन्त्रेणोच्यत इत्याह—" शिरो वा एतद्यज्ञस्य यद्धविर्धानं विष्णो रराटमसि विष्णो पृष्ठमसीत्याह तस्मादेतावद्धा शिरो विष्यूतम् " (तैस ६ २·९) इति । एका रराटी, एकं छदिः, द्वौ रराट्यन्ताविति यावन्तो मण्डपस्य प्रकारा एतावद्धा एतावत्प्रकार शिरो विश्वकर्मणा विशेषेण स्यूतम्, शिरस्याच्छादिका त्वगेव "छदि·स्थानीया ॥

विष्णोरिति ॥ कल्प —"पार्श्वयोश्छदिषी निदधाति विष्णो श्नप्त्रे स्थ इति " (द्र. बौश्रौ २५ ६·२५) इति ॥

विष्णोरिति ॥ कल्प —विष्णो स्यूरसीत्यध्वर्युर्दक्षिण बाहु[ᵃ] स्यूत्वा विष्णोर्ध्रुवमसीति प्रगात ग्रन्थि करोति वैष्णवमसि विष्णवे त्वेति संमितमभिमृशति " (आपश्रौ ११·८ ५,११) इति ॥ सीव्यते अनया रज्ज्वेति ᵛस्यू । हे बन्धनहेतो, त्व विष्णुदेवताकस्य रज्जु. ᵛअसि । हे ग्रन्थिरूप, विष्णुसबन्धि इदम् ᵛअसि । हे मण्डप, त्व विष्णुदेवताकम् ᵛअसि अत विष्णुप्रीतये त्वा स्पृशामि ॥ अत्र ' विष्णो ' इति

३० ᴹ[ लिखितपुस्तकेषु मुद्रितपुस्तकेषु च ' श्नप्त्रे ' इत्यपि पाठ उपलभ्यते, तथापि भट्टभास्कर-भाष्यमनुसृत्य, " शान् तैत्तिरीयके नस्य णो भवेत् काठके न चेत् " इति व्यासशिक्षा (१६९) चास्य स्वीकृतोऽत्र पाठ ।] ।

२५. ति–दक्षिणे ।

*[ आपश्रौसूत्रे ' स्यरत्निविस्तारम् ' ।] । २५. आ.क हा–छदि· स्थापनीया । ᵃ[ आपश्रौसूत्रे ३५ ' दक्षिणं द्वारबाहुम् ' ।] ।

षष्ठ्या देवतास्वलक्षणः संबन्धो विवक्षित इत्याह—"विष्णोः स्यूरसि विष्णोर्ध्रुवमसीत्याह वैष्णवꣳ हि देवतया हविर्धानम्" ( तैसं ६-२-९ ) इति। [26]प्रज्ञातग्रन्थेर्विस्रंसनं विधत्ते—"यं प्रथमं ग्रन्थिं ग्रथ्नीयाद्यत्तं न विस्रꣳसयेदमेहेनाध्वर्युः प्र मीयेत तस्मात् स विस्रस्यः" ( तैसं ६-२-९ ) इति। अमेहेन मूत्रनिरोधेन॥

अत्र विनियोगसंग्रहः—

"युञ्ज हुत्वा युवागक्षे शब्दश्चेन्मन्त्रयेत सम्।
आ नोऽक्षमभ्यज्याज्जुहुयात् पयोरिदमिराद्दयात् ॥ १ ॥
प्राची प्रवर्त्य शकटे अत्रेति स्थापयेदिमे।
दिवो विष्णोर्द्दयात्मेध्यावनसो विनिहन्त्युभे ॥ २ ॥
विष्णोर्मण्डपनिर्माणं पञ्चमिर्द्वारि संशकः।
मध्यच्छदिर्ललाट्यन्तौ रज्जुस्यूतिश्च बन्धने[27] ॥
वैष्णं स्यूशेलिमितं [28]तन्मन्त्राः पञ्चदशोदिताः ॥ ३ ॥" इति ॥

अथ मीमांसा ॥ दशमाध्यायस्याष्टमपादे चिन्तितम्—

"[29]विकल्प्यते [30]बाध्यते वाऽऽहवनीयः पदादिभिः।
[31]सामान्यस्य विशेषेण प्रत्यक्षोक्तित्वसाम्यतः ॥
लिङ्गचोदकवद्बाधो नास्ति तेन विकल्प्यते[32]।
विशेषार्थे लक्षणा स्यादतो मुख्येन बाध्यते ॥" (जैन्या १०-८-१५—१६) इति॥

अनारभ्य श्रूयते—"यदाहवनीये जुह्वति। तेन सोऽस्याभीष्टः प्रीतः" (तैब्रा १-१-१०) इति। ज्योतिष्टोमे श्रूयते—"पदे जुहोति" ( तैसं ६-१-८, मैसं ३-७-६ ), "वर्त्मनि जुहोति" ( द्र. तैसं ६-२-९, मैसं ३-८-७ ) इति। राजसूये श्रूयते—"वल्मीकवपामुत्सृज्य जुहोति" ( द्र. मैसं ४-३-१ ) इति। तथाऽन्यत्र श्रूयते—"गार्हपत्ये पत्नीसंयाजान्जुहोति" ( द्र. शांब्रा ३-९ ) इति। तत्रानारभ्य-वादेन होमसामान्यमनूद्याऽऽहवनीयो विहितः। प्रकरणनियमितैः पदादिवाक्यैस्तत्तद्वस्तुबन्धविशिष्टा होमा विहिताः। गार्हपत्यवाक्येन होमविशेषमनूद्य गार्हपत्यो विहितः। तत्र पदादिहोमेषु सामान्यशास्त्रेण[34] प्राप्त आहवनीयो विशेषशास्त्रप्राप्तैः पदादिभिः सह विकल्प्यते। कुतः? प्रत्यक्षवचनोक्तत्वेन समानबलत्वात्। ननु "ऐन्द्रया गार्हपत्यमुपतिष्ठते" (मैसं ३-२-४) इत्यत्र यथा श्रुत्या लिङ्गं बाध्यते, यथा वा चोदकाति-दिष्टानां कुशानामुपदिष्टैः शरैर्बाधस्तथा सामान्यस्य विशेषेण बाधोऽस्त्विति चेत्। न। वैषम्यात्। लिङ्गं विलम्बितत्वात् दुर्बलम्। चोदकश्चानुमेयतया दुर्बलः। न त्वेवं सामान्यशास्त्रं विलम्ब्यते, नाप्यनुमीयते। [35]अतो दौर्बल्याभावाद्विकल्प इति प्राप्ते ब्रूमः—होमसामान्यानुवादकं यच्छास्त्रं तत्सामान्ये मुख्यत्वाद्धोम-विशेषानुवादे लाक्षणिकतया दुर्बलम्, विशेषशास्त्रं तु मुख्यवृत्त्या विधायकत्वात् प्रबलम्। न च पदादि-शास्त्रमपि होमसामान्यमेवानूद्य पदादिविधायकं सत् समानबलं स्यादिति शङ्कनीयम्। प्रकरणनियमित-त्वेन विशिष्टविधायकस्य सामान्यानुवादायोगात्। तस्मात् प्रबलेन विशेषेण सामान्यं बाध्यते ॥

२६. तं–प्रतिज्ञात°। २७. मर–बन्धनम्। २८. तं.हा–ते मन्त्राः। २९. तं.मर–विकल्पिते। ३०. हा–बोध्यते। ३१. मर–समानस्य। ३२. तं.मर–विकल्पिते। ३३. ड.ब.पा.मां–मुख्यं न। ३४. तं–°शास्त्र°। ३५. आ.हा–ततः।

तृतीयाध्यायस्य सप्तमपादे चिन्तितम्—

" हविर्धाने स्थितो ब्रूयात् सामिधेनीरिहाङ्गता ।
हविर्धानस्य तास्वाहो तद्देशोऽनेन लक्ष्यते ॥
वाक्यैक्यादङ्गता मैव प्रकृत्या पश्चिमोऽग्नितः ।
देशः प्राप्तो लाघवेन लक्ष्यः शकटसंनिधिः ॥ "

५

( जैन्या ३.७.१३–१४ ) इति ॥

ज्योतिष्टोमे श्रूयते—" उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुः " इति । हविर्धानमण्डपगतयोर्दक्षिणोत्तरभागावस्थितयोर्हविर्धाननामकयोः शकटयोर्मध्ये दक्षिणं शकटमत्र यत्तच्छब्दाभ्यामभिधीयते । तस्य समीपे सोमस्याभिषवः । उतेत्ययं शब्दोऽप्यर्थे वर्तते । अथ यस्मिन् हविर्धाने सोममभिषुण्वन्ति तस्मिन् सामिधेनीरनुब्रूयुरित्यर्थः । इह दक्षिणस्य हविर्धानस्य सामिधेनीष्वङ्गत्वं

१०

प्रतीयते । न चाऽत्र " अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि " ( तैसं ६.२.४, तै सं ३.८.१ ) इत्युदाहरण इव वाक्यभेदे दोषः शङ्कितुं शक्यः । एकवाक्यतायाः स्पष्टं प्रतिभासादिति प्राप्ते ब्रूमः । सामिधेनीनामिष्ट्यङ्गतया दर्शपूर्णमासावत्र प्रकृतिः । प्रकृतौ चाऽऽहवनीयाग्नेः पश्चिमो देशः सामिधेनीनां स्थानम् । इहोत्तरवेदेराहवनीयत्वात् । तदपेक्षया हविर्धानस्य "पश्चिमदेशेऽवस्थानात् स देशश्चोदकेन प्राप्त इति न देशस्य सामिधेन्यङ्गत्वं विधातव्यम्, किंतु दक्षिणोत्तरहविर्धानसमीपदेशयोरनियमप्राप्तौ[३७] दक्षिणस्य हविर्धानस्य समीपदेशो नियन्तुं हविर्धानेन संनिधिर्लक्ष्यते । तथा सति नियममात्रविधानाल्लाघवं भवति । स्वपक्षे त्वभिषवोपलक्षितस्य दक्षिणस्य हविर्धानस्यात्यन्तमप्राप्तं सामिधेन्यङ्गत्वं विधीयत इति गौरवम् । तस्माद्देशलक्षणा ॥

१५

द्वादशाध्यायस्य प्रथमपादे चिन्तितम्—

२०

" हविर्धानोर्ध्वकाले किमौषधार्थमनोन्तरम् ।
नास्त्यस्ति वा न [३८]शक्तत्वाद्देशभेदादितोऽन्तिमः ॥ "

( जैन्या १२.१.११ ) इति ॥

ज्योतिष्टोमे हविर्धाननामकयोः शकटयोः प्रवर्तनादूर्ध्वमौषधद्रव्यकाणां पुरोडाशादीनां निर्वापाय तयोरेव शक्तत्वान्न शकटान्तरमन्वेष्यमिति[३९] चेत्, न । देशभेदात् । महावेद्यां मन्त्रपूर्वकं प्रवर्त्य हविर्धानमण्डपे हविर्धानाख्ये शकटे स्थापिते । निर्वापस्तु मुख्यगार्हपत्यात् पश्चिमदेशे । किंचास्त्यत्र तृतीयं शकटम् । " अनांसि प्र वर्तयन्ति " ( तैसं ६.२.२ ) इति बहुवचनोक्तेः । तस्माच्छकटान्तरे निर्वापः ॥

२५

अथ छन्दः ॥ ' युञ्जते मनः ' इति जगती । ' आ नो वीर ' इति विराड्गायत्री । ' इदं विष्णुः ' इति गायत्री । ' इरावती ' इति त्रिष्टुप् । ' प्राची प्रेतम् ' इति द्विपदा त्रिष्टुप् । ' अत्र रमेथाम् ' इत्येकपदा विराट् । ' दिवो वा विष्णो ', ' विष्णोर्नुकम् ' इति त्रिष्टुभौ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

३०

---

३६ आ.हा—पश्चिमदेशावस्थानात् । ३७. तं म२—रनियमेन प्राप्तौ । ३८ इ उ क त था भा म२. हा—शक्यत्वात् । ३९. तं म२—मन्वेष्टव्यमिति ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाꣳ इभेन ।
तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥

कृणुष्व । पाजः । प्रसितिमिति प्र—सितिम् । न । पृथ्वीम् ।
याहि । राजा । इव । अमवानित्यम—वान् । इभेन ॥
तृष्वीम् । अन्विति । प्रसितिमिति प्र—सितिम् । द्रूणानः ।
अस्ता । असि । विध्य । रक्षसः । तपिष्ठैः ॥

" अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यꣳ रक्षाꣳसि सचेरन् " ( तैसं २.२.२ ) इत्यस्या इष्टेः पञ्चदश सामिधेन्यः । ततः परे याज्यानुवाक्ये । उपहोमार्था ततः परा, याज्याविकल्पो वा । सर्वा अग्निदेवत्याः, ' तपूंष्यग्ने ' ( तैसं १.२.१४ ) इत्यादिदर्शनात् ।

वैश्वदेवं काण्डम् । त्रैष्टुभः सर्वोऽनुवाकः ॥ १०

तत्र प्रथमा—' कृणुष्व पाजः ' इति ॥ हे अग्ने, [v]कृणुष्व कुरुष्व । कृवि हिंसाकरणयोः । व्यत्ययेनात्मनेपदम् ( पा ३.१.८५ ) । " धिन्विकृण्व्योर च " ( पा ३.१.८० )

त्रयोदशेऽनुवाके हविर्धानमण्डपनिर्माणमुक्तम् । यद्यपि नैतावता किंचित् [1]प्रमेयं परिसमाप्तं तथाप्यध्यापकसंप्रदायपरंपरया प्रपाठक उत्तरानुवाके समाप्यत इत्यन्तिमानुवाकत्वाच्चतुर्दशे [2]"काम्याः सामिधेन्यः पुरोनुवाक्या याज्याश्चोच्यन्ते"[2] । तत्रेष्टिकाण्डे वास्पत्येष्टेरूर्ध्वं राक्षोघ्नेष्टिरेवमाम्नायते— १५
" अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यꣳ रक्षाꣳसि सचेरन्नग्निमेव रक्षोहणꣳ स्वेन भागधेयेनोप धावति स एवास्माद्रक्षाꣳस्यप हन्ति " ( तैसं २.२.२ ) इति । सचेरन् समवेयुर्बाधेरन्नित्यर्थः ॥ मध्यरात्रिकालं विधत्ते—" निशितायां निर्वपेन्निशितायाꣳ हि रक्षाꣳसि प्रेरते संप्रेर्णान्येवैनानि हन्ति " ( तैसं २.२.२ ) इति । प्रेरते प्रकर्षेण चरन्ति । अतस्तस्यां वेलायां निर्वापेण प्रचारवन्त्येवैनानि रक्षांसि हन्ति ॥ यागभूमेः परितो वेष्टनं विधत्ते—" परिश्रिते याजयेद्रक्षसामनन्ववचाराय " ( तैसं २.२.२ ) इति । अनुप्रवेशाभावार्थेत्यर्थः । ' रक्षोहणं वाजिनम् ' ( तैसं १.२.१४ ), ' वि ज्योतिषा बृहता ' ( तैसं १.२.१४ ) इत्येतौ मन्त्रौ विधत्ते—" रक्षोघ्नी याज्यानुवाक्ये भवतो रक्षसाꣳ स्तृत्यै " ( तैसं २.२.२ ) इति । हिंसार्थमित्यर्थः ॥ २०

कृणुष्वेति ॥ अस्यामिष्टौ ' कृणुष्व पाजः ' इत्यनुवाकः कृत्स्नो विनियुक्तः । तस्मिन्नृचोऽष्टादश । तासु पञ्चदश सामिधेन्य एका पुरोनुवाक्या, द्वे याज्ये विकल्पिते ॥ तत्रेयं प्रथमा—" कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाꣳ इभेन । तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः " इति । २५
[v]कृणुष्व कुरुष्व, [v]पाजः बलम्, [v]प्रसितिं [v]न मृगबन्धनहेतुभूतपाश्यामिव [v]पृथ्वीं प्रसारिताम्, [v]अमवान् अमात्ययुक्तः [v]इभेन हस्तिना [v]तृष्वीं [3]शीघ्रगामिनीं [v]प्रसितिं प्रकृष्टसेनां [v]द्रूणानः हिंसन्, [v]अस्ता क्षेप्ता धावयिता, [v]रक्षसः राक्षसान्, [v]तपिष्ठैः अतिसंतापकैर्बाणैः । हे अग्ने, मृगबन्धनाय प्रसारितां पाश्यामिव रक्षोनिरोधनाय प्रौढं बलं कुरु । अमात्ययुक्तो गजेन सहितः [v]राजा [v]इव रक्षसामुपरि याहि । क्षिप्रगामिनीं परकीयसेनामनु पृष्ठतो गत्वा मारयन्नवशिष्टायाः धावयिता भव । पलायमानानपि राक्षसान् बाणैस्तीक्ष्णैः [v]विध्य ॥ ३०

१. तं—प्रमेयजातम् । २—२. इ.ड.पा—काम्या याज्या उच्यन्ते; मां—काम्ययाज्या उच्यन्ते ।
३. मर—क्षिप्रगामिनीम् ।

इत्युप्रत्यय । अकारोऽन्तादेश । करोतेर्विकरणव्यत्ययेन ( पा ३ १ ८५ ) वा स्नु । सतिशिष्टो विकरणस्वरो लसार्वधातुकस्वरेण ( द्र पामा ६.१ १५८ वा ११, पा ६ १ १८६ ) बाध्यते । *पाज बलम् । 'पातेर्जुट् च*' ( द्र. उ ६५२ ) इत्यसुन् । बलेन हि पाल्यते जन *प्रसितिं *न प्रसितिमिव, उपरिष्टादुपचारस्तात्रकार उपमार्थीय ( निरुक्त
५ १ ४ )। प्रसिति प्रसयनात् ( निरुक्त ६ १२ )। प्रकर्षेण सीयते बध्यत इति प्रसिति । बहुसूत्रनिर्मिता मृगग्राहिणी पाश्या नाम, मत्स्यग्रहण जाल नाम, पक्षिग्रहण च निसरो नाम प्रसितिरुच्यते । "तादौ च निति कृत्यतौ" ( पा ६ २.५० ) इति गते प्रकृतिस्वरत्वम् । *पृथ्वीं विस्तीर्णाम् । यथा लुब्धको मृगग्रहणार्थं पाश्या करोति वनगहनेषु स्थापयति, यथा वा मत्स्यग्रहणार्थं जाल करोति जले प्रसारयति, यथा च पक्षिग्राही तद्ग्रहणार्थं निसर
१० करोति नदीपुलिनादौ निसारयति, तथा त्वमपि महद्बल रक्षासि हन्तु कृणुष्व, अग्रतो निस्तारयेत्यर्थ.। अथ तथा कुर्वन् *याहि *राजा *इव । केचिदाहु —आङ्पूर्वो यातिर्द्रष्टव्य । यागसाधनार्थमागमनस्याभिप्रेतत्वात्, यागोत्तरकाल हि रक्षोहननार्थं गन्तव्यमिति । अत्र ब्रूम —याहीत्येव समीचीनम् । ननु यागोत्तरकाल गन्तव्य तेन रक्षोहननार्थम् । मैव वोच । न हि देवो विभ्वात्मा कुतश्चिदायाति, न क्वचिद्याति । स्तुति खल्विय क्रियते स्वाभिलषितसपादनानुरूपा 'याहि,
१५ आयाहि, उत्तिष्ठ, प्रत्यातनुष्व, ऊर्ध्वो भव' इत्यादिस्वरूपा । एतैश्च स्तुतिपदैस्तुष्टा देवता पुरुषमभिलषितेन फलेन योजयति । तस्मात् रक्षोहननार्थं त्वरित यातव्यमायातव्य वा, यागो निर्वर्तित एव मन्तव्य इत्येवरूपा स्तुतिर्भवत्येवेति किमश्रुतपदाध्याहारेणेति । किंच—यागमागच्छतो देवस्य किं बलादिपरिग्रहणेन । हन्तव्यसकाश गच्छतो हि बलादिना कार्यम् । तस्माद्यथोक्त बलमादाय हन्तव्यसकाश गच्छ, राजेव, राजा यथा महतीं सेना कर्षन् शत्रुदेश गच्छति । राजा
२० विशेष्यते—*अमवान् अमात्यवान् ( द्र निरुक्त ६.१२ )। अमा वसन्ति इत्यमा । अव्ययत्वाच्छान्दस । "तद्धिताः" ( पा ४ १ ७६ ) इति बहुवचननिर्देशाद्वा । यद्वा—दारुणा मनआदिभञ्जनान्यायुधानि अमशब्देनोच्यन्ते । अमवानिति वृद्ध्यभावश्छान्दस । "*न कम्यमिचमाम्" इति वचनात् । पचाद्यचि ( पा ३ १ १३४ ) वा वृषादिर्द्रष्टव्य ( पा ६.१ २०३ )। अमनशब्दस्यैव वाऽन्त्याक्षरलोप । यदाहु —"द्वौ चापरौ वर्णविकारनाशौ" ( द्र काशिका पा ६ ३.
२५ १०९ ) इति । *इभेन । अत्र नैरुक्ता बहुधा वदन्ति—'इरयाभेनेतोभयेन' भयनिवृत्त्यर्थं प्राह

---

१ *[ मुद्रीहृतोऽय पाठ । 'पातेर्बले जुट् च' ( उ ६५२ ) इति औणादिक सूत्रम् । लिखितपुस्तकेषु मैसूरमुद्रितपुस्तके च 'पातेर्जुट् च' इति पाठ ]। *[ सिद्धान्तकौमुदी 'व्यथो लिटि' ( पा ६ ४ ६८ ) इति सूत्रे गणसूत्रमेतत् । द्र काशिका, पाभो ७.३ ३४ ]। १ मै—इभोभयेन ।

इभः, इतमपगतं भयमस्येति वा, इभः वीतभयः हस्ती वा ' ( द्र. निरुक्त ६.१२ ) इति। एतदुक्तं भवति—यथा राजा अमात्ययुक्तः शत्रूणां भञ्जनैरायुधादिभिस्तद्वान् इभेन हस्तिना शत्रुवधादिकं साधयितुं युक्तो गच्छति, तथा त्वं महद्बलमादाय शत्रुवलनाशनसमर्थेन रोगादिना तद्वान्, इभेन इरापुष्टेन वीतभयेन गजेन तद्वान् वा सह रक्षांसि हन्तुं याहीति। अमवानिति संहितायां नकारस्य रुत्वानुनासिकौ पूर्ववत् ( पा ८.३.९,३ )। [v]तृष्वीं क्षिप्रनामैतत्। प्रकृष्टा सितिः सेना प्रसितिः। अव्ययपूर्वपदप्रकृतिस्वरत्वम् ( पा ६.२.२ )। [v]अनु [v]द्रूणानः अनुद्रवन्ननुधावन्। एतदुक्तं भवति—मन्त्रिभिर्बहुलं [२]समस्तं बलमग्रतः प्रसारयेतीरितां क्षिप्रगामिनीं प्रकृष्टां सेनामग्रतः प्रसारितां द्रवन्तीमनुद्रवन् राजेव याहीति। यद्वा—तृष्वीं क्षिप्रमागच्छन्तीं प्रसितिं परसेनां अनुद्रूणानः अनुक्रमेण हिंसन् याहीति। द्रूञ् हिंसायां क्रैयादिकः। पूर्वस्मिन् पक्षे द्रवतेस्ताच्छीलिकश्चानश् ( पा ३.२.१२९ )। व्यत्ययेन श्नाप्रत्ययोऽश्च दीर्घत्वम्। अथैवं यात्वा [v]रक्षसः राक्षसान् [v]विध्य ताडय। [v]तपिष्ठैः तप्ततमैः। तप्तृशब्दादिष्ठनि " तुरिष्ठेमेयःसु " ( पा ६.४.१५४ ) इति तृशब्दस्य लोपः। कस्मादित्थमुच्यत इति चेत्, [v]अस्ता [v]असि साधु निरसितासि शत्रूणाम्। यद्वा—शत्रुसंबन्धिनाममोघानां शस्त्राणामस्ता निरसिता निवारयिता त्वमसि। तस्मात् तपिष्ठैस्त्वदीयैरायुधैः तान् विध्य इति। अस्यतेः साधुकारिणि तृन् ( पा ३.२.१३५ )। रधादित्वादिड् विकल्प्यते ( पा ७.२.४५ )। विध्येति परत्वान्न निहन्यते ( पा ८.१.२८ )। रक्षःशब्दोऽयमसुन्नन्तः रक्षाहेतुत्वात् अपादाने असुन् ( उ ६३८ )। क्षरेर्वा हिंसार्थात् कर्तर्यसुनि ( उ ६३८ ) आद्यन्तविपर्ययः। यथोक्तं—" वर्णागमो वर्णविपर्ययश्च " ( काशिका पा ६.३.१०९ ) इति। अयं चार्धर्चादित्वादुभयलिङ्गः ( पा २.४.३१ )। तत्र नपुंसकत्वे " नब्विषयस्यानिसन्तस्य " ( फिट् २६ ) इत्याद्युदात्तत्वम्। यथा—" रक्षसामपहत्यै " ( तैसं ६.६.३ ), " रक्षांसि जिघांसन्ति " ( तैसं ६.६.३ ) इति। पुंलिङ्गे अस्य त्वन्तोदात्तत्वं भवति, यथा—" रक्षसः पाहि अस्मान् " ( तैसं १.२.१४ ) इत्यादौ। एवमस्यापि पुंलिङ्गत्वादन्तोदात्तत्वम्। " नब्विषयस्य° " इति नियमेन नित्स्वरो ( पा ६.१.१९७ ) बाध्यते; यथा दक्षेरिनन् ( उ २१८ ) विधीयते इति दक्षिणशब्देनान्तोदात्तेन भवितव्यम्। यथा—" दक्षिणा दिक् इन्द्रो देवता " ( तैब्रा ३.११.५ ) इत्यादौ। " दक्षिणस्यादिगाख्यायाम् " ( फि ८, ९ ) इति नियमाद्दिगाख्याया अन्यत्राद्युदात्तत्वम्। यथा " दक्षिणां प्रतिग्रहीष्यन् " ( तैब्रा २.३.२ ), " आ प्र यच्छ दक्षिणात् " ( तैसं १.२.१३ ) इत्यादिषु। एवमत्रापि द्रष्टव्यम्॥

२. तं.पं–मस्तम्; वि–' समस्तम् ' नास्ति।

तवं भ्रमास आशुया पतन्त्यनु स्पृश धृषता शोशुचानः ।
तपूंष्यग्ने जुह्वा पतङ्गानसंन्दितो वि सृज विष्वगुल्काः ॥

तवं । भ्रमासः । आशुया । पतन्ति । अन्विति । स्पृश । धृषता । शोशुचानः ॥
तपूंषि । अग्ने । जुह्वा । पतङ्गान् । असंदित इत्यसं-दितः । वीति । सृज । विष्वक् । उल्काः ॥

५ अथ द्वितीया—' तव ' इति ॥ हे अग्ने, तव भ्रमासः भ्रमणशीला विस्फुलिङ्गाः । पचाद्यच् (पा ३-१ १३४)। "आज्जसेरसुक्" (पा ७ १-५०)। आशुया आशवः । "सुपां सुलुक्" (पा ७-१-३९) इत्यादिना जसो याजादेशः । पतन्ति निष्पतन्ति । यद्वा—आशु निष्पतन्ति । क्रियाविशेषणत्वात् नपुंसकत्वम् । द्वितीयैकवचनस्य लुगपवादो याजादेशः (पा ७ १ ३९)। अनु स्पृश ये निष्पतन्ति तैर्भ्रमैः रक्षःशरीराण्यनुक्रमेण स्पृश दहेति यावत् ।
१० धृषता अभिभवित्रा । धृष प्रसहने चुरादिराधृषीय । व्यत्ययेन शः (पा ३ १ ८५)। "शतुरनुमः" (पा ६-१ १७३) इति विभक्तेरुदात्तत्वम् । भावप्रधानोऽयम्, धर्षकत्वेनेत्यर्थः । शोशुचानः भृशं दीप्यमानः । यङ्लुगन्तात् (पा २ ४ ७४) व्यत्ययेनात्मनेपदम् (पा ३ १-८५)। "अभ्यस्तानामादिः" (पा ६ १ १८९) इत्याद्युदात्तत्वम् । इदानीं दहनोपाय उच्यते । तपूंषि तापान् औष्ण्यलक्षणान् तपनशीलान्, तपेरुसिप्रत्ययः (उ २ ८२)।
१५ पतङ्गान् पतनशीलान् । पतेरङ्गच्प्रत्ययः (उ १२४)। उल्काः उज्ज्वला महाज्वालाः । पृषोदरादिः (पा ६ ३-१०९)। एवमेतत् त्रितयं विष्वग् वि सृज । इतश्चेतश्च निःसारय । विषु नाना अञ्चतीति "ऋत्विग्" (पा ३-२ ५९) इत्यादिना क्विन्प्रत्ययः । "न्यधी च" (पा ६-२ ५३) इति चकारस्यानुक्तसमुच्चयार्थत्वात् पूर्वपदप्रकृतिस्वरत्वम् । व्यत्ययेन वा अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६ २ २)। जुह्वा असन्दितः अयन्त्रितः, अग्निर्हि जुहू द्वारा

२० तवेति ॥ अथ द्वितीया—" तव भ्रमास आशुया पतन्त्यनु स्पृश धृषता शोशुचानः । तपूंष्यग्ने जुह्वा पतङ्गानसंदितो वि सृज विष्वगुल्काः " इति । भ्रमासः भ्रमणशीला विस्फुलिङ्गाः, आशुया शीघ्रगामिनः, धृषता धार्ष्ट्येन, शोशुचानः भृशं दीप्यमानः, तपूंषि संतापान्, पतङ्गान् पतनशीलान्, असंदितः अखण्डितः, वि सृज विशेषेणोत्पादय, विष्वक् सर्वत्र, उल्काः महाज्वालाः । हे अग्ने, तव सम्बन्धिनो विस्फुलिङ्गाः शीघ्रगामिनः सर्वत्र पतन्ति । त्वमपि भृशं दीप्यमानस्तैः
२५ विस्फुलिङ्गैस्तानसुरान् धार्ष्ट्येनात्यन्तमादरम् अनु स्पृश । पुनरपि जुह्वा हुतेन हविषा त्वमविच्छिन्नः सन् संतापान् विस्फुलिङ्गान् महाज्वालाश्चासुरबाधनाय सर्वतो बाहुल्येनोत्पादय ॥

३–३ मे ति–' ऋत्विगादिना ।

४–४ आ–भ्रमणशालिनो विस्फुलिङ्गाः, उ–भ्रमणशालिनः सर्वत्र विस्फुलिङ्गान्; क हा–भ्रमणशालिनो विस्फुलिङ्गान् । ५–५ ड उ पा मा–' आशुया . पतनशीलान् ' नास्ति । ६ ६ उ पा भो.
३० हा–दीप्यमानं ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

प्रति॒ स्पशो॒ वि सृ॑ज॒ तूर्णि॑तमो॒ भवा॑ पा॒युर्वि॒शो अ॒स्या अद॑ब्धः ।
यो नो॑ दू॒रे अ॒घशं॑सो॒ (१) यो अन्त्यग्ने॒ माकि॑ष्टे॒ व्यथि॒रा द॑धर्षीत् ॥

प्रतीति॑ । स्पशः॑ । वीति॑ । सृ॒ज । तूर्णि॑तम॒ इति॒ तूर्णि॑–तमः॒ ।
भव॑ । पा॒युः । वि॒शः । अ॒स्याः । अद॑ब्धः ॥
यः । नः॒ । दू॒रे । अ॒घशं॑स॒ इत्य॒घ–शं॑सः ( १ ) । यः । अन्ति॑ ।
अग्ने॑ । माकिः॑ । ते॒ । व्यथिः॑ । एति॑ । द॒धर्षी॑त् ॥ ५

यन्त्रित इव भवति, न कचिद्याति, न चान्यत्करोति, तामेवाज्यवर्ती व्याप्रियमाणां पश्यन् तया बद्ध इव भवति । तस्मात् तथा मा भूरिति प्रार्थयते । जुह्वा । विभक्तेः "उदात्तयणो हल्पूर्वात्" (पा ६.१.१७४) इत्युदात्तस्य "नोङ्धात्वोः" (पा ६.१.१७५) इति प्रतिषेधे "उदात्त-स्वरितयोर्यणः" (पा ८.२.४) इति स्वरितत्वं प्रवर्तते । संपूर्वात् यतेः निष्ठायां "धतिस्यतिमा-स्थामित्ति किति" (पा ७.४.४०) इतीत्त्वम् । अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६.२.२) । अन्य आह—असन्दितः केनचिदप्यखण्डितप्रसरः सन् इत्थं कुरु । तत्र कारणमाह—जुह्वा जुहूस्थेनाज्येनेत्यर्थः ॥ १०

अथ तृतीया—'प्रति' इति ॥ 'अग्ने' इति चतुष्पादादिः । अत एव न निहन्यते । हे $^{v}$अग्ने, $^{v}$नः अस्माकं $^{v}$यः $^{v}$दूरे स्थितः $^{v}$अघशंसः $^{v}$यः वा $^{v}$अन्ति अन्तिके । कादिलोपो बहुलम् (पा ६.४.१४९ वा ८) इति कलोपः । अघं पापात्मकं शंसनमभिलापः कीर्तनं वा यस्य सोऽघशंसः वधादिकारी दुरुक्तवादी वोच्यते । तथा $^{v}$प्रति $^{v}$स्पशः पाशान् $^{v}$वि $^{v}$सृज विस्तारय । पाशैस्तं बधानेत्यर्थः । स्पश ग्रहणशोषणयोः । करणे संपदादिलक्षणः क्विप् (पा ३.३.१०८ वा ९) । यद्वा—स्पश बाधने । बाधकान्यायुधादीनि तं प्रति वि सृज । $^{v}$तूर्णितमः त्वरिततमः सन् । त्वरतेः क्तिनि (पा ३.३.९४) निष्ठावद्भावेन निष्ठात्वे (द्र. पाभा ८.२.४४ वा १) "ज्वरत्वरश्रिव्यविमवामुपधायाश्च" (पा ६.४.२०) इत्यूठ् । किंच—$^{v}$भव $^{v}$पायुः पालयिता $^{v}$अस्याः विशः प्रजायाः । कस्याः ? त्वामनुगतायाः अस्मदादिकायाः, न पुनः प्रकृतायाः । अत एवान्वादेशाभावात् "ऊडिदम्" १५ २०

प्रतीति ॥ अथ तृतीया—"प्रति स्पशो वि सृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः । यो नो दूरे अघशंसो यो अन्त्यग्ने माकिष्टे व्यथिरा दधर्षीत्" इति ॥ $^{v}$स्पशः पाशान्, $^{v}$तूर्णितमः अतित्वरितः, $^{v}$पायुः पालयिता $^{v}$विशः प्रजायाः, $^{v}$अदब्धः केनाप्यहिंसितः, $^{v}$अघशंसः विचित्र-वधकारी, $^{v}$अन्ति समीपे, $^{v}$माकिः मा $^{v}$व्यथिः व्यथाकारी, $^{v}$आ $^{v}$दधर्षीत् सर्वतो "धृष्टो भवतु" । हे $^{v}$अग्ने, चित्रवधकारी राक्षसः $^{v}$यः अस्माकं वैरी $^{v}$दूरे वर्तते तं प्रति "त्वमतित्वरितो बन्धनहेतून् पाशान् विविधान् $^{v}$सृज । केनाप्यहिंसितस्त्वमस्मदादिकायाः $^{v}$अस्याः प्रजायाः पालको $^{v}$भव । कोऽपि व्यथयिता राक्षसः $^{v}$ते समीपे सर्वत्र धृष्टो मा भवतु ॥ २५

७–७. तं-धृष्टोऽभवत् । ८. पा.भां.हा–त्वमभित्वरितः । ३०

उदग्ने तिष्ठ प्रत्याऽऽ तनुष्व न्यमित्राँ॥ ओषतात् तिग्महेते ॥
यो नो अरातिँ॥ समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥
उदिति । अग्ने । तिष्ठ । प्रति । एति । तनुष्व ।
नीति । अमित्रान् । ओषतात् । तिग्महेत इति तिग्म-हेते ।
५ य । नः । अरातिम् । समिधानेति सम्-इधान । चक्रे ।
नीचा । तम् । धक्षि । अतसम् । न । शुष्कम् ॥

( पा ६ १.१७१ ) इति विभक्तेरुदात्तत्वं प्रवर्तते । " सावेकाचः " ( पा ६ १.१६८ ) इति निशो विभक्तेरुदात्तत्वम् । " द्व्यचोऽतस्तिङः " ( पा ६ ३.१३५ ) इति संहितायामाख्यातस्य दीर्घत्वम् । पाते " कृवापाजिमि " ( उ० १ ) इत्युण्प्रत्ययः । अदब्ध अनुपहिंसितः
१० केनापि । किंच—माकिः मा कश्चिदपि ते त्वाम् आ दधर्षीत्, आधर्षयतु तव कश्चिदपि परिभवं मा कार्षीदित्यर्थः । धृष प्रसहने चुरादिराधृषीयः । द्विविकरणता । शप लुक् ( पा २ ४.७६ ) । तलः परं सिच् ( पा ३ १.४४ ) । " नेटि " ( पा ७ २ ४ ) इति वृद्धि-प्रतिषेधः । मिच्येर्वा व्यत्ययेन द्विर्वचनम् । व्यथि व्यथयिता । व्यथेरन्तर्भावितण्यर्थात् ' इन् सर्वधातुभ्यः " ( उ ५६७ ) इति इन् । व्यादेव वा " अच इः " ( उ ५८८ ) इतिप्रत्यये
१५ "बहुलमन्यत्रापि संज्ञाछन्दसोः" ( उ १९० ) इति णिलोपः । यथा—" वर्धन्तु त्वा सुष्टुतयः " ( तैसं २ २ १२ ) इति । वृषादिर्द्रष्टव्यः ( पा ६ १.२०३ ) । ते इति " क्रियाग्रहणं कर्तव्यम् " ( द्र॰ पाभा १.४.३२ ) इति सम्प्रदानत्वात् चतुर्थी । " चतुर्थ्यर्थे बहुलं छन्दसि " ( पा २.३.६२ ) इति षष्ठी चतुर्थ्यर्थे वा । कर्मणि षष्ठी वा ( पा २ ३ ६५ ) । ते व्यथि इति सम्बन्धात् । " युष्मत्तत्ततक्षुष्वन्तः पादम् " ( पा ८ ३ १०३ ) इति ते इत्यस्मिन् परतः पूर्वस्य
२० सकारस्य षत्वम् ॥

अथ चतुर्थी—' उदग्ने ' इति ॥ हे अग्ने उत् तिष्ठ उत्थाय प्रति आ तनुष्व शत्रून् प्रत्याततेजा भव । तथा च भूत्वा हे तीक्ष्णायुध, अमित्रान् अस्मच्छत्रून् नि ओषतात् नियमेन दह । उष दाहे । अमेरित्रप्रत्ययः ( उ ६२३ ) । किंच—यः नः अस्माकम् अरातिम्

उदग्न इति ॥ अथ चतुर्थी—" उदग्ने तिष्ठ प्रत्या तनुष्व न्यमित्राँ ओषतात् तिग्महेते । यो
२५ नो अरातिँ समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् " इति । हे अग्ने, त्वम् उत् तिष्ठ शत्रून् प्रति सर्वतः प्रवर्तस्व । हे तीक्ष्णायुध, त्वम् अमित्रान् नितरां दह । हे समिध्यमान वह्ने, यः अस्माकं शत्रुत्वं चक्रे तं नीचं कृत्वा शुष्कम् अतसं न शुष्ककाष्ठमिव भस्मीकुरु ॥

४ मै-' पाते ' नास्ति । ५-५ पं-इत्यमुणू, ति-इत्यमुनि ।

९-९. आ इ उ.त पा.ओ द्रा-शुष्कमतसमिव काष्ठमिव ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

ऊर्ध्वो भव प्रति विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।
अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्र मृणीहि शत्रून् ॥

ऊर्ध्वः । भव । प्रतीति । विध्य । अधीति । अस्मत् । आविः । कृणुष्व । दैव्यानि । अग्ने । अवेति । स्थिरा । तनुहि । यातुजूनाम् । जामिम् । अजामिम् । प्रेति । मृणीहि । शत्रून् ॥

अरातित्वम्, अस्मभ्यं वा अरातिम् अदानं [V]चक्रे कुरुते । योऽस्मभ्यं न किंचिदपि ददाति [V]तं [V]नीचा न्यग्भूतं [V]धक्षि दह । [V]अतसं [V]न काष्ठमिव [V]शुष्कम् । दहेर्लेटि " बहुलं छन्दसि " (पा २·४·७३ ) इति शपो लुक् । न्यक्शब्दात् व्यत्ययेन तृतीया । " अञ्चेश्छन्दस्यसर्वनामस्थानम् " ( पा ६·१·१७० ) इति तस्या उदात्तत्वम् । हे [V]समिधान सामिधेनीसमिद्भिर्दीप्यमान । पूर्ववत् शपो लुक् ( पा २·४·७३ ) ॥ ५

अथ पञ्चमी—' ऊर्ध्वः ' इति ॥ हे [V]अग्ने, [V]ऊर्ध्वः उत्थितः [V]भव । उत्थाय च [V]प्रति [V]विध्य प्रत्येकं ताडय । यद्वा—प्रतियोद्धा भव । कस्यार्थे ? [V]अधि [V]अस्मत् अस्मत्त उपरि अस्मत्पक्षे तिष्ठन् अस्मदर्थमित्यर्थः । यद्वा—अस्मत्त उपरि ये तिष्ठन्ति अस्मान् न्यग्भावयन्तः तान् प्रति विध्य प्रत्येकं ताडय । यद्वा—सप्तम्या लुक् ( पा ७·१·३९ ) । अस्मास्वधि प्रति विध्य अस्मन्निमित्तं प्रतियोद्धा भव । अधिशब्देनापि सप्तम्यर्थ एव द्योत्यते । तदर्थं किं कर्तव्यम् इति चेत् । [V]आविः [V]कृणुष्व प्रकाशय [V]दैव्यानि देवस्य तव स्वभूतानि वीर्याणि यानि तवैव सन्ति तानि प्रकाशय । " देवाद्यञञौ " ( द्र. पा ४·१·८५ वा ३ ). इति यञ् । " इदुदुपधस्य चाप्रत्ययस्य " ( पा ८·३·४१ ) इति षत्वम् । किंच—[V]यातुजूनां यातयितुं क्लेशयितुं प्राणिनो ये जवं कुर्वन्ति ते यातुजुवः । " क्विब्वचि " ( उ २२५ ) इत्यादिना क्विप्दीर्घौ । आमि छान्दसो ह्रुट् । तेषां यातुधानानां स्थिराणि वीर्याणि [V]अव [V]तनुहि अवाचीनं कुरु नाशय । " शेश्छन्दसि बहुलम् " ( पा ६·१·७० ) इति लुक् । " उतश्च प्रत्ययाच्छन्दोवावचनम् " ( पा ६·४·१०६ वा १ ) इति हेर्लोपो न क्रियते । एवं त्वदीयानि वीर्याण्याविष्कृत्य यातुधानानां च वीर्याणि शिथिलीकृत्य पश्चादित्थं प्रवर्तितव्यमित्याह—[V]जामिं च [V]अजामिं च [V]शत्रून् [V]प्र [V]मृणीहि प्रकर्षेण मारय । म्रियतेरन्तर्भावितण्यर्थात् लोटि( टः ) व्यत्ययेन श्ना ( पा ३·१·८१ ) । १० १५ २०

ऊर्ध्व इति ॥ अथ पञ्चमी—" ऊर्ध्वो भव विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने । अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्र मृणीहि शत्रून् " इति । हे [V]अग्ने, त्वम् [V]ऊर्ध्वः [V]भव उद्युक्तो भव । [V]अस्मत् [V]अधि अस्माकमुपरि ये शत्रवः [1]संवृत्तास्तान् [V]प्रति [V]विध्य । हे अग्ने, [V]दैव्यानि वीर्याण्याविष्कुरु । [V]यातुजूनां यातुधानानां स्थिराणि वीर्याणि अवमतानि यथा भवन्ति तथा [V]तनुहि कुरु । जामिः पुनःपुनस्ताडितः, अजामिरताडितः, तादृशान् सर्वान् [V]प्र [V]मृणीहि मारय ॥ २५

१०. तं·म·२—प्रवृत्तास्तान् ।

स ते ( २ ) जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत् ।
विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो वि दुरो अभि द्यौत् ॥

स । ते (२)। जानाति । सुमतिमिति सु—मतिम् । यविष्ठ ।
य । ईवते । ब्रह्मणे । गातुम् । ऐरत् ॥
विश्वानि । अस्मै । सुदिनानीति सु—दिनानि । राय ।
द्युम्नानि । अर्य । वीति । दुर । अभीति । द्यौत् ॥

हेः पित्त्वाभावे ङित्त्वादीत्वम् । यद्वा—मृण हिंसायाम् । लोटि हेश्छान्दस इडागम । विकरणस्य लुक् । यत्कृतमेव क्रियते तज्जामि । अत्र प्र मृणीहीत्याख्यातसन्निवेशेमरणविषय पौनरुक्त्य विज्ञायते । उपचारेण तद्वति वृत्ति । एतदुक्त भवति । शत्रून् प्रमृणीहि । किं विशेषेण जामिं चाजामिं च शत्रु मारय । य पूर्वं प्रहृतस्तमपि प्रहर, हतोऽयमिति मोपेक्षिष्ठा । यश्च न प्रहृत कुतश्चित् कारणात् तमपि प्रहर, वराकोऽय न हन्तव्य इत्यादि चेतसि मा कृथा । इदमेव कार्त्स्न्यं प्रतिपादयितु बहुवचन प्रयुक्तम् । एकेन च जामिमारणेन एकेनाजामिमारणेन देवस्य कृतार्थता मा विज्ञायीति । यद्वा—द्वे अप्येते क्रियाविशेषणे । व्यत्ययेन " स्वमोर्नपुसकात् " ( पा ७ १ २३ ) इति न क्रियते । पुनरुक्तमपुनरुक्त च शत्रून् मारयेति ॥

अथ षष्ठी—'स ते' इति ॥ हे अग्ने यविष्ठ युवतम । यद्वा—हविर्देवाना मिश्रयितृतम । यविते तृजन्तादिष्ठन् ( पा ५.३.५५,५९ ) । स ते तव जानाति सुमति शोभना कल्याणकारिणी मतिं स एव तवानुग्रहबुद्धिं यथावत् भजत इति यावत् । यद्वा—स एव त्वत्प्रसादात् सुमतिमात्महित जानाति, स एवात्महिते प्रवर्तत इति यावत् । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६ २ १३९ ) । " मन्त्रे वृष " ( पा ३ ३ ९६ ) इति मतिशब्दोऽन्तोदात्त । क इत्याह—य ईवते गमनवते प्रशस्तगतये कल्याणहेतुभूतागमनाय । यद्वा—गृहमागताय ब्रह्मणे परिवृढाय । तुभ्य गातुम् अन्न हविर्लक्षणम् । ऐरत् ईरयति ददाति । ईर क्षेपे चुरादिरात्मनेपदीय । छान्दसो लङ् । ईङ् गतौ । क्विबन्तात्

स इति ॥ अथ षष्ठी—" स ते जानाति सुमतिं यविष्ठ य ईवते ब्रह्मणे गातुमैरत् । विश्वान्यस्मै सुदिनानि रायो द्युम्नान्यर्यो वि दुरो अभि द्यौत्" इति ॥ हे यविष्ठ युवतम, य यजमान ईवते स्वगृह प्रति गमनवते ब्रह्मणे परिवृढाय तुभ्य गातु हविर्लक्षणमन्नम् ऐरत प्रददाति स एव यजमान तवानुग्रहयुक्ता सुमतिं जानाति । त्वमपि अर्य स्वामी भूत्वा राय धनानि द्युम्नानि यशासि दुर गृहाश्चाभिलक्ष्य अस्मै यजमानाय विश्वानि सुदिनानि यथा भवन्ति तथा द्यौत् प्रकाशयानुगृहाण ॥

६ त ति—तत्त्व° । ७ ॥ ति—शत्रून् ।

११. आ-क—त्वदनुग्रहयुक्ताम्, हा—तवानुग्रहयुक्त ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

सेदंग्ने अस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः ।
पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना सासदिष्टिः ॥

सः । इत् । अग्ने । अस्तु । सुभग इति सु—भगः । सुदानुरिति सु—दानुः ।
यः । त्वा । नित्येन । हविषा । यः । उक्थैः ॥
पिप्रीषति । स्वे । आयुषि । दुरोण इति दुः—ओने ।
विश्वा । इत् । अस्मै । सुदिनेति सु—दिना । सा । असत् । इष्टिः ॥ ५

प्रशंसायां मतुप् ( द्र. पाभा ५·२·९४ वा १ ) । " छन्दसीरः " ( पा ८·२·१५ ) इति मतुपो वत्वम् । यद्वा—ईवते गमनवते गमनकारिणे तुभ्यं यो गातुं मार्गमैरत् करोति, मार्गं हविरादिसंपन्नं प्रवर्तयति, अलंकृतमिव राजमार्गम् । स एव सुमतिं जानाति । तस्मात्त्वया इत्थमस्यैवोपकर्तव्यमित्याह—^v^अस्मै इत्थं त्वयि श्रद्धां कुर्वते यजमानाय यजमानार्थम् । अन्वादेशविषयत्वादनुदात्तत्वम् ( पा २·४·३२ ) । ^v^रायः धनानि ^v^द्युम्नानि यशांसि ^v^दुरः गृहान् एतानि ^v^विश्वानि अपि ^v^सुदिनानि शोभनानि दिनानि ^v^अभि लक्ष्यीकृत्य त्वं ^v^वि ^v^द्यौत् विशेषेण द्योतस्व । १० यैर्द्युम्नादिभिः शोभनानि दिनानि क्रियन्ते तानि सुदिनानि । " आद्युदात्तं द्व्यच् छन्दसि " ( पा ६·२·११९ ) इत्युत्तरपदाद्युदात्तत्वम् । " नपुंसकमनपुंसकेन " ( पा १·२·६९ ) इति नपुंसकस्यैकशेषः । " ऊडिदम् " ( पा ६·१·१७१ ) इति रायो विभक्तेरुदात्तत्वम् । दुर्वेर्हिंसाकर्मणः क्विपि ( पा ३·२·७६ ) वलोपः ( पा ६·१·६६ ) । द्योततेश्छान्दसो लुङ् ( पा ३·४·६ ) । १५ " द्युद्भ्यो लुङि " ( पा १·३·९१ ) इति परस्मैपदम् । सिचि वृद्धिः ( पा ७·२·१ ) । " बहुलं छन्दसि " ( पा ७·३·९७ ) इति ईडभावः । " बहुलं छन्दस्यमाङ्योगेऽपि " ( पा ६·४·७५ ) इत्यडभावः । यथैतानि विश्वान्यपि सुदिनानि भवन्ति इष्टदिनानि भवन्ति तथा विद्योतस्व अर्यस्त्वम् । अर्यः स्वामी । " अर्यः स्वामिवैश्ययोः " ( पा ३·१·१०३ ) इति यत्प्रत्ययान्तो निपात्यते । अपरा योजना—विश्वानि द्युम्नानि दीप्तिमन्ति सुदिनानि शोभनदिनानि । २० अत्यन्तसंयोगे द्वितीया ( पा २·३·५ ) । यथा शोभनानि विश्वानि दिनानि भवन्ति तथा तेषु

सेदिति ॥ अथ सप्तमी—" सेदग्ने अस्तु सुभगः सुदानुर्यस्त्वा नित्येन हविषा य उक्थैः । पिप्रीषति स्व आयुषि दुरोणे विश्वेदस्मै सुदिना साऽसदिष्टिः " इति । हे ^v^अग्ने, ^v^यः यजमानः ^v^स्वे ^v^आयुषि यावज्जीवं ^v^दुरोणे स्वगृहे ^v^नित्येन प्रतिदिनमनुष्ठेयेन ^v^हविषा त्वां ^v^पिप्रीषति प्रीणयितुमिच्छति । २५ ^v^यः च[१२] ^v^उक्थैः शस्त्रैः पिप्रीषति ^v^सः एव ^v^सुभगः सौभाग्यवान् ^v^सुदानुः शोभनदानवानपि ^v^अस्तु । ^v^अस्मै अस्य यजमानस्य ^v^सा सर्वाऽपि ^v^इष्टिः ^v^सुदिना एव ^v^असत् भवति ॥

८. तं.ति—द्योतयस्व ।

१२. उ.पा.मा.हा—यथा ।

विद्योतस्व "स त्वमर्य. स्वामी" । "परादिश्छन्दसि बहुलम्" (पा ६ २ १९९) इत्युत्तरपदाद्युदात्तत्वम्। दुरोऽभि गृहानभि लक्षीकृत्य विश्वानि दिनानि द्योतस्व। रायो धनस्य स्वामी त्वम्। अन्ये तु वाक्यभेदेन व्याचक्षते—विश्वान्यपि सुदिनान्यस्मै भवन्ति, द्युम्नानि यशांसि च भवन्ति, रायो धनस्य स्वामी भवति, गृहानभि विद्योतते, गृहस्थश्च भवतीति॥

५ अथ सप्तमी—'सेद्' इति॥ हे "अग्ने, "स "इत् स एव "सुभग "अस्तु सौभाग्यवान् भवतु। "सुदानु शोभनदानश्च। उभयत्रापि "आद्युदात्त द्व्यच् छन्दसि" (पा ६ २ ११९) इत्युत्तरपदाद्युदात्तत्वम्। "सोऽचि लोपे चेत्" (पा ६·१ १३४) इति स इत्यस्य संहितायां सोर्लोप। क इत्याह—"य "त्वा "नित्येन अविच्छिन्नेन यावज्जीवसकल्पेनो परिपालयन् "हविषा "पिप्रीषति प्रीणयितुमिच्छति, न कदाचिदपि इमां हित्वा यजमानो

१० भवति। प्रीञ् तर्पणे। "य "च "उक्थै शस्त्रैस्त्वा पिप्रीषति स एव। कस्मिन्निमित्त इत्याह—"स्वे "आयुषि आत्मीये जीवितेऽग्नौ वा निमित्ते। निमित्तात् कर्मसयोगे सप्तमी (पा २ ३ ३६ वा ६)। आत्मार्थं न परार्थमिति स्वग्रहेण दर्शयति। कुत्र स्थित इत्यत आह—"दुरोणे गृहे "स्व इत्येव"। आत्मीये गृहे स्थित त्वा पिप्रीषति, न तु ऋत्विजाम्। दु खेन रक्ष्यत इति दुरोणम्। अवतेरौणादिको नप्रत्यय (द्र. उ २९३)। "ज्वरत्वर" (पा ६ ४ २०) इत्यादिना

१५ ऊठि गुण। "पूर्वपदात् सज्ञायामग" (पा ८ ४ ३) इति णत्वम्। कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६ २ १३९)। किंचेत्याह—सा तादृशी इत्थभूतेन क्रियमाणा "विश्वा "इत् विश्वैव न पुनरेकैव इष्टि याग। "सुदिना शोभनदिना "असत् भवति "अस्मै अस्य। षष्ठ्यर्थे चतुर्थी (पा २ ३ ६२ वा १)। पूर्ववदुत्तरपदाद्युदात्तत्वम् (पा ६ २ १३९)। यद्वा—अस्य यजमानस्य विश्वान्यपि सुदिनानि भवन्ति। किंच "सा तादृशेन क्रियमाणा इष्टि "असत्

२० भवेत्। अतादृशेन क्रियमाणा इष्टिरेव न भवति। तस्मात् स एव सुभगः सुदानुश्चास्तु। भगो रूपमैश्वर्यं वा। दानुर्दानशील दातृत्व वा। अस्तेर्लेटि "लेटोऽडाटौ" (पा ३ ४ ९४) इत्यडागम। "इतश्च लोप" (पा ३ ४ ९७)॥

अथाष्टमी—'अर्चामि' इति॥ हे अग्ने, "ते तव "सुमतिं शोभना मतिमुपकर्त्रीं बुद्धिम् "अर्चामि[११] पूजयामि मनसा बहु मन्ये। सुष्ठु मन्यतेऽनयेति सोपसर्गात् क्तिनि (पा ३·३·९६),

२५ समासे कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६ २ १३९)। "मन्त्रे वृष" (पा ३ ३ ९६) इति क्तिन उदात्तत्वम्। "इय मदीया "गी. "च "ते त्वा "स "जरता सम्यक् स्तौतु। जरति स्तुतिकर्मा छन्दसि। कीदृशी गी "त्वामेव "वावाता पुनः पुनस्त्वामेवोपगच्छन्ती क्षणमपि त्वा हातुमशक्नुवन्ती

---

९–९ मै ति–'स त्वमर्य स्वामी' नास्ति। १०–१० ति–स्वे स्थित एव।
११ मे–अर्चयामि।

काम्येष्टियाज्यापुरोनुवाक्याः ]

अर्चामि ते सुमतिं घोष्यर्वाक् सं ते वावाता जरता(३)मियं गीः ।
स्वश्वास्त्वा सुरथा मर्जयेमास्मे क्षत्राणि धारयेरनु द्यून् ॥

अर्चामि । ते । सुमतिमिति सु–मतिम् । घोषि । अर्वाक् ।
समिति । ते । वावाता । जरताम् ( ३ ) । इयम् । गीः ॥
स्वश्वा इति सु–अश्वाः । त्वा । सुरथा इति सु–रथाः । मर्जयेम ।
अस्मे इति । क्षत्राणि । धारयेः । अन्विति । द्यून् ॥

धातोर्यङ्लुगन्तात् ( पा २·४·७४ ) निष्ठा ( पा ३·२·१०२ )। व्यत्ययेन धातुस्वरः ( पा ३·१ ८५)। त्वां सं वावाता त्वां संगच्छन्ती वान्वीयते। यद्वा—त्वामश्विता वा अवगच्छन्तीति वा। "वष्टि भागुरिरल्लोपम्°" ( द्र.कारिका–सिकौ–पा २·४·८२ ) इत्यवशब्दाकारो लुप्यते। "अन्येषामपि°" (पा ६·३·१३७ ) इति सांहितिकं दीर्घत्वम्। यद्वा—आद्यन्तविपर्ययो वा अवशब्दस्य। यथा—'श्वात्रोऽसि' (तैसं १·२·३ ) इत्याशुशब्दस्य। "परादिश्छन्दसि बहुलम्" (पा ६·२·१९९) इत्युत्तरपदाद्युदात्तत्वम्। यद्वा—अतिशयेन वननीया। यङ्लुकि ( पा २·४·७४ ). छान्दसी रूपसिद्धिः। स्तुतिर्विशेष्यते–घोषि, घुष्यत इति घोषि। "इन् सर्वधातुभ्यः" (उ ५६७.) इति इन्। क्रियाविशेषणत्वान्नपुंसकत्वम्। अर्वाक् अर्वाचीनमस्माद्दशाजनोचितं यथास्माभिर्घोषयितुं शक्यते तथा घोषयित्वा त्वद्गुणानियं स्तौतु। अथ कायिकीं परिचर्यामाह— स्वश्वाः सुरथाः च सन्तः त्वत्प्रसादेन महाधनाः पुत्रपौत्रादिसहिताश्च सन्तस्त्वां मर्जयेम[12] अलंकुर्मः परिचरेमेति यावत्। मृजू शौचालंकरणयोः। वृद्ध्यभावश्छान्दसः। शुद्धिकर्मण एव वा वृद्ध्या भाव्यम्। "आद्युदात्तं द्व्यच् छन्दसि" (पा ६.२·११९) इति बहुव्रीहेरुत्तरपदाद्युदात्तत्वम्। अस्मे अस्मभ्यमेवं वर्तमानेभ्यः क्षत्राणि बलानि धारय। यद्वा—अस्मदर्थं क्षत्राणि धारय। "सुपां सुलुक्°" (पा ७·१·३९ ) इति शे-आदेशः। अनु द्यून् दिनेदिने। लक्षणादिना कर्मप्रवचनीयत्वम् ( पा १·४·९० )॥

अर्चामीति ॥ अथाऽष्टमी—"अर्चामि ते सुमतिं घोष्यर्वाक् सं ते वावाता जरतामियं गीः। स्वश्वास्त्वा सुरथा मर्जयेमास्मे क्षत्राणि धारयेरनु द्यून्" इति। हे अग्ने, सुमतिम् अनुग्रहरूपाम् अर्चामि मनसा पूजयामि। अर्वाक् अर्वाचीनाऽपि घोषि घोषवती इयं स्तुतिरूपा मदीया गीः वावाता पौनःपुन्येन प्रसृता ते त्वयि सम्यक् जरतां जीर्यतां, त्वां विहाय अन्यत्र[13] मा गच्छतु। [14]वयं तु[14] त्वत्प्रसादाच्छोभनैरश्वैः [15]रथैश्च युक्ताः सन्तः त्वा मर्जयेम सेवेमहि। त्वमपि अनु द्यून् अनुदिनम् अस्मे अस्मासु क्षत्राणि सामर्थ्यानि धारयेः[16] ॥

१२. मे–अर्चयेम।

१३. इ.ज.पा.भां.हा–'अन्यत्र' नास्ति। १४–१४. इ.ज.पा.भां.हा–'वयं तु' नास्ति। १५. इ.ज.पा.भां.हा–नजैश्च; तं.क२–'रथैश्च' नास्ति। १६. आ.क–'धारयेः' इत्यस्यानन्तरं 'धारय'।

[ काम्येष्टियाज्यापुरोनुवाक्याः

इह त्वा भूर्या चरेदुप त्मन् दोषावस्तर्दीदिवाꣳसमनु द्यून् ।
क्रीडन्तस्त्वा सुमनसः सपेमाभि द्युम्ना तस्थिवाꣳसो जनानाम् ॥

इह । त्वा । भूरि । एति । चरेत् । उपेति । त्मन् ।
दोषावस्तरिति दोषा-वस्त: । दीदिवाꣳसम् । अन्विति । द्यून् ॥
क्रीडन्त: । त्वा । सुमनस इति सु-मनस: । सपेम ।
अभीति । द्युम्ना । तस्थिवाꣳस: । जनानाम् ॥

अथ नवमी—'इह' इति ॥ इह अस्मिन् कर्मणि रक्षोवधलक्षणे त्वामेव भूरि भूयिष्ठ उप आ चरेत् उपचरितुमर्हति पुरुष, त्मन् आत्मनि दोषावस्त दीदिवासम् अनु द्यून् रात्रावहनि च सर्वेषाम् अन्तर्दीदिवास सदीप्यमानम् । "आडोऽन्यत्रापि दृश्यते" ( द्र काशिका, पा मा ६ ४·१४१ ) इत्यात्मन आकारस्य लोप । दीप्यते कर्त्ता ( पा ३ २ १०७ ) "तुजादीनाम्" ( पा ६ १ ७ ) इत्यभ्यासस्य दीर्घत्वम् । छान्दसो वा दीदिवि" दीप्तिकर्मा कृतद्विर्वचन एव । "कार्तकौजपादयश्च" ( पा ६ २ ३७ ) इति दोषावस्तरित्यस्य पूर्वपदप्रकृतिस्वरत्वम् । पद-समुदायात्मको वा एको निपात । "निपाता आद्युदात्ता" ( फि ८० ) इति तस्याद्युदात्तत्वम् । यद्वा—इहास्मिन् लोके त्वामेव भूरि उपाचरेत् पुरुष आत्मनिमित्तमात्मनोऽभिमतसंपादनार्थं दोषावस्त दीप्यमानम् । 'अनु द्यून्' इत्युपचरण विशेष्यते अनुदिनमुपाचरेदिति । तस्माद्वय क्रीडन्तः तृप्यन्त सुमनस, अप्रतिकूलमनस शोभनमनसो वा । त्वा त्वामेव सपेम भजेम । षप समवाये । "सोर्मनसी" ( पा ६·२·११७ ) इत्युत्तरपदाद्युदात्तत्व सुमनशब्दस्य । जनानां द्युम्नानि धनानि यशांसि वा अभि तस्थिवास अभितिष्ठन्त त्वत्प्रसादेनात्मसात्कुर्वन्त । त्वत्सम्बन्धिन एव सर्वदा भवेमेति । "शेश्छन्दसि बहुलम्" ( पा ६ १ ७० ) इति द्युम्नेत्यत्र शेर्लोप । "वस्वेकाजाद्घसाम्" ( पा ७ २·६७ ) इति तिष्ठतेरिडागम ॥

इहेति ॥ अथ नवमी—"इह त्वा भूर्या चरेदुप त्मन् दोषावस्तर्दीदिवाꣳसमनु द्यून् । क्रीडन्तस्त्वा सुमनस सपेमाभि द्युम्ना तस्थिवाꣳसो जनानाम्" इति । हे अग्ने, इह अस्मिँल्लोके श्रेयोऽर्थी पुरुष-स्त्वामेव भूरि बाहुल्येन सर्वत उप चरेत् । त्मन् आत्मनि स्वनिमित्तम् । कीदृश त्वाम् ? दोषावस्त दीदिवांसम् रात्रिंदिवं दीप्यमानम् । कियन्त कालमुपचार ? अनु द्यून अनुदिनम् । तस्माद्वय क्रीडन्त हृष्टमनसस्त्वा सपेम संगच्छेम भजेम । किं कुर्वन्त ? जनानां मध्ये द्युम्नानि धनानि अभि तस्थिवास त्वत्प्रसादादधिष्ठितवन्त ॥

१३. त नि—अेति: ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

यस्त्वा स्वश्वः सुहिरण्यो अग्न उपयाति वसुमता रथेन ।
तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषग्जुजोषत् ॥

यः । त्वा । स्वश्व इति सु-अश्वः । सुहिरण्य इति सु-हिरण्यः । अग्ने ।
उपयातीत्युप-याति । वसुमतेति वसु-मता । रथेन ॥
तस्य । त्राता । भवसि । तस्य । सखा । 5
यः । ते । आतिथ्यम् । आनुषक् । जुजोषत् ॥

अथ दशमी—“यस्त्वा” इति ॥ हे अग्ने, स्वश्वः शोभनाश्वः महाधनः यागयोग्य इति यावत् । “आद्युदात्तं द्व्यच् छन्दसि” (पा ६-२-११९) इत्युत्तरपदाद्युदात्तत्वम् । सुहिरण्यः । “नञ्सुभ्याम्” (पा ६-२-१७२) इत्युत्तरपदान्तोदात्तत्वम् । यः ईदृशः सन् वसुमता व्रीह्यादिधनवता रथेन त्वाम् उपयाति तस्य त्राता भवसि सर्वदुरितेभ्यः । किंच 10 तस्य सखा भवसि । कस्य ? यः त्वाम् आनुषक् अनुषक्तं नित्यम् आतिथ्यम् अतिथिसत्कारम् । यद्वा—अनुषक्तं यथाभिलषितमातिथ्यं जुजोषत् जोषयति प्रापयति । जुषेरन्तर्भावितण्यर्थात् लेटि “बहुलं छन्दसि” (पा २-४-७६) इति शपः श्लुः । “लेटोऽडाटौ” (३-४-९४) इत्यडागमः । “अभ्यस्तानामादिः” (पा ६-१-१८९) इत्याद्युदात्तत्वम् । ते इति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी (पा २-३-६२) । “अतिथेर्ण्यः” (पा ५-४-२६) ॥ 15

अथैकादशी—‘महो रुजामि’ इति ॥ हे अग्ने, बन्धुता बन्धुतया बन्धुभावेन । “सुपां सुलुक्” (पा ७-१-३९) इति तृतीयाया आकारः । वचोभिः स्तुतिभिरुपजातया त्वद्बन्धुतया महः महतः असुरान् ये धनादिना मामतिशेरते तान् रुजामि भञ्जयामि मत्तो न्यक्करोमि । महतेः क्विपि (पा ३-२-७६) “सावेकाचः” (पा ६-१-१६८) इति व्यत्ययेन (पा ३-१-८५) विभक्तेरुदात्तत्वम् । तत् तादृशं ज्ञानं गोतमनाम्नः गोतमसदृशाद्वा मम पितुः सकाशात् माम् 20

यस्त्वेति ॥ अथ दशमी—“यस्त्वा स्वश्वः सुहिरण्यो अग्न उपयाति वसुमता रथेन । तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषग्जुजोषत्” इति । हे अग्ने, त्वत्प्रसादाच्छोभनैरश्वैः समीचीनेन हिरण्येन च युक्तः यः यजमानः हविःस्वरूपधनवता रथेन सह त्वाम् उपयाति तस्य त्वं त्राता भवसि । किंच यः [17]तवातिथिसत्कारम् आनुषक् प्रतिदिनं जुजोषत् प्रीतिपुरःसरं करोति, तस्य त्वं सखिवत् स्वाधीनो भवसि ॥ 25

१७. हा—तवातिथ्यं सत्कारम् ।

मुहो रुजामि (४) बुन्धुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय ।
त्वं नौ अस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूनाः ॥

मुहः । रुजामि (४) । बुन्धुता । वचोभिरिति वर्चः–भि ।
तत् । मा । पितुः । गोतमात् । अन्विति । इयाय ॥
५ त्वम् । नुः । अस्य । वचसः । चिकिद्धि ।
होतः । यविष्ठ । सुक्रतो इति सु–क्रतो । दमूनाः ॥

<sup></sup>

"अन्वियाय अन्वगच्छत् । येन त्वां "वाग्भिर्बन्धुत्वाय करोमि । यद्वा—वचोभिरिति व्यत्ययेन (पा ३.१.८५) बहुवचनम् । स्तुतिवचसा उपजातेन तव बान्धवेन महो रुजामि प्रथमम् । तदनु तस्मात् गोतमात् त्वद्बान्धवहेतुभूतगोतमात् साधुतमात् स्तुतिवचसो हेतुभूतात् पितुरन्न-
१० मपि माम् इयाय एति उपगच्छति तेनैव बान्धवेन । यद्वा—तत्तादृश वचो गोतमात् पितुः सकाशात् मामन्वियाय सा स्तुतिशक्तिर्माम् उपसक्रान्ता" इत्यर्थः । "त्वम् एव खलु "अस्य स्तुतिवचसः अस्मदीयस्य "चिकिद्धि जानासि एतत् ज्ञातु शक्नोषि । कि ज्ञाने, जुहोत्यादिकः । अस्येति स्तोत्ररूप निर्दिशति, न तु प्रकृत वच । तेनान्वादेशाभावः (पा २.४.३२) । यद्वा—प्रथमपक्षे एकवचनान्तस्य वच शब्दस्याप्रकृतत्वादस्येति प्रथमादेशत्वेनान्वादेशाभावः (पा २ ४ ३२) ।
१५ तत्र "ऊडिदम्" (पा ६.१.१७१) इति विभक्तेरुदात्तत्वम् । इतरयोस्तु पक्षयोर्व्यत्ययेनान्वादेशाभाव । कृते चाऽनुदात्तत्वाभाव । कस्तत्र विशेष इत्याह—हे "होत. देवानामाह्वात "यविष्ठ युवतम "सुक्रतो शोभनप्रज्ञ । "नामन्त्रिते समानाधिकरणे" (पा ८ १.७३) इति प्रथमस्याविद्यमानत्वनिषेधात् परमामन्त्रितद्वय निहन्यते । "दमूनाः दान्तमना दानमना वा (नि ४ ४) पृषोदरादि· (पा ६ ३ १०९) । ईदृशस्त्वमेवैतच्चिकिद्धि किमन्येनज्ञानिना इति ॥

२० महः इति ॥ अथैकादशी—"महो रुजामि बन्धुता वचोभिस्तन्मा पितुर्गोतमादन्वियाय । त्वं नो अस्य वचसश्चिकिद्धि होतर्यविष्ठ सुक्रतो दमूना" इति । हे अग्ने, "बन्धुता त्वदीयेन "महः असुराणां तेजोऽभिप्रेपरूपं "वचोभि एव "रुजामि भञ्जयामि । "तत् त्वदीय बन्धुत्व "गोतमात् गोतमसदृशाद्ध्यापकात् "पितुः मामनुप्राप । हे "होत देवानामाह्वात "यविष्ठ युवतम "सुक्रतो शोभनक्रतो यागनिष्पादक, "दमूना दान्तमना "त्व "न अस्मदीयस्य "वचस अधीतवेदस्य रहस्य "चिकिद्धि
२५ जानासि ॥

१४ तै.ति–वाग्बन्धुत्वाय । १५. तै ति–°सक्रान्ता ।

अस्वप्नजस्तरणयः सुशेवा अतन्द्रासोऽवृका अश्रमिष्ठाः ।
ते पायवः सध्रियञ्चो निषद्याऽग्ने तव नः पान्त्वमूर ॥

अस्वप्नज इत्यस्वप्न–जः । तरणयः । सुशेवा इति सु–शेवाः । अतन्द्रासः । अवृकाः । अश्रमिष्ठाः ॥ ते । पायवः । सध्रियञ्चः । निषद्येति नि-सद्य । अग्ने । तव । नः । पान्तु । अमूर ॥

अथ द्वादशी—'अस्वप्नजः' इति ॥ अस्वप्नशीलः । "स्वपितृषोर्नजिङ्" (पा ३.२.१७२)। पदकारानभिमतत्वात् अन्यथा व्याख्यायते—स्वप्नजन्मानो न भवन्तीत्यस्वप्नजाः । "सुपां सुलुक्" (पा ७.१.३९) इति जसः स्वादेशः । सतिशिष्टत्वादव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६.२.२) । ^v^तरणयः दुरिततरणहेतवः । तरतेरनिप्रत्ययः (उ २६७)। सुशेवाः सुसुखाः । "शेवयह्व" (उ १.६०) इति निपात्यते । ^v^अतन्द्रासः अलसत्वरहिताः । "आज्जसेरसुक्" (पा ७.१.५०) । ^v^अवृकाः वृकत्वं हिंस्रत्वं, तद्रहिताः । "नञ्सुभ्याम्" (पा ६.२.१७२) इत्युत्तरपदान्तोदात्तत्वम् । ^v^अश्रमिष्ठाः अखेदयितृतमाः । श्रमु खेदे । तृजन्तात् "तुश्छन्दसि" (पा ५.३.५९) इति इष्ठन् । "तुरिष्ठेमेयःसु" (पा ६.४.१५४) इति लोपः । एवंस्वभावाः ^v^ते तादृशाः, हे ^v^अग्ने, ते तव ^v^पायवः जगत्पालनशीलाः रश्मयः । "कृवापाजि" (उ १) इत्युण्प्रत्ययः । ^v^सध्रियञ्चः सहाञ्चन्तः संभूयकारिणः । "सहस्य सध्रिः" (पा ६.३.९५) । ^v^निषद्य अस्मद्यज्ञे निषीदन्तो भूत्वा सर्वे अस्मद्यज्ञमागत्य त्वयि निषण्णास्त्वामुद्दीपयन्तः ^v^नः अस्मान् ^v^पान्तु रक्षन्तु । हे ^v^अमूर अमोहनशील । मुर्च्छा मोहसमुच्छ्राययोः । क्विपि "राल्लोपः" (पा ६.४.२१) । ततो मत्वर्थीयोऽप्रत्ययः (पा ५.२.१२७) । मोहनशीलो मूरः ततोऽन्योऽमूरः । यद्वा—मूङ् बन्धने, औणादिको रक् (उ १७८) । अमूर अबन्धनीय अनिग्राह्य । यद्वा—अमतेरूरन्प्रत्ययः अमूरः । अप्रतिहतगतिः ॥

अस्वप्नज इति ॥ अथ द्वादशी—"अस्वप्नजस्तरणयः सुशेवा अतन्द्रासोऽवृका अश्रमिष्ठाः । ते पायवः सध्रियञ्चो निषद्याग्ने तव नः पान्त्वमूर" इति । हे ^v^अग्ने, ^v^तव ^v^ते ^v^नः ^v^पान्तु, त्वदीयास्तथाविधा रश्मयोऽस्मान् पालयन्तु । ^v^अमूर इत्यग्निविशेषणम् । मूः मूर्च्छा, तद्वान् मूरः, ततोऽन्यत्वादमूरस्तस्य संबोधनम् । कीदृशास्ते रश्मयः ? स्वप्नजन्मानो मिथ्याभूता न भवन्तीति ^v^अस्वप्नजः । व्यत्ययेनैकवचनम् (पा ३.१.८५) । ^v^तरणयः दुरितरूपं तमस्तारयन्ति । ^v^सुशेवाः सुखेन सेवितुं शक्याः[१८] । ^v^अतन्द्रासः अप्रमत्ताः ^v^अवृकाः अहिंसकाः ^v^अश्रमिष्ठाः श्रमरहिताः ^v^पायवः पालकाः ^v^सध्रियञ्चः सह प्रवर्तमानाः ^v^निषद्य यागप्रदेशे स्थित्वा ॥

१८. आ.पा.हा–योग्याः ।

ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन् ।
ररक्ष तान्त्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो ना ह (५) देभुः ॥

ये । पायवः । मामतेयम् । ते । अग्ने ।
पश्यन्तः । अन्धम् । दुरितादिति दुः-इतात् । अरक्षन् ॥
ररक्ष । तान् । सुकृत इति सु-कृतः । विश्ववेदा इति विश्व-वेदाः । ५
दिप्सन्तः । इत् । रिपवः । न । ह (५) । देभुः ॥

---

अथ त्रयोदशी—'ये पायवः' इति ॥ हे अग्ने, ते तव ये पायव रश्मय अन्धं चक्षुर्हीनं मामतेयं, ममता नाम काचिदृषिपत्नी तस्या अपत्यं मामतेयम्। "स्त्रीभ्यो ढक्" (पा ४.१ १२०)। तमन्धं पश्यन्त दुरितात् श्वभ्रपतनलक्षणात् अरक्षन् प्रकाशप्रदानेन १० दुरितहीनमकुर्वन्। दुरितशब्दः प्रवृद्धादिर्द्रष्टव्यः (पा ६ २.१४७)। तान् रश्मीन् सुकृत तया शोभनं कर्म कृतवतः, विश्ववेदा इव विश्वस्य वेदयिता। "गतिकारकयोरपि" (द्र उ ९७६) इत्यसि । विश्वानि वेदांसि वा यस्य तादृशो भवान् तान् ररक्ष। "रक्ष पालने"। "परोक्षे लिट्" (पा ३ २.११५)। आदरेण परिगृह्य पालयेति। "छन्दसि लुङ्लङ्लिटः" (पा ३ ४ ६) इति लिट्। परोक्ष एव ररक्ष विशेषेण परिजग्राहेत्यर्थः। कथं ररक्षेत्याह—यथा रिपवः राक्षसादयः १५ दिप्सन्त इत् रिपुं दम्भितुमिच्छन्त परिभवितुमिच्छन्त एव सन्तः न एव देभुः। न परिबभूवुः। ततः प्रभृति तथा ररक्षेति। दम्भे सनि "सनीवन्तर्ध" (पा ७.२ ४९) इतीडागमः। "दम्भ इच्च" (पा ७ ४ ५६) इतीकारः। अभ्यासलोपश्छान्दसः। दम्भेर्हल्ग्रहणस्य जातिवाचित्वात् "हलन्ताच्च" (पा १ २.१०) इति सनः कित्त्वम्। देभुरिति "दम्भेश्चेति वक्तव्यम्" (द्र. पाभा ६.४.१२० वा ४) इति लिटि कित्वादुपधालोपः। दभिः प्रकृत्यन्तरं वा। २० "अन्येषामपि दृश्यते" (पा ६.३.१३७) इति नशब्दस्य संहितायां दीर्घत्वम् ॥

---

य इति ॥ अथ त्रयोदशी—"ये पायवो मामतेयं ते अग्ने पश्यन्तो अन्धं दुरितादरक्षन्। ररक्ष तान्त्सुकृतो विश्ववेदा दिप्सन्त इद्रिपवो ना ह देभुः" इति। हे अग्ने, तव संबन्धिनः पालका ये रश्मयः ममताख्याया कस्याश्चिद्योषितोऽपत्यं कंचित् अन्धं पश्यन्तः दुरितात् आन्ध्यलक्षणात् अरक्षन्। इयं स्वाख्यायिका कापि ब्राह्मणान्तरे द्रष्टव्या (द्र. बृदे ४.११–१५)। विश्वं वेत्तीति विश्ववेदाः। तादृशो भवान् २५ सुकृतः शोभनकर्मकारिणः तान् रश्मीन् ररक्ष। ते रिपवः राक्षसाः तान् दिप्सन्त इत् परिभवितुमिच्छन्तोऽपि ना ह देभुः नैव परिबभूवुः ॥

---

१६–१६ मे–रक्षते ।

---

१९. मर–तत । २०. आ–इदिष ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

त्वया॑ व॒यꣳ स॑ध॒न्य॑स्त्वोता॒स्तव॒ प्रणी॑त्यश्याम॒ वाजा॑न् ।
उ॒भा श꣡ꣳसा॑ सूदय सत्यताते॒ऽनुष्ठु॒या कृ॑णुह्यह्रयाण ॥
त्वया॑ । व॒यम् । स॒ध॒न्यं॑ इति॑ सध—न्यः॑ । त्वोताः॑ ।
तवं॑ । प्रणी॑तीति॒ प्र—नी॑ती । अ॒श्याम॑ । वाजा॑न् ॥
उ॒भा । शꣳसा॑ । सू॒द॒य॒ । स॒त्य॒ता॒त॒ इति॑ स॒त्य—ता॒ते॒ ।
अ॒नु॒ष्ठु॒या । कृ॒णु॒हि॒ । अ॒ह्र॒या॒ण॒ ॥ ५

अथ चतुर्दशी—'त्वया' इति ॥ हे अग्ने, ^v^त्वया ^v^सधन्यः सहनेतारः ^v^वयं त्वं च वयं च सहाभिमतानि नयाम इत्यर्थः । "सघ मादस्थयोः" (पा ६.३.९६) इति विधीयमानः सधादेशो व्यत्ययेनात्रापि भवति । "एरनेकाचः" (पा ६.४.८२) इति यणादेशः । "उदात्तस्वरितयोर्यणः" (पा ८.२.४) इति विभक्तिः स्वर्यते । ^v^त्वोताः त्वया ऊताः रक्षिताः । १० छान्दसी रूपसिद्धिः । "तृतीया कर्मणि" (पा ६.२.४८) इति पूर्वपदप्रकृतिस्वरत्वम् । बहुविकारत्वात् अनवग्रहः । ^v^तव ^v^प्रणीत्या प्रणयनेन अनुज्ञानेन परिचरणेन वा वयं ^v^वाजान् अन्नानि ^v^अश्याम भक्षीमहि । "सुपां सुलुक्" (पा ७.१.३९) इति प्रणीतिशब्दात् परस्या-स्तृतीयायाः पूर्वसवर्णदीर्घत्वम् । "तादौ च" (पा ६.२.५०) इति गतेः प्रकृतिस्वरत्वम् । किंच—हे ^v^सत्यताते सत्यकारिन् । व्यत्ययेन तातिल्प्रत्ययः (द्र.पा ४.४.१४३, ३.१.८५) । १५ यद्वा—तनोतेः क्तिनि (पा ३.३.९४) छान्दसं दीर्घत्वम् । हे सत्यविस्तार । ^v^उभा ^v^शंसा उभौ शंसनीयौ अर्थावैहिकमामुष्मिकं च । "सुपां सुलुक्" (पा ७.१.३९) इत्याकारः । तौ ^v^सूदय आनय । षुद क्षरणे । ^v^अनुष्ठुया अनुक्रमेण स्थितौ ^v^कृणुहि कुरु । "उतश्चप्रत्ययाच्छन्दो-वावचनम्" (पा ६.४.१०६ वा १) इति हेर्लुगभावः । अनुक्रमेण स्थापनमनुष्ठु । "अपदुःसुषु स्थः" (उ २५) इति विधीयमानः कुप्रत्ययो व्यत्ययेनानुपूर्वादपि भवति । २०

त्वयेति ॥ अथ चतुर्दशी—"त्वया वयꣳ सधन्यस्त्वोतास्तव प्रणीत्यश्याम वाजान् । उभा शꣳसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण" इति । हे अग्ने, ^v^वयं ^v^तव ^v^प्रणीती प्रेरणया ^v^वाजान् अन्नान् ^v^अश्याम । कीदृशा वयम्? ^v^त्वया ^v^सधन्यः, सह यज्ञकर्म नयन्तीति सधन्यः । ^v^त्वोताः त्वया रक्षिताः । हे ^v^सत्यताते सत्यविस्तार, ^v^उभा ^v^शꣳसा त्वदग्रेऽस्माभिः शंसनीयौ ऐहिकामुष्मिकौ पुरुषार्थौ उभौ ^v^सूदय रक्ष[२१] । हे ^v^अह्रयाण भक्तानामलज्जाकर, ^v^अनुष्ठुया ^v^कृणुहि साधनानुष्ठापनेन २५ तावुभौ कुरु ॥

२१. हा–क्षारय; आ–सूदय [क्षर देहि]; इ.उ–सूदयस्व (?) ।

तैसं २३॥

अया ते अग्ने समिधा विधेम प्रति स्तोमꣳ शस्यमानं गृभाय ।
दहाशसो रक्षसः पाह्यस्मान् द्रुहो निदो मित्रमहो अवद्यात् ॥

अया । ते । अग्ने । समिधेति सम्-इधा । विधेम ।
प्रतीति । स्तोमम् । शस्यमानम् । गृभाय ॥
दह । अशस. । रक्षस । पाहि । अस्मान् । द्रुह॰ ।
निद । मित्रमह इति मित्र-मह । अवद्यात् ॥

सुषामादित्वात् षत्वम् ( पा ८ ३.९८ )। तत परस्या तृतीयाया. "सुपा सुलुक्" ( पा ७ १.३९ ) इति याजादेश । अहृयाण भक्तानाम् अहेपयित. विजयकरत्वात् । जिह्रेते-र्व्यत्ययेन शपो लुक् ( पा २ ४ ७४ )। "छन्दस्युभयथा" ( पा ३.४.११७ ) इति चानशः आर्धधातुकत्वात् ङित्त्वाभाव॰ । व्यत्ययेन वा शपि भुगभाव॰ ( पा ७ २ ८२, ३.१ ८५ ) ॥

अथ पञ्चदशी—'अया' इति ॥ हे अग्ने, अया अनया समिधा समिन्धनेन सामिधेनी-कृत्येन । इदमस्तृतीयाया॰ "सुपा सुलुक्" ( पा ७ १.३९ ) इति याजादेश । त्यदाद्यत्वम् ( पा १.१.७४ )। "अतो गुणे" ( पा ६ १ ९७ ) इति पररूपत्व हलि लोपश्च । "अनाप्यक॰" ( पा ७.२ ११२ ) इति व्यत्ययेन न प्रवर्तते । ते त्वा विधेम परिचरेम । पूर्ववत् कर्मण सम्प्रदानत्वम्* । स्तोमꣳ स्तोत्र शस्यमान प्रति ; गृभाय प्रतिगृह्णाण । "छन्दसि शायजपि" ( पा ३ १ ८४ ) इति शायच् । "हृग्रहोर्भ॰" ( पा ८.२.३२ वा १ ) इति भत्वम् । अशस अशसनान् अस्मद्द्वेष्यान् । बहुव्रीहिर्वा । अशेर्वा असुन् ( उ ६३८ )। व्यापकान् हिंसाद्वारा । रक्षस राक्षसान् । पूर्ववत् नञ्विषयत्वाभावात् आद्युदात्तत्वाभाव । किंच अस्मान् पाहि रक्ष । कस्मादित्याह द्रुह द्रोहात् परकर्तृकात् । निद । निन्दते क्विप् ( पा ३.२ ७६ )।

अयेति ॥ अथ पञ्चदशी—"अया ते अग्ने समिधा विधेम प्रति स्तोमꣳ शस्यमान गृभाय । दहाशसो रक्षस पाह्यस्मान् द्रुहो निदो मित्रमहो अवद्यात्" इति । हे अग्ने, अया समिधा अनया सामिधेन्या ते त्वा विधेम परिचरेम । अस्माभि शस्यमान स्तोमꣳ[22] स्तोत्रं प्रति गृभाय प्रतिगृहाण । अशास अप्रशस्तान् रक्षस राक्षसान् दह । मित्रमुपकारक महत्तेजो यस्यासौ मित्रमहा । हे मित्रमह, द्रुह वैरिकृतात् द्रोहात् निद. निन्दाया अवद्यात् [23]अशास्त्रीयानुष्ठानदोषाच्च अस्मान् पाहि ॥

*[ द्र.पामा १.४.३२ ]।

२२ इ उ पा भां.हा—'स्तोमम्'नास्ति । २३. आ.पा हा—अनुष्ठानदोषाच्च ।

रक्षोहणं वाजिनमा जिघर्मि मित्रं प्रथिष्ठमुप यामि शर्म ।
शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा ( ६ ) स रिषः पातु नक्तम् ॥

रक्षोहणमिति रक्षः–हनम् । वाजिनम् । एति । जिघर्मि ।
मित्रम् । प्रथिष्ठम् । उपेति । यामि । शर्म ॥
शिशानः । अग्निः । क्रतुभिरिति क्रतु–भिः । समिद्ध इति सम्–इद्धः ।
सः । नः । दिवा ( ६ ) । सः । रिषः । पातु । नक्तम् ॥ ५

निन्दायाः परकर्तृकायाः । "अवद्यात्" परिवादात् परकर्तृकात् "अस्मान्" "पाहि । उभयत्र " सावेकाचः* " ( पा ६-१-१६८ ) इति विभक्तेरुदात्तत्वम् । तृतीयस्य तु " अवद्यपण्य " ( पा ३-१-१०१ ) इति निपातनात्, " ययतोश्चातदर्थे " ( पा ६-२-१५६ ) इत्युत्तरपदान्तोदात्तत्वम् ॥ हे "मित्रमहः, सर्वस्य मित्रवदुपकारकं महस्तेजो यस्य स तादृशः ॥ १०

अथ पुरोनुवाक्या—' रक्षोहणम् ' इति ॥ " रक्षोघ्नी याज्यानुवाक्ये भवतः " ( तैसं २-२-२ ) इति च ब्राह्मणम् । रक्षसां हन्तारं "वाजिनम् अन्नवन्तम् अन्नस्य दातारम् "आ "जिघर्मि अनेन हविषा आभिमुख्येन संदीपयामि । घृ क्षरणदीप्त्योः जुहोत्यादिकः । " बहुलं छन्दसि " ( पा ७-४-७८ ) इत्यभ्यासस्येत्वम् । "मित्रं सर्वेषां सुहृद्भूतम् । मीतेः[२७] दुःखात् त्रायकम् । "प्रथिष्ठं पृथुतमम् । यद्वा—प्रथयितृतमम् । प्रथितृशब्दात् " तुश्छन्दसि " ( पा ५-३-५९ ) इतीष्ठन्, " तुरिष्ठेमेयःसु " ( पा ६-४-१५४ ) इति तृलोपः । ईदृशं तं "शर्म शरणम् "उप "यामि रक्षकं भजे । स च "क्रतुभिः "समिद्धः प्रज्ञाभिः संदीप्तः अस्मदीयैर्वा यजनैः प्रवृद्धतेजाः । "अग्निः अङ्कनादिगुणयुक्तः, "शिशानः तीक्ष्णीभवन् । श्यतेर्व्यत्ययेनात्मनेपदम् १५

रक्षोहणमिति ॥ अथ षोडशी । सा तु पुरोनुवाक्या—" रक्षोहणं वाजिनमा जिघर्मि मित्रं प्रथिष्ठमुप यामि शर्म । शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा स रिषः पातु नक्तम् " इति । रक्षसां हन्तारमन्नवन्तमग्निमाभिमुख्येन दीपयामि । जगतां "मित्रं [२४]—"प्रथिष्ठं विस्तीर्णतमं—[२४] "शर्म शरणम् "उप "यामि भजामि । एतदादिभिः "क्रतुभिः "समिद्धः संज्वलितः[२५] "शिशानः तीक्ष्णः "सः "अग्निः "दिवा "रिषः हिंसकात् अस्मान् "पातु, "स एव "नक्तम् अपि पातु ॥ २०

*[ द्र. पा. ६-१-११६ ] २७. मै–मिदः (?); तं–मिदोः (?) ।

२४–२४. इ.स.पा.भां–पृथु प्रथनेन । २५. आ.क–संज्वलितः; इ.उ.तं.पा.भां.हा–ज्वालितः । २५

वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा ।
प्रादेवीर्मायाः सहते दुरेवाः शिशीते शृङ्गे रक्षसे विनिक्षे ॥

वीति । ज्योतिषा । बृहता । भाति । अग्निः ।
आविः । विश्वानि । कृणुते । महित्वेति महि-त्वा ॥
प्रेति । अदेवीः । मायाः । सहते । दुरेवा इति दुः-एवाः ।
शिशीते । शृङ्गे इति । रक्षसे । विनिक्ष इति वि-निक्षे ॥

( पा ३.१.८५ ) । "बहुल छन्दसि" ( पा २ ४.७६ ) इति शपः श्लु । अभ्यासस्येत्वम् ( पा ७ ४ ७८ ) । "अभ्यस्तानामादि." ( पा ६ १ १८९ ) आद्युदात्तत्वम् । ईदृश न न अस्मान् दिवा च नक्तं च रिप पातु दुःखात् रक्षतु । हिंस्राद्वा रक्षःप्रभृतेरस्मान् पातु । पूर्ववत् विभक्तेरुदात्तत्व "सावेकाच." ( पा ६.१ १६८ ) इति ॥

अथ याज्या—'वि' इति । अयम् अग्निः बृहता ज्योतिषा महता तेजसा इत्थभूत सन् वि भाति विशेषेण भाति महाननेनास्मदीयेन हविषा । "बृहन्महतोरुपसङ्ख्यानम्" ( पा ६ १.१७३ वा १ ) इति तृतीयाया उदात्तत्वम् । किंच विश्वानि महित्वा माहात्म्यानि । "शेश्छन्दसि" ( पा ६.१ ७० ) इति लोप । आविः कृणुते आविष्कुर्वीत । किंच अदेवी अदेवनशीला आसुरी माया प्र सहते अभिभवेत् । दुरेवा दुःखेनैतव्या. दुष्प्रधर्षा इति यावत् । एतेर्वं ( उ १५८ निरुक्त २.२५ ), कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६.२.१३९ ) । किंच शृङ्गे शृङ्गस्थानीये प्रधाने आत्मीये ज्वाले शिशीते तीक्ष्णीकुरुते । श्यतेर्व्यत्ययेन आत्मनेपदम् ( पा ३ १.८५ ) । पूर्ववत् शपः श्लु ( पा २ ४ ७६ ), इत्व चाभ्यासस्य ( पा ७ ४ ७८ ) । "तास्यनुदात्तेत्" ( पा ६ १ १८६ ) इति लसार्वधातुकानुदात्तत्वे "अनुदात्ते च" ( पा ६ १ १९० ) इत्याद्युदात्तत्वम् । किमर्थं शिशीत इत्याह—रक्षसे

वीति ॥ अथ सप्तदशी । सा तु याज्या—"वि ज्योतिषा बृहता भात्यग्निराविर्विश्वानि कृणुते महित्वा । प्रादेवीर्माया सहते दुरेवा शिशीते शृङ्गे रक्षसे विनिक्षे" इति । अयम् अग्निः बृहता ज्योतिषा वि भाति । विश्वानि महित्वा माहात्म्येनाऽऽविष्कुरुते । अदेवी आसुरी दुरेवा दुरत्यया माया२६ प्र सहते विनाशयति । रक्षसे राक्षसान् विनिक्षे विनाशयितुं शृङ्गे द्वे ज्वाले शिशीते तीक्ष्णीकरोति ॥

२६ इ च पा भा दा–'माया' नास्ति ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

उत स्वानासो दिवि षन्त्वग्नेस्तिग्मायुधा रक्षसे हन्तवा उ।
मदे चिदस्य प्र रुजन्ति भामा न वरन्ते परिबाधो अदेवीः॥ १४॥

[ अघशंस्सः स ते जरताः रुजामि ह द्विवेकचत्वारिंशच्च ]

उत । स्वानासः । दिवि । सन्तु । अग्नेः ।
तिग्मायुधा इति तिग्म—आयुधाः । रक्षसे । हन्तवै । उ ॥
मदे । चित् । अस्य । प्रेति । रुजन्ति । भामाः ।
न । वरन्ते । परिबाध इति परि—बाधः । अदेवीः ॥ १४ ॥

[ आपं उन्दन्त्वाकूत्यै देवानियं ते वरूत्र्यस्यंशुना ते सोमं त उदायुषा प्र च्यवस्वाग्नेरातिथ्यमः-
शुरंशुर्वित्तायनी मेऽसि युञ्जते कृणुष्व पाजश्चतुर्दश ]

[ आपो वरूत्र्यसि या तवेयं गीश्चतुस्त्रिंशत् ] [ आपं उन्दन्त्वदेवीः ]

१०

"विनिक्षे रक्षोविनाशार्थम् । पूर्ववत् कर्मणः संप्रदानत्वम् । विनिक्षे। णिक्षि चुम्बने । " कृत्यार्थे तवैकेन् " ( पा ३·४·१४ ) इति केन्प्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६.२.१३९ ) । ज्वालाभ्यां रक्षसश्चुम्बनं दाह एव । रक्षसो दाहार्थं शृङ्गे तीक्ष्णीकरोत्विति । यद्वा— णिजेः शोधनकर्मणः " तुमर्थे सेसेनसे " ( पा ३·४·९ ) इति क्सेप्रत्ययः । " परादिश्छन्दसि बहुलम् " ( पा ६·२·१९९ ) इत्युत्तरपदाद्युदात्तत्वम् । सनि ( पा ३.१.७ ) वा व्यत्ययेन गुणाभावः । विनाशे बन्धनं विनाशनमेव ॥ १५

अथ याज्याविकल्पः, उपहोमार्था वा—' उत ' इति ॥ "स्वानासः स्वनं कुर्वन्तः हविः-प्रक्षेपसमुपजनितमहाशब्दाः । स्वनतेर्व्यत्ययेन कर्तरि घञ् ( पा ३.१.८५ ) । " आजसेरसुक् "

उतेति ॥ अथाष्टादशी । सा तु विकल्पिता याज्या—" उत स्वानासो दिवि षन्त्वग्नेस्तिग्मा-युधा रक्षसे हन्तवा उ। मदे चिदस्य प्र रुजन्ति भामा न वरन्ते परिबाधो अदेवीः " इति । तिग्मं [27]तीक्ष्णत्वमेवाऽऽयुधं येषां रश्मीनां ते "तिग्मायुधाः । ते तव "स्वानासः अनेन पुरोडाशेन ध्वनिं कुर्वन्तः सादराः "अग्नेः रश्मयः "उत "दिवि "षन्तु द्युलोकेऽपि प्रसरन्तु । किमर्थम् ? "रक्षसे "हन्तवै "उ राक्षसान् हन्तुमेव । "अस्य अग्नेः "भामाः भासो रश्मयो "मदे "चित् अस्मद्धर्षायैव "प्र "रुजन्ति प्रतिपक्षिणो [28]भञ्जयन्ति । "अदेवीः आसुर्यः "परिबाधः सर्वतः कृताः बाधाः "न "वरन्ते नैवास्मानावृण्वन्ति ॥ अत्र षोडशी विकल्पिता सामिधेनी । उत्तरे याज्यानुवाक्ये इति केचित् । तथा वाऽस्तु ॥ २०

२५

[27] क,हा—तीक्ष्णं त्वमेवा° । [28] आ—भञ्जन्ति ।

(पा ७ १ ५० )। "वर्षान्त " ( पा ६ १ १५९ ) इत्यन्तोदात्तत्वम् । ईदृशा ᵛअग्ने रश्मय उत ᵛदिवि दिव्यपि ᵛसन्तु सर्वत्राकाशे विजृम्भन्ताम् । छान्दस पत्वम् । "ऊडिदम् " ( पा ६ १ १७१ ) इति विभक्तेरुदात्तत्वम् । स्वाना इति रश्मिनामेति केचित् । ᵛतिग्मायुधा तीक्ष्णायुधा । तिग्म तैक्ष्ण्यमेव आयुधस्थानीय शत्रूणा वेधकत्वात् येषा ते तव रश्मय दिव्यपि
५ प्रकाशन्ताम् । किमर्थम् ? ᵛरक्षसे ᵛहन्तवे रक्षोवधार्थम् । हन्ते कृत्यार्थे भावे तवैप्रत्यय (पा ३ ४ ९)। ᵛप्र ᵛरुजन्तु प्रकर्षण भक्षयन्तु हर्वापि । रुजो भङ्गे तौदादिक । यद्वा— ᵛमामा क्रोधनशीला अस्य रश्मय प्र रुजन्तु प्रकर्षेण रक्ष प्रभृत्यपि भक्षयन्तु। ᵛमदे ᵛचित् मदायैव ᵛअस्य। यद्वा—उपमानार्थश्चिच्छब्द ( इ नि १ ४ )। महसि* वर्तमानस्यास्य यथा रश्मयो विश्व दहन्ति, एवमस्मद्रिपून् भक्षयन्त्विति । एवमस्मद्विपये प्रवर्तमानमेनमग्निम् ᵛअदेवी अदेव्य आसुर्य
१० ᵛपरिबाध पीडा ᵛन ᵛवरन्ते न वृण्वन्तु न प्राप्नुवन्तु । वृञो वृङो वा व्यत्ययेन शप् । परिपूर्वाद्बाधते सपदादिलक्षण क्विया क्विप् ( पा ३.३ १०८ वा ९ )। कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६ २ १३९ ) ॥

॥ इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये
प्रथमे काण्डे द्वितीयप्रपाठके चतुर्दशोऽनुवाक ॥

१५ ॥ प्रथमकाण्डे द्वितीय प्रपाठक समाप्त ॥

---

अत्र विनियोगसंग्रह —

१ " कृणु राक्षोघ्नके यागे सामिधेन्यस्तु षोडश ।
याज्यानुवाक्ये द्वे अष्टादशमन्त्रा इहेरिता ॥ १ ॥ " इति

मीमांसा तु 'उभा वामिन्द्राग्नी' (तैसं १ १.१४) [२९]-इत्यत्रैव सर्वत्र याज्याकाण्डे
२० योजनीया[२९] ॥

छन्दोऽपि सर्वासामृचामत्र त्रिष्टुबेव ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके चतुर्दशोऽनुवाक ॥ १४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
२५ पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वर ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञा परिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे द्वितीयः प्रपाठक ॥ २ ॥

---

* [ शुद्धीकृत पाठ । लिखितपुस्तकेषु मैसूरमुद्रितपुस्तके च ' महसे ' इत्युपलभ्यते । ] ।

---

३० २९–२९ पा–इत्यत्रैव याज्याकाण्डे योजनीयम् , त म२–इत्यत्रैव सर्वत्र याज्याकाण्डे योजनीया, हा–इत्यत्रैव याज्याकाण्डे योजनीया ।

# ( अथ प्रथमकाण्डे तृतीयः प्रपाठकः )

**हरिः ॐ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामा ददे-**

देवस्य । त्वा । सवितुः । प्रसव इति प्र–सवे । अश्विनोः । बाहुभ्यामिति बाहु-भ्याम् । पूष्णः । हस्ताभ्याम् । एति । ददे ।

अतः परमध्वरकाण्डं सोमार्थयम् । तत्रौदुम्बर्यवटपरिलेखनार्थमभ्रिमादत्ते—'देवस्य त्वा' इति ॥ व्याख्यातं ( तैसं १·१·४ ) चैतत् । हे अभ्रे, त्वाम् [५]आ [५]ददे इति । [१]सावित्रस्यैवायं शेषः[१] ॥

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

[१]द्वितीये प्रपाठके सोमक्रयं प्राधान्येन प्रतिपाद्य ततो [२]हविर्धानमण्डपनिर्माणपर्यन्तं कर्मजातं प्रतिपादितम् । अथ तृतीयेऽस्मिन् प्रपाठकेऽग्नीषोमीयपशुः प्राधान्येन प्रतिपाद्यते । आदौ तावत् पूर्वशेषः सदोमण्डपनिर्माणादिः प्रतिपाद्यते । तत्रानुवाकार्था विनियोगसंग्रहकारेणाभिहिताः —

" पशुप्रश्ने तृतीयेऽस्मिन्ननुवाकाश्चतुर्दश ।
सदश्चोपरवा धिष्ण्या वैसर्जनहुतिस्तथा ॥ १ ॥

यूपच्छेदस्तत्प्रतिष्ठा पशूपाकृतिर्हिंसने ।
वपोरखेदो वसाहोमो शुद्काण्डाहुतिस्तथा ॥ २ ॥

वसतीवर्युपादानं सोमोपावहृतिस्तथा ।
काम्ययाज्या इति प्रोक्ता अर्था अत्रानुवाकगाः " ॥ ३ ॥

**देवस्येति** ॥ कल्पः—" अथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य शालामुखीयाच्छङ्कोरनुसम्यान्षट् प्राचः प्रक्रमान् प्रक्रामति दक्षिणा सप्तमम् । [३]तदभ्रिं निदधाति । स औदुम्बर्यै कालः । औदुम्बर्यै कालादभ्रिमादत्ते । देवस्य त्वां सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद इति " ( बौश्रौ ६·२५–२६ ) इति ॥ [४]अभ्र्यादानं विधत्ते—"देवस्य त्वा सवितुः प्रसवे [५]इत्यभ्रिमादत्ते प्रसूत्यै अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै " ( तैसं ६·२·१० ) इति ॥

१–१. ति–सावित्रमध्ये वा अयं विशेषः ।

१. आ–द्वितीयस्मिन् । २. इ.उ.तं.त्रि२.पा.म२.मै.हा–हविर्धाननिर्माण° । ३. आ.क–तत्राभ्रिम्; म३–ततोऽभ्रिम् । ४. इ.उ.तं.त्रि२.पा.म२.म३.मै१–कालस्थानम् । ५. तं.म२–इति स्फ्यमादत्ते ।

-ऽभ्रिरसि नारिरसि परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान् द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपि कृन्तामि

अभ्रिः । असि । नारिः । असि । परिलिखितमिति परि-लिखितम् । रक्षः । परिलिखिता इति परि-लिखिता । अरातयः । इदम् । अहम् । रक्षसः । ग्रीवाः । अपीति । कृन्तामि । यः ।
५ अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । इदम् । अस्य । ग्रीवाः । अपीति । कृन्तामि ।

तामभिमन्त्रयते—'अभ्रिरसि' इति ॥ ⁷अभ्रिः कठिनमपि प्रदेशं भित्त्वानुप्रवेष्टुं समर्था ⁷असि । एवं नाम तीक्ष्णासीत्यर्थः । अभ्र गतौ । "इन् सर्वधातुभ्यः" (उ ५६७) इति इन्प्रत्ययः । यद्वा—अपो बिभर्तीत्यभ्रिः । यागसाधनद्वारेण वृष्टिहेतुत्वात् तीक्ष्णीकरणाय कर्मकारेण पायितोदकत्वाद्वा । अप् शब्द उपपदे बिभर्तेः "अच इः" (उ ५८८) इतीप्रत्ययः ।
१० बहुलवचनाद्गुणो न क्रियते । स्वरानवग्रहौ चिन्त्यौ, व्यत्ययो वा (पा ३ १·८५) । कथं पुनरियं तीक्ष्णेति ज्ञायते इत्याह—⁷नारिः ⁷असि । नृ नये । "पुंसि संज्ञायां घः" (पा ३ ३·११८) । नरः नेता निपुणः कर्मकारः, तस्यापत्यमसि, तेनोत्पादितत्वात् । यद्वा—
"नयतेर्डिच्चोपश्च" (पा ६ ४ १४४) इति ऋप्रत्यये ना, तस्यापत्यमिति बाह्वादेराकृतिगणत्वात् (पा ४ १ ९६) इञ्प्रत्ययः । एवं वा—यद्यपि त्वं² तीक्ष्णतया हिंसिकासि, तथापि³ मम
१५ नारिरसि अरिर्न भवसि मित्रमेवासि । "सुप्सुपा" (द्र. पामा २ १ ४ वा १) इति प्रतिषेधवचनो नशब्दः समस्यते । सानुबन्धकस्येत्नलोपेन भाव्यम् (द्र पा ६ ३ ७३) । अव्ययपूर्वपदप्रकृतिस्वरत्वं (पा ६ २·२) व्यत्ययेन, "अव्यये नञ्कुनिपातानाम्" (पा ६ २·२ वा ३) इति वचनात् । शान्त्यर्थं चैवमियमुच्यते—"वज्र इव वा एषा यदभ्रिरभ्रिरसि नारिरसीत्याह शान्त्यै" (तैस ६ २·१०) इति ब्राह्मणम् ॥
२० तयावटं परिलिखति—'परिलिखितम्' इति ॥ 'अपि कृन्तामि' इत्यन्तो मन्त्रो व्याख्यातः (तैस १ २ ५) ॥

अभ्रिरिति ॥ कल्पः—"आदायाऽभिमन्त्रयतेऽभ्रिरसि नारिरसीति" (बौश्रौ ६·२६) इति ॥ खननसाधनभूता काष्ठमयी तीक्ष्णाग्राऽभ्रिरित्युच्यते । यद्यपि त्वम् ⁷अभ्रिः ⁷असि तथाप्यस्मान् प्रति ⁷नारिः ⁷असि अशत्रुः असि ॥ नारिशब्दप्रयोजनमाह—"वज्र इव वा एषा यदभ्रिरसि नारिरसीत्याह शान्त्यै"
२५ (तैसं ६ २·१०) इति ॥

परिलिखितमिति ॥ कल्पः—"तयौदुम्बर्या अवटं परिलिखति परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान् द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपि कृन्तामीति" (बौश्रौ ६ २६) इति ॥ परिलेखनप्रयोजनमाह—"काण्डेकाण्डे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति परिलिखितꣳ रक्षः परिलिखिता अरातय इत्याह रक्षसामपहत्या इदमहꣳ रक्षसो ग्रीवा

३० २ मै–'त्वम्' नास्ति । ३ मै–'तथापि' इत्यस्यानन्तरं 'त्वम्' ।

६ आ क ना हा–तीक्ष्णमुखाग्रा । ७ आ क ना हा–'असि' नास्ति ।

दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वा शुन्धतां लोकः पितृषदनो यवोऽसि यवयास्मद्द्वेषो (१) यवयारातीः

दिवे । त्वा । अन्तरिक्षाय । त्वा । पृथिव्यै । त्वा । शुन्धताम् । लोकः । पितृषदन इति पितृ-सदनः । यवः । असि । यवय । अस्मत् । द्वेषः (१) । यवय । अरातीः ।

अग्रादारभ्यौदुम्बरीं प्रोक्षति—'दिवे त्वा' इति ॥ बर्हिःप्रोक्षणे व्याख्यातम् ( तैसं १.१.११ ) । द्युलोकादिस्थित्यर्थं त्वां प्रोक्षामि इत्यौदुम्बर्या अग्रमध्यमूलानि पृथक् पृथक् प्रोक्ष्यन्ते । "परस्तादर्वाचीम्" ( तैसं ६.२.१० ) इत्यादि ब्राह्मणम् ॥

अवटे अपोऽवनयति—'शुन्धताम्' इति ॥ पितरः सीदन्त्यस्मिन्निति पितृषदनः । अधिकरणे ल्युट् ( पा ३.३.११७ ) । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६.२.१३९ ) । लित्स्वरेण ( पा ६.१.१९३ ) सदनशब्द आद्युदात्तः । सुषामादित्वात् षत्वम् ( पा ८.३.९८ ) । ईदृशोऽयं लोकः अवटाख्योऽवकाशः शुन्धतां शुद्धो भवतु । व्यत्ययेनात्मनेपदम् ( पा ३.१.८५ ) । "अदुपदेशात्" ( पा ६.१.१८६ ) लसार्वधातुकानुदात्तत्वे धातुस्वरः । "क्रूरमिव वा एतत् करोति यत्खनत्यपोऽवनयति शान्त्यै" ( तैसं ६.२.१० ) इति ब्राह्मणम् ॥

अवटे यवान् प्रक्षिपति—'यवोऽसि' इति ॥ यावयति अपनयति क्षुधमिति यवः । यौतेः पृथग्भावकर्मणोऽन्तर्भावितण्यर्थात् "पुंसि संज्ञायां घः०" ( पा ३.३.११८ ) । वृषादित्वा-

---

अपि कृन्तामि योऽस्मान् द्वेष्टि यं च वयं द्विष्म इत्याह द्वौ वाव पुरुषौ यं चैव द्वेष्टि यश्चैनं द्वेष्टि तयोरेवान-न्तरायं ग्रीवाः कृन्तति" ( तैसं ६.२.१० ) ॥

दिव इति ॥ बौधायनः—"औदुम्बर्येषा[8] स्थूणा प्रक्षालिता प्रपन्ना भागवदात्रुपशेते तां परस्ता-दर्वाचीं प्रोक्षति दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेति" ( बौश्रौ ६.२६–२७ ) इति । आपस्तम्बः—"दिवे त्वेत्यग्रं प्रोक्षति अन्तरिक्षाय त्वेति मध्यं पृथिव्यै त्वेति मूलम्" ( आपश्रौ ११.९.१२ ) इति ॥ प्रोक्षामीत्यध्याहारः । औदुम्बरीभागानां लोकत्रयात्मकत्वं[9] मन्त्रेणाभिप्रेतमित्याह—"दिवे त्वाऽन्त-रिक्षाय त्वा पृथिव्यै त्वेत्याहैभ्य एवैनां लोकेभ्यः प्रोक्षति" ( तैसं ६.२.१० ) इति ॥ अग्रमारभ्य मूलपर्यन्तं प्रोक्षणं विधत्ते—"परस्तादर्वाचीं प्रोक्षति तस्मात् परस्तादर्वाचीं मनुष्या ऊर्जमुप जीवन्ति" ( तैसं ६.२.१० ) इति । ऊर्ध्ववर्तिनो [10]मुखादारभ्य अर्वाचीमुदरावसानाम्[11] ॥

शुन्धतामिति ॥ कल्पः—"अवटेऽपोऽवनयति शुन्धतां लोकः पितृषदन इति" ( बौश्रौ ६.२७ ) इति ॥ पितरः सीदन्त्यस्मिन्निति पितृषदनः अवटाख्यः लोकः शुद्धो भवतु ॥ [12]अपवनयनं विधत्ते—"क्रूरमिव वा एतत् करोति यत्खनत्यपोऽव नयति शान्त्यै" ( तैसं ६.२.१० ) इति ॥

यवोऽसीति ॥ कल्पः—"यवान् प्रस्कन्दयति यवोऽसि यवयास्मद्द्वेषो यवयारातीरिति" ( बौश्रौ ६.२७ ) इति । हे धान्य, त्वं यवः असि अमिश्रीकर्ताऽसि । अतो द्वेषिणो राक्षसानितरानपि

---

८. इ.उ.क.ना.पा.म२.हा—उदुम्बर्येषा । ९. म२—अंशत्रयात्मकत्वम् । १०. आ.क.हा—मुख्या-द्वारभ्य । ११. आ.कं.त्रि२.ना.हा—°वसानम् । १२. ना—अपां नयनम् ।

पितृणाꣳ सदनमस्युद्दिवꣳ स्तभानाऽन्तरिक्षं पृण पृथिवीं दृꣳह

पितृणाम् । सदनम् । असि । उत् । दिवम् । स्तभान । आ । अन्तरिक्षम् । पृण । पृथिवीम् । दृꣳह ।

दाद्युदात्तत्वम् ( पा ६ १ २०३ )। बहुलग्रहणाद्वा कर्तरि "ऋदोरप्" ( पा ३ ३ ५७ )
५ इत्यप्। जात्याख्यायामेकवचनम् ( द्र पा १ २ ५८ )। ईदृशस्त्वम् [v]अस्मत् अस्मत्त [v]द्वेष. द्वेष्य
रक्षःप्रभृति [v]यवय अपनय विनाशय । यौतेर्णिचि " सञ्ज्ञापूर्वको विधिरनित्यः " ( व्याडिपरिभाषा
६४ ) इति वृद्धिर्न क्रियते। तिङ परत्वान्न निहन्यते ( द्र. पा ८.१ २८ )। यद्वा—द्विषे
" अन्येभ्योऽपि दृश्यन्ते " ( पा ३ २ ७५ ) इति विच्। द्वेष * द्वेष्टॄन् विनाशय। किंच [v]अराती
अदातॄन् शत्रूंश्च [v]यवय। राते कर्तरि क्तिनि ( द्र. पा ३.३ ९४ ) क्तिचि ( द्र ३.३ १७४ )
१० वा नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् ( पा ६.२ २ )। अस्मदीयाश्च शत्रून् नाशयेत्यर्थ ।
अपदात् परत्वादिदमाख्यात न निहन्यते ( द्र.पा ८ १.२८ )। " ऊर्जे यव " ( तैस ६.२ १० )
इत्यादि ब्राह्मणम् ॥

तस्मिन् व्यतिपज्य बर्हिर्मुष्टिं निदधाति[४]—' पितृणाम् ' इति ॥ सीदन्त्यस्मिन्निति
[v]सदनम् आसनम् । अधिकरणे ल्युट ( पा ३ ३ ११७ )। लित्स्वरेणाद्युदात्तत्वम् ( पा ६ १.

१५ शत्रूनस्मत्तो वियोजय ॥ पूर्वोक्तास्वप्सु यवप्रस्कन्दन विधत्ते—" यवमतीरव नयत्यूर्जै यव ऊर्गुदुम्बर
ऊर्जैवोर्जꣳ समर्धयति " ( तैसं ६.२.१० ) इति ॥ औदुम्बर्या निखातभागादूर्ध्वभागे प्रमाणं विधत्ते—
" यजमानेन संमितौदुम्बरी भवति यावानेव यजमानस्तावतीमेवास्मिन्नूर्जं दधाति " ( तैस ६.२.१० )
इति । यजमानस्य यावत् पर्याप्तं तावदन्न भवतीत्यर्थ ॥

पितृणामिति ॥ कल्प —" बर्हिर्हस्त व्यतिषज्यावस्तृणाति पितृणाꣳ सदनमसीति । "
२० ( बौश्रौ ६ २७ ) इति ॥ बर्हिर्हस्तो बर्हिर्मुष्टि । [११]हे बर्हि [१२], [v]पितृणा स्थानम् [v]असि ॥ विधत्ते—
" पितृणाꣳ सदनमसीति बर्हिरवस्तृणाति पितृदेवत्यꣳ ह्येतद्यन्निखातम् " ( तैस ६.२.१० ) इति ।
' निखातस्य पितरो देवता ' ( द्र तैस ६ ३ ४ ) इत्यर्थवादान्तरादवगन्तव्यम् ॥

उद्दिवमिति ॥ कल्प —" अथैनामुच्छ्रयति उद्दिवꣳ स्तभानान्तरिक्ष पृण पृथिवीं दृꣳहेति "
( बौश्रौ ६.२७ ) इति ॥ हे औदुम्बरि, द्युलोकमूर्ध्वदेशे विधारय [v]अन्तरिक्ष पूरय [v]पृथिवीं दृढीकुरु ॥
२५ उच्छ्रयण विधत्ते—" यद्बर्हिरनवस्तीर्य मिनुयात् पितृदेवत्या निखाता स्याद्बर्हिरवस्तीर्य मिनोत्यस्यामेवैना
मिनोत्यथो स्वारुहमेवैना करोति " ( तैस ६.२.१० ) इति । [१५]यदि बर्हिरस्तीर्त्वा प्रथमत एव समुच्छ्रयेत
तदा पितृणा निखात, मनुष्याणामूर्ध्वं निखातात् इत्ययं विभागो न स्यात्, किंतु इयत्साऽपि पितृदेवत्यैव
स्थापिता भवेत्। बर्हिष पृथिव्यात्मत्वेन [१५]तत्पृथिव्यामेव कृतं भवति। किंच स्वसबद्धामेवैना करोतीति
नोक्तदोष ॥ मन्त्रे ' दिवम् ' इत्यादिपदानाम् उपयोगमाह—" उद्दिवꣳ स्तभानाऽन्तरिक्षं पृणेत्याहैषा
३० लोकानां विधृत्यै " ( तैस ६ २ १० ) इति ॥

* [ द्विप द्वेषभ्वन द्वेष्टॄनित्यर्थं । ] । ४ त.ति पं—' निदधाति ' इत्यस्यानन्तरम् ' अवस्तृणाति ' ।

११–१२ इ उ.नि२.ना पा हा—' हे बर्हि ' नास्ति । १४ इ उ.ना पा हा—यत् । १५. नि२–
तत्पितृभ्यामेव, क—तत्पितृदेवत्यमेवम् ।

द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणयोर्ध्रुवेण धर्मणा

द्युतानः । त्वा । मारुतः । मिनोतु । मित्रावरुणयोरिति मित्रावरुणयोः । ध्रुवेण । धर्मणा ।

१९३ ) । पितृणाम् आसनम् असि । " नामन्यतरस्याम् " ( पा ६-१-१७७ ) इति षष्ठीबहुवचनस्योदात्तत्वम् । " छन्दस्युभयथा " ( पा ६-४-५ ) इति " नामि " ( पा ६-४-३ ) इति दीर्घत्वं न क्रियते । " पितृदेवत्यं ह्येतत् " ( तैसं ६-२-१० ) इत्यादि ब्राह्मणम् ॥ ५

औदुम्बरीमुच्छ्रयति—' उद्दिवम् ' इति ॥ हे औदुम्बरि, दिवं दिविष्ठान् उत् स्तभान उत्तम्भय धारय । स्तम्भुः सौत्रो धातुः । " स्तम्भुस्तुम्भु " ( पा ३-१-८२ ) इति श्नाप्रत्ययः । " हलः श्नः शानज्झौ " ( पा ३-१-८३ ) इति शानजादेशः । तया अन्तरिक्षम् अन्तरिक्षस्थान् पृण प्रीणय । पृण प्रीणने इति तौदादिकः । तया पृथिवीं पृथिवीस्थान् दृंह वर्धय । दृह दृहि वृद्धौ । पृथिवीशब्दो ङीपन्तोऽन्तोदात्तः ॥ १०

प्राचीनकर्णामौदुम्बरीं मिनोति—' द्युतानस्त्वा ' इति द्विपदया विराजा जगत्या वा ॥ द्योतनशीलो द्युतानः । द्युतेस्ताच्छीलिकश्चानश् ( पा ३-२-१२९ ) । " बहुलं छन्दसि " ( पा २-४-७३ ) इति शपो लुक् । यद्वा—" युधिबुधिदृशां किच्च " ( द्र. उ २५६ ) इति विधीयमान आनच्प्रत्ययो बहुलवचनात् द्युतेरपि भवति । सर्वथा सार्वधातुकत्वाभावात् " अनुदात्तेतः " ( पा ३-२-१४९ ) इति लसार्वधातुकानुदात्तत्वस्याप्रवृत्तेः " चितः " ( पा ६-१-१६३ ) इत्यन्तोदात्तत्वमेव प्रवर्तते । हे औदुम्बरि, द्युतानः मारुतः त्वां मिनोतु अवटे प्रक्षिपतु । द्युताननामा वा मारुतस्त्वां मिनोतु । " द्युतानो ह स्म वै " ( तैसं ६-२-१० ) इत्यादि ब्राह्मणम् । डुमिञ् प्रक्षेपणे सौवादिकः । मरुच्छब्दात् प्रज्ञादित्वात् स्वार्थिकोऽण्प्रत्ययः ( पा ५-४-३८ ) । मित्रावरुणसंबन्धिना ध्रुवेण नित्येन धर्मणा कर्मणा धारणेन वा त्वां मिनोतु । " देवताद्वन्द्वे च " ( पा ६-२-१४१ ) इति मित्रावरुणशब्दे पूर्वोत्तरपदयोर्युगपत् प्रकृतिस्वरत्वम् । " उदरं वै सदः " ( तैसं ६-२-१० ) इत्यादि ब्राह्मणम् ॥ १५ २०

द्युतानस्त्वेति ॥ कल्पः—" अथैनां प्राचीनकर्णां मिनोति[16] द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणयोर्ध्रुवेण धर्मणेति " ( बौश्रौ ६-२७ ) इति[17] ॥ हे औदुम्बरि[18], मित्रावरुणयोः संबन्धिना दृढेन त्वदीयधारणेनेतस्ततः पतितां त्वां मरुत्पुत्रो द्युताननामको देवोऽवटे प्रक्षिपतु ॥ इतरपरित्यागेन द्युतानस्वीकारकारणमाह—" द्युतानस्त्वा मारुतो मिनोत्वित्याह द्युतानो ह स्म वै मारुतो देवानामौदुम्बरीं मिनोति तेनैवैनां मिनोति " ( तैसं ६-२-१० ) इति ॥ २५

५-५. तै.ति.पं—पितृणां त्वं सदनम् । ६. पं—परिमिनोति ।

१६. आ.इ.क.ना.पा.हा—उच्छ्रितामवटे प्रक्षिपतु । १७. त्रिर.मै—' इति ' इत्यस्यानन्तरं ' कण्ठोप्रता तिर्यक्शाखा सा यथा प्राचीना भवति तथा तामुच्छ्रितामवटे प्रक्षिपेत् । १८. इ.उ.ना.पा.हा—उदुम्बरि । ३०

[ हविर्धानमण्डपनिर्माणम्

ब्रह्मवनिं त्वा क्षत्रवनिं सुप्रजावनिं रायस्पोषवनिं पर्यूहामि ब्रह्म दृꣳह क्षत्रं दृꣳह
प्रजां दृꣳह रायस्पोषं दृꣳह घृतेन द्यावापृथिवी आ पृणेथामिन्द्रस्य

ब्रह्मवनिमिति ब्रह्म—वनिम् । त्वा । क्षत्रवनिमिति क्षत्र—वनिम् । सुप्रजावनिमिति सुप्रजा वनिम् ।
रायस्पोषवनिमिति रायस्पोष—वनिम् । परीति । ऊहामि । ब्रह्म । दृꣳह । क्षत्रम् । दृꣳह ।
५ प्रजामिति प्र—जाम् । दृꣳह । राय । पोषम् । दृꣳह । घृतेन ।
द्यावापृथिवी इति द्यावा—पृथिवी । एति । पृणेथाम् । इन्द्रस्य ।

पुरीषेणौदुम्बरीं प्रदक्षिणं पर्यूहति—'ब्रह्मवनिम्' इति ॥ ब्रह्म ब्राह्मणान् वनति सभजत इति ब्रह्मवनि । "छन्दसि वनसनरक्षिमथाम्" ( पा ३ २ २७ ) इति इन्प्रत्यय । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६ २ १३९ ) । एव [19]क्षत्रवनिं [19]सुप्रजावनिं [19]रायस्पोषवनिम्
१० इति । "षष्ठ्या आक्रोशे" ( पा ६·३ २१ ) इत्यनाक्रोशेऽपि बहुलवचनात् षष्ठ्या अलुक् । "षष्ठ्याः पतिपुत्र" ( पा ८·३·५३ ) इति विसर्जनीयस्य सत्वम् । एवगुणा त्वामौदुम्बरीं परित सर्वत [20]ऊहामि स्थापयामि, पुरीषेणावृष्ट पूरयित्वा स्थिरां करोमीत्यर्थ ॥ "उपसर्गादस्यत्यूह्योर्वावचनम्" ( पा १ ३ २९ वा ३ ) इति परस्मैपदम् ॥

मैत्रावरुणदण्डेन संहन्ति—'ब्रह्म दृंह' इति ॥ हे मैत्रावरुणदण्ड, ब्राह्मणादीन् [21]दृंह
१५ वर्धय । प्रजाशब्द· कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्त ( पा ६ २ १३९ ) । रैशब्दात् परस्या षष्ठ्या "ऊडिदम्" ( पा ६ १ १७१ ) इत्यादिनोदात्तत्वम् ॥

औदुम्बरीविशाखयोर्मध्ये विशाखाग्रयोर्वा हिरण्य निधाय स्रुवेणाभिजुहोति—'घृतेन' इति ॥ हे द्यावापृथिवीरूपस्थानीये औदुम्बरीमूलाग्रे, [22]घृतेन आत्मानम् [22]आपृणेथां प्रीणयतम् । द्यावापृथिव्यावेव वा उदकेन प्रीणयतम् । "द्यावापृथिवी एव रसेनानक्ति" ( तैस ६·२ १० )
२० इति ब्राह्मणम् । पृणातेर्व्यत्ययेनात्मनेपदम् ( पा ३·१·८५ ) ॥

ब्रह्मवनिमिति ॥ कल्प —"अथैना [19]प्रदक्षिण पुरीषेण[19] पर्यूहति ब्रह्मवनिं त्वा क्षत्रवनि सुप्रजावनिं रायस्पोषवनिं पर्यूहामीति" ( बौ श्रौ ६ २७ ) इति ॥ ब्रह्म[20] ब्राह्मणजातिं वनति भजतीति ब्रह्मवनि । हे औदुम्बरि, ब्राह्मण्यादिप्रदां त्वा परितो मृत्तिका प्रक्षिपामि ॥ मन्त्रस्य स्पष्टार्थता दर्शयति—"ब्रह्मवनिं त्वा क्षत्रवनिमित्याह यथायजुरेवैतत्" ( तैसं ६ २·१० ) इति ॥
२५ ब्रह्मेति ॥ कल्पः—"मैत्रावरुणदण्डेन संहन्ति ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳहेति" ( बौश्रौ ६·२७ ) इति ॥ हे दण्ड, [21]ब्राह्मण्यादीन् दृढीकुरु । मन्त्रोऽयं ब्राह्मणेनोपेक्षित ॥

घृतेनेति ॥ कल्प —"तस्या विशाखे हिरण्य निधाय घृतेन द्यावापृथिवी आ पृणेथामिति स्रुवेण हिरण्ये [22]जुह्वदान्तमौदुम्बरीमन्ववस्रावयति" ( आपश्रौ ११·१०·४ ) इति ॥ हे द्यावापृथिवीरूपे

१९-१९ इ.उ पा—पुरीषेण प्रदक्षिणम्; त म३ मै—प्रदक्षिण पुरीषे, क—प्रदक्षिणं पुरीरै ।
३० २० इ उ पा-ब्रह्मवनिम् । २१ त्रि२—ब्राह्मणादीन् । २२ क—जुह्वा आन्त° ।

सदोऽसि विश्वजनस्य छाया

सदः । असि । विश्वजनस्येति विश्व-जनस्य । छाया ।

मध्यमं छदिर्निदधाति—'इन्द्रस्य' इति ॥ इन्द्रस्य सदः सदनं गृहम् असि । "ऐन्द्रं हि देवतया सदः" (तैसं ६-२-१०) इति ब्राह्मणम् ॥

पार्श्वयोश्छदिर्निदधाति—'विश्वजनस्य' इति ॥ विश्वजनस्य सर्वजनस्य छाया गृहमसि । "विश्वजनस्य ह्येषा छाया" (तैसं ६-२-१०) इति ब्राह्मणम् ॥ [७]छायाशब्दो गृहनामसु निरुक्तकारैः (निघण्टु ३-४-२०) पठ्यते[७] ॥

औदुम्बर्या अग्रमूले, घृतेन अनेन समन्तात् तृप्येथाम् ॥ विधत्ते—"घृतेन द्यावापृथिवी आ पृणेथामित्यौदुम्बर्यां जुहोति द्यावापृथिवी एव रसेनानक्ति" (तैसं ६-२-१०) इति ॥ अग्रे हुतस्याज्यस्य मूलपर्यन्ततां विधत्ते—"आन्तमन्ववस्रावयत्यान्तमेव यजमानं तेजसाऽनक्ति" (तैसं ६-२-१०) इति । यजमानस्य शिर आरभ्य पादपर्यन्तं तेजः संपादितं भवति ॥

इन्द्रस्येति ॥ बौधायनः—"तस्या उच्छ्रयणमनु प्राचीनकर्णाः स्थूणा उच्छ्रयन्ति । तासूदीचो वंशान् प्रोहन्ति । अध्यस्यन्ति मध्यमं छदिरिन्द्रस्य सदोऽसीति । विश्वजनस्य छायेति ये अभितो भवतः" (बौश्रौ ६-२७) इति । आपस्तम्बः—"उदञ्चः[२३] प्राञ्चश्च[२४] वंशानत्याधाय ऐन्द्रमसीति तेषु मध्यमानि त्रीणि छदींष्यध्यूहति । विश्वजनस्य छायेति त्रीणि दक्षिणानि । इन्द्रस्य सदोऽसीति त्रीण्युत्तराणि" (आपश्रौ ११-१०-८-९) इति ॥ 'ऐन्द्रमसि' इति [२५]शाखान्तरेऽवगतो मन्त्रः । उत्तरयोर्मन्त्रयोरत्रैवाम्नातयोर्ब्राह्मणान्तरानुसारेण क्रमव्यत्ययः ॥ विधत्ते—"ऐन्द्रमसीति छदिरधि नि दधात्यैन्द्रꣳ हि देवतया सदो विश्वजनस्य छायेत्याह विश्वजनस्य ह्येषा छाया यत्सदः" (तैसं ६-२-१०) इति । 'इन्द्रस्य सदोऽसि' इत्ययं मन्त्र उपेक्षितः ॥ सदःस्थानां कामनाभेदेन छदिषां संख्यां विधत्ते—"नवछदि तेजस्कामस्य मिनुयात् त्रिवृता स्तोमेन संमितं तेजस्त्रिवृत् तेजस्व्येव भवत्येकादशछदीन्द्रियकामस्यैकादशाक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुगिन्द्रियाव्येव भवति । पञ्चदशछदि भ्रातृव्यवतः पञ्चदशो वज्रो भ्रातृव्याभिभूत्यै सप्तदशछदि प्रजाकामस्य सप्तदशः प्रजापतिः प्रजापतेराप्त्यै एकविꣳशतिछदि प्रतिष्ठाकामस्यैकविꣳशः स्तोमानां प्रतिष्ठा प्रतिष्ठित्यै" (तैसं ६-२-१०) इति । नवसंख्याकानि छदींषि यस्य सदसस्तन्नवच्छदि मिनुयात् कुर्यात् । त्रिवृत्पञ्चदशसप्तदशैकविंशशब्दैः [२६]साम्नामावृत्तिभेदेन निष्पन्ना स्तोमा उच्यन्ते । त्रिवृत्स्तोमे साम्नामावृत्त्यभावेऽपि ऋचां नवत्वात् संख्यासाम्यम् । प्रजापतिमुखादग्निना सहोत्पन्नतया[२७] त्रिवृतस्तेजस्त्वम् । वीर्यवतः प्रजापतिबाहुत उत्पन्नतया पञ्चदशस्य वज्रत्वम् । 'आ श्रावय' इत्यादि मन्त्राक्षराणां प्रजापति-

७–७ तं.ति–छायाशब्दं गृहनामसु निरुक्तकाराः पठन्ति ।

२३. आ.ना.पा.हा–उदीचः । २४. क.त्रि२.हा–प्राञ्चश्च । २५. तं.त्रि२.भ२.मै–शाखान्तरगतः । २६. आ.इ–साम्न आवृत्ति° । २७. आ.ना.हा–सहोत्पन्नत्वात् ।

परिं त्वा गिर्वणो गिरं इमा(२)भंवन्तु विश्वतो वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टय

परीति । त्वा । गिर्वण । गिरं । इमा (२) । भवन्तु । विश्वत । वृद्धायुमिति वृद्ध-आयुम् । अन्विति । वृद्धय । जुष्टा । भवन्तु । जुष्टय ।

मद परिश्रयति—'परि त्वा' इति चतुष्पदयाऽनुष्टुभा ॥ इन्द्रदेवत्यत्वात् इन्द्रत्वेन मद उच्यते । हे गिर्वण गीर्भि स्तुतिभिर्वननीय सभजनीय । असुन्नन्तस्य (उ ६३८) आमन्त्रितत्वादनुदात्तत्वम् (पा ८ १ १९) । इमा वक्ष्यमाणा स्तोत्रशस्त्रादिलक्षणा गिर त्वा परि भवन्तु व्याप्नुवन्तु विश्वत सर्वत । परिभवति व्याप्तिकर्मा । यद्वा—"लक्षणेत्थभूताख्यान" (पा १ ४ ९०) इति भागे लक्षणे वा चोद्ये परे कर्मप्रवचनीयत्वम् ॥ इमा गिर त्वा परिभवन्तु तव भागात्मना भवन्तु त्वामेव भजन्तामिति यावत । यत्र त्व तत्र भवन्त्विति वा । किंच— वृद्धायुर्दीर्घायु । "छन्दसीण" (उ २) इत्युणप्रत्ययान्तेन बहुव्रीहि । ईदृश त्वाम् अनु वृद्धय समृद्धयो भवन्तु । अनोर्लक्षणे भागे वा कर्मप्रवचनीयत्वम् (पा १ ४ ९०) । यत्र त्व तत्र समृद्धयो भवन्त्विति यावत् । त्वामेव भजन्तामिति वा । सदसि हि सर्वा स्तुतय क्रियन्ते, सर्वाश्च समृद्धय सपद्यन्ते । अपि च जुष्टय सेवा अस्माभि क्रियमाणास्तव जुष्टा इष्टा भवन्तु । "नित्य मन्त्रे" (पा ६ १ २१०) इति जुष्टशब्द आद्युदात्त ॥

स्वरूपाणा समत्वात् सप्तदशस्य प्रजापतित्वम् । त्रिवृदादीनामन्तर्भावेनैकविंशस्य प्रतिष्ठात्वम् ॥ औदुम्बरी स्थापनस्य सदोमण्डपमध्यप्रदेशो विधत्ते—"उदर वै सद ऊर्गुदुम्बरो मध्यत औदुम्बरी मिनोति मध्यत एव प्रजानामूर्ज दधाति तस्मान्मध्यत ऊर्जा भुञ्जते" (तैस ६ २ १०) इति ॥ [28]दक्षिणदिग्गतच्छदिषा ममाण्युत्तरदिग्गतच्छदिषामुपरि[28] इश्यमानतया स्थापनीयानीति विधत्ते—"यजमानलोक वै दक्षिणानि छदींष्यि भ्रातृव्यलोक उत्तराणि दक्षिणान्युत्तराणि करोति यजमानमेवायजमानादुत्तर करोति तस्माद्यजमानोऽयजमानादुत्तर" (तैस ६ २ १०) इति । लोके स्थाने, उत्तर उत्कृष्ट ॥ छदिषामन्तरालच्छिद्रेषु [29]तृणपूलै विधान[29] विधत्ते—"अन्तर्वर्तान करोति व्यावृत्त्यै तस्मादरण्य प्रजा उप जीवन्ति" (तैस ६ २ १०) इति । पूलाना[30] विलक्षणत्वात् छदिर्भ्यो व्यावृत्तिर्भवति । यस्मात् तृणमरण्यजन्य तस्मात् तृणकाष्ठलाभाय प्रजा अरण्यमुपजीवन्ति ॥

परि त्वेति ॥ कल्प —"अथैनान् परिश्रयन्ति परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतो वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टय इति" (बौश्रौ ६-२७) इति ॥ गोर्भि स्तुतिभिर्वननीयो भजनीय

२८–२८ भर–दक्षिणदिगग्रछदिषां प्रान्त्यु(?)तरदिक्छदिषामुपरि, मै–दक्षिणदिगग्रछदिषाम् माण्युत्तरदिक्छदिषामुपरि । २९–२९ आ इ त.पा भा–तृणमूलैराधानम्, हा–तृणपूलैराधानम्, मर–पूर्ले (?)विधानम् । ३० आ–मूलानाम् ।

इन्द्र॑स्य स्यूर॑सीन्द्र॑स्य ध्रुवम॑स्यैन्द्रम॑सीन्द्रा॑य त्वा ॥ १ ॥

[ द्वेपं इमा अष्टादंश च ]

इन्द्र॑स्य । स्यूः । असि । इन्द्र॑स्य । ध्रुवम् । असि ।

ऐन्द्रम् । असि । इन्द्रा॑य । त्वा ॥ ( १ )॥

[ मैसं १·२·१०–११; कासं २·१२; कपिसं २·६; वासं ५·२६–३० ]

दक्षिणद्वार्याहौं कुशमुष्टिमुपनिगृह्य दर्भेण स्यन्यां प्रवर्तयति—'इन्द्रस्य' इति ॥ "विष्णोः स्यूरसि" (तैसं १·२·१३) इत्यनेनेदं व्याख्यातप्रायम् ॥ सदस ऐन्द्रत्वादत्रैवमुच्यते ॥

ग्रन्थिं करोति—'इन्द्रस्य' इति ॥ इदमपि "विष्णोर्ध्रुवमसि" (तैसं १·२·१३) इत्यनेन व्याख्यातम् ॥

सदोऽभिमृशति—'ऐन्द्रमसि' इति ॥ इन्द्रो देवतास्य (पा ४·२·२४) ऐन्द्रं त्वम् असि । तादृशं त्वाम् इन्द्राय इन्द्रार्थमभिमृशामीति शेषः । "ऐन्द्रं हि देवतया सदः" (तैसं ६·२·१०) इत्यादि ब्राह्मणम् । "वैष्णवमसि विष्णवे त्वा" (तैसं १·२·१३) इत्यनेन गतप्रायम् ॥

॥ इति तृतीये प्रथमोऽनुवाकः ॥

---

इन्द्रः सदोभिमानी गिर्वणाः । हे गिर्वणः, इमाः स्तोत्रशस्त्ररूपाः गिरः सर्वतः कटकरूपेण[31] त्वां परिभवन्तु[32] वेष्टयन्तु । कीदृश्यः? दीर्घायुषं त्वामनु स्वयमपि वृद्धिमत्यः । किंच जुष्टयः अस्मत्सेवास्तव जुष्टाः प्रिया भवन्तु ॥ मन्त्रस्य स्पष्टार्थतां दर्शयति—"परि त्वा गिर्वणो गिर इत्याह यथायजुरेवैतत्" (तैसं ६·२·१०) इति ॥

इन्द्रस्येति ॥ कल्पः—"[33]अथ दक्षिणद्वार्याहौं कुशहस्तमुपनिगृह्य दर्भेणं करोति प्रवर्तयति दर्भेणे स्यन्द्यामिन्द्रस्य स्यूरसीति । इन्द्रस्य ध्रुवमसीति ग्रन्थिं करोति । तं तदानीमेव विस्रस्याहाकुर्वन्तो हस्तान् ग्रन्थकौशलैर्निस्तिष्ठन्ति । एवमेवोत्तरं द्वार्बाहुमेवापरौ द्वार्बाहू निस्तिष्ठन्ति" (द्र. बौश्रौ ६·२७) इति ॥ व्याख्यातं हविर्धानेन ॥ व्याचष्टे[33]—"इन्द्रस्य स्यूरसीन्द्रस्य ध्रुवमसीत्याहैन्द्रं हि देवतया सदः" (तैसं ६·२·१०) इति ॥ प्रज्ञातग्रन्थेर्विस्रंसनं विधत्ते—"यं प्रथमं ग्रन्थिं ग्रथ्नीयाद्यत्तं न विस्रंसयेदमेहेनाध्वर्युः [illegible] मीयेत तस्मात् स विस्रस्यः" (तैसं ६·२·१०) इति ॥

---

३१. इ.उ.क.तं.ना.पा.मां.हा–करत्पेण । ३२. इ.उ.ना.पा.मां.हा–परितः भवन्तु ।
३३–३३. त्रिर.मर–'अथ...व्याचष्टे' नास्ति; मै१–इन्द्रस्य स्यूरसीति इन्द्रस्य ध्रुवमसीति प्रज्ञातग्रन्थि त्वा ऐन्द्रमसीन्द्राय त्वेति संमितमभिमृशति ।

अत्र विनियोगसंग्रहः—

" देवस्येत्यभिमादत्ते ह्यभ्रिरित्यभिमन्त्रणम्[३४] ।
परोलवटमालिख्य द्विवेऽग्रे मध्यमूलयोः ॥ १ ॥
प्रोक्षेदौदुम्बरीं शुन्ध शोधो गर्तेऽवनीयते ।
यवो यवं क्षिपेत्तत्र पितॄं दर्भेण संस्तृतिः ॥ २ ॥
उदौदुम्बर्युच्छ्रयोऽथ[३५] द्युता साम्नवते[३५] क्षिपेत् ।
ब्रह्म पांसुं क्षिपेद्गर्ते ब्रह्म[३६]तत्र दृंहीति ॥ ३ ॥
घृतेनौदुम्बरीहोम इन्द्रविषद्वयादिशो ।
छदींष्यध्युह्य कर्तव्यं परि त्वेति परिश्रय ॥ ४ ॥
इन्द्र रज्जुं क्षिपेदिन्द्र यदृश्वैन्द्रमिति मण्डपम् ।
स्तुहोहस्तेन मन्त्रास्तु विंशति. समुदीरिता. ॥ ५ ॥ " इति ॥

अथ मीमांसा ॥ तृतीयाध्यायस्याष्टमपादे चिन्तितम्—

" वृष्टिकामी सदो नीचैर्मिनुयादिति कामना ।
आध्वर्यो स्वामिनो वाऽयो वाक्यान्माद्व. [३७]स उच्यते[३७] ॥
परस्मैपदतोऽध्वर्युव्यापारस्य परार्थता ।
[३८]श्रुतितो वाक्यबाधेन तपोवत् स्वामिनोऽस्तु तत् ॥ "
(जैन्या ३ ८.९-१०) इति ॥

ज्योतिष्टोमे श्रूयते—" [३९]य. कामयेत वर्षुक. पर्जन्य स्यादिति नीचै सदो मिनुयात् " ( ब्र मैसं ३ ८ ९ ) इति । यथा पुरस्तात् पश्चाच्चावस्थितौ हविर्धानप्राचीनवंशावुच्चौ[४०], तथा सदो नोच्च, किंतु नीचं कार्यमित्यर्थः । [४१]अत्र वृष्टिकामनाऽध्वर्योर्युक्ता । 'य. कामयेत स मिनुयात्' इति वाक्येन कामयितृमात्रेरेकाववगमात् । मातृत्र चाध्वर्योरित्यविवादम् । तस्मात् स एव कामयितेति चेत् । नैवम् । मिनुयादिति परस्मैपदेनाध्वर्युव्यापारफलस्य परगामित्वा प्रतीयते । ततो वृष्टिलक्षणफलस्य यजमानगामित्वात् परस्मैपदश्रुत्या वाक्यं बाधित्वा कामस्य यजमानकर्तृकत्व द्रष्टव्यम् । यजमानकामितां वृष्टिं पर्जन्यः संपादयत्वित्येवं योऽध्वर्यु कामयेत स नीचै मिनुयात् इत्येवं वाक्यं व्याख्येयम् । एवंविदुद्गाताऽऽत्मने वा यजमानाय वा यं कामं कामयते तमागायति " ( छ १.३.२८ ) इत्युद्गित्रोऽपि काम इति चेत्तर्हि तस्मिन्नुद्गीथोपासने वचनाहत्विजोऽपि फलमस्तु ॥

अथ छन्द ॥ ' परि त्वा गिर्वण. ' इत्यनुष्टुप् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके प्रथमोऽनुवाक ॥

---

३४ आ-ना-'त्वानुमन्त्रणम् । ३५-३५. त्रि२-धुनानमवटे । ३६ आ-गर्त' । ३७-३७ त मै-तदुच्यते । ३८. आ-श्रुनाऽतो । ३९. तं.त्रि२.म मै१-यदि ४०. ना द्वा-वंशावुभौ । ४१ आ ना.द्वा-तत्र च ।

(Line numbers printed in margin: ५, १०, १५, २०, २५, ३०)

रक्षोहणो वलगहनो वैष्णवान् खनामि–

रक्षोहण इति रक्षः–हनः । वलगहन इति वलग–हनः । वैष्णवान् । खनामि ।

उपरवान् खनति पूर्वयोर्दक्षिणमेवाग्रे—'रक्षोहणः' इति ॥ हन्तेः "बहुलं छन्दसि" (पा ३·२·८८) इति क्विप् । "एकाजुत्तरपदे णः" (पा ८·४·१२) इति णत्वम् । "सर्वे विधयश्छन्दसि विकल्प्यन्ते" (परिभाषेन्दुशेखर ३५, द्र. पाभा १·४·९,३·१·८५) इत्युपधालोपो* न क्रियते । कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६·२·१३९) । वलो नामासुरमुख्यः । तद्गामिनस्तद्भृत्या वलगाः । यद्वा—वृणोतीति वलो मेघः । कपिलकादित्वाल्लत्वम् (द्र. पाभा ८·२·१८) । स इव छादयन्तो ये गच्छन्ति ते वलगा असुरविशेषाः । यद्वा—जीर्णकटपटादिखण्डसंभृताः[1] अस्थिनखरोमपादपांसुप्रभृतयः प्राणिनां मारणार्थं ये भूमौ निखन्यन्ते ते वलगाः । ते हि प्राणिनां बाधकतया वलगामिनो वलवत् लक्ष्या भवन्ति । "अन्यत्रापि दृश्यते" (द्र. पाभा ३·२·४८ वा ४) इति गमेर्डः । तेषां हन्तारः वलगहनः । ईदृशान् विष्णुदेवत्यानुपरवान् खनामि । "वैष्णवा हि देवतयोपरवाः" (तैसं ६·२·११) इति ब्राह्मणम् । देवानां नासिकादिप्राणस्थानीया उपरवाः । "शिरो वा एतद्यज्ञस्य यद्धविर्धानं प्राणा उपरवाः" (तैसं ६·२·११) इति ब्राह्मणम् । ते च खन्यमाना रक्षांसि वलगांश्च निघ्नन्तीति । "असुरा वै निर्यन्तः" (तैसं ६·२·११) इति ब्राह्मणम् ॥

प्रथमेऽनुवाके सदोनिर्माणमुक्तम् । एतावता [1]षट्त्रिंशत्पदपरिमितायां महावेद्यां निर्मातव्यानि उत्तरवेदिहविर्धानसदांसि संपन्नानि । तस्याश्च महावेद्या उत्तरदक्षिणभागस्थयोराग्नीध्रीयमार्जालीययोर्मन्त्रा न सन्ति । अतो निर्मितेषु स्थानेष्वभ्यन्तरे यदन्यत् समन्त्रकं निर्मातव्यं भवति तदभिधेयम् । तत्रोत्तरवेद्यां सर्वस्याभिहितत्वात् हविर्धानाभ्यन्तर उपरवा द्वितीयानुवाक उच्यन्ते ।

रक्षोहण इति ॥ कल्पः—"दक्षिणस्य हविर्धानस्याधस्तात् पुरोऽक्षं चतुर उपरवान् अवान्तरदेशेषु प्रादेशमुखान् प्रादेशान्तरालान् करोति ।...। रक्षोहणो वलगहनो वैष्णवान् खनामीति खनति" (आपश्रौ ११·११·१,६) इति ॥ विष्णुर्देवता येषामुपरवाणां ते वैष्णवाः । जीर्णकटपटादिखण्डयुक्ता अस्थिनखरोमपादपांसुप्रभृतयो विरोधिनां मारणार्थं ये भूमौ निखन्यन्ते ते वलगाः । तान् घ्नन्तीति वलगहनः । रक्षांसि घ्नन्तीति रक्षोहणः । तादृशानुपरवनामकान् गर्तान् खनामि ॥ विधत्ते—"शिरो वा एतद्यज्ञस्य यद्धविर्धानं प्राणा उपरवा हविर्धाने खायन्ते तस्माच्छीर्षन् प्राणाः" (तैसं ६·२·११) इति । उपरवबिलानां श्रोत्रनासिकादिच्छिद्रगतप्राणस्थानीयत्वात् शिरःस्थानीये हविर्धाने खननं युक्तम् ॥ विधत्ते—"अधस्तात् खायन्ते तस्मादधस्ताच्छीर्ष्णः प्राणाः" (तैसं ६·२·११) इति । यस्माद्धविर्धानस्याधोभागे भूमौ उपरवास्तस्माल्लोकेऽपि शिरस्यूर्ध्वकपालादध एव प्राणसंचारः ॥ वैष्णवानिति तद्धितो देवतावाचीत्याह—"रक्षोहणो वलगहनो वैष्णवान् खनामीत्याह वैष्णवा हि देवतयोपरवाः" (तैसं ६·२·११) इति ॥

*[ 'गमहनजनखनघसां लोपः' (पा ६·४·९८) इत्यनेन प्राप्त इत्यर्थः । ] १. तं.ति–संभृताः ।

१. आ.ना.ढा–षट्त्रिंशता पदैः । २. तं–आर्दौ ।

–दमुहं तं वंलुगमुद्वपामि यं नंः समानो यमसंमानो निचुखानेदमेनुमर्धरं करोमि यो नंः समानो योऽसंमानोऽरातीयर्ति गायत्रेण छन्दसाऽवंबाढो वलुगः

इदम् । अहम् । तम् । वलुगमितिं वल–गम् । उदितिं । वपामि । यम् । नः । समानः । यम् । असंमानः । निचखानेतिं नि–चखानं । इदम् । एनम् । अधरम् । करोमि । यः । नः । समानः । यः । असंमानः । अरातीयर्ति । गायत्रेणं । छन्दसा ।
अवंबाढ इत्यवं–बाढः । वलुग इति वल–गः ।

पांसूनुद्वपति—'इदमहम्' इति ॥ इदमिति क्रियाविशेषणम् । तं वलगम् अहम् इदम् उद् वपामि उद्धृत्य बहिः प्रक्षिपामि । कमित्याह—नः अस्माकं समानः तुल्यः यं वलगं निचखान । "तिङि चोदात्तवति" ( पा ८ १ ७१ ) इति गतेरनुदात्तत्वम् । "उदात्तवता तिङा" ( द्र. पाभा २ २ १८ वा ४ ) इति समासः । यं चास्माकम् असमानः अतुल्यः जनः उत्कृष्टो वा वलगं निचखान तमुद्वपामीति । "द्वौ वाव पुरुषौ यश्चैव समानो यश्चासमानः" ( तैसं ६ २ ११ ) इत्यादि ब्राह्मणम् । किंच एनम् अहम् अधरम् अधोगतं करोमि । इदमिति पूर्ववत् क्रियाविशेषणम् । कमित्याह—यः अस्माकं समानः यः च असमानः जनः अरातीयति अरातिरिवाचरति । यद्वा—अस्मानरातीयति यः समानोऽसमानो वा । "उपमानादाचारे" ( पा ३ १ १० ) इति क्यच् । गायत्रेण छन्दसा उद्वपामि । गायत्र्येव गायत्रम् । "छन्दसः प्रत्ययविधाने नपुंसके स्वार्थे उपसंख्यानम्" ( पा ४ २ ५५ वा १ ) इत्यण्प्रत्ययः । एवं दक्षिणपूर्वमारभ्य सर्वेभ्य उद्वपति । त्रैष्टुभेन जागतेनानुष्टुभेनेति विशेषोऽन्यत्र ॥

वितस्तित्रयप्रमाणं विधत्ते—"असुरा वै निर्यन्तो देवानां प्राणेषु वलगान् न्यखनन् तान् बाहुमात्रेऽन्वविन्दन् तस्माद्बाहुमात्राः खायन्ते" ( तैसं ६.२.११ ) इति । निर्यन्तः पलायनोद्युक्ताः । प्राणेषु प्राणविनाशनिमित्तं न्यखनन् नितरां भूमावन्तर्धापितवन्तः ॥

इदमिति ॥ बौधायनः—"अथैभ्यः पांसूनुद्वपतीदमहं तं वलगमुद्वपामि यं नः समानो यमसमानो निचखानेदमेनमधरं करोमि यो नः समानो योऽसमानोऽरातीयति गायत्रेण छन्दसाऽवबाढो वलग इति" ( बौश्रौ ६ २८ ) इति । आपस्तम्बो मन्त्रभेदमाह—"इदमहं तं वलगमुद्वपामीत्युदुप्योप स्यन्तेऽवबाधते गायत्रेण छन्दसाऽवबाढो वलग इति" ( आपश्रौ ११ ११ ८ ) इति ॥ अस्मान् विनाशयितुं विद्याविन्तसौभाग्यादिभिः समानः असमानः वा यं वलगं निचखान तं वलगम् अहम् इदम् उद् वपामि । किंच अस्मानुद्दिश्य समानः असमानः वा यः कोऽप्यरातिवदाचरति एनम् इदम् इदानीम् अधरं यजमानपादस्याधोवर्तिनं करोमि ॥ गायत्रच्छन्दोभिमानिदेवेन वलगः अवबाधितः ॥ अत्रोपदग्धुसंग्रहाय समानासमानशब्दावुभावप्युपादेयावित्याह—"इदमहं तं वलगमुद-

२ मै–अधोगतिम् ।

३ आ ना–न्यखनन्निति, इ.उ पा हा–खननमिति, मा–'न्यखनन्' नास्ति । *[ बौश्रौसूत्रे तु "छन्दसेति । अववाढ "] । ४ क–वलगमुद्वपामीत्युपरवा खन्यन्ते, आ–वलगमुद्वपामीत्युदुप्योपरवा खन्यन्ते । ५ आ ना हा–'इदानीम्' नास्ति ।

**किमत्र भद्रं तन्नौ सह विराडसि सपत्नहा सम्राडसि भ्रातृव्यहा स्वराडस्याभिमातिहा विश्वाराडसि विश्वासां नाष्ट्राणांᳲ हन्ता ( १ )**

किम् । अत्र । भद्रम् । तत् । नौ । सह । विराडिति वि–राट् । असि । सपत्नहेति सपत्न–हा । सम्राडिति सम्–राट् । असि । भ्रातृव्यहेति भ्रातृव्य–हा । स्वराडिति स्व–राट् । असि । अभिमातिहेत्यभिमाति–हा । विश्वाराडिति विश्व–राट् । असि । विश्वासाम् । नाष्ट्राणाम् । हन्ता ( १ ) ।

यजमानस्याधस्तात् पदपांसूनुद्वपति—‘ अवबाढः ’ इति ॥ यजमानस्य पादयोरधस्तात् बाढो वद्धः वलगः अस्तु । बाह्र प्रयत्ने । “ क्षुब्धस्वान्त ” ( पा ७·२·१८ ) इत्यत्र निपातितः । “ गतिरनन्तरः ” ( पा ६·२·४९ ) इति पूर्वपदप्रकृतिस्वरत्वम् ॥

उपरवान् क्रमेणावमृशतोऽध्वर्युयजमानौ । ते चाधस्तात् संतृण्णाः । “ तस्मात् संतृण्णा अन्तरतः प्राणाः ” ( तैसं ६·२·११ ) इति ब्राह्मणम् । बहिरसंभिन्नाः[3] । “ न संभिनत्ति. तस्मादसंभिन्नाः प्राणाः ” ( तैसं ६·२·११ ) इति ब्राह्मणम् । पूर्वयोर्दक्षिणमेवाध्वर्युरवमृशति उत्तरं यजमानः । अथ यजमानः पृच्छति—‘ अध्वर्यो, किमत्र ’ इति ॥ इतर आह—‘ भद्रम् ’ इति । भद्रं भजनीयं कल्याणम् । भदि कल्याणे । रन्प्रत्ययः ( उ १९६ ), उपधालोपश्च । यजमान आह—‘ तन्नौ सह ’ इति । तद् भद्रम् आवयोः सह एवास्तु । अथाध्वर्युः पृच्छति—‘ यजमान, किमत्र ’ इति । ‘ भद्रम् ’ इत्यादि यथायथम् । एवं सर्वत्र ॥

वपामि यं नः समानो यमसमानो निचखानेत्याह द्वौ वाव पुरुषौ यश्चैव समानो यश्चासमानो यमेवास्मै तौ वलगं निखनतस्तमेवोद्वपति ” ( तैसं ६·२·११ ) इति ॥ चतुर्णामुपरवाणामधस्तादेकीकरणं विधत्ते—“ सं तृणत्ति तस्मात् संतृण्णा अन्तरतः प्राणाः ” ( तैसं ६·२·११ ) इति । प्राणापानचक्षुःश्रोत्राख्यः सर्वेऽपि शरीरस्याभ्यन्तरे हृद्येकीभूय वर्तन्ते[10] ॥ [6]उपरि चतुर्णां पृथक्करणं विधत्ते—“ न सं भिनत्ति तस्मादसंभिन्नाः प्राणाः ” ( तैसं ६·२·११ ) इति ॥ संभेद एकीभावस्तं न कुर्यात् । प्राणाश्च बहिः स्वस्वगोलकेषु तिष्ठन्तो नैकीभवन्ति ॥

किमत्रेति ॥ कल्पः—“ [7]दक्षिणपूर्वं यजमानोऽवमृशति । [8]उत्तरापरमध्वर्युः । अथ यजमानः पृच्छत्यध्वर्यो किमत्रेति । भद्रमितीतरः[9] प्रत्याह । तन्नौ सहेत्युक्त्वा ” ( आपश्रौ ११·१२·३–४ ) इति ॥ ‘ अध्वर्यो ’ इत्यध्याह्रियते । अत्र उपरवेष्वस्मदुपयुक्तं किम् अस्तीति प्रश्नः । भद्रं सोमाभिषवद्वारेण भजनीयं सर्वमस्तीत्युत्तरम् । तत् भद्रमावयोः सह [10]भवेदिति यजमानोक्तिः ॥

विराडसीति ॥ कल्पः—“ अथैनानभिमृशति विराडसि सपत्नहा सम्राडसि भ्रातृव्यहा स्वराडस्यभिमातिहा विश्वाराडसि विश्वासां नाष्ट्राणाᳲ हन्तेति ” ( बौश्रौ ६·२८ ) इति । दक्षिणपूर्वमुपक्रम्य

३. मे–बहिरसंतृण्णाः ।

६. आ.ना.ह्रा–तदुपरि । ७. क–दक्षिणं पूर्वम् । ८. क उत्तरंमपरमध्वर्युः । ९. क–भद्रमित्यध्वर्युः । १०. तं.म.२–वर्तन्त्विति ।

रक्षोहणौ वलगहनः प्रोक्षामि वैष्णवान् रक्षोहणौ वलगहनोऽवं नयामि वैष्णवान्
यवोऽसि यवयास्मद्द्वेषो यवयारातीः रक्षोहणौ वलगहनोऽवं स्तृणामि
वैष्णवान् रक्षोहणौ वलगहनोऽभि जुहोमि वैष्णवान्

रक्षोहण इति रक्षः-हनः । वलगहन इति वल्ग-हनः । प्रेति । उक्षामि । वैष्णवान् ।
५ रक्षोहण इति रक्षः-हनः । वलगहन इति वल्ग-हनः । अवेति । नयामि । वैष्णवान् । यवः । असि ।
यवय । अस्मत् । द्वेषः । यवय । अरातीः । रक्षोहण इति रक्षः- हनः ।
वल्गहन इति वल्ग-हनः । अवेति । स्तृणामि । वैष्णवान् । रक्षोहण इति रक्षः -हनः ।
वल्गहन इति वल्ग-हनः । अभीति । जुहोमि । वैष्णवान् ।

---

उपरवानभिमृशति सर्वानेवानुपूर्वं—'विराट्' इति । विविध राजतीति ⁷विराट् ॥
२० 'सत्सूद्विष' ' (पा ३ २ ६१ ) इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६·२·१३९ ) ।
सपत्ना शत्रवः तेषा हन्ता । " बहुल छन्दसि " ( पा ३ २·८८ ) इति क्विप् । यस्मात् त्व
विविध दीप्यसे तस्मात् ⁷सपत्नहा । ⁷सगत दीप्यत⁷ इति ⁷सम्राट् । " मो राजि सम क्वौ "
( पा ८·३ २५ ) इति मस्य म । यस्मादेव तस्मात् त्व ⁷भ्रातृव्यहा । भ्रातृव्या सपत्ना ।
" व्यन् सपत्ने " ( पा ४ १ १४५ ) इति व्यन्प्रत्ययः । तेषा हन्ता । बाह्याभ्यन्तरभेदेन
२५ नित्यानित्यभेदेन वा शत्रूणा पृथगभिधानम् । स्वायत्त दीप्यसे इति ⁷स्वराट् । यस्मादेव तस्मात्
त्वम् ⁷अभिमातिहा । अभिमाति पाप्मा । मन्यते क्तिनि ( पा ३ ३·९६ ) नित्यमप्यनुनासिकलोप
बाधित्वा व्यत्ययेन " अनुनासिकस्य क्विझलो " " ( पा ६·४ १५ ) इति दीर्घत्वम् । ततः
" अनुदात्तोपदेश " ( पा ६ ४ ३७ ) इत्यादिना अनुनासिकलोप । तस्या हन्ता । महाबलेन
हि पाप्मा निहन्तु शक्यते । विश्वेषु लोकेषु राजतीति ⁷विश्वाराट् । " विश्वस्य वसुराटो "
३० ( पा ६ ३ १२८ ) इति दीर्घ । यस्मादेव तस्मात् ⁷विश्वासा ⁷नाष्ट्राणा नाशयितॄणा दैत्यादि-
प्रवृत्तीना ⁷हन्ता नाशयिता त्वमसि । नशेर्ष्ट्रन्ताद् " दादिभ्यश्छन्दसि " ( उ ६१९ ) इति

---

प्रदक्षिणक्रमेण चतुर्षु चत्वारो मन्त्रा । विविध राजते, सम्यक् राजते, स्वयमेव राजते, विश्वेषु राजत इति
विराडादय । विरुद्धा इन्द्रियवृत्तिरान्तर शत्रु । ¹¹ततो बाह्यो विरुद्धजाति ¹²। ततोऽपि बाह्यो ग्राम-
सीमादौ विरुद्धमानोऽन्यगोत्रज । ततोऽपि बाह्या परराष्ट्रसेना सर्वनाशहेतव । एतच्चतुष्टयमपरनादिशब्दै-
२५ र्विवक्षितम् ॥

रक्षोहण इति ॥ कल्प —" अथैनानद्भि प्रोक्षति रक्षोहणो वलगहन. प्रोक्षामि वैष्णवानिति
सर्वानेवानुपूर्वम् । अथैतेष्वपोऽवनयति रक्षोहणो वलगहनोऽव नयामि वैष्णवानिति ¹³सर्वेष्वेवानुपूर्वम् ।
अथैतेषु यवान् प्रस्कन्दयति यवोऽसि यवयास्मद्द्वेषो यवयारातीरिति सर्वेष्वेवानुपूर्वम् । अथैनान् बर्हिषाऽव-

---

४-४ ति-सदीप्यते ।

---

३० ११ इ उ-ततोऽपि । १२ तं.मर-विरुद्धजाति । १३. आ.ना.मर.हा-सर्वेष्वनु ' ।

उपरवाः ]

**र॒क्षो॒हणौ॑ वलग॒हना॒वुप॑ दधामि वैष्ण॒वी र॑क्षो॒हणौ॑ वलग॒हनौ॒ पर्यू॑हामि वैष्ण॒वी र॑क्षो॒हणौ॑ वलग॒हनौ॒ परि॑ स्तृणामि वैष्ण॒वी र॑क्षो॒हणौ॑ वलग॒हनौ॑ वैष्ण॒वी**

र॒क्षो॒हणा॒विति॑ रक्षः–हनौ॑ । व॒ल॒ग॒हना॒विति॑ वलग–हनौ॑ । उपेति॑ । द॒धा॒मि॒ । वै॒ष्ण॒वी इति॑ । र॒क्षो॒हणा॒विति॑ रक्षः–हनौ॑ । व॒ल॒ग॒हना॒विति॑ वलग–हनौ॑ । परीति॑ । ऊ॒हा॒मि॒ । वै॒ष्ण॒वी इति॑ । र॒क्षो॒हणा॒विति॑ रक्षः–हनौ॑ । व॒ल॒ग॒हना॒विति॑ वलग–हनौ॑ । परीति॑ । स्तृ॒णा॒मि॒ । वै॒ष्ण॒वी इति॑ । ५ र॒क्षो॒हणा॒विति॑ रक्षः–हनौ॑ । व॒ल॒ग॒हना॒विति॑ वलग–हनौ॑ । वै॒ष्ण॒वी इति॑ ।

---

त्रन्प्रत्ययः । " तितुत्रतथ " ( पा ७·२·९ ) इति इट्प्रतिषेधः । णिलोपे ( पा ६·४·५१ ), उदात्तनिवृत्तिस्वरेण ( पा ६·१·१७४ ) त्रन उदात्तत्वम् । " व्रश्च " ( पा ८·२·३६ ) इत्यादिना षत्वम् ॥

उपरवान् प्रोक्षति—' रक्षोहणः ' इति ॥ युष्मान् प्रोक्षामि इति संबन्धः ॥ १०

उपरवेष्वपोऽवनयति—' रक्षोहणः ' इति । एवंविधान् युष्मान् अधस्तादपः अव नयामि प्रापयामि अद्भिः संयोजयामि । अवनयतिस्वभावादद्भिरेव गम्यते । नयतेश्च द्विकर्मकत्वात् ( द्र. पाभा १·४·५१ ) युष्मानपोऽवनयामीति भवति, युष्मास्वपोऽवनयामीति यावत् । यथा— ' अजां नयति ग्रामम् ' इति । " तस्मादार्द्रा अन्तरतः प्राणाः " ( तैसं ६·२·११ ) इति ब्राह्मणम् ॥ १५

तेषु यवान् प्रस्कन्दयति—' यवोऽसि ' इति ॥ व्याख्यातम् ( तैसं १·३·१ ) । " प्राणेष्वेवोर्जं दधाति " ( तैसं ६·२·११ ) इति ब्राह्मणम् ॥

उपरवान् बर्हिषावस्तृणाति—' रक्षोहणः ' इति ॥ युष्मान् अव स्तृणामि इति अधस्तात् छादयामीत्यर्थः । शिष्टं स्पष्टम् । " तस्माल्लोमशा अन्तरतः प्राणाः " ( तैसं ६·२·११ ) इति ब्राह्मणम् ॥ २०

---

स्तृणाति रक्षोहणो वलगहनोऽव स्तृणामि वैष्णवानिति सर्वानेवानुपूर्वम् । अथैनान् हिरण्यमन्तर्धाय स्रुवा- हुत्याभिजुहोति रक्षोहणो वलगहनोऽभि जुहोमि वैष्णवानिति सर्वानेवानुपूर्वम्" ( बौश्रौ ६·२८ ) इति ॥ ' किमत्र ' इत्यादिमन्त्रा उपेक्षिताः ॥ प्रोक्षणशेषस्य "जलस्योपरवेष्ववनयनं विधत्ते—" अपोऽव नयति तस्मादार्द्रा अन्तरतः प्राणाः " ( तैसं ६·२·११ ) इति । मुखनासिकाचक्षुरादिगोलकेषु द्रवदर्शनात् प्राणानामार्द्रत्वम् ॥ अवनीते जले यवप्रक्षेपं विधत्ते—" यवमतीरव नयत्यूर्ग्वै यवः प्राणा उपरवाः २५ प्राणेष्वेवोर्जं दधाति " ( तैसं ६·२·११ ) इति । या अपोऽवनयति ता यवयुक्ताः कुर्यादिति योजना ॥ उपरवेषु दर्भप्रक्षेपणं विधत्ते—" बर्हिरव स्तृणाति तस्माल्लोमशा अन्तरतः प्राणाः " ( तैसं ६·२·११ ) इति । अक्षिपक्ष्मनासिकादिषु लोमदर्शनाल्लोमशत्वम् ॥ होमं विधत्ते—" आज्येन व्याघारयति तेजो वा आज्यं प्राणा उपरवाः प्राणेष्वेव तेजो दधाति " ( तैसं ६·२·११ ) इति ॥

---

१४. आ.ना–जलस्योपरवदेशेऽव°; क–जलस्योपरवेष्वप° । ३०

बृहन्नसि बृहद्ग्रावा बृहतीमिन्द्राय वाचं वद ॥ २ ॥

[ हुन्ते द्राय द्वे चं ]

बृहन् । असि । बृहद्ग्रावेति बृहत-ग्रावा । बृहतीम् । इन्द्राय । वाचम् । वद ॥ २ ॥

[ मस १ २·१०–११ काम २·११, कपिस २·०, वाम ५·२२–२५ ]

हिरण्यमन्तर्धाय स्रुवाहुत्या उपरवानभिजुहोति—' रक्षोहण ' इति ॥ युष्मान् अभि जुहोमि इति युष्मानाज्येन व्याघारयामीति । " प्राणेष्वेव तेजो दधाति " ( तस ६ २ ११ ) इति ब्राह्मणम् ॥

अधिषवणफलके उपदधाति—' रक्षोहणा ' इति ॥ एतद्गुणे युवाम् उप दधामि इति । वैष्णवी वैष्णव्यौ । " वा छन्दसि " ( पा ६ १ १०६ ) इति पूर्वसवर्णदीर्घत्वम् । " हनू वा एते यज्ञस्य यदधिषवणे " ( तैस ६ २·११ ) इत्यादि ब्राह्मणम् ॥

अधिषवणफलके प्रदक्षिणं पुरीषेण पर्यूहति—' रक्षोहणौ ' इति ॥ युवां पर्यूहामि इति पुरीषेण परितः पूरयित्वा द्रढयामीति । " उपसर्गादस्यत्यूह्योर्वावचनम् " ( पा १ ३ २९ वा ३ ) इति परस्मैपदम् ॥

एते बर्हिषा परिस्तृणाति—' रक्षोहणौ ' इति ॥ युवां परिस्तृणामीति ॥

एते अभिमृशति—' रक्षोहणौ वलगहनौ वैष्णवी ' इति ॥

फलके ग्राव्णोद्वादयति—' बृहन् ' इति ॥ हे ग्रावन्, बृहन् महान् असि वीर्येण । शतृवद्भावात् ( पा ३ २ १२५ ) " उगिदचाम् " ( पा ७ १ ७० ) इति नुम् । न परं वीर्येण, अपि तु शरीरेणापि बृहन्नसीत्याह—बृहद्ग्रावा महापाषाण, अवयवभूता ग्रावाणोऽपि गृह्यन्ते । यद्वा—गृणन्तीति ग्रावाणः शब्दकारिणोऽवयवा , बृहन्तो ग्रावाणो यस्य । गॄ निगरणे । कनिप् ( पा ३·२ ७५ ) । आटागम । यस्मादेवं तस्मादिन्द्रार्थं बृहतीं वाचं वद । यथेन्द्र इमां वाचं

रक्षोहणाविति ॥ कल्प —" अथास्यैते फलके दीर्घसोमे संतृण्णे भवतोऽसंतृण्णे एकाहे । ते ' सदृष्टे उपदधाति रक्षोहणौ वलगहनावुप दधामि वैष्णवीति । अथैने शङ्कुभि परिणिहन्ति द्वाभ्यां पुरस्ताद्द्वाभ्यां पश्चाद्द्वाभ्यामभितोऽनवमर्पणाय । प्रदक्षिणं पुरीषेण पर्यूहति रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवीति । अथैने बर्हिषा परिस्तृणाति रक्षोहणौ वलगहनौ परि स्तृणामि वैष्णवीति । अथैने अभिमृशति रक्षोहणौ वलगहनौ वैष्णवीति " ( बौश्रौ ६ २८ ) इति । फलकविशेषविवक्षया रक्षोहणाविति पुंलिङ्गनिर्देश । हनुत्वेन ब्राह्मणे निरूप्यमाणत्वात् वैष्णवी[16] इति स्त्रीलिङ्गनिर्देश ॥

बृहन्नसीति ॥ कल्प —" [17]अथैतच्चर्म फलकयो[17] प्राचीनग्रीवमुत्तरलोमोपस्तृणाति [18]"यत्र प्रतितिष्ठेति"[18] वा तूष्णीं वा । तिरश्चीनं फलके ग्राव्णोद्वादयति । बृहन्नसि बृहद्ग्रावा बृहतीमिन्द्राय वाचं वदेति " ( बौश्रौ ६·२८–२९ ) इति ॥ उद्वादयति पाषाणेन फलके शब्दं जनयेत् । हे पाषाण, त्वं वीर्येण बृहन् महान् असि । किंच बृहन्तोऽवयवभूता ग्रावाणो यस्य स च त्वं बृहद्ग्रावा असि । इन्द्रार्थमिन्द्रो यथा

१५ आ.ना हा–संसृष्टे, मर–सदृष्टे । १६ त–वैष्णव्यौ । १७–१७ आ ड क पा–अथैने चर्म फलकयो । १८–१८ आ.क–यत्र प्रतिष्ठेति, त ना मर–यत्र प्रतितिष्ठतीति ।

श्रुत्वा आगच्छति । शतृप्रत्ययात् ( पा ३·२·१२५ ) “ उगितश्च ” ( पा ४·१·६ ) इति ङीप् ।
“ बृहन्महतोरुपसंख्यानम् ” ( पा ६·१·१७३ वा १ ) इति नद्या उदात्तत्वम् । “ शिरो वा
एतद्यज्ञस्य यद्धविर्धानं प्राणा उपरवा हनू अधिषवणे जिह्वा चर्म ग्रावाणो दन्ताः ” ( तैसं
६·२·११ ) इत्यादि ब्राह्मणम् । एतदुक्तं भवति—शिरःस्थानीये हविर्धाने प्राणस्थानीयेषूपरवेषु
हनूस्थानीयाभ्यामधिषवणफलकाभ्यां परिगृहीते जिह्वास्थानीये चर्मणि दन्तस्थानीयैः ग्रावभिः ५
खादनस्थानीयमभिषवं कृत्वा मुखस्थानीये आहवनीये हुत्वा प्रत्यग्गत्वा उदरस्थानीये सदसि
भक्षयन्तीति । “ यो वै विराजो यज्ञमुखे ” ( तैसं ६·२·११ ) इत्यादि च ॥

॥ इति तृतीये द्वितीयोऽनुवाकः ॥

शृणोति तथा बृहतीम् उच्चध्वनिमस्मद्यज्ञविषयां वाचं वद । त एते मन्त्रा उपेक्षिताः ॥ फलकयोरत्यन्त-
संश्लेषं निषेधति—“ हनू वा एते यज्ञस्य यदधिषवणे न सं तृणत्त्यसंतृण्णे हि हनू ” ( तैसं ६·२·११ ) इति । १०
हनू [19]मुखस्याऽऽधारफलके सोमाभिषवाधारफलके[20] । संतर्दनं रज्जुबन्धनादिना दृढसंश्लेषः, तमत्र न
कुर्यात् ॥ तत् द्विरात्रादौ प्रसङ्गाद्विधत्ते—“ अथो खलु दीर्घसोमे संतृद्ये धृत्यै ” ( तैसं ६·२·११ ) इति ।
आवृत्तत्वात् सोमस्य दीर्घत्वम् । अभिषवबाहुल्यात् दार्ढ्यार्थं तत्र संतर्दनम् ॥ अथ रूपकेणोपरवान्
प्रशंसन् प्रसङ्गात् सनिमित्तं सदसि सोमभक्षणं विधत्ते—“ शिरो वा एतद्यज्ञस्य यद्धविर्धानं प्राणा उपरवा
हनू अधिषवणे जिह्वा चर्म ग्रावाणो दन्ता मुखमाहवनीयो नासिकोत्तरवेदिरुदरं सदो यदा खलु वै जिह्वया १५
दत्स्वधि खादत्यथ मुखं गच्छति, यदा मुखं गच्छत्यथोदरं गच्छति, तस्माद्धविर्धाने चर्मन्नधि ग्रावभिरभि-
षुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति ” ( तैसं ६·२·११ ) इति । अत्राभिषवहोमौ
विधेयस्य भक्षणस्य निमित्तम् ॥ पुनरप्युपरवस्तुत्यै प्रकारान्तरेण रूपकं परिकल्प्य तद्वेदनं प्रशंसति—
“ यो वै विराजो यज्ञमुखे दोहं वेद दुह एवैनामियं वै विराट् तस्यै त्वक्चर्मौधोऽधिषवणे स्तना उपरवा
ग्रावाणो वत्सा ऋत्विजो दुहन्ति सोमः पयो य एवं वेद दुह एवैनाम् ” ( तैसं ६·२·११ ) इति । २०
अग्निष्टोमे द्वादशसु स्तोत्रेषु विद्यमाना ऋच आवर्त्यमानाः सत्यो नवतिः संपद्यन्ते । तत्र नवसु दशकेषु
प्रत्येकं विराट्छन्दोऽक्षरसंख्याऽस्तीत्ययं यज्ञो विराडित्युच्यते । एतदेवाभिप्रेत्य सप्तमकाण्डस्य प्रथमानुवाके
समाम्नायते—“ विराजमभि संपद्यते ” ( तैसं ७·१·१ ) इति । सोऽयं [21]यज्ञरूपो विराडत्र कामधेनुत्वेन
निरूप्यते । इयं च महावेदिरेव विराडाख्या धेनुस्तस्या धेनोर्या त्वक् तदिदमास्तृतं चर्म । ऊध आपीनभारः
तद्रूपं फलकद्वयम् । एवमन्यद्योज्यम् । परेद्युः कर्तव्यस्य यज्ञस्यायं कल्पः आरम्भोऽन्तःपातित्वात् मुखं, २५
तस्मिन् मुखे विराजो धेनोर्दोहनप्रकारं यो वेद स एनां कामधेनुं सर्वथा दुग्धे । ‘ य एवं वेद दुह एवैनाम् ’
इति पुनर्वचनमुपसंहारार्थम् । सेयमुपरवप्रशंसेति केचित् । स्वतन्त्रोपास्तिविधिरित्यन्ये । यथा सप्तम-
काण्डान्तेऽश्वमेधप्रकरणे—“ उषा वा अश्वस्य मेध्यस्य शिरः ” ( तैसं ७·५·२५ ) इति स्वतन्त्रोपास्तिराम्नाता
तद्वत् । तस्याश्च स्वातन्त्र्यं बृहदारण्यकस्याऽऽदौ (बृउ १·१) विस्पष्टम् । एतादृशानां वाक्यानां कर्मप्रकरणा-
दुत्कर्षे उत्तरमीमांसायां [22]गुणोपसंहारपादे सनश्चिदाद्यधिकरणे निर्णीतः (ब्रसू ३·३·४४–५२) । तस्मादुत्कर्षे ३०
स्वातन्त्र्यम्, अनुत्कर्षे तु स्तुतिरेवेनोपरववाक्याङ्गत्वम्, इत्याकारद्वयमभ्युपेयम् । अवेष्टेश्चातुर्मास्यानां च
[23]राजसूयान्तःप्रयोगबहिष्प्रयोगौ यथा तद्वदेवद्रष्टव्यम् ॥

१९. क.तं.मर– मुखस्याधरोत्तरफलके । २०. मर–वाधारं तत्फलके । २१. आ.ना.हा–
यज्ञः । २२. आ.ना.हा–गुणोपसंहारे । २३. इन्द–राजसूयान्तःप्रयोगे बहिःप्रयोगश्च; ना.हा–राजसूयान्तः-
प्रयोगः बहिःप्रयोगः । ३५

अत्र विनियोगसंग्रह —

" खनेदुपरवान् रक्ष इदं तन्मृदमुद्वपेत् ।
गाय तत्रावबाधेत किं स्वामी पृच्छतीतर ॥ १ ॥
भद्रमित्याह तत्राविरयाह स्वामीतर प्रति ।
५ विराड् चतुर्भि संतर्दौ रक्ष पञ्चस्फुरक्रिया ॥ २ ॥
रक्षोऽधिषवणाख्ये तु फलके स्थापयेत्तथा ।
पर्युह्य[24] परित स्तृत्वा मन्त्रयेच्च बृहस्विति ॥
उपांशुसवनाश्मान[25] सादयेद्द्विशतिर्मता ॥ ३ ॥ " इति ॥

अथ मीमांसा ॥ तृतीयाध्यायस्याष्टमपादे चिन्तितम्—

१० अत्र तन्नौ सहेत्येतत् कस्मिन् स्वामिनि युज्यते ।
द्विरश्रुत्या भवेदेतदध्वर्युयजमानयो ॥ " ( जैन्या ३ ८·२२ ) इति ॥

ज्योतिष्टोमे हविर्धानमण्डपे सोमाभिषवाधारयो फलकयोरधस्तात्पश्चात्स्वाग्नेय्यादिदिक्षु[26] चत्वार उपरवनामका गर्ता बाहुमात्रखाता अधोभागे परस्परमिलिता ऊर्ध्वभागे परस्परं प्रादेशमात्रव्यवहिता वर्तन्ते । तेष्वेकस्मिन्नुपरवे यजमानो दक्षिणहस्त प्रसारयति । तथैवाध्वर्युरन्यस्मिन् स्वहस्तं
१५ प्रसार्याधस्ताद्यजमानहस्तं गृह्णाति । तदा यजमान ' किमत्र ' इत्यनेन मन्त्रेण फल पृच्छति । अध्वर्युश्च ' भद्रम् ' इत्यनेन मन्त्रेणोत्तरं ब्रूते । ततो यजमान ' तन्नौ सह ' इत्यनेन मन्त्रेण तत्फलं स्वकीयत्वेन स्वीकरोति । तस्माद् यजमानस्यैतदिति चेत् । मैवम् । ' नौ ' इत्यनेन द्विवचनेन ' सह ' इत्यनेन चोभयगामित्वेनैव स्वीकारात् ।

तत्रैव तृतीयपादे चिन्तितम्—

२० " संतृद्ये दीर्घसोमे तत्प्रकृतौ विकृतावुत ।
दीर्घस्य सोम इत्युक्तेः प्रकृतावस्तु वर्तनम्[27] ॥
सामानाधिकरण्यस्य षष्ठीतो बलवत्त्वत ।
दैर्घ्ययुक्तेऽध्वरस्थात्रावुत्कर्षोऽन्यत्र बाधनात् ॥ "
( जैन्या ३·३·३९–४० ) इति ॥

२५ ज्योतिष्टोमे श्रूयते—" दीर्घसोमे संतृद्ये धृत्यै[28] " ( तैसं ६·२ ११ ) इति । सोमयागविशेषो दीर्घसोम । तस्मिन् सोमाभिषवाधारयोरधिषवणफलकयो संतर्दनं कार्यम् । अन्योन्यवियोगेन शैथिल्य मा भूदिति "दृढसंश्लेष[29] संतर्दनम् । तदेतत् प्रकरणबलात् प्रकृतौ विनिविशते । न च तत्र दीर्घसोमत्वानुपपत्ति । दीर्घस्य सोमः इत्येव "दीर्घशब्दस्य यजमानविशेषणत्वेनाप्युपपत्तेरिति प्राप्ते ब्रूम —' षष्ठीसमासात् कर्मधारयो बलीयान् ' इति वक्ष्यते* । तथा सति दीर्घत्व सोमस्य धर्मो न तु यजमानस्य । नन्वेवमपि प्रकृ-
३० तिभूतस्य सोमस्येष्टिपश्वपेक्षया दीर्घत्वमस्त्येवेति चेत् । न । सोमशब्देनैव तदवगतौ दीर्घशब्दवैयर्थ्यात् । न हि इष्टिपश्वपेक्षया ह्रस्व कश्चित् सोमोऽस्ति, यस्य व्यावृत्तये दीर्घशब्द प्रयुज्येत । तस्मात् प्रकृतिरूपं ह्रस्वसोम व्यावर्तयितुमयं दीर्घशब्द । विकृतिषूक्थ्यादिषु प्रज्ञाधिक्येन दीर्घत्वम् । तस्माद्वाक्येन प्रकरण

२४ इ उ पा–पर्युह्य । २५ क–°सदनाश्मानम् । २६ आ–°य्यादिविदिक्षु । २७. तं.मर–दर्शनम् । २८ इ उ ना.पा.हा–' धृत्यै ' नास्ति । २९. आ–दृष्टसंश्लेष । ३०. आ–दीर्घत्वस्य, इ उ.
३५ ना.पा भां हा–दीर्घस्य । *[ द्र. जैन्या ६·१·१८, शाबरभाष्य–जैसू ६·१·५१–५२ ] ।

उपरवाः ]

बाधित्वा विकृतिषु तन्निवेशः । प्रकृतौ तु दीर्घशब्दस्य बाधः पूर्वमुक्तः । संतर्दनबाधश्च साक्षात् श्रूयते— " हनू वा एते यज्ञस्य यदधिषवणे न संतृणत्त्यसंतृण्णे हि हनू " ( तैसं ६·२·११ ) इति । तस्मान्न प्रकृतौ निवेशः ।

तत्रैव पञ्चमपादे चिन्तितम् —

" आख्यावषट्कारा एव किं भक्षहेतवः ।
किं वाऽभिषवहोमौ च तत्राद्योऽस्तूक्तया दिशा ॥
हविर्धानेऽभिषुत्याथ हुत्वा सदसि भक्षयेत् ।
इति श्रुतत्वतस्तौ च भक्षहेतू यथेतरे ॥ " ( जैन्या ३·५·१८–१९ ) इति ॥ ५

[31]" प्रैतु होतुश्चमसः " ( शांश्रा ४·२·१·२९ ) इत्यत्र[31] समाख्या भक्षहेतुः; हारियोजनवाक्यं; ' वषट्कर्तुः प्रथमभक्षः ' इत्यत्र वषट्कार इत्येवमुक्तत्वात् त्रय एव भक्षहेतवः[32] इति चेत् । मैवम् । " हविर्धाने चर्मण्यधि ग्रावभिः अभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति " ( तैसं ६·२·११ ) इति श्रूयते । उत्तरवेद्याः प्रतीचीने सदसः प्राचीने मण्डपेऽभिषवः, उत्तरवेद्यां होमः, सदसि भक्षणम् । तत्राभिषवहोमयोर्वचनान्तरमासयोरविधेयतया[33] तौ निमित्तत्वेनानूद्य भक्षणं विधीयते तस्मात् समाख्यादिवत् एतयोरपि हेतुत्वमस्ति । १०

[34]षष्ठाध्यायस्य चतुर्थपादे[34] चिन्तितम्— १५

" अभिषुत्य ततो हुत्वा खादेदेकैकहेतुता[35] ।
संहत्य वा निमित्तोक्तौ साहित्याविधिलोऽग्रिमः ॥
होमाभिषवकर्ताऽत्र भक्षाङ्गत्वेन चोद्यते ।
निमित्तताऽऽर्थिकी तस्मात् साहित्यं हेतुतां मतम् ॥ "
( जैन्या ६·४·१०–११ ) इति ॥ २०

ज्योतिष्टोमे श्रूयते—" हविर्धाने चर्मण्यधि ग्रावभिरभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति " ( तैसं ६·२·११ ) इति । तत्राभिषवहोमयोरेकैक एव भक्षहेतुः । साहित्यस्याविधेयत्वात् । अभिषवहोमावत्र निमित्तत्वेनोच्येते । तत्र साहित्यविधौ वाक्यं भिद्येत । अभिषवहोमौ भक्षहेतू । तौ च सहिताविरयेवं तद्भेदः । तस्मात् साहित्यस्याविधेयत्वादभिषवहोमयोः प्रत्येकं भक्षणनिमित्तत्वमिति प्राप्ते ब्रूमः—नात्र निमित्तमुपन्यस्यते, किंतु होमाभिषवयोः कर्ता भक्षणे प्रत्यङ्गत्वेन पूर्वमप्राप्तत्वाद्विधीयते । तथा सत्यभिषवहोमयोर्यन्निमित्तत्वं प्रतीयते तदार्थिकमिति वाक्यभेददोषाभावात् साहित्यं प्रतीयमानं विवक्षितमिति [36]सहितयोरेव तयोर्निमित्तत्वम् ॥ [37]अत्र सर्वेषां [38]यजुष्ट्वात् नास्ति छन्दः ॥ २५

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

३१–३१. इ.उ.ना.पा.हा–होतुरित्यत्र । ३२. आ.ना.हा–' भक्षहेतवः ' नास्ति । ३३. आ.इ.क.ना.पा.मर.हा–अभिधेयतया । ३४–३४. इ.उ–षष्ठस्य चतुर्थे । ३५. क.ना.पा–हेतुना । ३६. तं.मर.मै१–संहतयोरेव । ३७. इ.उ.तं.पा.मां.मर.मै१.हा–तत्र । ३८. तं.मर.मै१–यजुषाम् । ३०

विभूरसि प्रवाहणो

विभूरिति वि—भूः । असि । प्रवाहण इति प्र—वाहनः ।

अथ धिष्ण्यनिवपनमन्त्राः । "चात्वालाद्धिष्णियानुप वपति" (तैसं ६ ३·१) इत्यादि ब्राह्मणम् । तत्राग्नीध्रीयादयोऽष्टौ न्युप्यन्ते । आहवनीयादयोऽष्टावनुदिश्यन्ते । "न्यन्ये धिष्णिया उप्यन्ते नान्ये" (तैसं ६ ३·१) इत्यादि ब्राह्मणम् ।

तत्राग्नीध्रीयं निवपति । चात्वालात् पुरीषं सिकता इति गृहीत्वा परिमण्डलं धिष्ण्यं करोति—'विभूः' इति ॥ 'रौद्रेणानीकेन' इत्यादि सर्वत्रानुषज्यते । आधेयाग्निधर्मा आधारेषूपचर्यन्ते । विविधं भवितासीति विभूः । "आग्नीध्रात् धिष्णियान् विहरति" (तैसं ६·३·१) इति सर्वधिष्णिययोनित्वात्[1] विभूरित्युच्यते । "भुवः संज्ञान्तरयोः" (पा ३ २·१७९) इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६ २·१३९) । यतः एवंविधोऽसि तस्मात् प्रवाहणः त्वं प्रकर्षेण हविषां वाहयिता स्वात्मनान्यैश्च धिष्ण्याधारैरग्निभिः । वहतेर्ण्यन्ताद्बहुलवचनात् कर्तरि करणे वा ल्युट् (पा ३ ३ ११३, ११७) । कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६·२·१३९) । "लिति" (पा ६ १ १९३) इति प्रत्ययात्पूर्वस्योदात्तत्वम् । "कृत्यचः" (पा ८ ४ २९) इति णत्वम् । यद्वा—वाहृ प्रयत्ने । तस्मात् ल्युट् (पा ३ ३ ११३) । यज्ञार्थं प्रकर्षेण व्याप्रियमाण इति यावत् । रौद्रेण क्रूरेण अनीकेन सैन्येन । [2]रौद्रमिव रौद्रम्[2] । यथा रौद्रगणः क्रूरो भवति एवमन्यदपि यत्क्रूरं तद्रौद्रम् । "संज्ञायां च" (पा ५ ३ ९७) इत्युत्पन्नस्य कनः देवपथादित्वात् लुप् (पा ५ ३·१००) । "संज्ञायामुपमानम्" (पा ६·१ २०४) इत्याद्युदात्तत्वम् । "*स्फिगन्तस्योपमेयनामधेयस्य" (फि ३९) इति वा । हे अग्ने, अन्याधार मां पाहि रक्ष । पिपृहि पूरय च मां कामैः । पॄ पालनपूरणयोः अनुदात्तः उदात्तेत् जुहोत्यादिकः । "अर्तिपिपर्त्योश्च" (पा ७ ४ ७७) इत्यभ्यासस्य इत्वम् । यद्वा—पिपृहि तृप्य अस्मासु सानुग्रहो भव । पृ प्रीतौ भ्वादिकः उदात्तेत् । "बहुलं छन्दसि" (पा २ ४ ७६) इति शपः श्लुः । "बहुलं छन्दसि" (पा ७ ४ ७८) इत्यभ्यासस्य इत्वम् । मा च मा हिंसीः । अत्र "चादिलोपे विभाषा" (पा ८ १·६३) इति प्रथमा तिङ्विभक्तिर्न निहन्यते, अपदादपरत्वाद्द्वितीया न निहन्यते, तृतीया तु निहन्यत एव ॥

द्वितीयेऽनुवाके हविर्धानमतोपरवनिर्माणमुक्तम् । अथावशिष्टेष्वाग्नीध्रीयसदःप्रभृतिस्थानेषु धिष्णियास्तृतीयेऽनुवाकेऽभिधीयन्ते ।

१ मै—सर्वधिष्ण्यादित्वात् । २-२ त भि पै—इव रौद्रा । *[ फिट्सूत्रपाठे 'लुबन्तस्योपमेयनामधेयस्य' इति सूत्रम् । द. निको—'स्फिगन्तस्येति पाठान्तरम् । स्फिगिति लुपः प्राचां संज्ञा ।']
३ तं ति भि—आयस्व ।

वर्हिरसि हव्यवाहनः* श्वात्रोऽसि प्रचेताः*

वर्हिः । असि । हव्यवाहन इति हव्य-वाहनः । श्वात्रः । असि । प्रचेता इति प्र-चेताः ।

होतुर्धिष्ण्यं निवपति—' वहिरसि ' इति । [4]वहतिरावाहने वर्तते । " वहिश्रि " (उ ५००) इत्यादिना निप्रत्ययः । तत्र [5]"हि निदित्युच्यते"[5] । वहिः असि देवानामावाहकोऽसि आह्वातासीति यावत् । आहूय तेभ्यो हव्यानां हविषां वोढा प्रापयिता चासि । " हव्येऽनन्तःपादम् " (पा ३.२.६६) इति ञ्युट् । कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६.२.१३९) ॥

मैत्रावरुणस्य धिष्ण्यं निवपति—' श्वात्रोऽसि ' इति ॥ आशुशब्दस्य पूर्वापरवर्णविपर्ययः । आशु त्राता श्वात्रः । मित्रमेव तथा करोति । " आतोऽनुपसर्गे कः " (पा ३.२.३) इति कः । [M]क्रियाविशेषणानामपि कर्मत्वात् । थाथादिस्वरेणोत्तरपदान्तोदात्तत्वम् (पा ६.२.१४४), यद्वा—[*]आशु सर्वदा [6]अतति[6]* गच्छतीति श्वात्रः । मित्रमेव तथा करोति । सर्वथा व्युत्पत्त्यनवधारणाभावगृह्यते । अत सातत्यगमने । " दादिंभ्यश्छन्दसि " (उ ६१९) इति त्रन्प्रत्ययः । " त्रिचक्रादीनामन्तः " (पा ६.२.१९९ वा १) इत्यन्तोदात्तत्वम् । " तितुत्र " (पा ७.२.९) इतीट्प्रतिषेधः । [7]प्रकृष्टं चेतयतीति प्रचेताः । चिती संज्ञाने । " गतिकारकयोः पूर्वपदप्रकृतिस्वरत्वं च " (द्र.उ ६७६.) इति तस्मादसुन्प्रत्ययः, पूर्वपदप्रकृतिस्वरत्वं च । प्रचेताः वरुणः । एवं मित्रावरुणसंबन्धिनो मैत्रावरुणस्य धिष्ण्यं ताभ्याममेदेन स्तूयते ॥

विभूरिति ॥ कल्पः—" [1]"आग्नीध्रं त्वा"[1] स्फ्येनोद्धत्यावोक्ष्य चात्वालपुरीषं सिकता इति निर्वपति विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा मा हिंसीरिति । तं परिमण्डलं धिष्णियं करोति । अथैनं सिकताभिराभ्राशितं करोति । अथान्तःसदसि धिष्णियान्निवपति होतुः प्रथमं वह्निरसि हव्यवाहन इति । श्वात्रोऽसि प्रचेता इति दक्षिणतो मैत्रावरुणस्य । तुथोऽसि विश्ववेदा इत्युत्तरतो ब्राह्मणाच्छंसिनः । उशिगसि कविरित्युत्तरतः पोतुः । अङ्घारिरसि बम्भारिरित्युत्तरतो नेष्टुः । अवस्युरसि दुवस्वानित्युत्तरतोऽच्छावाकस्य । अथ दक्षिणे वेद्यन्ते मार्जालीयं निवपति शुन्ध्यूरसि मार्जालीय इति । सर्वेष्वेव रौद्रमनुवर्तयति ।...। अथाध्वर्युरुदिशति । सम्राडसि कृशानुरित्याहवनीयमुपतिष्ठते । परिषद्योऽसि पवमान इत्यास्तावम् । प्रतक्वासि नभस्वानिति चात्वालम् । असंमृष्टोऽसि हव्यसूद इति पशुश्रपणम् । अथ सदसो द्वारि तिष्ठन्नौदुम्बरीमुपतिष्ठ ऋतधामाऽसि सुवर्ज्योतिरिति । ब्रह्मज्योतिरसि सुवर्धामेति ब्रह्मसदनम् । अथात्रैव तिष्ठन् गार्हपत्यमुपतिष्ठतेऽजोऽस्येकपादिति । अहिरसि बुध्निय इति यं प्रहास्यन्तो भवन्ति । (बौश्रौ ६.२९) इति ॥ अत्र ' रौद्रेण ' इति वाक्यं सर्वमन्त्रशेषत्वादन्ते समाम्नायते आभ्राशितं समन्ताद्यथा न भ्रश्यति तथा करोति शुभ्रं वा करोति । हे आग्नीध्रीय, [2]"त्वत्तोऽन्यधिष्णियं विहरंस्त्वं"[2] विभूः असि विविधं भवसि । हविषां प्रवाहयितृत्वात् प्रवहणः असि । हे होत्रीय, त्वं वः वह्निः

४. त्रि-वहतिराह्वाने । ५-५. तं-वह्निरित्युच्यते; त्रि-ह निदित्युच्यते । [M][द्र.सीरदेव-परिभाषा वृत्ति ५४-" क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता च ".।] । *-* [द्र. निरुक्त ५.३-" आशु अतनं भवति ".।] । ६. त्रि.मै-' अतति ' नास्ति । ७. मै-प्रकृष्टः ।

१-१. आ-आग्नीध्रीयं गत्वा; इ.उ-आग्नीध्रं गत्वा; तं-आग्नीध्रंश्रुत्या; म२-आग्नीध्रं धृत्वा
२-२. क-त्वत्तोऽन्यधिष्णियविहरणात् ।

तुथोऽसि विश्ववेदा* उशिगसि कवि-*

तुथ । असि । विश्ववेदा इति विश्व-वेदा । उशिक् । असि । कविः ।

ब्राह्मणाच्छंसिनो विष्ण्यं निवपति—' तुथोऽसि ' इति ॥ तुथ नामाग्नि दक्षिणा-विभागकृत । " तुथो ह स्म व विश्ववेदा देवाना दक्षिणा वि भजति " ( तैस ६ ६ १ ) इति ब्राह्मणे तुथ प्रसिद्ध । स एव त्वम् असि इति स्तूयते विभागसामर्थ्यं प्रकटयितुम् । अयमपि हि "ब्राह्मणानि विभज्य" शसति । तु इति सौत्रो धातु ( पा ७·३ ९५ ) वृद्धिकर्मा । " पातृतुदि " ( उ १७२ ) इत्यादिना पितृत्यादिभ्यो विधीयमान थक्प्रत्ययो बहुलवचना-दस्मादपि भवति । महानित्यर्थ । यद्वा—स्तौते थस्याद्यवर्णलोप । यथोक्तम्—" द्वौ चापरौ वर्णविकारनाशौ " ( द्र काशिका पा ६ ३ १०९ ) इति । स्तुत्य इत्यर्थ । विश्व वेत्ति विन्दतीति
१० वा विश्ववेदा । " गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्व च " ( उ ६७६ ) इति कारकपूर्वादसुन् प्रत्यय । तत्र पूर्वपदप्रकृतिस्वरग्रहणस्य बहुव्रीहिस्वरस्योपलक्षणत्वात् " बहुव्रीहौ विश्व सज्ञायाम् " ( पा ६ २·१०६ ) इति पूर्वपदान्तोदात्तत्वम् । सर्वधनो वा ॥

पोतुर्धिष्ण्यं निवपति—' उशिगसि ' इति ॥ पोतारौ देवकरौ । यथा—" मन्द्रा पोतारा कवी प्रचेतसा " ( तैब्रा ३·६ २ ) इति । अतोऽस्यापि तद्रूपेण स्तुति । उशिक् कमनीय
१५ स्पृहणीय । वश कान्तौ । " वश किच्च " ( उ २३९ ) इति इजिप्रत्यय । कवि. क्रान्तदर्शन-सूक्तिमार्गाणा द्रष्टा । कु शब्दे । " अच इ " ( उ ५८८ ) इतीप्रत्यय ॥

नेष्टुर्धिष्ण्य निवपति—' अङ्घारि. ' इति ॥ द्वावेतावग्निविशेषौ । यथा—" स्वान भ्राजाङ्घारे बम्भारे " ( तैस १ २ ७ ) इति । तावत्र स्तूयेते । अङ्कमाना स्वमार्गप्रच्युता अरयो यस्य सोऽङ्कारि, अङ्कमानारि अङ्घारि । मानचो लोप । यद्वा—पचाद्यजन्त
२० ( पा ३ १ १३४ ) समस्यते । एव बम्भ्रम्यमाणारि बम्भारि । भ्रमेर्यङ्लुगन्तात् पचाद्यच् ( पा २·४ ७४, ३·१·१३४ ) । रेफमकारयोर्लोप । विनिष्टैश्वर्यतया व्याकुलत्व बम्भ्रम्य-माणत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ( पा ६ २·१ ) । " अदुपदेशात् " ( पा ६ १ १८६ ) इति लसार्वधातुकानुदात्तत्वे धातुस्वर । अस्मिन् पक्षे वृषादित्वात् ( पा ६·१ २०३ )

*इध्मवाहन तद्रूप *असि । हे मैत्रावरुणीय, *भ्रात ? मित्र *प्रचेता *वरुण तद्रूपस्य *असि ।
२५ हे ब्राह्मणाच्छंसिधिष्ण्यग्ने, " तुथो ह स्म वै विश्ववेदा देवाना दक्षिणा वि भजति " ( तैसं ६ ६·१ ) इत्या म्नातो विश्वामित्रो य *तुथ तद्रूप *असि । हे पोत्रीय, त्वम् *उशिक् कमनीय *कवि विद्वानसि ।

८–८. त ति–ब्राह्मणान् विसृज्य, त्रि–ब्राह्मणान् विभज्य । ९. भ–शब्दे ।

३ इ-उ ना पा मा.ग्रा—धात्रोऽसि ।

धिष्णियाः ]

-रङ्घारिरसि बम्भारि*रवस्युरसि दुवस्वा*ञ्छुन्ध्यूरसि मार्जालीयः*
सम्राडसि कृशानुः*

अङ्घारिः । असि । बम्भारिः । अवस्युः । असि । दुवस्वान् । शुन्ध्यूः । असि । मार्जालीयः ।
सम्राडिति सम्–राट् । असि । कृशानुरिति कृश–अनुः ।

पूर्वपदस्याद्युदात्तत्वं द्रष्टव्यम् । यद्वा—बम्भ्रमदर्विम्भारिः इति शत्रन्तः ( पा ३.२.१२४ ) ५
समस्यते । स च " अभ्यस्तानामादिः " ( पा ६.१.१८९ ) इति आद्युदात्तः ॥

अच्छावाकस्य धिष्ण्यं निवपति—' अवस्युः ' इति ॥ वातविशेषवचनावेतौ । यथा—
" अवस्यवे त्वा वाताय स्वाहा । दुवस्वते त्वा वाताय स्वाहा " ( तैआ ४.९ ) इति ।
तत्संबन्धित्वेनास्य स्तुतिः । अव रक्षणे । अवतेरसुन्प्रत्ययः ( उ ६३८ ) । तदिच्छति सर्वेषामिति
" छन्दसि परेच्छायामपि " ( काशिका, पाभा ३.१.८ ) इति क्यचि, " क्याच्छन्दसि " ( पा ३.२. १०
१७० ) इत्युप्रत्ययः । *दुवस्यतिः परिचारकर्मा कण्ड्वादिः ( पा ३.१.२७ ) । प्रातिपदिकत्वपक्षे
" तदस्यास्त्यस्मिन् " ( पा ५.२.९४ ) इति मतुप् । परिचरणवान् सर्वैः [10]परिचर्य इत्यर्थः ।
वृषादित्वादाद्युदात्तत्वम् ( पा ६.१.२०३ ) । निपातो वायं द्रष्टव्यः ॥

मार्जालीयं निवपति—' शुन्ध्यूः ' इति ॥ शुन्ध्यूः शोधयिता, पात्रप्रक्षालनस्थानत्वात् ।
" यजिमनिशुन्धि " ( उ ३०७ ) इत्यादिना युच्प्रत्ययः । वर्णव्यत्ययेन दीर्घत्वम् । मृज्यन्ते १५
पात्राणीति मार्जालीयः । " स्याचतिमृजेरालज्वालञालीयचः " ( उ १२१ ) इत्यालीयच्-
प्रत्ययः । " उपोत्तमं रिति " ( पा ६.१.२१७ ) इत्युपोत्तमस्योदात्तत्वम् । त्वयि कृतमार्जनानां
पात्राणां शोधयितासीत्यर्थः । एवमष्टौ न्युप्यन्ते ॥

अथाष्टावनुदिश्यन्तेऽनुक्रमेण संकीर्त्यन्ते उपतिष्ठमानेन । आहवनीयमुपतिष्ठते—' सम्राट् '
इति । सम्यक् राजतीति सम्राट् । " सत्सूद्विष " ( पा ३.२.६१ ) इत्यादिना क्विप् । " मो २०
राजि समः क्वौ " ( पा ८.३.२५ ) इति मकारः । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६.२.१३९ ) ।
कृशा अल्पा अनवः प्राणिनो यस्मिन् सः कृशानुः । यस्मिन् सम्यक् राजति सर्वे प्राणिनः
स्वल्पवीयशरीरैश्वर्या भवन्ति तादृशः असि इत्यर्थः । कृश अल्पीभावे । इगुपधलक्षणः कः ( पा
३.१.१३५ ) । भृमृशीप्रभृतिभ्यो विधीयमान उप्रत्ययो ( उ ७ ) बहुलवचनादनितेरपि भवति ॥

हे नेष्टीय, सोमरक्षकौ यौ अङ्घारिबम्भारिनामकौ तद्रूपः असि । हे अच्छावाकसंबन्धिन्, " अवस्यवे त्वा २५
वाताय स्वाहा दुवस्वते त्वा वाताय स्वाहा " इत्याम्नातौ यौ अवस्युदुवस्वन्तौ वातविशेषौ तद्रूपः असि ।
हे मार्जालीय, त्वं शुन्ध्यूः शोधकः पात्रप्रक्षालनेन लेपमार्जनस्थानभूतः असि । हे आहवनीय, सम्यक्

*[द्र, निघण्टु ३.५.५] । १०. तं–ति.त्रि.पं–परिचर्यते ।

४. तं.मर–°नामानौ ।

परिषद्योऽसि पवमानः* प्रतक्कासि नभस्वान्* संमृष्टोऽसि हव्यसूद्*
ऋतधामाऽसि सुवर्ज्योतिः*

परिषद्य इति परि–सद्य । असि । पवमानः । प्रतक्केति प्र–तक्का । असि । नभस्वान् ।
असंमृष्ट इत्यसम्–मृष्टः । असि । हव्यसूद् इति हव्य–सूदः ।
५ ऋतधामेत्यृत–धामा । असि । सुवर्ज्योतिरिति सुवः–ज्योतिः ।

आस्तावमुपतिष्ठते—'परिषद्योऽसि' इति ॥ परितः सीदन्त्यस्मिन्निति *परिषद्यः । "शकिसहोश्च" (पा ३.१.९९) इति चकारस्यानुक्तसमुच्चयार्थत्वात्, "कृत्यल्युटो बहुलम्" (पा ३.३.११३) इति बहुलवचनाद्वा अधिकरणे यत्प्रत्ययः । "सदिरप्रतेः" (पा ८.३.६६) इति षत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६.२.१३९) । "यतोऽनावः" (६.१.२१३)
१० इत्याद्युदात्तत्वम् । *पवमानः शोधनं कुर्वन् । "पूङ्यजोः शानन्" (पा ३.२.१२८) इति शानन्प्रत्ययः । पूङ् पवने भौवादिकः । बहिष्पवमानसबन्धाद्वा पवमान इत्युच्यते ॥

चात्वालमुपतिष्ठते—'प्रतक्का' इति ॥ *तकतिर्गतिकर्मा । प्रकृष्टा[11] गतिर्गमनं प्रतक् । तत्र हि ऋत्विग्यजमानाः[12] बहिर्मार्जनार्थं गच्छन्ति । तदस्यास्तीति *प्रतक्का । "छन्दसीवनिपौ" (पा ५.२.१०९ वा २) इति वनिप्प्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६.२.१३९) ।
१५ यद्वा—प्रकर्षेण गच्छन्ति ऋत्विग्यजमाना इति प्रतक्का । "अन्येभ्योऽपि दृश्यन्ते" (पा ३.२.७५) इति वनिप्प्रत्ययः । *नभस्वान् उद्धृतपुरीषत्वेनावकाशवान् ॥

पशुश्रपणमुपतिष्ठते—'असंमृष्टः' इति ॥ असंमृष्ट अविनाशितः । मृश आमर्शने । अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६.२.२) । रक्षःप्रभृतिभिरपरामृष्टः *असि इति यावत् । हव्यानां हृदयादीनां सूदः पाचकः । षूद क्षरणे । पाकविशेषः क्षरणम् । "कर्मण्यण्"
२० (पा ३.२.१) । "कूलसूदस्थलकर्षाः संज्ञायाम्" (पा ६.२.१२९) इत्युत्तरपदाद्युदात्तत्वम् ॥

सदसो द्वारि तिष्ठन्नौदुम्बरीमुपतिष्ठते—'ऋतधामा' इति ॥ ऋतं सत्यं यज्ञो** वा, तद् धाम स्थानं यस्याः सा *ऋतधामा । यद्वा—ऋतं साम तद्धाम यस्याः । तन्मूले हि साम गीयते । "औदुम्बरीं स्पृष्ट्वोद्गायेत्" (द्र. लाट्यायनश्रौसू २.६.२) इति । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् (पा.६.२.१) । ऋतशब्दो निष्ठान्तोऽन्तोदात्तः (पा ३.२.१०२) । सुवः स्वर्ग आदित्यो वा ।

२५ राजमानं *कृशानुं *असि । हे आस्ताव स्तोत्रस्थान, *परिषद्य परितः सदनयोग्य *पवमान पूत *असि । हे चात्वाल, कृष्णविषाणयागार्थं *प्रतक्का *प्रकृष्टगमनविषयः *नभस्वान् अन्तरवकाशवान् *असि । हे पशुश्रपणप्रदेश, राक्षसैः *असमृष्ट *हव्यसूद हृदयादिहव्यपाचकोऽसि । हे औदुम्बरि, त्वम् *ऋतधामा सामगानाम् ऋतम् अवश्यभावि धामोपवेशनस्थानं यस्यास्तादृशी *सुवर्ज्योतिः उज्ज्वलत्वेन स्वर्गो-

*[द्र निघण्टु २.१४.६८] । ११. ति त्रि मै–प्रकृष्टम् । १२ तं ति त्रि पं –हविर्मार्जनार्थम् ।
**[द्र. निरुक्त ४.१९] ।

ब्रह्मज्योतिरसि सुवर्धामा॒ऽजोऽस्येकपाद्-*

ब्रह्मज्योतिरिति ब्रह्म-ज्योतिः । असि । सुवर्धामेति सुवः-धाम । अजः । असि । एकपादित्येक-पात् ।

तत्रस्थं ज्योतिर्दीप्तिः यस्याः सा [V]सुत्रज्योतिः उच्छ्रितत्वात् । " सप्तम्युपमानपूर्वपदस्य बहुव्रीहिर्वाच्यो वाचोत्तरपदलोपश्च " ( द्र. पाभा २-२-२४ वा १२ ) इति समासः । " न्यङ्स्वरौ स्वरितौ " ५ ( फि ७४ ) इति स्वःशब्दः स्वर्यते ॥

ब्रह्मसदनमुपतिष्ठते—' ब्रह्मज्योतिः ' इति ॥ ब्रह्म [13]बृहत् ज्योतिर्दीप्तिर्यस्य सः [V]ब्रह्म-ज्योतिः धिष्ण्यः । " बृंहेर्नलोपश्च " ( उ २७४ ) इति मन्प्रत्ययान्तो ब्रह्मशब्दः । यद्वा—द्योतत इति ज्योतिः । " द्युतेरिसिन्नादेश्च जः " ( उ २७५ ) इति इसिन्प्रत्ययः । द्योतमानो ब्रह्मा यत्र स ब्रह्मज्योतिः । द्योतमानब्रह्मेति यावत् । आहिताग्न्यादित्वात् परनिपातः ( पा २-२-३७ ) । १० ब्रह्मसदने हि ब्रह्मा द्योतते । [14]सुवः स्वर्ग इव धाम स्थानमिवावस्थानं[14] यस्मिन् सः [V]सुवर्धामा । उपमानपूर्वपदस्य बहुव्रीहिसमासः ( पा ६-२-२ ) । यद्वा—सुष्ठु अर्यते गम्यते इति स्वः । अर्तेर्विचि ( पा ३-२-७५ ) गतिसमासः ( पा २-२-१८ ) । [15]यद्वा—सुखमुच्यते । सुखनामसु हि ' सुवः सुखम् ' इति निरुक्तकाराः पठन्ति । सुखं धाम स्थानं यत्र तादृशं, तत्र हि ब्रह्मा सुखमास्ते ॥ १५

[16]अत्रैव तिष्ठन् गार्हपत्यमुपतिष्ठते—' अजोऽसि ' इति ॥ जायन्ते उत्पद्यन्तेऽस्मादा-हवनीयादय इति [V]अजः । " जनेर्डश्च[17] " ( द्र. पा ३-२-९७ ) इति जनेर्डप्रत्ययः । टिलोपः ( पा ६-४-१४३ ), धातोश्चाडागमः । यद्वा—न जायत इत्यजः, नित्य इति यावत् । " अन्येष्वपि दृश्यते " ( पा ३-२-१०१ ) इति डः । नञ्युपपदत्वात् कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६-२-१३९ ) । यद्वा—अजन्ति गच्छन्त्यस्मादाहवनीयादय इत्यजः । अज गतिक्षेपणयोः । २० " घञर्थे कविधानम् " ( पा ३-३-५८ वा ४ ) इति कः । बहुलवचनाद्विभावाभावः । ण्यन्ताद्वा पचाद्यच् ( पा ३-१-१३४ ) । " बहुलं संज्ञाछन्दसोः " ( द्र. उ १९० ) इति णिलुक् । आहवनीयादीनां गमयिता अजः । एकः पादोऽस्येति [V]एकपात् । " संख्या सुपूर्वस्य "

प्रकाशिका [V]असि । हे ब्रह्मसदन, त्वं [V]ब्रह्मज्योतिः ब्रह्मनामकस्यर्त्विजः प्रोक्षणादिकर्माभ्यनुज्ञानरूपं[5] ज्योति-र्यस्मिन् स्थाने तादृशमसि, [V]सुवर्धामा स्वर्गसदृशं स्थानं यस्य तथाविधमसि । हे नूतनगार्हपत्य, यो देवः २५ " प्रोष्ठपदा नक्षत्रमज एकपाद्देवता " ( तैसं ४-४-१० ) इत्याम्नातस्तद्रूपः [V]असि । पुरातनं गार्हपत्यमिव ऊर्ध्वस्थऋत्विजः परित्यक्ष्यन्तो भवन्ति । हे त्याज्यगार्हपत्य, यो देवः " प्रोष्ठपदा नक्षत्रमहिर्बुध्नियो देवता "

१३. मै-' बृहत् ' नास्ति । १४-१४. मै-स्वर्गावस्थानमिवावस्थानम्; पं -स्वर्गो वासस्थानमिति वाऽवस्थानम् । १५. मै-' यद्वा ' नास्ति । १६. तं.ति-तत्रैव । १७. ति-' जनेर्डश्च ' नास्ति ।

५. तं-[5]कर्मणा अभ्यनुज्ञानरूपम्; म२-[5]कर्माण्यभ्यनुज्ञानरूपम् । ३०

-र्हिरसि बुध्नियो रौद्रेणानीकेन (१) पाहि माऽग्ने पिपृहि
मा मा मा हिꣳसीः ॥ ३ ॥
[ अनीकेनाष्टौ च ]

अहिः । असि । बुध्नियः । रौद्रेण । अनीकेन (१) । पाहि । मा ।
अग्ने । पिपृहि । मा । मा । मा । हिꣳसीः ॥ ३ ॥
[ मैस १.२.१२, काम २.१३; कपिसं २ ७; वास ५.३१-३४ ]

(पा ५ ४ १४० ) इत्यन्तलोपः समासान्त । पूर्वपदप्रकृतिस्वरत्वम् (पा ६ २ २ )। " इणूभीकापा " ( उ ३३० ) इत्यादिना कन्प्रत्ययान्त एकशब्द । एको ह्यस्य पादो देवाना यष्टा देवयष्णामा, यथोक्तम्—" आ देवयज वह " ( तैस १.१ ७ ) इति । [18]"पद्यते प्रतिपद्यते"[18] हवींषीति पाद । " पदरुजविशस्पृशो घञ् " ( पा ३ ३ १६ ) इति घञ् । अग्नेरशा पादा । " अपाग्नेऽग्निमामाद जहि निष्क्रव्याद꣡ꣳ सेधाऽऽ देवयज वह " ( तैस १ १ ७ ) इत्यशान्तरनिवारणात् हव्याना वोढुरेकपात्त्वम् ॥

पुराणगार्हपत्यमुपतिष्ठते य प्रहारयन्तो भवन्ति—' अहिरसि ' इति ॥ आगत्य हन्तीत्यहि.। अय खल्वग्नि. स्वकार्यं प्रत्यागत्य तद्विरोधिनमामाद हन्ति । यथा—" अपाग्नेऽग्निमामाद जहि " ( तैस १.१.७ ) इति । " आङि श्रिहनिभ्या ह्रस्वश्च " ( उ ५८७ ) इति इण्प्रत्यय, स च डित् । ' उदात्तश्च ' ( द्र. उ ५८६ ) इत्यनुवृत्ते कृदुत्तरपदप्रकृतिस्वर बाधित्वा आड उदात्तत्व ह्रस्वत्व च । [v]अहि[v]असि यजमानस्याभिमतसपादनाय तानदागच्छसि । [19]तद्विरोधिनश्च हसीत्यर्थ ॥ यद्वा—न हन्तीत्यहि, अहिंसकोऽसीत्यर्थ । केवलादेव हन्तेर्बहुलवचनादयमिण्प्रत्यय ( उ ५८७ ) टिच्च । अहिरहन्ता । अव्ययपूर्वपदप्रकृति-

(तैस ४ ४.१० ) इत्याम्नातस्तद्रूप [v]असि । आग्नीध्रीयमारभ्य पुराणगार्हपत्यान्तेषु [6]षोडशस्थानेष्वभिमन्यमान हेऽग्ने, स्वदीयेन [v]रौद्रेण सैन्येन राक्षसेभ्यो मा [v]पाहि । कर्मफलप्रदानेन मा [v]पिपृहि पूर्णमनोरथं कुरु । [7]मद्विनाशरूपा हिंसा [v]मा कुरु ॥

[1]तानेतान् [1]सर्वानपेक्ष्यानुष्ठान विधत्ते—" चात्वालाद्धिष्णियानुप वपति योनिर्वै यज्ञस्य चात्वाल यज्ञस्य सयोनित्वाय " ( तैस ६.३ १ ) इति । तत· पुरीषमादायोत्तरवेद्या करणाच्चात्वाल यज्ञस्य योनि. । तादृशाच्चात्वालाद्धिष्णियनामकाना स्थलविशेषाणा निवपने यज्ञ: सर्वोऽपि स्वयोनियुक्तो भवति ॥

१८-१८ त.ति त्रि पं—पद्यन्ते प्रतिपद्यन्ते । १९. त.ति—तद्विरोधिन च ।

६ आ ना हा—षोडशसु स्थाने । ७ इ उ.तं.ना.पा मर भो हा—मद्विनाश ।

स्वरत्वम्[२०] ( पा ६-२-२ ) । बुध्नं मूलकारणं सर्वकर्मणाम् । स्वार्थे यत् ( पा ४-३-५४ ) । छान्दस इकारोपजनः । यद्वा—बुद्धिर्बुध्नम् । तत्र भवो बुध्न्यः । सर्वदा श्रद्धावतां हृद्गतोऽसीत्यर्थः । "भवे छन्दसि" ( पा ४-४-११० ) इति यत् । "यतोऽनावः" ( पा ६-१-२१३ ) इत्याद्युदात्तत्वं बाधित्वा व्यत्ययेन "तित् स्वरितम्" ( पा ६-१-१८५ ) इति स्वरितत्वम् । 'रौद्रेण' इत्यादि व्याख्यातं सर्वत्रानुपज्यते ॥ ५

॥ इति तृतीये तृतीयोऽनुवाकः ॥

कालान्तरेऽनुष्ठेयान्यपि कानिचिद्धिष्णियप्रसङ्गादिह विधीयन्ते । तत्राऽऽग्नीध्रीयधिष्णियस्थिताद्वह्नेर्होत्रीयादिधिष्णियेष्वग्निस्थापनं विधत्ते—"देवा वै यज्ञं पराऽजयन्त तमाग्नीध्रात् पुनरपाजयन्नेतद्वै यज्ञस्यापराजितं यदाग्नीध्रं यदाग्नीध्राद्धिष्णियान् विहरति यदेव यज्ञस्यापराजितं तत एवैनं पुनस्तनुते" ( तैसं ६-३-१ ) इति । पराऽजयन्त पराजितमकुर्वत[८] । यज्ञमसुरा अगृह्णन् । पुनस्तं यज्ञमाग्नीध्रदेवतासामर्थ्येन १० असुरेभ्योऽपच्छिद्य[९] देवा अजयन् । आग्नीध्रस्यापराजितस्थानत्वात् ततो विहरणं युक्तम् ॥ प्रैषमन्त्रमुत्पादयति—"पराजित्येव खलु वा एते यन्ति ये बहिष्पवमानꣳ सर्पन्ति बहिष्पवमाने स्तुत आहाग्नीदग्नीन् वि हर बर्हिः स्तृणाहि पुरोडाशाꣳ अलंकुर्विति यज्ञमेवापजित्य पुनस्तन्वाना यन्ति" ( तैसं ६-३-१ ) इति । बहिष्पवमानं नाम प्रातःसवने सामगैर्गेयमानम् "उपास्मै गायता" ( सासं २-१-१-१ ) इत्यादिकं स्तोत्रम् । तत्तु गायन्त ऋत्विजो धावन्ति, यथा लोके पराजित्य पलायन्ते तद्वत् । ततः स्तोत्रे [१०]समापिते सत्याग्नीध्रं १५ संयोध्याग्निविहरणादिप्रैष उक्ते यज्ञं पराजयादपावृत्य पुनः प्रसारितवन्तो भवन्ति ॥ विहरणे विशेषं विधत्ते—"अङ्गारैर्द्वे सवने वि हरति शलाकाभिस्तृतीयꣳ सशुक्रत्वायाथो सं भरत्येवैनत्" ( तैसं ६-३-१ ) इति ॥ प्रातःसवनमाध्यन्दिनसवनयोराग्नीध्रीयगतैः अङ्गारैः[११] दग्धकाष्ठैर्विहरेत् । तृतीयसवने तु शलाकाभिर्दीप्ततृणमुष्टिभिर्विहरेत् । अत्र सोमस्य गायत्रीमुखेन पीतत्वात् [१२]नास्ति सोमे[१२] तेजः । दीप्तासु शलाकासु साररूपं तेजोऽस्तीति सशुक्रत्वाय सतेजस्त्वाय तथा कुर्यात् । किंच एतत् तृतीयसवन- २० मितरसदृशं कृत्वा संभरति सम्यक् पोषयति ॥ पूर्वोक्तं [१३]धिष्णियसंघं प्रशंसति—"धिष्णिया वा अमुष्मिँल्लोके सोममरक्षन् तेभ्योऽधि सोममाऽऽहरन् तमन्ववायन् तं पर्यविशन्" ( तैसं ६-३-१ ) इति । स्वानभ्राजादय [१४]इव धिष्णियदेवता अपि सोमं रक्षन्ति । आह्रियमाणं सोममनु स्वयमप्यागत्य परित उपविष्टाः । तस्मात् प्रशस्ता धिष्णियाः ॥ एतद्वेदनं प्रशंसति—"य एवं वेद विन्दते परिवेष्टारम्" ( तैसं ६-३-१ ) इति । सेवकजनमित्यर्थः ॥ केषुचिद्धिष्णियेषु सोमाहुतिं विदधाति[१५]—"ते सोमपीथेन २५ व्यार्ध्यन्त ते देवेषु सोमपीथमैच्छन्त तान् देवा अब्रुवन् द्वेद्वे नामनी कुरुध्वमथ प्र वाऽऽप्स्यथ न वेत्यग्नयो

२०. ति–'स्वरत्वम्' इत्यस्यानन्तरं 'आद्य उदात्तत्वम्' इति ।

८. आ–पराजयमकुर्वत; क–पराजितमकुर्वन्तम् । ९. इ.उ.ना.पा.भां.हा–भ्योऽपरिछिद्य । १०. क.ना.पा.भां.हा–समर्पिते; इ–'समापिते' नास्ति । ११. आ.ना.हा–'अङ्गारैः' नास्ति । १२–१२. इ.उ.ना.भां.हा–नाग्निष्टोमे । १३. इ.उ.ना.पा.भां.हा–धिष्णियसंबन्धम् । १४. इ.उ.ना.पा.भां.हा– ३० 'इव' नास्ति । १५. तं.सर–विधत्ते ।

वा अथ धिष्णियास्तस्माद्द्विनामा ब्राह्मणोऽर्धुकस्तेषां ये नेदिष्ठं पर्यविशन् ते सोमपीथं प्राऽऽप्नुवन्नाहवनीय
आग्नीध्रीयो होत्रीयो मार्जालीयस्तस्मात् तेषु जुह्वति " ( तैस ६ ३ १ ) इति । ते धिष्णिया सोमपानेन
वियुक्ता. । ततस्ते देवेषु मध्ये सोमपानमस्माकमस्त्विर्त्यैच्छन्त । एकैकनाममात्रधारणेन युष्माकं सोम-
पानयोग्यता सर्वथा नास्ति । नामद्वये तु स्वीकृते "पाक्षिकी तद्योग्यतेति देवैरुक्ता अग्निनाम धिष्णिय-
५ नाम च कृतवन्त । यस्मान्नामद्वयमुत्कर्षहेतु तस्माल्लोकेऽपि देवदत्तादिनाम प्रथमं धृत्वा पश्चात्
तपोविद्यादिभिराचार्योपाध्यायादिकं द्वितीयं नाम दधत् सत्कारेण समृद्धो भवति। नामद्वयधारिणां
तेषां मध्ये ये चत्वार आहवनीयादय सोमस्यात्यन्तसमीपे निविष्टास्ते समीपवर्तित्वेन सोमपानयोग्या
इति तेषु सोमं जुहुयु ॥ द्विनामधारित्वेन इतरेषामपि[16] प्रसक्तं सोमपानं वारयति—" अतिहाय वषट्-
करोति वि ह्येते सोमपीथेनाऽऽर्ध्यन्त " ( तैस ६ ३ १ ) इति । ये दूरवर्तिनो मैत्रावरुणधिष्णियादय ,
१० तानतिलङ्घ्य समीपस्थेभ्य एव वषट्कारस्तथाऽपि अनुवषट्कारप्रदानाहुतिब्राह्मण ऐतरेयश्रुतौ तदाहुति-
देवतात्वेन चतुर्णामेव श्रवणात् तानतिहाय वषट्करोतीत्युक्तं युक्तम् । सा च श्रुति —" यदेव सोमस्याग्ने
वीहीत्यनुवषट्करोति तेन धिष्ण्यान् प्रीणाति " ( ऐब्रा ३ ५ ) इति । तस्मात्तेषां[18] वषट्कारपूर्वको होम ।
इतरे तु सोमपानेन व्यार्ध्यन्त, हि यस्मात् पूर्वोक्तस्य वियोगस्य प्रतीकारं सामीप्यलक्षणं न संपादितवन्त ।
द्वितीयनामप्रयुक्तस्तूत्कर्षस्तेषां सोमाभावेऽप्याज्यव्याघारणादेवोपपद्यते ॥ सोमाहुतीनां "दिग्व्यवस्थां[19]
१५ विधत्ते—" देवा वै या प्राचीराहुतीरजुहवुर्ये पुरस्तादसुरा आसन् तांस्ताभि प्राणुदन्त या प्रतीचीर्ये
पश्चादसुरा आसन् तां[20]स्ताभिरपानुदन्त प्राचीरन्या आहुतयो हूयन्ते प्रत्यङ्ङासीनो धिष्णियान् व्याघार-
यति पश्चाच्चैव पुरस्ताच्च यजमानो भ्रातृव्यान् प्र णुदते तस्मात् पराचीः प्रजाः प्र वीयन्ते प्रतीचीर्जायन्ते "
( तैसं ६·३ १ ) इति । प्राङ्मुखेन हूयमाना प्राचीरुत्तरवेदिगता । यस्मादाहुतिषु द्वैविध्यं तस्माल्लोकेऽपि
प्रजा पित्रा यन्मुखेन प्रवीयन्ते निषिच्यन्ते तद्विपरीतदिङ्मुखा उत्पद्यन्ते ॥ अध्वर्यो "प्रत्यग्गमननिषेध
२० निन्दाभ्यामुपपत्ति—" प्राणा वा एते यद्धिष्णिया यदध्वर्यु प्रत्यङ्धिष्णियानतिसर्पेत् प्राणान्त्सं कर्षेत्
प्रमायुक स्यान्नाभिर्वा एषा यज्ञस्य यद्धोतोर्ध्वं खलु वै नाभ्यै प्राणोऽवाङपानो यदध्वर्यु प्रत्यङ्होतार-
मतिसर्पेदपाने प्राणं दध्यात् प्रमायुक स्यात् " ( तैस ६ ३·१ ) [21]इति ॥ अतिसर्पेदतिक्रम्य गच्छेत्।
होता यज्ञस्य नाभिर्मध्यदेशो वर्तते । प्राणवत् प्राग्वर्तिनोऽध्वर्यो प्रत्यग्गमनमयुक्तम् ॥ " ऋत्विज
उपगायन्ति " इति ' विधिप्राप्तमुपगानमध्वर्योर्निषेधति[22]—" नाऽध्वर्युरुपगायेद्वाग्वीर्यो वा
२५ अध्वर्युर्यदध्वर्युरुपगायेदुद्गात्रे वाच संप्र यच्छेदुपदासुकाऽस्य वाक् स्यात् " ( तैस ६ ३ १ ) इति ।

---

१६. मञ—पार्थिवी । १७. त मञ—एतेषामपि, इ उ पा भां हा—तेषामपि । १८ इ.त ना पा मा मञ हा—' तस्मात्तेषाम् ' नास्ति । १९ आ ना हा—व्यवस्थाम् । २०. इ उ ना पा भां हा—प्रत्यागमननिषेधम्, क—प्रत्यागमनं निषेध' । २१-२१ इ उ ना पा भां हा —' इति ॥ अतिसर्पदतिक्रम्य निषेधति ' नास्ति । २२ आ क—विधिप्राप्तगानम' ।

उद्गात्रा सामनि गीयमाने पृष्ठतस्तदङ्गीकरणमुपगानम् । उपदासुकोपक्षयशीला ॥ प्रकारान्तरेणाध्वर्योः प्रत्यग्गमनं विधातुं चोद्यमुद्भावयति—“ब्रह्मवादिनो वदन्ति नासꣳस्थिते सोमेऽध्वर्युः प्रत्यङ्सदोऽतीयादथ कथा दाक्षिणानि होतुमेति” ( तैसं ६·३·१ ) इति । अध्वर्योः सद उल्लङ्घ्य प्रत्यग्गमनं निषिद्धम् । दाक्षिणहोमस्तु प्राचीनवंशे नूतनगार्हपत्ये कर्तव्यः । तत् कथं घटते । असंस्थितेऽसमाप्ते । कथा केन प्रकारेण ॥ उक्तचोद्यस्य परिहाराभासमाशङ्कते—“यामो हि स तेषाम्” ( तैसं ६·३·१ ) इति । याम उपरमः । तस्मात् स दाक्षिणहोमस्तेषां देवानां संबन्धिनः कर्मण उपरमकालीनोऽतो [23]लौकिकगमनत्वाद् देवा अनुज्ञास्यन्ति[23] ॥ [24]इत्थमुत्तराभासं दूषयति—“कस्मा अह देवा यामं वाऽयामं वाऽनु ज्ञास्यन्तीति” ( तैसं ६·३·१ ) इति । अहेत्युक्तनिषेधे । यदुत्तरवादिनोक्तं तन्न भवति, देवाः कस्मै प्रयोजनाय कर्मण उपरतिमनुपरतिं वाऽनु ज्ञास्यन्ति, न हि तदनुज्ञया देवानां किंचित् प्रयोजनं पश्यामः । ततः प्रत्यग्गमनस्य निषिद्धत्वाद्दाक्षिणहोमो न घटत एवेति चोद्यं सुस्थितम् ॥ तस्य [25]मुख्यं परिहारं दर्शयन् प्रत्यग्गमनं विधत्ते—“उत्तरेणाऽऽग्नीध्रं परीत्य जुहोति दाक्षिणानि न प्राणान्त्सं कर्षति” ( तैसं ६·३·१ ) इति । आग्नीध्रहविर्धानयोर्मध्ये गत्वा यत् सदोऽतिक्रमणं तदेव निषिद्धम् । अयं त्वाग्नीध्रं वामतः परित्यज्य तदुत्तरतः[26] प्रत्यङ्मुखो गत्वा प्राचीनवंशे दाक्षिणानि जुहुयात् । ततो नोक्तदोषः ॥ [27]इत्थं प्रासङ्गिकं परिसमाप्य प्रकृतमनुसरति । तत्र “चात्वालाद्धिष्णियानुप वपति” ( तैसं ६·३·१ ) इति सामान्यशास्त्रेणाग्नीध्रादीनां प्राजहितान्तानां षोडशानामपि निवपने प्रसक्तं मार्जालीयान्तानामष्टानामेवेति[28] विशेषं विधत्ते—“न्यन्ये धिष्णिया उप्यन्ते नान्ये यान्निवपति तेन तान् प्रीणाति” ( तैसं ६·३·१ ) इति ॥ इतरेषामाहवनीयादीनां प्राजहितान्तानामष्टानामुपस्थानं विधत्ते—“यान्न निवपति यदनुदिशति तेन तान्” ( तैसं ६·३·१ ) इति । प्रीणातीत्यनुवर्तते । अनुदेशनं मन्त्रेणोपस्थानम् ॥

अत्र विनियोगसंग्रहः—

“विभूपदत्रयात्मानो मन्त्राः षोडश [29]निर्वपेत् ।
धिष्ण्यान् दिशेच्च सर्वेषु रौद्रेणेत्यनु दिश्यते[30]” ॥ १ ॥ इति ॥

अत्र मीमांसाच्छन्दसी न स्तः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके तृतीयोऽनुवाकः ॥

---

२३–२३. इ.ङ–लौकिकगमनमुखा देवा अनुज्ञास्यन्तीति; क–लौकिकगमनत्वाद्देवा अनुज्ञास्यन्तीति । २४. मर–इदमुत्त° । २५. इ–‘मुख्यम्’ नास्ति; ना.ह्रा–पुष्टम् । २६. आ.क.ना.ह्रा–तस्मादुत्तरतः । २७. आ.ना.ह्रा–‘इत्थम्’ नास्ति । २८. आ.ना.मर.ह्रा–मार्जालीयान्तानामेवेति । २९. तं.मर–र्निर्वपेत् । ३०. तं.मर–°नुवर्तते ।

त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्तासि वरूथꣳ स्वाहा
जुषाणो अप्तुराज्यस्य वेतु स्वाहा-

त्वम् । सोम । तनूकृद्भ्य इति तनूकृत्-भ्यः । द्वेषोभ्य इति द्वेषः-भ्यः । अन्यकृतेभ्य इत्यन्य-कृतेभ्य । उरु । यन्ता । असि । वरूथम् । स्वाहा । जुषाण । अप्तु. । आज्यस्य । वेतु । स्वाहा ।

स्रुचि चतुर्गृहीतं गृहीत्वा शालामुखीये वैसर्जनं जुहोति—'त्वं सोम' इति यजुरन्तया त्रिपदया गायत्र्या ॥ तनू शरीरम् । "कृषिचमि" " ( उ ८१ ) इत्यादिना ऊप्रत्यय. । ता कृन्तन्ति छिन्दन्तीति तनूकृन्ति । "क्विप् च" ( पा ३ २ ७६ ) इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६ २ १३९ ) । द्विषन्तीति द्वेषांसि । अन्यैर्दुरात्मभिरभिचारादि-प्रवृत्तं कृतान्यन्यकृतानि । "तृतीया कर्मणि" ( पा ६ २ ४८ ) इति पूर्वपदप्रकृतिस्वरत्वम् ।

१० यानि शरीरमपि नाशयन्ति तेभ्यो रक्ष प्रभृतिभ्य [१]यन्ता [१]तत्पीडापगमद्वारेण रक्षक [१] । हे [२]सोम, ईदृश [२]त्वम् एव खलु न [२]उरु महत् [२]वरूथ गृह धन वा, वरणीयत्वात् । "जॄवृञ्-भ्यामूथन्" ( उ १७१ ) इत्यूथन्प्रत्यय । धनानि लिप्समानो हि स्तुत्य तद्रूपेण रक्षति । तस्मात् [२]महद्धन मे देहीति भाव । "उरु णस्कृणीति वावैतदाह" ( तैस ६ ३ २ ) इति ब्राह्मणम् । ईदृशाय तुभ्य [३]स्वाहा [३]स्वाहुतमिदमस्त्विति प्रदानार्थो निपात । कथमत्र

१५ "तनूकृद्धेष." ( तैस ६ ३ २ ) इति ब्राह्मणमुपपद्यते ? उच्यते—तनूकृतामपि रक्ष प्रभृती-नामेष हि तनूकृत् । तस्मात् किमनेन कर्तुं न शक्यत इति प्रतिपाद्यते । यद्वा—करोतेरेव क्विप् । तत्र हि बह्वस्तनूकृत शरीरस्योत्पादयितार । प्रजानां पिता रेत सिञ्चति प्रजनने । सोम सिक्त रेतो दधाति । यथा—"सोमो वै रेतोधा" ( तैम २ १ १ ), "त्वष्टा वै रेतस'

तृतीयानुवाके धिष्णिया वर्णिता । एतावता [१]वेदिगतविशेषनिर्माण समाप्तम् । अथ तस्या

२० वेद्यामग्नीषोमीयपशुर्वक्तव्य । तस्य चाग्नीषोमयो प्रणीतयो पश्चात् यत्तदुचितस्तस्य तत्प्रणयनाय वैसर्जन-होमश्चतुर्थेऽनुवाकेऽभिधीयते ।

त्वमिति ॥ कल्प —"स्रुचि चतुर्गृहीतं गृहीत्वा शालामुखीये "वैसर्जनं जुहोति" त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्तासि वरूथꣳ स्वाहेति । स्रुवेणाप्सु प्रस्कन्दयति जुषाणो अप्तुराज्यस्य वेतु स्वाहा स्वाहेति । । पूर्वया द्वारोपनिःक्रामत्यये नो अग्निरेति पृणोत्वयं मृध पुर एतु

२५ प्रभिन्दन् । अयꣳ शत्रूञ्जयतु जर्हृषाणोऽयं वाज जयतु वाजसाताविति । । अथाऽऽहवनीये स्रुगाहुतिं जुहोति उरु विष्णो विक्रमस्वोरु क्षयाय न कृधि । घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिर स्वाहेति" ( बौश्रौ ६ ३० ) इति ॥ तनू शरीर कृन्वन्ति छिन्दन्तीति [१]तनूकृन्ति रक्षांसि । द्विषन्तीति द्वेषांसि । अन्यैरस्मद्विरोधिभिरभिचरद्भि. कृतानि प्रेरितानीत्यन्यकृतानि । हे [२]सोम, [२]त्व तादृशेभ्यो नियन्ता [२]असि ।

१-१ त लि त्रि-तत्पीडोपरमणक्षम । २ ति त्रि प-महद्धनादि, त-महद्धनानि । ३ म-सुहुत ।

३० १. क त म२-वेदिगतद्रष्टव्यविशेष । २-२. आ क-वैसर्जनहोम जुहोति, ना हा-वैसर्जनहोम करोति, त पा मा म२-वैसर्जन भवति, ( बौश्रौसूत्रे-वैसर्जनानि जुहोति ) । ३ इ उ ना पा मा हा-तनूकृत ।

ऽयं नो॑ अ॒ग्निर्वरि॑वः कृणोत्व॒यं मृधः॑ पु॒र ए॑तु प्रभि॒न्दन् ।
अ॒यꣳ॒ शत्रू॑ञ्जयतु॒ जर्हृ॑षाणो॒ऽयं वाजं॑ जयतु॒ वाज॑सातौ ॥

अ॒यम् । नः॒ । अ॒ग्निः । वरि॑वः । कृ॒णो॒तु॒ । अ॒यम् । मृधः॑ । पु॒रः । ए॒तु॒ । प्र॒भि॒न्दन्निति॑ प्र—भि॒न्दन् ।
अ॒यम् । शत्रू॑न् । ज॒य॒तु॒ । जर्हृ॑षाणः । अ॒यम् । वाज॑म् । ज॒य॒तु॒ । वाज॑साता॒विति॒ वाज॑—सा॒तौ ॥

सिक्तस्य रूपाणि वि करोति " ( तैसं ६-६-६ ) इति । अयमर्थः—हे सोम, त्वं खलु तनूकृद्भ्योऽपि तनूकृत्सोऽनुप्रविश्य स्थितोऽसि । अत्र 'प्रासादात् प्रेक्षते' इतिवत् ल्यब्लोपे कर्मणि पञ्चमी ( पा २-३-२८ वा १ ) । त्वमपि तनूकृतां मध्ये कश्चिदेक इत्यर्थः । यद्वा— "सुपां सुपो भवन्ति" ( द्र. पाभा ७-१-३९ ) इति सोर्भ्यसादेशः । यथा—"तनूकृद्भ्येषः" ( तैसं ६-३-२ ) इति ब्राह्मणम् । यस्मादेवं तस्मादन्यैर्युष्मद्व्यतिरिक्तैः दुरात्मभिः कृतानि यानि द्वेषांसि युष्मत्कृततनूविरोधीनि ज्वरादीनि व्यसनानि तेभ्यो यन्ता त्वमेवास्माकमुरु वरूथमिति । १० "सुवर्गाय वा एतानि लोकाय हूयन्ते यद्वैसर्जनानि " ( तैसं ६.३.२ ) इत्यादि ब्राह्मणम् ॥

अवान्तरदीक्षां विसृज्य स्रुवेणाप्सुं प्रस्कन्दयति—' जुषाणः ' इति विराजा यजुरन्तया एकपदया ॥ [v]अप्तुः बिन्दुः । विभक्तिव्यत्ययः ( पा ३.१.८५ ) । [v]आज्यस्य अप्तुं [v]वेतु पिबतु । कः ? [v]जुषाणः प्रीयमाणः । ताच्छीलिकश्चानश् (पा ३-२-१२९) । "बहुलं छन्दसि" (पा २-४-७३ ) इति शं बाधित्वा शपो लुक् । लसार्वधातुकानुदात्तत्वाभावात् " चितः " ( ६-१-१६३ ) १५ इत्यन्तोदात्तत्वम् । यद्वा—आप्तव्योऽप्तुः । " आप्नोतेर्ह्रस्वश्च " ( उ ७७ ) इत्याप्नोतेस्तुप्रत्ययः । आप्तव्योऽयं सोमः प्रीयमाण आज्यस्य वेतु पिबतु । " क्रियाग्रहणं कर्तव्यम् " ( द्र.पाभा १-४-३२ ) इत्याज्यस्य संप्रदानत्वम् । " चतुर्थ्यर्थे बहुलं छन्दसि " ( पा २-३-६२ ) इति षष्ठी । " देवान् वै सुवर्गं लोकं यतो रक्षांस्यजिघांसन् " ( तैसं ६-३-२ ) इत्यादि ब्राह्मणम् । [v]स्वाहा इति पूर्ववत् ॥

पूर्वया द्वारा शालाया उपनिष्क्रामति—' अयं नः ' इति चतुष्पदया त्रिष्टुभा ॥ [v]अयम् २० अग्नीषोमाख्यः प्रणीयमानः [v]अग्निः [v]वरिवः [v]कृणोतु अभीष्टानि धनानि ददातु[४] । कृवि हिंसाकरणयोः । " धिन्विकृण्व्योर च " ( पा ३-१-८० ) इत्युप्रत्ययः । किंच—[v]अयं [v]मृधः संग्रामान् [v]प्रभिन्दन् प्रकर्षेण विनाशयन् [v]पुरः अग्रतः [v]एतु गच्छतु । ततश्च [v]अयम् अग्निरस्माकं [v]शत्रून् [v]जयतु । [v]जर्हृषाणः जयेन भृशं हृष्टान्तःकरणः । हृषेर्यङ्लुगन्तात् ( पा २-४-७४ )

यथा [v]तादृशानि तास्मान् बाधन्ते तथास्मानन्यत्र सुरक्षितप्रदेशे स्थापयित्वा पालयसि । तस्मात् त्वमेव २५ अस्माकम् [v]उरु प्रभूतं [v]वरूथं बलमसि तस्मै तुभ्यमिदं हुतमस्तु । ' अप्तुं प्रस्कन्दयति ' इत्यत्राप्तुशब्द आज्यबिन्दुवाची । मन्त्रे स्वल्पदेहवाची । हे सोम, त्वं [v]जुषाणः अस्मासु प्रीतिमान् रक्षसामदर्शनाय [v]अप्तुः अल्पदेहः सन् [v]आज्यस्य [v]वेतु बिन्दुं पिब, तवेदं हुतमस्तु । पूर्वद्वारेण निष्क्रामन्तो यमग्निं प्रणयन्ति [v]अयम् [v]अग्निः अस्माकं [v]वरिवः [v]कृणोतु श्रेयः करोतु । [v]अयं [v]मृधः वैरिणः [v]प्रभिन्दन् [v]पुर [v]एतु अग्रे गच्छतु । [v]अयं [v]जर्हृषाणः हृष्टान्तःकरणः [v]शत्रून् [v]जयतु । वाजस्यान्नस्य सातिर्लाभो ३०

४. तं.ति.त्रि.पं–दधातु ।

४. इ.ऊ.ना.षा.भां.द्दा– ' तादृशानि ' इत्यस्यान्तरं ' तानि ' । ५. इ.ऊ.तं.पा.भां–आज्यम् ।

उरु विष्णो वि क्रमस्वोरु क्षयाय नः कृधि। घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर ॥
उरु। विष्णो इति। वीति। क्रमस्व। उरु। क्षयाय। नः। कृधि ॥
घृतम्। घृतयोन इति घृत-योने। पिब। प्रप्रेति प्र-प्र। यज्ञपतिमिति यज्ञ-पतिम्। तिर ॥

व्यत्ययेन ( पा ३ १ ८५ ) आत्मनेपदम्। "अभ्यस्तानामादिः" ( पा ६ १.१८९ )
५ इत्याद्युदात्तत्वम्। किंच ⁷अयम् अग्निः ⁸वाजम् अन्नं ⁹जयतु अस्मदर्थमात्मवशं करोतु। क⁴
वाजसातौ। "ऊतियूति" ( पा ३ ३ ९७ ) इत्यादिना निपातनात् सनोतेः कर्मणि क्तिन्।
"जनसन" ( पा ६ ४ ४२ ) इत्यात्वम्। वाजो लभ्यते यस्मिन् तस्मिन् वाजसातौ सङ्ग्रामे वाजं
जयतु। वाजशब्दो वृषादित्वादाद्युदात्तः ( पा ६ १ २०३ ) ॥

आहवनीये स्रुवाहुतिं जुहोति—'उरु विष्णो' इति चतुष्पदयाऽनुष्टुभा॥ हे अग्ने
१० ⁵विष्णो व्यापक। "विषेः किच्च" ( उ ३२६ ) इति नुप्रत्ययः। ⁶उरु ⁷वि ⁸क्रमस्व महा-
विक्रमो भव। सर्वत्राप्रतिहतो भव। "वृत्तिसर्गतायनेषु क्रमः" ( पा १.३ ३८ ) इत्यात्मने-
पदम्। किंच—⁹नः अस्माकं ¹⁰क्षयाय निवासाय निवासस्य। 'षष्ठ्यर्थे चतुर्थी वक्तव्या"
( पा २ ३ ६२ वा १ )। "क्षयो निवासे" ( पा ६ १ २०१ ) इत्याद्युदात्तत्वम्। ¹¹उरु ¹²कृधि
गृहधनादिकं देहि। अविरतमस्माकं निवासं कुर्वित्यर्थः। "कः करत्करतिकृधिकृतेष्वनदितेः"
१५ ( पा ८ ३ ५० ) इति संहितायां नमः सकारस्य सकारो व्यत्ययेन न प्रवर्तते। उक्तं च
प्रातिशाख्ये—"न सकारकारपरे" ( तैप्रा ८ २५ ) इति। अपि च—हे ¹घृतयोने अपां योने,
"अग्नेरापः" ( तैउ २ १ ) इति। इदं हूयमानं घृतम् ²आज्यं ³पिब। अपि च ⁴यज्ञपतिं
यजमानं ⁵⁶तिर वर्धय। प्रपूर्वस्तिरतिर्वृद्धिकर्मा। "प्रसमुपोदः पादपूरणे" ( पा ८.१.६ )
इति प्रशब्दस्य द्विर्वचनम्। "अनुदात्तं च" ( पा ८ १ ३ ) इति द्वितीयः प्रशब्दोऽनुदात्तः।
२० "पत्यावैश्वर्ये" ( पा ६ २ १८ ) इति प्रकृतिस्वरत्वेन यज्ञशब्दोऽन्तोदात्तः, "यजयाच"
( पा ३ ३.९० ) इति नङ्प्रत्ययान्तत्वात् ॥

यस्मिन् सङ्ग्रामे स वाजस्याति, तस्मिन् ⁷अयम् अस्मदर्थं ⁸वाजं ⁹जयतु वशीकरोतु। हे ¹विष्णो व्यापिन्
आहवनीय, अस्मदनुग्रहार्थम् ⁶उरु ⁷वि ⁸क्रमस्व वैरिषु बहुलं पराक्रमं कुरु। ⁹नः अस्माकं ¹⁰क्षयाय
निवासार्थम् ¹¹उरु ¹²कृधि बहुं ¹गृहधनादिकं संपादय। घृतेन ज्वालोत्पत्तेः घृतयोनिः। हे घृतयोने, हूयमान-
२५ मिदं ¹घृतं ²पिब, ⁴यज्ञपतिं यजमानं ⁵प्र ⁶तिर अतिशयेन वर्धय॥ मन्त्रान् व्याख्यायासुरादौ होमं
विधत्ते—"सुवर्गाय वा एतानि लोकाय हूयन्ते यद्वैसर्जनानि" ( तैसं ६ ३ २ ) इति। अवान्तरदीक्षा-
विसर्जनार्थत्वादेतानि होमकर्माणि वैसर्जनानि। तत्प्रकार सूत्रे दर्शितः—"उपस्थे यज्ञा वासांसि कुरुते।

५ नि नि ५ ५१—अतिरत्त्वम्।

६. द उ ना पा मां हा—धनादिकम्। ७. क—देहम्। ८ द उ ना पा मां हा—सूक्षेण।

समपि 'व्रतान् ह्वयध्वमिति संप्रेष्यति । यजमानस्यामात्यान् [10]संह्वयन्त्यध्वर्युं यजमानोऽन्वारभते । यजमानं पत्नी। पत्नीमितरे पुत्रभ्रातरः। अहतेन वाससाऽमात्यान् संप्रच्छाद्य वाससोऽन्ते नुन्दण्डमुपनियम्य प्रचरण्या वैसर्जनानि जुहोति " ( आपश्रौ ११·१६·११–१५ ) इति । व्रतामात्यशब्दौ बन्धुवाचकौ । प्रचरणी जुह्वा सदृशी ॥ विशेषान् क्रमेण विधत्ते—" द्वाभ्यां गार्हपत्ये जुहोति द्विपाद्यजमानः प्रतिष्ठित्या आग्नीध्रे जुहोत्यन्तरिक्ष एवाऽऽक्रमत आहवनीये जुहोति सुवर्गमेवैनं लोकं गमयति " ( तैसं ६·३·२ ) इति । द्वाभ्यां 'त्वꣳ सोम', 'जुषाणः' इत्येताभ्याम् । आग्नीध्रे होमस्य मन्त्रो विधास्यते । आहवनीये तु 'उरु विष्णो' इति मन्त्रः ॥ होमात् पूर्वमेव ब्रह्मणा सोम आदातव्य[11] इति विधत्ते—" देवा वै सुवर्गं लोकं यतो रक्षाꣳस्यजिघाꣳसन् ते सोमेन राज्ञा रक्षाꣳस्यपहत्याप्तुमात्मानं कृत्वा सुवर्गं लोकमायन् रक्षसामनुपलाभायाऽऽत्तः सोमो भवत्यथ वैसर्जनानि जुहोति रक्षसामपहत्यै " ( तैसं ६·३·२) इति । यतः गच्छतः । अप्तुं रक्षोभिरुपलब्धुमशक्यमल्पदेहम् । [12]आत्तो भवति स्वीकृतो भवेत् । तत ऊर्ध्वं कृतो होमो रक्षांस्यपहन्ति ॥ प्रथममन्त्रस्य पूर्वभागेऽभिप्रेतं सोमस्य सामर्थ्यमुपपादयति—" त्वꣳ सोम तनूकृद्भ्य इत्याह तनूकृद्ध्येषः " ( तैसं ६·३·२ ) इति । तनुच्छिद्रां रक्षसामपि तनूं कृणत्ति छिनत्ती-त्येष सोमोऽत्यन्तं तनूकृत् तस्माद्रक्षोभ्योऽस्मान् पालयितुं समर्थः ॥ द्वितीयभागे विशेष्यं पूरयति—" द्वेषोभ्योऽन्यकृतेभ्य इत्याहान्यकृतानि हि रक्षाꣳसि " ( तैसं ६·३·२ ) इति । तृतीयभागे[13] 'उरु वरूथम्' इत्यस्य वाक्यस्य शेषं पूरयति—" उरु यन्तासि वरूथमित्याहोरु णस्कृधीति वावैतदाह " ( तैसं ६·३·२ ) इति । बहुलमस्मदर्थं कुर्वित्येतदेव स भागो ब्रूते ॥ द्वितीयमन्त्रेऽसुशब्दसूचितमाह—" जुषाणो अप्तुरा-ज्यस्य वेत्वित्याहाप्तुमेव यजमानं कृत्वा सुवर्गं लोकं गमयति रक्षसामनुपलाभाय " ( तैसं ६·३·२ ) इति ॥ प्राचीनवंशादिपश्चत्याऽऽग्नीध्रे त्रिभिरनुष्ठेयानि सोमस्वीकारादीनि पञ्च विधत्ते—" आ सोमं ददत आ ग्रावाण आ वायव्यान्या द्रोणकलशमुत्पत्नीमा नयन्त्यन्वनाꣳसि प्र वर्तयन्ति यावदेवास्यास्ति तेन सह सुवर्गं लोकमेति " ( तैसं ६·३·२ ) इति । सोमं हविर्धाने नेतुमाददीरन् । ग्रावाणोऽभिषवार्थाः । वायव्या-न्युलूखलसदृशानि ग्रहपात्राणि । द्रोणकलशः प्रौढं काष्ठपात्रम् । एतान्याददीरन् । पत्नीं स्वस्थानादुत्था-प्याऽऽनयेयुः । व्रीह्याद्युपधद्रव्यार्थं यत्तृतीयं शकटं तदेवासकृदावृत्तत्वादनांसीति बहुवचनेनोच्यते । तदनु पुनःपुनः प्रवर्तयेयुः । एवं सति यजमानस्य स्वं यावदस्ति तेन सर्वेण सह स्वर्गं प्राप्नोति ॥ विधत्ते—" नयवत्यर्चाऽऽग्नीध्रे जुहोति सुवर्गस्य लोकस्याभिनीत्यै " ( तैसं ६·३·२ ) इति । " अग्ने नय सुपथा " ( तैसं १·१·१४) इत्यसौ नयवती । अत्र सूत्रम्—शालामुखीये प्रणयनीयमिध्ममादीप्य सिकताभिरुपयम्या-ग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहि इति संप्रेष्यति । प्रणीयमानाभ्यामनुब्रूहीति वा । प्रथमायां त्रिरनूक्ता-यामयं नो अग्निर्वरिवः कृणोत्वित्यग्निप्रथमाः सोमप्रथमा वा प्राञ्चोऽभि प्रव्रजन्ति । आग्नीध्रीयेऽग्निं प्रतिष्ठाप्याग्ने नयेत्यर्धमाज्यशेषस्य जुहोति " ( आपश्रौ ११·१७·२–४ ) इति ॥ [14]प्रचरण्या चतुर्गृहीतस्याऽऽज्यस्यार्धं गार्हपत्ये मन्त्रद्वयेन हुतम् अवशिष्टेऽप्यर्धमाज्यमाग्नीध्रे हुत्वा इतरदाहवनीये होतुं शेषयेत् ॥ विधत्ते—" ग्रावाणो वायव्यानि द्रोणकलशमाग्नीध्रमुप वासयति " ( तैसं ६·३·२ ) इति । स्थापयेदित्यर्थः ॥ तद्वत् सोमस्याऽपि स्थापनप्राप्तौ तद्वारयितुं ग्रहणं विधत्ते—" वि ह्येनं तैर्गृह्णते यत्सहोपवासयेदपुवायेत " ( तैसं ६·३·२ ) इति । एनं सोमं तैर्ग्रावादिभिर्वियुज्य नेतुं गृह्णीरन् । यदि कश्चित् तैः सह स्थापयेत्तदानीमभिषवभीत्या सोमस्योदरं पूति भवेत् । अत्राऽऽज्यशेषस्याऽऽहवनीये होमाय 'उरु विष्णो' इति यो मन्त्रः, यश्च ततः पूर्वः 'अयं नो अग्निः' इति मन्त्रस्तावुपेक्षितौ ॥

---

९. क–व्रतानाम् । १०. मर–संचरयन्, ( आपश्रौसूत्रे ' संह्वयन्ति । अध्वर्युम् ' ) । ११. क–आहर्तव्यः । १२. क.मर–आप्तः । १३. आ.ना.हा–'भागस्य । १४. क–प्रचरण्याम् ।

सोमो॑ जिगाति गातु॒विद्(१)दे॒वाना॑मेति निष्कृ॒तमृ॒तस्य॒
योनि॑मा॒सद॒मदि॑त्याः सदो॒ऽस्यदि॑त्याः सद॒ आ सी॑द॒ष

सोम॑ । जि॒गा॒ति॒ । गा॒तु॒विदिति॑ गातु -वित् (१)।
दे॒वाना॑म् । ए॒ति॒ । नि॒ष्कृ॒तमिति॑ नि -कृ॒तम् । ऋ॒तस्य॑ । योनि॑म् । आ॒सद॒मित्या॒–सद॑म् ।
५ अदि॑त्याः । सदः॑ । अ॒सि॒ । अदि॑त्याः । सदः॑ । आ । सी॒द॒ । ए॒षः ।

ब्रह्मणो राजानमादाय पूर्वया द्वारा हविर्धान प्रपादयति—‘ सोमो जिगाति ’ इति त्रिपदया गायत्र्या ॥ गातुर्मार्ग । गाङ् गतौ । “ कमिमनिजनि ” ( उ ७२ ) इत्यादिना तुप्रत्यय । गातु वेत्ति विन्दतीति वा गातुवित् । क्विपि कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ३ २ ७६, ६ २· १३९ )। ईदृशोऽय सोम जिगाति गच्छति । गा स्तुतौ छन्दसि इति जुहोत्यादिक उदात्तेद् ।
१० “ बहुल छन्दसि ” ( पा ७ ४·७८ ) इत्यभ्यासस्येत्वम् । इह त्वय गतिकर्मा । गतिकर्मसु हि ‘ जिगाति ’ ( निघण्टु २ १४ ११३ ) इति निरुक्तकारा पठन्ति । क देश गच्छतीत्याह— देवानाम् इति । देवानाम् आसदम् आसमन्तात् सीदन्त्यस्मिन्नित्यासद । “ घञर्थे कविधानम् ” ( पा३·३ ५८ वा ४ ) इति क । “ परादिश्छन्दसि ” ( पा ६ २·१९९ ) इत्युत्तरपदाद्युदात्तत्वम् । निष्कृतम् अलङ्कृतम् । प्रवृद्धादेराकृतिगणत्वात् ( पा ६ २.१४७ ) उत्तरपदान्तोदात्तत्वम् ।
१५ ऋतस्य सत्यस्य यज्ञस्य वा योनिम् उत्पत्तिस्थान हविर्धानम् एति प्रपद्यते । “ सौम्यर्चा प्र पादयति ” ( तैस ६ ३·२ ) इत्यादि ब्राह्मणम् ॥

दक्षिणस्य हविर्धानस्य नीडे कृष्णाजिनमास्तृणाति—‘ अदित्या ’ इति ॥ अदितिर्देवमाता, तस्या सद· असि आसनमसि । सीदन्त्यस्मिन्निति सद ॥

कृष्णाजिने राजानमासादयति—‘ अदित्या. ’ इति ॥ अदित्या. सदोभूतमेतद्
२० कृष्णाजिन हे सोम, आ सीद अधितिष्ठ । प्रागेव ( तैस १·३ ८ ) व्याख्यातमिद मन्त्रद्वयम् ॥

सोम इति ॥ कल्प —“ ब्रह्मणो राजानमादाय पूर्वया द्वारा हविर्धान प्रपादयति सोमो जिगाति गातुविद्देवानामेति निष्कृतमृतस्य योनिमासदमिति ” ( बौश्रौ ६ ३१ ) इति । गातुवित् मार्गज्ञ सोम· जिगाति गच्छति । क देश गच्छति ? आसीदन्त्यस्मिन् हविर्धानदेश इत्यासद । देवानाम् आसदम् एति । कीदृशम् ? निष्कृतमलङ्कृतम् । ऋतस्य यज्ञस्य योनिं कारण ग्रहचमसादिहविराम् आधारत्वात् ॥ विधत्ते—“ सौम्यर्चा प्र पादयति स्वयैवैन देवतया प्र पादयति ” ( तैस ६ ३ २ ) इति ॥
२५
अदित्या इति ॥ कल्प —“ अथ दक्षिणस्य हविर्धानस्य नीडे कृष्णाजिनमास्तृणाति अदित्या सदोऽसीत्यदित्या सद आ सीदेति कृष्णाजिने राजानम् ” ( बौश्रौ ६ ३१ ) इति । स्पष्टार्थता दर्शयति— “ अदित्या सदोऽस्यदित्या सद आ सीदेत्याह यथायजुरेवैतत् ” ( तैस ६ ३·२ ) इति ॥

६ तं नि–प्रतिपद्यते, त्रि–प्रतिपाद्यते ।
३० १९, त म र–आसीदन्त्यस्मिन् ।

वैसर्जनहोमः ]

**वों देव सवितः सोमस्तꣳ रक्षध्वं मा वों दभदेतत्त्वꣳ सोम देवो**
**देवानुपांगा इदमहं मनुष्यों मनुष्यान्त्सह प्रजया सह रायस्पोषेण**

वः । देव । सवितः । सोमः । तम् । रक्षध्वम् । मा । वः । दभत् । एतत् । त्वम् । सोम । देवः । देवान् । उपेति । अगाः । इदम् । अहम् । मनुष्यः । मनुष्यान् । सह । प्रजयेति प्र—जया । सह । रायः । पोषेण ।

---

राजानं देवताभ्यः सं प्रयच्छति—'एष वः' इति ॥ हे देव सवितः सर्वस्य प्रेरक, एषः सोमः वः युष्मभ्यं देवेभ्यो न्यासभूतः परिधीयते । यद्वा—युष्माकमेष सोमः, युष्मत्पानार्थत्वात्; अतो युष्मभ्यमेव परिधीयत इति भावः । सवितुः प्राधान्याद् तन्मुखेन देवेभ्यः परिधीयते । तं च सोमं हे सवितः, यस्त्वं ये चान्ये देवाः ते यूयं रक्षध्वम् । व्यत्ययेनात्मनेपदम् ( पा ३.१.८५ ) । रक्षतश्च युष्मान् कश्चिदपि हिंस्रो मा दभत् मा हिंसीत् । दम्भेर्लुङि ( पा ३.१.५२–५९ ) व्यत्ययेन च्लेरङ् । "यजमानो वा एतस्य पुरा गोप्ता भवति" ( तैसं ६.३.२ ) इत्यादि ब्राह्मणम् ॥

राजानमुपतिष्ठते—'एतत्त्वम्' इति ॥ एतत् एतस्मिन् काले । इदम् इत्यपि तथा । उभयत्र "सुपां सुलुक्" ( पा ७.१.३९ ) इति सप्तम्या लुक् । हे सोम, एतस्मिन् काले देवः त्वं देवान् उपागाः उपसंप्राप्तोऽसि ।

अस्मिन् काले अहम् अपि मनुष्यः मनुष्यान् उपागाम् । क्रियाविशेषणं चोभयम् । सर्वत्र प्रायेणास्मद्विषयः इदंशब्दः, युष्मद्विषयः एतच्छब्दः । यथा "एषा सा त्वयि", "इयं सा मयि" ( तैसं १.३.४ ) इति । 'उपागाम्' इत्यत्र "गातिस्था" ( पा २.४.७७ ) इति सिचो लुक् । "देवो देवेभ्य-सन्" ( तैसं ६.३.२ ) इत्यादि ब्राह्मणम् । किं केवल एव मनुष्यानुपैति ? नेत्याह—प्रजया सह रायः धनस्य पोषेण च सह मनुष्यानुपागामिति । "यदेतद्यजुर्न ब्रूयादप्रजा अपशुर्यजमानः स्यात्" ( तैसं ६.३.२ ) इत्यादि ब्राह्मणम् । प्रजाशब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः ( पा ६.२.१३९ ) । "उपसर्गे च संज्ञायाम्" ( पा ३.२.९९ ) इति डप्रत्ययः । "ऊडिदम्" ( पा ६.१.१७१ ) इत्यादिना रैशब्दात् षष्ठ्या उदात्तत्वम् ॥

---

एष इति ॥ कल्पः—"अथैनं देवताभ्यः संप्रयच्छत्येष वो देव सवितः सोमस्तꣳ रक्षध्वं मा वो दभदिति" ( बौश्रौ ६.३१ ) इति । एतावन्तं कालं यजमानः सोममरक्षत् । इत ऊर्ध्वं हे देवाः, युष्मदीयं सोमं यूयमेव रक्षध्वम् । यद्यपीन्द्रादयः सर्वे संबोधनीयास्तथाऽपि परिवृढत्वादशेषोपलक्षणार्थं सवितैव संबोध्यते ॥ मा वः दभत् सोमं रक्षमाणान् युष्मान् कश्चिदपि मा हिंसीत् ॥ सवितृसंबोधनतात्पर्यमाह—"यजमानो वा एतस्य पुरा गोप्ता भवति एष वो देव सवितः सोम इत्याह सवितृप्रसूत एवैनं देवताभ्यः सं [illegible] यच्छति" ( तैसं ६.३.२ ) इति ॥

नमो॑ दे॒वेभ्यः॑ स्व॒धा पि॒तृभ्य॑ इ॒दम॒हं निर्वरु॑णस्य॒ पाशा॑त् सुव॑र॒भि(२)वि ख्ये॑षं

नम॑ । दे॒वेभ्य॑ । स्व॒धेति॑ स्व-धा । पि॒तृभ्य॒ इति॑ पि॒तृ-भ्य॒ । इ॒दम् । अ॒हम् । निरिति॑ ।
वरु॑णस्य । पाशा॑त । सुव॑ । अ॒भि (२) । वीति॑ । ख्ये॒षम् ।

प्राञ्चमञ्जलिं करोति-" नमो देवेभ्य. " इति ॥ अस्त्विति शेष । " नमस्कारो हि
५ देवानाम् " ( तैस ६ ३ २ ) इत्यादि ब्राह्मणम् ॥

अञ्जलिं दक्षिणा न्यञ्चति—' स्वधा पितृभ्य ' इति ॥ स्वमात्मानं दधातीति स्वधा ।
" आतोऽनुपसर्गे क " ( पा ३ २ ३ )। थाथादिस्वरेणान्तोदात्तत्वम् ( पा ६ २ १४४ ) । अन्न-
मुच्यते । स्वधा पितृभ्य अस्तु । " स्वधाकारो हि पितृणाम् " ( तैस ६ ३ २ ) इति ब्राह्मणम् ॥

उपनिष्क्रामति—' इदम् ' इति ॥ क्रियाविशेषणम् । निरित्युपसर्गसामर्थ्याद् गच्छामीति
१० योग्य क्रियापदमध्याहियते । अहं वरुणस्य पाशात् इदं निर् गच्छामि । वरुणस्य पाशादिव
ममेदं निर्गमनम् । शालाया बद्ध इव ( बद्धस्येव ) स्थितस्य इदानीं निर्गमनादेवमुच्यते । वरुण-
पाशादेव निर्मुच्यते । ( तैस ६ ३ २ ) इति ब्राह्मणम् ॥

आहवनीयमीक्षते—' सुव ' इति ॥ स्वर्गसाधनत्वेन स्तुति । विश्वेषा नराणां ज्योतिष्ट्व
नयतीति वैश्वानर द्योतमानमाहवनीयमाभिमुख्येन पश्यामीति । व्याख्यातम् ( तैस १ १·४ ) ।
१५ ख्यातेराशिषि लिङि " लिङ्याशिष्यङ् " ( पा ३ १ ८६ ), " अतो येय " ( पा ७·२·८० )॥

पनद्दिति ॥ बौधायन —" सम्प्रद्रायोपतिष्ठत एतत्त्वं सोम देवो देवानुपागा इदमहं मनुष्यो
मनुष्यान्सह प्रजया सह रायस्पोषेणेति " ( बौश्रौ ६ ३१ ) इति । हे सोम, त्वं देव. सन् भवदीयान्
देवान् एतत इदानीं प्राप्तोऽसि । अहम् अपि मनुष्य सन् मदीयान् मनुष्यान् इदम् इदानीं
प्राप्तोऽस्मि । कीदृशोऽहम् ? पुत्रादिप्रजया पश्वादिधनपुष्ट्या च सह वर्तमान ॥ मन्त्रभागयोर्द्वयो प्रसिद्धिं
२० तृतीयभागे विपक्षबाध च दर्शयति—" एतत्त्वं सोम देवो देवानुपागा इत्याह देवो ह्येष सन् देवानुपैतीदमहं
मनुष्यो मनुष्यानित्याह मनुष्यो ह्येष सन् मनुष्यानुपैति यदेतद्यजुर्न ब्रूयादप्रजा अपशुर्यजमान स्यात् सह
प्रजया सह रायस्पोषेणेत्याह प्रजयैव पशुभि सहेम लोकमुपावर्तते " ( तैस ६ ३ २ ) इति ॥

नम इति ॥ बौधायन —" नमो देवेभ्य इति प्राञ्चमञ्जलिं करोति स्वधा पितृभ्य इति
दक्षिणाप्रत्यञ्चमथोपनिष्क्रामतीदमहं निर्वरुणस्य पाशादित्यथाऽऽहवनीयमुपतिष्ठते सुवरभि वि ख्येष
२५ वैश्वानर ज्योतिरिति " ( बौश्रौ ६ ३१ ) इति । आपस्तम्ब —" इदमहं मनुष्यो मनुष्यानिति प्रदक्षिण-
मावृत्य नमो देवेभ्य इति प्राचीनमञ्जलिं कृत्वा स्वधा पितृभ्य इति दक्षिणेदमहं निर्वरुणस्य पाशादि-
त्युपनिष्क्रम्य सुवरभि वि ख्येषमिति सर्वं विहारमनुवीक्षते वैश्वानर ज्योतिरित्याहवनीयम् "
( आपश्रौ ११ १८·२ ) इति ॥ मन्त्रद्वयार्थप्रसिद्धिं दर्शयति " नमो देवेभ्य इत्याह नमस्कारो हि देवाना

७. ५ मे–निर्गमादे । ८–८ ति त्रि–स्वर्गसम्भृतमविशेषाक्षराणाम् ।

३० २६ इ ३.पा मा–एतदिदम । २७ इ उ मा–' उपनिष्क्रम्य ' इत्यस्यानन्तरं ' प्राङ् प्रेक्षते ',
[ आपश्रौसूत्रे ' उपनिष्क्रम्य ' इत्यस्यानन्तरं स्वरभिव्यख्यमिति प्राङ् प्रेक्षते ' इत्यधिकमस्ति । ] ।

वैश्वा॒न॒रं ज्योति॑र॒ग्ने॑ व्रतपते॒ त्वं व्र॒ताना॑ व्र॒तप॑ति॒रसि॒ या मम॑ त॒नूस्त्वय्य॑भू॒दि॒य॑ सा मयि॒ या तव॑ त॒नूर्मय्य॑भू॒दे॒षा सा त्वयि॑ यथाय॒थं नौ॑ व्रतपते व्र॒तिनो॑र्व्र॒तानि॑ ॥ ४ ॥

[ गातुविद्म्येकत्रिꣳशच्च ] ॥

वैश्वानरम् । ज्योतिः । अग्ने । व्रतपत इति॑ व्रत-पते । त्वम् । व्रतानाम् । व्रतपतिरिति॑ व्रत-पतिः । असि । या । मम॑ । तनूः । त्वयि॑ । अभूत् । इयम् । सा । मयि॑ । या । तव॑ । तनूः । मयि॑ । अभूत् । एषा । सा । त्वयि॑ । यथायथमिति॑ यथा-यथम् । नौ । व्रतपत इति॑ व्रत-पते । व्रतिनोः । व्रतानि॑ ॥ ४ ॥　५

[ मैसं १·२·१३; कासं ३·१; कपिसं २·८; वासं ५·३५-४१ ]

यजमानमवान्तरदीक्षां विसर्जयति—' अग्ने व्रतपते ' इति ॥ हे अग्ने व्रतपते, त्वं हि सर्वेषां व्रतानां संबन्धी व्रतपतिः असि । " परयावैश्वर्ये " ( पा ६·२·१८ ) इति पूर्वपदप्रकृतिस्वरत्वम्[९] । अतस्त्वत्प्रसादादेवाहं[१०] व्रती संपन्नः । इदानीं तु विसृष्टदीक्षे मयि या मम तनूः पूर्वं त्वयि अभूत् सा इयम् इदानीं मयि एव अस्तु । या च तव तनूः पूर्वं मयि अभूत् सा एषा इदानीं त्वयि एवास्तु । " युष्मदस्मदोर्ङसि " ( पा ६·१·२११ ) इति तवममशब्दावाद्युदात्तौ । पूर्वं हि ' या मम तनूरेषा सा त्वयि या तव तनूरियं सा मयि ' ( तैसं १·२·११ ) इत्याभ्यां तन्वोर्विनिमयः कृतः । इदानीं तु यथायथं गृह्यते । एवं गृहीतस्वस्वतन्वोरावयोः व्रतिनोः व्रतानि कर्माणि यथायथं भवन्तु । " यथास्वे यथायथम् " ( पा ८·१·१४ ) इति निपात्यते । मदीयानि ममैव सन्तु । त्वदीयानि तथा तवैव च सन्त्वित्यर्थः । पूर्वं हि ' सह नौ व्रतपते व्रतिनोर्व्रतानि ' ( तैसं १·२·११ ) इति परस्परकृतत्वं व्रतानामभ्युपगतं, यन्मया कृतं तत्त्वयापि कृतम्, यत्त्वया कृतं तन्मयापीति । इदानीं तु यथायथं व्यवस्थाप्यते[११] । " अग्ने व्रतपत आत्मनः पूर्वा तनूरादेयेत्याहुः " ( तैसं ६·२·२ ) इति ब्राह्मणम् ॥　१० १५ २०

॥ इति तृतीये चतुर्थोऽनुवाकः ॥ ४ ॥

स्वधा पितृभ्य इत्याह स्वधाकारो हि पितृणाम् " ( तैसं ६·३·२ ) इति ॥ ' निर्वरुणस्य पाशात् ' इत्यत्र ' निर्मुञ्चामि ' इत्यध्याहर्तव्यम् । एतमेवाभिप्रायं दर्शयति—" इदमहं निर्वरुणस्य पाशादित्याह वरुणपाशादेव निर्मुच्यते " ( तैसं ६·३·२ ) इति ॥

अग्न इति ॥ कल्पः—" अथ [१८]यजमानमवान्तरदीक्षां विसर्जयत्यग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूस्त्वय्यभूदियं सा मयि या तव तनूर्मय्यभूदेषा सा त्वयि यथायथं नौ व्रतपते व्रतिनोर्व्रतानीति " ( चौश्रौ ६·३१ ) इति । अवान्तरदीक्षाया आदौ यजमानः स्वतनुमग्नौ संकल्पेनावस्थाप्याग्नि-　२५

९-९. मै-व्याख्यातं चेदं पूर्वम् ।　१०. ति.त्रि-प्रसादेनाहम् ।　११. मै-व्यवस्थाप्यन्ते ।

१८. आ.क-यजमानोऽवा ।

तनुं च स्वस्मिन्नवस्थाप्य "सहव्रतनियममुपचक्रमे । इदानीं तु शरीरव्यत्ययस्यासमाहितत्वात्" प्रतिनोरग्नियजमानयो. स्वोचितव्रतमेवाऽस्तु । अत्र 'सुवरभि वि ख्येषम्', 'वैश्वानरं ज्योति' इत्येतौ "मन्त्रौ पुरोडाशब्राह्मणे ( तैब्रा ३ २.४ ) स्पष्टत्वादुपेक्षितौ ॥ अस्य तु मन्त्रस्य प्रतीकग्रहणपूर्वकं तात्पर्यमाह—"अग्ने व्रतपत आत्मन पूर्वा तनूरादेयेत्याहु को हि तद्वेद यद्वसीयान्स्वे वशे भूते
५ पुनर्वा ददाति न वा इति" ( तैसं ६ ३ २ ) इति। 'अग्ने व्रतपते' इत्येतावत् प्रतीकम्। स्वकीया पूर्वा तनूरग्निसकाशात् सहसा स्वीकार्येति बुद्धिमन्त आहु.। कुत ? वसीयानत्यन्तधनिकः प्रभु परकीये वस्तुनि स्ववशीभूते सति "पुन ददाति वा न वेति यत् तत् को नाम वेद ? ततो वशीभावात् प्रागेवाऽऽदेया ॥ ग्रावादीनामाग्नीध्रे स्थापनं यत् पूर्वमुक्तं तत्प्रशंसति—"ग्रावाणो वै सोमस्य राज्ञो मलिम्लुसेना य एव विद्वान् ग्राव्ण आग्नीध्र उपवासयति नैनं मलिम्लुसेना विन्दति" ( तैसं ६ ३.२ )
१० इति । मलिम्लुसेना विरोधितस्करसेना ॥

अत्र विनियोगसंग्रह —

"स्वर्‌ जुषा पश्चिमे वह्नौ वैसर्जनहुतिस्त्रयम्।
शालामुखीयतो वह्निं धृत्वा प्राञ्चोऽभियान्ति हि ॥ १ ॥
उरु हुत्वा पूर्ववह्नौ सोमो राजानमग्रत ।
१५ हविर्धानं नयत्यत्र चर्म संस्तीर्य सादयेत् ॥ २ ॥
अग्निर्व्रुयादेव सोम "निर्दिश्यैतन्निमन्त्रयेत् ॥
इद दक्षिणमारुह्य नम प्रागञ्जलि स्वधा ॥ ३ ॥
दक्षिणाञ्जलिरेतस्मात् निर्गच्छन्मण्डपादिदम् ।
सुवर्विहारसीक्षित्वा वैश्वा पूर्वाग्निमीक्षते ॥
२० अग्ने वह्नेरुपस्थान मन्त्रा षोडश कीर्तिता ॥ ४ ॥" इति ॥

अथ मीमांसा ॥ प्रथमाध्यायस्य तृतीयपादे चिन्तितम्—

"वैसर्जनाख्यहोमीयवाससो ग्रहणस्मृति ।
प्रमा न वा श्रुत्यबाधात् प्रमा स्यादष्टकादिवत् ॥
दृष्टलोभैकमूलत्वसंभवे श्रुत्यकल्पनात् ।
२५ सर्ववेष्टनवद्बाधहीनाऽप्येषा न हि प्रमा ॥" (जैन्या १ ३.८-९) इति ॥

इय स्मर्यते—"वैसर्जनहोमवासोऽध्वर्युर्गृह्णाति" इति । सेयं स्मृति सर्ववेष्टनस्मृतिवत् प्रत्यक्षश्रुत्या न बाध्यते। ततोऽष्टकादिस्मृतिवत् मूलवेदानुमानेन प्रमाणमिति प्राप्ते ब्रूम —कदाचित् कश्चिदध्वर्युर्लोभादेतद्वासो जग्राह। तन्मूलैवैषा स्मृतिरित्यपि कल्पना संभवति। दृष्टानुसारिणी चेयं कल्पना। दक्षिणया परिक्रीतानामृत्विजां लोभदर्शनात्। तथा सत्यस्या स्मृतेरन्यथाप्युपपत्तावष्टकादिस्मृतिवत्
३० "मूलश्रुतिर्न कल्पयितु शक्यते। अतो बाधाभावेऽपि मूलवेदाभावादेषा स्मृति प्रमाणम् ॥

अथ छन्द —'स्वर्‌ सेअ' इति गायत्री। 'अयं नो अग्नि' इति त्रिष्टुप्। 'उरु विष्णो' इत्यनुष्टुप्। 'सोमो जिगाति' इति गायत्री ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाक ॥

---

३५ १९. इ उ.ना पा.भां.हा—सहव्रत निय°। २० इ उ ना पा मर भां हा—°व्यत्ययस्य समाहितत्वात्। २१. इ.उ त.ना पा भां मर हा—'मन्त्रौ' नास्ति। २२. क.त मर—'पुन' इत्यस्यानन्तरं 'च प्रभु'। २३. क—निर्दिश्यैते निमन्त्रयेत्। २४ आ.क ना हा—अष्टकादिमूलश्रुतिवत्।

अत्यन्यानगां नान्यानुपागामर्वाक् त्वा परैरविदं परोऽवरैस्तं त्वा जुषे वैष्णवं देवयज्यायै

अतीति । अन्यान् । अगाम् । न । अन्यान् । उपेति । अगाम् । अर्वाक् । त्वा । परैः । अविदम् । परः । अवरैः । तम् । त्वा । जुषे । वैष्णवम् । देवयज्याया इति देव-यज्यायै ।

अतः परं पाशुकं काण्डं सोमार्थमेव ।  ५

यूपार्थं वृक्षमुपतिष्ठते—'अत्यन्यान्' इति द्वादशाक्षरत्रिपदया महाबृहत्या । ताण्डिन एतां सतोबृहतीमाहुः, ऊर्ध्वबृहतीं बह्वृचाः ॥ हे वृक्ष, ᵛअन्यान् ¹इतरान् कांश्चित् वृक्षानहम् ᵛअति ᵛअगाम् अतिक्रम्यागतोऽस्मि । के पुनस्ते ? ये यूपार्हाः पलाशादयः, "समे जातमशाखाजम्" (आपश्रौ ७·१·१७) इत्यादिलक्षणहीनाः, तानुपगम्यैव वैगुण्यदर्शनेन अत्यजम् । अथ ᵛअन्यान् कांश्चित् वृक्षान् ᵛन ᵛउप ᵛअगां नैवोपगतोऽस्मि । के पुनस्ते ? ये अयूपार्हा निम्बादयः । १० सोऽहं यूपार्हं लक्षणवन्तं च त्वामेव ᵛअविदं लब्धवानस्मि । लृदित्वादङ् (पा ३·१·५५)। अस्य गुणवत्त्वमाह—'परैः' इति । ᵛपरैः उत्कृष्टैः समजातत्वादिभिर्लक्षणैः ᵛअर्वाक् अविदूरे वर्तमानं सर्वलक्षणयुक्तमिति यावत् । ᵛअवरैः निकृष्टैर्विषमजातत्वादिभिरसल्लक्षणैः ᵛपरः परस्तात् दूरे वर्तमानं असल्लक्षणैरस्पृष्टमित्यर्थः । "विभाषा परावराभ्याम्" (पा ५·३·२९) इत्यतसुचि तकारस्य छान्दसो लोपः । यद्वा—पूर्वादिभ्यो विधीयमानोऽसिप्रत्ययो बहुलवचनात् परशब्दादपि भवति (पा १५ ५·३·३९) । तत्र प्रत्ययस्वरेणान्तोदात्तत्वम् (पा ३·१·३) । परशब्दो हि "स्वाङ्गशिटामदन्तानाम्" (फि २९) इत्याद्युदात्तः । शिडिति सर्वनामान्युच्यन्ते । "एकान्याभ्यां समर्थाभ्याम्" (पा ८·१·६५) इति प्रथमा तिङ्विभक्तिर्न निहन्यते । ᵛतं तादृशं ᵛत्वा ᵛदेवयज्यायै

चतुर्थेऽनुवाके वेसर्जनहोमेऽवान्तरदीक्षां विसृज्याग्नीषोमयोराग्नीध्रीये हविर्धाने च प्रणयनमुक्तम् । अथ पञ्चममारभ्यैकादशान्तेषु सप्तस्वनुवाकेषु प्रणीतयोस्तयोरग्नीषोमयोः पशुर्वक्तव्यः । ¹तत्रास्मिन् पञ्चमेऽनुवाके पश्वङ्गयूपस्य² छेदनमभिधीयते । २०

अतीति ॥ बौधायनः—"*पुनः पूर्वया द्वारोपनिष्क्रम्य तां दिशं यन्ति यत्रास्य यूपस्तष्टो भवति यत्र वा वेत्स्यन् मन्यते । स यः समे भूम्यै स्वायोने रूढो बहुपर्णो बहुशाखोऽप्रतिशुष्काग्रः प्रत्यङ्ङुपनतस्तमुपतिष्ठतेऽत्यन्यानगां नान्यानुपागामर्वाक् त्वा परैरविदं परोऽवरैस्तं त्वा जुषे वैष्णवं देवयज्याया इति" (बौश्रौ ४·१) इति । आपस्तम्बः—"अतिक्रम्य यूप्यान् यं जोषयते तमभिमन्त्रयते । २५ अत्यन्यानगामिति । अथैनमुपस्पृशति तं त्वा जुषे वैष्णवं देवयज्याया इति" (आपश्रौ ७·१·१९–७·२·२) इति ॥ वृक्षा द्विविधा यूप्या अयूप्याश्च । पलाशखदिरादयो यूप्याः । निम्बजम्बीरादयस्त्वयूप्याः । हे पुरोवर्ति यूप्यवृक्ष³, त्वत्तः ᵛअन्यान् कांश्चित् यूप्यानपि⁴ समप्रदेशजन्मादिलक्षणरहितान् ᵛअति ᵛअगाम् ।

१. तं.ति.पं१–'इतरान्' नास्ति ।

१. इ.उ.पा.मा.हा–अत्रास्मिन् । २. मर–पश्वङ्गस्य यूपस्य । *[बौश्रौसूत्रे 'पुनः' नास्ति ।] । ३० ३. क.तं.मर–यूपवृक्ष । ४. तं.मर–यूपवृक्षानपि ।

देवस्त्वा सविता मध्वाऽनक्त्वोषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसीः

देव । त्वा । सविता । मध्वा । अनक्तु । ओषधे । त्रायस्व । एनम् ।
स्वधित इति स्व-धिते । मा । एनम् । हिꣳसीः ।

देवयागार्थं जुषे सेवे गृह्णामीत्यर्थः । वैष्णवं विष्णुदेवताकम् । "वैष्णवो वै देवतया यूपः"
५ ( तैस ६ ३ ३ ) इति । "छन्दसि निष्टर्क्य" ( पा ३ १ १२३ ) इत्यादिना देवयज्याशब्दो यप्रत्ययान्तो निपातितः । "अति ह्यन्यानेति नान्यानुपैति" ( तैस ६ ३ ३ ) इत्यादि ब्राह्मणम् ॥

यूपमाज्येनानक्ति—'देवस्त्वा' इति ॥ हे वृक्ष, देवः सविता सर्वस्य प्रेरकस्त्वा मध्वा मदनीयेन मधुरेणाज्येन अनक्तु स्निग्धं करोतु । "फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च" ( उ १८ ) इति मन्यतेरुप्रत्ययः । धकारश्चान्तादेशः । तत्र च उरित्यनुवर्तते ।
१० "जसादिषु छन्दसि वावचनं प्राङ्णौ चङ्युपधायाः" ( पा ७ ३ १०९ वा १ ) इति नाभावाभावः । मधुशब्देन चाज्यमुच्यते । "तेजसैवैनमनक्ति" ( तैस ६ ३ ३ ) इति ब्राह्मणदर्शनात् । "तेजो वा आज्यम्" ( तैस ६ ३ ४ ) इति ब्राह्मणम् ॥

कर्तव्ये बर्हिरन्तर्दधाति—'ओषधे त्रायस्वैनम्' इति ॥ हे ओषधे बर्हिः, एनं यूपार्थं वृक्षं त्रायस्व रक्ष, यागसाधनत्वापादनेन वृक्षत्वात् मोचयित्वा उत्तमां गतिं गमय ॥
१५ स्वधितिना तिर्यक् प्रहरति—'स्वधिते मैनꣳ हिꣳसीः' इति ॥ हे स्वधिते, त्वमपि एनं मा हिꣳसीः उत्तमामेव गतिं गमय । व्याख्यातौ च प्रागेवैतौ मन्त्रौ ( तैस १ २ १ ) । "अनक्षसङ्गं वृश्चेत्" ( तैस ६ ३ ३ ) इत्यादि ब्राह्मणम् ॥

अन्यान् तु मयूख्यान् न उप आगाम् । त्वा तु अविदं लब्धवानस्मि । कीदृशम् ? परः अवरैः उत्कृष्टैर्लक्षणैः प्रत्यासन्नं सल्लक्षणयुक्तमित्यर्थः । पुनः कीदृशम् ? परः अवरैः निकृष्टलक्षणैर्दूरवर्तिनं तद्रहित
२० मित्यर्थः । हे वृक्ष, तं त्वा विष्णुदेवताकं देवयजनार्थं सेवे ॥ विधत्ते—"वैष्णव्यर्चा हुत्वा यूपमच्छैति वैष्णवो हि देवतया यूपः स्वयैवैनं देवतयाऽच्छैति" ( तैस ६.३.३ ) इति । "उरु विष्णो वि क्रमस्व" ( तैस १ ३.४ ) इति स्रुवेणाऽऽहवनीये यूपाहुतिं हुत्वा ततो यूपं प्राप्तुं गच्छेत् ॥ यथोक्तमन्त्रार्थं प्रसिद्धिं दर्शयति—"अत्यन्यानगां नान्यानुपागामित्याहाति ह्यन्यानेति नान्यानुपैत्यर्वाक्त्वा परैरविदं परोऽवरै रित्याहार्वाग्ध्येनं परैर्विन्दति परोऽवरैस्त्वा जुषे वैष्णव देवयज्याया इत्याह देवयज्यायै ह्येनं जुषते"
२५ ( तैस ६ ३ ३ ) इति ॥

देवस्त्वेति ॥ कल्पः—"देवस्त्वा सविता मध्वाऽनक्त्विति स्रुवेण सर्वतो मूलं पर्यनक्ति । ओषधे त्रायस्वैनमित्युपर्यग्रं *दर्भद्वयमन्तर्धाय स्वधिते मैनꣳ हिꣳसीरिति स्वधितिना प्रहरति" ( आपश्रौ ७ २ ३-४ ) इति ॥ मध्वा मधुरेणाऽऽज्येन ॥ एतदेवाऽभिप्रेत्याऽऽह—"देवस्त्वा सविता मध्वाऽनक्त्वि त्याह तेजसैवैनमनक्त्योषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसीरित्याह वज्रो वै स्वधितिः शान्त्यै"
३० ( तैस ६ ३ ३ ) इति ॥ विधत्ते—"स्वधितेर्वृक्षस्य बिभ्यतः प्रथमेन शकलेन सह तेजः परा पतति य-

२ त.ति-यूप । ३. तं ति प१ मे—'ब्राह्मणम्' नास्ति ।

*[ आपश्रौसूत्रे ' दर्भमन्तर्धाय ' । ] ।

यूपच्छेदनम् ]

दि॒वम॑ग्रे॑ण॒ मा ले॑खीर॒न्तरि॑क्षं॒ मध्ये॑न॒ मा हि॑ꣳसीः पृथि॒व्या सं भ॑व
वन॑स्पते श॒तव॑ल्शो॒ वि रो॑ह स॒हस्र॑वल्शा॒ वि व॒यꣳ रु॑हेम

दि॒वम् । अग्रे॑ण । मा । ले॒खीः । अ॒न्तरि॑क्षम् । मध्ये॑न । मा । हि॒ꣳसीः । पृ॒थि॒व्या । समिति॑ ।
भ॒व । वन॑स्पते । श॒तव॑ल्श॒ इति॑ श॒त–व॒ल्शः । वीति॑ । रो॒ह ।
स॒हस्र॑वल्शा॒ इति॑ स॒हस्र॑–व॒ल्शाः । वीति॑ । व॒यम् । रु॒हे॒म ।　　५

पतन्तमनुमन्त्रयते—'दिवमग्रेण' इति ॥ आत्मीयेन $^{v}$अग्रेण $^{v}$दिवं $^{v}$मा $^{v}$लेखीः मा विदारीः । "नेटि" ( पा ७·२·४ ) इति वृद्धिप्रतिषेधः । तथात्मीयेन $^{v}$मध्येन $^{v}$अन्तरिक्षं $^{v}$मा $^{v}$हिंसीः । $^{v}$पृथिव्या च $^{v}$सं $^{v}$भव संयुज्यस्व पृथिवीमपि मा प्रहासीः, *प्रमाणानतिरेकः संभवः*, पृथिवीमतिक्रम्य मा गाः । यथा त्वदीयैरग्रमध्यमूलैर्विदारणाभिघातविपाटनकारिभिः लोकत्रयं न नश्यति तथा पतेत्यर्थः । पृथिवीशब्दो ङीषन्तोऽन्तोदात्तः । तेन "उदात्तयणो हल्पूर्वात्" ( पा ६·१·१७४ ) इति विभक्तेरुदात्तत्वम् । "इमे वै लोकाः" ( तैसं ६·३·३ ) इत्यादि ब्राह्मणम् ॥　　१०

आव्रश्चने हिरण्यं निधाय संपरिस्तीर्याभिजुहोति—'वनस्पते' इति त्रिष्टुभैकपदया ॥ बर्हिराच्छेदनाभिमर्शनेन व्याख्यातप्रायमिदम् ( तैसं १·१·२ ) । पारस्करादिर्वनस्पतिशब्दः ( पा ६·१·१५७ ) । "तस्मादाव्रश्चनात्" ( तैसं ६·३·३ ) इति ब्राह्मणम् ॥

प्रथमः शकलः परापतेत् तमप्या हरेत् सतेजसमेवैनमा हरति" ( तैसं ६·३·३ ) इति । स्वधितिभयात् पतितस्य वृक्षतेजस $^{5}$आहरणायेहाऽऽद्यशकलाहरणम् ॥　　१५

दिवमिति ॥ कल्पः—"प्राञ्चं वोदञ्चं वा प्रयन्तमनुमन्त्रयते दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिꣳसीः पृथिव्या सं भवेति" ( बौश्रौ ४·१ ) इति ॥ हे छिन्नवृक्ष, त्वं पतन् $^{v}$दिवं $^{v}$मा $^{v}$लेखीः मा विदारीः । $^{v}$पृथिव्या $^{v}$सं $^{v}$भव संयुज्यात्रतिष्ठस्व ॥ अप्रसक्तप्रतिषेधबुद्धिं वारयति—"इमे वै लोका $^{6}$एषात् प्रयतो बिभ्यति दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिꣳसीरित्याहैभ्य एवैनं लोकेभ्यः शमयति" ( तैसं ६·३·३ ) इति । प्रयतः पततः ॥　　२०

वनस्पत इति ॥ कल्पः—"अथाऽऽव्रश्चने हिरण्यं निधाय संपरिस्तीर्याभिजुहोति वनस्पते शतवल्शो वि रोह स्वाहेति" ( बौश्रौ ४·१ ) इति ॥ विधत्ते—"वनस्पते शतवल्शो वि रोहेत्याव्रश्चने जुहोति तस्मादाव्रश्चनात् वृक्षाणां भूयाꣳस उत्तिष्ठन्ति" ( तैसं ६·३·३ ) इति । आवृश्च्यते वृक्षो यस्मात् मूलादित्याव्रश्चनम् । भूयांसो बहवो वल्शाः शाखाविशेषाः ॥

सहस्रवल्शा इति ॥ कल्पः—"सहस्रवल्शा वि वयꣳ रुहेमेत्यात्मानं $^{7}$प्रत्यभिमृशते" ( बौश्रौ ४·१ ) इति ॥ $^{8}$"रुहेमेत्याशीरर्थो विवक्षित इत्याह"$^{8}$—"सहस्रवल्शा वि वयꣳ रुहेमेत्याहाऽऽशिषमेवैतामा शास्ते" ( तैसं ६·३·३ ) इति ॥　　२५

*—*[ द्र. काशिका—पा ४·३·४१, ५·१·५२ ] ।

५. क–आहरणाय शकलाहरणम्; मर–आहरणं हि शकलाहरणम् । ६. तं. मर–अस्मात् । ७. आ.क–प्रत्यभिमृश्य । ८–८. आ.क.मर–विरोहेवेत्याशीरर्थो विवक्षित इत्याह; इ.ज.पा.मा–विधत्ते: ना–'रुहेम...इत्याह' नास्ति ।　　३०

### यं (१) त्वाऽयꣳ स्वधि॑तिस्तेति॑जानः प्रणि॒नाय॑ मह॒ते

यम् (१)। त्वा । अ॒यम् । स्वधि॑तिरिति॒ स्व-धि॒ति॒ः । तेति॑जान॒ः । प्र॒णि॒नायेति॑ प्र-नि॒नाय॑ । म॒ह॒ते ।

आत्मानं प्रत्यभिमृशति—'सहस्रवल्शा' इति त्रिष्टुभेकपदया ॥ इदमपि प्रागेव व्याख्यातम् ( तैसं १·१·२ ) ।

अन्वग्रं शाखां प्रसूदयति—'यं त्वा' इति द्विपदया त्रिष्टुभा ॥ तेतिजानः निशितधारः अयं स्वधितिः । तिज निशातने । यङ्लुगन्ताल्लिटो व्यत्ययेनात्मनेपदम् ( पा २·४·७४, ३ १ ८५ ) । शानच् ( पा ३·२ १२४ ) । "अभ्यस्तानामादिः" ( पा ६·१·१८९ ) इत्याद्युदात्तत्वम् । यं त्वां यूपार्थं वृक्षं प्रणिनाय प्रकर्षेण नयति, शाखाः प्रसूद्य निशिष्टं रूपं प्रापयति । "छन्दसि लुङ्लङ्लिटः" ( पा ३·४ ६ ) इति लिट् । किमर्थम् ? महते सौभगाय सुभगत्वाय सुश्रीकत्वाय । उद्गात्रादिषु "सुभग मन्त्रे" इति पाठात् भावे अञ्प्रत्ययः ( द्र. काशिका—पा ५ १ १२९ ) । स खलु त्वमसीति शेषः । स त्वमस्मद्यज्ञं साधयेति वा ।

यमिति ॥ कल्पः—"अन्वग्रं शाखां प्रसूदयति यं त्वाऽयꣳ स्वधितिस्तेतिजानः प्रणिनाय महते सौभगायेति" ( बौश्रौ ४·१ ) इति ॥ हे छिन्नवृक्ष, तेतिजानः तीक्ष्णः अयं स्वधितिः यं त्वां महते सौभगाय दर्शनीयत्वाय तिर्यक्शाखाच्छेदनेन प्रणिनाय प्रकृष्टं यूपत्वं प्रापयामास, ततस्तादृशेन त्वया छेदनाद्ध भेतव्यम् ॥

अच्छिन्न इति ॥ कल्पः—"अच्छिन्नो रायः सुवीर इत्यग्रं परिवासयति" ( आपश्रौ ७·२·१० ) इति । हे यूप, त्वम् अच्छिन्नः भव । मन्त्रसामर्थ्येन छेदनव्यथा तव मा भूत् । कीदृशस्त्वम् ? सुवीरः शोभना वीरा यजमानपुत्रपौत्रादयो येन त्वया लभ्यन्ते स त्वं सुवीरः । तादृशस्त्वं रायः धनानि यजमानाय देहि । 'यं त्वाऽयम्', 'अच्छिन्नः' इत्येतौ मन्त्रावुपेक्षितौ ॥ योऽयं यूपार्थो वृक्षच्छेदः पूर्वमुक्तस्तत्र छेदे छेद्यवृक्षस्य प्रदेशं विधत्ते—"अनक्षसङ्गं वृश्चेत्" ( तैसं ६·३ ३ ) इति । छिन्नावशिष्टस्य मूलस्योपरि गच्छतः शकटस्याक्षो यथा न प्रसज्यते तथा नीचैं मूलमवस्थाप्य छिन्द्यात् ॥ विपक्षे बाधकमाह—"यदक्षसङ्गं वृश्चेदधर्धुकं यजमानस्य प्रमायुकꣳ स्यात्" ( तैसं ६·३·३ ) इति । यदि छिन्ने वृक्षमूले शकटस्याक्षः प्रसज्येत तदा यजमानस्य संबन्धि गोचरमाविक्रमीयाया अधो मरणशीलं भवेत् । शकटस्य प्राचीनं दीर्घकाष्ठमीषा ॥ शाखाया यूपार्थं छेदनं निन्दति—"यं कामयेताप्रतिष्ठितः स्यादित्यारोहं तस्मै वृश्चेदेष वै वनस्पतीनामप्रतिष्ठितोऽप्रतिष्ठित एव भवति" ( तैसं ६ ३ ३ ) इति । वृक्षमारुह्य जायत इत्यारोहः शाखा । स च भूमावनुत्पन्नत्वादप्रतिष्ठितः । तस्य यूपत्वे यजमानोऽप्रतिष्ठित एव भवति ॥ अपर्णमपि निन्दति—"यं कामयेतापशुः स्यादित्यपर्णं तस्मै शुष्काग्रं वृश्चेदेष वै वनस्पतीनामपशव्योऽपशुरेव भवति" ( तैसं ६ ३·३ ) इति ॥ वनस्पतीनां मध्ये एवं पर्णरहितः शुष्काग्रश्चापशव्यः पशुभ्यो न हितः ॥ बहुपर्णं विधत्ते—"यं कामयेत पशुमान्स्यादिति बहुपर्णं तस्मै बहुशाखं वृश्चेदेष वै वनस्पतीनां पशव्यः पशुमानेव भवति" ( तैसं ६ ३ ३ ) इति ॥ भूमौ समप्रदेशे स्वबीजादुत्पन्नं विधत्ते—

४ त.ति प१—प्राक्तैव । ५. नि—नाशयति, तं—आनयति । ६ मै—प्रसाध्य ।

९. आ ना हा—शाखाम् । १० इ उ.ना पा.मा.हा—यूपार्थे । ११ त म२—सज्यते । १२. तं. म२—बाधमाह । १३ तं म—सज्येत । १४ इ.उ पा मा—समप्रदेशे, म२—संप्रदेशे, ना हा—गमानप्रदेशे ।

सौभ॑गा॒याच्छि॑न्नो रा॒यः सु॒वीरः॑ ॥ ५ ॥

[ यं द॒र्शं च ]

सौभ॑गाय । अच्छि॑न्नः । रा॒यः । सु॒वीर॒ इति॑ सु–वीरः॑ ॥ ५ ॥

[ मैसं १-२-१४; कासं ३-२; कपिसं २-९; वासं ५-४२–४३ ]

चतुरङ्गुलमग्रं चषालाय प्रच्छेदयति—' अच्छिन्नः ' इति ॥ अच्छिन्नः । अव्ययपूर्वपद-प्रकृतिस्वरत्वम् ( पा ६-२-२ ) । रायः धनानि, देहीति शेषः । यद्वा—अच्छिन्नो धनस्य, सुवीरश्च, भवेत्यध्याहारः । " ऊडिदम् " ( पा ६-१-१७१ ) इत्यादिना तृतीयादेर्विभक्ते-रुदात्तत्वं व्यत्ययेन न क्रियते । ईदृशस्त्वमेव नो रायः । शोभना वीराः पुत्रपौत्रादयोऽस्य यजमानस्य येन भवन्ति स सुवीरः । " वीरवीर्यौ च " ( पा ६-२-१२० ) इत्युत्तरपदाद्युदात्त-त्वम् । यस्मात्त्वया यजमानस्य आयुष्मन्तः पुत्रादय उत्पद्यन्ते, तस्मात्तेषामभिवृद्ध्यर्थं अविच्छेदेन धनानि देहीति ॥ १०

॥ इति तृतीये पञ्चमोऽनुवाकः ॥ ५ ॥

" प्रतिष्ठितं वृश्चेत् प्रतिष्ठाकामस्यैष वै वनस्पतीनां प्रतिष्ठितो यः समे भूम्यै स्वाद्योने रूढः प्रत्येव तिष्ठति " ( तैसं ६-३-३ ) इति । स्वाद्योनेरित्यनेन वृक्षजन्या शाखा व्यावर्त्यते ॥ पश्चिमदिश्यानतं विधत्ते—" यः प्रत्यङ्ङुपनतस्तं वृश्चेत् स हि मेधमभ्युपनतः " ( तैसं ६-३-३ ) इति । मेधो यज्ञः । स चोत्तरवेद्यां क्रियमाणो यूपस्थानात् प्रत्यङ्भवति । अतो मेधमुपलक्ष्यैवोपनतः ॥ यूपस्य काम्यानि परिमाणानि विधत्ते—" पञ्चारत्निं तस्मै वृश्चेद्यं कामयेतोपैनमुत्तरो यज्ञो नमेदिति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञ उपैनमुत्तरो यज्ञो नमति षडरत्निं प्रतिष्ठाकामस्य षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठति सप्तारत्निं पशुकामस्य सप्तपदा शक्वरी पशवः शक्वरी पशूनेवाव रुन्धे नवारत्निं तेजस्कामस्य त्रिवृता स्तोमेन संमितं तेजस्त्रिवृत्तेजस्व्येव भवत्येकादशारत्निमिन्द्रियकामस्यैकादशाक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुगिन्द्रियाव्येव भवति पञ्चदशारत्निं भ्रातृव्यवतः पञ्चदशो वज्रो भ्रातृव्याभिभूत्यै सप्तदशारत्निं प्रजाकामस्य सप्तदशः प्रजापतिः प्रजापतेराप्त्यै एकविंशत्यरत्निं प्रतिष्ठाकामस्यैकविंशः स्तोमानां प्रतिष्ठा प्रतिष्ठित्यै " ( तैसं ६-३-३ ) इति । चतुर्विंशतिरङ्गुल्योऽरत्निः । उत्तरो यज्ञः सोमविकृतिः ॥ विधत्ते—" अष्टाश्रिर्भवत्यष्टाक्षरा गायत्री तेजो गायत्री गायत्री यज्ञमुखं तेजसैव गायत्रिया यज्ञमुखेन संमितः " ( तैसं ६-३-३ ) इति । गायत्र्याः तेजस्त्वमग्निना सहोत्पन्नत्वात्, यज्ञमुखत्वं च प्रातःसवने प्रयोज्यत्वात् । अतोऽष्टसंख्याद्वारा तेजोगायत्री-यज्ञमुखैः समानो भवति । तस्मात् तक्षणेन यूपस्याष्टावश्रयः कार्याः ॥ १५ २० २५

अत्र विनियोगसंग्रहः—

" अति वृक्षं मन्त्रयित्वा तं त्वा यूपतरुं स्पृशेत् ।
देवस्तन्मूलमभ्यज्य छोप दर्भान्तरायतः ॥ १ ॥

१५. आ.क–मेधमभि° । ३०

तैसं २६॥

स्वधि छिन्द्याद्दिव शास्या पातयेद्वन शोधिते ।
मूले हुत्वा महेत्यास्मस्पर्शो य स्त्वाऽङ्गुलानि च ॥
अच्छीन्यग्र च सच्छिन्द्यादश मन्त्रा उदीरिता " ॥ २ ॥ इति ॥

अथ मीमांसा ॥ पञ्चमाध्यायस्य प्रथमपादे चिन्तितम्—

५ " यूपच्छेदापकर्षे किं तदन्ते श्रुत एव वा ।
प्रयाजवत् "तदन्तत्वान् नयने चापकृष्यताम् ॥
अग्नीषोमप्रणयनं सौमिक पाशुकी छिदा ।
प्रयाजाघारवैषम्याच्छ्रुतमात्रापकर्षणम् " ॥ ( जैन्या ५ १ २८-२९ ) इति ॥

ज्योतिष्टोमे वैसर्जनहोमकाले प्राचीनवंशगतो वह्निराग्नीध्रीये प्रणेतव्य. । सोमश्च प्राचीनवंशे
१० पूर्वं स्थापित इदानीं हविर्धाने प्रणेतव्य । तयोरुभयो प्रणयनादूर्ध्वं यूपच्छेद आम्नात । तदेतत्सर्वं सुत्यादिनात् प्राचीन औपवसथ्ये दिने प्राप्तम् । तत्र यूपच्छेदो दिनत्रयात् पूर्वस्मिन् दीक्षाकालेऽपकृष्ट. । " दीक्षासु यूप छिनत्ति " ( आश्रौ १२·१९ २ द्र आपश्रौ १० ४ ४६ ) इति तद्विधानात् । तस्मिन्नपकृष्टे प्रयाजन्यायेन तदन्ताङ्गसमूहस्यापकर्षात् प्रणयनमप्यपकृष्यतामिति प्राप्ते ब्रूम —प्रयाजाघारादीनामेकस्मिन् प्रधाने प्रत्यङ्गत्वेनैकप्रयोगान्त पातित्वादवश्यंभावी परस्परक्रम इति प्रयाजापकर्षे तदन्ताङ्गसमूहापकर्षो
१५ युक्त ॥ इह तु प्रणयनं सोमयागाङ्गम् । यूपच्छेदस्त्वग्नीषोमीयपशोरङ्गमिति प्रणयनच्छेदनयोर्नान्योऽन्य-क्रमोऽपेक्षित । तस्मात् श्रुतस्य यूपच्छेदनमात्रस्यापकर्ष ॥

एकादशाध्यायस्य तृतीयपादे चिन्तितम्—

" अग्नीषोमीयमुख्येषु यूपो भिन्नोऽथ तन्त्रता ।
उपदेशातिदेशाभ्यां भिन्नो नो कालभेदत " ॥ ( जैन्या ११·३·१ ) इति ॥

२० ज्योतिष्टोमे पशवोऽग्नीषोमीयसवनीयानूबन्ध्याख्यो विहिता । तेषु यूपभेदो युक्त. । कुत ? अग्नीषोमीये प्रत्यक्षवचनेन तदुपदेशादितरयोश्चोदकाभ्यामतिदेशादिति प्राप्ते ब्रूम —न तावदग्नीषोमीयपशो कर्मण काले यूपस्योत्पत्ति , किन्तु तत प्रागेव यूपोत्पत्तिकाल. । " दीक्षासु यूप छिनत्ति । क्रीते वा राजनि " ( द्र आपश्रौ १० ४ ४६-४७, हिश्रौ ७ ३ ) इति तत्कालविधानात् । अत आधानवत् सर्वार्थत्व संभवति । यथा स्वकाले संस्कृतमाधान तत्तद्वाक्यविशेषैस्तेषु तेषु कर्मसु संबध्यते तथा स्वकाले छेदनादिना निष्पन्नो
२५ यूप प्रत्यक्षचोदकाभ्या तत्र तत्र विनियुज्यते । तस्मात् तन्त्रेण यूप संपादनीय ॥

तत्रैव द्वितीयपादे चिन्तितम्—

" यूपैकादशिनी यूपाहुतेर्भेदोऽथ तन्त्रता ।
सामीप्यभेदादाद्योऽन्त्य सामीप्य दृष्टिग यत " ॥ ( जैन्या ११ २·९ ) इति ॥

यूपैकादशिन्या ये द्रव्यासा यूपाहुति प्रतियूप भिद्यते । कुत ? " यूपस्यान्तिकेऽग्नि मथित्वा
३० यूपाहुतिं जुहोति " ( द्र. मैसं ३ ९·२ ) इति तद्विधानात्, सामीप्यानां च भेदादिति प्राप्ते ब्रूम —

१६ क—न्दर्भत्वान् ।

न तावदत्यन्तसामीप्यं संभवति यूपदाहप्रसङ्गात् । अतो यावता व्यवधानेन यूपा दृष्टिगोचरा भवन्ति तावतो देशस्य समीपत्वमभ्युपेयम् । तथा सति दैवैक्यधर्मभवादाहुतेस्तन्त्रता ॥

पष्ठस्य तृतीयपादे चिन्तितम्—

" अमुख्ये संस्कृते मुख्यलाभे किं ग्राह्यमेतयोः ।
अमुख्यस्तक्षणाद्यूपः खादिरस्तक्षणान् पुनः " ॥ ( जैन्या ६·३·१८ ) इति ॥ ५

यदा यूपार्थं खदिरमलब्ध्वा कदरे तक्षणादिसंस्कृते सति पश्चात् मुख्यः खदिरो यदि पशुनियोजनात् प्रागेव लभ्यते तदा तक्षणादिसंस्कृतः प्रतिनिधिः कदर एव ग्राह्यः । असंस्कृतात् संस्कृतस्य प्रशस्तत्वात् इति चेत् । मैवम् । मुख्ये खदिरे लब्धे पुनस्तक्षणादिसंस्कारः कर्तव्यः । तथा सति संस्कृतस्य मुख्यस्य लाभात् प्रतिनिधिः संस्कृतोऽपि परित्याज्यः ॥

तत्रैवान्यचिन्तितम्— १०

" पशौ नियुक्ते खदिरलाभे कार्यं पुनर्न वा ।
साद्गुण्याय पुनः कार्यं मुख्यावृत्तिर्गुणाच्च हि " ॥ ( जैन्या ६·३·१९ ) इति ॥

यदा संस्कृते प्रतिनिधौ पशुर्नियुज्यते तत ऊर्ध्वं खदिरो यदि लभ्येत तदाऽपि पूर्वन्यायेन मुख्यलाभात् साद्गुण्याय मुख्ये यूपे पुनर्नियोजनं कार्यमिति चेत् । मैवम् । गुणभूतो यूपः, पशुनियोजनं प्रधानं, न हि गुणानुसारेण प्रधानस्याऽऽवृत्तिर्युक्ता । तस्मान्न नियोजनं पुनः कार्यम् ॥ १५

तत्रैवान्यचिन्तितम्—

" अमुख्यमुख्ये संस्कारयोग्यायोग्ये तदा तु किम् ।
आद्यो बहुगुणालोपान्न मुख्याद्यास्तु लोपमम् " ॥ ( जैन्या ६·३·२० ) इति ॥

[17]यदा अमुख्यः कदरः स्थूलत्वात् तक्षणादिसंस्कारयोग्यः, मुख्यस्तु खदिरः सूक्ष्मत्वादयोग्यस्तदा तक्षणादिबहुगुणलोपो मा भूदिति प्रतिनिधिरेवाऽऽदरणीय इति चेत् । मैवम् । मुख्यसिद्ध्ये गुणलोपस्य सोढुं शक्यत्वात् । तस्मात् कृशोऽपि मुख्य एवोपादेयः । २०

तत्रैवाऽन्यचिन्तितम्—

" नियोजनेऽप्ययोग्यश्चेत् खदिरः किं तदा भवेत् ।
मुख्यत्वेन स एव स्यात् तद्वैयर्थ्येन हीतरः " ॥ ( जैन्या ६·३·२१ ) इति ॥

यदा स्वत्यन्तकृशत्वात् तक्षणादिरहितोऽपि खदिरो नियोजनेऽप्ययोग्यस्तदाऽपि मुख्यत्वात् खदिर एवोपादेय इति चेत् । मैवम् । उपात्तस्य प्रयोजनाभावान्नियोजनयोग्यः प्रतिनिधिरेव ग्राह्यः ॥ २५

अत्र नास्ति छन्दः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

१७. इ.उ.तं.ना.पा.मा.म२-हा–' यदा ' नास्ति । ३०

पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे त्वा शुन्धतां लोकः पितृषदनो
यवोऽसि यवयास्मद्द्वेषो यवयारातीः पितृणाꣳ सदनमसि

पृथिव्यै । त्वा । अन्तरिक्षाय । त्वा । दिवे । त्वा । शुन्धताम् । लोकः । पितृषदन इति पितृ-सदन. । यवं । असि । यवय । अस्मत् । द्वेषः । यवय । अरातीः । पितृणाम् । सदनम् । असि ।

५ यूप पराञ्च प्रोक्षति—' पृथिव्यै त्वा ' इति ॥ व्याख्यातम ( तैस १·१·११ ) । प्रोक्षामीति शेष । पृथिव्यादीना स्थित्यर्थं त्वा प्रोक्षामीति ॥

अवटेऽपोऽवनयति—' शुन्धताम् ' इति ॥ व्याख्यातम् ( तैस १ ३ १ ) ॥

यवान् प्रस्कन्दयति—' यवोऽसि ' इति ॥ व्याख्यातमेव ( तैस १·३·१ ) । " ऊर्वं यवो यजमानेन यूप समित. " ( तैस ६ ३ ४ ) इत्यादि ब्राह्मणम् ॥

१० बर्हिर्हस्त व्यतिषज्यावस्तृणाति—' पितृणाम् ' इति ॥ व्याख्यातमेव ( तैस १ ३·१ ) । " यद्बर्हिरनवस्तीर्य मिनुयात् पितृदेवत्यो निखात स्यात् । [1]बर्हिरवस्तीर्य मिनोति[1] " ( तैस ६ ३ ४ ) इति ब्राह्मणम् ॥

पञ्चमेऽनुवाके यूपच्छेदो वर्णित । छिन्नस्य यूपस्य स्थापनं [1]षष्ठेऽनुवाके वर्ण्यते[1] ।

पृथिव्या इति ॥ कल्प.—" यूप एव प्रक्षालित प्रपन्नः सपन्नचषाल प्रागवटादुपहीते ।

१५ तमुत्तरेणाऽऽहवनीय तिष्ठन् पराञ्चं प्रोक्षति पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे त्वेति " ( बौश्रौ ४ ४ ) इति ॥ प्रोक्षामीति शेष । चषालो यूपाग्रे प्रतिमुच्यमान कटक. ॥ लोकत्रयाभिमानिदेवताप्रीत्यर्थं प्रोक्षणमित्याह—" पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे त्वेत्याहैभ्य एवैनं लोकेभ्य प्रोक्षति " ( तैस ६ ३·४ ) इति ॥ नात्रौदुम्बर्या इवाग्रमारभ्याधोमुख प्रोक्षणं किंतु मूलमारभ्योर्ध्वमुखमिति विधत्ते—" पराञ्च प्रोक्षति पराङिव हि सुवर्गो लोक " ( तैस ६·३·४ ) इति ॥

२० शुन्धतामिति ॥ कल्प —" अवटेऽपोऽवनयति शुन्धतां लोक पितृषदन इति । यवान् प्रस्कन्दयति यवोऽसि यवयास्मद्द्वेषो यवयारातीरिति । बर्हिर्हस्त व्यतिषज्यावस्तृणाति पितृणाꣳ सदनमसीति " ( बौश्रौ ४·४ ) इति ॥ यूपस्थापनार्थो योऽवटस्तस्मिन् प्रोक्षणशेष निनीय यवान् प्रक्षिप्य बर्हिर्मुष्टेरर्धं प्रागग्रमर्धमुदगग्रमित्येव व्यतिषज्य बर्हिरवस्तृणीयात् ॥ एतानर्थान् विधत्ते—" क्रूरमिव वा एतत् करोति यत् खनत्यपोऽव नयति शान्त्यै यवमतीरव नयत्यूर्ग्वै यवो यजमानेन यूप संमितो यावानेव

२५ यजमानस्तावतीमेवास्मिन्नूर्जं दधाति पितृणाꣳ सदनमसीति बर्हिरव स्तृणाति पितृदेवत्यꣳ ह्येतद्यन्निखातं यद्बर्हिरनवस्तीर्य मिनुयात् पितृदेवत्यो निखात. स्याद्बर्हिरवस्तीर्य मिनोत्यस्यामेवैनं मिनोति " ( तैस ६ ३·४ ) इति । यद्यप्यत्र यूपावटखनन नाऽऽम्नात तथाप्यौदुम्बर्याम् [2]आम्नातस्येहानुवृत्तिमभिप्रेत्य ' यत् खनति ' इत्यनूद्यते । तदनुवृत्तये समानविषयत्व प्रत्यभिज्ञापयितु तत्र विहितमप्यवनयनादिक पुनरत्र विधीयते ॥

३० १–१ मे–' बर्हिरवस्तीर्य मिनोति ' नास्ति ।

१–१. मर–षष्ठेऽभिधीयते । २ आ ना हा–'मुख्यप्रोक्षणम्' । ३ आ मा.हा–आम्नात तस्येहानु' ।–
प–आम्नातं तस्यैवानु' ।

स्वावेशोऽस्यग्रेगा नेतृणां वनस्पतिरधि त्वा स्थास्यति तस्य वित्ताद्-

स्वावेश इति सु-आवेशः। असि। अग्रेगा इत्यग्रे-गाः। नेतृणाम्। वनस्पतिः। अधीति। त्वा। स्थास्यति। तस्य। वित्तात्।

यूपशकलमवास्यति—'स्वावेशः' इति॥ सुष्ठु आविश्यते स्थीयतेऽस्मिन्निति [v]स्वावेशः। अधिकरणे घञ् (पा ३·३·१२१)। थायादिसूत्रेणोत्तरपदान्तोदात्तत्वम् (पा ६·२·१४४)। यूपस्य सुखासनम् [v]असि इत्यर्थः। नेतारो यागस्य निर्वोढारः यूपशकलाः। "छन्दस्युभयथा" (पा ६·४·५) इति, "नामि" (पा ६·४·३) इति दीर्घाभावः। "नामन्यतरस्याम्" (पा ६·१·१७७) इति नाम उदात्तत्वम्। तेषां मध्ये [v]अग्रेगाः त्वमसि। अग्रे प्रथमं यूपात् गच्छति परापततीत्यग्रेगाः। "यः प्रथमः शकलः परापतेत् तमप्या हरेत्" (तैसं ६·३·३) इति गृहीतत्वात्। यद्वा—नेतृणामग्रे गच्छतीत्यग्रेगाः, मुख्य इत्यर्थः। प्रथमपतितत्वादेव। यद्वा—नेतृणां मध्ये अग्रे गच्छति यागसाधनत्वं, यूपादपि पूर्वमुपयुज्यमानत्वादवटप्रवेशेन। "जनसनखनक्रमगमो विट्" (पा ३·२·६७) इति विट्प्रत्ययः। "विड्वनोरनुनासिकस्यात्" (पा ६·४·४१) इत्यात्वम्। "तत्पुरुषे कृति बहुलम्" (पा ६·३·१४) इत्यलुक्। कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६·२·१३९)। यद्वा—यूपस्य ये नेतारः परिष्कर्तारः [2]प्रथमशकलः, स्वरुः, चषालम् इति, तेषां मध्ये अग्रे प्रथमं यूपं गच्छतीति। किंच—वनस्पतिविकारो यूपः। विकृतौ प्रकृतिशब्दः। पारस्करप्रभृतित्वात् सुट् (पा ६·१·१५७)। "उभे वनस्पत्यादिषु युगपत्" (पा ६·२·१४०) इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम्। [3]स त्वाम् [v]अधि [v]स्थास्यति, त्वयि स्थास्यति, यूपस्यापि धारकोऽसीत्यर्थः[3]। "अधिशीङ्स्थासां कर्म" (पा १·४·४६) इत्याधारस्य कर्मसंज्ञा। [v]तस्य [v]वित्ताद् तद्विजानीहि तं ते महिमानमवगन्तुमर्हसीति। "क्रियाग्रहणं कर्तव्यम्" (द्र. पाभा. १·४·३२) इति संप्रदानत्वात् "चतुर्थ्यर्थे बहुलं छन्दसि" (पा २·३·६२) इति चतुर्थ्यर्थे षष्ठी। "यूपशकलमवा-

स्वावेश इति॥ कल्पः—"यूपशकलमवास्यति, स्वावेशोऽस्यग्रेगा नेतृणां वनस्पतिरधि त्वा स्थास्यति तस्य वित्तादिति" (बौश्रौ ४·४) इति॥ शोभन आवेशो यूपावस्थितिलक्षणो यस्मिन् प्रथमशकले स स्वावेशः। हे शकल, त्वं [v]स्वावेशः [v]असि। यूपस्य त्रयो नेतारः प्रथमशकलः स्वरुश्चषालश्चेति। तेषां [v]नेतृणां मध्ये त्वम् [v]अग्रेगाः प्रथमभावी। वनस्पतिरूपो यूपस्त्वामधिष्ठास्यति। [v]तस्य [v]वित्तात् तं यूपमनुजानीहि॥ विधत्ते—"यूपशकलमवास्यति सतेजसमेवैनं मिनोति" (तैसं ६·३·४) इति। यत् [4]पूर्वोक्तम्—"स्वधितेर्वृक्षस्य बिभ्यतः प्रथमेन शकलेन सह तेजः परा पतति" इति शकले प्रक्षिप्ते सति तेन तेजसा सहितमेवैनं यूपं स्थापितवान् भवति॥

२. तं.ति.पं१—प्रथमजशकलः। ३-३. तं.ति.पं१—यूपस्य वा विकारोऽसीत्यर्थः।

४. क.तं.मर—पूर्वश्रोक्तम्।

देवस्त्वा सविता मध्वाऽनक्तु सुपिप्पलाभ्यस्त्वौषधीभ्य
उद्दिवꣳ स्तभानान्तरिक्षं पृण पृथिवीमुपरेण दृꣳह

देव । त्वा । सविता । मध्वा । अनक्तु । सुपिप्पलाभ्य इति सु-पिप्पलाभ्यः । त्वा । ओषधीभ्य इत्योषधि-भ्यः । उदिति । दिवम् । स्तभान । एति । अन्तरिक्षम् । पृण । पृथिवीम् । उपरेण । दृꣳह ।

५ स्यति सतेजसमेवैनं मिनोति " ( तैस ६ ३.४ ) इति ब्राह्मणम् ॥ " स्वधितेर्वृक्षस्य बिभ्यतः प्रथमेन शकलेन सह तेजः परा पतति " ( तैस ६.३.३ ) इत्यादिब्राह्मणेन तस्य तेजस्त्वमवगन्तव्यम् ॥

यूपस्याग्रमनक्ति—' देवस्त्वा ' इति ॥ व्याख्यातम् ( तैस १.३.५ ) ॥

चषालं प्रतिमुञ्चति—" सुपिप्पलाभ्य " इति ॥ व्याख्यातमेव ( तैस १ २ २ ) ।

१० शोभनफलानामोषधीनामर्थाय त्वा चषालं यूपस्याग्रे प्रतिमुञ्चामीति शेषः । " तस्माच्छीर्षत ओषधयः फलं गृह्णन्ति " ( तैस ६ ३ ४ ) इति ब्राह्मणम् ॥

यूपमुच्छ्रयति—' उद्दिवम् ' इति ॥ व्याख्यातम् ( तैस १.३.१ ) । अवष्ट-प्रदेश उपरः । "मूलतोऽवष्टमुपरम् " ( आपश्रौ ७ ३ १ ) इति । उपरमते तस्मिन्निति, " उपसर्गे च संज्ञायाम् " ( पा ३.२ ९९ ) इति जनेर्विधीयमानो डप्रत्ययः बहुलवचनात्

१५ ( पा ३.१ ८५ ) रमेरपि भवति । कृदुत्तरपदप्रकृतिस्वरत्वं बाधित्वा ( पा ६ २.१३९ ) अव्ययपूर्वपदप्रकृतिस्वरत्वम् ( पा ६ २ २ ) । व्युत्पत्त्यनवधारणाच्च नावगृह्यते । तेन पृथिवीं दृढां कुरु ॥

- देवस्त्वेति ॥ कल्पः—" अथ अग्रं चषालं यूपस्याग्रमनक्ति देवस्त्वा सविता मध्वाऽनक्त्विति " ( बौश्रौ ४.४ ) इति ॥ मध्वा मधुरेण तेजोरूपेणाऽऽज्येन ॥ तदिदं दर्शयति—" देवस्त्वा

२० सविता मध्वाऽनक्त्वित्याह तेजसैवैनमनक्ति " ( तैस ६.३.४ ) इति ॥

सुपिप्पलाभ्य इति ॥ कल्पः—" अन्तरतश्च बाह्यतश्च रशनावत् कृत्वा चषालं प्रतिमुञ्चति सुपिप्पलाभ्यस्त्वौषधीभ्य इति " ( बौश्रौ ४.५ ) इति ॥ यूपस्याग्रमागं पूर्वम् " अच्छिद्रो राय सुवीर " ( तैस १.३.५ ) इति मन्त्रेण छिन्नं । तेन निरुपादितश्चतुरङ्गुलोऽस्ति । स छिद्रश्चषालः । हे चषाल, त्वा यूपाग्रे प्रतिमुञ्चामि । किमर्थम् ? शोभनफलयुक्तौषध्यर्थम् ॥ विधत्ते—" सुपिप्पलाभ्यस्त्वौषधीभ्य इति

२५ चषालं प्रति मुञ्चति तस्माच्छीर्षत ओषधयः फलं गृह्णन्ति " ( तैस ६.३.४ ) इति । यस्मात् फलार्थमनेन चषालं प्रतिमुक्तं तस्माच्छिरस्यग्रे फलग्रहणम् ॥ विधत्ते—" अनक्ति तेजो वा आज्यं यजमानेनाग्निष्ठाऽश्रिः समिता यदग्निष्ठामश्रिमनक्ति यजमानमेव तेजसाऽनक्त्यान्तमनक्त्यान्तमेव यजमानं तेजसाऽनक्ति " ( तैस ६.३.४ ) इति । तक्षणेन निष्पादितास्वष्टासु यूपाश्रिषु मध्ये येयमाहवनीयाभिसमीपे स्थिता साऽग्निष्ठा, तामाज्येनानक्ति । तदिदमञ्जनमन्त्रकमिति बौधायनस्य मतम् । " अथ स्रुवेणाऽग्निष्ठामश्रिमभि धारयत्याऽ

३० यूपादज्यमानायानुब्रूहीति " ( बौश्रौ ४.४ ) एतावता एवाभिधानात् । आपस्तम्बस्तु समन्त्रकतामाह—" देवस्त्वा सविता मध्वाऽनक्त्विति स्रुवेण सततमविच्छिन्नमग्निष्ठामश्रिमनक्त्योपरात्" (आपश्रौ ७.१०.३ )

५ त मर-प्रत्य ।

-यूपस्थापनम् ]

ते ते धामान्युश्मसी (१) गमध्ये गावो यत्र भूरिंशृङ्गा अयासः ।
अत्राह तदुरुगायस्य विष्णोः परमं पदमवं भाति भूरेः ॥

ते । ते । धामानि । उश्मसि (१) । गमध्यै ।
गावः । यत्र । भूरिशृङ्गा इति भूरि-शृङ्गाः । अयासः ॥
अत्र । अह । तत् । उरुगायस्येत्युरु-गायस्य । विष्णोः ।
परमम् । पदम् । अवेति । भाति । भूरेः ॥

यूपं वैष्णवीभ्यामृग्भ्यां कल्पयति स्थापयति—'ते ते धामानि', 'विष्णोः कर्माणि पश्यत' इति ॥ तत्र प्रथमा चतुष्पदा त्रिष्टुप् । द्वितीया त्रिपदा गायत्री । "वैष्णव्यर्चा कल्पयति वैष्णवो वै देवतया" (तैसं ६-३-४) इत्यादि ब्राह्मणम्, "द्वाभ्यां कल्पयति" (तैसं ६.३.४) इत्यादि च । वैष्णवत्वाद्यूपो विष्णुरूपेण स्तूयते । 'ते' इति द्वितीयाबहुवचनस्य "सुपां सुलुक्" (पा ७.१.३९) इति शेआदेशः । प्रगृह्यत्वाभावो व्यत्ययेन, लिङ्गविभक्तिव्यत्ययेन वा । हे विष्णो, तत्र तानि [v]धामानि स्थानानि [v]गमध्यै गन्तुं यजमानो गच्छेदिति यावत् । तुमर्थे अध्येन्प्रत्ययः (पा ३.४.९) । अध्यैप्रत्ययस्य वा वर्णव्यत्ययेन एकारः । तत्र तानि धामानि गन्तुम् [v]उश्मसि उश्मः कामयामहे । वशेर्ग्रहिज्यादिना (पा ६.१.१६) संप्रसारणम् । "इदन्तो मसि" (पा ७.१.४६), "अन्येषामपि दृश्यते" (पा ६.३.१३७) इति तस्य संहितायां दीर्घः । कानीत्याह—[v]यत्र येषु धामसु [v]गावः रश्मयः [v]भूरिशृङ्गाः बह्वग्राः [v]अयासः गमनशीलाः । एतेः पचाद्यच् (पा ३.१.१३४) । "आज्जसेरसुक्" (पा ७.१.५०) । यत्र बहुमुखा रश्मयो विसर्पन्तीति । यद्वा—यत्र गावो गन्तारो जनाः । "गमेर्डोः" (उ २३५) इति डोप्रत्ययः । भूरिशृङ्गाः महादीप्तयो भवन्तीति । दीप्ति-

इति । अवटे क्षिप्यमाणो मूलभाग उपरम् । मूलतोऽवटमुपरमिति ॥ विधत्ते—"सर्वतः परि मृशत्यपरिवर्गमेवास्मिन् तेजो दधाति" (तैसं ६.३.४) इति । यजमाने कर्मण्यवयवमवर्जयित्वा तेजो दधाति ॥

उद्दिवमिति ॥ कल्पः—"उच्छ्रयस्युद्दिवꣳ स्तभानान्तरिक्षं पृण पृथिवीमुपरेण दृꣳहेति" (बौश्रौ ४.४) इति ॥ मन्त्रप्रयोजनमाह—"उद्दिवꣳ स्तभानाऽन्तरिक्षं पृणेत्याहैषां लोकानां विधृत्यै" (तैसं ६.३.४) इति ॥

त इति ॥ बौधायनः—"अथैनं वैष्णवीभ्यामृग्भ्यां कल्पयति ते ते धामानि, विष्णोः कर्माणि पश्यतेति द्वाभ्याम् । स यत्राग्निष्ठामश्रिमाहवनीये* संपादयति *तद्यूपस्य चषालं परेक्षयति तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततमिति" (बौश्रौ ४.४) इति । आपस्तम्बः—"ते ते धामानि इत्यवटेऽवदधाति । विष्णोः कर्माणि पश्यतेति द्वाभ्यामाहवनीयेनाग्निष्ठाꣳ संमिनोति" (आपश्रौ ७.१०.८-९) इति ॥ आद्यो मन्त्र एवमाम्नातः—"ते ते धामान्युश्मसी गमध्ये गावो यत्र भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य विष्णोः परमं पदमव भाति भूरेः" इति ॥ [v]ते तानि [v]ते तव [v]धामानि स्थानानि [v]उश्मसि कामयामहे [v]गमध्यै गन्तुं, [v]गावः गन्तारः [v]भूरिशृङ्गाः बहुदीप्तयः

*[ बौश्रौसूत्रे 'आहवनीयेन' । ] । *[ बौश्रौसूत्रे 'तद्युपस्य' । ]

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पृशे । इन्द्रस्य युज्यः सखा ॥
विष्णोः । कर्माणि । पश्यत । यतः । व्रतानि । पस्पृशे ॥ इन्द्रस्य । युज्यः । सखा ॥

नामसु हि 'शृङ्गाणि' इत्यव्यायान्ते ( निघण्टु १.१७ ११ ) पठ्यते । पुनश्च विशेष्यन्ते— अयासः अनपाया' अप्रच्युताः । यातेरसुनि ( उ ६३८ ) याः, नञ्बहुव्रीहौ " नञ्सुभ्याम् " ५ ( पा ६ २·१७२ ) इत्युत्तरपदान्तोदात्तत्वम् । धामानि पुनर्विशेष्यन्ते—ᵛअत्र ᵛअह अत्रैव । अहेत्यवधारणे । येष्वेव धामसु ᵛउरुगायस्य, उरुभिर्महात्मभिर्गीयत इत्युरुगाय. । गायते कर्मणि घञ् । थाथादिस्वरेणोत्तरपदान्तोदात्तत्वम् ( पा ६·२·१४४ ) । ᵛभूरेः महतो महाबलस्य ᵛविष्णो. विश्व व्याप्नुवत. । " विषे किच्च " ( उ ३२६ ) इति नुप्रत्यय:, तत्र हि निदिति वर्तते । यस्य महाबलो महात्मभि स्तूयमानो विश्व व्याप्नुवतभू , " विचक्र- १० माणस्त्रेधोरुगाय " ( तैस १ २·१३ ) इति मन्त्रप्रसिद्ध. । तस्य तत्र ᵛतत्तादृशविक्रमकृत् ᵛपरमम् उत्तम ᵛपद स्वरूप ᵛतदप्येष्वेव धामसु ᵛअत्र ᵛभाति दीप्यते । तस्मात्तानि धामानि गन्तुमुश्म इति । एष प्रत्यक्षकृतोऽय मन्त्रः । द्वितीय तेशब्दोऽस्मिन् पक्षे युष्मदादेशः ( पा ८ १·२२ ) । यद्वा—परोक्षकृत एवायम् । ते ते इति वीप्सा । तानि तानि धामानि गन्तुमुश्म. । " नित्यवीप्सयो " ( पा ८ १ ४ ) इति शेप्रत्ययान्तस्य द्विर्वचनम् । " अनुदात्त १५ च " ( पा ८ १ ३ ) इति द्वितीयस्यानुदात्तत्वम् । स्पष्टमन्यत् ॥

अथ द्वितीया ॥ ᵛविष्णो. ᵛकर्माणि चरितानि ᵛपश्यत हे जना । कीदृशानीत्याह— ᵛयत यै । " इतराभ्योऽपि दृश्यन्ते " ( पा ५·३ १४ ) इति तृतीयान्तात् तसि. । ᵛव्रतानि युष्मदीयानि कर्माणि यै' कर्मभि 'पस्पशे स्पृशति बध्नातीति वा युष्मासु ।' स्पश बाधनादौ स्वरितेत् । " छन्दसि लुङ्लङ्लिट " ( पा ३ ४ ६ ) इति लिट् । " शर्पूर्वाः खयः शिष्यन्ते " २० ( द्र पा ७·४ ६१ ) इति पकारलोपः । पुनश्च विशेष्यते—ᵛइन्द्रस्य ᵛयुज्य. योग्य. ᵛसखा । योगो युक् । सपदादित्वात् युजे क्विप् ( पा ३·३·१०८ वा ९ ) । युजि साधुर्युज्य । " तत्र

ᵛअयास. अनपाया ᵛअह एव ᵛउरगायस्य महात्मभिर्गीयमानस्य ᵛभूरे. महत । हे यूपाभिमानिन् विष्णो, तव तानि स्थानानि गन्तु कामयामहे । येषु गन्तारो बहुदीप्तयो वर्तन्ते '"न कदाचिदपयन्ति"', एष्वेव स्थानेषु महात्मभिर्गीयमानस्य महत ᵛविष्णो तत् ᵛपरम ᵛपदम् ᵛअव ᵛभाति । तादृशस्थान- २५ प्राप्तिहेतवे कर्मणे यूपोऽस्मिन्नवटे तिष्ठतु ॥ विधत्ते—" वैष्णव्यर्चा कल्पयति वैष्णवो वै देवतया यूप स्वयैवैन देवतया कल्पयति " ( तैस ६ ३ ४ ) इति ॥ 'ते ते धामानि' इत्यसौ वैष्णवी । कल्पयति उच्छ्रयेत् ॥

विष्णोरिति ॥ मन्त्रान्तर स्वेवमाम्नातम्—" विष्णो· कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्य सखा " इति । हे जना , ᵛविष्णो ᵛकर्माणि सृष्टिस्थितिसहारचरितानि ᵛपश्यत, ᵛयतः यै कर्मभि. ᵛव्रतानि भवदीयलौकिकवैदिककर्माणि ᵛपस्पशे स्पृष्टवान्निर्मितवान् स विष्णु ᵛइन्द्रस्य· ३० ᵛयुज्य योग्य. ᵛसखा ॥

४ ति–तत्तादृशक्रम' । ५ मै–'स्वरूपम्' नास्ति ।

६–६.ना दा–तेषु किंचिदर्शयति ।

तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥
ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामि
ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं (२) दृꣳह

तत् । विष्णोः । परमम् । पदम् । सदा । पश्यन्ति । सूरयः ॥
दिवि । इव । चक्षुः । आततमित्या–ततम् ॥
ब्रह्मवनिमिति ब्रह्म–वनिम् । त्वा । क्षत्रवनिमिति क्षत्र–वनिम् । सुप्रजावनिमिति सुप्रजा–वनिम् । रायस्पोषवनिमिति रायस्पोष–वनिम् । परीति । ऊहामि । ब्रह्म । दृꣳह । क्षत्रम् । दृꣳह । प्रजामिति प्र–जाम् । दृꣳह । रायः । पोषम् ( २ ) । दृꣳह ।

साधुः " ( पा ४·४·९८ ) इति यत् । " यतोऽनावः " ( पा ६·१·२१३ ) इत्याद्युदात्तत्वम् । यद्वा—युञ्जाना युजः योगिनः । " सत्सूद्विष° " ( पा ३·२·६१ ) इत्यादिना क्विप् । तत्र भवः । दिगादिभ्यो यत् ( पा ४·३·५४ ) । तादृशस्यास्य तादृशानि कर्माणि पश्यतेति ॥

चषालमीक्षते—' तद्विष्णोः ' इति त्रिपदया गायत्र्या ॥ ' विष्णोः परमं पदमवभाति भूरेः ' इति यत् पूर्वोक्तं तत् एव हि विष्णोः परमं पदं सदा सर्वदा सूरयः मेधाविनः पश्यन्ति इति । कीदृशम् ? दिवि चक्षुः इव आततम् । सर्वेषां चक्षुःस्थानीयं सूर्यमण्डलमिह चक्षुरुच्यते । आततं समन्ताद्विस्तारितप्रकाशं सर्वत्र प्रकाशकत्वात् । " गतिरनन्तरः " ( पा ६·२·४९ ) इति पूर्वपदप्रकृतिस्वरत्वम् । सूर्यमण्डलमिव यदात्मप्रकाशस्वरूपं तत्सूरयः सदा हृदि पश्यन्ति । तस्मात् त्वमपि विष्णोः परमपदस्थानीयं चषालं पश्येति ॥

तद्विष्णोरिति ॥ ' तद्विष्णोः ' इति मन्त्रस्यायमर्थः—सूरयः विद्वांसो वेदान्तपारंगताः विष्णोः तत् परमं पदं स्वरूपं सदा पश्यन्ति । कीदृशम् ? दिव्याकाशे निरावरणे प्रसृतं चक्षुरिव आततं व्याप्तम् । तादृशस्य विष्णोरनुग्रहाद्वैष्णवस्य यूपस्याग्निष्ठामश्रिमाहवनीयेन संमितां स्थापयामीत्यर्थः ॥ अस्मिन् स्थापने ' विष्णोः कर्माणि ', ' तद्विष्णोः ' इति मन्त्रद्वयं विनियुङ्क्ते—" द्वाभ्यां कल्पयति द्विपाद्यजमानः प्रतिष्ठित्यै " ( तैसं ६·३·४ ) इति ॥ ' ते ते धामानि ' इत्यादीनां त्रयाणां मन्त्राणां पदार्थाः उपेक्षिताः ॥ अग्निष्ठाश्रिस्थापने पूर्वपक्षं दर्शयति—" यं कामयेत तेजसैनं देवताभिरिन्द्रियेण व्यर्धयेयमित्यग्निष्ठां तस्याश्रिमाहवनीयाद्धित्थं वेत्थं वाऽति नाययेत् तेजसैवैनं देवताभिरिन्द्रियेण व्यर्धयति " ( तैसं ६·३·४ ) इति । तक्षणवेलायामष्टास्वश्रिषु कांचिदश्रिमियमग्निष्ठेति प्रशस्तां कुर्यात् । तामश्रिं यूपस्य पश्चिमभागे स्थितमाहवनीयमतिलङ्घ्य दक्षिणत उत्तरतो वा नाययेत् प्रापयेत् । तथा सति तेजआदिभिर्व्यर्धयति वियोजयति ॥ सिद्धान्तं दर्शयति—" यं कामयेत तेजसैनं देवताभिरिन्द्रियेण समर्धयेयमित्यग्निष्ठां तस्याश्रिमाहवनीयेन सं मिनुयात् तेजसैवैनं देवताभिरिन्द्रियेण समर्धयति " ( तैसं ६·३·४ ) इति । सं मिनुयात् संमुखां स्थापयेत् ॥

ब्रह्मवनिमिति ॥ कल्पः—" अथैनं प्रदक्षिणं [8]पुरीषेण पर्यूहति ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामीति । मैत्रावरुणदण्डेन सꣳहन्ति ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह

७. तं–पक्षम् । ८. आ.ड.क.पां–' पुरीषेण ' नास्ति ।

परि॒वीर॑सि॒ परि॑ त्वा॒ दैवी॒र्विशो॑ व्ययन्तां॒ परी॒मꣳ रा॒यस्पोषो॒ यज॑मानं मनु॒ष्या॑

परि॒वीरिति॑ परि-वी. । अ॒सि॒ । परीति॑ । त्वा॒ । दैवीः॑ । विशः॑ । व्य॒य॒न्ता॒म् । परीति॑ । इ॒मम् । रा॒यः । पोषः॑ । यज॑मानम् । म॒नु॒ष्याः॑. ।

प्रदक्षिणं पुरीषेण पर्यूहति—' ब्रह्मवनिम् ' इति ॥ व्याख्यातम् ( तैस १·३ १ )॥

५ मैत्रावरुणदण्डेन संहन्ति—' ब्रह्म दृꣳह ' इति ॥ व्याख्यातमेव ( तैस १·३ १ ) ॥

रशनया त्रि. प्रदक्षिणं परिव्ययति—' परिवीरसि ' इति ॥ ' परिवीयत इति [१]परिवी' । " अन्येभ्योऽपि दृश्यते " ( पा ३ २ १७८ ) इति कर्मणि क्विप् । यजादित्वात् सम्प्रसारणम् ( पा ६ १ १५ ) । " हल " ( पा ६ ४ २ ) इति दीर्घ । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६·२·१३९ ) । परितो रशनया वेष्टनीयोऽसि । हे यूप, अतस्त्वा [२]दैवी दैव्य· [३]विश देवाना

१० स्वभूता प्रजा मरुदादय , " मरुतो वै देवानां विशः" ( तैस २·२·५ ) इति । " देवाद्यञञौ " ( पा ४ १ ८५वा ३ ) इति देवशब्दादञ् । " वा छन्दसि " ( पा ६·१ १०६ ) इति पूर्वसवर्णदीर्घत्वम् । [४]परि [५]व्ययन्ता सर्वतोऽन्यया वेष्टयन्तु ॥ [६]इम च [७]यजमान [८]रायो धनस्य [९]पोष. [१०]मनुष्या च [११]परि वेष्टयन्तु । आत्व [१२]प्रजानामुपजीव्यश्च भवन्विति [१३] । " ऊडिदम् " ( पा ६ १ १७१ ) इत्यादिना रैशब्दात षष्ठ्या उदात्तत्वम् । " षष्ठ्या पतिपुत्र " ( पा

१५ ८·३ ५३ ) इति विसर्जनीयस्य सत्वम् । " 'अदुपदेशात् " ( पा ६ १ १८६ ) इति लसार्वधातुकानुदात्तत्वे धातुस्वरेण यजमानशब्द आद्युदात्त । " ऊर्ज्जै रशना " ( तैस ६ ३ ४ ) इत्यादि ब्राह्मणम् ॥

रायस्पोषं इत्येति " ( बौश्रौ ४·४ ) इति ॥ मन्त्रयो स्पष्टार्थतां दर्शयति—" ब्रह्मवनिं त्वा क्षत्रवनि मित्याह यथायजुरेवैतत् " ( तैसं ६ ३·४ ) इति ॥

२० परिवीरिति ॥ कल्प —" त्रि [१] प्रदक्षिणं परिव्ययति परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमꣳ रायस्पोषो यजमानं मनुष्या इति " ( बौश्रौ ४ ४ ) इति ॥ यूप, त्वं [२]परिवी· [३]असि । परितो रशनया वीतो वेष्टितोऽसि । दैवी [४]विश. देवसंबन्धिन्य प्रजा मरुद्गणादयस्त्वा परित [५]व्ययन्तां वेष्टयन्तु [१०] । तद्वदिमं [६]यजमानं [११]धनपुत्रपुत्र्यादिमनुष्याश्च परिष्वयन्तु ॥

अन्तरिक्षस्येति ॥ कल्प —" तस्मादायान्तरिक्षस्य त्वा सानावगूहामीत्युत्तरेणाग्निष्ठां

२५ मध्यमे रशनागुणेऽवगूहति " ( आपश्रौ ७ ११·९ ) इति ॥ हे स्वरो, त्वामन्तरिक्षलोकमध्यवर्तिनो रशनागुणस्य [६]सानौ पार्श्वेऽवगूढं करोमि । मन्त्रयोरर्थं उपेक्षित ॥ विधत्ते—" परि व्ययत्यूर्ग्वै रशना यजमानेन यूप संमितो यजमानमेवोर्जा समर्धयति " ( तैस ६ ३ ४ ) इति ॥ ओषधिविदारिर्देवैस्त्वष्ट्रात् रशनाया ऊर्ध्वपरडम् । तथा यूपस्य सबन्धे सति यूपप्रमाणहेतुर्यजमान एवाग्नेन समृद्धो भवति ।

६–६ त ति प–प्रजानामुपास्य इत्यर्थ ।

३० ९. आ इ पा द्रा–' त्रि.' नास्ति । १०. इ ड ना पा.भां द्रा–व्ययन्तु । ११ ना.द्रा–' वेष्टयन्तु ' नास्ति । १२ मर–धनपुष्टिपुत्र ।

अन्तरिक्षस्य त्वा सानाववं गूहामि ॥ ६ ॥

[ उरुमसी पोपमेकान्नविंशतिश्च ]

अन्तरिक्षस्य । त्वा । सानौ । अवेति । गूहामि ॥ ६ ॥

[ मैसं १·२·१४; कासं ३·३; कपिसं २·१०; वासं ६·१–६ ]

---

मध्यमे रशनागुणे स्वरुमवगूहति— 'अन्तरिक्षस्य त्वा' इति ॥ मध्यमत्वसाधर्म्यात् अन्तरिक्षस्थानीयस्य मध्यमस्य रशनागुणस्य स्थाने त्वाम् अव गूहामि सुगुप्तं स्थापयामि । हे स्वरो । कीदृशे स्थाने ? सानौ समुन्नते [7]स्वस्थानत्वादेव समुच्छ्रिते । यद्वा—सननीयः सानुः मध्यमेन गुणेन संभक्ते प्रदेशे । "दृसनिजनि" (उ ३) इत्यादिना सनो ञुण्प्रत्ययः । "ऊदुपधाया गोहः" (पा ६·४·८९) इत्यूकारः ॥

॥ इति तृतीये षष्ठोऽनुवाकः ॥ ६ ॥

---

रशनाया मध्यमगुणस्य देशं विधत्ते—"नाभिदघ्ने परि व्ययति नाभिदघ्न एवास्मा ऊर्जं दधाति तस्मान्नाभिदघ्न ऊर्जा भुञ्जते" (तैसं ६·३·४) इति । अस्मा अस्य यजमानस्य नाभिदघ्न उदर ऊर्जं स्थापयति । ततः सर्वे तत्रोर्जा भुञ्जते, भुक्तामूर्जं धारयन्ति ॥ नाभिदघ्नप्रशंसार्थं निन्द्यं पक्षमुपन्यस्यति— "यं कामयेतोर्जैनं व्यर्धयेयमित्यूर्ध्वां वा तस्यावाचीं वाऽवोहेदूर्जैवैनं व्यर्धयति" (तैसं ६·३·४) इति ॥ उदरसदृशान्नाभिदघ्नादूर्ध्वमधो वा रशनावेष्टने यजमानमन्नेन व्यर्धयति[13] वियोजयति ॥ कामनाभेदेन देशविशेषं विधत्ते—"यदि कामयेत वर्षुकः पर्जन्यः स्यादित्यवाचीमवोहेद्वृष्टिमेव नियच्छति यदि कामयेता-वर्षुकः स्यादित्यूर्ध्वामुदूहेद्वृष्टिमेवोद्यच्छति" (तैसं ६·३·४) इति । नाभिदघ्नदेशादवाचीनमधोदेशे मध्यं पुनरप्यवोहेदपकर्षेत् तेन वृष्टिं नियच्छति न्यग्भावेन प्रवर्तयति । ऊर्ध्वप्रदेशे मध्यं पुनरप्युदूहेदुत्कर्षेत् तेन वृष्टिमुद्यच्छति ऊर्ध्वं प्रवर्तयति निवारयतीत्यर्थः ॥ यूपं सर्वदेवताप्रीतिहेतुतया स्तौति—"पितृणाꣳ निखातं मनुष्याणामूर्ध्वं निखातादा रशनाया ओषधीनाꣳ रशना विश्वेषां देवानामूर्ध्वꣳ रशनाया आ चषालादिन्द्रस्य चषालꣳ साध्यानामतिरिक्तꣳ स वा एष सर्वदेवत्यो यद्यूपो यद्यूपं मिनोति सर्वा एव देवताः प्रीणाति" (तैसं ६·३·४) इति । निखातमुपरं पितृणां प्रियं, निखातरशनादेशयोर्मध्यं मनुष्याणां, रशनादेश ओषधीनां, तद्देशचषालयोर्मध्यं विश्वेषां देवानां, चषालदेश इन्द्रस्य, अतिरिक्तं तु साध्यानाम् । तच्च सूत्रे दर्शितम्—"यावदुत्तममङ्गुलिकाण्डं तावदूर्ध्वं चषालाद्यूपस्यातिरिक्तं त्र्यङ्गुलं व्यङ्गुलं वा" (आपश्रौ ७·३·६ द्र.भाश्रौ ७·२·११) इति ॥ पुनरपि स्वर्गलोकावगतिहेतुतया यूपं स्तौति । "यज्ञेन वै देवाः सुवर्गं लोकमायन् तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति ते यूपेन योपयित्वा सुवर्गं लोकमायन्

---

७. तं.ति–तस्य स्थानत्वाद' ।

---

१३. आ.क.ना.हा–' व्यर्धयति' नास्ति ।

तमृषयो यूपेनैवानु प्राजानन् तद्यूपस्य यूपत्वं यद्यूपं मिनोति सुवर्गस्य लोकस्य प्रज्ञात्यै" (तैस ६ ३ ४ ) इति। देवा पुरा कदाचिद्यज्ञं कृत्वा तेन यज्ञेन स्वर्गं गच्छन्तो मनुष्या अस्मत्समानाभ्यासेन स्वर्गं गमिष्यन्तीति मत्वा यूपेन मनुष्यान् योपयित्वा स्वयमेव स्वर्गं गता । यूप सर्वैर्देवत्य इत्यज्ञात्वा काष्ठमात्ररूप इति बुद्धिर्मोहः । ऋषयस्तु यूपमाहात्म्यस्यातीन्द्रियस्यापि द्रष्टारस्तेनैव विदित-

५ तत्त्वेन यूपेन देवानु त स्वर्गं प्रज्ञातवन्त । तत्तस्मान्मनुष्यमोहनहेतुत्वाद्यूपस्य "यूपनाम संपन्नम्। " युप विमोहने " इत्यस्माद्धातोर्यूपशब्दो निष्पन्न । एवं च सति विदितमाहात्म्यस्य "यूपस्य स्थापनेन स्वर्गं प्रज्ञायते ॥ आहवनीयात् "पूर्वदेशे यूपस्थापनाय विधत्ते—" पुरस्तात् मिनोति पुरस्ताद्धि यज्ञस्य प्रज्ञायते प्रज्ञातः हि तद्यदतिपन्न आहुरिदं कार्यमासीदिति " (तैस ६.३.४) इति । अत्र सूत्रम्—" अग्रेणाऽऽहवनीयं यूपावट "परिलिखत्यर्धमन्तर्वेद्यर्धं बहिर्वेदि " (आपश्रौ ७ ९ ६ ) इति ।

१० विधिवाक्ये पुरस्ताच्छब्द पूर्वदेशवाची, अर्थवादे तु पूर्वकालवाची । यज्ञस्य संबन्धि यत्कर्तव्यमङ्गजातं तत्सर्वमनुष्ठानात् पूर्वमेव प्रज्ञायते । तथाच "ब्राह्मणान्तरम्—" आ चतुर्थात् कर्मणोऽभिसमीक्षेतेदं करिष्यामीदं करिष्यामि " ( द्र आपश्रौ १.२ ११ मार्श्रौसू १.१.४ ) इति । यत्तु पूर्वं न ज्ञातं तत् पश्चाद्बुद्धमपि तदज्ञातमेव यस्माल्लोके विस्मरणेनान्यथाकरणेन वा कस्मिंश्चिदनुष्ठेयेऽतिपन्ने विनष्टे वा सति पश्चात्क्लिश्यन्त आहुरिदं गमनादिकमध्ययनादिकं तस्मिन्नेव दिने कार्यमासीत्, "न च अस्माभिस्तदानीं

१५ प्रज्ञातमिति । तस्मात् पूर्वकालस्य प्रज्ञानार्हत्वेन प्रशस्तत्वात् पूर्वदेशोऽपि पूर्वत्वसाम्येन प्रशस्त ॥ अथ" यदुक्तं चषालादतिरिक्तं साध्यानामिति तत्समर्थ्यते—" साध्या वै देवा यज्ञमत्यमन्यन्त तान् यज्ञो नास्पृशत् तान् यज्ञस्यातिरिक्तमासीत्तदस्पृशदतिरिक्तं वा एतद्यज्ञस्य यदग्नावग्निं मथित्वा प्रहरत्यतिरिक्तमेतद्यूपस्य यदूर्ध्वं चषालात् तेषां तद्भागधेयं तानेव तेन प्रीणाति " (तैस ६ ३.४) इति । साध्यनामका देवा पुरा यज्ञं कृत्स्नं यज्ञभागमतिलङ्घ्याधिको भागोऽस्माकमस्त्वित्यमन्यन्त । "तानधिक

२० लिप्समानान् यज्ञो नास्पृशत् ? तर्हि किमस्पृशत् ? यज्ञस्यातिरिक्तमिहासीत् तत् तानस्पृशत् । किमतिरिक्तम् ? यदग्नावग्निं मथित्वा प्रहरणमस्ति तदन्ययज्ञेऽभावादिहातिरिक्तम्"[२१] । यदपि चषालादूर्ध्वं यूपाग्रं तदपि[२२] यजमानपरिमाणादधिकत्वादतिरिक्तम् । तदुभयं साध्यानां प्रीतिहेतु ॥ यूपप्रसङ्गात् स्वकाले स्वरुहोमं विधत्ते—" देवा वै संस्थिते सोमे प्र स्रुचोऽहरन् प्र यूपं तेऽमन्यन्त यज्ञवेशसं वा इदं कुर्म इति ते प्रस्तरं स्रुचां निष्क्रयणमपश्यन् स्वरुं यूपस्य संस्थिते सोमे प्र प्रस्तरं हरति जुहोति

---

२५ १४ आ-यूपत्वं यूपनाम । १५ त म२-यूपस्थापनेन, इ रु क ना मा-यूपस्थानेन । १६ आ. इ.पा हा-पूर्वदेशे । १७ क-खनत्यर्धं । १८ आ मा.हा-ब्राह्मणान्तरे । १९. क तं म२-न [illegible] ना-न वा । २० आ ना हा-' अथ ' नास्ति । २१-२१ तं म२-तानधिक लिप्समानान् यज्ञ कृप्तो यज्ञभागो नास्पृशन् नातर्पयत् यज्ञस्यातिरिक्तमिहासीत् तानस्पृशत् अतर्पयत् । किं तदतिरिक्तम् ? मथितस्याग्ने पूर्वाग्नौ प्रहरणं यदस्ति(स्ति ?) तदन्ययज्ञेष्वभावादिहातिरिक्तम्, हा-तान् यज्ञो नास्पृशत् । तर्हि किमस्पृशत् ? एतद्यज्ञस्याति-

३० रिक्तं तत् यदग्नावग्निं मथित्वा प्रहरणं यदस्ति तदन्ययज्ञेऽभावादिहातिरिक्तम्; क-तानधिकलिप्समानान् यज्ञो नास्पृशत् । तर्हि किमस्पृशत ? एतत् यज्ञस्यातिरिक्तमिहासीत तत् तानस्पृशत । किमतिरिक्तम् ? यदग्नावग्निं मथित्वा प्रहरणमग्नि तदन्ययज्ञेऽभावादिहातिरिक्तम् । २२ आ-एतदपि ।

स्वरुमयज्ञवैशसाय" ( तैसं ६.३.४ ) इति। पुरा देवाः समाप्ते [23]सोमयागे स्रुचो यूपं चाग्नौ प्राहरन् [24]अग्नौ प्रहर्तुं [25] संकल्पितवन्तः। ततो यज्ञविनाशो मा भूदिति विचार्य प्रस्तरेण स्रुचः स्वरुणा यूपं च निष्क्रीतवन्तः। तस्मात् सोमसमाप्तौ प्रस्तरमग्नौ प्रहरेत्। स्वरुं च जुहुयात्। स्वरुर्यूपतक्षणे[25] प्रथमशकलः। तथा च सूत्रम्—" अवतक्षणानां स्वरुमधिमन्थनशकलम् " ( द्र. आपश्रौ ७.२.३ ) इति ॥

अत्र विनियोगसंग्रहः— ५

" पृथिव्यद्यं पुरेवात्र स्वाहे प्रथमपातितम्।
शकलं चावटे क्षिप्त्वा देवोऽसीत्यधिकाञ्जनम् ॥ १ ॥
सुव्यारोपश्चषालाग्रे सुषि यूपं समुच्छ्रयेत्।
ते तेऽवटे क्षिपेद्विष्णोर्द्वाभ्यां यूपस्य कल्पनम् ॥ २ ॥
प्रक्षद्वयं गतो[26] यूपो रज्ज्वा संवेष्टनं परि। १०
अन्त स्वरुं तत्र गृहेदिति सप्तदशेरिताः " ॥ ३ ॥ इति ॥

अथ मीमांसा ॥ तृतीयाध्यायस्य सप्तमपादे चिन्तितम्—

" अन्तर्वेदि मिनोत्यर्धं यूपाङ्गमुत लक्षयेत्।
देशो यूपाङ्गभावेन वेदिभागोऽत्र चोद्यते ॥
बहिर्वेद्यर्धमित्येतद्वाक्यं भिद्येत तद्विधौ। १५
मीयमानस्य यूपस्य तावान् देशोऽत्र लक्ष्यते " ॥

( जैन्या ३.७.११–१२ ) ॥

अग्नीषोमीये पशौ 'यूपं मिनोति' इति प्रकृत्य श्रूयते—" अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि " ( मैसं ३.९.४ ) इति ॥ यूपं स्थापयितुं कियद्विस्तारवानवटोऽपेक्षित इति बुभुत्सायां [27]तन्निर्णयायैतन्मूलस्य स्थौल्यमङ्गुल्यादिभिर्मातव्यम्। तस्य च मीयमानस्य वेद्यभ्यन्तरभागोऽङ्गत्वेन २० विधीयत इति चेत्। मैवम्। यथा संस्कृतो वेद्यभ्यन्तर भागः ' अर्धमन्तर्वेदि ' इत्यनेन वाक्येन विधीयते तद्वदसंस्कृतो वेदिबहिर्भागोऽपि ' अर्धं बहिर्वेदि ' इत्यनेन वाक्येन विधातव्यः। ततो वाक्यं भिद्येत। यदा तु वेदेरभ्यन्तरबाह्यभागाभ्यामुपलक्षितः असंस्कृतो[28] लौकिको देशो मीयमानयूपोचितो विधीयते तदा नास्ति वाक्यभेदः। तस्माल्लौकिकदेश एवाऽत्र यूपाङ्गत्वेन विधीयते न तु संस्कृतवेदिभागः ॥

अथ छन्दः ॥ ' ते ते धामानि ' इति त्रिष्टुप्। ' विष्णोः कर्माणि ', ' तद्विष्णोः ' इत्युभे २५ गायत्र्यौ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

२३. आ.ना.हा–सोमयज्ञे। २४–२४. तं.मर–प्रक्षेप्तुम्। २५. ट.ड.नं.पा.गां–स्वरुर्नक्षणे। २६. आ.इ.हा–गतम्। २७. तं–तन्निर्णयेन यूपमूलस्य। २८. ट.ड.ना.पा.गां.हा–' असंस्कृतः ' ३० नास्ति।

इषे त्वोपवीरस्युपो देवान् दैवीर्विशः प्रागुर्वह्नीरुशिजो बृहस्पते धारया वसूनि हव्या ते स्वदन्तां देव त्वष्टर्वसु रण्व रेवती रमध्व-

इषे । त्वा । उपवीरित्युप-वी । असि । उपो इति । देवान् । दैवीः । विशः । प्रेति । अगुः । वह्नीः । उशिजः । बृहस्पते । धारय । वसूनि । हव्या । ते । स्वदन्ताम् । देव । त्वष्टः । वसु । रण्व । रेवती । रमध्वम् ।

बर्हिषी आदत्ते—'इषे त्वा' इति ॥ व्याख्यातम् (तैस १ १ १)। इह तु पशुलक्षणमन्नम् । तदर्थं तदुपाकरणार्थं त्वामादद इति शेषः । जातावेकवचनम् (पा १ २.५८)। "इषे त्वेति बर्हिरादत्ते" (तैस ६ ३.६) इति ब्राह्मणम् ॥

पशुमुपाकरोति—'उपवीः' इति ॥ उपवीयते उपसगम्यते उपाक्रियत इति उपवी । वेते क्विप् (पा ३ २.७६)। हे पशो, देवेभ्यस्त्वमुपाकृत[1] असि इत्यर्थः । "उप ह्येनानाकरोति" (तैस ६ ३ ६) इति च ब्राह्मणम् । [2]तत्र हि देवाना समीपे आभिमुख्ये-नैनान् पशून् करोति । जातावेकवचने बहुवचनम्[2] (पा १ २ ५८)। तस्मात् त्वदीया अनयवा अवदानभावमापन्ना देवान् अग्नीषोमादीन् उप प्रागुः उपप्रयन्तु प्रकर्षेणोपगच्छन्तु । उपो इति निपातसमुदाय उपशब्दस्यार्थे वर्तते । "छन्दसि लुङ्लङ्लिटः" (पा ३ ४ ६) इति लुङ् । "इणो गा लुङि" (पा २ ४ ४५) इति गादेशः । "गातिस्था" (पा २ ४.७७) इत्यादिना सिचो लुक् । कथभूता इत्याह—दैवीः विशः देवानामिमा दैव्यः ।

षष्ठेऽनुवाके यूपस्थापनमुक्तम् । तस्मिन् यूपे पशुं नियोक्तुमुपाकरणमस्मिन् सप्तमेऽनुवाकेऽभिधीयते ।

इष इति ॥ बौधायनः—"अथैतं पशुं पल्पूलितमन्त्वरेण चात्वालोत्करौ प्रपाद्याग्रेण यूपं पुरस्तात् प्रत्यङ्मुखमुपस्थापयति[1] । तमिषे त्वेति बर्हिषी आदायोपाकरोति उपवीरस्युपो देवान् दैवीर्विशः प्रागुर्वह्नीरुशिजो बृहस्पते धारया वसूनि हव्या ते स्वदन्तां देव त्वष्टर्वसु रण्व रेवती रमध्वमिति" (बौश्रौ ४ ५) इति ॥ पल्पूलितं स्नापितम्[3] । आपस्तम्बः—"इषे त्वेति बर्हिषी आदत्त उपवीरसीति प्लक्षशाखाम् । बर्हिर्भ्यां प्लक्षशाखया च पुरस्तात् प्रत्यञ्चं पशुमुपाकरोति । उपो देवान् दैवीर्विश इति" (आपश्रौ ७.१२.५-८) इति ॥ हे बर्हिः, इषे पशुलक्षणाय देवान्नाय हूयमानाय त्वामाददे । बर्हिरिति जातावेकवचनम् । उपाकर्तुं वेति गच्छतीत्युपवी । हे प्लक्षशाखे, त्वम् उपवी असि । उपो समीपे प्रागुः प्राप्ता । के ? उपाक्रियमाणपशुसंबन्धिहृदयाद्यवयवा इत्यर्थाल्लभ्यते[4] । कान् प्राप्ता ? देवान् अग्नीषोमादीन् दैवीः विशः तद्देवसंबन्धिनी प्रजाश्च । किंच वह्नीः यागनिर्वाहकान् उशिजः शेषभक्षणकामान् प्राप्ता । हे बृहस्पते, वसूनि हृदयादिद्रव्याणि धारय पोषय । हे पशो, ते त्वदीयानि हव्यानि स्वदन्ताः स्वादूनि भवन्तु । हे देव त्वष्टृनामक, वसु पशुद्रव्यं रण्व रमणीयं कुरु । हे रेवती क्षीरादिधनवन्त्य हे पशवः, रमध्व यजमानगृहे क्रीडध्वम् ॥

१ त ति-°मुपर्वान । २-२ त ति.प१-उपशब्दस्य मार्गे लक्षणादिना कर्मप्रवचनीयत्वम् । आङ् आभिमुख्ये । यस्मादेवम् ।

१ आ.त ना-अथेनम् । २ आ.पा हा-°मुखं म्यापयति । ३ आ.मर-स्नपितम् । ४ इ.उ.ना.पा.भा हा-त्वर्थाल्लभ्यन्ते; तं मर-इत्यर्थं लभ्यते ।

" देवाद्यञौ " ( पा ४-१-८५ वा ३ ) इत्यञ् । " वा छन्दसि " ( पा ६-१-१०६ ) इति पूर्वसवर्णदीर्घत्वम् । विशः प्रजाः दैव्यः प्रजा भूत्वा देवानुपगच्छन्त्वित्यर्थः । " दैवीर्ह्येता विशः सतीर्देवानुपयन्ति " ( तैसं ६-३-६ ) इति च ब्राह्मणम् । यद्वा—दैवीर्विशः इति द्वितीया, देवान् दैवीश्च विशः उपगच्छन्तु । किंच—[v]वह्नीः [v]उशिजः यज्ञस्य वोढारः ऋत्विजो वह्नयः । " वहिश्रिश्रुयुद्रुग्ला " ( उ ४९१ ) इत्यादिना वहेर्निप्रत्ययः । निदिति हि तत्रोच्यते । ५ " तस्माच्छसो नः " ( पा ६-१-१०३ ) इति नत्वं न क्रियते " सर्वे विधयश्छन्दसि विकल्प्यन्ते " ( परिभाषेन्दुशेखर ३५; द्र. पामा १-४-९ ) इति । उशिजः कामनावन्तः भक्षणरुचयः । यद्वा—कमनीयाः स्पृहणीया इत्यर्थः । शेषभक्षणादिना तानप्युपगच्छन्तु । " ऋत्विजो वै वह्नय उशिजः " ( तैसं ६-३-६ ) इत्यादि ब्राह्मणम् । " वशेः किच्च " ( उ २२९ ) इति वष्टेरिजिप्रत्ययः । अतःपरं विराडेकपदा । हे [v]बृहस्पते, त्वमपि १० [v]वसूनि [v]धनानि पशुलक्षणानि यजमानार्थं धारय । " ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै पशूनवरुन्धे " ( तैसं ६-३-६ ) इति ब्राह्मणम् ॥ यद्वा—ब्रह्मा बृहस्पतिः । हे ब्रह्मन्, अवदानलक्षणानि वसूनि धनानि धारय अवधारयेत्यर्थः । ब्रह्मा हि कर्मणामध्यक्षः । आमन्त्रितस्याविद्यमानत्वात् धारयेति न निहन्यते ( पा ८-१-७२ ) । " अन्येषामपि दृश्यते " ( पा ६-३-१३७ ) इति संहितायां दीर्घत्वम्[३] । हे पशो, [v]ते तव [v]हव्या हव्यान्यवदान- १५ लक्षणानि । " शेश्छन्दसि बहुलम् " ( पा ६-१-७० ) इति लुक् । [v]स्वदन्तां स्वादूनि भवन्तु । ष्वद आस्वादने अनुदात्तेत् भौवादिकः । [v]देव [v]त्वष्टः । " नामन्त्रिते समानाधिकरणे " ( पा ८-१-७३ ) इति पूर्वस्याविद्यमानवत्त्वनिषेधात् द्वितीयं निहन्यते । त्वमपि क्षीरादीनां सर्वेषां वासहेतुं पशुलक्षणं धनं [v]रण्व रमय सर्वेषां स्पृहणीयरूपं कुरु । " त्वष्टा वै पशूनां मिथुनानां रूपकृद्रूपमेव पशुषु दधाति " ( तैसं ६-३-६ ) इति ब्राह्मणम् । रवि २० गतौ । इदित्त्वान्नुम् ( पा ७-१-५८ ) । इह त्वयं रमत्यर्थे वर्तते । यद्वा—वसु वरिष्ठं रूपं रण्व रमय । पशून् वरिष्ठं हि वासयति । " शॄस्वृस्निहि " ( उ १० ) इत्यादिना वसेरुप्रत्ययः । निदिति तत्रानुवर्तते । यद्वा—पशुलक्षणं धनं यजमाने रण्व रमय स्थिरीकुरु । यजमानं वा प्रापय । हे [v]रेवतीः रेवत्यः क्षीरादिधनवत्यः पशवः । " पशवो वै रेवतीः पशूनेवास्मै रमयति " ( तैसं ६-३-६ ) इति ब्राह्मणम् । रैशब्दात् मतुपि " रयेर्मतौ बहुलम् " ( पा ६-१-३७ वा ६ ) २५ इति संप्रसारणम् । " संज्ञायाम् " ( पा ८-२-११ ) इति मतुपो वत्वम् । षाष्ठिकमामन्त्रिताद्युदात्तत्वम् ( पा ६-१-१९८ ) । तस्याविद्यमानत्वात् ( पा ८-१-७२ ) [v]रमध्वम् इति न निहन्यते । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे ( पा ६-१-१८६ ) धातुस्वरः । यूयमपि रमध्वम्, अस्मिन् यजमाने अनुरक्ता वर्तध्वम् । अस्मत्संबन्धिपशुरनेन हिंस्यत इति युष्माकं [v]विरतिर्मा भूदित्यर्थः ॥

३. ति.पं—अस्य दीर्घः । क्षीरादिधनवत्यः; तं—अस्य दीर्घः क्षीरादिधनवन्ति । ४. तं.ति.पं१—गमय । ३० ५. तं—अरतिः ।

अग्नेर्जनित्रमसि वृषणौ स्थ

अग्ने । जनित्रम् । असि । वृषणौ । स्थ ।

---

अधिमन्थनशकलं निदधाति—' अग्नेर्जनित्रमसि ' इति ॥ अग्ने जनित्रं जनकं प्रजननस्थानीयम् असि हे शकल। " अशित्रादिभ्य इत्रोत्रौ " ( उ ६२२ ) इति जनेरित्रप्रत्ययः ॥

वृषणावन्वञ्चौ निदधाति—' वृषणौ स्थ ' इति ॥ हे शकलौ, वृषणा वृषणस्थानीयौ यागस्य युवां स्थ । यागद्वारेण वा वर्षितारौ कामानां स्थ । " कनिन् युवृषि " ( उ १६२ ) इत्यादिना वृषे कनिन्प्रत्ययः। वृषन्शब्दात् द्विवचने " वा षपूर्वस्य निगमे " ( पा ६ ४ ९ ) इति उपधादीर्घाभावः[6] ।

---

अग्नेरिति ॥ कल्पः—" अग्नेर्जनित्रमसीत्यधिमन्थनशकलं निदधाति । वृषणौ स्थ इति प्राञ्चौ दर्भौ । उर्वश्यसीत्यधरारणिमादत्ते[5] । पुरूरवा इत्युत्तरारणिम् । घृतेनाक्ते वृषणं दधाथामित्युभे अभिमन्त्र्यायुरसीति समवधाय " ( आपश्रौ ७ १२·१२–१४ ) इति ॥ हे शकल, त्वम् अग्ने जनकम् असि । हे दर्भौ, युवां वृषणौ वीर्यसेचकौ स्थ । हे अधरारणे, त्वमुर्वश्या सदृशी भवसि । हे उत्तरारणे, त्वं पुरूरवसा समानाऽसि । हे उभे अरणी, युवां घृतेन अक्ते सत्यौ सेचनं पोषयतम् । हे अरणीद्वय मातापितृस्थानीय, त्वम् आयुः असि यज्ञस्याऽऽयुःस्थानीयम् असि । पुत्रस्थानीयं वह्निमुत्पाद्य यज्ञाभिवृद्धिकरत्वात् ॥ यद्यप्यत्र पाठक्रमेण ' इषे त्वा ' इत्यादय उपाकरणमन्त्रा[6] व्याख्यातव्यास्तथाऽपि पूर्वानुवाकप्रसङ्गात् यदुक्तं[7]—" अतिरिक्तं वा एतद्यज्ञस्य यदग्नावग्निं मथित्वा प्रहरति " ( तैसं ६ ३·४ ) इति तद्विरोधपरिहारमादावग्निमन्थनमन्त्रान् व्याचिख्यासुर्मन्थनविशिष्टमग्निप्रहरणं विधत्ते—" साध्या वै देवा अस्मिँल्लोक आसन्नान्यत् किंचन मिषत्तेऽग्निमेवाऽग्नये मेधायाऽऽलभन्त न ह्यन्यदालम्भ्यमविन्दन् ततो वा इमाः प्रजाः प्राजायन्त यदग्नावग्निं मथित्वा प्रहरति प्रजानां प्रजननाय " ( तैसं ६ ३ ५ ) इति । मनुष्यपश्वादिसृष्टेः पुरा लोके साध्यनामका देवा एवाऽऽसन् । अन्यत् किमपि मिषत् प्राणिजातं नाऽऽसीत् । ते च साध्याः प्रजाकामास्तद्देवत्ये यज्ञायाऽऽलम्भनयोग्यमन्यत् पशुजातमलब्ध्वाऽग्निमेव पशुत्वेनाग्नये देवताया आलभन्त, पुरुषारण्यपशुन्यायेन पर्यग्निकरणान्तान् संस्कारानकुर्वत । तथा चाश्वमेधकाण्डे श्रूयते—" पर्यग्निकृतं पुरुषं चाऽऽरण्यांश्चोत्सृजन्त्यहिंसायै " ( तैब्रा ३ ९ ८ ) इति । ततोऽग्न्यालम्भनरूपाद्यज्ञादेव प्रजा असृज्यन्त । तस्मात् पूर्वसिद्धाग्नौ मथिताग्नेः प्रहरणं प्रजोत्पत्त्यै भवति ॥ [8]अत्र मथनकालश्चिन्त्यते । उपाकरणमारभ्य मारणपर्यन्तो व्यापार आलम्भशब्दार्थः, किं तस्मादालम्भादूर्ध्वमग्निर्मन्थनीय आहोस्विदुपाकरणानन्तरमिति । तत्र प्रथमपक्षे दोषमाह—" रुद्रो वा एष यदग्निर्यजमानः पशुर्यत् पशुमालभ्याग्निं मन्थेत् रुद्राय यजमानमपि दध्यात् प्रमायुकः स्यात् " ( तैसं ६ ३ ६ ) इति । रुद्रः क्रूरः । पशुर्यजमाननिष्क्रयणरूपत्वात् पशुरेव यजमानः । तत आलम्भात्

---

६ मै–'दार्घाभावः ।

---

५ द उ.ना पा भा हा–' आदत्ते ' नास्ति । ६ क त मर–' उपाकरणमन्त्रा ' इत्यस्यानन्तरं ' प्रथमम् ' । ७ द उ ना पा भा हा–त्तम् । ८ भा–अथ मन्थनं , त–अथ मथनं ।

उर्वश्यस्यायुरसि पुरूरवा

उर्वशी । असि । आयुः । असि । पुरूरवाः ।

अरणी आदत्ते अधरोत्तरौ क्रमेण—'उर्वश्यस्यायुरसि पुरूरवाः' इत्येताभ्याम् । यथाहुः—"उर्वश्यसीत्यधरारणिमादत्ते पुरूरवा इत्युत्तरारणिम्" (आपश्रौ ७·१२·३) इति । हे अधरारणे, [v]उर्वशी [v]असि । "घृतेनाक्ते" (तैसं १·३·७) इत्यादिनिदर्शनात् स्त्रीलिङ्गोऽप्यरणिशब्दश्छन्दसि । उरु महान्तमस्याधारत्वेनाश्नुते व्याप्नोतीत्युर्वशी । अश्नुतेः कर्मण्यण् (पा ३·२·१)। "संज्ञापूर्वको विधिरनित्यः" (परिभाषेन्दुशेखर ९४; द्र. काशिका—पा ६·४·१४६) इति वृद्धिर्न क्रियते । यद्वा—परोक्षवृत्त्या इदमुच्यते । यथा—"तं वा एतं षड्ढूतं सन्तम् । षड्ढोतेत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः" (तैब्रा २·३·११) इति । "परादिश्छन्दसि बहुलम्" (पा ६·२·१९९) इत्युत्तरपदाद्युदात्तत्वम् ॥　१०

अथोत्तरारणिमादत्ते—'आयुरसि' इति ॥ एति विश्वं क्षणेन कर्मणा इति [v]आयुः, आयन्ते प्राप्यन्तेऽभिमतानीति वा आयुः, अग्निरुच्यते । "छन्दसीणः" (उ २) इत्युण्प्रत्ययः । तद्वती उत्तरारणिः आयुरुच्यते । "आत्मा वै पुत्रनामासि" (कौउ २·११) इति पितापुत्रयोरभेदेन निर्देष्टुं शक्यत्वात् । उर्वशीपुरूरवसोः आयुर्नाम पुत्रो बभूव, तद्रूपेणारण्योरग्निः स्वरूपेण वा क्रियते । तत्राधरारणिः उर्वशी माता, उत्तरारणिः पुरूरवाः पिता, अग्निरायुः पुत्र इति । "उर्वश्यस्यायुरसीत्याह मिथुनत्वाय" (तैसं ६·३·५) इति ब्राह्मणम् । तस्मात् पितापुत्रयोरैकशब्द्यम् । यद्वा—ईयते अनया अग्निः इत्यायुः । उत्तरारणिरग्नेरानयनहेतुरिति यावत् । तादृशी त्वम् [v]असि हे उत्तरारणे । अपि च [v]पुरूरवाः, पुरु बहु रौति मन्थनवेलायां शब्दं करोतीति पुरूरवाः । पुरुपूर्वात् रौतेरसुनि (उ ६३८) उपपदस्य दीर्घत्वं निपात्यते पुरूरवा इति । कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६·२·१३९)। "परादिश्छन्दसि बहुलम्" (पा ६·२·१९९)　२०
इति वा उत्तरपदाद्युदात्तत्वम् ॥

ऊर्ध्वं मन्थने[9] हविर्भूतं यजमानमपि रुद्राय दद्यात् । ततो यजमानो मरणशीलः स्यात् ॥ तस्मिन्नेव पक्षे गुणमपि दर्शयति—"अथो खल्वाहुरग्निः सर्वा देवता हविरेतद्यत् पशुरिति यत् पशुमालभ्याऽग्निं मन्थति हव्यायैवाऽऽसन्नाय सर्वा देवता जनयति" (तैसं ६·३·५) इति । "ते देवा अग्नौ तनूः संन्यदधत । तस्मादाहुः अग्निः सर्वा देवताः (तैसं ६·२·५) इति श्रुतेरग्नेः सर्वदेवतारूपत्वम् । पशोर्हविष्ट्वं प्रसिद्धम् । तथा [10]सत्यालभ्य मन्थने[10] प्रत्यासन्नाय हविषे सर्वा देवता जनयति संनिधापयति ॥　२५
द्वितीयपक्षं सिद्धान्तत्वेनोपादत्ते—"उपाकृत्यैव मन्थ्यस्तन्नेवाऽऽलब्धं नेवानालब्धम्" (तैसं ६·३·५) इति । उपाकरणेनालम्भ उपक्रान्तोऽतो यथोक्तगुणः सिध्यति । असमारणेनासमाप्तत्वाद्यथोक्तदोषो न

९. आ–अग्निमन्थने । १०–१०. तं–आलभ्यमाने; मर–आलभ्य मथने ।

[ पशोरुपाकरणम्

घृतेनाक्ते वृषणं दधाथां गायत्रं छन्दोऽनु प्र जायस्व त्रैष्टुभं* जागतं छन्दोऽनु प्र जायस्व ।

घृतेन । अक्ते इति । वृषणम् । दधाथाम् । गायत्रम् । छन्दः । अनु । प्रेति । जायस्व । त्रैष्टुभम् । जागतम् । छन्दः । अनु । प्रेति । जायस्व ।

आज्यस्थाल्यामरणी समनक्ति—' घृतेन ' इति त्रिष्टुभैकपदया ॥ घृतेन अक्ते । घृ क्षरणे । वृषण वर्षितार कामानामग्निं वृष्टिप्रदं वा दधाथा धारयत धत्त था । " वृषण ह्येते दधाते ये अग्निम् " ( तैस ६ ३ ५ ) इति ब्राह्मणम् । पूर्वत्रदीर्घाभाव ( पा ६ ४ ९ ) ॥

प्रजातीर्वाचयते—' गायत्रम् ' इति ॥ हे अग्ने, मथ्यमानस्त्व गायत्र छन्द अनु प्र जायस्व । गायत्र हि छन्दोऽनूच्यमान श्रुत्वा त्व जायसे । " अनुर्लक्षणे " ( पा १ ४·८४ ) इत्यनो कर्मप्रवचनीयत्वम् । यथा—" शाकल्यस्य संहितामनु प्रावर्षत् " ( द्र. पाभा १ ४ ८४ ) इति ब्राह्मणम् । " छन्दोभिरेवैन प्र जनयति " ( तैस ६ ३·५ ) इति ब्राह्मणम् । एव ' त्रैष्टुभ छन्दोऽनु प्र जायस्व ' इत्यनुषज्यते । अत्र " छन्दस प्रत्ययविधाने नपुसके स्वार्थे उपसंख्यानम् " ( पा ४·२ ५५ वा १ ) इति स्वार्थे प्रत्यय । तत्र गायत्रशब्दात् प्राग्दीव्यतीयोऽण् ( पा ४ १ ८३—४ ४·२ ) । इतराभ्यामुत्सादित्वादञ् ( पा ४ १·८६ ) । " उपसंख्यानम् " इति प्राग्दीव्यतीयत्वात् ॥

भविष्यति ॥ द्वयोर्मन्त्रयोरर्थे प्रसिद्धिं दर्शयति—" अग्नेर्जनित्रमसीत्याहाग्नेर्ह्येतज्जनित्रं वृषणौ स्थ इत्याह वृषणौ ह्येतौ " ( तैस ६·३ ५ ) इति ॥ स्त्रीमन्त्रपुरस्तमन्त्रतस्समवधानमन्त्रैर्मिथुनत्वसिद्धिं दर्शयति—" उर्वश्यस्यायुरसीत्याह मिथुनत्वाय " ( तैस ६·३ ५ ) इति । वृषणशब्देन निषिक्तवीर्यस्थानीय उरणायोर्वह्निर्विवक्षित इत्याह—" घृतेनाक्ते वृषण दधाथामित्याह वृषणं ह्येते दधाते येऽग्निम् " ( तैस ६ ३ ५ ) इति । ये अधरोत्तरारणी वह्निं धारयत ते[११] वृषणं सिक्तवीर्यं दधाते इति मन्त्रेणोच्यते ॥

गायत्रमिति ॥ बौधायन.—" अथ [१२]प्रजातीर्वाचयति गायत्रं छन्दोऽनु प्र जायस्व त्रैष्टुभं छन्दोऽनु प्र जायस्व[१३] जागत छन्दोऽनु प्र जायस्वेति[१४] " ( बौश्रौ ४·५ ) इति । [१५]"त्रैष्टुभमित्यत्र छन्द इत्यनुषङ्ग "[१५] । आपस्तम्ब —" अग्नये मथ्यमानायानुब्रूहीति वा, प्रथमाया त्रिरनूक्ताया त्रि प्रदक्षिणमग्निं मन्थति गायत्र छन्दोऽनु प्र जायस्वेति प्रथमम् । त्रैष्टुभमिति द्वितीयम् । जागतमिति तृतीयम् । ततो यथाप्राशु मन्थति " ( आपश्रौ ७·१३·१—३ ) इति ॥ हेऽग्ने, होत्रा पठ्यमान गायत्र छन्द अनुलक्ष्य त्व प्र जायस्व । एवमितरत्रापि योज्यम्[१६] ॥ छन्दसा साधनत्वमनेन मन्त्रेण दर्शितमित्याह—" गायत्र छन्दोऽनु प्र जायस्वेत्याह छन्दोभिरेवैनं प्र जनयति " ( तैसं ६·३·५ ) इति ॥ होतारं प्रत्यध्वर्यो. प्रैषमन्त्रमुत्पादयति—" अग्नये मथ्यमानायानु ब्रूहीत्याह " ( तैसं ६·३·५ ) इति ॥ होतु

११ आ क तं मर—एते । १२ तं मर—प्रजापतिर्वाचयति ।" —१३. आ—' छन्दोऽनुप्रजायस्व ' नास्ति । १४ क ना —' प्रजायस्वेति ' इत्यस्यानन्तरं ' प्रदक्षिणमग्निं मन्थति ' । १५—१५ तं—त्रैष्टुभं छन्द इत्याद्यनुषङ्ग., क—' त्रैष्टुभमित्यत्र छन्द इत्यनुषङ्ग ' नास्ति । १६ आ क—' योज्यम ' इत्यस्यानन्तरं—' प्राशु क्षिप्रमित्यर्थ. ' ।

भवतं (१) नः समनसौ समोकसावरेपसौ ।
मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः ॥

भवतम् ( १ ) । नः । समनसाविति स-मनसौ । समोकसाविति सम्-ओकसौ । अरेपसौ ॥
मा । यज्ञम् । हिꣳसिष्टम् । मा । यज्ञपतिमिति यज्ञ-पतिम् ।
जातवेदसाविति जात-वेदसौ । शिवौ । भवतम् । अद्य । नः ॥ ५

जातमग्निमाहवनीये प्रहरति—' भवतं नः ' इति पङ्क्त्या पञ्चपदया वसष्टकृतुदशाष्टाक्षरया ॥ योऽग्निः पुरा भवत्याहवनीये, यश्चेदानीं मथित्वा प्रणीयते, हे तौ द्वावग्नी, भवतं भूयास्तं नः अस्माकं समनसौ समानमनस्कौ अविप्रतिपन्नमनस्कौ । " समानस्य छन्दसि " ( पा ६.३.८४ ) इति सभावः । समोकसौ सहसमवेतौ समाननिवासाविति यावत् । उच समवाये । संपूर्वात् असुन्प्रत्ययः ( उ ६३८ ) । बहुलवचनात् कुत्वम् । समुच्येते इति समोकसौ । " गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च " ( उ ६७६ ) इति पूर्वपदप्रकृतिस्वरत्वम् । यद्वा—संशब्दस्य समानार्थवृत्तेर्बहुव्रीहिः । संभावो वा समानस्य छन्दसः । अरेपसौ अपापौ पापाभिनिवेश रहितौ । " नञ्सुभ्याम् " ( पा ६.२.१७२ ) इत्युत्तरपदान्तोदात्तत्वम् । यस्मादरेपसौ तस्मात् यज्ञं इमं मा हिंसिष्टम् । मा च यज्ञपतिं यजमानम् । " पत्यावैश्वर्ये " ( पा ६.२.१८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । हे जातवेदसौ जातप्रज्ञानौ जातधनौ* वा । वेत्तेर्विन्दतेर्वा असुन् ( उ ६३८ ) । यद्वा—जातं विश्वं वित्तो विन्दत* इति वा कारकपूर्वादसुन् । पूर्ववत् प्रकृतिस्वरत्वम् ( पा ६.२.१३९ ) । इह तु आष्टमिकमाद्युदात्तत्वम् ( पा ८.१.१९ ) । तादृशौ युवाम् अद्य अस्मिन् कर्मकाले नः अस्माकं शिवौ शान्तौ भवतम् । " सद्यःपरुत् " ( पा ५.३.२२ वा ५ ) इत्यत्र इदमोऽद्यशब्दो निपात्यते । " अग्निः पुरा भवत्यग्निं मथित्वा प्र हरति " ( तैसं ६.३.५ ) इत्यादि ब्राह्मणम् ॥ २०

" अभि त्वा देव सवितः " ( तैसं ३.५.११ ) इत्येतामृचं विधत्ते—" सावित्रीमृचमन्वाह सवितृप्रसूत एवैनं मन्थति " ( तैसं ६.३.५ ) इति ॥ पुनः प्रैषद्वयमुत्पादयति—" जातायानु ब्रूहि प्रह्रियमाणायानुब्रूहीत्याह काण्डेकाण्ड एवैनं क्रियमाणे समर्धयति " ( तैसं ६.३.५ ) इति । मन्थनकाण्ड एकः । मथितस्य जन्मकाण्डोऽपरः । जातस्य पूर्वाग्नौ प्रहरणकाण्डोऽन्यः[१७] । तत्र सर्वत्र प्रैषे सति मन्त्रैरग्निः समृद्धो भवति ॥ होतृमन्त्रान् विधत्ते—" गायत्रीः सर्वा अन्वाह गायत्रच्छन्दा वा अग्निः स्वेनैवैनं छन्दसा समर्धयति " ( तैसं ६.३.५ ) । मन्थनकालेऽनुवचनीयाः " अभि त्वा देव सवितः " ( तैसं ३.५.११ ) इत्याद्याः । जाते सति " उत ब्रुवन्तु जन्तवः " ( तैसं ३.५.११ ) इत्यादिकमनुब्रूयात् । ताः सर्वा ऋचो गायत्र्यः । अग्निश्च गायत्र्या सहोत्पन्नत्वात् गायत्रच्छन्दाः ॥ २५

भवतमिति ॥ कल्पः—" भवतं नः समनसावित्यग्रेणोत्तरं परिधिमाहवनीये प्रहरति संधिना वाऽग्नावग्निश्चरति प्रविष्ट इति प्रहृत्य स्रुवेणाभिजुहोति " ( आपश्रौ ७.१३.६–७ ) इति ॥ मन्त्रौ स्वेवमाम्नातौ—" भवतं नः समनसौ समोकसावरेपसौ । मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ ३०

७. तं–युवाम् । *[ द्र. निरुक्त ७.१९ ] ।

१७. तं–'काण्डोऽपरः ।

अ॒ग्नाव॒ग्निश्च॑रति॒ प्रवि॑ष्ट॒ ऋषी॑णां पु॒त्रो अ॑धिरा॒ज ए॒षः ।
स्वा॒हा॒कृत्य॒ ब्रह्म॑णा ते जुहोमि॒ मा दे॒वानां॑ मिथु॒या क॑र्भाग॒धेय॑म् ॥ ७ ॥

[ भर्वतमेकत्रिंशच्च ]

अ॒ग्नौ । अ॒ग्निः । च॒र॒ति॒ । प्रवि॑ष्ट॒ इति॒ प्र–वि॒ष्टः॒ । ऋषी॑णाम् । पु॒त्रः । अ॒धि॒रा॒ज इत्य॑धि–रा॒जः । ए॒षः ॥
स्वा॒हा॒कृत्येति॑ स्वाहा–कृत्य॑ । ब्रह्म॑णा । ते॒ । जु॒हो॒मि॒ । मा ।
दे॒वाना॑म् । मि॒थु॒या । क॒ः । भा॒ग॒धेय॒मिति॑ भाग–धेय॑म् ॥ ७ ॥

[ मैस १ २ १५, १.२.७, राम ३.४, कपिस २ ११, वासं ६ ७–८, ५.२ ]

प्रहृत्य स्रुवेणाभिजुहोति—' अग्नावग्नि ' इति चतुष्पदया त्रिष्टुभा ॥ [v]अग्नौ आहवनीये [v]प्रविष्ट मथित्वा तत्र प्रहृतोऽयम् [v]अग्नि. [v]चरति चरतु भक्षयतु इदमाज्यम् । " प्रहृत्य जुहोति जातायैवास्मा अन्नमपि दधाति " ( तैस ६ ३.५ ) इति च ब्राह्मणम् । चरते. पञ्चमो लकार. । प्रविष्ट इति " गतिरनन्तर " ( पा ६ २ ४९ ) इति पूर्वपदप्रकृतिस्वरत्वम् । ऋषयो ज्ञातार ऋत्विज. । ऋषन्तीति ऋषय । " इगुपधात् कित् " ( उ ५६९ ) इति इन् । वृषादिर्द्रष्टव्य ( पा ६.१ २०३ ) । तेषा [v]पुत्र । ते ह्येन जनयन्ति । [v]अधिराजः [v]एष. अधिक राजत इत्यधिराज. । पचाद्यच् ( पा ३.१ १३४ ) । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६ २ १३९ ) । यद्वा—अध्यारूढो राजा अधिराज दीप्तिमतामुत्तम । " राजाह सखिभ्यष्टच् " ( पा ५ ४.९१ ) । [v]स्वाहाकृत्य स्वाहाकारं कृत्वा । यद्वा—स्वाहुतिः, स्वाहा इति जुहोतेः स्वाङुपसृष्टादौणादिको डाप्रत्यय । [v]ब्रह्मणा मन्त्रेण शोभनामाहुतिं कृत्वा इमामाज्याहुतिं [v]ते तुभ्यं [v]जुहोमि इति । स्वाहाशब्दस्योर्यादित्वात्* गतिसंज्ञा । गतिसमासे ( पा २.२.१८ ) कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६.२ १३९ ) । यद्वा—ब्रह्म बृहत् इदमाज्य जुहोमि । " तृतीया च होश्छन्दसि " ( पा २.३ ३ ) इति तृतीया । त्व च तथा हुत सन् [v]देवाना [v]भागधेय भाग [v]मिथुया [v]मा [v]क मिथ्या मा क मा कार्षी , मिथ्याकरणं स्तेयम् । " मन्त्रे घस " ( पा २ ४ ८० ) इत्यादिना च्लेर्लुक् । " भागरूपनामभ्यो धेय " ( पा ५ ४ ३६ वा २ ) इति स्वार्थे धेयप्रत्यय । यद्वा—मिथःकरण मिथुयाकरण परस्परसकरो भागाना, यथा—वायव्यमिन्द्राय प्रदीयते, ऐन्द्र वायवे इति, तथा मा कार्षी । " अव्ययादाप्सुप " ( पा २ ४ ८२ ) इति लुक बाधित्वा " सुपा सुलुक् " ( पा ७ १.३९ ) इत्यादिना विभक्तेर्याजादेश. ॥

॥ इति तृतीये सप्तमोऽनुवाकः ॥ ७ ॥

शिवौ भवतमद्य न ॥ , अग्नावग्निश्चरति प्रविष्ट ऋषीणा पुत्रो अधिराज एष । स्वाहाकृत्य ब्रह्मणा ते जुहोमि मा देवानां मिथुया कर्भागधेयम् " इति ॥ योऽग्नि पुराऽऽहवनीये वर्तते, यश्चेदानीं मथितस्तस्मिन् प्रह्रियते, तौ युवामस्मान् प्रति [v]समनसौ समानमनस्कौ विप्रतिपत्तिरहितौ [v]समोकसौ समाननिवासस्थानौ

*[ द्र पा १ ४ ६१ ] । ८ तै–अभिहुत , ति–हि हुत । ९. मै–' प्रदीयते ' इत्यस्यानन्तरं ' तथा ' ।

अरेपसौ पापचित्तरहितौ भवतम्। यज्ञस्य यज्ञपतेश्च[१८] हिंसां मा कुरुतम्। [१९]अद्य अस्मिन् कर्मणि नः अस्मान् प्रति शिवौ शान्तौ भवतम्। एष मथितोऽग्निराहवनीयाग्नौ प्रविष्टश्चरति। कीदृशः? ऋषीणां मन्त्राणामृत्विजां वा पुत्रः, तैरुत्पादितत्वात्। अधिकं राजत इत्यधिराजः। हे मथिताग्ने, ते तुभ्यं स्वाहाशब्दमुच्चार्य मन्त्रेण जुहोमि। देवानां भागधेयं मिथुया मा कः, मिथ्याभूतं मा कुरु॥ 'शिवौ भवतम्' इति प्रार्थनायाः प्रसक्तिं दर्शयति—"अग्निः पुरा भवत्यग्निं मथित्वा प्र हरति तौ संभवन्तौ यजमानमभि सं भवतो भवतं नः समनसावित्याह शान्त्यै" (तैसं ६·३·५) इति॥ यजमानं भक्षयितुमभिलक्ष्य परस्परसंयुक्तत्वाच्छान्त्यै प्रार्थनीयौ। 'अग्नावग्निः' इति मन्त्र उपेक्षितः॥ विधत्ते—"प्रहृत्य जुहोति जातायैवास्मा अन्नमपि दधात्याज्येन जुहोत्येतद्वा अग्नेः प्रियं धाम यदाज्यं प्रियेणैवैनं धाम्ना समर्धयत्यथो तेजसा" (तैसं ६·३·५) इति। समर्धयतीत्यन्वयः॥ उत्तरभाविनोऽपि मन्थनमन्त्रा औत्सुक्येनाऽऽदौ व्याख्याताः। अथ पूर्वभाविन उपाकरणमन्त्रान् व्याचिख्यासुर्विधत्ते—"इषे त्वेति बर्हिरा दत्त इच्छत इव ह्येष यो यजते" (तैसं ६·३·६) इति। एष यजमानो देवेभ्यो दातुं पशुरूपं हविरिच्छत्येव। तस्मादिष इत्युच्यते॥ पशुसमीपे देवानाह्वयतीति प्लक्षशाखोपवीरित्युच्यते, तदेतद्दर्शयति—"उपवीरसीत्याहोप ह्येनानाकरोति" (तैसं ६·३·६) इति॥ हव्यान्यदयवा देवान् देवप्रजाश्च प्राप्ताः इति यत् व्याख्यातं तत्प्रसिद्धमित्याह—"उपो देवान् दैवीर्विशः प्रागुरित्याह दैवीर्ह्येता विशः सतीर्देवानुपयन्ति" (तैसं ६·३·६) इति॥ यद्वा हव्यादय एव [२०]देवार्थत्वेन देवप्रजा भूत्वा देवान् प्राप्नुवन्ति॥ वह्निशब्दो वाहकवाचीत्यभिप्रेत्याह[२१]—"वह्निरुशिज इत्याहर्त्विजो वै वह्नय उशिजस्तस्मादेवमाह" (तैसं ६·३·६) इति॥ अत्र पशुप्रदत्वेन बृहस्पतिप्रार्थनमित्याह—"बृहस्पते धारया वसूनीत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै पशूनव रुन्धे" (तैसं ६·३·६) इति। हव्यादीनि स्वादूकर्तुमियमाशीरित्याह—"हव्या ते स्वदन्तामित्याह स्वदयत्येवैनान्" (तैसं ६·३·६) इति॥ मिथुनरूपपशुप्रदत्वेन त्वष्टुः प्रार्थनमित्याह—"देव त्वष्टर्वसु रण्वेत्याह त्वष्टा वै पशूनां मिथुनानां रूपकृद्रूपमेव पशुषु दधाति" (तैसं ६·३·६) इति॥ रेवतीशब्दः पशुपर इत्याह—"रेवती रमध्वमित्याह पशवो वै रेवतीः पशूनेवास्मै रमयति" (तैसं ६·३·६) इति॥

अत्र विनियोगसंग्रहः—

"इषे बर्हिः समादत्त उपेति प्लक्षशाखिकाम्।
उपो पशुमुपाकृत्य ह्यग्नेः शकलसंस्थितिः॥ १॥
वृपात्र दर्भौ संस्थाप्य स्रुवौरणिमधः क्षिपेत्।
पुरूत्तरां समादत्त आयुरित्युपरि क्षिपेत्॥ २॥
घृते संसन्ध्य गायेति त्रिभिर्मथ्नाति विक्षिपेत्।
भव पूर्वानलेऽथाग्नौ होमो मन्त्राश्चतुर्दश॥" ३॥ इति॥

अथ छन्दः—'भवतं नः समनसौ' इति पङ्क्तिः। 'अग्नावग्निः' इति त्रिष्टुप्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके सप्तमोऽनुवाकः॥ ७॥

---

१८. इ.उ.ना.पा.भां.हा-'यज्ञपतेश्च' इत्यस्यानन्तरं 'मा हिंसिष्टम्'। १९. मर-अथ; इ.उ.ना.पा.भां.हा-'अद्य' नास्ति। २०. आ.क.ना.हा-पदार्थत्वेन; हा-वेदार्थत्वेन। २१. आ.क.ना.हा-प्रेत्य दर्शयति।

आ द॑दे ऋ॒तस्य॑ त्वा देवहविः पाशे॒नाऽऽर॑भे॒ धर्षा॑

एति॑ । द॒दे॒ । ऋ॒तस्य॑ । त्वा॒ । दे॒व॒ह॒वि॒रिति॑ देव-ह॒विः । पाशे॑न । एति॑ । र॒भे॒ । धर्ष॑ ।

अथ पशुरशनामादत्ते—'आ ददे' इति ॥ गृह्णामीत्यर्थः । अस्य शेषभूतः सावित्रो "देवस्य त्वा" इत्यादिना व्याख्यात एव (तैस १·१ ४) ॥

५ तया अक्ष्णया पशुमभिनिदधाति—'ऋतस्य त्वा' इति ॥ हे [१]देवहवि देवाना हविर्भूत पशो, [२]ऋतस्य सत्यस्य यज्ञस्य वा [३]पाशेन बन्धिकयानया रशनया त्वाम् [४]आरभे बध्नामि । यद्वा—ऋतस्य यज्ञस्यार्थाय त्वा पाशेन बध्नामि । "सत्य वा ऋतम्" (तैस ६ ३ ६) इत्यादि ब्राह्मणम्, "अक्ष्णया परि हरति" (तैम ६ ३·६) इत्यादि च ॥

[१]यूपे पशु नियुनक्ति—'धर्षा मानुषान्' इति ॥ मनुष्येभ्य आगता उपद्रवा मानुषा. ।

१० अत्र "हलस्तद्धितस्य" (पा ६·४·१५०) इति यलोपः । वृषादित्वादाद्युदात्तत्वम् (पा ६ १ २०३) । उत्सादिभ्यो ह्रण्य (पा ४ १ ८६) । तान् [५]धर्ष अभिभव, यागसाधनत्वेन देवत्वप्राप्त्या मानुषोपद्रवरहितो भवेत्यर्थः । धृष प्रसहने चौरादिक उदात्तेदाधृषीय । प्रसहनमभिभव । "द्व्यचोऽतस्तिङ" (पा ६ ३·१३५) इति संहितायां दीर्घत्वम् । यद्वा—मनुष्या एव मानुषा । "मनोर्जातौ" (पा ४ १ १६१) इत्यञ् । तान् धर्ष देवत्वप्राप्त्यैव ॥

१५ सप्तमेऽनुवाके पशोरुपाकरण प्राधान्येनोक्तम् । अथोपाकृतस्य विशसनमष्टमेऽनुवाके विधीयते[१] ।

आ ददे इति ॥ बौधायन.—"अथ रशनामादत्ते देवस्य त्वा सवितु प्रसवेऽश्विनोर्बाहुभ्या पूष्णो हस्ताभ्यामा ददे इति" (बौश्रौ ४ ५) इति । [२]अत्र आम्नातः 'आ ददे' इति मन्त्र. 'देवस्य त्वा' इत्यनेन पूर्यते । आपस्तम्ब —"सावित्रेण रशनामादाय पशोर्दक्षिणे बाहौ परिवीयोर्ध्वमुत्कृष्यर्तस्य त्वा देवहवि पाशेनाऽऽरभ इति [३]दक्षिणेऽर्धशिरसि पाशेनाऽक्ष्णया [४]प्रतिमुच्य धर्षा मानुषानित्युत्तरतो

२० यूपस्य नियुनक्ति । दक्षिणत ऐकादशिनान्" (आपश्रौ ७ १३ ८–९) इति ॥ हे रशने, रशनाम् [५]आ [५]ददे । हे देवहवि पशो, [५]ऋतस्य यज्ञस्य सिद्ध्यर्थं त्वा पाशेन [५]आ [५]रभे बध्नामि । हे विनियुज्यमानपशो, देवत्वप्राप्त्या [५]मानुषान् उपद्रवास्तावकादीन् [५]धर्ष अभिभव ॥ विधत्ते—"देवस्य त्वा सवितु प्रसव इति रशनामा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै" (तैम ६·३ ६) इति ॥ ऋतशब्दार्थमाह—"ऋतस्य त्वा देवहविः पाशेनारभ

२५ इत्याह सत्य वा ऋतं सत्येनैवैनमृतेनाऽऽरभते" (तैम ६ ३·६) इति । अवश्यभाविफलोपेतत्वाद्यज्ञस्वरूप सत्यम्, तेन निमित्तेनैव पशुं बध्नाति ॥ बन्धनप्रकारं विधत्ते—"अक्ष्णया परिहरति वध्यं हि प्रत्यञ्च प्रतिमुञ्चन्ति व्यावृत्त्यै" (तैसं ६ ३·६) इति । अक्ष्णया पूर्वोक्तया दक्षिणपादादिशिरोभागपर्यन्तया [६]वक्रगत्या परिहरति वेष्टयति । लोके तु मांसभक्षिणो वध्य पशु प्रत्यञ्चं स्वाभिमुखमवस्थाप्य गले

१. मै–तेन यूपे ।

३० १ तंमर–अभिधीयते । २ इ उ.पा भां मर हा–'अत्र' नास्ति । ३ क–दक्षिणे अध-शिरसि । ४. इ पा भां हा–प्रतिमुञ्चन्ति । ५–५. आ पा–अवबध्नामि, ङ–आबध्नामि । ६. आ.क. हा–वक्रया ।

मातुर्पानदूभ्यस्त्वौर्षधीभ्युः प्रोक्षाम्युपां पेरुरसि

मातुषान् । अदूभ्य इत्यत्–भ्यः । त्वा । ओर्षधीभ्य इत्योर्षधि–भ्यः ।
प्रेति । उक्षामि । अपाम् । पेरुः । असि ।

पशुं प्रोक्षति—‘ अदूभ्यस्त्वा ’ इति ॥ तादर्थ्ये चतुर्थी ( पा २·३·१३ वा १ )। आप ओषधयश्च भूयासुरित्येवमर्थम् । हे पशो, त्वां ^v^प्रोक्षामि प्रकर्षेण सिञ्चामि । पशोरपामोष- ५ धीनां कार्यत्वात् कार्यकारणयोश्चाभिन्नत्वात् कार्यभूतपशुप्रोक्षणेन तत्कारणानां सिद्धिरिति भावः । “ अदूभ्यो ह्येष ओषधीभ्यः संभवति यत्पशुः ” ( तैसं ६·३·६ ) इति च ब्राह्मणम् । यद्वा— अद्भ्य ओषधीभ्यश्च जातं त्वां प्रोक्षामि ; कारणेन हि कार्याणां शुद्धिः । पवित्रेणोत्पूतत्वादोषधि- संबन्धोऽप्यस्ति । “ ऊडिदम् ” ( पा ६·१·१७१ ) इत्यादिना अदूभ्यः परस्या विभक्ते- रुदात्तत्वम् । ओषधिशब्दस्य दासीभारादित्वात् ( पा ६·२·४२ ) पूर्वपदप्रकृतिस्वरत्वम् । ओष- १० शब्दो घञन्त आद्युदात्तः ॥

पाययति—‘ अपां पेरुरसि ’ इति ॥ हे पशो, ^v^अपां ^v^पेरुः पातासि त्वम्, तत इमाः पिबेति गम्यते । यद्वा—असीति पञ्चमो लकारः । अपां पाता भव । पूर्ववदङ्गचो विभक्तेरुदात्त- त्वम् ( पा ६·१·१७१ ) । पा पाने । “ मापो रुरिच्च ” ( द्र.उ ५५१ ) इति पिबते रुप्रत्ययः इकारश्च, पेरुः । “ एष ह्यपां पाता ” ( तैसं ६·३·६ ) इत्यादि ब्राह्मणम् । पानेन चान्तः— १५ शुद्धिः क्रियते । “ पाययत्यन्तरत एवैनं मेध्यं करोति ” ( तैसं ६·३·६ ) इति च ब्राह्मणम् ॥

पाशं प्रतिमुञ्चन्ति । अतस्तन्निवृत्त्यै बक्रबन्धनम् ॥ विधत्ते—“ धर्यो मातुपानिति नियुनक्ति धृत्यै ” ( तैसं ६·३·६ ) इति । नियुनक्ति यूपे⁷ निरन्तरं बध्नीयात् । तच्च बन्धनं धृत्यर्थं पलायननिवारणार्थम् ॥

अदूभ्य इति ॥ कल्पः—“ अदूभ्यस्त्वौषधीभ्यः प्रोक्षामीति प्रोक्षति । अपां पेरुरसीति पाययति । स्वात्तं चित्सदेव२ हव्यमापो देवीः स्वदतैनमित्युपरिष्टादधस्तात् सर्वतश्च प्रोक्ष्य ” ( आपश्रौ ७·१३·१०– २० १२ ) इति । हे पशो, त्वामद्भिरोषधीभिश्च ^v^प्रोक्षामि । दर्भैरपामुत्पूतत्वाद्दुस्त्योषधीनामपि प्रोक्षणसाधन- त्वम् ॥ ‘पितृत्वीकृताभ्यां तृणोदकाभ्यां पशोरवयवत्वेनोभयेन⁹ प्रोक्षणं युक्तमित्याह—“ अदूभ्यस्त्वौष- धीभ्यः प्रोक्षामीत्याहाद्भ्यो ह्येष ओषधीभ्यः संभवति यत्पशुः ” ( तैसं ६·३·६ ) इति ॥ पेरुशब्दः पातृवाचीत्याह—“ अपां पेरुरसीत्याहैष ह्यपां पाता यो मेधायाऽऽरभ्यते ” ( तैसं ६·३·६ ) इति । यज्ञार्थ- मालभ्यमानस्य पशोरित ऊर्ध्वमुदकपानाभावादिदानीमेव पातृत्वम् । हे ^v^आपः देव्यः, ^v^स्वात्तं ^v^चित् २५ स्वादुभूतमपि ^v^सदेवं देवसार्थं ^v^हव्यं होतुं योग्यम् ^v^एनम् पशुं ^v^स्वदत स्वादुकुरुत ॥ अनेन मन्त्रेण स्वादुता भवतीत्याह—“ स्वात्तं चित्सदेव२ हव्यमापो देवीः स्वदतैनमित्याह स्वदयत्येवैनम् ” ( तैसं ६·३·६ ) इति ॥ त्रिभिर्मन्त्रैरनुष्ठेयानि विधत्ते—“ उपरिष्टात् प्रोक्षत्युपरिष्टादेवैनं मेध्यं करोति पाययत्यन्तरत

२. ति.पं–ओषधिशब्दः ।

७. आ.ह्रा–‘ यूपे ’ नास्ति । ८. आ–पातृ° ; तं–स्वमातृ° ; क–पितृमातृ° । ९. क–‘ उभयेन ’ ३० नास्ति ।

**स्वात्तं चित् सदेवꣳ हव्यमापो देवीः स्वदतैनꣳ**

स्वात्तम् । चित् । सदेवमिति स-देवम् । हव्यम् । आपः । देवीः । स्वदत । एनम् ।

अवस्तादुपोक्षति—'स्वात्तम्' इति द्विपदया गायत्र्या ॥ [2]स्वात्तम् आस्वाद्यमान स्वादुभूतमित्यर्थः । स्वाद आस्वादने । "आदितश्च" (पा ७ २ १६) इति [*]चकारस्या
५ नुक्तसमुच्चयार्थत्वादाश्वस्तादिवदिड्भावः । चिदित्यप्यर्थे एवार्थे वा । पूर्वमेव स्वादु सन्तमेनं हव्यं पशुं स्वदत स्वादयत [3] स्वादुतमं कुरुत । ष्वद स्वर्द आस्वादने अनुदात्तेत् । तस्मात् ण्यन्ताल्लोटि "बहुलं सञ्ज्ञाछन्दसोः" (इ उ १९०) इति णेर्लुक् । "अणावकर्मकात्" (पा १ ३ ८८) इति परस्मैपदम् । स्वद्यमानस्य पशोश्चित्तवत्त्वात् । "स्वदयत्येवैनान्" (तैस ६ ३ ६) इति च ब्राह्मणम् । हे [*]आपः [*]देवी देव्यः । "वा छन्दसि"
१० (पा ६ १ १०६) इति पूर्वसवर्णदीर्घत्वम् । अत्र आप इति पादादित्वान्न निहन्यते । पाष्ठिकमामन्त्रिताद्युदात्तत्वं प्रवर्तते (पा ६ १ १९८) । "विभाषितं विशेषवचने बहुवचनम्" (पा ८ १ ७४) इति तस्याविद्यमानवत्त्वनिषेधात्[4] देवीरिति निहन्यते । "आमन्त्रितं पूर्वमविद्यमानवत्" (पा ८ १ ७२) इति तयोर्द्वयोरप्यविद्यमानवत्त्वेन पादादिभूतं स्वदतेति तिङन्तं न निहन्यते । एनादेशोऽनुदात्त[*] एव । हव्यं पशुर्विशेष्यते— [*]सदेवं देवसहितं देवाधिष्ठितम् ।
१५ "तेन सहेति तुल्ययोगे" (पा २ २ २८) इति बहुव्रीहिः । "वोपसर्जनस्य" (पा ६ ३ ८२) इति सभावः । सदेवत्वस्यानाशासनीयत्वात्[5] तेन "प्रकृत्याशिष्यगोवत्सहलेषु" (पा ६ ३ ८३) इति प्रकृतिभावाभावः । पुनश्च विशेष्यते— [*]हव्यं हविर्भूतम् । जुहोतेः "अचो यत्" (पा ३ १ ९७) इति यत् । उञ्छादिर्द्रष्टव्यः (पा ६ १ १६०) । यद्वा—हवमर्हतीति हव्यम् । "छन्दसि च" (पा ५ १ ६७) इति यत्प्रत्ययः ॥

२० पूर्वेन मेध्यं करोत्यधस्तादुपोक्षति सर्वत एवैनं मेध्यं करोति" (तैस ६ ३ ६) इति ॥ अथ होतारं प्रत्यध्वर्युः "प्रैषमन्त्रमुच्चारयति—"अग्निना वै होत्रा देवा असुरानभ्यभवन्नग्नये समिध्यमानायानु ब्रूहीत्याह भ्रातृव्याभिभूत्यै" (तैस ६ ३ ७) इति । अग्निं समिद्धो भ्रातृव्यानभिभवति ॥ अग्निसमिन्धनाय होत्राऽनूच्यमानानामृचां चोदकप्राप्तां पञ्चदशसंख्यामपोद्य सप्तदशसंख्यां विधत्ते—"सप्तदश सामिधेनीरन्वाह सप्तदश प्रजापतिः प्रजापतेराप्त्यै" (तैस ६ ३ ७) इति । "आ श्रावय"
२५ (तैस १ ६ ११) इत्यादिभिरक्षरैः प्रजापतेः सप्तदशत्वम् ॥ तमेव विधिमनूद्य प्रशंसति—"सप्तदशान्वाह द्वादश मासाः पञ्चर्तवः स संवत्सरः संवत्सरं प्रजा अनु प्र जायन्ते प्रजानां प्रजननाय" (तैस ६ ३ ७) इति । "हेमन्तशिशिरयोः समासेन" (ऐब्रा १ १) इति बह्वृचब्राह्मणाम्नानादृतूनां पञ्चसंख्या । [11]प्रजाः संवत्सरं गर्भे स्थित्वा पश्चात् प्रजायन्ते ॥ अनूच्याः प्रथममाघारं विधत्ते—"देवा वै सामिधेनीरनूच्य यज्ञं

*[अत्र 'आदितश्च' (पा ७ २ १६) इति सूत्रकाशिका द्रष्टव्या ।] । ३ मै—आस्वादयत ।
३० ४ मै—'मानत्वनिषेधात् । *[द्र पा २ ४ ३२–३४] । ५ प—'स्यानुशंसनीयत्वात् ।

१० भा हा—'प्रैषमुत्पादयति । ११ इ उ पा भा म२ हा—'प्रजाः' नास्ति ।

पशोः संज्ञपनम् ]

जुह्वा पशुं समनक्ति ललाटे ककुदि श्रोण्यां च— ' सं ते प्राणः ' इति पुरउष्णिहा त्रिपदया द्वादशवस्वष्टाक्षरया ॥ तत्र ललाटे समनक्ति—' सं ते प्राणो वायुना गच्छताम् ' इति । हे पशो, त्वदीयः प्राणः वायुः वायुना बहिष्ठेन भूतात्मना सह संगच्छतामेकीभवतु । " समोगम्यृच्छि ": ( पा १·३·२९ ) इत्यात्मनेपदम् । " वायुदेवत्यो वै " ( तैसं ६·३·७ ) इत्यादि ब्राह्मणम् ॥

---

नान्वपश्यन्त्स प्रजापतिस्तूष्णीमाघारमाघारयत् ततो वै देवा यज्ञमन्वपश्यन् यत्तूष्णीमाघारमाघारयति यज्ञस्यानुख्यात्यै " ( तैसं ६·२·७ ) इति । [12]बहुनियमोपेते सामिधेन्यनुवचने [13]व्यापृता बुद्धिः श्रान्ता सती पश्चात् कर्तव्यं यज्ञं नान्वपश्यत् । ततः प्रजापतिस्तूष्णीमाघारेण मन्त्रविषयव्यापारजन्यं [14]बुद्धेः श्रममपनीतवान् ॥ तमेव विधिमनूद्य प्रशंसति—" असुरेषु वै यज्ञ आसीत् तं देवास्तूष्णीं[15] होमेनावृञ्जत यत् तूष्णीमाघारमाघारयति भ्रातृव्यस्यैव तद्यज्ञं वृङ्क्ते " ( तैसं ६·२·७ ) इति । असुरा [16]गूढचारिणो भूत्वा देवैरनुष्ठितमवगत्य स्वयमपि तथैवानुतिष्ठन्ति । तथा च श्रुत्यन्तरम्—" देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत " ( तैसं १·७·३ ) इति । तं वृत्तान्तमवगत्य देवा गूढचारिणामग्रे[17] प्रथममाघारममन्त्रकं हुतवन्तः । तं दृष्टवन्तोऽसुराः सहसा गत्वा कृत्स्नं यज्ञं तूष्णीं हुत्वा[18] नाशितवन्तः । [19]तदिदमभिप्रेत्य ' तं देवास्तूष्णीं होमेनावृञ्जत ' इत्युच्यते ॥ त्रयाणां परिधीनां मार्जनं प्रत्येकं तदावृत्तिं च विधत्ते— " परिधीन्त्सं मार्ष्टि पुनात्येवैनान्त्रिस्त्रिः सं मार्ष्टि त्र्यावृद्धि यज्ञोऽथो रक्षसामपहत्यै द्वादश सं पद्यन्ते द्वादश मासाः संवत्सरः संवत्सरमेव प्रीणात्यथो संवत्सरमेवास्मा उप दधाति सुवर्गस्य लोकस्य समष्ट्यै " ( तैसं ६·२·७ ) इति । परिधिषु पतितस्य भस्मादेरपनयनेन ते शुद्धा भवन्ति । तिस्र आवृत्तयो यस्यासौ त्र्यावृत्, " त्रिः प्रथमामन्वाह " ( तैसं २·५·७ ) इत्यादिषु तत्प्रसिद्धम् । त्र्यावृत्त्या तदाकारं दृष्ट्वा रक्षसां भयातिशयो भवति । त्रिषु परिधिषु नव संमार्जनान्युक्तानि । अत्रानुक्तैस्त्रिभिर्बर्हिःसंमार्जनैः सह द्वादश-संपत्तिः । अत एव दर्शपूर्णमासब्राह्मणे श्रूयते—" परिधीन्त्सं मार्ष्टि पुनात्येवैनान् त्रिर्मध्यमं त्रयो वै प्राणाः प्राणानेवाभि जयति त्रिर्दक्षिणार्ध्यं त्रय इमे लोका इमानेव लोकानभि जयति त्रिरुत्तरार्ध्यं त्रयो वै देवयानाः पन्थानस्तानेवाभि जयति त्रिरुप वाजयति त्रयो वै देवलोका देवलोकानेवाभि जयति द्वादश सं पद्यन्ते " ( तैसं २·५·११ ) इति । तया संख्यया संवत्सरदेवतां तोषयति । किं चास्य यजमानस्य स्वर्गप्रापणाय तां संवत्सरदेवतामुपदधाति समीपे समानयति ॥ एवं स्रौवाघारो विहितः । अथ [19]स्रुच्याघारं विधत्ते— " शिरो वा एतद्यज्ञस्य यदाघारोऽग्निः सर्वा देवता यदाघारमाघारयति शीर्षत एव यज्ञस्य यजमानः सर्वा देवता अव रुन्धे " ( तैसं ६·२·७ ) इति । आघारस्य होमेषु प्रथमभावित्वेन शिरोरूपत्वम् । यद्यपि पशोरिष्टिविकृतित्वादेवाऽऽघारद्वयं प्राप्नोति तथाऽपि तद्विकृतित्वमेव निश्चेतुं तदीयलिङ्गत्वेनात्र पुनर्विहितम् ॥

---

१२. क.पा–बहुनियमोपेत° । १३. तं–व्यावृत्ता । १४. तं–शुद्धि° । १५. तं–ष्ण° ।
१६. आ–°चारिणां समीपे । १७. आ.हा–हुत्वा । १८. आ.क.हा–तमभि° । १९. इ.उ.क.पा.भां.हा–स्रुचाघारम् ।

सं ते॑ प्रा॒णो वा॒युना॑ गच्छता॒ꣳ॒ सं यज॑त्रै॒रङ्गा॑नि॒ सं य॒ज्ञप॑ति॒रा॒शिषा॑

समिति॑ । ते॒ । प्रा॒ण इति॑ प्र—अ॒न॒ः । वा॒युना॑ । ग॒च्छ॒ता॒म् । समिति॑ । यज॑त्रैः । अङ्गा॑नि ।
समिति॑ । य॒ज्ञप॑ति॒रिति॑ य॒ज्ञ—प॒ति॒ः । आ॒शिषेत्या॑— शिषा॑ ।

दक्षिणस्या श्रोण्या समनक्ति—' स यजत्रैः ' इति ॥ त्वदीयानि [v]अङ्गानि हृदयादीनि
५ [v]यजत्रे यागे सगच्छन्ता यागसाधनानि भवन्तु । यद्वा—यागसाधनैः सगच्छन्ता यागसाधनमध्ये वर्तन्ताम् । गच्छन्तामिति लौकिको वाक्यशेष , अनुषङ्गस्याभावात् । " अमिनक्षियजिवधि-पतिभ्योऽत्रन् " ( उ ३९२ ) इति यजेरत्रन्प्रत्यय । " त्रिश्वरूपो वै त्वाष्ट्र उपरिष्टात् पशु-मभ्यवमीत् " ( तैस ६.३ ७ ) इत्यादि ब्राह्मणम् ॥

दक्षिणस्या श्रोण्या समनक्ति—' स यज्ञपति. ' इति ॥ [v]यज्ञपति यजमान [v]आशिषा
१० प्रार्थनापदेन सगच्छताम् । लौकिक एव वाक्यशेष । लौकिकेन बहुवचनेन वैदिकस्य व्यवहित-त्वात् । " पत्यावैश्वर्ये " ( पा ६.२ १८ ) इति यज्ञपतिशब्दे पूर्वपदस्य प्रकृतिस्वरत्वम् । आङ्पूर्वाच्छासे क्विपि ( पा ३ २.७६ ) इत्वे ( द्र. पाभा, काशिका ६ ४ ३४ वा १ ) कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६.२ १३९ ) ॥

स त इति ॥ कल्प —" स्रुच्यमाघार्य प्रत्याक्रम्य जुह्वा पशु समनक्ति । स ते प्राणो
१५ वायुना गच्छतामिति शिरसि । ■ यजत्रैरङ्गानीत्यंसोच्चलयो । स यज्ञपतिराशिषेति श्रोण्याम् " ( आपश्रौ ७.१४.१–२ ) इति । उपहशब्देन ककुदुच्यते । हे पशो, [v]ते तव [v]प्राण [v]वायुना [v]स [v]गच्छताम् । हृदयाद्यङ्गानि [v]यजत्रै यागविशेषै सयुज्यन्ताम् ॥ [v]यज्ञपति. [v]आशिषा सयुज्यताम् ॥ स्रुचाऽऽघारशेषेण पश्वञ्जनं विधत्ते—" शिरो वा एतद्यज्ञस्य यदाघार आत्मा पशुराघारमाघार्य पशु समनक्त्यात्मन्नेव यज्ञस्य शिर प्रति दधाति " ( तैस ६.३ ७ ) इति । आत्मा ग्रीवाया [20]अधोवर्ती
२० देहः ॥ प्राणस्य बाह्यवायुसंगमो युक्त इत्याह—" स ते प्राणो वायुना गच्छतामित्याह वायुदेवत्यो वै प्राणो वायावेवास्य प्राण जुहोति " ( तैस ६.३.७ ) इति ॥ अस्य यज्ञस्य फलेन यजमानो युज्यत इत्येतमर्थम् न्त्यमन्त्रे दर्शयति—" स यजत्रैरङ्गानि स यज्ञपतिराशिषेत्याह यज्ञपतिमेवास्याऽऽशिष गमयति " ( तैस ६.३ ७ ) इति । मध्यममन्त्रेण हृदयाद्यङ्गानि [21]यागविशेषैर्योजयतीत्येतावदुन्नेयम् ॥ पूर्वं शिरस्य ञ्जन विहितम् । इदानीं ककुदि श्रोण्या चाञ्जनं विधत्ते । अथवा पूर्वविधे साधारणत्वात् तमेवानूद्य
२५ प्रशंसति—" त्रिश्वरूपो वै त्वाष्ट्र उपरिष्टात् पशुमभ्यवमीत्तस्मादुपरिष्टात् पशोर्नाव द्यन्ति यदुपरिष्टात् पशुꣳ समनक्ति मेध्यमेवैनं करोति " ( तैस ६.३.७ ) इति ॥ त्वष्टु पुत्रो विश्वरूप पशुमभि प्राप्योपरिष्टात् पृष्ठभागे वमनमकरोत् । तस्मात् याज्ञिका हृदयादिवदुपरिभागान्नावद्यन्ति । स भागमञ्जनेन शुद्धं करोति ॥ विधत्ते—" ऋत्विजो वृणीते छन्दाꣳस्येव वृणीते " ( तैस ६.३ ७ ) इति । वक्ष्यमाणसंख्यासाम्यात् [22]ऋत्विजां छन्दस्त्वम्[22] ॥ [23]संख्या विधत्ते—" सप्त वृणीते सप्त ग्राम्या पशव सप्ताऽऽरण्या सप्त
३० छन्दाꣳस्युभयस्यावरुद्ध्यै " ( तैस ६.३ ७ ) इति । होताऽऽग्नीध्रोऽध्वर्युर्मैत्रावरुणो ब्राह्मणाच्छंसी पोता नेष्टा

२०. आ.तं भर२—अधोवर्ति° । २१. इ उ.गा भा हा—यागविशेषे योजयती° । २२–२२ इ उ.क.त.पा भा‍भर२—छन्दसा समत्वम् । २३ आ क—मासत्वसंख्याम् ।

घृतेनाक्तौ पशुं त्रायेथाम् ॥

घृतेन । अक्तौ । पशुम् । त्रायेथाम् ।

[6]स्वरुं च शासं च[6] जुह्वामङ्क्त्वा ताभ्यां पशुं समनक्ति—'घृतेन' इति ॥ हे [7]स्वरुशासौ, [v]घृतेन प्रयाजशेषेणानेन [v]अक्तौ सन्तौ पशुं [v]त्रायेथां समञ्जनेन रक्षतम् । "वज्रो वै स्वधितिर्वज्रो यूपशकलः" ( तैसं ६-३-७ ) इत्यादि ब्राह्मणम् ॥

पशुमुदञ्चं नीयमानमनुमन्त्रयते—'रेवतीर्यज्ञपतिम्' इति यजुरादिकया, 'उरो अन्तरिक्ष' इति पञ्चपदया रुद्रेशवसुमुनिस्वराक्षरया ॥ क्षीरादिरयिमन्तः पशवो रेवतीशब्देनोच्यन्ते । "पशवो वै रेवतीः" ( तैसं ६·३·६ ) इति च ब्राह्मणम् । "रयेर्मतौ बहुलम्" ( पा ६·१·३७ वा ६ ) इति संप्रसारणम् । "संज्ञायाम्" ( पा ८·२·११ ) इति मतुपो वत्वम् । "वा छन्दसि" ( पा ६·१·१०६ ) इति पूर्वसवर्णदीर्घत्वम् । आमन्त्रिताद्युदात्तत्वम् ( पा ६·१·१९८ ) । अवयवेषु समुदायशब्दस्तद्धर्मश्चोपचर्यते[8] । हे [v]रेवतीः रयिमन्तः पश्ववयवाः, [v]यज्ञपतिं यजमानं [v]प्रियधा प्रियं धारयन्त्यः [v]आ [v]विशत यजमानस्य यागसिद्ध्यर्थं अवदानात्मना प्रीतिपूर्वकं तिष्ठत ।

चेति[24] । सप्त प्राग्याद्धिकं व्याख्यातम्[*] ॥ चोदकप्राप्तेषु [25]प्रयाजेषु संख्यां विधत्ते—"एकादश प्रयाजान् यजति दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तं प्र यजति" ( तैसं ६·३·७ ) इति । प्राणशब्देन तदाधारभूतानि छिद्राण्युच्यन्ते । तानि च शिरसि सप्त, अधस्ताद् द्वे, नाभिर्दशमी, आत्मा देहः । अत एकादशसंख्यया कृत्स्नं पशुं प्रयजति ॥ अन्तिमप्रयाजस्य कालान्तरं विधत्ते—"वपामेकः परि शय आत्मैवाऽऽत्मानं परि शये" ( तैसं ६·३·७ ) इति । वपां परि वपाहोमसमीपे शये शेते तस्मिन् काले यजेदित्यर्थः । चरमः प्रयाजो देहत्वेन निरूपितत्वात् पशोरात्मा, वपाऽपि मुख्याऽवयवत्वादात्मा, अतस्तयोः सामीप्यं युक्तम् ॥

घृतेनेति ॥ कल्पः—"जुह्वा स्वरुस्वधिती अनक्ति । द्विः स्वरुं सकृत् स्वधितेरन्यतरां धाराम् । स्वरुमन्तर्धाय स्वधितिना पशुं समनक्ति घृतेनाक्तौ पशुं त्रायेथामिति शिरसि" ( आपश्रौ ७·१४·१०–११ ) इति । 'हे स्वरुस्वधिती', इति संबोधनीयम् ॥ स्वरुस्वधितिघृतानामुपयोगं दर्शयति—"वज्रो वै स्वधितिर्वज्रो यूपशकलो घृतं खलु वै देवा वज्रं कृत्वा सोममघ्नन् घृतेनाक्तौ पशुं त्रायेथामित्याह वज्रेणैवैनं वशे कृत्वाऽऽलभते" ( तैसं ६·३·७ ) इति । [26]त्रिविधेन वज्रेणैनं पशुं वशीकृत्य मारयति । विधत्ते—"पर्यग्नि करोति सर्वहुतमेवैनं करोत्यस्कन्दायास्कन्नं हि तद्यद्धुतस्य स्कन्दति" ( तैसं ६·३·८ ) इति । [27]तत्प्रकारः सूत्रेऽभिहितः—"आहवनीयादुल्मुकमादायाऽऽग्नीध्रः परि वाजपतिः कविरिति त्रिः प्रदक्षिणं पर्यग्नि करोति पशुं यूपमाहवनीयं शामित्रदेशं चात्वालमाज्यानि चेत्येके" ( आपश्रौ ७·१५·२ ) इति ॥ तेन पर्यग्निकरणेनैनं पशुं सर्वमपि हुतमेव करोति । [28]तच्च हुतत्वं[28] स्कन्दनदोषपरिहाराय भवति । होमादूर्ध्वं स्कन्दनेऽपि तद्दोषो न भवति ॥ आवृत्तिं विधत्ते—"त्रिः पर्यग्नि करोति त्र्यावृद्धि यज्ञोऽथो रक्षसामपहत्यै" ( तैसं ६·२·८ ) इति ॥

६–६. मै–स्वधिति स्वरुं च । ७. मै–स्वरो स्वधिते । ८. तं.ति–°शब्दस्तद्धर्मांश्चोपचर्यन्ते ।

२४. आ.इ.पां.हा–इति । *[ २७८–२७९ पृष्ठयोः ( तैसं १·२·५ ) सायणभाष्यं द्रष्टव्यम् । ] । २५. इ.उ.पा.मां.हा–'प्रयाजेषु' नास्ति । २६. इ.उ.पा.मां–त्रिविधेन । २७. आ.क.हा–अत्र प्रकारः । २८–२८. आ.हा–तद्धुतत्वम्; तं–तच्च सर्वहुतत्वम् ।

## रेवतीर्यज्ञपतिं प्रियधाऽऽ विंशतोरो

रेवती । यज्ञपतिमिति यज्ञ-पतिम् । प्रियधेति प्रिय-धा । एति । विशत । उरो इति ।

प्रियं दधातीति दधाते "आतोऽनुपसर्गे कः" ( पा ३.२.३ ) इति कः । टाप् ( पा ४.१.४ ), कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६ २.१३९ ) । "सुपां सुलुक्" ( पा ७.१ ३९ ) इति जसो
५ लुक् । यद्वा—प्रियधा प्रियस्य धारणेन आविशत प्रियं धारयित्वैव यजमाने तिष्ठत । प्रियस्य धानं प्रियधा । तृतीयैकवचने आतो लोपे उदात्तनिवृत्तिस्वरत्वम् ( पा ६ १.१६१ ) । यद्वा—व्यत्ययेन असङ्ख्याया अपि विधार्थे धाप्रत्यय. ( पा ३ १ ८५, ५.३ ४२ ) । प्रियप्रकारेणेत्यर्थ. । यज्ञदेवता वा यज्ञपतिस्ता प्रीतिपूर्वकं भक्ष्यत्वेन सयुग्भावेन वा आविशत । यद्वा—सर्वे पशव उच्यन्ते, अयमस्माकमेको हन्तुं नीयत इति उद्वेगं मा कार्ष्ट । यजमानस्योपभोगाय प्रीतिपूर्वकं तस्मिन् वर्तध्वम् ।
१० अन्तरिक्षशब्देन पशो सुषिराणि श्रोत्रादीनीन्द्रियाण्युच्यन्ते । समुदायापेक्षमेकवचनम् ( पा १ २ ५८ वा १ ) । हे [9]उरो विस्तीर्ण [10]अन्तरिक्ष श्रोत्रादीन्द्रियसमुदाय, त्वं [11]सजूः समानप्रीतिर्भूत्वा । "समानस्य छन्दसि" ( पा ६.३.८४ ) इति सभावः । "ससजुषो रु:" ( पा ८ २ ६६ ) इति रुत्वम् । "त्रिचक्रादीनामन्तः" ( पा ६ २ १९९ वा १ ) इत्युत्तरपदान्तोदात्तत्वम् । तेन सजूः देवेन दीप्तिमता [12]वातेन पशुप्राणेन । किंच—[13]त्मना आत्मना पशुक्षेत्रज्ञेन च सजूः । "मन्त्रेष्वाङ्यादे-
१५ रात्मनः" ( पा ६ ४.१४१ ) इत्याकारलोपः । एवमाभ्यामपि सह त्वं समानप्रीतिर्भूत्वास्य [14]हविषः [15]यज [16]इदं पश्वात्मकं हविर्देहि [17]"यागार्थमिदानीं सर्वेऽपि[18]" यूयमनुजानीतेत्यर्थः । "त्रियाग्रहणं कर्तव्यम्" ( द्र. पाभा १ ४ ३२ ) इति कर्मण. सम्प्रदानत्वात् "चतुर्थ्यर्थे बहुल

रेवतीरिति ॥ कल्प—"रेवतीर्यज्ञपतिं प्रियधाऽऽविशतेति वपाश्रपणीभ्यां पशुमन्वारभेते अध्वर्युर्यजमानश्च" ( आपश्रौ ७.१५ ७ ) इति ॥ हे रेवती धनवन्तः पश्ववयवा, यजमानं प्रति प्रिय-
२० धारिण्यो भवत । हविर्भूत्वा यज्ञम् आ विशत ॥ अत्र विचारं दर्शयति—"ब्रह्मवादिनो वदन्त्यन्वारभ्य पशू३र्नान्वारभ्या३ इति" ( तैसं ६ ३.८ ) इति ॥ प्रथमपक्षे दोषमाह—"मृत्यवे वा एष नीयते यत् पशुस्तं यदन्वारभेत प्रमायुको यजमान स्यात्" ( तैसं ६.३.८ ) इति ॥ द्वितीयपक्षेऽपि दोषमाह—"अथो खल्वाहु सुवर्गाय वा एष लोकाय नीयते यत् पशुरिति यन्नान्वारभेत सुवर्गाल्लोकाद्यजमानो हीयेत" ( तैसं ६.३ ८ ) इति ॥ दोषद्वयपरिहाराय प्रकारान्तरं विधत्ते—"वपाश्रपणीभ्या-
२५ मन्वारभते तन्नेवान्वारब्धं नेवानन्वारब्धम्" ( तैसं ६.३.८ ) इति । याभ्यां दारुमयीभ्यां वपा पच्यते ते वपाश्रपण्यौ ॥ प्रैषमन्त्रमुत्पादयति—"उप प्रेष्य होतर्हव्या देवेभ्य इत्याहेषितं हि कर्म क्रियते" ( तैसं ६ ३ ८ ) इति । हे होत., देवेभ्यो वपादीनि हव्यानि कर्तुमुपप्रेष्य पशुसमीपे शमितॄन् प्रेरय । लोके हि प्रभुणा प्रेषितं कर्म सहसा क्रियते ॥ मन्त्रस्तु स्पष्टार्थ इत्याह—"रेवतीर्यज्ञपतिं प्रियधा विशत इत्याह यथायजुरेवैतत्" ( तैसं ६.३.८ ) इति ॥

३० ९ तं ति–प्रियाकारेण । १० तं ति–'इदानीम्' । ११–११ तं.नि.प–यागार्थमिदं सर्वमपि ।
२९ आ हा–'अपि' नास्ति ।

अन्तरिक्ष सुजूर्देवेन (१) वातेनास्य हविषस्त्मना यज समस्य तनुवा भव वर्षीयो वर्षीयसि यज्ञे यज्ञपतिं धाः

अन्तरिक्ष । सुजूरिति स–जूः । देवेन (१) । वातेन । अस्य । हविषः । त्मना । यज । समिति । अस्य । तनुवा । भव । वर्षीयः । वर्षीयसि । यज्ञे । यज्ञपतिमिति यज्ञ–पतिम् । धाः ।

छन्दसि" (पा २·३·६२) इति षष्ठी । यजतिर्दानकर्मा । 'उरो' इति पादादित्वान्निघाताभावे षाष्ठिकमामन्त्रिताद्युदात्तत्वम् (पा ६·१·१९८)। "नामन्त्रिते समानाधिकरणे" (पा ८·१·७३) इति तस्याविद्यमानवत्त्वनिषेधात् परमामन्त्रितं निहन्यते । किंच—ᵛअस्य पशोः तन्वा शरीरेण ᵛसं ᵛभव संयुज्यस्व । देवभूतस्याप्यस्य पशोः शरीरं मा हिंसीः । अपि च हे ᵛवर्षीयः प्रवृद्धतर श्रोत्रादीन्द्रियसमुदाय, ᵛवर्षीयसि प्रवृद्धतरे ᵛयज्ञे ᵛयज्ञपतिं यजमानं ᵛधाः धारय । अविघ्नेन स्थापय । हविष्यमस्य अनुभावय शीघ्रं यज्ञं निर्वर्तय । यद्वा—यज्ञफले स्थापय । अथवा—अस्य हविषो यजेति पूर्वं हविषः प्रार्थना कृता, अधुना तदेव हविरुच्यते । हे हविः, अस्य पशोस्तन्वा संभव पौष्कल्येन संपद्यस्व । पुनरपि तदेवामन्त्र्यते । हे वर्षीयो हविः, वर्षीयसि यज्ञे यागसाधनद्वारेण यज्ञपतिमविघ्नेन स्थापय । 'धाः' इति दधातेर्लेटि "बहुलं छन्दसि" (पा २·४·७३) इति शपो लुक् । "इतश्च लोपः परस्मैपदेषु" (पा ३·४·९७) इतीकारलोपः । तनुवेति "तन्वादीनां छन्दसि बहुलम्" (पा ६·४·७७ वा १) इत्युवङादेशः । यज्ञपतिशब्द उक्तस्वरः ॥ ५ १० १५

उर इति ॥ कल्पः—"आहवनीयादुल्मुकमादायाऽऽग्नीध्रः ³⁰पूर्वः प्रतिपद्यते । शमिता पशुं नयति । उरो अन्तरिक्षेत्यन्तरा चात्वालोत्करावुदञ्चं पशुं नयति" (आपश्रौ ७·१५·८–१०) इति । मन्त्रस्त्वेवमाम्नातः—"उरो अन्तरिक्ष सजूर्देवेन वातेनास्य हविषस्त्मना यज समस्य तनुवा भव वर्षीयो वर्षीयसि यज्ञपतिं धाः" इति । अत्रान्तरिक्षशब्देन पशोः श्रोत्रादिच्छिद्रेष्ववस्थित इन्द्रियसमुदाय उपलक्ष्यते ॥ हे ᵛउरो ᵛअन्तरिक्ष विस्तीर्णेन्द्रियसमुदाय, अस्य पशोरभिमानिदेवेन ᵛवातेन प्राणवायुना ᵛत्मना जीवात्मना च ᵛसजूः सह ᵛहविषो ᵛयज हविर्देहि । किंचास्य पशोः ᵛतनुवा भविष्यता देवशरीरेण ᵛसं ᵛभव संयुज्यस्व । हे ᵛवर्षीयः अतिविस्तीर्णेन्द्रियसमुदाय, ᵛवर्षीयसि अतिविस्तीर्णे ᵛयज्ञे ᵛयज्ञपतिं यजमानं ᵛधाः स्थापय । मन्त्रोऽयमुपेक्षितः ॥ विधत्ते—"अग्निना पुरस्तादेति रक्षसामपहत्यै" (तैसं ६·३·८) इति । उल्मुकेन सह पशोः पुरस्तादाग्नीध्रो गच्छेत् ॥ २० २५

३०. तं–पूर्वम् ।

**रेवतीर्यज्ञपतिं प्रियधाऽऽ विंशतोरो**

रेवती । यज्ञपतिमिति यज्ञ-पतिम् । प्रियधेति प्रिय-धा । एति । विशत । उरो इति ।

प्रियं दधातीति दधाते "आतोऽनुपसर्गे कः" ( पा ३.२.३ ) इति कः । टाप् ( पा ४ १.४ ), कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६ २.१३९ ) । "सुपां सुलुक्" ( पा ७ १ ३९ ) इति जसो लुक् । यद्वा—प्रियधा प्रियस्य धारणेन आविशत प्रियं धारयित्वैव यजमाने तिष्ठत । प्रियस्य धानं प्रियधा । तृतीयैकवचने आतो लोपे उदात्तनिवृत्तिस्वरत्वम् ( पा ६ १ १६१ ) । यद्वा—व्यत्ययेन असंख्याया अपि विधार्थे धाप्रत्ययः ( पा ३ १ ८५, ५ ३ ४२ ) । प्रियप्रकारेणेत्यर्थः । यज्ञदेवता या यज्ञपतिस्तां प्रीतिपूर्वकं मत्स्वत्वेन स्वयंभावेन वा आविशत । यद्वा—सर्वे पशव उच्यन्ते, अयमस्माकमेको हन्तुं नीयत इति उद्वेगं मा कार्ष्ट । यजमानस्योपभोगाय प्रीतिपूर्वकं तस्मिन् वर्तध्वम् । अन्तरिक्षशब्देन पशोः सुषिराणि श्रोत्रादीनीन्द्रियाण्युच्यन्ते । समुदायापेक्षमेकवचनम् ( पा १ २ ५८ वा १ ) । हे उरो विस्तीर्ण अन्तरिक्ष श्रोत्रादीन्द्रियसमुदाय, त्वं सजूः समानप्रीतिर्भूत्वा । "समानस्य छन्दसि" ( पा ६ ३.८४ ) इति सभावः । "ससजुषो रुः" ( पा ८ २ ६६ ) इति रुत्वम् । "त्रिचक्रादीनामन्त" ( पा ६ २ १९९ वा १ ) इत्युत्तरपदान्तोदात्तत्वम् । केन सजूः ? देवेन दीप्तिमता वातेन पशुप्राणेन । किंच—त्मना आत्मना पशुक्षेत्रज्ञेन च सजूः । "मन्त्रेष्वाङ्यादेरात्मनः" ( पा ६ ४ १४१ ) इत्याकारलोपः । एवमाभ्यामपि सह त्वं समानप्रीतिर्भूत्वास्य हविषः यज इदं पश्वात्मकं हविर्देहि यागार्थमिदानीं सर्वेऽपि यूयमनुजानीतेत्यर्थः । "क्रियाग्रहणं कर्तव्यम्" ( द्र पाभा १.४.३२ ) इति कर्मणः संप्रदानत्वात् "चतुर्थ्यर्थे बहुलं

रेवतीरिति ॥ कल्पः—"रेवतीर्यज्ञपतिं प्रियधाऽऽविशतेति वपाश्रपणीभ्यां पशुमन्वारभेते अध्वर्युर्यजमानश्च" ( आपश्रौ ७.१५ ७ ) इति ॥ हे रेवती, धनवन्त, पयस्वत्यः, यजमानं प्रति प्रियधारिण्यो भवत । हविष्ट्वेन यज्ञम् आ विशत ॥ अत्र विचारं दर्शयति—"प्रब्रह्मवादिनो वदन्त्यन्वारभ्य पशू३र्नान्वारभ्या३ इति" ( तैसं ६ ३ ८ ) इति ॥ प्रथमपक्षे दोषमाह—"मृत्यवे वा एष नीयते यत् पशुस्तं यदन्वारभेत प्रमायुको यजमानः स्यात्" ( तैसं ६ ३.८ ) इति ॥ द्वितीयपक्षेऽपि दोषमाह—"अथो खल्वाहुः सुवर्गाय वा एष लोकाय नीयते यत् पशुरिति यन्नान्वारभेत सुवर्गाल्लोकाद्यजमानो हीयेत" ( तैसं ६.३.८ ) इति ॥ दोषद्वयपरिहाराय प्रकारान्तरं विधत्ते—"वपाश्रपणीभ्यामन्वारभते तन्नेवान्वारब्धं नेवानन्वारब्धम्" ( तैसं ६ ३ ८ ) इति । याभ्यां दारुमयीभ्यां वपा पच्यते ते वपाश्रपण्यौ ॥ प्रैषमन्त्रमुत्पादयति—"उप प्रेष्य होतर्हव्या देवेभ्य इत्याहेषितं हि कर्म क्रियते" ( तैसं ६.३ ८ ) इति । हे होतः, देवेभ्यो वपादीनि हव्यानि कर्तुमुपप्रेष्य पशुसमीपे शमितॄन् प्रेरय । लोके हि प्रभुणा प्रेषितं कर्म सहसा क्रियते ॥ मन्त्रस्तु स्पष्टार्थ इत्याह—"रेवतीर्यज्ञपतिं प्रियधा विशतेत्याह यथायजुरेवैतत्" ( तैसं ६ ३.८ ) इति ॥

९ तं ति–प्रियाकारेण । १० सं ति–इदानीम् । ११–११ त ति-प–यागार्थमिदं सर्वमपि ।

२९. आ हा–'अपि' नास्ति ।

अन्तरिक्ष सजूर्देवेन (१) वातेनास्य हविषस्त्मना यज समस्य तनुवा भव वर्षीयो वर्षीयसि यज्ञे यज्ञपतिं धाः

अन्तरिक्ष । सजूरिति स–जूः । देवेन (१) । वातेन । अस्य । हविषः । त्मना । यज । समिति । अस्य । तनुवा । भव । वर्षीयः । वर्षीयसि । यज्ञे । यज्ञपतिमिति यज्ञ–पतिम् । धाः ।

छन्दसि " ( पा २.३.६२ ) इति षष्ठी । यजतिर्दानकर्मा । ' उरो ' इति पादादित्वान्निघाताभावे पाष्ठिकमामन्त्रिताद्युदात्तत्वम् ( पा ६.१.१९८ ) । " नामन्त्रिते समानाधिकरणे " ( पा ८.१.७३ ) इति तस्याविद्यमानवत्त्वनिषेधात् परमामन्त्रितं निहन्यते । किञ्च—[v]अस्य पशोः तन्वा शरीरेण [v]सं [v]भव संयुज्यस्व । देवभूतस्याप्यस्य पशोः शरीरं मा हिंसीः । अपि च हे [v]वर्षीयः प्रवृद्धतर श्रोत्रादीन्द्रियसमुदाय, [v]वर्षीयसि प्रवृद्धतरे [v]यज्ञे [v]यज्ञपतिं यजमानं [v]धाः धारय । अविघ्नेन स्थापय । हविष्यमस्य अनुभावय शीघ्रं यज्ञं निर्वर्तय । यद्वा—यज्ञफले स्थापय । याागसाधनद्वारेण यजमानं यज्ञफलभाजं कुरु । अथवा—अस्य हविषो यजेति पूर्वं हविषः प्रार्थना कृता, अधुना तदेव हविरुच्यते । हे हविः, अस्य पशोस्तन्वा संभव पौष्कल्येन संपद्यस्व । पुनरपि तदेवामन्त्र्यते । हे वर्षीयो हविः, वर्षीयसि यज्ञे यागसाधनद्वारेण यज्ञपतिमविघ्नेन स्थापय । ' धाः ' इति दधातेर्लेटि " बहुलं छन्दसि " ( पा २.४.७३ ) इति शपो लुक् । " इतश्च लोपः परस्मैपदेषु " ( पा ३.४.९७ ) इतीकारलोपः । तनुवेति " तन्वादीनां छन्दसि बहुलम् " ( पा ६.४.७७ वा १ ) इत्युवङादेशः । यज्ञपतिशब्द उक्तस्वरः ॥

---

उर इति ॥ कल्पः—" आहवनीयादुल्मुकमादायाऽऽग्नीध्रः [30]पूर्वः प्रतिपद्यते । अग्निना पशुं नयति । उरो अन्तरिक्षेत्यन्तरा चात्वालोत्करावुदञ्चं पशुं नयति " ( आपश्रौ ७.१५.८–१० ) इति । मन्त्रस्त्वेवमाम्नातः—" उरो अन्तरिक्ष सजूर्देवेन वातेनास्य हविषस्त्मना यज समस्य तनुवा भव वर्षीयो वर्षीयसि यज्ञपतिं धाः " इति । अत्रान्तरिक्षशब्देन पशोः श्रोत्रादिच्छिद्रेष्ववस्थित इन्द्रियसमुदाय उपलक्ष्यते ॥ हे [v]उरो [v]अन्तरिक्ष विस्तीर्णेन्द्रियसमुदाय, अस्य पशोरभिमानिदेवेन [v]वातेन प्राणवायुना [v]त्मना जीवात्मना च [v]सजूः सह [v]हविषो [v]यज हविर्देहि । किंचास्य पशोः [v]तनुवा भविष्यता देवशरीरेण [v]सं [v]भव संयुज्यस्व । हे [v]वर्षीयः अतिविस्तीर्णेन्द्रियसमुदाय, [v]वर्षीयसि अतिविस्तीर्णे [v]यज्ञे [v]यज्ञपतिं यजमानं [v]धाः स्थापय । मन्त्रोऽयमुपेक्षितः ॥ विधत्ते—" अग्निना पुरस्तादेति रक्षसामपहत्यै " ( तैसं ६.३.८ ) इति । उल्मुकेन सह पशोः पुरस्तादाग्नीध्रो गच्छेत् ॥

---

३०. तं–पूर्वम् ।

पृथिव्याः संपृचः पाहि नमस्त आतानानर्वा

पृथिव्या । सपृच इति स-पृचः । पाहि । नमः । ते । आतानेत्या-तान । अनर्वा ।

पशुनिहननस्थाने निहन्यमानाय बर्हिरपास्यति 'पृथिव्या' इति । प्रस्तरनिधाने व्याख्यातम् (तैस १ १.२)। अत्र वा पृथिवीसपर्कदोषात् पशुं रक्ष इति । "पृथिव्या सपृचः
५ पाहीति बर्हिरुपास्यत्यस्कन्दायास्कन्नं हि तद्यद्बर्हिषि स्कन्दति" (तैस ६ ३.८) इति च ब्राह्मणम् । यद्वा—[11]पृथिव्या सपर्कादन्यान्[11] पशून् रक्षेति ॥

पत्नीमादित्यमुदीक्षयति—'नमस्त आतान' इति ॥ हे [?]आतान आदित्य, तुभ्य [?]नमः इदमस्तु । आतन्वन्ति विस्तारयन्ति विश्व जगदित्याताना: आदित्यरश्मयः । "आदित्यस्य वै रश्मय आतानास्तेभ्य एव नमस्करोति" (तैस ६ ३ ८) इति ब्राह्मणम्, "पश्चाल्लोका वा
१० एषा प्राच्युदानीयते यत्पत्नी" (तैस ६ ३ ८) इति च । तनोतेराङ्पूर्वात् पचाद्यच् (पा ३ १ १३४)। यद्वा—आतन्यन्ते विस्तार्यन्ते भास्करेणेत्याताना रश्मयः । कर्मणि घञ् (पा ३ ३ १९)। थाथादिस्वरेणोत्तरपदान्तोदात्तत्वम् (पा ६.२.१४४)। अत्र तु तद्वानादित्य एवातान इत्युच्यते ॥

पृथिव्या इति ॥ कल्पः—"अभिपर्यग्निकृते देश उल्मुक निदधाति । स शामित्रः । [?]दक्षिणेन प्रत्यञ्च पशुमवस्थाप्य पृथिव्या संपृच पाहीति [31]तस्याधस्तात् बर्हिरुपास्यत्युपाकरणयोरन्यतरत्"
१५ (आपश्रौ ७ १९ २-४) इति । हे बर्हिः, [32]पशुं [33]भूसंपर्कात् पालय[33] ॥ विधत्ते—"पृथिव्या संपृचः पाहीति बर्हिरुपास्यत्यस्कन्दायास्कन्नं हि तद्यद्बर्हिषि स्कन्दत्यथो बर्हिषदमेवैनं करोति" (तैसं ६ ३ ८) इति । पशुमवघ्नन् यदङ्ग बर्हिषि स्कन्देत् तद्भूमौ [34]पतनाभावादस्कन्नमेव । अथ [35]कथचिदध [36]पतितेऽप्येनं बर्हिषदमेव करोति ॥ विधत्ते—"पराङा वर्ततेऽध्वर्युः पशो संज्ञप्यमानात्
२० पशुभ्य एव तन्निह्नुत आत्मनोऽनाव्रस्काय" (तैसं ६ ३ ८) इति । अध्वर्युर्मार्यमाणं पशुमदृष्ट्वा तत पराङ्मुखः [37]प्रत्यावर्तते । तेन पशुभ्यो निह्नुते पशुं न [38]मारयामीत्येवमपलपति । स चापलापः स्वस्य दोषाभावाय भवति ॥ वेदन प्रशंसति—"गच्छति श्रियं प्र पशूनाप्नोति य एवं वेद" (तैस ६.३.८) इति ॥ अत्र सूत्रम्—"प्रत्यक्शिरसमुदीचीनपादम् । अमायुं कृण्वन्तं संज्ञपयतेत्युक्त्वा पराङावर्ततेऽध्वर्युः" (आपश्रौ ७ १६ ५-६) इति ॥

२५ नमस्त इति ॥ कल्पः—"तत प्रतिप्रस्थाता पत्नीमुदानयति । नमस्त आतानेति पत्न्यादित्यमुपतिष्ठते" (आपश्रौ ७.१८.१-२) इति । आ समन्तात् तानो व्याप्तिर्यस्य सूर्यरश्मेः स [?]आतान ॥ एतदेव दर्शयति—"पश्चाल्लोका वा एषा प्राच्युदानीयते यत्पत्नी नमस्त आतानेत्याहाऽऽदित्यस्य वै रश्मय आतानास्तेभ्य एव नमस्करोति" (तैस ६.३.८) इति । पश्चात् प्रतीच्यां दिशि

११-११. त ति-पृथिवीसपृक्तानन्यान्, भै-पृथिवीसांपर्कादन्यान् ।

३० ३१. आ क हा-'तस्याधस्तात्' नास्ति । ३२. आ र हा-'पशुम्' नास्ति । ३३-३३ क-भूमिसपर्कात् रक्षस्व । ३४. आ हा-अपतनाद° । ३५ त-किंचिदथ । ३६. तै-पतति चेदप्येनम्, भा-पतितेऽप्येनम् । ३७. र-पर्यावर्तते । ३८. तै-मारयामीत्ये° ।

प्रेहि घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेणा-

प्रेति । इहि । घृतस्य । कुल्याम् । अन्विति । सह । प्रजयेति प्र–जया ।

सह । रायः । पोषेण ।

प्राचीमुदानयन् वाचयति—' अनर्वा प्रेहि ' इति ॥ कुत्सितम् अरणं गमनमर्वा । " भ्रातृव्यो वा अर्वा " ( तैसं ६.३.८ ) इति च ब्राह्मणम् । " अवद्यावमाधमार्वरेफाः कुत्सिते " ( उ ७४२ ) इत्यर्तेः कनिन्प्रत्ययोऽर्वादेशश्च निपात्यते । तद्रहित अनर्वा । बहुव्रीहौ " नञ्-सुभ्याम् " ( पा ६.२.१७२ ) इत्युत्तरपदान्तोदात्तत्वम् । यस्मात् त्वम् [v]अनर्वा अनवद्या सदा भर्तुर्वशंगता तस्मात् [v]प्रेहि प्राचीं गच्छ । प्राच्यां हि स्वर्गो लोकः । प्रशब्देन प्राक्त्वं द्योत्यते । यथा " प्रेयमगात् " ( तैसं १.१.२ ) इति । अधुना परमसुखस्वरूपस्वर्गप्राप्तिहेतुत्वं गमनस्याह— ' घृतस्य कुल्यामनु ' इति । घृतकुल्योपलक्षितस्वर्गाख्यस्थानविशेषो घृतकुल्याशब्देनोच्यते, तामनु गच्छ तत्र गच्छेत्यर्थः । अनोर्लक्षणे कर्मप्रवचनीयत्वम् ( पा १.४.८४ ) । किमेकाकिनी सती ? नेत्याह— [v]सह [v]प्रजया [v]सह [v]रायस्पोषेण गच्छ । यद्वा— किं केवलं घृतकुल्योपलक्षितं स्थानमेव प्राप्यते ? नेत्याह । सह प्रजया सह रायस्पोषेण प्रजां धनपोषं च प्राप्नुहीति । प्रजाशब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः[13] ( पा ६.२.१३९ ) । " ऊडिदम् " ( पा ६.१.१७१ ) इति रैशब्दात् परस्या विभक्तेरुदात्तत्वम् ॥

निर्मिता शाला [39]लोको निवासस्थानं यस्याः सा पश्चाल्लोका । तादृशी यदा प्राचीं गच्छति तदानीं-साभिमुख्येन सूर्यरश्मिर्भवतीति तन्नमस्कारो युक्तः ॥

अनर्वेति ॥ बौधायनः—" अथैनामन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रमय्य प्राचीमुदानयन् वाचयति अनर्वा प्रेहि घृतस्य कुल्यामनु सह प्रजया सह [40]रायस्पोषेणेत्यागतामध्वर्युरप्सु वाचयत्यापो देवीः शुद्धायुवः शुद्धा यूयं देवाꣳ ऊढ्वꣳ शुद्धा वयं परिविष्टाः परिवेष्टारो वो भूयास्मेति " ( बौश्रौ ४.६ ) इति । आपस्तम्बः—" अनर्वा प्रेहीति प्राचीमुदानयत्यनुमन्त्रयत इत्येके । आपो देवीः शुद्धायुव इति चात्वाले पत्न्यपोऽवमृशति " ( आपश्रौ ७.१८.३–४ ) इति ॥ हे पत्नि, त्वम् [v]अनर्वा शत्रुरहिता सती घृत-प्रवाहमनु [v]प्रजया [v]सह धनपुष्ट्या च [v]सह [v]प्र याहि । [v]घृतस्य [v]कुल्याम् इत्यनेन सर्ववस्तुसंपूर्णं स्थानमुपलक्ष्यते । हे [v]आपः देव्यः, [v]यूयं [v]देवान् [v]ऊढ्वं यागप्रदेशं प्रापयत । कीदृश्यो यूयम् ? [v]शुद्धायुवः शुद्धिमस्मदीयामिच्छन्तीति शुद्धायुवः । यूयं तु स्वत एव शुद्धाः । [v]वयम् अपि युष्माभिः परिवेष्टिताः शुद्धाः सन्तो युष्माकं [v]परिवेष्टारो [v]भूयास्म ॥ एतौ मन्त्रौ व्याचष्टे—" अनर्वा प्रेहीत्याह भ्रातृव्यो वा अर्वा भ्रातृव्यापनुत्त्यै घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेणेत्याहाऽऽशिषमेवैतामा शास्त आपो देवीः शुद्धायुव इत्याह यथायजुरेवैतत् " ( तैसं ६.३.८ ) इति ।

१३. तं.ति–"स्वरत्वेनान्तोदात्तः ।

३९. इ.क.पा.भां.हा–लोक° । ४०. तं–रायस्पोषेणेत्याह तामध्व° ।

(margin line numbers: ५, १०, १५, २०, २५, ३०)

-ऽऽपों देवीः शुद्धायुवः शुद्धा यूयं देवाꣳ ऊढ्वꣳ
शुद्धा वयं परिविष्टाः परिवेष्टारों वो भूयास्म

[ देवेन चतुश्चत्वारिꣳशच्च । ] ॥ ८ ॥

आपः । देवी । शुद्धायुव इति शुद्ध–युवः । शुद्धाः । यूयम् । देवान् । ऊढ्वम् । शुद्धाः ।
५ वयम् । परिविष्टा इति परि–विष्टाः । परिवेष्टार इति परि–वेष्टारः । वः । भूयास्म ॥ ८ ॥
[ मैसं १·२·१५–१६, कास ३ ५–६, कपिस २·१२–१३, वास ६·८–१३ ]

अपोऽवेक्षमाणा पत्नीं वाचयति—'आपो देवी' इति चतुष्पदयानुष्टुभा विद्युन्मालया ॥
हे आप देवी देव्य. । " वा छन्दसि " ( पा ६ १·१०६ ) इति पूर्वसवर्णदीर्घत्वम् । शुद्धा-
युव शुद्धा आप शुद्धान् देशकालादीनिच्छन्ति आत्मनः परेषां वा । " छन्दसि परेच्छायामपि "
१० ( द्र पाभा ३ १ ८ ) इति क्यच् । " न छन्दस्यपुत्रस्य " ( पा ७ ४·३५ ) इतीत्वप्रतिषेधे
" अकृत्सार्वधातुकयो " ( पा ७ ४·२५ ) इति दीर्घ । " क्याच्छन्दसि " ( पा ३ २·१७० )
इत्युप्रत्यय । " जसादिषु वावचन प्राङ्णौ चङ्युपधाया " ( पा ७ ३·१०९ वा १ ) इति
" जसि च " ( पा ७ ३ १०९ ) इति गुणो न क्रियते । अथवा—अब्जाते. शुद्धायुरिति सज्ञा,
व्युत्पत्तिमात्र तु क्रियते । तत्र " अप्राणिजातेश्चारज्ज्वादीनाम् " ( पा ४·१·६६ वा १ )
१५ इत्यूङ्प्रत्यय । " तन्वादीनां छन्दसि " ( पा ६·४ ७७ वा १ ) इत्युवङ् । " विभाषितं
विशेषवचने बहुवचनम् " ( पा ८·१ ७४ ) इति आप इत्यस्यामन्त्रितस्याविद्यमानवत्त्वनिषेधात्
परमामन्त्रितद्वय निहन्यते ( पा ८ १·१९ ) । शुद्धा. स्वयमपि सर्वदा शुद्धाः यूय
देवान् पशोर्नागादीनीन्द्रियाणि ऊढ्वम् वहत स्वं स्वं कारणस्थानं प्रापयत । यद्वा—
इमं पशुं देवान् ऊढ्व वाहयत प्रापयत, यथा देवा भजन्ते तथा कुरुत । वहतिः स्वरितेत् ।
२० तस्माण्ण्यन्ताल्लोटि " बहुल सज्ञाछन्दसो " इति णिलुक् ( द्र. उ १९० ), " बहुल छन्दसि "
इति शपो लुक् ( पा २·४ ७३ ) । ङित्यपि बहुलवचनात् " वचिस्वपि " ( पा ६·१ १५ )
इत्यादिना सप्रसारण, टुत्वादि, " ढ्लोपे पूर्वस्य दीर्घोऽण " ( पा ६ ३·१११ ) इति दीर्घत्वम् ।
यद्वा—ऊहतेरनुदात्तेत. प्रापिकर्मणो लोटि पूर्ववच्छपो लुक् ( पा २ ४·७३ ) । यद्वा— देवान्
प्रति ऊढ्व यथेम पशुं देवा भुञ्जते तथा ऊढ्व यतध्वमिति यावत् । अत्र देवानित्यत्र नकारस्य
२५ सहितायाम् " आतोऽटि नित्यम् " ( पा ८·३·३ ) इति रुत्वम् । " अत्रानुनासिक. पूर्वस्य तु वा "
( पा ८·३·२ ) इत्यनुनासिक. । " अनुनासिकात् परोऽनुस्वार " ( पा ८ ३·४ ) । वयमपि
युष्माभिः परिविष्टाः सर्वतोऽनुप्रविष्टा. अत एव शुद्धा युष्मदवेक्षणादियोग्याः वः युष्माकं
परिवेष्टार. सर्वत परिवेष्टारो भूयास्म अवेक्षणादिना । " गतिरनन्तर " ( पा ६ २·४९ ) इति
परिविष्टशब्दे पूर्वपदप्रकृतिस्वरत्वम् । परिवेष्टृशब्दे कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६·२·१३९ ) ॥
३० ॥ इति तृतीयेऽष्टमोऽनुवाक ॥

१४–१४ मै–प्रापयथ स्वकारणस्थानम् । १५ मै–यत्यादिना । १६ तं ति–अवेक्षणनियो-
गान् । १७ तं ति–प्रवेष्टार । १८. मै–परिशब्दे ।

पशोः संज्ञपनम् ]

अत्र विनियोगसंग्रहः —

" आ ददे रज्जुमादाय ऋत बध्नाति तं पशुम् ।
धर्षं यूपे नियुङ्क्तेऽद्भ्यः प्रोक्षयापां पाययेदपः ॥ १ ॥
स्वात्तं सर्वत्र संप्रोक्ष्य सं ते मूर्ध्नि समञ्जनम् ।
सं यांसयोः सं यं पश्चाद्घृते सस्वरुशास्रके ॥ २ ॥ ५
रेव प्रवण्युपस्पर्शं उरो उत्तरतो नयेत् ।
पृथि बर्हिस्त्वस्याप्य नमः पत्नी रविं भजेत् ॥
अभ पत्नीं नयेदापः स्पृशेत् मन्त्रास्तु षोडश " ॥ ३ ॥ इति ॥

अथ मीमांसा ॥ द्वितीयाध्यायस्य प्रथमपादे चिन्तितम् —

" गच्छतामिति शब्दस्याऽनुषङ्गोऽस्ति न वोपरि । १०
सं यज्ञपतिरित्यत्र योग्यत्वात् सोऽस्ति पूर्ववत् ॥
तदेकवचनं मध्ये मन्त्रेऽङ्गानीत्यनेन हि ।
नान्वेति तद्व्यवायेन नोपर्यप्यनुषज्यते " ॥

( जैन्या २·१·३८–३९ ) इति ॥

अग्नीषोमीयपशौ श्रूयते— " सं ते प्राणो वायुना गच्छताम् सं यजत्रैरङ्गानि सं यज्ञपतिराशिषा " १५ ( तैसं १·३·८ ) इति । अयमर्थः — भोः पशो, तव [41]प्राणवायुर्वायुना संगच्छतां, तव हृदयाद्यङ्गानि यागविशेषैः संयुज्यन्ताम्, यज्ञपतिराशिषा संयुज्यताम् इति । तत्र ' यज्ञपतिः ' इत्यस्मिंस्तृतीयमन्त्रे समित्युपसर्गस्य क्रियापदाकाङ्क्षत्वात् प्रथममन्त्रगतस्य गच्छतामिति पदस्यैकवचनान्तस्य यज्ञपतिशब्देनान्वेतुं योग्यत्वात् पूर्ववद् बुद्धिस्थत्वेन संनिहितत्वादाकाङ्क्षासंनिधियोग्यतानां सद्भावेन [42]तत्क्रियापदमनुषज्यत इति प्राप्ते ब्रूमः —मध्यममन्त्रे बहुवचनान्तेनाङ्गानीत्यनेनान्वेतुमयोग्यत्वात् तद्व्यवायेन बुद्धिसंनिधिलोपान्नास्त्यनुषङ्गः । ततो द्वितीयतृतीयमन्त्रयोर्यथोचितं वाक्यशेषोऽध्याहर्तव्यः ॥ २०

अष्टमाध्यायस्य प्रथमपादे चिन्तितम् —

" न पशावैष्टिकः[43] स्यान्न न कपालाद्यभावतः ।
स्याद्व्यक्तद्रव्यदेवत्वप्रयाजत्वसुच्यसाम्यतः " ॥ ( जैन्या ८·१·८ ) इति ॥

अग्नीषोमीयपशावैष्टिको विध्यन्तो नास्ति । कुतः ? पूर्ववदत्र निर्वापकपालादिलिङ्गाभावादिति चेत् । नैवम् । " आग्नेयमष्टाकपालम् " ( तैसं १·३·८, २·२·५ ) इत्यत्रोत्पत्तिवाक्ये यथा द्रव्यदेवते व्यक्ते तथा " अग्नीषोमीयं पशुम् " इत्यत्रापि । न तु ' सोमेन यजेत ' इत्यत्रेव देवताया अव्यक्तत्वम् । तदेतद्व्यक्तद्रव्यदेवत्वमेकं लिङ्गम् । " एकादश प्रयाजान् यजति " ( तैसं ६·३·७ ) इति प्रयाजवत्त्वं द्वितीयम् । " सुच्यमाघार्यं जुह्वा पशुमनक्ति " ( द्र. तैसं ६·३·७ ) इत्याघाराञ्जने लिङ्गान्तरे । आलम्भो लिङ्गान्तरम्, इष्टावपि ' ईषामालभते ' इति दर्शनात् । तस्मादस्ति पशावैष्टिको विध्यन्तः ॥ २५ ३०

---

४१. तै–प्राणो वायुः वायुवायुना । ४२. आ.क– ' तत् ' नास्ति । ४३. आ.इ.पी.मां.हा– पशौ चोदकम् ।
तैसं २८॥

पञ्चमाध्यायस्य प्रथमपादे चिन्तितम्—

" प्रयाजेष्वपकर्षोऽनुयाजेषूत्कर्ष इत्ययम् ।
श्रुतमात्रे तदन्त्येषु तदाद्येषु च वाऽग्रिमः ॥
अन्त्येषां मुख्यकालत्वात् नैव स्युरुक्रमशक्तितः ।
प्रयाजान्ते ह्यनूयाजादिके चैतौ समूहके " ॥ ( जैन्या ५ १ २४–२५ ) इति ॥

अग्नीषोमीयपशौ प्रयाजानामपकर्षः श्रूयते—" छिन्दन्ति पशुं प्रयजन्ति " ( द्र आपश्रौ ७ १४ ६ ) इति । प्रकृतौ हविष्यासादिते पश्चात् प्रयाजा इज्यन्ते । इहापि पशुसंज्ञपनादूर्ध्वं हविष्यासादिते पश्चादेव प्रयाजाश्चोदकेन प्राप्ताः । ते चात्र वचनाज्जीवत्येव पशावपकृष्यन्ते । तथा सवनीयपशावनूयाजानामुत्कर्षो श्रूयते— " आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति " इति । तत्र [४४]प्रयाजमात्रस्यापकर्षः श्रुतः । अनूयाजमात्रस्य चोत्कर्षः । तावुभौ श्रुत्यनुसारेण तथैवाङ्गीकर्तव्यौ । यदि प्रयाजान्तस्याङ्गकलापस्यापकर्षः स्यात् तदा प्रयाजेभ्यः पूर्वभाविनामाघारसामिधेन्यादीनां ततोऽप्यपकर्षादव्यन्तव्यवहितानां प्रधानकालीनत्वं न स्यात् । प्रयाजमात्रेऽपकृष्टे तत्पाश्चात्यानां मुख्यकालीनत्वं न लुप्यते । एवमनूयाजमात्र उत्कृष्टे तत ऊर्ध्वभाविनां सूक्तवाकशंयुवाकादीनामनुत्कर्षात् प्रधानसंनिधिर्न विनश्यति । तस्मात् प्रयाजमात्रस्यापकर्षोऽनूयाजमात्रस्योत्कर्ष इति प्राप्ते ब्रूमः—प्रकृतौ पदार्थानुष्ठानक्रमस्य क्लृप्तत्वात् तत्प्रमाणमेव पदार्थानां चोदकप्राप्ति-वशादुत्क्रमे सति पूर्वेण पदार्थेनोत्तरपदार्थस्य बुद्धावनुपस्थापितत्वादनुष्ठानमेव लुप्येत । तस्मात् प्रयाजान्तस्य कर्मसमूहस्यापकर्षः, अनूयाजादेरङ्गसमूहस्योत्कर्षः ॥

तत्रैव तृतीयपादे चिन्तितम्—

" एकादश-प्रयाजाः किं प्रत्येकं स्यादुतान्यथा ।
संख्यावृद्धिरिहाऽन्योऽऽस्तु प्रतिमुख्यं गुणो यतः ॥
प्रत्येकं समुदाये वा स्वरूपेण न सिध्यति ।
संख्यावृत्तिः प्रयोगात्तु साऽऽवृत्त्या संभविष्यति " ॥

( जैन्या ५ ३ १–२ ) इति ॥

अग्नीषोमीयपशौ श्रूयते—" एकादश प्रयाजान् यजति " ( तैसं ६ ३ ७ ) इति । तत्र चोदकप्राप्तेषु पञ्चसु प्रयाजेष्वेकैकस्य [४५]प्रयाजस्यैवमेकादशत्वसंख्या युक्ता । कुतः ? प्रयाजानुद्दिश्य संख्यागुणे विहिते सति प्रतिप्रधानं गुणस्याभ्युपेयत्वादिति[४६] प्राप्ते ब्रूमः—न ह्येकैकस्य प्रयाजस्य स्वरूपमात्रमुपनीयेयमेकादशत्वसंख्या संपादयितुं शक्या । नापि [४७]पञ्चप्रयाजसमुदायस्य स्वरूपे साऽस्ति । तस्मात् प्रयोगद्वारा सा संपादनीया । प्रयोगस्य चाऽऽवर्तयितुं शक्यत्वात् । पञ्च प्रयाजान् द्विरावर्त्य पुनरपि चरमप्रयाजे सकृदावर्तिते सत्येकादशत्वसंख्या[४८] संपद्यते ॥

अथ छन्दः ॥ ' उरो अन्तरिक्ष ' इति त्रिष्टुप् । ' आपो देवीः शुद्धायुवः ' इत्यनुष्टुप् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

४४ ड ज पा मा हा–प्रयाजमात्रापकर्षः । ४५ त–प्रयाजस्यैवमेका° । ४६ त–°भ्युपेतत्वादिति । ४७ आ ते भर–' पञ्च° ' नास्ति । ४८ ड ज पा मा हा–एकादशसंख्या ।

वाक्त॒ आ प्या॑यतां प्रा॒णस्त॒ आ प्या॑यतां॒ चक्षु॑स्त॒ आ प्या॑यता॒ꣳ॒ श्रोत्रं॑ त॒ आ प्या॑यतां॒ या ते॑ प्रा॒णाञ्छुग्ज॒गाम॒ या चक्षु॒र्या श्रोत्रं॒ यत्ते॑ क्रू॒रं यदास्थि॑तं॒ तत्त॒ आ प्या॑यतां॒ तत्त॑ ए॒तेन॑ शुन्धतां॒ नाभि॑स्त॒ आ प्या॑यतां पा॒युस्त॒ आ प्या॑यता॒ꣳ॒

वाक्। ते॒। एतु॑। प्यायताम्। प्राण इति॑ प्र-अ॒नः। ते॒। एतु॑। प्यायताम्। चक्षुः। ते॒। एतु॑। प्यायताम्। श्रोत्र॑म्। ते॒। एतु॑। प्यायताम्। या। ते॒। प्राणानिति॑ प्र-अनान्। शुक्। जगाम॑। या। चक्षुः। या। श्रोत्र॑म्। यत्। ते॒। क्रूर॑म्। यत्। आस्थि॑तमित्या-स्थितम्। तत्। ते॒। एतु॑। प्यायताम्। तत्। ते॒। एतेन॑। शुन्धताम्। नाभिः। ते॒। एतु॑। प्यायताम्। पायुः। ते॒। एतु॑। प्यायताम्। ९

पत्नी अनुपूर्वं पशोः प्राणानाप्याययति। तत्र वाचमाप्याययति—'वाक् ते' इति ॥ हे पशो, त्वदीया वाक् वाक्स्थानम् आ प्यायतां शुध्यतु। वृद्धिहेतौ शुद्धौ प्यायतिर्लक्षणया वर्तते। यद्वा—जन्मान्तरे देवत्वं गतस्य या तव वाक् सा वर्धताम्। "पशोर्वा आलब्धस्य प्राणान्" (तैसं ६·३·९) इत्यादि ब्राह्मणम् ॥ १०

प्राणानाप्याययति—'प्राणस्ते' इति ॥ स्पष्टम्। थाथादिस्वरेण प्राणशब्दोऽन्तोदात्तः (पा ६·२·१४४)॥

चक्षुराप्याययति—'चक्षुस्ते' इति ॥ गतम् ॥ १५

श्रोत्रमाप्याययति—'श्रोत्रं ते' इति ॥ सुबोधम् ॥

पुनर्वागादीनभिमृशति—'या ते प्राणान्' इति बृहत्या पञ्चपदया अष्टर्तुवसुषड्ढ्याक्षरया ॥ हे पशो, त्वदीयान् प्राणान् या शुक् जगाम प्राप या चक्षुः जगाम या च श्रोत्रं जगाम, यत् च ते क्रूरम् अस्माभिः कृतम्। किं पुनस्तत्? निकर्तनमेव। यत् चान्यप्रक्षः-प्रभृति मांसलोभेन त्वाम् आस्थितं आश्रित्य स्थितम्। "गतिरनन्तरः" (पा ६·२·४९) इति पूर्वपदप्रकृतिस्वरत्वम्। तत् ततः। "सुपां सुलुक्" (पा ७·१·३९) इति पञ्चम्या लुक्। ततः शुचः क्रूरादास्थातुश्च त्वदीयं प्राणादिकं सर्वम् आ प्यायतां तस्मादनिष्टरूपात् निर्मुक्तं वर्धताम्। किंच—तस्मादेव निर्मुक्तम् एतेन प्रक्षालनेन शुन्धतां शुद्धं भवतु। व्यत्ययेनात्मनेपदम् (पा ३·१·८५)॥ २०

नाभिं संमृशति—'नाभिस्ते' इति ॥ गतम् ॥ २५

पायुं संमृशति—'पायुस्ते' इति ॥ गतमेव ॥

अष्टमेऽनुवाके संज्ञपनमुक्तम्। संज्ञपितस्य पशोर्वपोत्खेदो नवमेऽभिधीयते।

वागिति ॥ बौधायनः—"सानुपूर्वं पशोः प्राणानाप्याययति। वाक्त आ प्यायतामिति वाचम्। प्राणस्त आ प्यायतामिति प्राणम्। चक्षुस्त आ प्यायतामिति चक्षुः। श्रोत्रं त आप्यायतामिति श्रोत्रम्।

१. तं.ति.पं–अद्भिः। २. मै–वा। ३. मै–'सा' नास्ति। ३०

१. हा–नवमे संज्ञपितस्य। २–२. आ.हा–पशोर्वपोत्खेदनमभिधीयते।

शुद्धाश्चरित्राः शमुद्भ्यः ( १ ) शमोषधीभ्यः शं पृथिव्यै शमहोभ्यामोषधे

शद्धा । चरित्रा । शम । अद्भ्य इत्यत्--भ्य ( १ )। शम् । ओषधीभ्य इत्योषधि--भ्य ।
शम् । पृथिव्यै । शम् । अहोभ्यामित्यहः--भ्याम् । ओषधे ।

सप्रगृह्य पद प्रक्षालयति सहैव ' शुद्धा ' इति ॥ चरित्रा चरणा । " अर्तिलूधू-
५ सूखनसहचर इत्र " ( पा ३ २ १८४ ) इतीत्रप्रत्यय । ते शुद्धा अनेन क्षालनेन भव
न्त्विति शेष । शं सुख शान्तिर्वा । शाम्यतेर्विच् ( पा ३ २ ७५ )। अद्भ्य ओषधीभ्य
पृथिव्याश्च हेतुभ्य । अस्य पशो श भवत्विति शेष । तादर्थ्ये वा चतुर्थी ( पा २ ३ १३
वा १ )। अवाचयं शमस्त्विति । " ऊडिदम् " ( पा ६ १ १७१ ) इत्यादिना अद्भ्यो
विभक्तेरुदात्तत्वम् । ओषधिशब्दो दासीभारादि ( पा ६ २ ४२ )। " ओषधेश्च विभक्ताव
१० प्रथमायाम् " ( पा ६ ३ १३२ ) इति दीर्घ । " उदात्तयणो हल्पूर्वात् " ( पा ६ १ १७४ )
इति पृथिव्या विभक्तेरुदात्तत्वम् ॥

अवशिष्टा दक्षिणतोऽनुपृष्ठमपो निनयति---' शमहोभ्याम् ' इति ॥ अहोभ्याम् अहो
रात्र्या च[4] हेतुभ्यां पृथिव्या श भवतु ॥ कुत एतत् ? तस्या अनन्तरप्रकृतत्वात् । " अहो
रात्राभ्यामेव पृथिव्यै शुच शमयति " ( तैस ६ ३ ९ ) इति च ब्राह्मणम् । अह सहचरिता रात्रिरप्यह
१५ इत्युच्यते । तत एकशेष ( पा १ २ ६९ )। यद्वा---व्यत्ययेन विरूपयोरप्येकशेष प्रवर्तते
( पा १ २ ६४ वा २३ )। " सा प्राणेभ्योऽधि पृथिवीम् " ( तैस ६ ३ ९ ) इत्यादि ब्राह्मणम् ॥

पत्नीनेत्र[3] पुन समृशति । वा ते प्राणाञ्छुग्जगाम वा चक्षुर्वा श्रोत्रम् यत्ते क्रूर यदास्थित तत्त आ
प्यायता तत्त एतेन शुन्धतामिति । नाभिस्त आ प्यायतामिति नाभिम् । पायुस्त आ प्यायतामिति
पायुम् । सप्रगृह्य पद प्रक्षालयति शुद्धाश्चरित्रा शमद्भ्य शमोषधीभ्य श पृथिव्या इति । शमहोभ्या
२० मिति शिष्टा दक्षिणतोऽनुपृष्ठ निनयेत्* " ( बौश्रौ ४ ६ ) इति । आपस्तम्बोऽत्र कंचिद्विशेषमाह---" वा
ते प्राणाञ्छुग्जगामेति हृदयदेशम् । । शुद्धाश्चरित्रा इति पादान् । एकैकमाप्याय्य नयति
शमद्भ्य इति पुरा स्तोकानां भूमे प्रापणात् । शमोषधीभ्य श पृथिव्या इति भूम्या शेष निनीय
( आपश्रौ ७ १८ ८-१२ ) इति ॥ हे पशो, त्वदीय वागिन्द्रिय [illegible]परित्यागशोक सत्यज्य स्वाकारप्य
माणदेवतादेहे सुखेन आ प्यायता वर्धताम् । एवमन्यत्रापि । किंच निर्याणकाले हृत्पुण्डरीक
२५ सकुचितास्तव प्राणवायुश्चक्षुरादीन्द्रियाणि च य शोको जगाम, यच्च दन्धनमुखनिरोधमारिक क्रूरम्
अस्माभि कृत, यद् अपि छेदादिकम् आस्थित कर्तुमुपस्थित तव तत् सर्वम् आ प्यायता शाम्यतु ।
किं च तव तत् प्राणादिकम् एतेन जलेन शुन्धता भाविदेहप्रवेशाय शुद्ध भवतु । चरत्येभिरिति चरित्रा
पादास्तेऽपि शुद्धा सन्तु । याभिरद्भि प्रोक्षण क्रियते, याश्चौषधयो बर्हि स्वरूपेण पशोरध स्थापिता,

४ त ति--अतिशिष्टा । ५-५ त ति--अहो रात्रैश्च । , ---

३० ३ आ क हा--तानेत्र । ४ ड उ पा भो हा--प्रगृह्य, क--सगृह्य । *बौश्रौसूत्रे ' निनयति ' ।
५. ड उ पा भो हा-- निर्वाण ।

**त्राय॑स्वैनꣳ स्वधि॑ते मैनꣳ॑ हिꣳसी॒ रक्ष॑सां भा॒गो॑ऽसी॒दम॒हꣳ रक्षो॑ऽध॒मं तमो॑ नयामि॒ यो॑ऽस्मान् द्वे॒ष्टि यं च॑ व॒यं द्वि॒ष्म इ॒दमे॑नमध॒मं तमो॑**

त्राय॑स्व । ए॒न॒म् । स्वधि॑त॒ इति॒ स्व—धि॒ते । मा । ए॒न॒म् । हि॒ꣳसीः । रक्ष॑साम् । भा॒गः । अ॒सि । इ॒दम् । अ॒हम् । रक्षः॑ । अ॒ध॒मम् । तमः॑ । न॒या॒मि । यः । अ॒स्मान् । द्वेष्टि॑ । यम् । च॒ । व॒यम् । द्वि॒ष्मः । इ॒दम् । ए॒न॒म् । अ॒ध॒मम् । तमः॑ । ५

वपाग्रहणदेशे प्राचीनाग्रं बर्हिर्निदधाति—' ओषधे त्रायस्वैनम् ' इति ॥ व्याख्यातम् ( तैसं १.३.५ ) ॥

स्वधितिं निदधाति—' स्वधिते मैनं हिꣳसीः ' इति ॥ व्याख्यातमेव ( तैसं १.३.५ ) ॥

उपाकरणबर्हिषोर्मूलं लोहितेनाङ्क्त्वा इमां दिशं निरस्यति—' रक्षसां भागोऽसि ' इति ॥ रक्षसां भागः त्वम् असि । भागशब्दः " कर्षात्वतः " ( पा ६.१.१५९ ) इत्यन्तोदात्तः । १० यत् पुनरिह लोहितभक्षणे व्यापृतं रक्षः तत् इदम् अधमं निकृष्टं तमः नरकम् अहम् अध्वर्युः नयामि प्रापयामि । किंच—यः अस्मान् द्वेष्टि यं च वयं द्विष्मः तमप्येनं द्वेष्टारं द्वेष्यं च इदम् एव प्रसिद्धम् अधमं तमः नरकाख्यं नयामि । " द्वौ वाव पुरुषौ " ( तैसं ६.३.९ ) इत्यादि ब्राह्मणम् ॥

या च पृथिवी क्रियमाणं पशुं विसर्ति, यौ चाहोरात्रौ [६]पशुमारणकालतया स्थितौ[६], तेषां सर्वेषां शं १५ सुखं भवतु ॥ शोकप्रसक्तिं दर्शयन् व्याचष्टे—" पशोर्वा आलब्धस्य प्राणाञ्छुगृच्छति वाक्त आ प्यायतां प्राणस्त आ प्यायतामित्याह प्राणेभ्य एवास्य शुचꣳ शमयति " ( तैसं ६.३.९ ) इति ॥ [७]शुग्व्यथां विधत्ते—" सा प्राणेभ्योऽधि पृथिवीꣳ शुक् प्र विशति शमहोभ्यामिति नि नयत्यहोरात्राभ्यामेव पृथिव्यै शुचꣳ शमयति " ( तैसं ६.३.९ ) इति । प्राणेभ्योऽपनीता शुक् पृथिवीमधिष्ठाय तदीयदेवताशरीरं[८] प्रविशति । एवं कालादौ प्रवेशः । प्रविष्टायाः [९]शुचः शान्तिर्निनयनेन भवति ॥ २०

ओषध इति ॥ कल्पः—" ओषधे त्रायस्वैनमित्युपाकरणयोरवशिष्टं[१०] दक्षिणेन[११] नाभिमन्तर्धाय स्वधिते मैनꣳ हिꣳसीरिति स्वधितिना पार्श्वतस्तिर्यगाच्छ्यति " ( आपश्रौ ७.१८.१२ ) इति ॥ ' मा हिꣳसीः ' इत्येतस्याभिप्रायमाह—" ओषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसीरित्याह वज्रो वै स्वधितिः शान्त्यै " ( तैसं ६.३.९ ) इति ॥ विधत्ते—" पार्श्वत आच्छ्यति मध्यतो हि मनुष्या आच्छ्यन्ति तिरश्चीनमाच्छ्यत्यनूचीनꣳ हि मनुष्या आच्छ्यन्ति व्यावृत्त्यै " ( तैसं ६.३.९ ) इति । वपोत्खेदनार्थं २५ दक्षिणपार्श्वे छिन्द्यात् । मांसाहारास्तु मनुष्या नाभिदेशे छिन्दन्ति । तत्राप्यनूचीनं पशोर्दैर्घ्यमनुसृत्य तदुभयवैलक्षण्यमिह कार्यम् ॥

रक्षसामिति ॥ बौधायनः—" अथैतस्य बर्हिषोऽणिमत् सचते । स्वधिमदुभयतो लोहितेनाङ्क्त्वेमां दिशं निरस्यति रक्षसां भागोऽसीदमहꣳ रक्षोऽधमं तमो नयामि योऽस्मान् द्वेष्टि यं च वयं

६–६ आ.इ.पा.हा–पशुमारणकाल उपस्थितौ; क–पशुमारणकालतया उपस्थितौ । ७. आ–शुगव्यथाम् । ८. आ.क.हा–°शरीरे । ९. इ.उ.तं.पा.भो.म२.हा–' शुचः ' नास्ति । १०. तं–°करणयोरवशिष्टेन ; क–°करणतृणयोरवशिष्टम् । ११. तं–दक्षिणम् । ३०

नयामीषे त्वा घृतेन द्यावापृथिवी

नयामि । इषे । त्वा । घृतेन । द्यावापृथिवी इति द्यावा-पृथिवी ।

वपामुत्खिदति—'इषे त्वा' इति ॥ इट् अन्नं, यजमानस्यैषणीयत्वात् । "इच्छत इव ह्येष यो यजते" (तैसं ६.३.९) इत्यादि ब्राह्मणम् ॥ यद्वा—[6]कर्मसिद्धं स्वर्गादिकं [7]कर्मनिर्वृत्तिं वा इच्छतीतीट् यजमानः, तदर्थं तस्याभिमतसिद्ध्यर्थं त्वामुत्खिदामीति शेषः ॥

वपया वपाश्रपण्यौ प्रोर्णोति—'घृतेन' इति ॥ हे [8]द्यावापृथिवी द्यावापृथिव्यौ द्यावापृथिव्यात्मके वपाश्रपण्यौ । "वा छन्दसि" (पा ६.१.१०६) इति पूर्वसवर्णदीर्घत्वम् । द्यावापृथिव्यात्मना वपाश्रपण्यौ स्तूयेते । यद्वा—द्योतनात् द्यौः । दिवेर्डिविप्रत्ययः* । पृथुत्वात् पृथिवी । "[8]प्रथेः षिवन् सम्प्रसारणं च" (उ १५८) इति षिवन्प्रत्ययः[8] । हे ईदृश्यौ वपाश्रपण्यौ, घृतेन [9]स्निग्धत्वात् घृततुल्यया वपयात्मानं प्रोर्णुयां प्रकर्षेणाच्छादयतम् । यद्वा—घृतेन सलिलेन सर्वं जगत् [10]प्रोर्णुवाथाम् । अथवा—द्यावापृथिव्यावेवोच्येते । हे द्यावापृथिव्यौ, घृतस्थानीयया वपया वपाश्रपण्यौ प्रोर्णुयाथाम् । एवं वा—हे द्यावापृथिव्यौ, घृतेन सलिलेन विश्वं प्रोर्णुयाथाम् । अनेन [10]वपाश्रपण्याच्छादनेन आत्मानमेव वा प्रोर्णुयाथाम् । "द्यावापृथिवी एव रसेनानक्ति" (तैसं ६.३.९) इति ब्राह्मणम् ॥ "दिवो द्यावा" (पा ६.३.२९) इति द्यावादेशः ॥

द्विष्म इदमेनमधमं तमो नयामीति" (बौश्रौ ४.६) इति । आपस्तम्बः—"बर्हिषोऽग्रं सव्येन पाणिनाऽऽदत्ते । अथ मध्यं यत आच्छ्यति तदुभयतो लोहितेनाङ्क्त्वा रक्षसां भागोऽसीत्युत्तरमपरमवान्तरदेशं निरस्याथैनत् सव्येन पदाऽधितिष्ठतीदमहं रक्ष इति" (आपश्रौ ७.१८.१३-१४) इति ॥ विधत्ते—"रक्षसां भागोऽसीति स्थविमतो बर्हिरक्त्वाऽपास्यत्यसृजैव रक्षांसि निरवदयते" (तैसं ६.३.९) इति । स्थूलस्य भावः स्थविमा, तस्मात् [11]"सप्तम्यर्थे तसि"[12] । स्थविमतः ( स्थविमच्छब्देन बर्हिषो मूलभागः स्थूलत्वादुपलक्ष्यते[13] । तस्मिन् भागे रक्तेन बर्हिरङ्क्त्वा निरस्येत् । तथा सत्यसृजैव रक्षांसि निःशेषेण भागवन्ति कृत्वाऽपनयति ॥ द्वितीयमन्त्रं व्याचष्टे—"इदमहं रक्षोऽधमं तमो नयामि योऽस्मान् द्वेष्टि यं च वयं द्विष्म इत्याह द्वौ वाव पुरुषौ यं चैव द्वेष्टि यश्चैनं द्वेष्टि तावुभावधमं तमो नयति" (तैसं ६.३.९) इति । अधमं तमो महद्दुःखम् ॥

इषे इति ॥ कल्पः—"इषे त्वेति वपामुत्खिद्य" घृतेन द्यावापृथिवी प्रोर्णुवाथामिति वपया छिद्रं प्रच्छाद्य" (आपश्रौ ७.१९.२) इति ॥ हे वपे, यजमानस्य देवतायाश्चेष्यमाणान्नसिद्ध्यर्थं त्वामुत्खिदामि । हे शुल्बरूपे द्यावापृथिवीतुल्ये वपाश्रपण्यौ, घृतसमानया वपया भवदीयस्वरूपं [14]प्रोर्णुयाथाम् आच्छादयतम् ॥ विधत्ते—"इषे त्वेति वपामुत्खिदतीच्छत इव ह्येष यो यजते" (तैसं ६.३.९) इति ॥

६. त ति—धर्मसिद्धिम् । ७. कर्मनिर्वृतिम् । *[द्र उ. ६१०] । ८-८. मै-प्रथे, षिवन्प्रत्ययः । ९. त ति-सिद्धत्वात् । १० त.ति—वपाश्रपण्यो छादनेन ।

१२-१२. ड उ.तं.प.भां म२-'सप्तम्यर्थे तसि' नास्ति । १३. ड.उ.पा-'दुपलभ्यते । १४. आ. द्रा-वपामुत्खिदति ।

प्रोर्णुवाथामच्छिन्नो रायः सुवीर उर्वन्तरिक्षमन्विहि वायो वीहि (२) स्तोकानाम् ॥

प्रेति । ऊर्णुवाथाम् । अच्छिन्नः । रायः । सुवीरेति सु–वीर । उरु । अन्तरिक्षम् । अन्विति ।
इहि । वायो इति । वीति । इहि (२) । स्तोकानाम् ।

अधस्ताद्वपां परिवासयति—‘ अच्छिन्नः ’ इति ॥ व्याख्यातम् ( तैसं १.३.५ ) ॥

एति–‘ उर्वन्तरिक्षमन्विहि ’ इति ॥ व्याख्यातमेव ( तैसं १.१.२ ) । हे वपे उत्खेदन-   ५
विबाधिते[11], अधुना महान्तम् अन्तरिक्षाख्यं पन्थानम् अनुगच्छेति विशेषः । “ क्रूरमिव वा एतत्
करोति यद्वपामुत्खिदति ” ( तैसं ६.३.९ ) इत्यादि ब्राह्मणम् ॥

आहवनीयस्यान्तिमेष्वङ्गारेषु वपायै [12]प्रतितप्यमानायै अधस्ताद्बर्हिषोऽग्रमुपास्यति—
‘ वायो ’ इति ॥ हे वायो, स्तोकानां वीहि स्तोकान् वीहि । “ क्रियाग्रहणं कर्तव्यम् ”
( द्र. पाभा १.४.३२ ) इति संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी ( पा २.३.६२ ) । वीहि विविधं   १०

अत्र शूलाग्रेण वपां भिन्द्यात्[15] न वेति विचारं हृदि निधाय पक्षद्वयेऽपि दूषणमुपन्यस्यति—“ यदुपतृन्द्या-द्रुद्रोऽस्य पशून् घातुकः स्याद्यन्नोपतृन्द्यादयता स्यात् ” ( तैसं ६.३.९ ) इति । भेदनमन्तरेण धृताऽपि नियन्तुमशक्यत्वादितस्ततः पतेत् ॥ दोषद्वयास्पृष्टं पक्षान्तरं विधत्ते—“ अन्यया उपतृणत्त्यन्यया न धृत्यै ” ( तैसं ६.३.९ ) इति । एकया शाखया [16]भिन्द्यात् इतरया न भिन्द्यात्[15], तथा सति धृताऽपि भवति रुद्रश्च न हिनस्ति ॥ वपाशब्दशूलशब्दौ परित्यज्य घृतशब्दप्रयोगस्य द्यावापृथिवीशब्दप्रयोगस्य [16]च तात्पर्य-   १५
माह—“ घृतेन द्यावापृथिवी प्रोर्णुवाथामित्याह द्यावापृथिवी एव रसेनानक्ति ” ( तैसं ६.३.९ ) इति ॥

अच्छिन्न इति ॥ कल्पः — “ अधस्तात् परिवासयत्यच्छिन्नो रायः सुवीर इति ” ( बौश्रौ ४.६ ) इति । अयं वपाभागश्छिद्यमानोऽपि मन्त्रसामर्थ्येन व्यथानुत्पत्तेर्न छिन्नः । कीदृशो भागः ? शोभना वीरा यजमानस्य पुत्रपौत्राद्यो यस्य सः सुवीरः । तादृशः रायः धनानि प्रयच्छतु ॥ स्पष्टार्थ-
तामाह—“ अच्छिन्नो रायः सुवीर इत्याह यथायजुरेवैतत् ” ( तैसं ६.३.९ ) इति ॥   २०

उर्विति ॥ कल्पः —“ उर्वन्तरिक्षमन्विहीत्यभिप्रव्रजति ” ( आपश्रौ ७.१९.४ ) इति । हे वपे, त्वमुत्खेदनरूपस्य क्रौर्यस्य शान्तये विस्तीर्णम् अन्तरिक्षम् अनुप्रविश्याऽऽहवनीयदेशं गच्छ ॥ इममेवार्थं दर्शयति—“ क्रूरमिव वा एतत् करोति यद्वपामुत्खिदति उर्वन्तरिक्षमन्विहीत्याह शान्त्यै ” ( तैसं ६.३.९ ) इति ॥ वपाश्रपण्योः स्पर्शं विधत्ते— “ प्र वा एषोऽस्माल्लोकाच्च्यवते यः पशुं मृत्यवे नीयमानमन्वारभते वपाश्रपणी पुनरन्वारभतेऽस्मिन्नेव लोके प्रति तिष्ठति ” ( तैसं ६.३.९ ) इति ॥   २५
वपायाः पुरतः पशोर्दिव वह्निं विधत्ते—“ अग्निना पुरस्तादेति रक्षसामपहत्या अथो देवता एव हव्येना-न्वेति ” ( तैसं ६.३.९ ) इति । अग्नेः सर्वदेवतात्मकत्वात् तस्य पृष्ठतो वपानयने सर्वा अपि देवता[17] हव्येनानुगता भवन्ति ॥

वायो वीहीति ॥ कल्पः —“ आहवनीयस्यान्तिमेष्वङ्गारेषु वपायै प्रतितप्यमानायै बर्हिषोऽ-ग्रमुपास्यति वायो वीहि स्तोकानामिति ” ( बौश्रौ ४.७ ) इति ॥ द्विशूल्या शाखया धार्यमाणाया   ३०

११. तं.ति–‘विबोधिते । १२. नं–प्रतिपाद्यमानायै; ति–प्रतिपद्यमानायै ।

१५. क–छिन्द्यात् । १६. मर–चा: ठ.उ.तं.पा.भा.हा–‘ च ’ नास्ति । १७. ठ.उ.तं.पा.भा.
मर.हा–‘ देवताः ’ नास्ति ।

स्वाहो॒र्ध्वन॑भसं मारु॒तं गच्छ॑तम् ॥ ९ ॥

[ अ॒द्भ्यो वी॒हि प॒श्च च ]

स्वाहा॑ । ऊ॒र्ध्वन॑भस॒मित्यू॒र्ध्व-न॒भ॒स॒म् । मारु॒तम् । गच्छ॑तम् ॥ ९ ॥

[ मैस १·२ १६, काम ३·६, कपिम २·१३, वास ६ १४–१७ ]

५ गच्छ पृथक् पृथक् सर्वान् स्तोकान् विभजेति यावत् । "तस्माद्विभक्ता स्तोका अव पद्यन्ते" (तैस ६ ३ ९) इति ब्राह्मणम् । प्रथम स्तोकान् गृह्णाति, ततो वृष्टिरूपेण विसृजति-- ततो [13]महता बलेन विभजति[13], तत· स्तोकात्मना अवपद्यन्ते पृथिव्यामाप इति । एव बर्हिरमदहनजन्मा वायुरामन्त्र्यते । "अग्र वा एतत्पशूना यद्वपाग्रम्" (तैस ६ ३ ९) इत्यादि ब्राह्मणम् ॥

१० वपाश्रपण्यो प्रहरति---' स्वाहा ' इति ॥ हे वपाश्रपण्यौ, युवा [a]स्वाहा स्वाहुते भूत्वा [a]ऊर्ध्वनभस ऊर्ध्वनभ.सत्र [a]मारुत [a]गच्छत, यथा तेनैव ग्रहते स्याताम् । ऊर्ध्वं नभत इत्यूर्ध्वनभा. । णभ हिंसायाम्, अत्र तु गतिकर्मा । तस्मात् "गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्व च" (उ ६७६) इत्यसुन्प्रत्यय । "ऊर्ध्वनभा ह स्म वै मारुतो देवानाम्" (तैस ६·३·९) इत्यादि ब्राह्मणम् ॥

१५ ॥ इति तृतीये नवमोऽनुवाक ॥

---

वपाया उपरि "स्वाम् ते वृधिरे" (तैस ३·१ ४, द्र. आपश्री ७·२०·२) इति मन्त्रेणाऽऽज्ये हुते सति तत्सकाशात् पतन्तो बिन्दव· स्तोका. । हे [a]वायो, तान् स्तोकान् [a]वीहि विभक्तान् कुरु पिबेत्यर्थ ॥ व्यतिरेकमुखेनाऽऽहवनीयस्योत्तरपार्श्ववर्तिष्वङ्गारेषु वपाया. श्रपण विधत्ते—" नान्तम-मङ्गारमति हरेद्यदन्तममङ्गारमति हरेद्देवता अति मन्येत" (तैस ६·३·९) इति । "अङ्गा-
२० रस्य [18]सर्वदेवतात्मकत्वेन तदवज्ञाया देवता एवावज्ञाता भवन्ति तस्मादस्मिन्नेवाङ्गारे वपा श्रपयेत् ॥ 'वीहि' इत्यत्र विशब्दस्यार्थं दर्शयति—"वायो वीहि स्तोकानामित्याह तस्माद्वि-भक्ता· स्तोका अव पद्यन्ते" (तैस ६·३·९) इति । पतन्तीत्यर्थः । वपाया अधस्ताद्बर्हिरग्रस्थापन विधिमर्थवादेनोन्नयति—"अग्र वा एतत् पशूना यद्वपाऽग्रमोषधीना बर्हिरग्रेणैवाग्र" समर्धयत्यर्थो

---

१३–१३ मे-महाजवेन विभ्राजति ।

---

२५ १८ द उ.पा मा-अङ्गारकस्य । १९ ब-सर्वदेवतात्मकत्वात् ।

ओषधीष्वेव पशून् प्रति ष्ठापयति" (तैसं ६·३·९) इति। अग्रं श्रेष्ठम्। ओषध्यग्रेण बर्हिषा पशुप्ररूपाया वपायाः समृद्ध्यर्थमोषधीषु पशुप्रतिष्ठापनार्थं च बर्हिरग्रं वपाया अधः स्थापयेदित्यर्थः॥ अथान्तिम-प्रयाजार्थं मैत्रावरुणं प्रत्यध्वर्योः प्रैषमन्त्रमुत्पादयति—"स्वाहाकृतीभ्यः प्रेष्येत्याह यज्ञस्य समिष्ट्यै" (तैसं ६·३·९) इति। स्वाहाशब्दबहुला कृतिर्मन्त्रप्रयोगो यासामन्तिमप्रयाजदेवतानां ताः स्वाहाकृतयः, तदर्थं हे मैत्रावरुण, होतारं प्रेरय। मैत्रावरुणस्तु "होता यक्षदग्निं स्वाहाऽऽज्यस्य" (तैब्रा ३·६·२) ५ इत्यादिमन्त्रेण होतारं प्रेष्यति। स च होता "सद्यो जातो व्यमिमीत यज्ञम्" (तैब्रा ३·६·३) इत्यादिकां याज्यां पठति। ततोऽध्वर्युरन्तिमप्रयाजं यजति। एवमयं प्रैषो यज्ञस्य सम्यगिष्ट्यै संपद्यते॥ प्रयाजशेषेण हविरभिघारणं विधत्ते—"प्राणापानौ वा एतौ पशूनां यत् पृषदाज्यमात्मा वपा पृषदाज्यमभिघार्य वपामभि घारयत्यात्मन्नेव पशूनां प्राणापानौ दधाति" (तैसं ६·३·९) इति॥ दधिमिश्रं-माज्यं पृषदाज्यम्। [20]पृषदाज्यस्य वपायाश्चाभिघारणेन वपारूपे पश्वात्मनि पृषदाज्यरूपौ पशूनां १० प्राणापानौ स्थापयति॥

स्वाहेति॥ कल्पः—"अतिप्रस्थाताऽऽहवनीये वपाश्रपणी प्रहरति। स्वाहोर्ध्वनभसं मारुतं गच्छतमिति प्राचीं द्विशूलां प्रतीचीमेकशूलाम्" (आपश्रौ ७·२१·३) इति॥ हे वपाश्रपण्यौ, युवां स्वाहुते सत्यावूर्ध्वनभःसंज्ञकं मरुत्पुत्रं [21]गच्छतम्॥ तस्मात्तावुपयोगं दर्शयति—"स्वाहोर्ध्वनभसं मारुतं गच्छतमित्याहोर्ध्वनभा ह स्म वै मारुतो देवानां वपाश्रपणी प्र हरति तेनैवैने प्र हरति" (तैसं ६·३·९) १५ इति॥ व्यत्यस्तप्रहरणं विधत्ते—"विषूची प्र हरति तस्माद्विष्वञ्चौ प्राणापानौ" (तैसं ६·३·९) इति॥ प्राण ऊर्ध्ववृत्तिरपानोऽधोवृत्तिरिति [22]तयोर्व्यत्यासः॥

अत्र विनियोगसंग्रहः—,

"वागत्राऽऽप्यायने शेषं [23]शमहो निमयेद्भुवि।
ओष स्वधि यथापूर्वं रक्ष दर्भं सलोहितम्॥ १॥ २०

त्यजेदिदं [23]बाधमीयमिष उत्खिद्यते वपा।
घृते श्रपण्यावाच्छाद्य अच्छि सा कृत्यते वपा॥ २॥

उरु पूर्वानलं गत्वा वाग्रो दर्भमधः क्षिपेत्।
स्वाहा श्रपण्युपक्षेपो मन्त्रा एकोनविंशतिः॥ ३॥" इति॥

अत्र मीमांसाच्छन्दसी न स्तः॥ २५

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके नवमोऽनुवाकः॥ ९॥

२०. इ.उ.पा.मां.म२-'पृषदाज्यस' नास्ति। २१. आ.हा-उभयोर्व्यत्यासः। २२.तं.म२-घोषम्। २३. वन्धनी°।

सं ते मनसा मनः सं प्राणेन प्राणो जुष्टं देवेभ्यो हव्यं घृतवत् स्वाहैन्द्रः

समिति । ते । मनसा । मनः । समिति । प्राणेनेति प्र—अनेन[1] । प्राण इति प्र—अनः । जुष्टम् । देवेभ्यः । हव्यम् । घृतवदिति घृत—वत् । स्वाहा । ऐन्द्र. ।

पृषदाज्येन हृदयमभिघारयति—‘ स ते मनसा ’ इति ॥ हे हृदय, ते तव मनसा मन स्थानीयेन मननीयेन वा अनेन पृषदाज्येन देवाना मन सगतमस्तु । तथा देवानामिद स्पृहणीयमस्तु यथा तेषा मनो न जहातीति । समित्युपसर्गश्रुतेर्योग्यं क्रियापदमध्याह्रियते । किंच—त्वदीयेन प्राणेन प्राणस्थानीयेन प्राणसाधनेन वा अनेन पृषदाज्येन देवानां प्राण. सगतोऽस्तु । प्राणशब्दः थाथादिस्वरेणान्तोदात्त ( पा ६ २ १४४ ) । एतादृशेन देवानां प्रियतमेन पृषदाज्येन त्वामभिघारयामीति भाव । त्व च तादृशेनानेनाभिघारित देवाना जुष्ट प्रियतम भविष्यसि । " षष्ठ्यर्थे चतुर्थी वक्तव्या " ( पा २ ३ ६२ वा १ ) इति चतुर्थी । " नित्य मन्त्रे " ( पा ६ १ २१० ) इति जुष्टशब्द आद्युदात्त । किंच—हव्य घृतवद् अनेन पृषदाज्येन [2]तद्युक्त हवनार्ह[2] च भविष्यसि । " छन्दसि च " ( पा ५ १·६७ ) इति हुवशब्दात् य । यद्वा—" अचो यत् " ( पा ३ १ ९७ ) इति यत् । तदा उञ्छादिर्द्रष्टव्य ( पा ६·१ १६० ) । स्वाहा इत्य त्वामभिघारयामीति स्वेन प्रजापतेर्योगाह । यद्वा—ईदृश त्व स्वाहाकार्ये च भविष्यसीति । " प्राणापानौ वा एतौ पशूना यत्पृषदाज्यं पशो खलु वा आलब्धस्य हृदयमात्माभि समेति " ( तैस ६ ३ १० ) इत्यादि ब्राह्मणम् ॥

नवमेऽनुवाके वपाप्रयोगोऽभिहित । दशमे तु वसाहोमोऽभिधीयते ॥

समिति ॥ कल्पः—" शमितुर्हृदयशूलमादाय तेन हृदयमुपतृद्य[1] तं शमित्रे प्रदाय पृषदाज्येन हृदयमभिघारयति स ते मनसा मन स प्राणेन प्राणो जुष्ट देवेभ्यो हव्यं घृतवत्स्वाहेति " ( बौश्रौ ४·८ ) इति । हे हृदय, ते मन स्थानीयेन पृषदाज्येन देवानां मनः संगतमस्तु । एव प्राणेऽपि योज्यम् । हव्यं त्वां देवाना प्रिय घृतवत् यथा भवति तथा स्वाहा अभिघारयामि । सोऽय मन्त्र उपेक्षित ॥ अभिघारणं विधित्सुरादौ वपोत्खेदप्रयुक्तच्छिद्रापिधानरूप पश्वङ्गं पुरोडाशं विधत्ते—" पशुमालभ्य पुरोडाश निर्वपति समेधमेवैनमा लभते " ( तैस ६·३·१० ) इति । भेघ. सार. । पुरोडाशस्य व्रीहिसारत्वात् सारोपेत पशुमालब्धवान् भवति ॥ निरुप्तस्य होमकालं विधत्ते—" वपया प्रचर्य पुरोडाशेन प्र चरत्यूर्जं पुरोडाश ऊर्जमेव पशूना मध्यतो दधात्यथो पशोरेव छिद्रमपि दधाति " ( तैसं ६·३·१० ) इति । " जातवेदो वपया गच्छ देवान् " ( तैसं ३·१·४ ) इति मन्त्रेण वपा हुत्वा पश्चात् पुरोडाशहोम । वपाहृदयादिहोमयोर्मध्यं पशूनामुदरस्थानमतस्तत्रैव ऊर्जं पुरोडाशरूपमन्न स्थापितवान् भवति । किंच वपाच्छेदेन यत्

१. त.ति—तादृशेन । २–२. त—घृतवत् मधुरं त्वं भक्षणार्हम्; ति—घृतवत् घृतस्त्वं भक्षणार्यम् । ३ नि—हवि शब्दात् । ४ ति—ईदृश ।

१. क—भुत्तिय ।

वसाहोमः ]

पशोरछिद्रं तत् पिहितं भवति ॥ उत्तरदेशे हृदयादिहविः पचन्तं शमितारं प्रति प्रश्नमन्त्रमुत्पादयति—" पृषदाज्यस्योपहत्य त्रिः पृच्छति शृत३ँ हवीः३ शमितरिति त्रिसत्या हि देवाः " ( तैसं ६·३·१० ) इति । पृषदाज्यस्य पात्रगतस्यांशं स्रुवेणोपहत्य पृथक् स्वीकृत्य मन्त्रेण त्रिः पृच्छेत् । शृतं पक्वम् । प्लुतिः प्रश्नार्था । त्रिरुक्तं सत्यमिति बुद्धिर्येषां ते त्रिसत्याः ॥ व्यतिरेकमुखेणोत्तरविधिमुन्नयति—" योऽशृत३ँ शृतमाह स एनसा " ( तैसं ६·३·१० ) इति । युज्यत इति शेषः । तस्माच्छृते सत्युत्तरं ब्रूयादिति विधिः। ५ अत्र सूत्रम्— " अथ प्रतिप्रस्थाता [२]"पृषदाज्यं विहृत्य"[२] जुह्वां समानीयान्तरेण चात्वालोत्करावुदङ्ङुप-निष्क्रम्य पृच्छति शृत३ँ हवीः३ शमितरिति । शमितैव उत्तरतो हृदयशूलं धारयंस्तिष्ठति स शृतमिति प्रत्याह । तं तथैव द्वितीयमुत्क्रम्य पृच्छति । तं तथैवेतरः प्रत्याह । तं तथैव तृतीयमुत्क्रम्य पृच्छति तं तथैवेतरः प्रत्याह " ( बौश्रौ ४·८ ) इति ॥ अत्र 'सं ते मनसा मनः' इत्यस्य मन्त्रस्यार्थमुपेक्ष्याभिघारणं विधत्ते—" प्राणापानौ वा एतौ पशूनां यत् पृषदाज्यं पशोः खलु वा आलब्धस्य हृदयमात्माऽभि समेति १० यत् पृषदाज्येन हृदयमभिघारयत्यात्मन्नेव पशूनां प्राणापानौ दधाति " ( तैसं ६·३·१० ) इति ॥ अभि-समेति आभिमुख्येनाऽऽत्मा[३] हृदयदेशमागच्छति ॥ अथ प्लक्षनामकस्य शाखामवदानाधारत्वेन विधत्ते—" पशुना वै देवाः सुवर्गं लोकमायन् तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति तस्य शिरश्छित्त्वा मेधं प्राक्षारयन्त्स प्रक्षोऽभवत् तत् प्रक्षस्य प्रक्षत्वं यत् प्लक्षशाखोत्तरबर्हिर्भवति समेधस्यैव पशोरव द्यति " ( तैसं ६·३·१० ) इति । पशुना सह स्वर्गं गच्छन्तो देवा मनुष्याणां स्वैः सहागमनं मा भूदित्यभिप्रेत्य १५ तद्वारयितुं पशोः शिरश्छित्त्वा मेधं रसं प्राक्षारयन्नस्रावयन् । स रसो भूमौ पतित्वा प्लक्षवृक्षोऽभवत् । तस्मात् [४]प्रक्षारणादुत्पन्नस्य प्लक्षनाम संपन्नम् । तच्छाखा बर्हिर्वत् ऊर्ध्वम् [५]अवस्थापनादुत्तरबर्हिरित्युच्यते । तदवस्थापनेन सरसस्यैव पशोर्हविरवत्तं भवति । अत्र सूत्रम्—" जुहूपभृतोर्हिरण्यशकलमवधाय बर्हिषि प्लक्षशाखायामवदानान्यवद्यन् संप्रेष्यति । मनोतायै हविषोऽवदीयमानस्यानुब्रूहीति । हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसो *यथाकाममितरेषाम् । मध्यतो गुदस्यावद्यतीत्युक्तम् " ( आपश्रौ ७·२३·१२– २० ७·२४·३ ) इति । पक्वस्य हृदयादिहविष आहवनीयं प्रत्यानयने मार्गविशेषं विधत्ते—" पशुं वै ह्रियमाण३ँ रक्षा३ँस्यनु सचन्तेऽन्तरा यूपं चाऽऽहवनीयं च हरति रक्षसामपहत्यै " ( तैसं ६·३·१० ) इति । अनुसचन्ते अनुगच्छन्ति । यूपस्याऽऽहवनीयस्य च रक्षोघातित्वात् तयोरन्तराले भयं नास्ति ॥ होतारं प्रति प्रैषमन्त्रमुत्पाद-यति—" पशोर्वा आलब्धस्य मनोऽप क्रामति मनोतायै हविषोऽवदीयमानस्यानु ब्रूहीत्याह मन एवास्याव रुन्धे " ( तैसं ६·३·१० ) इति । अग्निदेवता मनोता । " त्व३ँ ह्यग्ने प्रथमो मनोता " ( तैब्रा ३·६·१०) इति २५ मन्त्राम्नानात् । मनस्यूता संबद्धेति मनोता ॥ संख्याविशिष्टान्यवदानानि विधत्ते—" एकादशावदानान्यव द्यति दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तस्याव द्यति " ( तैसं ६·३·१० ) इति । नाभि-सहितानि दश छिद्राणि प्राणा देह आत्माऽत एकादशसंख्यया कृत्स्नोऽपि पशुरवत्तो भवति । तान्येका-दशाङ्गानि सूत्रेऽभिहितानि—" हृदयं जिह्वा वक्षो यकृत् वृक्यौ सव्यं दोरुभे पार्श्वे दक्षिणा श्रोणिर्गुद-तृतीयमिति दैवतानि " ( आपश्रौ ७·२२·६ ) इति ॥ क्रमं विधत्ते—" हृदयस्याग्रेऽव द्यत्यथ जिह्वाया ३०

---

२–२. क–पृषदाज्यस्योपहत्य; (बौश्रौसूत्रे 'पृषदाज्यं विहृत्य')। ३. क.तं.म२–मुख्येन जीवात्मा। ४. आ.द्रा–क्षरणादु°। ५. आ.क.द्रा–°स्थापनात्। *[ आपश्रौसूत्रे–' याथाकामीतरेषाम् '।]।

अथ वक्षसो यद्वै हृदयेनाभिगच्छति तज्जिह्वया वदति यज्जिह्वया वदति तदुरसोऽधि निर्वदत्येतद्वै पशो॰ र्यथापूर्वम्" (तैस ६.३.१०) इति। लोके प्रथमं हृदयेन यच्चिन्तयति तत्पश्चाज्जिह्वया वदति। पुनरपि तदेव निर्घोषेणोच्चध्वनिना यदा वदति तदानीमुरस ऊर्ध्वदेशगतबलेन वदति। तस्मात् हृदयादीना- ^[६-]^प्रधानामदा क्रमेणावद्येत्^[-६]^। एतदेव ^[७]^क्रमावदानं पशोरङ्गेषु ^[८]^यथापूर्वं भवति। यथा लोकेऽभिवदन-
५ व्यवहारः पूर्वं प्रवृत्तस्तथैव भवति ॥ उत्तरेष्वष्टस्वङ्गेषु हृदयादिवत् क्रमकृतं नियमं वारयति— "यस्यैवमव- दाय यथाकाममुत्तरेषामवद्यति यथापूर्वमेवास्य पशोरवत्तं भवति" (तैस ६.३.१०) इति। उक्त- प्रकारेण यस्य पशोर्हृदयादीनि त्रीण्यङ्गान्यवदायोत्तरेषामिच्छिकक्रमेऽपि पूर्वं हृदयाद्यङ्गं यथा न दोषकारि तथैवोत्तरमपि भवति ॥ एकादशस्वङ्गेषु गुदकाण्डं प्रथममुत्तममध्यमाधमभागैस्त्रेधा विभज्य त्रिषु तेषु भागेषु मध्यमोत्तमभागयोर्विकल्पेनावदानं विधत्ते— "मध्यतो गुदस्यावद्यति मध्यतो हि प्राण उत्तम-
१० स्यावद्यत्युत्तमो हि प्राणो यदीतरं यदीतरमुभयमेवाजामि" (तैस ६.३.१०) इति। प्राणवायुर्गुदमध्ये वर्तते, स्वयं जीवनहेतुत्वाच्चक्षुरादिषु सर्वेषूत्तमश्च। अतो यदीतरं मध्यमभागं स्वीकुर्यात्, यदीतरमुत्तम- भागं तदुभयमपि अजामि भवति, किं तर्हि अस्य दोषरहितमित्यर्थः ॥ हृदयाद्यवदानानि प्रशंसति— "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी तदवदानैरेवाव दयते तदवदानानामवदानत्वम्" (तैस ६.३.१०)
१५ इति। ब्रह्मचर्येण वेदाभ्यासेन, ब्रह्मचारिवेषेण गुरुगृहे वसतीति ब्रह्मचारिवासी ॥ वेदाभ्यासादिभिरपा- कर्तव्य ^[१०-]^यदृणं तत्^[-१०]^ हृदयाद्यवदानैरेवापाकरोति। ऋणमवद्यत इत्यभिप्रायेणावदानत्वम् ॥ स्विष्टकृदर्थ- मङ्गावदानं विधत्ते— "देवासुराः संयत्ता आसन् ते देवा अग्निमब्रुवन् त्वया वीरेणासुरानभिभवामेति सोऽब्रवीद्वरं वृणै पशोरुद्धारमुद्धरा इति स एतमुद्धारमुदहरत दोः पूर्वार्धस्य गुदं मध्यतः श्रोणिं जघनार्धस्य ततो देवा अभवन् पराऽसुरा यत् त्र्यङ्गाणां समवद्यति भ्रातृव्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृव्यो
२० भवति" (तैस ६.३.१०) इति ॥ उद्धारमुत्कृष्टं ध्रियमाणमुत्तमं भागमुद्धरं स्वीकरवाणि। दोः पूर्वार्धस्य सम्बन्धि दोर्दण्डम्। मध्यतः पशुमध्यभागसंबन्धि गुदम्। अपरार्धस्य संबन्धिनी श्रोणिम् ॥ वसमगतिं विधत्ते— "अक्ष्णयाऽवद्यति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै" (तैस ६.३.१०) इति। गवादयः शयनकालेऽङ्गानि पादान्यक्ष्णया^[११]^ वक्रत्वेनावस्थापयन्ति। अत्र वक्रगतिः सूत्रे दर्शिता— "दक्षिणं दोः सव्या श्रोणिस्तृतीयमिति सौविष्टकृतानि" (आपश्रौ ७.२२.६) इति ॥
२५ विधत्ते— "मेदसा स्रुचौ प्रोर्णोति मेदोरूपा वै पशवो रूपमेव पशुषु दधाति" (तैस ६.३.११) इति। ^[१२]^जीर्णपटसदृशं हृदयवेष्टनं मेदः। स्रुचौ जुहूपभृतौ। ^[१३-]^उभयं मेदसाऽऽच्छादयेत्^[-१३]^। सति मेदोबाहुल्ये पशवो रूपवन्तो भवन्ति ॥ तत्र कंचिद्विशेषं विधत्ते— "यूष्णवधाय प्रोर्णोति रसो वा एष पशूनां यद्यू रसमेव पशुषु दधाति" (तैस ६.३.११) इति। यूषशब्देन मांसेन सह पक्वरसमुच्यते। तस्मिञ्जले मेदः प्रक्षिप्य तेनाऽऽच्छादयेत् ॥

---

३० ६–६. आ क–ग्याणामेशक्रमेणा। ७ इ.उ पा.भो–क्रमादानम्। ८. इ उ पा भो–पुरस्तात्पूर्वम्। ९. आ क.हा–उत्तरेष्वङ्गेषु। १०–१०. इ उ.पा भो–तत्पूर्वम्। ११ भर–'अक्ष्णया' नास्ति। १२. पा. भो–जीर्णपटसदृशम्। १३–१३. इ उ पा भो.हा–उभयमेवाऽऽच्छादयेत्, क–हृदयमेदमाऽऽच्छादयेत्।

वसाहोमः]

प्राणो अङ्गेअङ्गे नि देध्यदैन्द्रोऽपानो अङ्गेअङ्गे वि बोभुवद्देव त्वष्टर्भूरि ते सꣳसमेतु विषुरूपा यत् सलक्ष्माणो भवथ देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्तु

प्राण इति प्र–अनः । अङ्गेअङ्ग इत्यङ्गे–अङ्गे । नीति । देध्यत् । ऐन्द्रः । अपान इत्यप–अनः । अङ्गेअङ्ग इत्यङ्गे–अङ्गे । वीति । बोभुवत् । देव । त्वष्टः । भूरि । ते । सꣳसमिति सं–सम् । एतु । विषुरूपा इति विषु–रूपाः । यत् । सलक्ष्माण इति स–लक्ष्माणः । भवथ । देवत्रेति देव–त्रा । यन्तम् । अवसे । सखायः । अन्विति । त्वा । माता । पितरः । मदन्तु । ५

पशोरवदानानि संमृशति—'ऐन्द्रः प्राणः' इत्यनुष्टुभा षट्पदया ॥ इन्द्रः ईश्वरः शारीर आत्मा तस्यायम् ^v^ऐन्द्रः ^v^प्राणः । "ऐन्द्रः खलु वै देवतया" (तैसं ६·३·११) इति ब्राह्मणम् । स ^v^अस्य पशोः ^v^अङ्गेअङ्गे सर्वेष्ववयवेषु ^v^नि ^v^देध्यत् ^v^नियमेनात्यर्थं ध्रियतां तिष्ठत्वित्यर्थः । ऐन्द्रत्वादेव । धीङ् आधारे । यङ्लुगन्ताल्लेट् (पा ३·४·७४) । "लेटोऽडाटौ" (पा ३·४·९४) इत्यडागमः । "नाभ्यस्तस्याचि पिति सार्वधातुके" (पा ७·३·८७) इति गुणाभावः अलघूपधस्यापि बहुलवचनात् (पा ७·३·८७ वा १) । यद्वा—लटः शत्रादेशः (पा ३·२·१२४) । अस्त्विति शेषः । यद्वा—विकरणव्यत्ययेन शः (पा ३·१·८५) । "एरनेकाचः" (पा ६·४·८२) इति यणादेशः । "इतश्च लोपः" (पा ३·४·९७) । प्राणशब्द उक्तस्वरः (पा ६·२·१४४) । "अङ्ग इत्यादौ च" (पा ६·१·११९) इति संहितायां प्रकृतिभावः । आम्रेडितस्य (पा ८·१·२), "अनुदात्तं च" (पा ८·१·३) इत्यनुदात्तत्वम् । "घ्नन्ति वा एतत् पशुं यत् संज्ञपयन्ति" (तैसं ६·३·११) इत्यादि ब्राह्मणम् । ^v^अपानः अधोवृत्तिर्वायुः, सोऽप्यैन्द्रः । "ऐन्द्रोऽपानः" (तैसं ६·३·११) इति च ब्राह्मणम् । सः ^v^अङ्गेअङ्गे अस्य पशोः ^v^वि ^v^बोभुवत् अत्यर्थं विभवतु तिष्ठत्विति यावत् । भवतेर्यङ्लुगन्तात् (पा ३·४·७४) लेडादि सर्वं पूर्ववत् । "भूसुवोस्तिङि" (पा ७·३·८८) इति हि यङ्लुगन्ते १० १५ २०

ऐन्द्र इति ॥ कल्पः—"अथ पशोरवदानानि संमृशत्यैन्द्रः प्राणो अङ्गेअङ्गे नि देध्यदैन्द्रोऽपानो अङ्गेअङ्गे वि बोभुवद्देव त्वष्टर्भूरि ते सꣳसमेतु विषुरूपा यत्सलक्ष्माणो भवथ । देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्त्विति" (बौश्रौ ४·९) इति । इन्द्रदेवताकः ^v^प्राणः अस्य पशोस्तस्मिंस्तस्मिन् हृदयाद्यङ्गे ^v^नि ^v^देध्यत् नितरां धीयतां स्थाप्यताम् । तद्वत् ^v^अपानः अपि ^v^वि ^v^बोभुवत् विशेषेण भवतु। हे ^v^देव ^v^त्वष्टः, ^v^ते तवानुग्रहेण ^v^भूरि सर्वमङ्गजातं ^v^संसमेतु छेदनेन विश्लिष्टमपि समवेतं भवतु । हे हृदयाद्यवयवाः, यूयं विषुरूपा विलक्षणरूपा अपि ^v^सलक्ष्माणः हविष्ट्वेन समानलक्षणाः ^v^भवथ । ^v^यत् यस्मात् पूर्वं विषुरूपा तस्मादित ऊर्ध्वं सलक्ष्मत्वं संपादनीयम् । हे पशो, ^v^देवत्रा देवेषु ^v^यन्तं गच्छन्तं त्वां ^v^सखायः इतरे पशवः ^v^माता ^v^पितरश्च ^v^अनु ^v^मदन्तु । किमर्थम्? ^v^अवसे त्वन्मुखेन स्वर्गप्राप्त्या स्वकुलं सर्वमवितुम् । २५

५. तं.ति–तस्य । ६. तं.ति–नियमेनात्यन्तम् । *[शत्रादेशे 'अभ्यस्तानामादिः' (पा ६·१·१८९) इति आद्युदात्तत्वं प्रसज्येतेति चिन्त्यमिदं व्याख्यानम् ।]। ३०

१४. क.तं.मर–तिष्ठतु । १५. ड.उ.पा.मां–छेदने । १६. आ.क–समानलक्षणा । १७. आ.क.हा–सर्वं सेवितुम् ।

नास्ति*। पूर्ववदपानशब्दोऽपि थाथादिस्वरेणान्तोदात्त ( पा ६ २·१४४ )। एवं प्राणापानवत्त्व पशो सपाद्यते[7]। तेन सर्वेऽपि पशव प्राणापानवन्त कृता भवन्ति। "प्राणापानावेव पशुषु दधाति" ( तैस ६ ३·११ ) इति ब्राह्मणम्। हे देव त्वष्टः। पादादित्वात् प्रथम न निहन्यते। "नामन्त्रिते समानाधिकरणे" ( पा ८ १·७३ ) इति तस्याविद्यमानवत्त्व-
५ निषेधात् द्वितीय निहन्यत एव। भूरि सर्वं ससम् एतु सगच्छताम्। ते त्वत्त स्वप्रसादादिति यावत्। "त्वाष्ट्रा हि देवतया पशव" ( तैस ६ ३ ११ ) इति ब्राह्मणम्।

एतदुक्त भवति—"यद्विकर्तने पश्वङ्ग विच्छिन्नमवशिष्ट"[9] तत्सर्वं त्वया आर्द्रतया एकीकार्यमिति। एव हि कृत्स्नेन पशुना याग कृतो भवति। "प्रसमुपोद पादपूरणे" ( पा ८ १·६ ) इति समो द्विर्वचनम्। "अनुदात्त च" ( पा ८ १ ३ ) इति द्वितीयस्यानुदात्तत्वम्।
१० किंच—हे पशो, सर्वेऽपि यूय विषुरूपा नानारूपा अतुल्यस्वरूपा अपि सन्त इदानीं सलक्ष्माण समानलक्षणा हवीरूपेण "वाऽऽदानरूपेण[10] वा देवान् गच्छन्त तुल्यस्वरूपा भवथ यस्मात् भवथ। तत्र खलु हविष्ट्वापत्तौ सर्वेऽपि युष्मत्सबन्धिन. पशवो जात्यभेदात् हवि-स्वरूपा. सपद्यन्ते। "समानस्य छन्दसि" ( पा ६·३ ८४ ) इति सभाव.। यद्वा—सह लक्ष्मणा वर्तन्त इति सलक्ष्माण, "सलक्षणोपेता.[11] हविष्ट्वापत्त्या सर्वेऽपि यूय भवथ। "वोप-
१५ सर्जनस्य" ( पा ६·३·८२ ) इति सहस्य समाव.। "अदुपदेशात्" ( पा ६·१ १८६ ) इति लसार्वधातुकानुदात्तत्वम्। "विषुरूपा ह्येते सन्त सलक्ष्माण. एतर्हि भवन्ति" ( तैस ६·३ ११ ) इति ब्राह्मणम्। तस्मात् देवत्रा यन्त देवान् गच्छन्तम्। "देवमनुष्यपुरुष" ( पा ५·४ ५६ ) इति त्राप्रत्यय.। सखाय समानख्याना बन्धव। "समाने ख्य स चोदात्त." ( उ ५८६ ) इति इण्प्रत्यय। ते च मातरश्च पितरश्च त्वाम् अनु मदन्तु
२० अनुमन्यन्ताम् अनुमोदन्ताम् इति यावत्। अहो! अयमस्मत्सबन्धी पशुर्हवीरूपमापन्नो देवांस्तर्प-यितु याति, तत स्वयमपि देवो भविता। ततो वयमपि देवीभूय तेन सह स्वर्गे मोदितास्महे। तत सर्वं कुलमनुगृहीत भविष्यतीति। तदेवाह—अवसे रक्षणाय तव चात्मनश्च तृप्त्यर्थ वा। अवतिर्हि तृप्तौ च पठ्यते। तस्मादसुन् ( उ ६२८ )। "अनुमतमेवैन मात्रा पित्रा सुवर्गं लोक गमयति" ( तैस ६·३·११ ) इति च ब्राह्मणम्। मदी हर्षे दैवादिक, विकरणव्यत्ययेन
२५ शप् ( पा ३ १·८५ )॥

*[ द्र. 'यङो वा' ( पा ७·३ ९४ ) इति सूत्रे मिश्री—'भूसुवो' इति गुणनिषेधो यङ्लुकि नास्ति' इति। 'देध्यन्' इत्यत्रेव 'बोभुवत्' इत्यत्रापि—'नाभ्यस्तस्याचि' ( पा ७·३·८७ ) इत्यनेनैव गुणाभाव इति भट्टभास्कराचार्यैरभिप्रेयते इति प्रतिभाति।]। ७. ति—संपद्यते। ८ मै—तस्याविद्यमानत्व'। ९–९. पं—यद्विकर्तत्वे (?) पश्वङ्गं विशिष्टम्, तं—यद्विकर्तितव्य पश्वङ्गम् विशिष्टम्, ति—यद्विकर्तितव्ये
३० पश्वङ्गम विशिष्टम्। १० त—वाऽऽपादान'। ११ त पं—सर्वलक्षणोपेता।

श्रीरस्यग्निस्त्वा श्रीणात्वापः समरिणन् वातस्य ( १ )
त्वा ध्रज्यै पूष्णो रꣳह्या अपामोषधीनाꣳ रोहिष्यै

श्रीः । असि । अग्निः । त्वा । श्रीणातु । आपः । समिति । अरिणन् । वातस्य ( १ ) । त्वा । ध्रज्यै । पूष्णः । रꣳह्यै । अपाम् । ओषधीनाम् । रोहिष्यै ।

[12]पार्श्वेन होमार्थां वसां प्रयौति[13]—' श्रीरसि ' इति ॥ [V]श्रीः श्रपणीया पचनीया [V]असि हे वसे । पक्वं हि हूयते । आलोडनजन्मा विशेषः पाकः । श्रीञ् पाके क्रैयादिकः । तस्मात् संपदादिलक्षणः कर्मणि क्विप् ( पा ३·३·१०८ वा ९ ) । यत एवं तस्मात् [V]अग्निः एव स्वयमागत्य त्वां [V]श्रीणातु पाकविशेषशालिनीं करोतु, यः सर्वस्य पाकहेतुरिति भावः । किंच—तथा क्रियमाणां त्वाम् [V]आपः [V]समरिणन् संगच्छन्तु त्वा मा मुचन् मा शोषं गमन् इति । री गतिरेषणयोः क्रैयादिकः उदात्तेत् प्वादिः । तस्मात् १० " छन्दसि लुङ्लङ्लिटः " ( पा ३·४·६ ) इति लङ् । " प्वादीनां ह्रस्वः " ( पा ७·३·८० ) इति ह्रस्वत्वम् । " श्नाभ्यस्तयोरातः " ( पा ६·४·११२ ) इत्याकारलोपः । अद्भिः संगतायां मयि के गुणाः ? इति चेदाह—[V]वातस्य [V]त्वा [V]ध्रज्यै गमनाय । अशुष्कायां हि त्वयि याग-निर्वृत्त्या वातो गच्छति [14]सदागतिर्भवतीत्यर्थः । तस्माद्वातस्य ध्रज्यै त्वामापः समरिणन् इति । ध्रज ध्रजि गतौ । तस्मात् " इन् सर्वधातुभ्यः " ( उ ५६७ ) इति इन्प्रत्ययः । किंच [V]पूष्णः १५ आदित्यस्य [V]रंह्यै रंहणाय उदयाय । रहि गतौ । इदित्वान्नुम् ( पा ७·१·५८ ) । पूर्ववत् इन्प्रत्ययः ( उ ५६७ ) । उदात्तनिवृत्तिस्वरेण ( पा ६·१·१६१ ) पूष्णो विभक्तिरुदात्ता । किंच [V]अपां च [V]ओषधीनां च रसं [V]रोहिष्यै रोहणाय उत्पत्तये । " प्रयै रोहिष्यै अव्यथिष्यै " ( पा ३·४·१० ) इति निपात्यते । तस्माद्वातादिप्रवृत्तये अग्निस्त्वां श्रीणातु आपश्च त्वां समरिणन् इति । " ऊडिदम् " ( पा ६·१·१७१ ) इत्यादिना अद्भ्यो विभक्तिरुदात्ता । ओषधिशब्दो २० दासीभारादित्वादाद्युदात्तः ( पा ६·२·४२ ) । " पार्श्वेन वसाहोमं प्रयौति मध्यं वा एतत् पशूनाम् " ( तैसं ६·३·११ ) इत्यादि ब्राह्मणम् । यद्वा—श्रीः श्रयणीया पार्श्वेन मिश्रयित-व्यासि । " क्विब्वचि " ( उ २२५ ) इत्यादिना श्रयतेः क्विपि दीर्घत्वम् । तस्मादा-हवनीयोऽग्निस्त्वां श्रीणातु सेवतां भक्षयतु । श्रयतेर्ण्यन्तयेन श्नाप्रत्ययः ( पा ३·१·८१,८५ ),

श्रीरिति ॥ बौधायनः—" अथ दक्षिणेन पार्श्वेन वसाहोमं प्रयौति कुर्वतः श्रीरस्यग्निस्त्वा २५ श्रीणात्वापः समरिणन् वातस्य त्वा ध्रज्यै पूष्णो रꣳह्या अपामोषधीनाꣳ रोहिष्या इति " ( बौश्रौ ४·९ ) इति । आपस्तम्बः—" श्रीरसीति पार्श्वेन वसाहोमं प्रयौति । वातस्य त्वा ध्रज्या इति तेनैवापि दधाति "

१२. पं-' पार्श्वेन ' नास्ति । १३. मै-' प्रयौति ' इत्यस्यानन्तरम् ' आलोडयति ' । १४. तं. ति-सतां गतिर् ।

घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा त्वाऽन्तरिक्षाय ।

घृतम् । घृतपावान इति घृत-पावानः । पिबत । वसाम् । वसापावान इति वसा-पावानः । पिबत । अन्तरिक्षस्य । हविः । असि । स्वाहा । त्वा । अन्तरिक्षाय ।

५ धातोश्च दीर्घत्वम् । आपश्च समरिणन् त्वय्येकीभवन्तु । मा शुचन्नित्येतदर्थं त्वा मिश्रयामीति शेषः, पुनश्च त्वाशब्दश्रुतेः । एवं क्रियमाणे कः गुणो लोकस्य ? इत्याह—'वातस्य' इत्यादि ॥ सुबोधम् ॥

वसां जुहोति—'घृतम्' इति ॥ हे घृतपावानः घृतस्य पातारो देवाः, यूयं घृतं समागत्य पिबत । हे वसापावानः वसायाः पातारः यूयमपि वसां पिबत । पिबते "आतो मनिन्" (पा ३ २ ७४) इत्यादिना वनिप् । हे वसे, त्वम् अन्तरिक्षस्य अन्तरिक्षगामिनो

१० देवगणस्य हविः असि । यस्मादेवं तस्मात् अन्तरिक्षाय त्वा स्वाहाकरोमीति शेषः ।

(आपश्रौ ७ २५ ४–५) इति ॥ मांसपाकभाण्डे स्थितः स्नेहात्मको द्रवविशेषो वसा । सा च द्रुपत इति ह्रामशब्दाभिधेया । पार्श्वशब्देन वक्रत्वमस्थि विवक्षितं, तस्यास्थ्नोऽग्रभागं स्वधू जुह्वशब्दाभिधेयं । तेन वसारूपं ह्रामद्रव्यं पात्रं गृह्णात प्रचोत्याल्लोडयेदिति बौधायनवाक्यार्थः । मन्त्रार्थस्तु—हे वसे, श्रीः असि आश्रयणीयाऽसि तस्मादाहवनीयः अग्निः त्वा श्रीणातु आश्रयतु स्वीकरोतु । आपः च त्वा

१५ समरिणन् सम्यक् प्राप्नुवन्तु तव शोषो मा भूत् । हे वसे, त्वामविदधामि । किमर्थम् ? वातस्य ध्राज्यै वायोर्गत्यै । पूष्णः रंह्यै आदित्यस्य गत्यै । अप्संयनिधनीनाम् ओषधीनां रोहिष्यै प्ररोहार्थम् । त्वयि विधानेन सुरक्षितायां त्वदीयहोमसुकृतेन वायुगमनादिरूपो जगद्व्यवहारः सुस्थितो भवतीति स्तूयते ॥ ब्राह्मणं विधत्ते—"पार्श्वेन वसाहोमं प्र यौति मध्यं वा एतत् पशूनां यत्पार्श्वं रस एष पशूनां यद्वसा यत् पार्श्वेन वसाहोमं प्रयौति मध्यत एव पशूनां रसं दधाति" (तैसं ६ ३·११)

२० इति । अवदानसमर्पणमन्त्रस्य पूर्वभागे श्रुत 'ऐन्द्र' इत्यसौ तद्धितो देवतावाचीत्याह—"स्तनितं वा एतत् पशु यत्सञ्ज्ञपयन्त्यैन्द्रः खलु वै देवतया प्राण ऐन्द्रोऽपान ऐन्द्रः प्राण अङ्गेअङ्गे नि देध्यदित्याह प्राणापानावेव पशुषु दधाति" (तैसं ६ ३·११) इति । संज्ञपनं हननं, तत्तु श्वासनिरोधनात्प्र

* घातेन संपद्यते । तेनापकर्षणापनीतयोः प्राणापानयोः पुनः स्थापनं कर्तव्यम् ॥ द्वितीयभागे त्वष्टृशब्दाभिप्रायमाह—"देव त्वष्टर्भूरि ते सं समेत्वित्याह त्वाष्ट्रा हि देवतया पशवः" (तैसं ६ ३·११) इति ।

२५ तृतीयभागे हृदयाद्याकारेण वैलक्षण्यं हविष्ट्वेन सालक्षण्यं च प्रसिद्धमित्याह—"विषुरूपा यत् सलक्ष्माणो भवथेत्याह विषुरूपा ह्येते सन्तः सलक्ष्माण एतर्हि भवन्ति" (तैसं ६ ३ ११) इति ॥ चतुर्थभागेऽनुमदन्तुशब्दस्याभिप्रायमाह—"देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्त्वित्याहानुमतमेवैनं मात्रा पित्रा सुवर्गं लोकं गमयति" (तैसं ६ ३·११) इति । 'श्रीरसि', 'वातस्य त्वा' इत्येतौ मन्त्रावुपेक्षितौ ॥

३० घृतमिति ॥ बौधायनः —"सोऽर्धर्चे याज्यायै वसाहोमं जुहोति घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा त्वाऽन्तरिक्षाय स्वाहेति । वषट्कृते हविर्जुहोत्येतस्य होमस्य

१७ त—सुस्थिर । १८–१८ आ ट ड त पा—हननेन, मो—हननं, क—हननम् ।

दिशः॑ प्र॒दिश॑ आ॒दिशो॑ वि॒दिश॑ उ॒द्दिशः॑
स्वाहा॑ दि॒ग्भ्यो नमो॑ दि॒ग्भ्यः ॥ १० ॥
[ वार्तस्याद्यविंशतिश्च ]

दिशः॑ । प्र॒दिश॒ इति॑ प्र–दिशः॑ । आ॒दिश॒ इत्या–दिशः॑ । वि॒दिश॒ इति॑ वि–दिशः॑ । उ॒द्दिश॒ इत्यु॑त्–दिशः॑ । स्वाहा॑ । दि॒ग्भ्य इति॑ दिक्–भ्यः॑ । नमः॑ । दि॒ग्भ्य इति॑ दिक्–भ्यः॑ ॥ १० ॥ ५.
[ मैसं १·२·१७; कासं ३·७; कपिसं २·१४; वासं ६·१८–२० ]

वसाहोमोद्रेकेण दिशो जुहोति, दिग्भ्यो जुहोति— ' दिशः प्रदिशः ' इति ॥ यद्यप्येकैव नित्या सर्वगता दिक् तथाप्युपाधिभेदेन सा भिद्यते। यथा–यत्रादित्य उदेति सा प्राची, यत्रास्तमेति सा प्रतीची, यत्र [14]दृश्यमानो गच्छति सा दक्षिणा, यत्रादृश्यमानो गच्छति सोदीची, अवाग्गता अधरा । उद्गता ऊर्ध्वेत्यादि । तत्र दिक्शब्देनाविशेषात् सर्वासां ग्रहणम् । प्रदिगा- १०. दयस्तु शब्दा विशेषवचनाः । 'याः' इति चाध्याह्रियते । अयमर्थः—प्रदिगादिविशेषभिन्ना याः [v]दिशः ताभ्यो दिग्भ्यः स्वाहा स्वाहुतोऽयं वसाशेषोऽस्तु, नमश्चास्तु ताभ्यो दिग्भ्यः । अत्र प्रधानभूताः दिशः प्राच्यादयः [v]प्रदिशः । आस्थिता दिशः [v]आदिशः, या जन्तुभिरास्थीयन्ते । आगता वा अधोदिशो मध्यदिशश्च । विगता विविधस्वभावा वा दिशो [v]विदिशः । ताः पुनर्दक्षिणपूर्वादयः कोणदिशः । उद्गता दिशः [v]उद्दिशः ऊर्ध्वदिशः । सर्वत्र " परादिश्छन्दसि १५. बहुलम् " ( पा ६·२·१९९ ) इत्युत्तरपदाद्युदात्तत्वम् । यद्वा—प्राधान्येन दिशन्तीति प्रदिशः । आगत्य दिशन्तीति आदिशः । विविधं दिशन्तीति विदिशः । ऊर्ध्वं दिशन्तीत्युद्दिशः । ऋत्विगादिना दिशेः क्विन् ( पा ३·२·५९ ) । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६·२·१३९ ) । ईदृश्यो या दिशस्ताभ्यः [v]स्वाहा [v]नमः च [v]दिग्भ्यः इति । " सावेकाचः " ( पा ६·१·१६८ ) इति विभक्तेरुदात्तत्वम् । " दिशो जुहोति दिश एव रसेनानक्ति " ( तैसं ६·३·११ ) इति ब्राह्मणम् । २०.

॥ इति तृतीये दशमोऽनुवाकः ॥

प्रतिप्रस्थाता वसाहोमोद्रेकेण दिशो जुहोति दिशः प्रदिश आदिशो विदिश उद्दिशः स्वाहा दिग्भ्यो नमो दिग्भ्य इति " ( बौश्रौ ४·९ ) इति ॥ आपस्तम्बः :— " याऽग्राया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहोति घृतं घृतपावानः पिबतेति। उद्रेकेण दिशः प्रदिश इति प्रतिदिशं जुहोति मध्ये पञ्चमेन। माध्रिसुत्तमं संस्थाप्य नमो दिग्भ्य इत्युपतिष्ठते " ( आपश्रौ ७·२५·१०–१२ ) इति । उद्रेकः शेषः । हे [v]घृतपावानः देवाः, २५. अन्नरूपं [v]घृतं [v]पिबत । [19]हे [v]वसापावानः, इमां [v]वसां [v]पिबत[19] । हे [20]पशो, त्वमन्तरिक्षवासिनो देवगणस्य [v]हविः [v]असि अतोऽन्तरिक्षवासिने त्वां [v]स्वाहा जुहोमि ॥ [v]दिशः प्राच्यै दिशे स्वाहेति शेषः ।

१५. तं.ति.पं–प्रकाशमानः ।

१९–१९. आं.हा–एवमुत्तत्र । २०. क–हे वसे ।

तैसं २१॥

प्रदिशः दक्षिणायै। एवमन्यत्रापि। पक्षे तु [21]मन्त्रे सर्वाभ्यो दिग्भ्यः [21]स्वाहा इति योज्यम्। मन्त्रा उपेक्षिता॥ विधत्ते—"अर्धर्चे वसाहोमं जुहोत्यसौ वा अर्धर्च इयमर्धर्च इमे एव रसेनानक्ति दिशो जुहोति दिश एव रसेनानक्त्यथो दिग्भ्य एवोर्जं रसमव रुन्धे" (तैसं ६ ३ ११) इति। याज्यायाः पूर्वोत्तरयोरर्धर्चयो [22]अभिमानिनौ देवौ[22] द्यावापृथिव्याविति मध्ये होमेनोभे अपि रसेनाक्ते भवतः। उद्रेकहोमेन दिग्देवतास्तृप्यन्ति। यजमानस्यापि दिशां सकाशादूर्जरसप्राप्तिर्भवति॥ अवदानपूर्वकं द्वौ प्रैषमन्त्रौ मैत्रावरुणः प्रत्युत्पादयति—"प्राणापानौ वा एतौ पशूनां यत् पृषदाज्यं वानस्पत्याः खलु वै देवतया पशवो यत् पृषदाज्यस्योपहत्याऽऽह वनस्पतयेऽनु ब्रूहि वनस्पतये प्रेष्येति प्राणापानावेव पशुषु दधाति" (तैसं ६ ३·११) इति। पृषदाज्यस्योपहत्य पात्रगतं पृषदाज्यं स्रुवेण [23]जुह्वामवदायेत्यर्थः[24]। प्रैषयोरयमर्थः —हे मैत्रावरुण, वनस्पतिदेवतायै त्वमनुब्रूहि, पुरोनुवाक्यां पठ, ततो याज्यां पठितुं होतारं प्रेरयेति। एवं सति वनस्पतिदेवत्येषु पशुषु पृषदाज्यरूपौ प्राणापानौ दधाति॥ अथेदानीं तस्य तस्य हृदयाद्यङ्गस्यावदानमेकत्र समवद्यामीति विधत्ते—"अन्यस्यान्यस्य समवत्तं समवद्यति तस्मान्नानारूपाः पशवः" (तैसं ६ ३ ११) इति। समवत्तमवत्तशेषम्। अवदेयानामङ्गानां बहुविधत्वात् होमलभ्याः पशवोऽपि बहुविधाः। सर्वेष्ववदानेषु मांसमिश्रघृतजलेनोपसेचनं विधत्ते—"यूष्णोप सिञ्चति रसो वा एष पशूनां यद् यूषा रसमेव पशुषु दधाति" (तैसं ६·३ ११) इति। हविःशेषस्येडाभागस्य भक्षणार्थमुपह्वानं होतुर्विधत्ते—"इडामुप ह्वयते पशवो वा इडा पशूनेवोप ह्वयते चतुरुप ह्वयते चतुष्पादो हि पशवः" (तैसं ६·३·११) इति॥ इडादेवताया गोरूपत्वात् "[25]पशवो वा इडा[25]" (तैसं २·६·८) इत्युक्तम्। यद्यप्येतच्चोदकादेव प्राप्तं तथाऽप्याघारवदिहापि विकृतित्वद्योतनाय[26] पुनर्विधानम्॥ अत्रावदाने मेदसोऽपस्तरणाभिघारणे विधातुं तद्व्यतिरेकं निन्दति—"यं कामयेतापशुः स्यादित्यमेदस्कं तस्मा आ दध्यान्मेदोरूपा वै पशवो रूपेणैवैनं पशुभ्यो निर्भजत्यपशुरेव भवति" (तैसं ६ ३·११) इति। स्निग्धद्रवरहितं मांसममेदस्कम्। एनं यजमानं पशुभ्यः (शुभ्यो) निर्भजति निरस्यति। [27]अतो यजमानः पशुरहितो भवति[27]॥ विधत्ते—"यं कामयेत पशुमान्स्यादिति मेदस्वत्तस्मा आ दध्यान्मेदोरूपा वै पशवो रूपेणैवास्मै पशूनव रुन्धे पशुमानेव भवति" (तैसं ६ ३·११) इति। अत्र सूत्रम्—"मेदसोपस्तीर्य मेदसाऽभिघारयति" (आपश्रौ ७·२६ ३) इति। पृषदाज्येनानूयाजहोमं विधत्ते—"प्रजापतिर्यज्ञमसृजत ■ आज्यं पुरस्तादसृजत पशुं मध्यतः पृषदाज्यं पश्चात् तस्मादाज्येन प्रयाजा इज्यन्ते पशुना मध्यतः पृषदाज्येनानूयाजास्तस्मादेतन्मिश्रमिव पश्चात् सृष्टं हि" (तैसं ६·३ ११) इति।

यथा प्रथमसृष्टेनाऽऽज्येन प्रथमभाविनः प्रयाजा इज्यन्ते, यथा वा मध्यतः सृष्टेन पशुना [28]मध्यतो यजते, तथा पश्चात् सृष्टेन पृषदाज्येन पश्चाद्भाविनोऽनूयाजा यष्टव्याः। यस्मादेकं द्रव्यं न पर्याप्तमिति बुद्ध्वा पश्चाद्द्रव्यान्तरेण [29]सहोत्पादितं तस्मादेतत्पृषदाज्यं दधिमिश्रमेव चोदकप्राप्तम्॥ त्रित्वसंख्यामपोद्य संख्यान्तरं विधत्ते—"एकादशानूयाजान् यजति दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तमनु यजति" (तैसं ६·३ ११) इति॥ पृषदाज्यं प्रशंसति—"घ्नन्ति वा एतत्पशुं यत् संज्ञपयन्ति प्राणापानौ खलु वा एतौ पशूनां यत् पृषदाज्यं यत् पृषदाज्येनानूयाजान् यजति प्राणापानावेव पशुषु दधाति" (तैसं ६ ३·११) इति॥

२१. इ उ पा भां हा–' मन्त्रे ' नास्ति। २२–२२. तं मर–अभिमानिन्यौ, क–अभिमानिन्यौ देवी। २३. त–जुह्वामादाय। २४. इ उ ■ पा भां मर हा–' इत्यर्थः ' नास्ति। २५–२५ आ हा–पशव इडा। २६. त–'विकृतित्वव्यावर्तनाय। २७–२७. ■ उ पा भां–' अतो यजमानः पशुरहितो भवति ' नास्ति। २८. तं मर–मध्यकाले। २९. आ क पां–सहैतद्विहितम्, इ हा–सहैतद्विहितम्।

अत्र विनियोगसंग्रहः—

" सं तेऽभिघार्य हृदयमैन्द्रोऽवत्ताभिमर्शनम् ।
श्रोः पार्श्वेन वसां यौति यात पार्श्वावृता वसा ॥ १ ॥
घृते वसाहुतिः पड्भिर्दिग्होमा नम इत्यतः ।
दिक्ष्युपस्थानमन्त्रैते मन्त्रा द्वादश वर्णिताः " ॥ २ ॥ इति ॥

अथ मीमांसा ॥ द्वादशाध्यायस्य प्रथमपादे चिन्तितम्—

" पश्वर्थानुष्ठितैर्नास्ति पुरोडाश उपक्रिया ।
अस्ति वा विध्यभावान्नो *-शास्त्यवार्यत्वतोऽध्ववत्-* " ॥ (जैन्या १२·१·२) इति ॥

[30]"अग्नीषोमीयस्य पशोर्यानि"[30] चोदकप्राप्तानि प्रयाजादीन्यङ्गान्यनुष्ठितानि तैः पशुपुरोडाश उपकारो नास्ति । कुतः ? तदुपकारबोधकस्य विधेरभावात् । चोदकस्तु ' दर्शपूर्णमासवत् पशुरनुष्ठेयः ' इत्येवंरूपत्वात्[31] पशावेव तदुपकारं बोधयति । ननु पशुपुरोडाशस्यापीष्टिविकृतित्वात् तत्रापि चोदकोऽस्तीति चेत् । बाढम् । अत एव भिन्नचोदकबलात् पुरोडाशोपकाराय प्रयाजाद्यङ्गानि पृथगनुष्ठेयानीति प्राप्ते ब्रूमः । यद्यपि पश्वर्थैः पुरोडाशस्योपकार इत्येतादृशं शास्त्रं नास्ति तथाऽप्ययमुपकारोऽर्थतः प्राप्तो न वारयितुं शक्यते । यथा प्रदीपस्य वेदिप्रकाशार्थं निर्मितस्यार्थसिद्धं मार्गप्रकाशकत्वमनिवार्यं तथा पशुतन्त्रमध्येऽनुष्ठीयमानस्य पुरोडाशस्य पश्वर्थैरङ्गैरुपकारः केन वार्येत । तस्मादस्त्यर्थादस्त्युपकारः ॥

तत्रैवान्यच्चिन्तितम्—

" आज्यभागौ पुरोडाशे न स्तः स्तो वाऽस्य चोदकः ।
लुप्तस्ततो न तौ मैवं [32]प्रयोगांशस्य लोपनात् " ॥ (जैन्या १२·१·६) इति ॥

" तौ न पशौ करोति " ( आपश्रौ ७·२०·८ ) इति निषेधादाज्यभागयोः पशावभावेन पुरोडाशे प्रसङ्गसिद्धिर्नास्ति । ततस्तौ विधार्येते । तत्र पुरोडाशं आज्यभागौ न स्त इति तावत् प्राप्तम् । कुतः ? पुरोडाशविषयस्य चोदकस्य लुप्तत्वात् । अन्यथा प्रयाजादीनामपि पुनरनुष्ठानापत्तेरिति प्राप्ते ब्रूमः—न तावत् [33]पुरोडाशे चोदको लुप्यते बाद( बाध )काभावात् । पूर्वोक्तप्रसङ्गसिद्धिस्तु प्रयोगवचनमेव बाधते न चोदकम् । अन्यथा प्रयाजादीनां पुरोडाशाङ्गत्वाभावेन प्रसङ्गसिद्धेरप्यवक्तव्यत्वात् । ननु [34]प्रयोगबाधेऽप्याज्यभागौ न स्त इति चेत् । न[35] । आज्यभागौ प्रति बाधिकायाः [36]प्रयोगसिद्धेरभावात् । ततः [37]प्रसङ्गसिद्धाङ्गविषयप्रयोगस्यैव बाधादबाधितेन प्रयोगवचनांशेनाज्यभागावनुष्ठाप्येते । यथा देवदत्ते यज्ञदत्तयानमारूढे देवदत्तयानं निवर्त्यते न तु वस्त्रालंकारादि तद्वत् ॥

---

*-* जैमिनीयन्यायमालायां तु ' शयँतस्त्वस्तु लोकवत् ' । ३०–३०. तं.मर–अग्नीषोमीयपशौ यानि ; क–अग्नीषोमीयपशोर्यानि । ३१. तं–इत्येवंपरत्वात् । ३२. तं–प्रयोगाङ्गस्य । ३३. क.हा–पुरोडाशांशे । ३४. क.हा–प्रसङ्गबाधेऽप्या° ; ( जैमिनीयन्यायमालायां तु–' प्रयोगवचनबाधेऽप्या° ) । ३५. इ.उ.पा.मां.हा–' न ' नास्ति । ३६. मर प्रसङ्गसिद्धे । ३७. इ.उ.पा.मां–प्रसिद्धसिद्धाङ्ग° ; तं.मर–प्रसिद्धिसिद्धाङ्ग° ; क.हा–प्रसिद्धाङ्ग° ।

दशमाध्यायस्य तृतीयपादे चिन्तितम्—

" प्रयाजैकादशत्वादिविशेषविधिभिर्युते ।
पश्वादौ सामिधेन्यादिविध्यन्तो नास्त्युतास्त्यसौ ॥
विशिष्टाङ्गविधौ नासौ चोदकस्याप्रवृत्तितः ।
५ लाघवाद्गुणमात्रस्य विधे सोऽस्त्यतिदेशतः " ॥ ( जैन्या १०.३ १–२ ) इति ॥

अग्नीषोमीयपशावेकादश प्रयाजा श्रुता , चातुर्मास्येषु नव प्रयाजा , वायव्यपशौ " हिरण्यगर्भ " ( तैसं ५.५ १ ) इत्याघारमन्त्र , इत्यादिभिर्युतेषु पश्वादिषु प्राकृतेतिकर्तव्यता सामिधेन्यादिर्नास्ति । कुत ? संख्यामन्त्रादिगुणविशिष्टस्य प्रयाजाघाराद्यङ्गस्य प्रत्यक्षविधौ सत्युपदिष्टेनैवाङ्गेन निराकाङ्क्षे पश्वादौ चोदकस्याप्रवृत्तेरिति पूर्व पक्ष । पश्वादिविधिरन्यादितिकर्तव्यतामाकाङ्क्षति । तत्र प्राकृताङ्गान्यतिदिश्य
१० वा तदाकाङ्क्षा पूर्यतां विधास्यमानान्यङ्गान्तराण्युपदिश्य वेति विवक्षायां क्लृप्तोपकारतया प्राकृताङ्गातिदेश एव न्याय्य । ततश्चातिदेशत [38]प्राप्तप्रयाजाद्यङ्गमनूद्य गुणमात्रविधौ लाघवं भवति । गुणविशिष्टाङ्गविधौ तु गौरवं स्यात् । तस्मात् सङ्ख्यान्तरमन्त्रान्तराभ्यां पूर्वयो संख्यामन्त्रयोर्बाधेऽपि प्रयाजाघार-सामिधेन्यादीतिकर्तव्यता प्राप्नोत्येवातिदेशादिति [39]राद्धान्तः ॥

दशमाध्यायस्य[40] सप्तमे पादे चिन्तितम्—

१५ " पशु कृत्स्नो हवि किंवा प्रत्यङ्ग हविरन्यता ।
आद्यश्चोदनया नैवमवदानपृथक्त्वत " ॥ ( जैन्या १०.७ १ ) इति ॥

' अग्नीषोमीयं पशुमालभेत ' इत्यत्र कृत्स्नस्य पशोरेकहविष्ट्वं युक्तम् । कुत ? अग्नीषोमीय-देवतां प्रति द्रव्यत्वेन पशोश्चोदितत्वात् । न हि हृदयाद्यङ्गं साक्षात् पशुर्भवतीति प्राप्ते ब्रूम —" हृदय-स्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस " ( तैसं ६.३.१० ), " दोष्णोरवद्यति पार्श्वयोरव द्यति "
२० ( द्र मैसं ३.१०.३ ) इत्यादिना हृदयाद्यङ्गानामवदानानि पृथगाम्नायन्ते । अवदानं च हविष्ट्वप्रयोजक संस्कार । पुरोडाशादौ होतुमवदीयमानत्वदर्शनात् । [41]हवि शब्दश्च [42]कर्मणि व्युत्पत्त्या होमयोग्यं द्रव्य ब्रूते । [43]पश्वाकृतिचोदना तु हृदयाद्यङ्गद्वारेण देवतासम्बन्धादुपपद्यते । तस्मात् प्रत्यङ्गं हविर्भेद ।

तत्रैवान्यच्चिन्तितम्—

" एकेनाङ्गेन[44] यजेतां यद्वैकादशभिर्यजि ।
२५ एकेन यागसिद्धेर्हविषा भेदतोऽखिलै ॥
एकादशभिरन्येषां परिसंख्या भवेद्यतः ।
न त्रिदोषी गत्यभावादशक्तोऽकेश्च सोचिता " ॥ ( जैन्या १०.७ २–३ ) इति ॥

प्रत्यङ्गं हविर्भेदे स्थिते सति त्रेधा यागे संशय । तत्रानिर्दिष्टविशेषेण येन केनाप्यङ्गेन याग कर्तव्य , तावतैव यागस्य [45]सिद्धेरित्येक पक्ष[46] । चोदितपश्वङ्गत्वं परिगणितेषु हृदयादिषु [47]अन्येषु

३० ३८ तं म र–प्राप्त प्रया° । ३९. त–सिद्धान्त । ४०. म र–तत्रैव । ४१ उ.क पा भां हा–हवि शब्दस्य । ४२. आ–कर्म° । ४३. त–पश्वादिचोदना । ४४ उ पा भां हा–एकेन तेन । ४५ तं म र–सिद्धत्वादित्येक । ४६ उ पा भां हा–' पक्ष ' नास्ति । ४७. आ.क हा–अङ्गेषु ।

वसाहोमः ]

मांसशिरःप्रभृतिषु समानम् । ततो हृदयादिवदंसादीनां हविर्भेदत्वाद्यागमन्तरेण हूयमानत्वलक्षणद्विष्टव-स्यापर्यवसानात् सर्वैरङ्गैर्याग इति द्वितीयः पक्षः । हृदयादिभिरेकादशभिरेवाङ्गैर्यागः कर्तव्यः । कुतः ? अन्येषामंसादीनां परिसंख्यातत्वात् । कुतः ? चोदकेन सर्वेषामङ्गानामवदाने प्राप्ते हृदयादिवाक्येनांसादयः परिसंख्यायन्ते । ननु परिसंख्यायां विधिः स्वार्थं जह्यात्, परार्थः कल्पेत, प्राप्तं च बाधेतेति दोषत्रयं प्रसज्येत । प्रसज्यतां नाम । सति हि गत्यन्तरे तेषां दोषत्वम् । परिसंख्यायास्तु ते त्रयः स्वरूपमिति कृत्वा न दोषतां भजन्ते । किंच ' द्व्यानि मांसान्यभिमृशन्ति शृताशृतानि ' इति केषांचित् मांसानाम-पाकत्वमुच्यते । पाकस्तु हविषो मांसस्य प्रतिनियतः । तस्मादशृतत्वोक्तिरंसादिपरिसंख्यां गमयति । एवदेवाभिप्रेत्यांसादिप्रतिषेधः[४८] श्रुत्या वर्ण्यते—" मांसयोरवद्यति न शिरसः " ( द्र. आपश्रौ ७·२५·६ ) इत्यादिना । तस्मादेकादशभिरेव यागः कर्तव्यः[४९] ॥

तत्रैवान्यच्चिन्तितम्—

" इज्यादोषैरशेषैर्वा त्र्यङ्गैः स्विष्टकृतो हुतिः ।
आद्यः प्रकृतिवन्मैवं पूर्वार्धैरयुक्तिशेषतः " ॥ ( जैन्या १०·७·४ ) इति ॥

पशौ श्रूयते—' त्र्यङ्गैः स्विष्टकृतं यजति ' इति । तत्रेज्यार्थानां हृदयाद्येकादशाङ्गानां मध्ये यैः कैश्चित् त्र्यङ्गैरिज्याशेषभूतैः स्विष्टकृद्धोतव्यः । कुतः ? प्रकृताविज्याशेषेण पुरोडाशेन स्विष्टकृतो हुतत्वादत्रापि चोदकेन तथात्वादिति प्राप्ते ब्रूमः—" दोष्णः पूर्वार्धादग्र समवद्यति गुदस्य मध्यतः श्रोण्या जघानतः " ( मैसं ३·१०·३ ) इति वाक्यशेषेण हृदयादिभ्य एकादशभ्योऽन्यानि त्रीण्यङ्गानि स्विष्टकृते समाम्नायन्ते । न च हृदयादिष्वपि गुदादीन्याम्नातानीति शङ्कनीयम्, तद्विशेषस्य कल्पसूत्रकारेण दर्शितत्वात् । " हृदयं जिह्वा वक्षो यकृद्वृक्यौ सव्यं दोरुभे पार्श्वे दक्षिणा श्रोणिर्गुदतृतीयमिति दैवतानि । दक्षिणं दोः सव्या श्रोणिर्गुदतृतीयमिति सौविष्टकृतानि " ( आपश्रौ ७·२२·६–७ ) इति । तस्मादनिज्या-शेषैः त्र्यङ्गैः स्विष्टकृद्धोमः ॥

अष्टमाध्यायस्य द्वितीयपादे चिन्तितम्—

" पुरोडाशस्य सांनाय्यस्य वा धर्मः पशौ यतः ।
देवैक्यमाद्यस्तस्मान्नो हविर्जन्मादिसाम्यतः " ॥ ( जैन्या ८·२·२ ) इति ॥

अग्नीषोमीये पशावग्नीषोमीयपुरोडाशस्य धर्मः कार्यः । कुतः ? [५०]देवतैक्यादिति चेत् । नैवम् । सांनाय्यं पशोरुत्पन्नं, पशुरपि पशोरुत्पन्नः । [५१]श्रपणार्थम् वस्त्रा सांनाय्यपश्वोः समा । हविःसाम्यं[५१] च बलीय इत्युक्तम् ( द्र.आपश्रौ २४·३·४६; शाबरभाष्य मीसू ८·१·३२–३४ ) । तस्मात् सांनाय्यस्य धर्मः ॥

अत्र छन्दो नास्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

४८. ज.पा.मां–प्रतिनिषेधः । ४९. म२–कार्यः । ५०. क.पा.मां.हा–देव° । ५१–५१. क– श्रवणार्थमुखात् । सान्नाय्यपश्वोः समो हविःसाम्यम् ।

समुद्रं गच्छ स्वाहाऽन्तरिक्षं गच्छ स्वाहा देवꣳ सवितारं गच्छ स्वाहाऽहोरात्रे गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहा सोमं गच्छ स्वाहा यज्ञं गच्छ स्वाहा छन्दाꣳसि गच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा, नभो दिव्यं गच्छ स्वाहाऽग्निं वैश्वानरं गच्छ स्वाहा-

५ समुद्रम् । गच्छ । स्वाहा । अन्तरिक्षम् । गच्छ । स्वाहा । देवम् । सवितारम् । गच्छ । स्वाहा । अहोरात्रे इत्यहः-रात्रे । गच्छ । स्वाहा । मित्रावरुणाविति मित्रा-वरुणौ । गच्छ । स्वाहा । सोमम् । गच्छ । स्वाहा । यज्ञम् । गच्छ । स्वाहा । छन्दाꣳसि । गच्छ । स्वाहा । द्यावापृथिवी इति द्यावा-पृथिवी । गच्छ । स्वाहा । नभः । दिव्यम् । गच्छ । स्वाहा । अग्निम् । वैश्वानरम् । गच्छ । स्वाहा ।

---

१० उपयष्टोपयजति—गुदस्य प्रच्छेदात् ' समुद्रं गच्छ स्वाहा ' इत्येकादशभिर्मन्त्रैः ॥ समुद्रादिशब्दवाच्याश्च देवताः प्रसिद्धाः । गुदावदानं चेह गच्छेत्युच्यते । समुद्रवाच्यां देवतां गच्छ स्वाहा । करोमीति शेषः । समुद्राय त्वा स्वाहुतं करोमीति । एवमन्तरिक्षादिष्वपि योज्यम् । " समुद्रं गच्छ स्वाहेत्याह रेत एव तद्दधाति " ( तैस ६.४.१ ) इति ब्राह्मणम् । प्रजावृद्धिहेतुत्वादुपयजामेयमुक्तम् । " यज्ञेन वै प्रजापतिः प्रजा असृजत ता उपयड्भिरेव " १५ ( तैस ६.४.१ ) इत्यादि ब्राह्मणम् ॥

अन्तरिक्षं प्रजानां प्रजननम्, " अन्तरिक्षं ह्यनु प्रजाः प्र जायन्ते " ( तैस ६.४.१ ) ॥

सविता देवः सर्वस्य प्रेरकः । तेन सवित्रा प्रसूत एवास्मै प्रजाः प्रजनयति ॥

अहोरात्रे प्रजानामाधारत्वेन जन्महेतू । " अहोरात्रे ह्यनु प्रजाः प्र जायन्ते " ( तैस ६.४.१ ) । " अहःसर्वैकदेश " ( पा ५.४.८७ ) इत्यच् समासान्तः । " हेमन्तशिशिरा- २० वहोरात्रे " ( पा २.४.२८ ) इति निपात्यते ।

प्रजानां प्राणापानौ मित्रावरुणौ । तेन—" प्रजास्वेव प्रजातासु प्राणापानौ दधाति " ( तैस ६.४.१ ) । " देवताद्वन्द्वे च " ( पा ६.२.१४१ ) इति पूर्वोत्तरपदयोर्युगपत् प्रकृतिस्वरत्वम् ॥

---

दशमेऽनुवाके पशुहोमो वर्णितः । एकादशे गुदकाण्डेनोपयट्संज्ञका होमा उच्यन्ते ।

२५ समुद्रमिति ॥ कल्पः —" आग्नीध्रादौपयजानङ्गारानाहरति । होत्रीये उपयज उपयजति । शामित्राद्विस्फुरच्छुल्मुकमुत्तरस्या वेदिश्रोण्याम् । गुदकाण्डमेकादशधा तिर्यङ्छित्त्वाऽसंभिन्दन्नपर्यावर्तयन् वषट्कृते वषट्कृत एकैकं गुदकाण्डं प्रतिप्रस्थाता हस्तेन जुहोति समुद्रं गच्छ स्वाहेत्येतैः प्रतिमन्त्रम् । सर्वाणि हुत्वाऽद्भ्यस्त्वौषधीभ्य इति बर्हिषि लेपं निमृज्य मनो मे हार्दि यच्छेति जपति "

सोमः प्रजानां देवता । "सौम्या हि देवतया प्रजाः" ( तैसं ६.१.४ ) इति ॥

यज्ञः प्रजानामभ्युदयकारी । तेन "प्रजा एव यज्ञियाः करोति" ( तैसं ६.४.१ ) इति ॥

छन्दांसि स्वयं पशवः । तेन– "[1]पशवो वै छन्दांसि[1] पशूनेवाव रुन्धे" ( तैसं ६.४.१ ) । यजमानः प्रजानामेव पुष्ट्यर्थम् ॥

द्यावापृथिव्यौ प्रजानां वृद्धिहेतू । तेन "प्रजा एव प्रजाता द्यावापृथिवीभ्यामुभयतः परि गृह्णाति" ( तैसं ६.४.१ ) इति । "दिवो द्यावा" ( पा ६.३.२९ ) इति द्यावादेशः । पूर्ववदुभयपदप्रकृतिस्वरत्वम् ( पा ६.२.१४१ ) ॥ ५

नभः सलिलम् । दिवे हितं दिव्यं, देवेभ्यो हितं सस्याद्युत्पत्तिहेतुत्वेन यागहेतुत्वाद् वर्षजलमुच्यते । "प्रजाभ्य एव प्रजाताभ्यो वृष्टिं नि यच्छति" ( तैसं ६.४.१ ) इति । समुद्रे निषेकः । तस्य दिव्येन[2] रक्षा । "भवे छन्दसि" ( पा ४.४.११० ) इति यत्प्रत्ययः ॥ १०

विश्वेषां नराणां संबन्धी अग्निर्वैश्वानरो जाठर उच्यते । तेन "प्रजा एव प्रजाता अस्यां प्रति ष्ठापयति" ( तैसं ६.४.१ ) इति । आयुष्मतीः करोति । "नरे संज्ञायाम्" ( पा ६.३.१२९ ) इति पूर्वपदस्य दीर्घत्वम् ॥

( आपश्रौ ७.२६.९–१२ ) इति ॥ मन्त्रास्त्वेवमाम्नाताः—'समुद्रं गच्छ स्वाहाऽन्तरिक्षं गच्छ स्वाहा देवꣳ सवितारं गच्छ स्वाहाऽहोरात्रे गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहा सोमं गच्छ स्वाहा यज्ञं गच्छ स्वाहा छन्दांसि गच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा नभो दिव्यं गच्छ स्वाहाग्निं वैश्वानरं गच्छ स्वाहाऽद्भ्यस्त्वौषधीभ्यो मनो मे हार्दि यच्छ तनूं त्वचं पुत्रं नप्तारमशीय' इति । हे हविः, त्वं समुद्रादिनामकान् देवान् [v]गच्छ । हे लेप, त्वामस्मत्कार्योपधिसिद्ध्यर्थं बर्हिषि निमार्ज्मि । हृदये भवो हार्दो हृदयं सोऽस्यास्तीति हार्दि । हे समुद्रादिदेवतासमूह [v]मे [v]हार्दि [v]मनः प्रयच्छ । त्वत्प्रसादात् [v]तनूम् उत्तमजातियुक्तं शरीरं [v]त्वचं कान्तिमद्रूपं तथा गुणवन्तं [v]पुत्रं तत्पौत्रं च [v]अशीय आप्नुयाम् ॥ उपयजो विधत्ते—"यज्ञेन वै प्रजापतिः प्रजा असृजत ता उपयड्भिरेवाऽसृजत यदुपयज उपयजति प्रजा एव तद्यजमानः सृजते" ( तैसं ६.४.१ ) इति । ज्योतिष्टोमयज्ञस्य सृष्टिसाधनत्वेऽपि साक्षात्साधनत्वमुपयजामेव । अनूयाजसमीप इज्यन्त इत्युपयजः ॥ पशोः पाश्चात्यभागं द्रव्यत्वेन विधत्ते—"जघनार्धादव द्यति जघनार्धाद्धि प्रजाः प्रजायन्ते" ( तैसं ६.४.१ ) इति ॥ त्रेधा विभक्ते गुदकाण्डे स्थूलभागं विधत्ते—"स्थविमतोऽव द्यति स्थविमतो हि प्रजाः प्रजायन्ते" ( तैसं ६.४.१ ) इति । निर्गन्तुं सुकरात् स्थूलाच्छिद्रात् प्रजा उत्पद्यन्ते ॥ क्रमेण छिन्नानां भागानां सांकर्यं वारयति—"असंभिन्दन्नव द्यति प्राणानामसंभेदाय" ( तैसं ६.४.१ ) इति । अग्रभागं प्रथमतोऽवदाय पश्चान्मूलभागमित्येतादृशं विपर्यासं निषेधति—"न पर्यावर्तयति यत् पर्यावर्तयेदुदावर्तः प्रजा ग्राहुकः स्यात्" ( तैसं ६.४.१ ) इति । उदावर्तो रोगविशेषः ॥ समुद्रादिमन्त्राणां सर्वेषां प्रजोत्पत्तावुपयोगं विवक्षुः समुद्रजलस्य रेतःसाम्यमभिप्रेत्याऽऽह—"समुद्रं गच्छ स्वाहा इत्याह रेत एव तद्दधाति" ( तैसं ६.४.१ ) इति ॥ [1]अन्तरिक्षस्यावकाशप्रदातृत्वेनोपयोगं[1] दर्शयति—"अन्तरिक्षं गच्छ स्वाहेत्याहान्तरिक्षेणैवास्मै प्रजाः १५ २० २५ ३०

१–१. मै–'पशवो वै छन्दांसि' नास्ति । २. तं.ति–दिव्येन ।

१–१. आ.ह्रा–अन्तरिक्षशब्दस्यावकाशप्रदानेनोपयोगम् ; क.म२–अन्तरिक्षस्यावकाशप्रदानेनोपयोगम् ।

ऽद्भ्यस्त्वौषधीभ्यो मनो मे हार्दि यच्छ तनूं त्वचं पुत्रं नप्तारमशीय

अद्भ्य इत्यत्–भ्यः । त्वा । ओषधीभ्य इत्योषधि–भ्यः । मनः । मे । हार्दि । यच्छ ।
तनूम् । त्वचम् । पुत्रम् । नप्तारम् । अशीय ।

बर्हिषि हस्तौ निमार्ष्टि—' अद्भ्यस्त्वा ' इति ॥ हस्तगतो गुदावदानलेप उच्यते । अपामोषधीनां च सिद्धिर्यजमानस्य स्यादिति त्वा निमार्ज्मीति शेषः । बर्हिष्युदकेन शोधयामीत्यर्थः । उक्तस्वरौ चैतौ । स त्वं मे हार्दि हर्षवत् मनः[१] यच्छ देहि । मदीयं मनो हृष्टं कुर्विति यावत् । हृदि भवो हार्दः हृदयविकारः प्रार्थनीयः । स च हर्षः प्रसादो वा । सोऽस्यास्तीति हार्दि । " हृदयस्य हृल्लेखयदण्लासेषु " ( पा ६.३.५० ) इति हृद्भावः । धूमादित्वादाद्युदात्तत्वं द्रष्टव्यम् ( पा ६.१.२०३ ) । " प्राणानां वा एषोऽव द्यति योऽवद्यति गुदस्य मनो मे " ( तैस ६.४.१ ) इत्यादि ब्राह्मणम् ॥

धूममन्वीक्षते—' तनूम् ' इति ॥ शोभनतन्वादीनामाशासनस्य युक्तत्वात् शोभनाः तन्वादयो गृह्यन्ते । तन्वादीनि शोभनानि अशीय प्राप्नुयाम् । अश्नोतेर्लिङि " बहुलं छन्दसि " ( पा २.४.७३ ) इति शपो लुक् । सीयुडादि ( पा ३.४.१०२ ) । " कृषिचमितनि " ( उ ८४ ) इत्यादिना तनोतेरूप्रत्ययः ॥

प्र जनयत्यन्तरिक्षं ह्यनु प्रजाः प्रजायन्ते " ( तैस ६.४.१ ) इति ॥ प्रेरकत्वेन सवितुरुपयोग इत्याह—" देवं सवितारं गच्छ स्वाहेत्याह सवितृप्रसूत एवास्मै प्रजाः प्र जनयति " ( तैस ६.४.१ ) इति ॥ उत्पत्तिकालत्वेनाहोरात्रोपयोगमाह[२]—" अहोरात्रे गच्छ स्वाहेत्याहाहोरात्राभ्यामेवास्मै प्रजाः प्र जनयत्यहोरात्रे ह्यनु प्रजाः प्रजायन्ते " ( तैस ६.४.१ ) इति ॥ प्राणापानप्रदत्वेन मित्रावरुणयोरुपयोगमाह—" मित्रावरुणौ गच्छ स्वाहेत्याह प्रजास्वेव प्रजातासु प्राणापानौ दधाति " ( तैस ६.४.१ ) इति ॥ देवतात्वेन सोमोपयोगमाह—" सोमं गच्छ स्वाहेत्याह सौम्या हि देवतया प्रजाः " ( तैस ६.४.१ ) इति ॥ [३]प्रजाप्रदत्वेन यज्ञस्योपयोगमाह—" यज्ञं गच्छ स्वाहेत्याह प्रजा एव यज्ञियाः करोति " ( तैस ६.४.१ ) इति ॥ पशुप्रदत्वेन छन्दसामुपयोगमाह—" छन्दांसि गच्छ स्वाहेत्याह पशवो वै छन्दांसि पशूनेवाव रुन्धे " ( तैस ६.४.१ ) इति ॥ धारणाय द्यावापृथिव्योरुपयोगमाह—" द्यावापृथिवी गच्छ स्वाहेत्याह प्रजा एव प्रजाता द्यावापृथिवीभ्यामुभयतः परि गृह्णाति " ( तैस ६.४.१ ) इति ॥ वृष्टिप्रदानेन नभस उपयोगमाह—" नभो दिव्यं गच्छ स्वाहेत्याह प्रजाभ्य एव प्रजाताभ्यो वृष्टिं नि यच्छति " ( तैस ६.४.१ ) इति ॥ प्रतिष्ठाप्रदानेन वैश्वानरस्योपयोगमाह—" अग्निं वैश्वानरं गच्छ स्वाहेत्याह प्रजा एव प्रजाता अस्यां प्रति ष्ठापयति " ( तैस ६.४.१ ) इति ॥ ' अद्भ्यस्त्वौषधीभ्यः ' इति मन्त्र उपेक्षितः ॥ ' मनो मे हार्दि यच्छ ' इति प्रार्थनाया प्रसङ्गमाह—" प्राणानां वा एषोऽव द्यति योऽवद्यति गुदस्य मनो मे हार्दि

१. ट ति प–' मनः ' इत्यस्यानन्तरं ' देहम् ' ।

२. त म र–राज्योरुपयोगमाह । ३. उ क पां हा–प्रजापतेर्यजमानप्रदत्वेन ।

शुगसि (१) तमभि शोच योऽस्मान् द्वेष्टि यं च वयं द्विष्मो धाम्नोधाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्निया वरुणेति शपामहे ततो वरुण नो मुञ्च ॥११॥

[ असि षड्विंशतिश्च ]

शुक् । असि (१) । तम् । अभीति । शोच । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । धाम्नोधाम्न इति धाम्नः-धाम्नः । राजन् । इतः । वरुण । नः । मुञ्च । यत् । आपः । अघ्नियाः । वरुण । इति । शपामहे । ततः । वरुण । नः । मुञ्च ॥ ११ ॥ ५

[ मैसं १-२-१८; कासं ३-८; कपिसं २-१५; वासं ६-२१-२२ ]

हृदयशूलमुद्वासयति—' शुगसि ' इति ॥ हे हृदयशूल, ${}^{v}$शुक् शोकस्त्वम् ${}^{v}$असि, तस्मात् ${}^{v}$यः ${}^{v}$अस्मान् ${}^{v}$द्वेष्टि ${}^{v}$यं ${}^{v}$च ${}^{v}$वयं ${}^{v}$द्विष्मः ${}^{v}$तम् ${}^{v}$अभि ${}^{v}$शोच आभिमुख्येन शोचय । " पशोर्वा आलब्धस्य हृदयं शुगृच्छति सा हृदयशूलमभि समेति " ( तैसं ६-४-१ ) इत्यादि १० ब्राह्मणम् ॥

सर्वे एवाद्भिर्मार्जयन्ते—' धाम्नोधाम्नः ' इति ॥ ${}^{v}$धाम्नोधाम्नः स्थानात् स्थानात् । कस्य ? शुगसीति प्रकृतत्वाच्छोकस्य । शोकस्थानं च द्वेष्टा द्वेष्यश्च । ' योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ' इति यौ प्रकृतौ । अयमर्थः—${}^{v}$इतः प्रकृतात् शोकस्य स्थानात् द्वेष्टृलक्षणात् द्वेष्यलक्षणात् च हे ${}^{v}$राजन् ${}^{v}$वरुण, अस्मान् ${}^{v}$मुञ्च द्वेष्ट्रादिलक्षणात् सर्वस्मात् शोकस्थानात् अस्मान् मुञ्चेति । १५ वीप्सायां द्विर्वचनम् ( पा ८-१-४ ) । आम्रेडितस्य चानुदात्तत्वम् ( पा ८-१-३ ) । किंच—हे ${}^{v}$वरुण, ${}^{v}$ततः अभिपाशादस्मान् ${}^{v}$मुञ्च । कुतः ? शोकाभितप्ता वयं ' हे ${}^{v}$आपः, हे ${}^{v}$अघ्नियाः, हे ${}^{v}$वरुण ', इति ${}^{v}$यत् ${}^{v}$शपामहे, यच्छापेनास्माभिः पापमुपार्जितं तस्मादपीत्यर्थः । शापो हि

यच्छेत्याह प्राणानेव यथास्थानमुप ह्वयते " ( तैसं ६-४-१ ) इति ॥ गुदस्य प्राणाधारत्वेन तदवदाने सति स्थानभ्रष्टाः प्राणाः पुनर्मन्त्रेण यथास्थानं स्थापिता भवन्ति ॥ २०

शुगसीति ॥ कल्पः—" अग्रेण यूपं स्वयेनोदयावोक्ष्य शुष्कस्य चाऽऽर्द्रस्य च संधौ हृदयशूलमुद्वासयति । शुगसि तमभिशोच योऽस्मान् द्वेष्टि यं च वयं द्विष्म इति । अथाद्भिर्मार्जयन्ते धाम्नोधाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्निया वरुणेति शपामहे ततो वरुण नो मुञ्चेति " ( बौश्रौ ४-१०-११ ) इति ॥ हे हृदयशूल, त्वं ${}^{v}$शुक् ${}^{v}$असि शोकरूपमसि । अतो द्वेष्टारं द्वेष्यं च ${}^{v}$अभि ${}^{v}$शोच अभिप्राप्य शोचय । हे ${}^{v}$वरुण, त्वम् ${}^{v}$इतो ${}^{v}$धाम्नोधाम्नः तत्तद्द्वेष्टृद्वेष्यस्थानाच्छोकप्रापकादस्मान् मोचय । किंच ' हे २५ ${}^{v}$आपः, हे ${}^{v}$अघ्नियाः, हे ${}^{v}$वरुण ', इत्येवं वयं तदाऽस्माकमिष्टप्राप्त्यनिष्टनिवारणार्थं देवं त्वां ${}^{v}$शपामहे

प्रशस्तदेवतानामसंकीर्तनेन परेषामनर्थाशासनम् । यथा—कश्चिच्छोकाभितप्त आह—हे आप,, यूयमेवेद् जाल्म द्रष्टुमर्हथ । " आपो वै सर्वा देवता " ( तैब्रा ३.२.४ ) इति मन्यामह इति । एव गङ्गादिष्वपि द्रष्टव्यम् । निदर्शन चेतत् प्रशस्तदेवतानामन्यासामपि । यथा—हे ईश्वर, हे तपन, हे निवात इति । तत्र लौकिकाना कृताद्युदात्तानाम् [४]आमन्त्रणपदानामिदमनुकरणम् । ततश्च सत्यपि पदात् परत्वे आमन्त्रितनिघातो न प्रवर्तते । न ह्यत्र मार्जयमाना अब्रादीन् आमन्त्रयन्ते । शप आक्रोशे । स्वरितेत्त्वादात्मनेपदम् । यद्वा—" शप उपलम्भने " ( पा १.३.२१ वा ८ ) इत्यात्मनेपदम् । वाचा शरीरस्पर्शनमुपालम्भः । [५]अतोऽयमर्थः—हे आप , युष्मभ्य शपामहे नैदमस्माभिर्ज्ञातमिति । एव यच्छपामहे सत्यसति वा विषये शोकावेगेन ततोऽपि पापादस्मान् मुञ्चेति । अघ्नियाशब्दो यत्प्रत्ययान्तोऽन्तोदात्त ( पा ६.२.१५६ ) । यथा—" पतिरघ्नियानाम् " ( तैस ३.१.१ ) इति । तस्य पाष्ठिकमामन्त्रिताद्युदात्तत्वम् ( पा ६.१.१९८ ) । वरुणेयपि अघ्नियाशब्दानन्तरम आमन्त्रितानुकरणत्वात् न निहन्यते । अन्यत्तु निहन्यत एव ॥

॥ इति तृतीये एकादशोऽनुवाक ॥

---

बाधामहे । महता प्रत्यक्षं नामग्रहणमेव तावत् महान् द्रोह । तथा च श्रूयते—" यो वै वसीयाꣳसं यथानाममुपचरति । पुण्यार्ति वै स तस्मै कामयते " ( तैब्रा ५.११ ) इति । न केवलमत्र नामग्रहण किं त्वस्मदपेक्षिततत्तत्कार्यसाधनप्रयासश्च । तेनोभयेन अन्यं यत् पापमस्ति हे [४]वरुण, [५]तत पापादस्मान् मोचय । मन्त्रार्थेताद्युपेक्षितौ ॥ शूलोद्वासन विधत्ते—" पशोर्वा आलब्धस्य हृदयꣳ शुगृच्छति सा हृदयशूलमभि समेति यत् पृथिव्याꣳ हृदयशूलमुद्वासयेत् पृथिवीꣳ शुचाऽर्पयेद्यदप्स्वप शुचाऽर्पयेच्छुष्कस्य चाऽऽर्द्रस्य च संधावुद्वासयत्युभयस्य शान्त्यै " ( तैसं ६.४.१ ) इति ॥ उद्वासनकाले ध्यानं विधत्ते—" यं द्विष्यात् त ध्यायेच्छुचैवैनमर्पयति " ( तैसं ६.४.१ ) इति ॥

अत्र विनियोगसंग्रह —

" समुद्र गुदकाण्डस्य होमा भद्रास्तु बर्हिषि ।
छेपं मार्ष्टि मनो अप्स्वः शूलमंधावार्द्रशुष्कयो ॥
[४]सकरवा शूल [५]"धाम्नो मुञ्च"[५] भवेत् पञ्चदशोदिता " ॥ १ ॥ इति ॥

अत्र मीमांसाच्छन्दसी न स्त ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके एकादशोऽनुवाकः ॥ ११ ॥

---

४. तं–आमन्त्रि° । ५. तं ति–अयमर्थः ।

---

४ इ उ पा हा–°स्ता । ५–५ म–धाम्नसूर्यम्, क.हा–धाम्नमृत्यम् ।

हुविष्मंतीरि॒मा आपो॑ हुविष्मा॑न् दे॒वो अ॑ध्व॒रो
हुविष्मा॑ँ॒ आ वि॑वासति हुविष्मा॑ँ॒ अस्तु॒ सूर्यः॑ ॥
हुविष्मं॑तीः । इ॒माः । आपः॑ । हुविष्मा॑न् । दे॒वः । अ॒ध्व॒रः ।
हुविष्मा॑न् । एति॑ । वि॒वासति । हुविष्मा॑न् । अस्तु॑ । सूर्यः॑ ॥

वसतीवरीर्गृह्णाति—' हविष्मतीः ' इति चतुष्पदया ॥ " अनुष्टुभा गृह्णाति " ( तैसं ६.४.२ ) इत्यादि ब्राह्मणम् ॥ इमाः वसतीवरीसंज्ञाः आपः हविष्मतीः हविष्मत्यः हविषा सोमेन संस्कार्येण तद्वत्यः सोमसंस्कारकारका[1] इत्यर्थः । " वा छन्दसि " ( पा ६.१.१०६ ) इति पूर्वसवर्णदीर्घत्वम् । एताभिश्च सोममनुप्रविश्य स्वयमपि हविष्ट्वमापन्नाभिः हविष्मान् अस्तु । देवः [2]देवनादिगुणः [3] अध्वरः यागः, हिंसकरहितत्वात् । " नञ्सुभ्याम् " ( पा ६.२.१७२ ) इत्युत्तरपदान्तोदात्तत्वम् । यद्वा—यागेनाराध्यो देवः सर्वविजयी हविष्मानस्तु । " अनुदात्ते च कुधपरे " ( पा ६.१.१२० ) इति संहितायां ' देवो ' इति प्रकृत्या भवति । ततश्चानेनैव प्रकारेण यजमानोऽपि हविष्मान् सन् आ विवासति आविवासतु परिचरतु देवान् । " आतोऽटि नित्यम् " ( पा ८.३.३ ) इति संहितायां नकारस्य [**]रुत्वम् । " अत्रानुनासिकः पूर्वस्य तु वा " ( पा ८.३.२ ), " अनुनासिकात् परोऽनुस्वारः " ( पा ८.३.४ ) । तदर्थमेताभिर्गृह्यमाणाभिः हविष्मान् भगवान् सूर्यः अस्तु, एतासां हविष्ट्वसंपादनाय यावद्ग्रहणमस्तं नेयादित्यर्थः ॥ " यस्यागृहीता अभि निम्रोचेत् " ( तैसं ६.४.२ ) इत्यादि ब्राह्मणम् ॥ पूर्ववत् संहितायां रुत्वम् ( पा ८.३.९, २–४ ) । " देवा वै यज्ञमाग्नीध्रे व्यभजन्त ततो यदत्यशिष्यत " ( तैसं ६.४.२ ) इत्यादि ब्राह्मणं समस्तोऽनुवाकः ॥

एकादशेऽनुवाके शुदकाण्डहोमो वर्णितः । एतावताऽग्नीषोमीयः पशुः समाप्तः । अथ सोमाभिषवोपयुक्तानां वसतीवरीसंज्ञकानामपामुपादानं द्वादशेऽनुवाकेऽभिधीयते ।

हविष्मतीरिति ॥ कल्पः—" अथ यो दीक्षितः कुम्भस्तं याचति । तमादायान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य यत्राऽऽपस्तदेति[*] । नान्तमा वहन्तीरत्येति । न स्थावराणां गृह्णाति । प्रतीपं तिष्ठन् गृह्णाति । छायायै चाऽऽतपतश्च संधौ गृह्णाति हविष्मतीरिमा आपो हविष्मान् देवो अध्वरो हविष्माँ आ विवासति हविष्माँ अस्तु सूर्य इति " ( बौश्रौ ६.३२ ) इति ॥ दीक्षितो द्रष्टः । इमाः गृह्यमाणा वसतीवरीसंज्ञकाः आपः स्वसंस्कारेण सोमेन हविष्मत्यो भवन्तु । देवः इन्द्रोऽपि हविष्मानस्तु । अध्वरः यागोऽपि हविष्मान् आ विवासति समन्ताद्विशेषेण प्रवर्तताम् । वसतीवरीणां

१. तं.ति–' वसतीवरीः ' इत्यस्य पूर्वं ' समाप्तं पाशुकमतः परमध्वरकाण्डमेव ' । २. तं.ति.पं१–°संस्कारार्थाः । ३. तं.ति–दानादिगुणयुक्तः; पं.१–दानादिगुणः । **[ वस्तुतस्तु ' दीर्घादटि ' ( पा ८.३.९ ) इत्यादिना नकारस्य रुः । ] ।

*[ बौश्रौसूत्रे ' यत्राऽऽपस्तयन्ति ' । ] ।

प्रकाशकत्वेन [४]सूर्य. अपि [४]हविष्मान् [४]अस्तु ॥ विधत्ते—" देवा वै यज्ञमाग्नीध्रे व्यभजन्त ततो यदत्य-शिष्यत तदब्रुवन् वसतु नु न इदमिति तद्वसतीवरीणां वसतीवरित्वं तस्मिन् प्रातर्न समशक्नुवन् तदप्सु प्रावेशयन् ता वसतीवरीरभवन् वसतीवरीर्गृह्णाति यज्ञो वै वसतीवरीर्यज्ञमेवाऽऽरभ्य गृहीत्वोप वसति " ( तैसं ६ ४ २ ) इति। पुरा कदाचिद् देवा आग्नीध्रमण्डपे स्थित्वा यज्ञशालामशेनेद मम इदं ममेत्येव व्यभजन्त। तत सर्वे स्वस्वभागेषु विभक्तेषु[१] यदवशिष्ट तदुद्दिश्य परस्परमब्रुवन्निदमवशिष्ट-मिदानीं साधारण्येनास्माकमेव तिष्ठतु प्रातर्विभागं करिष्याम इति[२]। यस्मात ' वसतु ' इति देवैरुक्त तस्मात्तस्यांशस्य [३]योगात् ' वसतीवरी ' इति नाम सपन्नम्। वसत्विरयुक्त्या [४]उर्वरित यत् शेषभूत तद्रूपा आपो वसतीवर्य। तत प्रात काले पुन समागत्य तस्मिन्नवशिष्टे विभाग कर्तुं नाशक्नुवन्। तस्याल्पत्वेन बहूनामपर्याप्तत्वात्। तस्य साधारणस्यैकेन ग्रहीतुमशक्यत्वात् अप्सु तत्[५] परित्यक्तवन्त । ताश्चाऽऽपो वसतीवर्योऽभवन्। ततो यज्ञाकारत्वात् वसतीवरीर्गृह्णीयात्। तद्ग्रहणेन यज्ञमेवोपक्रम्य दृढ धार-यित्वा तत्समीपे वसति ॥ तस्य ग्रहणस्य सूर्यास्तमयात् पूर्वकाल व्यतिरेकमुखेन विधत्ते—" यस्यागृहीता अभि निम्रोचेदनारब्धोऽस्य यज्ञ स्याद्यज्ञ वि च्छिन्द्यात " ( तैस ६.४ २ ) इति। अगृहीता एता [६]अभि-लक्ष्य [७]यत् नि म्रोचेदस्तमियात् तदा पूर्वदिने यज्ञोऽनारब्धो[८] भवेत्। [९]तत परेद्यु अनुष्ठितेऽपि[९] विच्छिन्न एव स्यात् ॥ कथंचिदस्तमये सति त्रेधा प्रतीकार विधत्ते—" ज्योतिष्या वा गृह्णीयाद्धिरण्यं वाऽवधाय सशुक्राणामेव गृह्णाति यो वा ब्राह्मणो बहुयाजी तस्य कुम्भ्यानां गृह्णीयात् स हि गृहीतवसतीवरीक " ( तैसं ६.४ २ ) इति। उल्कया द्योतिता इत्याद्य पक्ष । कुम्भे हिरण्यमवधाय तत्सहिता इति द्वितीय पक्ष । सोमयाजिगृहं कुम्भगता इति तृतीय पक्ष । उक्तमेव विधिमनूद्य प्रशंसति—" वसतीवरीर्गृह्णाति पशवो वै वसतीवरी पशूनेवाऽऽरभ्य गृहीत्वोप वसति " ( तैस ६.४.२ ) इति। पशुप्राप्तिहेतुतया पशुत्वम् ॥ ग्रहणकाले प्रवाहाभिमुख्य विधत्ते—" यदन्वीप तिष्ठन् गृह्णीयान्निर्मार्गुका अस्मात् पशव स्यु प्रतीप तिष्ठन् गृह्णाति प्रतिरुध्यैवास्मै पशून् गृह्णाति " ( तैस ६.४.२ ) इति। प्रवाहो यन्मुख तन्मुखत्वेनावस्थान-मन्वीपत्वं, तद्विपरीतत्वं प्रतीपत्व, निर्मार्गुका विनश्वरा , प्रतिरुध्य विनाशं निवार्य ॥ प्रवाहगतोदक विधत्ते— " इन्द्रो वृत्रमहन्त्सोऽपोऽभ्यम्रियत तासा यन्मेध्य यज्ञियं सदेवमासीत् तदत्यमुच्यत ता वहन्तीरभवन् वहन्तीनां गृह्णाति या एव मेध्या यज्ञिया सदेवा आपस्तासामेव गृह्णाति " ( तैसं ६.४.२ ) इति। प्रवाहेष्वप्यन्तसमीपस्थं जलं व्यतिरेकमुखेन विधत्ते—" नान्तमा वहन्तीरतीयाद्यदन्तमा वहन्तीरतीया-द्यज्ञमति मन्येत " ( तैस ६ ४ २ ) इति। अन्तमा अन्तिकतमा । अतिमन्येतावजानीयात् ॥ वहन्तीष्वपि नदीषु या ह्रदवन्निश्चलाः स्थावरा आपो याश्च [१०]तटाकादिस्थिता तासां ग्रहण निषेधति—" न स्थावराणां गृह्णी-याद्वरुणगृहीता वै स्थावरा यत्स्थावराणां गृह्णीयाद्वरुणेनास्य यज्ञं ग्राहयेत् " ( तैस ६ ४.२ ) इति ॥ आसां ग्रहणाय छायातपयो संधिदेश विधत्ते—" यद्वै दिवा भवत्यपो रात्रि प्र विशति तस्मात् ताम्रा आपो दिवा ददृश्रे यन्नक्तं भवत्यपोऽह प्र विशति तस्माच्चन्द्रा आपो नक्तं ददृश्रे छायायै चाऽऽतपतश्च संधौ गृह्णात्यहो-

१. आ हा–' विभक्तेषु ' नास्ति। २. इ.उ.पा.हा–' इति ' नास्ति। ३. आ क–देवैः कि-योगात त मर–' योगात् ' नास्ति। ४ आ–' उर्वरितम् ' नास्ति। ५. आ हा–' तत् ' नास्ति। ६ तै–उपवीक्ष्य। ७. इ उ क त पा मर हा–' यत् ' नास्ति। ८. आ क–यज्ञोऽनुपक्रान्त । ९–९. आ हा–तदाऽपरेद्युरनुष्ठितोऽपि। १०. आ हा–तटाकादिस्था.।

वसतीवरीग्रहणम् ]

अग्नेर्वोऽपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनीः सुम्ने मा धत्त-

अग्नेः । वः । अपन्नगृहस्येत्यपन्न–गृहस्य । सदसि । सादयामि ।

सुम्नाय । सुम्निनीः । सुम्ने । मा । धत्त ।

ता जघनेन शालामुखीयं वेद्यां संसृष्टाः[४] सादयति—'अग्नेर्वः' इति ॥ अपन्नगृहस्य अविपन्नगृहस्य नित्यगृहस्य च सदसि तदधिष्ठिते तत्समीपस्थाने युष्मान् सुम्नाय सुखार्थं सादयामि ॥ यजमानस्य सुखं स्यादिति । हे सुम्निनीः सुम्निन्यः सर्वदा सुखहेतुभूताः । पूर्ववत् पूर्वसवर्णदीर्घत्वम् ( पा ६·१·१०६ ) । मामध्वर्युमपि सुम्ने धत्त स्थापयत । "अस्मै वै लोकाय गार्हपत्य आधीयते" ( तैसं ६·४·२ ) इत्यादि ब्राह्मणम् ॥

ता आदाय दक्षिणया द्वारोपनिर्हृत्य सव्येंऽसे निधाय दक्षिणेन परीत्य दक्षिणतो यूपेन संस्पृष्टाः सादयति—'इन्द्राग्नियोः' इति ॥ इन्द्राग्न्योः भागधेयीः भागभूता यूयं स्थ । "भागरूपनामभ्यो धेयः" ( पा ५·४·३६ वा २ ) इति स्वार्थे धेयप्रत्ययः । "केवलमामक-भागधेय" ( पा ४·१·३० ) इत्यादिना ङीप् । इन्द्राग्नीशब्दस्य "देवताद्वन्द्वे च" ( पा ६·२·१४१ ) इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वे "नोत्तरपदेऽनुदात्तादौ" ( पा ६·२·१४२ ) इति प्रतिषिद्धे समासान्तोदात्तत्वमेव । तत्र "उदात्तयणः" ( पा ६·१·१७४ ) इति विभक्ते-रुदात्तत्वम् । "सर्वतः परिहरति रक्षसामपहत्यै" ( तैसं ६·४·२ ) इति ब्राह्मणम् ॥

रात्र्योरेवास्मै वर्णं गृह्णाति" ( तैसं ६·४·२ ) इति । अहर्यदा वर्तते तदानीमप्सु रात्रिः प्रविशति । तत्र जलवर्णस्य शुक्लस्य रात्रिवर्णस्य कृष्णस्य च मेलनात् ईषत्ताम्रा इवाऽऽपो दिने दृश्यन्ते । यथा राहुग्रस्ते चन्द्रे ताम्रत्वं तद्वत् । यदा तु रात्रिः प्रवर्तते तदानीमहोऽप्सु प्रविशति । तत्र शुक्लवर्णयोर्मेलनादापो रात्रौ चन्द्रवदतिश्वेता दृश्यन्ते । तस्माद्वर्णद्वयोपेते संधिदेशे गृह्णीयात् ॥ [११]अविशेषणेन मन्त्रगतहविष्मच्छब्देन हविःसंपादकत्वं विवक्षितमित्याह—"हविष्मतीरिमा आप इत्याह हविष्कृतानामेव गृह्णाति" ( तैसं ६·४·२ ) इति ॥ सूर्यशब्देनापां प्रकाशोपेतत्वं विवक्षितमित्याह—"हविष्मा२ अस्तु सूर्य इत्याह सशुक्राणामेव गृह्णाति" ( तैसं ६·४·२ ) इति ॥ मन्त्रगतस्य छन्दस उपयोगमाह—"अनुष्टुभा गृह्णाति वाग्वा अनुष्टुग्वाचैवैनाः सर्वया गृह्णाति" ( तैसं ६·४·२ ) इति ॥

अग्नेरिति ॥ कल्पः—"अग्नेर्वोऽपन्नगृहस्य सदसि सादयामीत्यपरेण शालामुखीयमुपसादयति । सुम्नाय सुम्निनीः सुम्ने मा धत्तेति सर्वेषु वसतीवरीणां सादनेषु यजमानो जपति ।...। निशायां वसतीवरीः

४. तं.ति.पं१–संस्पृष्टाः ।

११. आ.क–जलविशेषणेन ; त–अत्र विशेषेण ; मर–अविशेषणेन ; पा.हा–अत्र विशेषणेन ।

-न्द्राग्नियोर्भागधेयीः स्थ मित्रावरुणयोर्भागधेयीः स्थ
विश्वेषां देवानां भागधेयीः स्थ यज्ञे जागृत ॥ १० ॥

[ हविष्मतीश्चतुस्त्रिंशत ]

इन्द्राग्नियोरितीन्द्र-अग्नियो. । भागधेयीरिति भाग-धेयीः । स्थ । मित्रावरुणयोरिति
५ मित्रा-वरुणयो । भागधेयीरिति भाग-धेयीः । स्थ । विश्वेषाम् । देवानाम् ।
भागधेयीरिति भाग-धेयीः । स्थ । यज्ञे । जागृत ॥ १२ ॥

[ मैस १ ३·१, काम ३·९, कपिसं २·१६ ; वासं ६·२३-२४ ]

दक्षिणेंऽसे निधाय एतेनैव यथोक्तमंत्र जघनेन गार्हपत्य पूर्ववत् सादयति—' मित्रा-
वरुणयोर्भागधेयी स्थ ' इति ॥ सुबोधम् ॥ " मित्रावरुणौ वा अपां नेतारौ " ( तैस ६ ४ ३ )
१० इति ब्राह्मणम् । " देवताद्वन्द्वे च " ( पा ६ २ १४१ ) इति पूर्वोत्तरपदयो प्रकृतिस्वरत्वम् ॥

पूर्वया द्वारोपनिर्हृत्य दक्षिणेंऽसे निधायोत्तरत· परीत्य उत्तरतो यूपेन संस्पृश्य सादयति—
' विश्वेषां देवानां भागधेयी. स्थ ' इति ॥ गतम् ॥

सव्येंऽसे निधायैतेनैव यथेतमंत्र जघनेनाग्नीध्रीय धिष्ण्य संस्पृश्य सादयति—' यज्ञे
जागृत ' इति ॥ हे वसतीवर्य., [१]यज्ञे अस्मिन् [२]जागृत यज्ञार्थमप्रमत्ता भवत । " आग्नीध्र
१५ उपवासयत्येतद्वै यज्ञस्यापराजितम् " ( तैस ६·४·२ ) इत्यादि ब्राह्मणम् । " आ तृतीयसवनात्
परि शेरे यज्ञस्य संतत्यै " ( तैस ६·४·२ ) इत्यन्तम् ॥

॥ इति तृतीये द्वादशोऽनुवाक· ॥

परिहरत्यन्तरेणाग्नीध्रे यजमाने पत्न्यां च । नाग्नीध्रमभि परिहरेत् । सव्येंऽसेऽस्याधायापरेण मार्जालीयं परिक्रम्य
पूर्वया द्वारोपनिर्हृत्य दक्षिणेन वेदिं गत्वा दक्षिणेन मार्जालीयं धिष्ण्यं परीत्य दक्षिणस्यामुत्तरवेदिश्रोण्यां
२० सादयतीन्द्राग्नियोर्भागधेयी स्थेति । दक्षिणेऽसेऽस्याधाय यथेतं गत्वा पूर्वया द्वारोपनिर्हृत्योत्तरेण वेदिं
गत्वोत्तरेणाऽऽग्नीध्रीयं धिष्ण्यं परीत्योत्तरस्यामुत्तरवेदिश्रोण्यां सादयति मित्रावरुणयोर्भागधेयी स्थेति ।
सव्येंऽसेऽस्याधाय यथेतं गत्वाऽपरेणाऽऽग्नीध्रीयं धिष्ण्यमुपसादयति विश्वेषां देवानां भागधेयी स्थेति । यज्ञे
जागृतेति सर्वा "अभिमन्त्रयते" ( आपश्रौ ११·२०·१३-११·२१ ६) इति ॥ हे वसतीवर्यः युष्मानविनश्वर-
गृहस्य शालामुखीयस्य [१]अग्ने [२]सदमि [३]सादयामि समीपस्थाने स्थापयामि । हे आप , [४]सुम्नाय सर्वप्राणि-

२५ । १२. आ.इ पा हा-अनुमन्त्रयते ।

सुखाय प्रवृत्ताः सुम्निनीः स्वयमपि सुखवत्यो यूयं मां यजमानं सुम्ने सुखे धत्त स्थापयत । यूयं वक्ष्यमाणानामिन्द्रादिदेवतानां[13] भागरूपाः स्थ । तस्मात् यज्ञे जागृत रक्षोनिवारणाय सावधाना भवत । 'अग्नेर्वः', 'सुम्नाय' इति द्वौ मन्त्रावुपेक्षितौ ॥ 'हविष्मतीः' इत्यारभ्य ऋचः पादेषु या चतुःसंख्या या च शालामुखीयोत्तरवेद्याग्नीध्रीयस्थानत्रयविशिष्टा सादनसंख्या [14]तदुभयं प्रशंसति—"चतुष्पदयर्चा गृह्णाति त्रिः सादयति सप्त सं पद्यन्ते सप्तपदा शक्करी पशवः शक्करी पशूनेवाव रुन्धे" (तैसं ६·४·२) इति ॥ शालामुखीयोत्तरवेद्योः सादनं विधत्ते—"अस्मै वै लोकाय गार्हपत्य आ धीयतेऽमुष्मा आहवनीयो यद्गार्हपत्य उपसादयेदस्मिँल्लोके पशुमान्स्याद्यदाहवनीयेऽमुष्मिँल्लोके पशुमान्स्यादुभयोरुप सादयत्युभयोरेवैनं लोकयोः पशुमन्तं करोति" (तैसं ६·४·२) इति ॥ स्थानत्रये यत्सूत्रोक्तं परिक्रामणं तद्विधत्ते—"सर्वतः परि हरति रक्षसामपहत्यै" (तैसं ६·४·२) इति । मन्त्रचतुष्टये स्पष्टार्थतां दर्शयति—"इन्द्राग्नियोर्भागधेयीः स्थेत्याह यथायजुरेवैतत्" (तैसं ६·४·२) इति ॥ विधत्ते—"आग्नीध्र उप वासयत्येतद्वै यज्ञस्यापराजितं यदाग्नीध्रं यदेव यज्ञस्यापराजितं तदेवैना उप वासयति" (तैसं ६·४·२) इति ॥ तदेव तस्मिन्नेव ॥ यद्विहितं 'वहन्तीनां गृह्णाति' इति तदेव प्रशंसति—"यतः खलु वै यज्ञस्य विततस्य न क्रियते तदनु यज्ञः रक्षांस्यव चरन्ति यद्वहन्तीनां गृह्णाति क्रियमाणमेव तद्यज्ञस्य शये रक्षसामनन्ववचाराय" (तैसं ६·४·२) इति । [15]विततस्य विस्तीर्णस्य यज्ञस्य यतो यदङ्गं [16]विस्मृत्य न क्रियते तदेव छिद्रमनुप्रविश्य रक्षांस्यवचरन्ति अपकुर्वन्ति । वहन्तीग्रहणेन तदङ्गं क्रियमाणमेव शये शेते भवति ॥ आग्नीध्रे सादितानां तृतीयसवनगताभिषवपर्यन्तं धारणं विधत्ते—"न होता ईत्यन्त्या तृतीयसवनात् परि शेरे यज्ञस्य संतत्यै" (तैसं ६·४·२) इति । एता आपो न ह्यपगमयन्ति, किं तु परिशेरेऽवतिष्ठन्ते, स्थापयेदित्यर्थः ॥

अत्र विनियोगसंग्रहः—

"हविर्गृह्णाति वसतीवरीरग्नेस्तु सादयेत् ।
शालामुखीयतः पश्चात् सुम्ना स्वामी जपेत् पुनः ॥ १ ॥
इन्द्राग्निद्वयाद्वेदिश्रोण्योरासादयेत् क्रमात् ।
विश्वे ह्याग्नीध्रधिष्ण्यस्य पश्चादासादयेत् पुनः ।
यज्ञेति मन्त्रयेत् सप्ताः सप्तमन्त्रा इहोदिताः" ॥ २ ॥ इति ॥

अत्र [17]नास्ति मीमांसा ॥

अथ छन्दः ॥ 'हविष्मतो' इत्यनुष्टुप् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके द्वादशोऽनुवाकः ॥ १२ ॥

---

१३. आ.क.हा—'देवानाम्'। १४. क.तं.मर—'तदुभयम्' इत्यस्यानन्तरं—'सह'। १५. इ.तं. मर—'विततस्य' नास्ति ; ज.पा.हा—विकीर्णस्य ; १६. आ.क—विस्मृत्य, मर—विमृज्य । १७ आ.हा—न ।

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वोर्ध्वमिममध्वरं कृधि
दिवि देवेषु होत्रा यच्छ सोम राजन्नेह्यव रोह मा भेर्मा सं विक्था

हृदे । त्वा । मनसे । त्वा । दिवे । त्वा । सूर्याय । त्वा । ऊर्ध्वम् । इमम् । अध्वरम् । कृधि ।
दिवि । देवेषु । होत्राः । यच्छ । सोम । राजन् । एति । इहि ।
अवेति । रोह । मा । भेः । मा । समिति । विक्थाः ।

दक्षिणस्य हविर्धानस्यान्तरेणेषं राजानमुपावहरति अवतारयति हविर्धानात्—'हृदे त्वा' इति ॥ हे सोम, त्वा हृदे हृदयवद्भ्यो मनुष्येभ्य उपावहरामीति शेषः । "हृदे त्वेत्याह मनुष्येभ्य एवैतेन करोति" ( तैसं ६.४ ३ ) इत्यादि ब्राह्मणम् । मनसे मनस्विभ्यः पितृभ्यश्च । "पितृभ्य एवैतेन करोति" ( तैसं ६.४ ३ ) इत्यादि ब्राह्मणम् । दिवे दिविष्ठेभ्यो देवेभ्यश्च त्वामुपावहरामि । सूर्याय च त्वामुपावहरामि । प्राधान्यात् पुनरुपादानम् । "देवेभ्य एवैतेन करोत्येतावतीर्वै देवतास्ताभ्य" ( तैसं ६ ४ ३ ) इत्यादि ब्राह्मणम् । हृदे दिवे इति "ऊडिदम्" ( पा ६ १ १७१ ) इत्यादिना विभक्तेरुदात्तत्वम् । हे सोम, अवरोप्यमाणश्च त्वम् इमम् अध्वरं यज्ञम् ऊर्ध्वं कृधि अविघ्नेन समाप्तं कुरु । ऊर्ध्वं देवाभिमुखं वा कुरु । यद्वा—इमं यज्ञमध्वरं बाधकरहितं कुरु । "बहुलं छन्दसि" ( पा २.४.७३ ) इति शपो लुक् । "श्रुशृणुपृकृवृभ्यश्छन्दसि" ( पा ६ ४.१०२ ) इति हेर्धिभावः । किंच दिवि दिवि स्थितेषु देवेषु होत्राः अस्मदीया वाचः स्तुतिरूपाः यच्छ अवस्थापय । तदर्थं हे सोम राजन्, एहि आगच्छ मम हस्तम् । अत्र 'सोम राजन्' इत्यारभ्य मन्त्रान्तरम् । यथाह भगवान्—"हृदे त्वा मनसे त्वा सोम राजन्नेह्यव रोहेति द्वाभ्याम्" ( बौश्रौ ७.१ ) इति । ततश्चापदात् परत्वात् सोमशब्दो न निहन्यते ( द्र पा ८ १.१७–१९) । "नामन्त्रिते समानाधिकरणे" ( पा ८ १.७३ ) इति तस्याविद्यमानवत्त्वनिषेधात् राजन् इति निहन्यते । आगम्य च मम हस्तं हविर्धानात् अव रोह । अवरोहंश्च मा भेः मा च भैषीः, मामयं भेत्स्यतीति । "बहुलं छन्दसि" ( पा ७.३.९७ ) इति ईडभावः । व्यत्ययेन सिचि वृद्धिः ( पा ७ २.१ ) न क्रियते । मा सं विक्थाः मा च

द्वादशेऽनुवाके सोमाभिषवार्थानां वसतीवरीणां ग्रहणमुक्तम् । अभिषोतव्यस्य सोमस्य शकटादुपावरोहणं त्रयोदशेऽनुवाकेऽभिधीयते । अथ महारात्रे प्रबुध्य सोमपात्राण्यासाद्य सोममवरोहयेत् ॥

हृदे त्वेति ॥ कल्पः —"अथैतच्चर्म फलकयोः प्राचीनग्रीवमुत्तरलोमोपस्तृणाति यत्र प्रतितिष्ठेति वा तूष्णीं वा । तस्मिन् संमुखान् प्राञ्चं कृत्वा दक्षिणस्य हविर्धानस्यान्तरेणेषे राजानमुपावहरति हृदे त्वा मनसे त्वा सोम राजन्नेह्यवरोहेति द्वाभ्याम्" ( बौश्रौ ७.१ ) इति ॥ मन्त्रौ त्वेवमाम्नातौ—'हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वोर्ध्वमिममध्वरं कृधि दिवि देवेषु होत्रा यच्छ, सोम राजन्नेह्यव रोह मा भेर्मा सं विक्था मा त्वा हिंसिषं प्रजास्त्वमुपावरोह प्रजास्त्वामुपावरोहन्तु' इति । हे सोम, त्वा हृदे हृदयवद्भ्यो मनुष्येभ्यः मनसे मनस्विभ्यः पितृभ्यः दिवे द्युलोकवासिभ्यो देवेभ्यो विशेषतः

मा त्वा॑ हि॑ꣳसिषं प्र॒जास्त्वमु॒पाव॑रोह प्र॒जास्त्वामु॒पाव॑रोहन्तु

मा । त्वा॒ । हि॒ꣳसि॒षम् । प्र॒जा इति॑ प्र—जाः । त्वम् । उ॒पाव॑रो॒हेत्यु॑प—अ॒व॑रोह ।
प्र॒जा इति॑ प्र—जाः । त्वाम् । उ॒पाव॑रोह॒न्त्वित्यु॑प—अव॑रोहन्तु ।

कम्पिष्ठाः । कस्मादित्याह—ᵛमा खलु त्वामहं हिंसिषम् । यागसाधनत्वापत्त्या उत्तमा गतिस्त्वया प्राप्स्यत इति । का पुनः सोत्तमा गतिरित्याह—ᵛप्रजाः सर्वा देवीर्मानुषीश्च ᵛउपावरोह अनुप्रवेश । ᵛप्रजाः च ᵛत्वाम् ᵛउपावरोहन्तु अनुप्रविशन्तु । अतः सर्वासामेव प्रजानामाधिपत्ये वर्तितुमारभसे । स कथं मया हिंस्यसे ? अतो मा भैषीरिति । अत्र कृधि यच्छेति द्वे तिङ्विभक्ती, तत्र कृधि यच्छेति चार्थस्य गम्यमानत्वात् " चादिलोपे विभाषा " ( पा ८·१·६३ ) इति प्रथमा तिङ्विभक्तिः निहन्यते ; एवं मा च मेर्मा च संविक्थाः इत्यत्र तेनैव सूत्रेण प्रथमा तिङ्विभक्तिर्न निहन्यते । एहि चावरोह च इत्यत्रापि प्रथमायास्तेन निघातः प्रवर्तत एव । ननु गत्यर्थलोटा युक्तत्वात् द्वितीयायास्तिङ्विभक्तेः " लोट् च " ( पा ८·१·५२ ) इति निघातेन न भवितव्यम् । " विभाषितं सोपसर्गमनुत्तमम् " ( पा ८·१·५३ ) इति निहन्यत एवेत्यदोषः । उपावरोहेत्यत्र " गतिर्गतौ " ( पा ८·१·७० ) इति पूर्वस्यानुदात्तत्वम् । " उदात्तवता तिङा " ( द्र.पाभा २·२·१८ वा ४ ) इति समासः । तथा उपावरोहन्त्वित्यत्रापि । " ब्रह्मवादिनो वदन्ति [illegible] त्वा अध्वर्युः स्याद्यः सोममुपावहरन् " ( तैसं ६·४·३ ) इत्यादि ब्राह्मणम् ॥

ᵛसूर्याय चोपावहरामि । त्वम् ᵛइमं प्रवृत्तम्[1] ᵛअध्वरं विनाशरहितम् ᵛऊर्ध्वम् उन्नतं समाप्तं ᵛकृधि कुरु । दिविषेषु ᵛदेवेषु ᵛहोत्रा अस्मदीयान्याह्वानानि स्तोत्ररूपाणि ᵛयच्छ अवस्थापय । हे ᵛसोम ᵛराजन्, ᵛएहि अभिषवस्थाने समागच्छ । शकटात् ᵛअव ᵛरोह । ᵛमा भैषीः । ᵛमा च ᵛसं ᵛविक्थाः कम्पिष्ठाः । अहं तु त्वां ᵛमा ᵛहिंसिषम् । अतः ᵛत्वं देवलोके गत्वा देवीः ᵛप्रजाः ᵛउपावरोह प्राप्नुहि । ᵛप्रजाः च ᵛत्वाम् ᵛउपावरोहन्तु प्राप्नुवन्तु ॥ अत्रोपावहरेदिति विधिं सूचयन् हृदयादिशब्दानां यथोक्तार्थं दर्शयति— " ब्रह्मवादिनो वदन्ति स त्वा अध्वर्युः स्याद्यः सोममुपावहरन्त्सर्वाभ्यो देवताभ्य उपावहरेदिति हृदे त्वेत्याह मनुष्येभ्य एवैतेन करोति मनसे त्वेत्याह पितृभ्य एवैतेन करोति दिवे त्वा सूर्याय त्वेत्याह देवेभ्य एवैतेन करोत्येतावतीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्य उपावहरति " ( तैसं ६·४·३ ) इति । यः ' हृदे त्वा ' इति मन्त्रेण [2]सर्वदेवतार्थमुपावहर्तुं जानाति स एव मुख्योऽध्वर्युरिति ब्रह्मवादिनामुक्तिः । ' सोम राजन् ' इति मन्त्र उपेक्षितः ॥ विधत्ते— " पुरा वाचः प्रवदितोः प्रातरनुवाकमुपाकरोति यावत्येव वाक् तामव रुन्धे " ( तैसं ६·४·३ ) इति ॥ रात्रौ निद्रां कुर्वन्तो मनुष्या उषःकाले प्रबुध्य परस्परं [3]वाग्व्यवहारं कुर्वन्ति, पक्षिणः शब्दं कुर्वन्ति, [4]तद्धि वाचः प्रवदनम् । प्रातःकालात् पूर्वं होत्राऽनुवक्तव्य ऋक्समूहः प्रातरनुवाकः । उपाकरणं नाम होतारं प्रति प्रैषोक्तिः । अत्र सूत्रम्— " पुरा वाचः पुरा वा वयोभ्यः

१. म२–' प्रवृत्तम् ' इत्यस्यानन्तरं ' यज्ञम् ' । २. इ.उ.तं.पा.भो.हा–सर्वदेवार्थमु" । ३. आ. वाक्प्रसरम् ; क–वाक्प्रवचनम् । ४. तं.–तदिदम् ।

शृणोत्वग्निः समिधा हवं मे शृण्वन्त्वापो धिषणाश्च देवीः ।
शृणोत ग्रावाणो विदुषो नु ( १ ) यज्ञं शृणोतु देवः सविता हवं मे ।
शृणोतु । अग्निः । समिधेति सम्-इधा । हवम् । मे । शृण्वन्तु । आपः । धिषणाः । च । देवीः ।
शृणोत । ग्रावाणः । विदुषः । नु ( १ )। यज्ञम् । शृणोतु । देवः । सविता । हवम् । मे ॥

५ एकधनादिलक्षणा अपो जिघृक्षन् स्रुचि चतुर्गृहीतं गृहीत्वा आहवनीये जुहोति 'शृणोत्वग्निः' इति त्रिष्टुभा चतुष्पदया ॥ समिध्यतेऽनयाग्निरिति समित्, आज्याहुतिरुच्यते । इन्धेः क्विप् ( पा ३ २ ७६ )। अनुनासिकलोपः ( पा ६ ४ ३७ )। कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६·२ १३९ )। अनया सदीप्तया आज्याहुत्या तृप्तोऽग्निर्मदीयं हवम् आह्वानं शृणोतु । "बहुलं छन्दसि" ( पा ६ १ ३४ ) इति ह्वयतेः प्राक्प्रत्ययोत्पत्तेः सम्प्रसारणे कृते "ऋदो-
१० रप्" ( पा ३ ३ ५७ ) इत्यप् । यद्वा—"भावेऽनुपसर्गस्य" ( पा ३ ३ ७५ ) इत्यप्, सम्प्रसारणं च । किंच—याश्च आपः मया ग्रहीष्यन्ते ताश्चाऽनयाऽऽहुत्या मम हवं शृण्वन्तु । कीदृश्यः ? धिषणाः धृष्टाः यागसंपादननिपुणाः । "धृषेर्धिष् च संज्ञायाम्" ( उ २४९ ) इति क्युप्रत्ययः । देवीः देव्यः दानादिगुणयुक्ताः । "वा छन्दसि" ( पा ६ १·१०६ ) इति पूर्वसवर्णदीर्घत्वम् । यद्वा—धिषणा त्रिधा । "त्रिधा वै धिषणा" ( तैब्रा ३·२ २ )
१५ इति । दानादिगुणयुक्ताश्च शृण्वन्त्विति । चशब्देन तासां समुच्चयः । अधुना प्रत्यक्षवदुच्यते । हे ग्रावाणः । ग्रावाणो ग्रावकल्पा इत्येके । वर्षणशीला मेघा इत्यन्ये । ग्रावाण एवेत्यपरे । यूयमपि शृणोत शृणुत । "तप्तनप्तनथनाश्च" ( पा ७ १·४५ ) इति तप् । किम् ? विदुषः अस्य यजमानस्य यज्ञम् । नु इति वितर्के । ननु विदुषोऽस्य यज्ञः श्रोतव्य इति ।

'प्रवदितो' . मावर्यावभ्यो देवेभ्योऽनुब्रूहि" ( आपश्रौ १२·३·१४–१५ ) इति । प्रवदितो प्रवदनात् ॥
२० प्रातरनुवाकस्य प्रथमामृचं विधत्ते—"अपोऽग्रेऽभिव्याहरति यज्ञो वा आपो यज्ञमेवाभि वाचं वि सृजति" ( तैसं ६ ४ ३ ) इति ॥ अपोऽभिलक्ष्य तत्प्रतिपादिकामृचमग्रे प्रथमं व्याहरेत् । "आपो रेवती क्षयथा हि वस्वः" ( ऋसं १० ३० १२ ) इत्येतामृचमित्यर्थः ॥ तत ऊर्ध्वं वक्तव्या ऋचो विधत्ते—"सर्वाणि छन्दांस्यन्वाह पशवो वै छन्दांसि पशूनेवाव रुन्धे" ( तैसं ६ ४·३ ) इति । तत्तच्छन्दो-युक्ता ऋग्विशेषा ग्रन्थबाहुल्यभयाद्बह्वृचब्राह्मणे* स्पष्टत्वाच्च नात्र उदाह्रियन्ते ॥ प्रातरनुवाकस्य
२५ समाप्तौ पर्यायामृचं कामनाभेदेन विकल्पिता विधत्ते—"गायत्रिया तेजस्कामस्य परि दध्यात् त्रिष्टुभे-न्द्रियकामस्य जगत्या पशुकामस्यानुष्टुभा प्रतिष्ठाकामस्य पङ्क्त्या यज्ञकामस्य विराजान्नकामस्य" ( तैसं ६·४ ३ ) इति । परिदध्यात् समापयेत् ॥

शृणोत्विति ॥ कल्पः—"यत्राभिजानात्यभूदुषा रुशत्पशुरिति तत्प्रचरण्या जुहोति शृणोत्वग्निः समिधा हवं म इति" ( आपश्रौ १२ ५ १ ) इति ॥ "अभूदुषा" ( ऋसं ५ ७५ ९ ) इत्येषा प्रातरनु-
३० वाकस्य परिधानीया, तां होता पठ्यमानां यदाऽध्वर्युर्जानाति तदा जुहुयात् । मन्त्रस्त्वेवमाम्नायते—

५. आ हा—'प्रवदितो' नास्ति । ६ आ हा—अदर्शन्ते । ७ आ हा—प्रातरनुवाक' ।
*[ द्र. ऐब्रा २·१५–१८ ]।

देवी॑रापो अपां नपा॒द्य ऊ॒र्मिर्ह॑वि॒ष्य॑ इन्द्रि॒यावा॑न् म॒दिन्त॑म॒स्तं दे॒वेभ्यो॑ देव॒त्रा ध॑त्त शु॒क्रꣳ शु॑क्र॒पेभ्यो॒ येषां॑ भा॒गः स्थ स्वाहा॑

देवीः । आपः । अपाम् । नपात् । यः । ऊर्मिः । हविर्यः । इन्द्रियावानितीन्द्रिय—वान् । मदिन्तमः । तम् । देवेभ्यः । देवत्रेति देव—त्रा । धत्त । शुक्रम् । शुक्रपेभ्य इति शुक्र—पेभ्यः । येषाम् । भागः । स्थ । स्वाहा । ५

क्षिप्रं शृणुतेति वा । यद्वा—प्रथमाबहुवचनस्य व्यत्ययेन शस् । नुशब्दश्च इवार्थे । विद्वांस इव शृणुत इत्यर्थः । किंच देवः सविता सर्वस्य प्रेरकः मे मदीयं हवं शृणोतु । "सवितृप्रसूत एव देवताभ्यो निवेद्यापोऽच्छैति" ( तैसं ६·४·३ ) इति ब्राह्मणम् । अग्न्यादयो मे हवं श्रुत्वा आगच्छन्तु । यज्ञं निर्वर्तयन्त्विति भावः ॥

अप्सु बर्हिः प्रास्य अभिजुहोति—'देवीरापः' इति यजुरन्तया गायत्र्या ॥ 'मदिन्तमः' इत्यन्तं व्याख्यातम् ( तैसं १·२·३ ) ॥ तं यथोक्तगुणविशिष्टमूर्मिं देवत्रा देवेषु धत्त स्थापयत । किमर्थम् ? देवेभ्यः देवार्थं देवानामेवोपभोगार्थम्[1] । "देवमनुष्यपुरुष" ( पा ५·४·५६ ) इत्यादिना त्राप्रत्ययः । यद्वा—देवाधीनं धत्त देवानामेवोपभोगार्थम्[1] । "देये त्रा च" ( पा ५·४·५५ ) इति त्राप्रत्ययो दधातियोगेऽपि भवति । देवयागार्थमस्मभ्यं १०

'शृणोत्वग्निः समिधा हवं मे शृण्वन्त्वापो धिषणाश्च देवीः । शृणोत ग्रावाणो विदुषो नु यज्ञꣳ शृणोतु देवः सविता हवं मे' इति । सम्यगिध्यतेऽनयाऽऽज्याहुत्येति समिदाहुतिस्तया समिद्धः अग्निः मे हवं मदीयमाह्वानं शृणोतु । हे आपः, प्रहीष्यमाणा यूयमपि शृणुत । कीदृश्यः ? धिषणाः धियोपेताः । देव्यो देवतारूपाश्च । हे ग्रावाणः, अभिषवार्थमिहोपस्थिता यूयं विदुषो नु विद्वांस एव सन्तः यज्ञं शृणुत । सविता देवः मदीयमाह्वानं शृणोतु ॥ अग्न्यादिश्रवणप्रयोजनमाह—"शृणोत्वग्निः समिधा हवं म इत्याह सवितृप्रसूत एव देवताभ्यो निवेद्याऽपोऽच्छैति" ( तैसं ६·४·३ ) इति ॥ एकधनसंज्ञकाः[8] पत्नीजनीसंज्ञकाश्चाऽऽप आनेतव्याः, [9]अतो मन्त्रेण देवताभ्यो विज्ञाप्य ता अपः प्राप्तुं गच्छति ॥ प्रैषमन्त्रमुत्पादयति—"अध्वर्यो अप इष्य होतरित्याहेषितꣳ हि कर्म क्रियते" ( तैसं ६·४·३ ) इति । हे होतः, आनेतव्या अप उद्दिश्य "प्र देवत्रा ब्रह्मणे गातुरेतु" ( ऋसं १०·३०·१ ) इत्यादिका ऋच इष्य पठेत्यर्थः । लोकेऽपीषितमभीष्टं कर्म सम्यक् क्रियते ॥ प्रैषान्तरमुत्पादयति—"मैत्रावरुणस्य चमसाध्वर्यवा द्रवेत्याह मित्रावरुणौ वा अपां नेतारौ ताभ्यामेवैना अच्छैति" ( तैसं ६·४·३ ) इति । चमसिनामृत्विजां परिचारकाश्चमसाध्वर्यवः । तत्र मैत्रावरुणनाम्न ऋत्विजो यश्चमसाध्वर्युस्तं संबोध्याऽऽगच्छेति ब्रूयात् । तदनेन प्रैषेणोदकप्रवर्तकमित्रावरुणदेवद्वयेन सहैवैना अपः प्राप्तुं गच्छति ॥ १५ २० २५

देवीरिति ॥ कल्पः—"अपरं चतुर्गृहीतं गृहीत्वा बर्हिरादाय संप्रैषमाहाप इष्य होतर्मैत्रावरुणस्य चमसाध्वर्यवाद्रवैकधनिन [10]एत नेष्टः पत्नीमुदानयाग्नीद्धोतृचमसेन* वसतीवरीभिश्च चात्वाले प्रत्युपतिष्ठस्वेति । यथासंप्रैषं ते कुर्वन्ति । ... । यत्राऽपस्तद्यन्ति । अथाप्सु बर्हिः प्रास्याभिजुहोति ३०

१. तं.ति.पं१–॰पयोगार्थम् ।

८. इ.उ.पा.मां.हा–॰संज्ञिकाः । ९. इ.उ.पा.मां.हा–'अतः' नास्ति । १०. आ–आद्रवत; क,हा–एतम् । *[ बौश्रौसूत्रे 'चमसेन च मा' । ] ।

कार्षिरस्यपापां मृध्रं॑

कार्षि॑ । अ॒सि॒ । अपेति॑ । अ॒पाम् । मृ॒ध्रम् ।

धत्तेति यावत् । पुनश्च विशेष्यते—शुक्रं सोम सोमीभविष्यन्तम् । केभ्य ? शुक्रपेभ्य देवानां मध्ये ये शुक्रपाः सोमपाः तेभ्यः । पुनश्च देवा विशेष्यन्ते—हे आपः, येषां देवानां यूयं भागं स्थ भागभूता भविष्यथ तेभ्यो धत्तेति । स्वाहा स्वाहुतं चेदं युष्मभ्यमाज्यमस्तु । " आहुत्यैवैना निष्क्रीय गृह्णात्यथो हविष्कृतानामेवाभिघृताना गृह्णाति " ( तैस ६.४.३ ) इति ब्राह्मणम् । भागशब्दः " कर्षात्वत " ( पा ६.१.१५९ ) इत्यन्तोदात्त ॥

मैत्रावरुणचमसेनाहुतिम् अपप्लावयति—' कार्षिरसि ' इति ॥ हे आज्य, अप्सु हुत कार्षि कर्षणीयमपनेतव्यम् असि । " कृषेर्वृद्धिश्छन्दसि " ( उ ५७६ ) इति कृषेरिञ् प्रत्ययः । यस्मादेवं तस्मात्त्वामपप्लावयामि अपनयामीत्यर्थ । अपेत्युपसर्गश्रुतेर्योग्य क्रियापदमध्याह्रियते । कुत्र पुनरिदमसीयत इत्याह—अपा मृध्र, यस्मात्त्वमपा सबन्ध्यनिष्टरूप ; युद्धाभिधायिना मृध्रशब्देनानिष्टरूपत्व लक्ष्यते, तदस्यास्तीति मृध्रम् । " लुगकारेकाररेफाश्च वक्तव्या " ( द्र पा ४ ४ १२८ वा २ ) इति मत्वर्थीयो रप्रत्यय. । दोषरूप त्वामपनयामीत्यर्थ. ॥ यद्वा—कठिनत्वं लक्ष्यते । आज्य च जलगत चेत् कठिन भवति । [२]तस्य दोषरूपत्वादपनयामीति[२] । " कार्षिरसीत्याह शमलमेवासामप प्लावयति " ( तैस ६ ४ ३ ) इति ब्राह्मणम् ॥

देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान् मदिन्तमस्तं देवेभ्यो देवत्रा धत्त शुक्रं शुक्रपेभ्यो येषा भाग स्थ स्वाहेति " ( बौश्रौ ७ ३ ) इति ॥ न पातयत्युदकमध्ये गूढतया स्थितोऽपि तदुदक न विनाशयतीति नपात् । अपा नपात् इति वह्निविशेषस्य सज्ञा । हे आप देव्य , हे वह्ने, यूयं य ऊर्मि युष्मदीय तं देवत्रा देवेषु धत्त स्थापयत । किमर्थम् ? देवेभ्य देवार्थम् अस्माभि देवानुद्दिश्य होतुमित्यर्थ । कीदृश ऊर्मि ? हविष्य हविषे सोमरूपाय हित , इन्द्रियावान् प्रीत सन्निन्द्रियवृद्धिकारी, मदिन्तम पीयमानोऽत्यन्तहर्षकारी । कीदृशं तम् ? शुक्रं दीप्तिमन्तम् । कीदृशेभ्यो देवेभ्य ? येषा यूयं भागभूता स्थ तेभ्य शुक्रपेभ्य सोमपेभ्य , इदमाज्यं युष्मभ्य हुतमस्तु ॥ ग्रहीष्यमाणानामपा भूयस्त्वेन हविष्ट्वमपादनेन चेयमाहुतिरुपयुज्यत इत्याह—" देवीरापो अपां नपादित्याहाऽऽहुत्यैवैना निष्क्रीय गृह्णात्यथो हविष्कृतानामेवाभिघृताना गृह्णाति " ( तैस ६.४.३ ) इति ॥

कार्षिरिति ॥ कल्प. —" कार्षिरसीति दर्भेणाहुतिमपप्लाव्य " ( आपश्रौ १२ ५.१० ) इति ॥ ' कार्षिरस्यपापा मृध्रम् ' इति मन्त्रपाठः । हे आज्य, त्वमप्सु हुत सन् कार्षि. कर्षणीयमपनेतव्यम् असि । अपा मृध्रं युद्धोपलक्षितानिष्टरूपं त्वामपनयामि ॥ एतमर्थं दर्शयति—" कार्षिरसीत्याह शमलमेवाऽऽसामप प्लावयति " ( तैस ६.४.३ ) इति । शमल मलिनत्वम् ॥

२. मै–ग्रावयति । ३–३ त.ति–तदस्य दोषरूपता तदपनयामीति ।

समुद्रस्य वोऽक्षित्या उन्नये ।
यमग्ने पृत्सु मर्त्यमावो वाजेषु यं जुनाः । स यन्ता शश्वतीरिषः ॥ १३ ॥

[ नु सप्तचत्वारिंशच्च ]

समुद्रस्य । वः । अक्षित्यै । उदिति । नये ।
यम् । अग्ने । पृत्स्विति पृत्-सु । मर्त्यम् । आवः । वाजेषु । यम् । जुनाः ।
सः । यन्ता । शश्वतीः । इषः ॥ १३ ॥ ५

[ मैसं १·३·१ ; कासं ३·९ ; कपिसं २·१६ ; वासं ६·२५–२९ ]

बर्हिष्यन्तर्धायोन्नयति—' समुद्रस्य वः ' इति ॥ समुद्रस्य उदकराशेः पूर्वेद्युर्गृहीतस्य वसतीवरीशब्दवाच्यस्य अक्षित्यै अक्षणाय युष्मान् उत् नये मैत्रावरुणचमसेन गृह्णामीति । " मित्रावरुणौ वा अपां नेतारौ " ( तैसं ६·४·३ ), " तस्मादद्यमानाः " ( तैसं ६·४·३ ) १० इत्यादि ब्राह्मणम् ॥

क्रतुकरणं जुहोति—' यमग्ने ' इति त्रिपदया गायत्र्या ॥ " यदग्निष्टोमो जुहोति " ( तैसं ६·४·३ ) इति ब्राह्मणम् ॥ हे अग्ने, यं मर्त्यं पृत्सु संग्रामेषु आवः रक्षसि । " छन्दसि लुङ्लङ्लिटः " ( पा ३·४·६ ) इत्यत्रलेर्लङ् । आडागम उदात्तः ( पा ६·४·७२ )। " मांसपृतनासूनामुपसंख्यानम् " ( पा ६·१·६३ वा १ ) इति पृतनाशब्दस्य पृद्भावः । १५ " सावेकाचः " ( पा ६·१·१६८ ) इति विभक्तेरुदात्तत्वम् । कः पुनरसौ यं पृतनासु रक्षसि इत्याह— वाजेषु अन्नेषु निमित्तभूतेषु । " निमित्तात्कर्मसंयोगे " ( पा २·३·३६ वा ६ ) इति सप्तमी । अन्नार्थं यं जुनाः गच्छसि । जु इति सौत्रो धातुः वेगितायां गतौ वर्तते ( पा ३·२·१५० )। तस्मात् पूर्ववत् लुङ् ( पा ३·४·६ ) । श्नाप्रत्ययः ( पा ३·१·८१ ) । " बहुलं छन्दस्यमाङ्योगेऽपि " ( पा ६·४·७५ ) इत्यडभावः । हवींषि ग्रहीतुं यस्य सकाशं सदा गच्छसीत्यर्थः । २० स एव खलु त्वया संग्रामेषु रक्ष्यत्वेन प्राप्यते । यश्च त्वयैवं रक्ष्यते स एव खलु त्वयानुगृहीतः यन्ता यमयिता वशीकर्ता । " न लुट् " ( पा ८·१·२९ ) इति निघातप्रतिषेधः । उदात्तनिवृत्तिस्वरो ( पा ६·१·१६१ ) व्यत्ययेन प्रवर्तते । किं वशीकरिष्यतीत्याह—शश्वतीः नित्याः इषः अन्नादि प्रभूतं धनं प्राप्नोतीत्यर्थः । शश्वच्छब्दात् " उगितश्च " ( पा ४·१·६ ) इति ङीप् ॥

॥ इति तृतीये त्रयोदशोऽनुवाकः ॥ २५

समुद्रस्येति ॥ कल्पः—" समुद्रस्य वोऽक्षित्या उन्नय इत्यभिहुतानां मैत्रावरुणचमसेन गृह्णाति " ( आपश्रौ १२·५·१० ) इति ॥ हे आपः, समुद्रवद्युष्माकमक्षीणत्वाय पूर्वेद्युर्वसतीवरीगृहीत्वाऽपि पुनरिदानीमुन्नयामि ॥ अक्षितिं विशदयति—" समुद्रस्य वोऽक्षित्या उन्नय इत्याह तस्मादद्यमानाः पीयमाना आपो न क्षीयन्ते " ( तैसं ६·४·३ ) इति । यथा चमसेन जलं गृहीतं तथा त्रिभिः कुम्भैरेकधना

गृह्णीयात् पत्नेजनीश्च गृह्णीयात् । तथा च सूत्रम्—“अथैकधनान् गृह्णातीन्द्राय त्वा जुष्टान् गृह्णामीति वा तूष्णीं वा । अथ पत्नेजनीर्गृह्णाति” ( बौश्रौ ७ ३ ) इति ॥ विधत्ते—“योनिर्वै यज्ञस्य चात्वालं यद्धो वसतीवरीर्होतृचमसं च मैत्रावरुणचमसं च सꣳस्पर्श्य वसतीवरीर्व्यानयति यज्ञस्य सयोनित्वायाथो स्वादे-वैना योने प्र जनयति” ( तैस ६·४ ३ ) इति । उत्तरवेदिनिष्पादकतया चात्वालो यज्ञयोनि । देव-विभक्तयज्ञसाधनत्वात् वसतीवरीणां यज्ञत्वम् । व्यानयति [11]व्याप्त्या अधिकं करोति । तत्प्रकारं सूत्रे दर्शितः —“होतृचमसे वसतीवरीभ्यो निषिच्योपरि चात्वाले, होतृचमसं च मैत्रावरुणचमसं च संस्पर्श्य वसतीवरीर्व्यानयति समन्या यन्तीत्यभिज्ञाय होतृचमसात् मैत्रावरुणचमसं आनयति मैत्रावरुणचमसा-द्धोतृचमसे” ( आपश्रौ १२·६·१–२ ) इति । प्रश्नोत्तरमन्त्रावुत्पादयति—“अध्वर्योऽवेरपा३ इत्याहोते-मनन्नमुरुतेमाः पश्येति वावैतदाह” ( तैस ६ ४ ३ ) इति । प्लुतिः प्रश्नार्था । हेऽध्वर्यो, अपः किमवे-ष्टवानसि ? सोऽयं होतुः प्रश्नः । ‘उतेमनन्नमुः’ इत्यध्वर्योरुत्तरमन्त्रः । लब्धवानस्मीत्येतावदेव न भवति तथापि तु ईं ता अनन्नमुः उपनम्रा आप्ता । दूरवर्तिन्योऽपि सरसमात्रेण लाभो भवति तदुपनम्रसि-द्धिमात्रेणातिरिच्यते । ‘उतेमाः’ इति वाक्यं मन्त्रस्य व्याख्यानम् । हे होतः, न केवलं मद्वचनमात्रेण विश्वसिहि किं त्विमाः पुरोवर्तिनीः पश्येत्येनमेव [13]तेन मन्त्रेणाध्वर्युर्ब्रूते ॥

यमग्न इति ॥ कल्पः —“अध्वर्योऽवेरपा३ इति होताऽध्वर्युं पृच्छति । उतेमनन्नमुरिति प्रत्युक्त्वा प्रचरणीशेषात् ऋतुकरणं जुहोति यमग्ने पृत्सु मर्त्यमिति” ( आपश्रौ १२ ६ ४–५ ) इति ॥ ‘यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः । स यन्ता शश्वतीरिषः’ इति मन्त्रपाठः । हे अग्ने, यं मर्त्यं पृत्सु संग्रामेषु अवः रक्षसि, किंच वाजेषु अन्ननिमित्तं यं मर्त्यं जुनाः गच्छसि हवींषि प्रहीतुं यस्य सकाशं गच्छसीत्यर्थः । स मर्त्यस्त्वदनुग्रहेण शश्वतीः इषः नित्यान्यन्नानि धनरूपाणि यन्ता नियंस्यति प्राप्स्यतीत्यर्थः । मन्त्रोऽयमुपेक्षितः ॥ अस्य च ऋतुकरणाख्यस्य होमस्य विषयविशेष-व्यवस्थितिं विधत्ते—“यद्यग्निष्टोमो जुहोति यद्युक्थ्यः परिधौ नि मार्ष्टि यद्यतिरात्रो यजुर्वदन् प्र पद्यते यज्ञक्रतूनां व्यावृत्त्यै” ( तैस ६ ४ ३ ) इति । अनुष्ठीयमानस्य कर्मणोऽग्निष्टोमत्वे मन्त्रेण ऋतुकरणं जुहुयात् । उक्थ्यत्वे परिधावाज्यलेपं [14]निमृज्यात् । अतिरात्रत्वे [15]‘स्तेन’ मन्त्रं पठन् हविर्धानं प्राप्नुयात् । एवं च “ सत्यग्निष्टोमादीनामनुष्ठास्यमानानां परस्परं व्यावृत्तिरिदानीमेवावगता । “स क्रतुं कुर्वीत । मनो-मयः प्राणशरीरो भारूपः” ( छा ३ १४·१–२ ) इत्युपनिषदि, “तत्क्रतु” ( ब्रसू ४·३ १५ ) इति वैयासिकसूत्रे चोपास्तिष्वपि क्रतुशब्दस्य प्रयोगात् तद्व्यवच्छेदाय यज्ञशब्दः । “द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे” ( गीता ४ २८ ) इत्यादौ तपःप्रभृतिष्वपि यज्ञशब्दप्रयोगात्तद्व्यवच्छेदाय क्रतु-शब्दप्रयोगः ॥

११ आ इ क.पा.मर.हा—व्याप्ता । १२. आ क.हा—सर्वं । १३. पा मा हा—परिमृज्यात् ।
१४. आ हा–‘ त्वेनम् ’ नास्ति, क–नु । १५ आ क मर–‘ च ’ नास्ति ।

अत्र विनियोगसंग्रहः—

" हृदे सोमद्रयात् सोमं शकटादवरोहयेत् ।
शृणोऽग्नौ जुहुयाद्वीरप्सु हुत्वाऽथ दर्भकैः ॥ १ ॥
अप्सूपप्लावयेत्कार्पिः समुद्रो गृह्यते जलम् ।
यमग्ने क्रतुकृद्धोमो मन्त्राः सप्तेह वर्णिताः " ॥ २ ॥ इति ॥ ५

अथ मीमांसा ॥ तृतीयाध्यायस्य सप्तमपादे चिन्तितम्—

" चमसाध्वर्यवो नान्य ऋत्विग्भ्योऽन्येऽथ वाऽग्रिमः ।
यौगिकया संज्ञया मैवं षष्ठ्या तेभ्यो विभेदनात् " ॥
( जैम्या ३·७·१८ ) इति ॥

ज्योतिष्टोमे श्रूयते—" चमसाध्वर्यून् वृणीते " इति । ये [१६]पूर्वत्र कार्यानुसारेणाध्वर्युप्रमुखा १० ऋत्विज उक्तास्तेभ्यो न व्यतिरिक्ताश्चमसाध्वर्यवः । कुतः ? यौगिकसंज्ञाया तदभेदप्रतीतेः । यथा देवदत्त एव पचिक्रियायोगात् पाचको भवति तद्वदध्वर्युप्रमुखा एव चमसयोगाच्चमसाध्वर्यवः इति चेत् । मैवम् । मध्यतःकारिणां चमसाध्वर्यवो, [१७]होत्रकाणां चमसाध्वर्यवः इति षष्ठ्या भेदावभासात् । मध्यतःकारिणो होत्रादयः । होत्रकाः प्रतिप्रस्थातृमैत्रावरुणादयः । तस्मादृत्विग्भ्योऽन्ये ॥

तत्रैवान्यच्चिन्तितम्— १५

" तान् वृणीतेति बहुता नास्ति वाऽस्ति ग्रहैक्यवत् ।
[१८]नैवेति चेन्न वैषम्यादुत्पत्तौ बहुताश्रुतेः " ॥ ( जैम्या ३·७·१९ ) इति ।

' चमसाध्वर्यून् वृणीते ' इति यद्बहुत्वं श्रुतं तन्न विवक्षितम्, ग्रहैकत्ववदुद्देश्यगतत्वादिति चेत् । मैवम् । ग्रहवैषम्यात् । ' ग्रहं संमार्ष्टि ' इत्येतन्न ग्रहाणामुत्पत्तिवाक्यं चमसाध्वर्यूणां त्वेतदेवोत्पत्तिवाक्यं ततस्तेषामुपादेयत्वात् तद्गतं बहुत्वं विवक्षितम् ॥ २०

तत्रैवान्यच्चिन्तितम्—

" नेयत्ताऽस्त्यस्ति वा तेषां न नियामकवर्जनात् ।
चमसानां दशत्वेन चमसाध्वर्यवो दश " ( जैम्या ३·७·२० ) इति ॥

स्पष्टोऽर्थः ॥

अथ छन्दः ॥ ' शृणोत्वग्निः ' इति त्रिष्टुप् । ' यमग्ने पृत्सु ' इति गायत्री ॥ २५

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके त्रयोदशोऽनुवाकः ॥ १३ ॥

---

१६. आ.क.हा–पूर्वं तत्र । १७. इ.उ.क.पा.मां.हा– न होत्रकाणाम् । १८. इ.उ.पा.मां. म२–तेनैव ।

[ काम्येष्टियाज्यापुरोनुवाक्या

त्वम॑ग्ने रु॒द्रो असु॑रो म॒हो दि॒वस्त्व॒ꣳ शर्धो॒ मारु॑तं पृ॒क्ष ई॑शिषे ।
त्वं वातै॑ररु॒णैर्या॑सि शं॒गयस्त्वं पू॒षा वि॑ध॒तः पा॑सि॒ नु त्मना॑ ॥

त्वम् । अ॒ग्ने॒ । रु॒द्र॒ । असु॑र । म॒ह॒ । दि॒व॒ । त्वम् । शर्धः॑ । मारु॑तम् । पृ॒क्षः । ई॒शि॒षे॒ ।
त्वम् । वातैः॑ । अ॒रु॒णैः । या॒सि॒ । श॒ंग॒य॒ इति॑ शम्–ग॒य॒ ।
त्वम् । पू॒षा । वि॒ध॒त इति॑ वि–ध॒तः । पा॒सि॒ । नु॒ । त्मना॑ ॥

अत पर याज्याकाण्ड वैश्वदेवम् ॥ तत्र "अग्नये रुद्रवते पुरोडाशमष्टाकपाल निर्वपेदभिचरन्" (तैस २ २ २) इत्यस्य पुरोनुवाक्या—'त्वमग्ने' इति जगती ॥ हे भगवन् अग्ने, त्वय रुद्र एव त्व, यो रोदयिता सर्वेषामुपसंहारे। "रोदेर्णिलुक्च" (उ १८९) इति रक्प्रत्यय । रोदनहेतुमाह—असुर निरसिता सर्वाधिकाराणाम् । "असेरुरन्" (उ ४५) इत्युरप्रत्यय । एव [१]संहारमूर्तिरूपेणाग्नि स्तूयते, शत्रुमारणादौ रुद्रवद्भावात् । यथा—"एषा वा अस्य घोरा तनू" (तैस २ २ २) इति । यद्वा—रुद्रवान् रुद्र, मत्वर्थीयोऽकार (पा ५ २ १२७) रुद्रपराक्रमवानित्यर्थ । दिव द्युलोकस्य मह उत्सवकारी त्व हविषा प्रदानेन । "ऊडिदम्" (पा ६ १ १७१) इति विभक्तेरुदात्तत्वम् । यद्वा—देव उच्यते । दिव द्युलोकवासिना देवाना मह महान् महादेव इत्यर्थ । महतीति मह । पचाद्यच् (पा ३ १ १३४) । त्वम् एव पृक्ष अन्नस्य ईशिषे । "ईश से" (पा ७ २ ७७) इतीडागम । पृङिति अन्ननाम । पृक्षतिश्छान्दस पृणक्तिपर्याय । तत क्विप् (पा ३ २ ७६) । "सावेकाच" (पा ६ १ १६८) इति विभक्तेरुदात्तत्वम् । यस्मादन्नस्येशिषे, तस्मात्त्वमेव

त्रयोदशोऽनुवाके हविर्धानशकटयोरधिषवणफलकयोरुपरि सोमोऽवरोहित । अथाभिषवो वक्तव्य । तथाऽप्यध्यापकसंप्रदायेन प्रपाठकसमाप्तिरूपत्वाच्चतुर्दशोऽनुवाके काम्ययाज्यापुरोनुवाक्या क्रमप्राप्ता अभिधीयन्ते । [१]तत्र काम्येष्टिकाण्डे राक्षोघ्नेष्टेरूर्ध्वमिष्ट्यन्तर विधत्ते—"अग्नये रुद्रवते पुरोडाशमष्टाकपाल निर्वपेदभिचरन्नेषा वा अस्य घोरा तनूर्यद्रुद्रस्तस्मा एवैनमा वृश्चति ताजगार्तिमार्च्छति" (तैस २ २ २) इति । रुद्रवते घोरतनूयुक्ताय । अभिचरन् शत्रु मारयन् । तस्मै रुद्रवतेऽग्नये । एव शत्रुमावृश्चति समन्तात् छित्वा प्रयच्छति । ताजक् शीघ्रमेव ॥

त्वमिति ॥ तत्र पुरोनुवाक्या—'त्वमग्ने रुद्रो असुरो महो दिवस्त्वꣳ शर्धो मारुत पृक्ष ईशिषे । त्व वातैररुणैर्यासि शगयस्त्व पूषा विधत पासि नु त्मना' इति ॥ हे अग्ने, त्व रुद्र घोरतनुयुक्त असुर शत्रूणा निरसिता । दिव द्युलोकस्य मह उत्सवस्य, हविर्वहनेनोत्सवकारित्वात् । त्व मारुत शर्ध मरुता संबन्धि बल, बलवत्त्वेन प्रसिद्धाना मरुद्गणानामपि त्वदनुग्रहेणैव बल भवति । अत पृक्ष ईशिषे मरुद्भि संपृक्तस्तदीय सैन्य नियमयसि । किंच त्व शगय सुख प्राप्तो वायुवेगैररुणवर्णैरश्वैर्यासि । किंच पोषक त्व नु त्मना स्वयमेव पासि । कान्? विधत हविषा परिचर्या विदधतो यजमानान् ॥

१ त ति प१—महारूपेणाग्नि ।

१ पा हा—अन्न । २ आ—नियमय, क हा—नियमयस ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

आ वो राजानमध्वरस्य रुद्रꣳ होतारꣳ सत्ययजꣳ रोदस्योः ।
अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥

एति । वः । राजानम् । अध्वरस्य । रुद्रम् ।
होतारम् । सत्ययजमिति सत्य–यजम् । रोदस्योः ।
अग्निम् । पुरा । तनयित्नोः । अचित्तात् ।
हिरण्यरूपमिति हिरण्य–रूपम् । अवसे । कृणुध्वम् ॥

मारुतं मरुतां संबन्धि शर्धः बलं च, त्वदायत्तत्वात् । त्वं वातैः वाततुल्यैः वातजवैः अरुणैः संध्यावर्णैः अश्वैः यासि । शंगयः सुखगृहं त्वम् एव पूषा पोषको भूत्वा विधतः परिचरतः पासि चरुपुरोडाशादिभिस्त्वामर्चयतो रक्षसि । " श्वन्नुक्षन्पूषन्" " ( उ १६५ ) इति पुषेः कनिन्प्रत्ययो निपातितः। विध विधाने तौदादिकः। " शतुरनुमः " ( पा ६·१·१७३ ) १० इति विभक्तेरुदात्तत्वम् । नु क्षिप्रं त्मना आत्मना स्वयमेव । " मन्त्रेष्वाङ्यादेरात्मनः ", ( पा ६·४·१४१ ) इत्याकारलोपः। हे अग्ने रुद्ररूप, एवंगुणविशिष्टस्त्वं रुद्रतुल्यपराक्रमो भूत्वा अनया घोरया तन्वा अस्माकं शत्रून् मारयेति भावः । " एषा वा अस्य घोरा तनूर्यद्रुद्रः " ( तैसं २·२·२ ) इत्यादि ब्राह्मणम् ॥

तत्रैव[2] याज्या—' आ वः ' इति त्रिष्टुप् ॥ हे ऋत्विग्यजमानाः, अध्वरस्य राजानं १५ प्रधानाधिपतिं रुद्रं होतारम् अभिमतानां दातारं, आह्वातारं वा । " बहुलं छन्दसि " ( पा ६·१·३४ ) इति संप्रसारणम् । रोदस्योः द्यावापृथिव्योः सत्ययजꣳ सत्यस्यान्नस्य दातारम् । " अन्येभ्योऽपि दृश्यन्ते " ( पा ३·२·७५ ) इति विच् । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६·२·१३९ ) । यद्वा—सत्यममोघं यजनं यस्य । " परादिश्छन्दसि बहुलम् " ( पा ६·२·१९९ ) इत्युत्तरपदाद्युदात्तत्वम् । यद्वा—सत्यमेव यजनं यस्य । यद्वा—सत्यस्य २० परमार्थस्यानन्दलक्षणस्य संगमयितारम् । हिरण्यरूपं हिरण्यवर्णम् अग्निम् अग्निरूपेणावस्थितं वः युष्माकम् आ अवसे रक्षणाय तृप्तये वा कृणुध्वम् आत्मसात् कुरुध्वम् । शत्रुमारणादियुष्मदभिमतसिद्ध्यर्थं भजध्वमित्यर्थः । कृवि हिंसाकरणयोः । " धिन्विकृण्व्योर च " ( पा ३·१·८० ) इत्युप्रत्ययः । व्यत्ययेनात्मनेपदम् ( पा ३·१·८५ ) । करोतेर्वा व्यत्ययेन श्नुप्रत्ययः ( पा ३·१·७३ ; ८५ ) । अचित्तात् पुरा, चित्तस्याभावोऽचित्तम् अन्तःकरणोपसंहारो मरणमिति २५ यावत् । यद्वा—यस्मिन् सति चित्तं नास्ति तन्मरणमेव । ततः प्रागेव देवं भजध्वमिति । " परादिश्छन्दसि बहुलम् " ( पा ६·२·१९९ ) इत्युत्तरपदाद्युदात्तत्वम् । कीदृशादचित्तात् ? तनयित्नोः तनयित्नुर्मेघः तादृशात्[3], अनिश्चितकालत्वात् । स्तन शब्दे चुरादिरदन्तः । " स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच् " ( उ ३१६ ) इतीत्नुच्प्रत्ययः । सकारलोपश्छान्दसः ॥

२. मै–तस्यैव । ३. तं.ति.पं१–तत्सदृशात् । ३०

अग्निर्होता नि षसादा यजीयानुपस्थे मातुः सुरभावु लोके ।
युवा कविः पुरुनिष्ठ ( १ ) ऋतावा धर्ता कृष्टीनामुत मध्य इद्धः ॥

अग्नि । होता । नीति । ससाद । यजीयान् ।
उपस्थ इत्युप–स्थे । मातु । सुरभौ । उ । लोके ।
५ युवा । कवि । पुरुनिष्ठ इति पुरु–निष्ठ ( १ ) । ऋतावेत्यृत–वा ।
धर्ता । कृष्टीनाम् । उत । मध्ये । इद्ध. ॥

" अग्नये सुरभिमते पुरोडाशमष्टाकपाल निर्वपेद्यस्य गावो वा पुरुषा वा प्रमीयेरन् यो वा विभीयात् " ( तैस २ २.२ ) इत्यस्य पुरोनुवाक्या—' अग्निर्होता ' इति त्रिष्टुप् ॥ [१]होता देवानामाह्वाता । पूर्ववत् सम्प्रसारणम् ( पा ६ १.३४ ) । [१]यजीयान् यष्टृतम ( २ ) मानुपाद्धोतु । १० " तुश्छन्दसि " ( पा ५.३ ५९ ) इति यष्टृशब्दादीयसुन्प्रत्यय, " तुरिष्ठेमेयस्सु " ( पा ६.४.१५४ ) इति टिलोप । [१]युवा नित्यतरुण । [१]कवि मेधावी । [१]पुरुनिष्ठ पुरुषु बहुषु स्थानेषु स्थित । " आतश्चोपसर्गे " ( पा ३ १.१३६ ) इति क । थाथादिस्वरेणो-त्तरपदान्तोदात्तत्वम् ( पा ६ २ १४४ ) । [१]ऋतावा ऋतवान् [४]सत्यवान् यज्ञवान् वा[४] । ' छन्दसीवनिपौ च " ( पा ५ २ १०९ वा २ ) इति वनिप्प्रत्यय । " अन्येषामपि दृश्यते '

१५ एति ॥ अथ याज्या–' आ वो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्यो । अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ' इति ॥ हे ऋत्विग्यजमाना , [१]वः युष्माकम् [१]अवसे रक्षणाय [१]अग्निम् [१]आ [१]कृणुध्वम् वशीकुरुत । कदा ? [१]तनयित्नो [१]अचित्तात्, म[३] म्रियते चित्त यस्मिन् मरणे तदचित्त, शत्रुणा विस्तारितात् भवदीयमरणात् पूर्वमेव । कीदृशमग्निम् ? [१]अध्वरस्य [१]राजान यज्ञ-स्वामिनं [१]रुद्र शत्रून् प्रति क्रूर [१]होतारं फलदानाय भक्तानामाह्वातार, [१]रोदस्यो [१]सत्ययजं द्युलोके २० भूलोके च सत्यमवश्यभावि[४] कर्मफल[५] यजति ददातीति सत्ययज ( जं ) त [१]हिरण्यरूप तस्सदृशम् ॥

इष्टयन्तर विधत्ते—" अग्नये सुरभिमते पुरोडाशमष्टाकपाल निर्वपेद्यस्य गावो वा पुरुषा वा प्रमीयेरन् यो वा विभीयादेषा वा अस्य भेषज्या तनूर्यत् सुरभिमती तयैवास्मै भेषज करोति सुरभिमते भवति पूतीगन्धस्यापहत्यै " ( तैसं २.२ २ ) इति ॥ सुरभिमते भेषज्यतनूयुक्ताय । यस्य यजमानस्य गावो वा भृत्या वा दैविकरोगबाहुल्येन बहवो म्रियेरन् स्वय वा कदाचिदपमृत्योर्भीतो भवेत् तादृशो निर्वपेत् । २५ पूतीगन्धस्य शवगन्धस्य निवृत्तये [६]सुगन्धयुक्ताय कुर्यात् ॥

अग्निरिति ॥ तत्र पुरोनुवाक्या–' अग्निर्होता नि षसादा यजीयानुपस्थे मातु सुरभावु लोके । युवा कवि पुरुनिष्ठ ऋतावा धर्ता कृष्टीनामुत मध्य इद्ध ' इति ॥ अयम् [१]अग्नि [१]मातु [१]उपस्थे वेदे समीप-वर्तिनि [१]सुरभौ [१]उ [१]लोके [१]सुरभिगन्धयुक्त एवाऽऽहवनीयस्थाने [१]नि [१]षसाद उपविष्ट । कीदृशोऽग्नि ?

४–४ मे–यज्ञवान् ।

३० ३ तै म मर–पुरा न । ४ आ–' भावि ' नास्ति । ५ क–फल्म् । ६. त–सुरभिगन्ध-युक्ताय । ७ म मर–सुगन्ध° ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

साध्वीमकर्देववीतिं नो अद्य यज्ञस्य जिह्वामविदाम गुह्याम् ।
स आयुरागात् सुरभिर्वसानो भद्रामकर्देवहूतिं नो अद्य ॥

साध्वीम् । अकः । देववीतिमिति देव-वीतिम् । नः । अद्य ।
यज्ञस्य । जिह्वाम् । अविदाम । गुह्याम् ।
सः । आयुः । एति । अगात् । सुरभिः । वसानः ।
भद्राम् । अकः । देवहूतिमिति देव-हूतिम् । नः । अद्य ॥ ५

( पा ६.३.१३७ ) इति दीर्घः । [V]धर्ता धारयिता [V]कृष्टीनां मनुष्याणाम् । " नामन्यतरस्याम् " ( पा ६.१.१७७ ) इति नाम उदात्तत्वम् । उतापि च [V]मध्ये तेषां मनुष्याणां हृदये [V]इद्धः दीप्तः । एवं सर्वोपकारी सर्वसद्गुणान्वितोऽयम् [V]अग्निः [V]मातुः मातृस्थानीयाया वेदेः, निर्मात्र्या वा श्रेयसाम्, [V]उपस्थे [5]उपस्थस्थानीये उत्सङ्गसदृशे[5] [V]सुरभौ शोभनहविर्गन्धयुक्ते १० [V]लोके आलोकवति अस्मिन् प्रदेशे [V]नि षसाद निषीदति । " छन्दसि लुङ्लङ्लिटः " ( पा ३.४.६ ) इति लिट् । सोऽयमस्माकं भेषजं करोत्विति भावः । " एषा वा अस्य भेषज्या तनूर्यद् सुरभिमती " ( तैसं २.२.२ ) इति ब्राह्मणम् ॥

तत्रैव याज्या—' साध्वीम् ' इति त्रिष्टुप् ॥ यस्मात् वयं [V]यज्ञस्य अस्य [V]जिह्वां जिह्वास्थानीयं भगवन्तमग्निम् [V]अविदाम ज्ञातवन्तः लब्धवन्तो वा । वेत्तेर्विन्दतेर्वा व्यत्ययेन शप्रत्ययः १५ ( पा ३.१.७७, ८५ ), नुममावश्च । कीदृशीं जिह्वाम्? [V]गुह्याम् अविदुषां गूहनीयाम् । गुहायां भवेति दिगादित्वाद्यत् ( पा ४.३.५४ ) । " यतोऽनावः " ( पा ६.१.२१३ ) इत्याद्युदात्तत्वम् । तादृशीं तां भक्तिसामर्थ्यात् वयमविदाम । तस्मात् [V]अद्य अस्मिन्नहि, [V]नः अस्माकमस्माभिः क्रियमाणां [V]देववीतिं देवभक्षं[6] देवपूजां वा [V]साध्वीं शोभनाम् [V]अकः करोतु । " छन्दसि लुङ्लङ्लिटः " ( पा ३.४.६ ) इति लुङ् । " मन्त्रे घस " ( पा २.४.८० ) २० इत्यादिना च्लेर्लुक् । किंच—[V]सः एवाग्निः [V]आयुः [V]वसानः आच्छादयन् आयुषा परिवीयमाणः अस्मान् वा आयुषा परिवारयन् आयुष्मतोऽस्मान् कुर्वन्, [V]सुरभिः सुगन्धिः चरुपुरोडाशादि-गन्धयुक्तः अस्मान् [V]आ [V]अगात् आगच्छतु । पूर्ववल्लुङ् ( पा ३.४.६ ) । " गातिस्था " ( पा २.४.७७ ) इत्यादिना सिचो लुक् । आगत्य चास्माकमायुरर्थे, [V]अद्य अस्मिन्नहनि [V]नः अस्माकं [V]देवहूतिं, देवा हूयन्ते अस्यामिति देवहूतिरिष्टिः, तां [V]भद्रां शोभनां यथोक्तमनुतिष्ठताम् २५ [V]अकः करोतु इति । स एव लुङ् ( पा ३.४.६ ) । देववीतिदेवहूतिशब्दयोः दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् ( पा ६.२.४२ ) ॥

५-५. तं.ति.पं१-उपस्थस्थाने कीदृशे । ६. तं.ति-देवभक्तिम् ।

[ काम्येष्टियाज्यापुरोनुवाक्या

“ अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत् सग्रामे सयत्ते ” ( तैस २.२.२ ) इत्यस्य पुरोनुवाक्या—‘ अक्रन्दत् ’ इति त्रिष्टुप् ॥ अयम् अग्नि अक्रन्दत् क्रन्दतु शब्द करोतु । अस्मच्छत्रुकुलं दहन् । छान्दसो लङ् ( पा ३.४.६ ) । स्तनयन् द्यौः इव यथा द्यौर्घन-पटलसञ्ज्ञा स्तनयति । स्तन शब्दे चुरादिरदन्तः । यद्वा—क्रन्दयतु अस्मद्रिपुकुलं गर्जन्तीव द्यौरन्तरिक्षं, दिवि हि गर्जन्त्या भयेन [7]जना महारव[8-9] कुर्वन्ति । किं कुर्वन्नित्याह—क्षाम क्षीणं दग्धमस्मच्छत्रुकुलं रेरिहत् अत्यर्थं लिहन् आस्वादयन् सर्वतो दहन् इत्यर्थ. । क्षयि जयि धयि क्षये । “ भूतेऽपि दृश्यन्ते ” ( पा ३ ३.२ ) इति भूतेऽपि कर्मणि मनिन्-प्रत्यय । रिहेर्यङ्लुगन्ताच्छतृप्रत्यय ( पा २ ४ ७४, ३ २ १२४ ) । “ नाभ्यस्ताच्छतु ”

होता देवानामाह्वाता यजीयान् मानुषाद्धोतुरतिशयेन यष्टा युवा [8]नित्यतरुण कवि मेधावी पुरुनिष्ठ पुरुषु बहुषु[9] गार्हपत्यादिस्थानेषु स्थित ऋतावा सत्यवान् कृष्टीनां धर्ता मनुष्याणां पोषक । अपि च मध्ये मनुष्याणामुदरे इद्ध जाठराग्निरूपेण दीप्त ॥

साध्वीमिति ॥ अथ याज्या—‘ साध्वीमकर्देववीतिं नो अद्य यज्ञस्य जिह्वामविदाम गुह्याम् । स आयुरागात् सुरभिर्वसानो भद्रामकर्देवहूतिं नो अद्य ’ इति ॥ अयमग्नि अद्य न. देववीतिम् अस्माभिर्देवेभ्यो दत्ता भक्ष्या पुरोडाशाहुतिं साध्वीम् अकः स्वादुमकरोत् । अत यज्ञस्य जिह्वां[10] जिह्वास्थानीयां गोप्यामग्निदेवताम् अविदाम वयं लब्धवन्त । सुरभि पुरोडाशाज्यादिसुगन्धोपेत[11] स अग्नि आयु वसान अस्मदीयमायुराच्छादयन् [12]गोपायन् आ अगात् आगच्छतु । अद्य न अस्मदीयां देवहूतिं भद्राम् अक देवार्थं होमं यथाशास्त्र करोतु ॥

इष्ट्यन्तर विधत्ते—“ अग्नये क्षामवते पुरोडाशमष्टाकपाल निर्वपेत् सग्रामे सयत्ते भागधेये-नैवैनꣳ शमयित्वा परानभि निर्दिशति यमवरेषां विध्यन्ति जीवति स य परेषां प्र स मीयते जयति तꣳ सग्रामम् ” ( तैस २ २.२ ) इति । क्षामवते क्षुधायुक्ताय । युद्धे प्रत्यासन्ने सति जयार्थी निर्वपेत् । स्वदत्तेनाग्निभागेन स्वविषयमग्नि शान्तं कृत्वा परान् शत्रून् वह्नेराभिमुख्येन निर्दिशति हन्तु प्रदर्शयति । तथा सत्यवरेषा स्वसैन्यगताना मध्ये यं पुरुषमितरे विध्यन्ति स जीवति । परेषा शत्रुसैन्यगताना मध्ये यं पुरुषमितरे विध्यन्ति स म्रियते[13], ततो यजमानो जयति ॥

यथा जयार्थिन एषेष्टिस्तथा बहुबन्धुमरणनिवारणार्थिनोऽप्येतामिष्टिं विधत्ते—“ अभि वा एष एतानुच्यति येषा पूर्वापरा अन्वञ्च प्रमीयन्ते पुरुषाहुतिर्ह्यस्य प्रियतमाग्नये क्षामवते पुरोडाशमष्टा-कपाल निर्वपेद्भागधेयेनैवैनꣳ शमयति नैषा पुराऽऽयुषोऽपर प्र मीयते ” ( तैस २ २.२ ) इति । पूर्वापरा ज्येष्ठा कनिष्ठाश्च । अन्वञ्चो विच्छेदवर्जिता । येषा बन्धूना मध्ये बहवो विच्छेदमन्तरेण म्रियन्ते एतानभिलक्ष्यैष क्षामवानग्निरुच्यति समवैति । कुत ? पुरुषाहुतेरेतत् प्रियत्वात् पुरोडाशेनाग्नि शाम्यति । तत एषा बन्धूना मध्ये ज्येष्ठे जीवति सत्यपर कनिष्ठ आयु संपूर्ते. पूर्वमपमृत्युना न म्रियते ॥

गृहदाहादिनिमित्तीकृत्यापि तामेवेष्टिं विधत्ते—“ अभि वा एष एतस्य गृहानुच्यति यस्य गृहान् दहत्यग्नये क्षामवते पुरोडाशमष्टाकपाल निर्वपेद्भागधेयेनैवैनꣳ शमयति नास्यापर गृहान् दहति ” ( तैस २ २.२ ) इति । अपर यथा भवति तथा न दहति न पुनर्दहतीत्यर्थः ॥

७ तं–क्रन्दतु । ८–९, तं–जना हाहारवम् ;. त्रि–जनता हाहारवम् ।

८ आ क हा–नित्यं तरुण । ९ आ हा–‘ बहुषु ’ नास्ति । १० आ इ,पा हा–‘ जिह्वाम् ’ नास्ति । ११ तं–°दिगन्धोपेत । १२, इ,ज त पा,आ मर–यापयन्, मर–व्यापारयन् । १३ आ–प्रम्रियते, क–प्रमीयते ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥

अक्रन्दत् । अग्निः । स्तनयन् । इव । द्यौः ।
क्षाम । रेरिहत् । वीरुधः । समञ्जन्निति सम्-अञ्जन् ।
सद्यः । जज्ञानः । वीति । हि । ईम् । इद्धः । अख्यत् । ५
एति । रोदसी इति । भानुना । भाति । अन्तः ॥

( पा ७-१-७८ ) इति नुमभावः । " अभ्यस्तानामादिः " ( पा ६-१-१८९ ) इत्याद्युदात्तत्वम् । " कपिलकादीनां संज्ञाछन्दसोर्वा लो रमापद्यते " ( द्र. पामा, काशिका ८-२-१८ ) इति रत्वम् । " अन्येषामपि दृश्यते " ( पा ६-३-१३७ ) इति क्षामशब्दस्य संहितायां दीर्घत्वम् । पुनश्च विशेष्यते—[v]वीरुधः [v]समञ्जन् संमृक्षन्[9] संदहन्, उपलक्षणं चैतत्, तृणगुल्मलतावनस्पतीन् १० [10]व्याप्नुवन्नित्यर्थः । किमीदृशी शक्तिरप्यस्य विद्यत इत्याह—' वि हीम् ' इति । [v]हि यस्मादर्थे वर्तते, [v]ईम् इत्यवधारणे । यस्मादयमग्निः [v]जज्ञानः जायमानः । जनी प्रादुर्भावे दैवादिकः । " बहुलं छन्दसि " ( पा २-४-७६ ) इति शपः श्लुः । यद्वा—जन जनने जुहोत्यादिकः[11] । व्यत्ययेनात्मनेपदम् ( पा ३-१-८५ ) [v]सद्यः एव तत्क्षणादेव । [v]इद्धः दीप्तः [v]रोदसी द्यावापृथिव्यौ [v]व्यख्यत् [12-]व्यचेष्टत व्यपश्यत्[-12] । छान्दसो लुङ् ( ३-४-६ ) । " अस्यतिवक्तिख्यातिभ्योऽङ् " १५ ( पा ३-१-५२ ) । " हि च " ( पा ८-१-३४ ) इति निघातप्रतिषेधः । स्वयं च [v]भानुना तेजसा [v]अन्तः द्यावापृथिव्योर्मध्ये [v]आ [v]भाति समन्तात् प्रकाशते । यद्वा—रोदसी [13-]व्यख्यत् विचष्टे[-13] यथावत् प्रकाशयति । स्वयमपि तयोर्मध्ये भाति । तस्मात् महातेजसानेन किं हि नाम कर्तुं न शक्यते इति भावः । " भागधेयेनैवैनꣳ शमयित्वा परानभि निर्दिशति " ( तैसं २-२-२ ) इति ब्राह्मणम् ॥ २०

" अभि वा एष एतानुच्यति येषां पूर्वापरा अन्वञ्चः प्रमीयन्ते पुरुषाहुतिर्ह्यस्य प्रियतमाग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत् " ( तैसं २-२-२ ) इत्यस्यापीयमेव पुरोनुवाक्या ।

अक्रन्ददिति ॥ अस्यां त्रिविधायां क्षामवतीष्टौ[14] पुरोनुवाक्यामाह—' अक्रन्ददग्निस्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् । सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ' इति ॥ अयम् [v]अग्निः [v]अक्रन्दत् अस्मदनिष्टनिवारणार्थं गर्जतु । किमिव ? [v]स्तनयन् [v]इव [v]द्यौः यथा २५ द्युलोकस्थो मेघो गर्जन् सस्यशोषभीतिं निवारयति तद्वत् । किं कुर्वन् ? [v]क्षाम दाहकमस्मद्विरुद्धं [v]रेरिहत्

९. तं-संभक्षयन्; ति-' संमृक्षन् ' नास्ति । १०. मै-आप्नुव' । ११. तं.ति-जौहोत्यादिकः । १२-१२. तं.ति.पं१-विचष्टे विपश्यति । १३-१३. तं.ति-व्याख्यत् व्याचष्टे ।

१४. आ.क-क्षामवतेष्टौ ।

[ काम्येष्टियाज्यापुरोनुवाक्या-

त्वे अ॒ग्ने॒ पु॒र्व॒णी॒क ( २ ) होत॒र्दोषा॒ वस्तो॒रेरि॑रे य॒ज्ञिया॑सः ।
क्षामे॑व॒ विश्वा॒ भुव॑नानि॒ यस्मि॒न्त्सꣳ सौभ॑गानि दधि॒रे पा॑व॒के ॥

त्वे इति॑ । वसू॑नि । पु॒र्व॒णी॒केति॑ पुरु–अ॒नी॒क॒ ( २ ) । हो॒त॒ ।
दोषा॑ । वस्तोः॑ । एति॑ । ई॒रि॒रे॒ । य॒ज्ञिया॑सः ।
५ क्षाम॑ । इ॒व॒ । विश्वा॑ । भुव॑नानि । यस्मि॑न् ।
समिति॑ । सौभ॑गानि । द॒धि॒रे । पा॒व॒के ॥

[14]तदेव योजनीयम्— [15]अयमेवगुणविशिष्ट अग्नि अस्माक पूर्वापरप्रमादहेतु पाप क्षाम क्षीण यथा तथा रेरिहत् आस्वादयन् नाशयन् अनेन हविषा समिद्ध शब्द करोत्विति । " भागधेयेनैवैन शमयति नैषा पुराऽऽयुषोऽपर प्र मीयते " ( तैस २.२.२ ) इति ब्राह्मणम् ॥

१० " अग्नि वा एष एतस्य गृहानुच्यति यस्य गृहान् दहत्यग्नये पुरोडाशमष्टाकपाल निर्वपेत् " ( तस २ २ २ ) इत्यस्यापीयमेव पुरोनुवाक्या । तत्र त्वेव व्याख्येयम्—क्षाम क्षीण दग्धमस्मद्गृह रेरिहत् आस्वादयन् वीरुध गृहात्रयवान् स्थूणावशादीन् समश्नन् भक्षयन्नय खलु अग्नि अक्रन्दत् । तस्मादिममिदानीमेवानेन हविषा प्रसन्न करोमि, यथा पुनरस्मद्गृह न धक्ष्यतीति । " भागधेयेनैवैनꣳ शमयति नास्यापर गृहान् दहति " ( तैस २ २ २ )
१५ इति ब्राह्मणम् ॥

तेषु त्रिष्वपि याज्या—' त्वे वसूनि ' इति त्रिष्टुप् ॥ हे पुर्वणीक बहुबल, होत देवानामाह्वात, त्वे त्वयि खलु एरिरे । " सुपा सुलुक् " ( पा ७ १ ३९ ) इति शे आदेश । वसूनि धनानि वासहेतुत्वात् वरिष्ठानि वा धनानि हविर्लक्षणानि दोषा वस्तो रात्रावहि च यज्ञियास यज्ञार्हा आ ईरिरे आभिमुख्येन प्रेरयन्ति प्रक्षिपन्तीत्यर्थ । ईर गतौ अनुदात्तेत् ।

२० रेरिहान वीरुध समश्नन् पुष्पत्वादवदस्मदनुकूलानि सम्यगभिव्यञ्जयन् । हि यस्मात् जज्ञान उत्पद्यमान सद्य ईम् [15]इदानीमेव इद्ध दीप्त वि आख्यत् विविधं जगत् प्रख्यापयति । रोदसी द्यावापृथिव्यो अन्त भानुना रश्मिना स्वयम् आ भाति समन्तात् प्रकाशते ॥

त्वे इति ॥ अथ याज्या—' त्वे वसूनि पुर्वणीक होतर्दोषा वस्तोरेरिरे यज्ञियास । क्षामेव विश्वा भुवनानि यस्मिन्त्सꣳ सौभगानि दधिरे पावके ' इति ॥ हे पुर्वणीक अत्यन्तबहुल, होत
२५ देवानामाह्वात, दोषा रात्रौ वस्तो दिवा च यज्ञियास यज्ञार्हाणि वसूनि हवींषि एरिरे आगच्छन्ति । त्वदनुग्रहात् पूर्वं क्षाम इव दग्ध पटादिकमिव विश्वा भुवनानि नि साराणि भूत्वा पावके त्वय्यनुगृह्णति सति पश्चात् सौभगानि स दधिरे सौभाग्य प्राप्नुवन् तादृशस्त्वमस्माननुगृहाणेत्यर्थ ॥

१४ तै वि प–तत्रैवम्; पं१–' तदेवम् ' नास्ति । १५. त वि–य एवगुण' ।

१५. इ उ पा भो हा–तदानीमेव ।

तुभ्यं ता अङ्गिरस्तम् विश्वाः सुक्षितयः पृथक् ।
अग्ने कामाय येमिरे ॥
तुभ्यम् । ताः । अङ्गिरस्तमेत्यङ्गिरः–तम ।
विश्वाः । सुक्षितय इति सु–क्षितयः । पृथक् ।
अग्ने । कामाय । येमिरे ॥

"यज्ञर्त्विग्भ्यां घखञौ" ( पा ५·१·७१ ), "आज्जसेरसुक्" ( पा ७·१·५० ) । कीदृशे त्वयीत्याह—[V]यस्मिन् [V]पावके त्वयि सति [V]विश्वा [V]भुवनानि सर्वाणि भूतजातानि [V]सौभगानि सौभाग्यानि [V]सम् [V]दधिरे सम्यक् धारयन्ति । '*सुभग मन्त्रे' इत्यञ् । त्वदनुग्रहात् पूर्वं किमिवावस्थितानीति चेत् ? उच्यते—[V]क्षाम [V]इव । क्षाम क्षीणं दग्धबहुलमस्माकं शत्रुबलं [ बलेन ] यादृशं बलं, पूर्वापरजनमरणं वा यादृशं, गृहं वा दग्धं यादृशं तदिव पूर्वमसुभगानि भुवनानि त्वत्प्रसादेन भवन्तीति । तस्मादस्माकं शत्रुबलं पूर्वापरमरणं गृहदाहं च शमयित्वा सुभगानस्मान् कुरु श्रीमतो यशस्विनश्च कुरु । पुनातेर्ण्यन्ताद् ( पा ३·१·२६ ) ण्वुल् ( पा ३·१·१३३ ), उदात्तनिवृत्तिस्वरेण ( पा ६·१·१६१ ) पावकशब्दस्यान्तोदात्तत्वम् ॥

"अग्नये कामाय पुरोडाशमष्टाकपालं निर्वपेद्यं कामो नोपनमेत्" ( तैसं २·२·३ ) इत्यस्य पुरोनुवाक्या—'तुभ्यं ताः' इति गायत्री ॥ हे [V]अङ्गिरस्तम गन्तव्यतम गतिमत्तमेति वा । अगि रगि लगि गत्यर्थाः । अस्मादसुनि इरुडागमो ( उ ६८५ ) निपात्यते । हे [V]अग्ने, [V]तुभ्यं [V]ताः प्रसिद्धाः [V]विश्वाः [V]सुक्षितयः शोभना क्षितिर्गतिर्यासां ताः प्रजाः । "नञ्सुभ्याम्" ( पा ६·२·१७२ ) इत्युत्तरपदान्तोदात्तत्वम् । यद्वा—शोभनं [16]क्षियन्ति वसन्तीति सुक्षितयो मनुष्याः । "मन्क्तिन् व्याख्यान" ( पा ६·२·१५१ ) इत्युत्तरपदान्तोदात्तत्वम् । [V]पृथक् [V]कामाय नानाविधेभ्यः कामेभ्यः कामसिद्धये [V]येमिरे यमन्ति त्वामाराधयितुमात्मानं विषयेभ्यो व्यावर्तयन्ति । व्यत्ययेनात्मनेपदम् ( पा ३·१·८५ ) । यद्वा—पृथक् यमयन्ति नानाविधैरुपायै-रात्मानं यमयन्ति[17] त्वामाराधयितुम् । तस्मात् वयमप्यस्मत्कामसिद्धये त्वामेव भजामहे इति भावः । "स एवैनं कामेन समर्धयत्युपैनं कामो नमति" ( तैसं २·२·३ ) इति ब्राह्मणम् ॥

इष्ट्यन्तरं विधत्ते—"अग्नये कामाय पुरोडाशमष्टाकपालं निर्वपेद्यं कामो नोपनमेदग्निमेव काम स्वेन भागधेयेनोप धावति स एवैनं कामेन समर्धयत्युपैनं कामो नमति" ( तैसं २·२·३ ) इति । कामाय कामप्रदाय, कामितार्थो यं यजमानं न प्राप्नुयात् स निर्वपेत् ॥

तुभ्यमिति ॥ तत्र पुरोनुवाक्या—'तुभ्यं ता अङ्गिरस्तम विश्वाः सुक्षितयः पृथक् । अग्ने कामाय येमिरे' इति ॥ हे [V]अङ्गिरस्तम अतिशयेनाङ्गसारोपेताग्ने, [V]सुक्षितयः वेदिरूपशोभनभूमियुक्ता [V]विश्वाः सर्वाः [V]ताः प्रजाः पृथक्कामयमाना विविधकामितार्थसिद्धिप्रदाय तुभ्यं [V]येमिरे- नियमं स्वीकृतवन्तः ॥

*[ द्र. पा ५·१·१२९ सूत्रे गणपाठः । ] । १६. मै–क्षयन्ति । १७. तं–निवर्तयन्ति; ति– निर्वर्तयन्ति ।

[ काम्येष्टियाज्यापुरोनुवाक्या

अश्याम तं काममग्ने तवोत्यश्याम रयिꣳ रयिवः सुवीरम् ।
अश्याम वाजमभि वाजयन्तोऽश्याम द्युम्नमजराजरं ते ॥

अश्याम । तम् । कामम् । अग्ने । तव । ऊती ।
अश्याम । रयिम् । रयिव इति रयि-व । सुवीरमिति सु-वीरम् ।
५ अश्याम । वाजम् । अभीति । वाजयन्त ।
अश्याम । द्युम्नम् । अजर । अजरम् । ते ॥

तत्रैव याज्या—'अश्याम' इति त्रिष्टुप् ॥ ऊत्यन्त प्रथम पाद ॥ हे अग्ने, त कामम् अश्याम अश्नुवीमहि, यदर्थमात्मा तुभ्य निवेदित । अशू व्याप्तौ । व्यत्ययेन परस्मैपदम् ( पा ३ १ ८५ ) । "बहुल छन्दसि" ( पा २ ४ ७३ ) इति शपो लुक् । १० यासुडादि ( पा ३ ४ १०३ ) । तव ऊती तव रक्षया । अवते क्तिनि ( पा ३ ३ ९४, ९७ ) ज्वरत्वरादिना ऊठादेश ( पा ६ ४ २० ) । "ऊतियूतिजूति" ( पा ३ ३ ९७ ) इति क्तिन उदात्तत्व निपात्यते । तृतीयैकवचनस्य "सुपां सुलुक्" ( पा ७ १ ३९ ) इति पूर्वसवर्णादेश । किंच–हे रयिव रयिमन् । "मतुवसो" ( पा ८ ३ १ ) इति रुत्वम् । "छन्दसीर" ( पा ८ २ १५ ) इति मतोर्वत्वम् । सुवीर रयिम् अश्याम प्राप्नुयाम, १५ शोभना वीरा पुत्रादयो यस्मिन् त पुत्रपौत्रादिसमृद्धिहेतु धन प्राप्नुयाम । "वीरवीर्यौ च" ( पा ६ २ १२० ) इत्युत्तरपदाद्युदात्तत्वम् । किंच–वाजयन्त वाजमन्नमात्मन इच्छन्त । क्यचि "न छन्दस्यपुत्रस्य" ( पा ७ ४ ३५ ) इतीत्वप्रतिषेध । यदा वय वाज लिप्सामहे तदा वाजम् अन्नम् आभिमुख्येनाश्नुवीमहि लिप्सेमहि । स्वरानवग्रहौ दुर्घटौ । यद्वा–वाजमाचक्षते[१८] इति णिच् किंच हे अजर जरारहित, अजरम् [१९]अक्षय्य द्युम्न यश ते २० त्वत्प्रसादात् अश्याम विमृयाम । "नञो जरमरमित्रमृता" ( पा ६ २ ११६ ) इत्यजरशब्दे उत्तरपदाद्युदात्तत्वम् ॥

अश्यामेति ॥ अथ याज्या—'अश्याम त काममग्ने तवोत्यश्याम रयिꣳ रयिव सुवीरम् । अश्याम वाजमभि वाजयन्तोऽश्याम द्युम्नमजराजर ते' इति ॥ हे अग्ने तव ऊती त्वदीयरक्षया त कामम् अभीष्टफलम् अश्याम व्याप्नुयाम । किंच हे रयिव हे धनवन्, सुवीर शोभनपुत्रपौत्राद्युपेतं २५ रयिं धनम् अश्याम । किंच वाजयन्तोऽन्नमिच्छन्तो वय वाजम् [१९]अन्नम् अभित अश्याम । किंच हे अजर, तव प्रसादात् अजरम् अक्षय द्युम्नं यश अश्याम ॥

इष्ट्यन्तर विधत्ते—"अग्नये यविष्ठाय पुरोडाशमष्टाकपाल निर्वपेत् स्पर्धमान क्षेत्रे वा सजातेषु वाऽग्निमेव यविष्ठꣳ स्वेन भागधेयेनोप धावति तेनैवेन्द्रियं वीर्यं भ्रातृव्यस्य युवते वि पाप्मना भ्रातृव्येण

१८ मे–अक्षयम् । [*][ द्र. सि कौमुदी 'कथ शैथिल्य' इति धातौ गणसूत्रम्, पा ३.१ २६ ३० वा ६ ] ।

१९ इ उ पा मा–'अन्नम्' नास्ति ।

श्रेष्ठं यविष्ठ भारताग्ने द्युमन्तमा भर ( ३ ) ।
वसो पुरुस्पृहं रयिम् ॥

श्रेष्ठम् । यविष्ठ । भारत । अग्ने । द्युमन्तमिति द्यु-मन्तम् । एति । भर ( ३ ) ।
वसो इति । पुरुस्पृहमिति पुरु-स्पृहम् । रयिम् ॥

" अग्नये यविष्ठाय पुरोडाशमष्टाकपालं निर्वपेत् स्पर्धमानः क्षेत्रे वा सजातेषु वा " ५
( तैसं २.२.३ ) इत्यस्य पुरोनुवाक्या–' श्रेष्ठम् ' इति गायत्री ॥ भारतेति प्रथमपादान्तः । हे [V]अग्ने [V]यविष्ठ युवतम । यौतिः पृथक्करणे । " कनिन् युवृषि " ( उ १६२ ) इत्यादिना यौतेः कनिन्प्रत्ययः । पृथक्कर्तृतम आदाय दातः । यद्वा–तरुणतम [V]भारत यज्ञस्य भर्तारः ऋत्विजो भरताः । " भृमृदृशि " ( उ ३९७ ) इत्यादिना बिभर्तेरतच्प्रत्ययः । एतैरुत्पादित भारत हे [V]वसो वासहेतो । " शॄस्वृस्निहि " ( उ १० ) इत्यादिना वसेरुप्रत्ययः । [V]श्रेष्ठं प्रशस्यतमं [V]द्युमन्तं दीप्तिमन्तं [V]पुरुस्पृहं पुरुभिर्बहुभिः स्पृहणीयम् । कर्मणि क्विप् ( पा ३.२.७६ ) । यद्वा–बह्वयः स्पृहा यस्मिन् । " परादिश्छन्दसि बहुलम् " ( पा ६.२.१९९ ) इत्युत्तरपदान्तोदात्तत्वम् । ईदृशं [V]रयिं धनमस्मभ्यम् [V]आ [V]भर स्पर्धमानेभ्य आच्छिद्यास्मभ्यं देहि । " स एवास्माद्रक्षांसि यवयति नैनमभिचरन् स्तृणुते " ( तैसं २.२.३ ) इति ब्राह्मणम् ॥ १०

तत्रैव याज्या–' स श्वितानः ' इति त्रिष्टुप् ॥ [V]यः [V]पावकः पावयिता शोधयिता । पुनातेर्ण्यन्तात् ण्वुलि ( पा ३.१.२६; ३.१.१३३ ) णिलोपे उदात्तनिवृत्तिस्वरेणान्तोदात्तत्वम् ( पा ६.१.१६१ ) [V]पुरुतमः बहुतमः सर्वात्मकत्वात् । छान्दसं प्रत्ययाद्युदात्तत्वम् । यद्वा–पुरूणां पूरणः छान्दसस्तमप्रत्ययः । [V]पुरूणि बहूनि [V]पृथूनि विस्तीर्णानि पुरोडाशादीनि हवींषि [V]भर्वन् भक्षयन् । भर्व हिंसायाम् । [V]अनुयाति अनुक्रमेण गच्छति यजमानगृहान् । [V]सः १५

जयते " ( तैसं २.२.३ ) इति ॥ यविष्ठायातिशयेन वियोगकारिणे युवते वियोजयति । यजमानः पापिना वैरिणा वियुक्तो जयति ॥ २०

[17]एतामेवेष्टिं [18]परप्रयुक्ताभिचारनिवारणाय विधत्ते–" अग्नये यविष्ठाय पुरोडाशमष्टाकपालं निर्वपेदभिचर्यमाणोऽग्निमेव यविष्ठꣳ स्वेन भागधेयेनोप धावति स एवास्माद्रक्षाꣳसि यवयति नैनमभिचरन्स्तृणुते " ( तैसं २.२.३ ) इति । यवयति वियोजयति । अभिचरन् वैरी एनमिष्टिकारिणं न स्तृणुते हन्तुं न शक्नोति ॥ २५

श्रेष्ठमिति ॥ एतस्यां द्विविधायामिष्टौ पुरोनुवाक्यामाह–' श्रेष्ठं यविष्ट भारताग्ने द्युमन्तमा भर । वसो पुरुस्पृहꣳ रयिम् ' इति । हे अग्ने, [V]रयिम् [V]आ [V]भर धनमाहर । [V]यविष्ट अतिशयेन वियोगकारिन् [V]भारत ऋत्विग्भिर्भरणीय [V]वसो आहुतिनिवासभूत । कीदृशं रयिम् ? [V]श्रेष्ठं प्रशस्ततमं [V]द्युमन्तं दीप्तिमन्तं [V]पुरुस्पृहं पुरुभिर्बहुभिः स्पृहणीयं मणिमुक्तादिरूपम् ॥

१७. म२–तामेवेष्टिम् ।. १८. म२–पापयुक्ता । ३०

स श्वितानस्तन्यतू रोचनस्था अजरेभिर्नानदद्भिर्यविष्ठः ।
यः पावकः पुरुतमः पुरूणि पृथून्यग्निरनुयाति भर्वन् ॥

स. । श्वितान. । तन्यतुः । रोचनस्था इति रोचन-स्था ।
अजरेभि । नानदद्भिरिति नानदत्-भिः । यविष्ठ. ।
य । पावक । पुरुतम इति पुरु-तम । पुरूणि ।
पृथूनि । अग्नि । अनुयातीत्यनु-याति । भर्वन् ॥

खल्वयमग्निर्हवि प्रियोऽस्माभि. हविषाराध्यत इत्यर्थ , तस्मादयमस्मच्छत्रून् विनाशयत्विति भाव.। अधुना तस्यैव हवींषि भुञ्जानस्य गुणानाह— श्वितान दीप्यमान । श्विता वर्णे अनुदात्तेत्, ताच्छीलिकश्चानश् (पा ३·२·१२९)। लसार्वधातुकानुदात्तत्वाभावात् "चित" (पा ६·१ १६३ ) इत्यन्तोदात्तत्वम् । "बहुल छन्दसि" (पा २ ४·७३ ) इति शपो लुक् । तन्यतु· तनिता विस्तारयिता सिद्धीना दीप्तीना वा । "ऋतन्यञ्जि" (उ ४५० ) इत्यादिना तनोते- र्यतुच्प्रत्यय· । रोचनस्था· रोचनेषु दीप्तिमत्स्थानेषु स्थित· । "अनुदात्तेतश्च हलादे." (पा ३ २ १४९) इति रोचतेर्युच्प्रत्ययः । रोचनेषु तिष्ठतीति वा तिष्ठतेः क्विप् (पा ३·२ ७६), कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६·२·१३९) । अजरेभि जरारहितैः अक्षीणै । "नञो जरमर- मित्रमृता·" (पा ६ २·११६ ) इत्युत्तरपदाद्युदात्तत्वम् । "बहुल छन्दसि" (पा ७ १ १० ) इत्यैसभाव.[19] । नानदद्भि अत्यर्थं नदद्भि स्तुवद्भि. ऋत्विग्भि· [20]यजमानगणैर्वा परिवृतः । यङ्लुगन्तात् शतरि (पा २ ४ ७४, ३·२·१२४) "अभ्यस्तानामादि" (पा ६·१ १८९) इत्याद्युदात्तत्वम् । यविष्ठ· युवतमः सोऽयमेवंविधोऽस्मदीयेन हविषा तृप्तोऽस्मच्छत्रून् विनाशयत्विति शेष· ॥

स इति ॥ अथ याज्या—'स श्वितानस्तन्यतू रोचनस्था अजरेभिर्नानदद्भिर्यविष्ठ । य पावक. पुरुतम पुरूणि पृथून्यग्निरनुयाति भर्वन्' इति ॥ य अग्नि पावक शोधयिता 'पुरुतम' आहवनीय- गार्हपत्यादिनामभिर्यविष्ठादिविशेषणैश्चात्यन्त बहुविध. पुरूणि बहूनि पृथूनि विस्तृतानि पुरोडाशादि- हवींषि भर्वन् भक्षयन् अनुयाति यजमानगृहमनुदिन गच्छति स अग्निर्वक्ष्यमाणगुणोपेत. । श्वितान. दीप्यमान , तन्यतु फलाना विस्तारयिता, रोचनस्था दीप्तिमत्सु देवयजनेष्ववस्थित , अजरेभि जरारहितै नानदद्भि स्तुतिं कुर्वाणैर्देवै संयुत , यविष्ठ अतिशयेन वैरिवियोगकर्ता[19] ॥

इष्ट्यन्तर विधत्ते—"अग्नय आयुष्मते पुरोडाशमष्टाकपालं निर्वपेद्य कामयेत सर्व- मायुरियामित्यग्निमेवाऽऽयुष्मन्तस्वेन भागधेयेनोप धावति स एवास्मिन्नायुर्दधाति सर्वमायुरेति" (तैस २ २·३ ) इति ॥ आयुष्मत आयुष्प्रदाय ॥

१९. त ति–इति मिस ऐसभाव· । २०. तं ति–मुनिगणैर्वा ।

१९ क–वैरिवियोक्ता ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः ।
पुनस्ते प्राण आयति परा यक्ष्मꣳ सुवामि ते ॥
आयुः । ते । विश्वतः । दधत् । अयम् । अग्निः । वरेण्यः ।
पुनः । ते । प्राण इति प्र-अनः । एति । अयति ।
परेति । यक्ष्मम् । सुवामि । ते ॥ ५

"अग्नय आयुष्मते पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेत सर्वमायुरियाम्" ( तैसं २.२.३ ) इत्यस्य पुरोनुवाक्या—'आयुष्टे' इत्यनुष्टुप् ॥ हे यजमान, अयम् अग्निः वरेण्यः रवणीयः । "वृञ एण्यः" ( उ ३८५ ), वृषादित्वादाद्युदात्तत्वम् ( पा ६.१.२०३ ) । ते तुभ्यं विश्वतः विश्वम् आयुः दधत् दधातु । "इतराभ्योऽपि दृश्यन्ते" ( पा ५.३.१४ ) इति द्वितीयान्तात् तसिल् । दधातेर्लेटि "लेटोऽडाटौ" ( पा ३.४.९४ ) इत्यडागमः । १० "घोर्लोपो लेटि वा" ( पा ७.३.७० ) इत्याकारलोपः । "युष्मत्तत्ततक्षुःष्वन्तःपादम्" ( पा ८.३.१०३ ) इति संहितायाम् आयुःसकारस्य षत्वम् । यदायं प्रसीदति तदानीं गतोऽपि [२१]ते प्राणः पुनः आ अयति पुनराभिमुख्येन [२२]त्वामागच्छति । इ गतौ भौवादिक उदात्तेत् । यद्वा—[२३-]पुनरपि त्वदीयः प्राण आयातु[-२३] अस्य प्रसादेन । अहमपि तदर्थं त्वदीयं [२४-]यक्ष्मं रोगं[-२४] परा सुवामि नाशयामि । षू प्रेरणे तौदादिक उदात्तेत् । "स एवास्मिन्नायुर्दधाति १५ ( तैसं २.२.३ ) इति ब्राह्मणम् ॥

तत्रैव याज्या—'आयुर्दा' इति त्रिष्टुप् ॥ हे अग्ने, आयुर्दाः अस्य यजमानस्य आयुषो दाता एधि भव । "अन्येभ्योऽपि दृश्यन्ते" ( पा ३.२.७५ ) इति ददातेर्विचि कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६.२.१३९ ) । हविषः जुषाणः हविः सेवमानः भुञ्जानः । "क्रियाग्रहणं कर्तव्यम्" ( द्र.पाभा १.४.३२ ) इति संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी ( पा २० २.३.६२ ) । जुषी प्रीतिसेवनयोः तौदादिक अनुदात्तेत् । ताच्छील्किश्चानश् ( पा ३.२.१२९ ) । हविःसेवनशीलः । लसार्वधातुकत्वाभावात् "चितः" ( पा ६.१.१६३ ) इत्यन्तोदात्तत्वम् ।

आयुरिति ॥ तत्र पुरोनुवाक्या—'आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः । पुनस्ते प्राण आयति परा यक्ष्मꣳ सुवामि ते' इति ॥ हे यजमान, ते तुभ्यं वरेण्यः श्रेष्ठः अयम् अग्निः विश्वतः आयुः दधत् संपूर्णमायुर्दधातु । अपमृत्युना गृहीतोऽपि ते प्राणः पुनः अस्यानुग्रहेण आ अयति २५ त्वद्देहे समागच्छतु । ते तव यक्ष्मं व्याधिं परा सुवामि विनाशयामि ॥

२१. मै–'ते' नास्ति । २२. मै–अस्मान् प्राप्नोति । २३–२३. तं–यतः प्राण आयति; ति–अयमितः प्राण आयति । २४–२४. मै–शत्रुपक्षम् ।

[ काम्येष्टियाज्यापुरोनुवाक्या

आयुर्दा अ॑ग्ने ह॒विषो॑ जुषा॒णो घृ॒तप्र॑तीको घृ॒तयो॑निरेधि ।
घृ॒तं पी॒त्वा मधु॒ चारु॒ गव्यं॑ पि॒तेव॑ पु॒त्रम॒भि ( ४ ) र॑क्षतादि॒मम् ॥
तस्मै॑ ते प्रति॒हर्य॑ते॒ जात॑वेदो॒ विच॑र्षणे । अग्ने॒ जना॑मि सुष्टु॒तिम् ॥

आयुर्दा इत्या॑यु॒ः-दाः । अग्ने॑ । ह॒विषः॑ । जु॒षा॒णः ।
घृ॒तप्र॑तीक॒ इति॑ घृ॒त-प्र॒तीकः॑ । घृ॒तयो॑नि॒रिति॑ घृ॒त-यो॒निः । ए॒धि॒ ।
घृ॒तम् । पी॒त्वा । मधु॑ । चारु॑ । गव्य॑म् ।
पि॒ता । इ॒व । पु॒त्रम् । अ॒भीति॑ ( ४ ) । र॒क्ष॒ता॒त् । इ॒मम् ॥
तस्मै॑ । ते॒ । प्र॒ति॒हर्य॑त॒ इति॑ प्रति-हर्य॑ते ।
जात॑वेद॒ इति॒ जात॑-वे॒द॒ । विच॑र्षण॒ इति॒ वि-च॒र्ष॒णे॒ ।
अग्ने॑ । जना॑मि । सु॒ष्टु॒तिमिति॑ सु-स्तु॒तिम् ॥

"बहुलं छन्दसि" (पा २ ४ ७३) इति शपो लुक् । घृतप्रतीक. घृतारम्भ, घृत खल्वग्नेरारम्भ । यद्वा—आघाराभिप्रायमिदं घृतयागारम्भः । घृतयोनि. घृतकारणक, ईदृशस्त्वमस्यायुर्दा एधि इद घृत पीत्वा । कीदृशम् ? मधु मधुर चारु शोभन निर्मल गव्यम् । "गोपयसोर्यत्" (पा ४.३.१६०) । "यतोऽनावः" (पा ६ १ २१३) इत्याद्युदात्तत्वम् । किं बहुनेत्याह—पिता पुत्रम् इव इम यजमानम् अभि रक्षतात् आभिमुख्येन रक्षतु ॥

"अग्नये जातवेदसे पुरोडाशमष्टाकपालं निर्वपेद्भूतिकामः" (तैस २.२.३) इत्यस्य पुरोनुवाक्या—'तस्मै ते' इति गायत्री ॥ हे अग्ने जातवेदः जातप्रज्ञ । यद्वा—जातानां भूतानां वेदितः । "गतिकारकयोरपि" (द्र.उ ६७६) इत्यसुन् । विचर्षणे विविधदर्शन विविधमनुष्य, (निघण्टु २.३ ८), एतेषामुत्पादकत्वात् । तस्मै ते तादृशाय तुभ्य प्रति-

आयुर्देति ॥ अथ याज्या—'आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि । घृत पीत्वा मधु चारु गव्यं पितेव पुत्रमभि रक्षतादिमम्' इति ॥ हे अग्ने, त्वम् आयुर्दा एधि यजमानस्याऽऽयुष्प्रदो भव । कीदृशस्त्वम् ? हविषः जुषाण पुरोडाशं सेवमान । घृतप्रतीक घृतोपक्रम आघारप्रयाजादीनां घृतेन हूयमानत्वात् । घृतयोनिः अवसानेऽप्यनूयाजादौ घृतमेव [20]योनिर्जन्म उत्पत्तिकारण[20] यस्यासौ घृतयोनि, तादृशस्त्वं मधु स्वादुतम चारु शोधितत्वेन निर्मल गव्य घृतं पीत्वा पिता पुत्रम् इव इमं यजमानमभितो रक्ष ॥

इष्ट्यन्तरं विधत्ते—"अग्नये जातवेदसे पुरोडाशमष्टाकपालं निर्वपेद्भूतिकामोऽग्निमेव जातवेदसं स्वेन भागधेयेनोप धावति स एवैनं भूतिं गमयति भवत्येव" (तैसं २.२.३) इति । जातवेदस उत्पन्नधनाय । भवत्येव भूतिं प्राप्नोत्येव ॥

तस्मा इति ॥ तत्र पुरोनुवाक्या—"तस्मै ते प्रतिहर्यते जातवेदो विचर्षणे । अग्ने जनामि सुष्टुतिम्' इति ॥ विविधाश्चर्षणयो मनुष्या यजमाना यस्यासौ विचर्षणिः । हे विचर्षणे जातवेद अग्ने, प्रतिहर्यते प्रतिदिनं यजमानगृहं गच्छते तस्मै ते शोभनां स्तुतिं जनामि जनयामि ॥

२०-२० तं-योनिर्ज्वालोत्पत्तिकारणम्, मर-योनिर्जलोत्पत्तिकारणम् ।

-काम्येष्टियाज्यापुरोनुवाक्याः ]

दि॒वस्परि॑ प्रथ॒मं ज॑ज्ञे अ॒ग्निर॒स्मद्द्वि॒तीयं॒ परि॑ जा॒तवे॑दाः ।
तृ॒तीय॑म॒प्सु नृ॒मणा॒ अज॑स्र॒मिन्धा॑न एनं जरते स्वा॒धीः ॥

दि॒वः । परीति॑ । प्र॒थ॒मम् । ज॒ज्ञे । अ॒ग्निः ।
अ॒स्मत् । द्वि॒तीय॑म् । परीति॑ । जा॒तवे॑दा इति॑ जा॒त-वे॑दाः ।
तृ॒तीय॑म् । अ॒प्स्वित्य॑प्-सु । नृ॒मणा इति॑ नृ-मनाः । अज॑स्रम् । ५
इ॒न्धा॒नः । ए॒न॒म् । ज॒र॒ते॒ । स्वा॒धीरिति॑ स्व-धीः ॥

हर्यते कामयमानाय वक्ष्यमाणां स्तुतिम् । यद्वा—प्रतिगन्तुमिच्छते । यद्वा—प्रतिगृह्णते । हर्य गतौ । ᵛसुष्टुतिं शोभनां स्तुतिं ᵛजनामि जनयामि । जनेर्ण्यन्ताल्लट् ( पा १·४·५५ ) । "बहुलं संज्ञाछन्दसोः" ( द्र.उ १९० ) इति णिलुक् । जातवेद इत्यस्यामन्त्रितस्याप्यविद्यमानवत्त्वात् ( पा ८·१·७२ ) विचर्षण इत्येतदपि न निहन्यते । अग्ने इत्यस्याविद्यमानत्ववात् ( पा ८·१·७२ ) १० जनामीति तिङन्तं न निहन्यते । "मन्क्तिन्व्याख्यान" ( पा ६·२·१५१ ) इति सुष्टुतिशब्दस्यान्तोदात्तत्वम् । अन्ये खलु दुराराधाः स्तुतिमपि न गृह्णन्ति, त्वं तु स्तुतिं च प्रतिगृह्णासि, ददासि चेप्सितानि । तस्मात् स्तुतिप्रियाय ते स्तुतिं जनयामि । त्वं च तां प्रतिगृह्य यजमानं भूतिं गमयेति भावः । "■ एवैनं भूतिं गमयति भवत्येव" ( तैसं २·२·३ ) इति ब्राह्मणम् ॥

तत्रैव याज्या—'दिवस्परि' इति त्रिष्टुप् ॥ अध्यर्थे परिशब्दः । ᵛदिवः ᵛपरि द्युलोकस्योपरि दिवः अधि ᵛअग्निः ᵛप्रथमं ᵛजज्ञे आदित्यात्मना अजनिष्ट । "पञ्चम्याः परावध्यर्थे" ( पा ८·३·५१ ) इति विसर्जनीयस्य सत्वम् । अत एव ज्ञापकात् [25]पञ्चम्या अलुक्[25] । ᵛअस्मत् अस्मत्तः ᵛपरि अस्मास्वधि ᵛद्वितीयं जज्ञे द्वितीयं जन्माकरोत् वैश्वानरात्मना । ᵛजातवेदाः जातानां भूतानां वेदिता, जातधनो वा । ᵛअप्सु अन्तरिक्षे ᵛतृतीयं जज्ञे जन्म चकार वैद्युतात्मना । यद्वा—अप्सु सलिले और्वात्मना जज्ञे । ᵛअजस्रं सर्वदा सर्वेष्वपि २० जन्मसु ᵛनृमणाः नृषु मनो यस्योपकरोतीति[26] स नृमणाः । "परादिश्छन्दसि बहुलम्" ( पा ६·२·१९९ ) इत्युत्तरपदाद्युदात्तत्वम् । "छन्दस्यृदवग्रहात्" ( पा ८·४·२६ ) इति णत्वम् ।

दिवस्परीति ॥ अथ याज्या—'दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः । तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः' इति ॥ ᵛअग्निः ᵛप्रथमं ᵛदिवस्परि द्युलोकस्योपरि ᵛजज्ञे सूर्यरूपेणोत्पन्नः । ᵛअस्मत् ᵛपरि अस्मदीयस्य मनुष्यलोकस्योपरि ᵛजातवेदाः ᵛद्वितीयं [21]जज्ञेऽतिप्रसिद्धम्[22]अग्निरूपेण द्वितीयं जन्म प्राप्तवान् । ᵛअप्सु समुद्रे ᵛतृतीयं जज्ञे वडवानलरूपेणोत्पन्नः । २५ ᵛअजस्रं त्रिष्वपि जन्मसु ᵛनृमणा नृषु यजमानेषु मनोऽनुग्रहबुद्धिर्यस्यासौ नृमणाः । ᵛएनम् ईदृशमग्निम् ᵛइन्धानः पुरोडाशादिभिर्दीपयन् ᵛस्वाधीः स्वायत्तचित्तः ᵛजरते जीर्यते जरापर्यन्तं परिचरतीत्यर्थः ॥

२५–२५. पञ्चमीं । २६. ति.मै–ऽकरोमीति ।

२१. आ.क.तं.मर–जज्ञे प्रसिद्धम् । २२. तं.मर–वह्निरूपेण । ३०

[ काम्येष्टियाज्यापुरोनुवाक्या

शुचिः पावक वन्द्योऽग्ने बृहद्वि रोचसे। त्वं घृतेभिराहुतः ॥

शुचिः । पावक । वन्द्य । अग्ने । बृहत् । वीति । रोचसे ।

त्वम् । घृतेभि । आहुत इत्या-हुत ॥

सर्वदा प्रजानामेवोपकारार्थं जज्ञ इति । तम् एनम् एवगुणकम् इन्धान समिच्चरुपुरोडाशाधै सदीपयन् । इन्धी दीप्तौ रौधादिक अनुदात्तेत् । "श्नान्नलोप." (पा ६ ४ २३ ), "विभाषा वेण्विन्धानयो." (पा ६ १.२१५ ) इत्याद्युदात्तत्वम् । स्वाधी स्वा आत्मीयैव धीर्यस्य स स्वाधी स्वकर्मनिरत । "अन्येपामपि दृश्यते" (पा ६ ३.१३७ ) इति पूर्वपदस्य दीर्घत्वम् । पूर्ववदुत्तरपदाद्युदात्तत्वम् ( पा ६.२.१९९ ) । यद्वा—स्वमात्मान ध्यायतीति स्वाधी आत्मनिष्ठ । "ध्यायते सप्रसारण च" (पा ३.२ १७८ वा ४ ) इति क्विप् । इन्धान. कर्मनिष्ठ , इन्धानश्च स्वाधीश्च एन जरते स्तोति । जृ वयोहानौ छन्दसि स्तुतिकर्मा चौरादिक आधृषीय । व्यत्ययेनात्मनेपदम् ( पा ३.१.८५ ) ॥

"अग्नये रुक्मवते पुरोडाशमष्टाकपाल निर्वपेद्रुक्काम" (तैस २.२.३ ) इत्यस्य पुरोनुवाक्या—'शुचि.' इति गायत्री ॥ वन्द्योऽन्त प्रथम पाद ॥ हे अग्ने । पादादित्वान्न निहन्यते । पाष्ठिकमामन्त्रिताद्युदात्तत्वम् (पा ६.१.१९८ ) । पावक शोधक, त्व खलु शुचि शुद्ध न केवल शोधयिता वन्द्य. स्तुत्यश्च सर्वेषाम् । "ईडवन्दवृशस" (पा ६.१ २१४ ) इत्याद्युदात्तत्वम् । स त्व घृतेभि घृतै । "बहुल छन्दसि" (पा ७.१.१० ) इत्यैसभाव । अनेकपात्रगतत्वाद्बहुवचनम् । तै आहुत आभिमुख्येन मर्यादया वा हुत । "गतिरनन्तर" (पा ६ २ ४९ ) इति पूर्वपदप्रकृतिस्वरत्वम् । बृहत् भृश वि रोचसे [२९]विविधमनेकप्रकार[२९] दीप्यसे । त्व हि शुचित्वादिगुणै प्रागेव रोचसे, अधुना तु घृतैरप्याहुतो बृहद्विरोचसे । स त्वमस्मिन् यजमाने रुच देहीति भाव, शेषो वा । "स एवास्मिन् रुच दधाति रोचत एव" ( तैस २ २ ३ ) इति ब्राह्मणम् ॥

इष्ट्यन्तर विधत्ते—"अग्नये रुक्मते पुरोडाशमष्टाकपाल निर्वपेत् रुक्कामोऽग्निमेव रुक्मन्त स्वेन भागधेयेनोप धावति स एवास्मिन् रुच दधाति रोचत एव" (तैस २ २ ३ ) इति । रुक्मते कान्तिमते । रोचते कान्तिमान् भवति ॥

शुचिरिति ॥ तत्र पुरोनुवाक्या—'शुचि. पावक वन्द्योऽग्ने बृहद्वि रोचसे । त्व घृतेभिराहुत ' इति ॥ हे पावक शोधयित अग्ने, शुचि वन्द्य च त्व घृतप्रभृतिभिर्हव्यै समन्तादाहुत सन् बृहत् वि रोचसे ॥

२७. तं–पुरोडाशादिभि , ति–पुरोडाशै । २८ तं.ति–शोधयिन । २९–२९. तं–त्वं केन प्रकारेण, ति–त्वमनेकप्रकारम् ।

[काम्येष्टियाज्यापुरोनुवाक्याः ]

दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः ।
अग्निरमृतो अभवद्वयोभिर् (५) यदेनं द्यौरजनयत् सुरेताः ॥
दृशानः । रुक्मः । उर्व्या । वीति । अद्यौत् ।
दुर्मर्षमिति दुः-मर्षम् । आयुः । श्रिये । रुचानः ।
अग्निः । अमृतः । अभवत् । वयोभिरिति वयः-भिः (५) । 　५
यत् । एनम् । द्यौः । अजनयत् । सुरेता इति सु-रेताः ॥

तत्रैव याज्या—' दृशानः ' इति त्रिष्टुप् ॥ अत्र " प्रयाजान्मे " ( ऋसं १०.५१.८ ) इत्यग्निना हवींषि प्रार्थयता " अग्नेश्च दीर्घमायुरस्तु देवाः " ( ऋसं १०.५१.८ ) इत्यायुश्च प्रार्थितम् । " तव प्रयाजाः " ( ऋसं १०.५१.९ ) इत्यादिना च देवैः प्रत्तानीति दाशतये श्रूयते । तदिदमत्रोच्यते—दृशानः साध्वंशनिरूपकः । " युषिवुषिदृशः किच्च " ( द.उ २५६ ) १० इत्यानच्प्रत्ययः । रुक्मः रोचनशीलः दीप्तिमान् उर्व्या महत्या । तया दीप्त्येति सामर्थ्याद् गम्यते । अयं व्यद्यौत् विविधं प्राप्तवान् । द्यु अभिगमने आदादिकः । " शपो लुक् " ( पा २.४.७२ ) । " उतो वृद्धिर्लुकि हलि " ( पा ७.३.८९ ) इति वृद्धिः । किं प्राप्तवान् ? दुर्मर्षं दुर्धर्षम् अन्यैरप्रधृष्यम् आयुः जीवनमन्नं वा । कीदृशः ? श्रिये श्रयणाय सेवायै तादृशस्यायुषो लाभाय रुचानः इच्छन् । व्यत्ययेन लसार्वधातुकानुदात्तत्वाभावः ( पा ३.१.८५, १५ ६.१.१८६ ) । ताच्छीलिको वा चानश् ( पा ३.२.१२९ ) । किंच—अतोऽयम् अग्निः अमृतः अभवत् अमरणधर्मा बभूव । वयोभिः अन्नैर्देवदत्तैः प्रयाजादिभिः । यदि अस्मात् एनम् अग्निं द्यौः द्युलोकवासी देवगणः, तात्स्थ्याल्लक्षणया द्यौरिति व्यपदिश्यते । अजनयत् एवंगुणमकरोत् । सुरेताः अमोघबीजः । " सोर्मनसी " ( पा ६.२.११७ ) इत्युत्तरपदाद्युदात्तत्वम् । तस्मादमृतो भवेति । यद्वा—अयमग्निः दुर्मर्षमायुर्जीवनमन्नं वा श्रिये श्रयितुं देवेभ्यो लब्धुं रुचान २० इच्छन् । तुमर्थे ( पा ३.४.९ ) केप्रत्ययः, " दृशे विख्ये च " ( पा ३.४.११ ) इति चकारस्य अनुक्तसमुच्चयार्थत्वात् । रुक्मः पूर्वमेव द्योतनशीलः अधुनाभीष्टवरलाभेन उर्व्या

दृशान इति ॥ अथ याज्या—' दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः । अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः ' इति ॥ दृशानः दर्शनीयरूपः रुक्मः सुवर्णसदृशः उर्व्या महत्या दीप्त्या व्यद्यौत् विद्योतते । किं कुर्वन् ? दुर्मर्षम् इतरैः क्षमितुमशक्यम् आयुः जीवनं २५ श्रिये श्रयितुं रुचानः वाञ्छन् । तथाविधोऽग्निः वयोभिः अन्नैर्हविर्भिः अमृतः अभवत् । यद्यस्मात् एनम् अग्निं द्यौः द्युलोकवासी देवगणः सुरेताः सन् अजनयत् तस्मादस्यामृतत्वं युक्तम् ॥

३०-३०. ति-अतो लुक्; मै-अतो लट् । ३१. ते-प्रजाभिः; मै-प्रजातिभिः ।

२३. तं-परैः ।

[ काम्येष्टियाज्यापुरोनुवाक्या

आ यदि॒षे नृ॒पतिं॒ तेज॒ आन॒ट्छुचि॒ रेतो॒ निषि॑क्तं॒ द्यौर॒भीके॑ ।
अ॒ग्निः शर्ध॑मनव॒द्यं युवा॑न॑ स्वा॒धियं॑ जनयत् सू॒दय॑च्च ॥

प॒र्ति । यत् । इ॒षे । नृ॒पति॒मिति॑ नृ-प॒तिम् । तेज॑ । आन॑ट् ।
शुचि॑ । रेतः॑ । निषि॑क्त॒मिति॒ नि-सि॒क्तम् । द्यौः । अ॒भीके॑ ।
५ अ॒ग्नि । शर्ध॑म् । अ॒न॒व॒द्यम् । यु॒वा॑नम् ।
स्वा॒धि॒यमिति॑ स्व-धि॒यम् । ज॒न॒य॒त् । सू॒दय॑त् । च॒ ॥

महत्या दीप्त्या व्यद्यौत् व्यद्युतत् विविध दीप्तवान् । द्युत दीप्तौ । " द्युद्भयो लुङि " ( पा १ ३ ९१ ) इति परस्मैपदम् । विकरणव्यत्ययेनाङ बाधित्वा च्ले सिजादेश ( पा ३·१·८५, ३ १ ४४ ) । तस्य " छन्दस्युभयथा " ( पा ३ ४ ११७ ) इति सार्वधातुकत्वादिडभाव. । हलन्त-
१० लक्षणा वृद्धि ( पा ७ २ ३ ) । " बहुल छन्दसि " ( पा ७·३ ९७ ) इतीडभाव । हल्ङ्यादि-सयोगान्तलोपौ ( पा ६ १ ६८, ८ २ २९ ) । अत्रैव हेतुमाह—अमृत खल्वय वयोभिरभव-दिति । तदपि कुत इत्याह—यदेन द्यौरेवविधमजनयदिति । तस्मादयमस्मद्दत्तान्यात्मीयानि हवींषि गृहीत्वा यजमाने रुच दधात्विति शेष. ॥

" अग्नये तेजस्वते पुरोडाशमष्टाकपाल निर्वपेत्तेजस्काम " ( तैस २ २·३ ) इत्यस्य
१५ पुरोनुवाक्या—' आ यत् ' इति त्रिष्टुप् ॥ ᵛयत् तेज. ᵛशुचि शुद्ध, ᵛनृपतिं मनुष्याणा रक्षकम् । " पातेर्डति " ( उ ५०६ ), " परादिश्छन्दसि " ( पा ६ २ १९९ ) इत्युत्तरपदाद्युदात्तत्वम् । ᵛनिषिक्त सृष्ट ᵛरेत उदकम् ᵛआनट् अश्नुते व्याप्नोति, ᵛइषे अन्नाय सस्यादिनिष्पत्तये । न हि वृष्टमात्रमुदक तदुत्पादने शक्तमपि तु पार्थिवेनाग्निना सयुक्तम्[1] । अशू व्याप्तौ । व्यत्ययेन परस्मैपदम् ( पा ३ १ ८५ ) । व्यत्ययेनैव ( पा ३ १ ८५ ) श्नप्रत्ययः । व्रश्चादिना षत्वम्
२० ( पा ८·२·३६ ), आडागम. । आङ् अभिमुख्ये । अयम् आभिमुख्येन प्रापत् । ᵛ[illegible] अग्नि

इदमन्तर विधत्ते—" अग्नये तेजस्वते पुरोडाशमष्टाकपाल निर्वपेत् तेजस्कामोऽग्निमेव तेज-स्वन्त स्वेन भागधेयेनोप धावति स एवास्मिन् तेजो दधाति तेजस्व्येव भवति " ( तैस २·२ ३ ) इति । तेजस्वते प्रभासते नियमनसामर्थ्यवते वा ॥

एति ॥ तत्र पुरोनुवाक्या—' आ यदिषे नृपतिं तेज आनट्छुचि रेतो निषिक्तं द्यौरभीके ।
२५ अग्नि शर्धमनवद्य युवान स्वाधियं जनयत्सूदयच्च ' इति ॥ ᵛयत् ᵛतेज ᵛइषे अभीष्टसिद्धये ᵛनृपतिं यजमानपालकमग्निम् ᵛआ समन्तात् ᵛआनट् व्याप्नोत् । यदपि ᵛशुचि ᵛरेत. शुद्धं बीजं मातापितृभ्या ᵛनिषिक्तं तेन तेजसा तेन च बीजेन ᵛद्यौ द्युलोकस्य ᵛअग्नि ᵛअभीके प्रत्यासन्नकाले शार्धादिविशेषणो-पेत पुरुष ᵛजनयत् उत्पादयति, ᵛसूदयत् ᵛच विरोधिपाप नाशयत्यपि । ᵛशार्धं बलवन्तम् ᵛअनवद्य दोषरहित ᵛयुवान तरुण ᵛस्वाधियं स्वायत्तचित्तम् । अतो यजमानाय तेजो दातुमग्नि शक्नोति ॥

३० [1] पं–संयुक्तम् । केवलोदकेनास्विन्नो नश्येत् । पुरेवतर्पय (?), त ति–संयुक्तम् । केवलोऽप्युद-केनास्विन्नो नश्येत् । पुरेवतर्पय (?) ।

स तेजीयसा मनसा त्वोत उत शिक्ष स्वपत्यस्य शिक्षोः ।
अग्ने रायो नृतमस्य प्रभूतौ भूयाम ते सुष्टुतयश्च वस्वः ॥
सः । तेजीयसा । मनसा । त्वोतः । उत । शिक्ष । स्वपत्यस्येति सु-अपत्यस्य । शिक्षोः ।
अग्ने । रायः । नृतमस्येति नृ-तमस्य । प्रभूताविति प्र-भूतौ ।
भूयाम । ते । सुष्टुतय इति सु-स्तुतयः । च । वस्वः ॥ ५

ᵛद्यौः दीप्यमानः । दिवेः क्विप् ( पा ३·२·७६ ) । ᵛअभीके आसन्ने काले अचिरादेव वक्ष्यमाणगुणविशिष्टं यजमानं ᵛजनयत् जनयतु । जनेर्लेट् । ᵛशर्धं बलवन्तम् ᵛअनवद्यम् अवद्यरहितम् । " नञ्सुभ्याम् " ( पा ६·२·१७२ ) इत्युत्तरपदान्तोदात्तत्वम् । ᵛयुवानं तरुणं ᵛस्वाधियं स्वकर्मनिरतं स्वात्मनिष्ठं वा । ईदृशं यजमानं कुर्यात् । ᵛसूदयत् ᵛच सूदयतु च । किम् ? यजमानस्य पापम् । पूर्ववल्लेट् । तिङः परत्वान्न निहन्यते ( पा ८·१·२८ ) । ईदृशो हि पुरुषः तेजस्वी भवतीति । " स एवास्मिन् तेजो दधाति तेजस्व्येव भवति " ( तैसं २·२·३ ) इति ब्राह्मणम् । केचिदाहुः—[33]यदिति लिङ्गव्यत्ययः, यमग्नि शर्धमनवद्यं युवानं स्वाधियं [34]नृपतिं वृष्टमुदकमानट् सोऽग्निर्दीप्यमानः क्षिप्रमेव यजमानस्य तेजो जनयतु, [35]तेजोविरोधि च सूदयतु इति । " चादिषु च " ( पा ८·१·५८ ) इति द्वितीयस्य तिङो निघातप्रतिषेधः, तिङः परत्वात् ॥ १०

तत्रैव याज्या—' स तेजीयसा ' इति त्रिष्टुप् ॥ हे ᵛअग्ने, स यजमानः पूर्वोक्तगुणविशिष्टो यस्त्वया तेजस्वी भवति[36] ᵛसः ᵛतेजीयसा तेजस्वितरेण ᵛमनसा, तेजनं तेजः, तद्वता निशिततरेण सावधानेनेत्यर्थः । " अस्मायामेधास्रजो विनिः " ( पा ५·२·१२१ ) । " विन्मतोर्लुक् " ( पा ५·३·६५ ) । " टेः " ( पा ६·४·१५५ ) इति टिलोपः । ᵛत्वोतः त्वया ऊतस्त्वयैव रक्षितोऽस्त्विति शेषः । " तृतीया कर्मणि " ( पा ६·२·४८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । तत्र त्वदूत इति वक्तव्ये पृषोदरादित्वात् व्यञ्जनलोपः ( पा ६·३·१०९ ) । ᵛउत अपि च ᵛस्वपत्यस्य शोभनपुत्रपौत्रादेः । " नञ्सुभ्याम् " ( पा ६·२·१७२ ) इत्युत्तरपदान्तो- १५ २०

स इति ॥ अथ याज्या—' स तेजीयसा मनसा त्वोत उत शिक्ष स्वपत्यस्य शिक्षोः । अग्ने रायो नृतमस्य प्रभूतौ भूयाम ते सुष्टुतयश्च वस्वः ' इति ॥ ᵛसः यजमानः ᵛत्वोतः त्वया रक्षितः । केन साधनेन ? ᵛतेजीयसा अत्यन्ततेजोयुक्तेन ᵛमनसा । किंच हेऽग्ने, ᵛस्वपत्यस्य शोभनपुत्रपौत्रादियुक्तस्य ᵛशिक्षोः दातुमिच्छतः ᵛनृतमस्य [24]मनुष्यतमस्य मनुष्येषु श्रेष्ठस्य यजमानस्य ᵛरायः ᵛशिक्ष धनानि देहि । ᵛते ᵛप्रभूतौ त्वदनुग्रहेण प्रभुत्वे सति वयं ᵛवस्वः वसुमत्तमाः ᵛसुष्टुतयश्च शोभनस्तुतियुक्ता बहुयागानुष्ठानेन स्तोत्रशस्त्रैः प्रभूता भूयास्म ॥ २५

३३. तं.ति–स इति । ३४. तं.ति–गृहपतिम् । ३५. तं.ति–तेजोरोधि । ३६. मै.ति–इति ।

२४. पा.हा–' मनुष्यतमस्य ' नास्ति ।

अग्ने सहन्तमा भर द्युम्नस्य प्रासहा रयिम् ।
विश्वा यश्( ६ )चर्षणीरभ्यासा वाजेषु सासहत् ॥
अग्ने । सहन्तम । एति । भर । द्युम्नस्य । प्रासहेति प्र-सहा । रयिम् ।
विश्वाः । यः ( ६ ) । चर्षणी । अभीति । आसा । वाजेषु । सासहत् ॥

५ दात्तत्वम् । शिक्षो शक्तुमिच्छत । "सनि मीमा" (पा ७ ४ ५४ ) इत्यादिना इस्भावो-ऽभ्यासलोपश्च (पा ७ ४·५८ ) । "सनाशसभिक्ष उः" (पा ३ २·१६८ ) । नृतमस्य मनुष्यतमस्य मनुष्योत्तमस्य यजमानस्य रायः धनानि शिक्ष यजमानकार्यसमर्थान् कर्तुं कृतसकल्पो भव । सन्नन्ताल्लोट् । जिज्ञासाया अविवक्षितत्वात् "शिक्षेर्जिज्ञासायाम्" (पा १ ३ २१ वा ३ ) इत्यात्मनेपदाभाव. । यजमानाय देहीति विवक्षितम् । प्रभूतौ प्रभावार्थं
१० यजमानस्य, यथाय लोके तेजस्वी भवति तदर्थमित्यर्थः । "निमित्तात् कर्मसयोगे सप्तमी" (पा २ ३ ३६ वा ६ ) । "तादौ च" (पा ६ २ ५० ) इति पूर्वपदप्रकृतिस्वरत्वम् । किंच—ते तव प्रसादात् वय सुष्टुतय. शोभना स्तुतिर्येषा तादृशास्त्वद्विषयामेव शोभना स्तुतिं सदा कुर्वन्त., वस्यः वसुमन्त. भूयाम भवेम अमोघप्रयत्नाः स्यामेति भाव· । भवतेर्लिङ्व्याशिषि लिङ् (पा३ ३·१६१ ), "बहुल छन्दसि" (पा २·४·७३ ) इति शपो लुक् । "लुगकारेकाररेफाश्च"
१५ (पा ४ ४ १२८ वा २ ) इति वसुशब्दात् परस्य मत्वर्थीयस्य लुक् । "जसादिषु वावचन छन्दसि प्राङ्णौ चङ्युपधाया." (द्र. पा ७ ३ १०९ वा १ ) इति गुणाभाव । "वा छन्दसि" (पा ६ १ १०६ ) इति पूर्वसवर्णदीर्घाभावः ह्रस्वादपि भविष्यतीति । यद्वा—तव प्रभूतौ प्रभावे वय भूयाम प्रभावानुगुणमस्मासु कुर्विति भाव· । तदेवाह—सुष्टुतयस्त्वामेव स्तुवन्तो वय वसुमन्तः स्याम, यथा ते प्रभावो न हीयत इति ॥

२० इष्ट्यन्तर विधत्ते—"अग्नये साहन्त्याय पुरोडाशमष्टाकपाल निर्वपेत् सीक्षमाणोऽग्निमेव साहन्त्य५ स्वेन भागधेयेनोप धावति तेनैव सहते य५ सीक्षते" (तैसं २ २ ३ ) इति । साहन्त्याय सहिष्णवे वैरिणामभिभवित्रे । सीक्षमाण सोढुमभिभवितुमिच्छु । यं वैरिण सीक्षते त तेनाऽनुगृहीतोऽभिभवति ॥

अग्न इति ॥ तत्र पुरोनुवाक्या—'अग्ने सहन्तमा भर द्युम्नस्य प्रासहा रयिम् । विश्वा
२५ यश्चर्षणीरभ्यासा वाजेषु सासहत्' इति ॥ हे अग्ने, द्युम्नस्य अस्मदीयस्य यशस. सहन्तम् अभिभवितारं वैरिण प्रासहा प्रसभम् आ भर अस्मद्वशे समानय । रयिं तदीय धनं चानय । य. भवान् चर्षणी मनुष्यसेना विश्वा अस्मत्प्रतिपक्षभूता· सर्वा अभि सासहत् अभिभवेत् । किंनिमित्तम् ? वाजेषु अस्मदीयेष्वन्नेषु निमित्तभूतेषु । केन साधनेन ? आसा स्वस्वसंनिधानेन । पराभिभवाय स्वसंनिध्यतिरिक्तप्रयत्नो नापेक्षित इत्यर्थ ॥

३० ३७–३७ तं ति–कृतसंकल्पोऽपि । ३८. मै–प्रभवार्थम् । ३९–३९ त ति–मोघप्रयत्ना मा भूमेति । ४०. त ति पं–'भविष्यतीति' इत्यस्यानन्तरे 'वक्ष्याम' । ४१. तं ति–स्तुतवन्त ।

तमग्ने पृतनासहं रयिं सहस्व आ भर ।
त्वं हि सत्यो अद्भुतो दाता वाजस्य गोमतः ॥
तम् । अग्ने । पृतनासहमिति पृतना-सहम् । रयिम् । सहस्वः । एति । भर ।
त्वम् । हि । सत्यः । अद्भुतः । दाता । वाजस्य । गोमत इति गो-मतः ॥

" अग्नये साहन्त्याय पुरोडाशमष्टाकपालं निर्वपेत् सीक्षमाणः " ( तैसं २.२.३ ) इत्यस्य पुरोनुवाक्या—' अग्ने सहन्तम् ' इत्यनुष्टुप् ॥ हे अग्ने, सहन्तम् अभिभवन्तं पराभिभवक्षमं पर्याप्तमित्यर्थः । ईदृशं रयिं धनम् आ भर आहर । " हृग्रहोर्भश्छन्दसि " ( द्र. पा ८.२.३२ वा १ ) इति भः । द्युम्नस्य यशस्विनः पुरुषस्यास्मदमित्रभूतस्य प्रासहा प्रसहनेन तादृशमस्मदमित्रमभिभूय तदीयं रयिम् अस्मभ्यमाभर आहर । षह मर्षणे चौरादिकः उदात्तेत् आधृषीयः । तस्माद्भावे क्विप् ( पा ३.२.७६ ) । " नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ " (पा ६.३.११६ ) इत्युपसर्गस्य दीर्घत्वम् । यः भवान् विश्वाः चर्षणीः मनुष्यसेनाः अस्मद्विपक्षभूताः वाजेषु अन्नेषु निमित्तभूतेषु । उपलक्षणं चैतत् । अस्माकमन्नादिकं साधयितुम्[43] अभि सासहत् अभिभवतु[44] । किं कुर्वन्नित्याह[45]— आसा आसनमात्रेणैव । आसेः क्विप् ( पा ३.२.७६ ) । " सावेकाचः " ( पा ६.१.१६८ ) इति विभक्तेरुदात्तत्वम् । सहेर्लेटि " बहुलं छन्दसि " ( पा २.४.७६ ) इति शपः श्लुः । द्विर्वचने तुजादित्वादभ्यासस्य दीर्घत्वम् ( पा ६.१.७ ) । यद्वा—यङ्लुगन्तात् ( पा २.४.७४ ) " लेटोऽडाटौ " ( पा ३.४.९४ ) इत्यडागमः । तुजादित्वाभावे, अजादेरभावात् " अभ्यस्तानामादिः " ( पा ६.१.१८९ ) इत्याद्युदात्तत्वाभावः । " अच्यनिटि " ( पा ६.१.१८८ ) इत्यत्र हि " ङित्यजादौ " ( द्र. काशिका-पा ६.१.१८८ वा ) इत्युक्तम् । " अनुदात्ते च " ( पा ६.१.१९० ) इति तर्हि प्राप्नोति । " छन्दस्युभयथा " ( पा ३.४.११७ ) इत्यार्धधातुकत्वात् न भविष्यतीत्यदोषः । यद्वा—चुरादिण्यन्तात् " छन्दसि लुङ्लङ्लिटः " ( पा ३.४.६ ) इति लुङ्चङादि, वर्णव्यत्ययेन अभ्यासस्य आकारः, " चङ्यन्यतरस्याम् " ( पा ६.१.२१८ ) इत्युपोत्तमस्योदात्तत्वम् ॥

तत्रैव याज्या—' तमग्ने पृतनासहम् ' इत्यनुष्टुप् ॥ हे अग्ने, सहस्वः महाबल । " मतुवसोः " ( पा ८.३.१ ) इति रुत्वम् । पृतनासहं सर्वशत्रुसेनाभिभवनसमर्थं तत्र पर्याप्तं रयिं धनम् आ भर आहर । पूर्ववद्भत्वम् ( पा ८.२.३२ वा १ ) । सहेः क्विप् ( पा ३.२.७६ ), कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६.२.१३९ ) । यस्मात् त्वम् एव सत्यः अवितथः अद्भुतः आश्चर्यभूतः वाजस्य अन्नस्य दाता गोमतः गोसहितस्य[46] वाजस्य दातेत्यर्थः । तस्मात् तादृशमन्नमस्मभ्यं देहि येन वयं शत्रूनभिभविष्याम इति ॥

४२. मै–प्रहसनेन । ४३. तं–वाचयितुम् । ४४. तं.ति–अभिभवेत् । ४५. तं.ति.पं–' आह ' इत्यस्यानन्तरम् ' अभिभवितुम् ' । ४६. तं.ति.पं–गवां च ।

उ॒क्षान्ना॑य व॒शान्ना॑य॒ सोम॑पृष्ठाय वे॒धसे॑ । स्तोमै॑र्विधेमा॒ग्नये॑ ॥

उ॒क्षान्ना॒येत्यु॒क्ष-अ॒न्ना॒य । व॒शान्ना॒येति॑ व॒शा-अ॒न्ना॒य । सोम॑पृष्ठा॒येति॒ सोम॑-पृ॒ष्ठा॒य । वे॒धसे॑ । स्तोमै॑ । वि॒धे॒म । अ॒ग्नये॑ ॥

" अग्नयेऽन्नवते पुरोडाशमष्टाकपालं निर्वपेद् कामयेतान्नवान्त्स्याम् " ( तैस २ २ ४ ) इत्यस्य पुरोनुवाक्या—' उक्षान्नाय ' इति गायत्री ॥ उक्षा अन्नं यस्य तस्मै । एवं <sup>v</sup>वशान्नाय । <sup>v</sup>सोमपृष्ठाय सोमे हविषि स्थितानि पृष्ठानि स्तोत्राणि यस्य स सोमपृष्ठ , पृष्ठस्तोत्रेण सोमेना- राध्यत इत्यर्थ । व्यधिकरणो बहुव्रीहि । मत्वर्थीयो वाऽकार. ( पा ५ २ १२७ ), सोमवन्ति पृष्ठानि यस्येति । <sup>v</sup>वेधसे विधात्रे मेधाविने । उन्प्रत्ययादित्वादन्तोदात्तत्वम् ( पा ६ १ १६० )। ईदृशाय <sup>v</sup>अग्नये तुभ्य <sup>v</sup>स्तोमै स्तोत्रै <sup>v</sup>विधेम परिचरेम, एवंगुणकं त्वा परिचरेम[२४] इत्यर्थ । विध विधाने तौदादिक । " क्रियाग्रहणं कर्तव्यम् " ( द्र पाभा १ ४ ३२ ) इति सम्प्रदान- त्वाद् चतुर्थी । द्वितीयार्थे वा विभक्तिव्यत्ययेन । एवमस्माभि स्तुतस्त्वं यजमानमन्नवन्त कुरु । " स एवैनमन्नवन्तं करोत्यन्नवानेव भवति " ( तैस २.२.४ ) इति ब्राह्मणम् ॥

तमिति ॥ अथ याज्या—' तमग्ने पृतनासहं रयिं सहस्व आ भर । त्वं हि सत्यो अद्भुतो दाता वाजस्य गोमत ' इति ॥ [२५]"हे <sup>v</sup>सहस्व महाबलेन <sup>v</sup>अग्ने[२५]", <sup>v</sup>त <sup>v</sup>पृतनासह परकीयसेना- भिभवक्षम <sup>v</sup>रयिं धनम् <sup>v</sup>आ <sup>v</sup>भर आहर । <sup>v</sup>हि यस्मात् <sup>v</sup>त्व <sup>v</sup>सत्य परमार्थभूतो बाधरहित <sup>v</sup>अद्भुत आश्चर्यचरित्रस्तस्मात् <sup>v</sup>गोमत बहुगोयुक्तस्य <sup>v</sup>वाजस्य अन्नस्य <sup>v</sup>दाता त्वमेव ॥

इष्ट्यन्तर विधत्ते—" अग्नयेऽन्नवते पुरोडाशमष्टाकपालं निर्वपेद् कामयेतान्नवान्स्यामित्यग्नि- मेवान्नवन्त स्वेन भागधेयेनोप धावति स एवैनमन्नवन्त करोत्यन्नवानेव भवति " ( तैस २ २ ४ ) इति ॥ अन्नवते चह्वग्नयुक्ताय ॥

उक्षान्नायेति ॥ तत्र पुरोनुवाक्या—' उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे । स्तोमैर्विधे- माग्नये ' इति ॥ <sup>v</sup>अग्नये <sup>v</sup>स्तोमै स्तोत्रै <sup>v</sup>विधेम परिचर्यां कुर्याम । कीदृशाय ? <sup>v</sup>उक्षान्नाय <sup>v</sup>वशान्नाय [२६] उक्षा वृषभ , वशा वन्ध्या । तयोरुभयं क्वचिद्यागे हविष्ट्वेन श्रूयते—" यो भ्रातृव्यवान्त्स्यात् स स्पर्धमानो वैष्णावरुणीं वशामा लभेतैन्द्रमुक्षाणम् " ( तैस २.१ ४ ) इति । यद्यप्यत्र देवतान्या तथापि हविर्भावेन श्रूयत इत्यग्निरुक्षान्नो वशान्नश्च । एतद्वचान्तरस्याप्युपलक्षणम् [२७] । सोमयुक्तानि पृष्ठस्तोत्राणि यस्यासौ सोमपृष्ठ । अनेकस्तोत्रसङ्घभूदेवतासमयुक्त सोमोऽप्यस्यान्नमित्यर्थ । <sup>v</sup>वेधसे अन्नस्य विधात्रे ॥

२४ त-स्तुमेम, ति-स्तुम ।

२५-२५ आ-हेऽग्ने [ सहसा बलेन ] तम्, ड पा-हे अग्ने तम, हा-हे अग्ने त शत्रुम् अभिभवन्त, च-हे अग्ने त शत्रु सहस्व अभिभवस्व । २६ इ उ न पा मा म र हा-' वशान्नाय ' नास्ति । २७ आ हा-°पलक्षणार्थम् ।

वव्रा हि सूनो अस्यद्मसद्वा चक्रे अग्निर्जनुषाज्मान्नम् ।
स त्वं न ऊर्जसन ऊर्जं धा राजेव जेरवृके क्षेष्यन्तः ॥

वव्रा । हि । सूनो इति । असि । अद्मसद्वेत्यद्म–सद्वा । चक्रे । अग्निः । जनुषा । अज्म । अन्नम् ।
सः । त्वम् । नः । ऊर्जसन इत्यूर्ज–सने । ऊर्जम् । धाः ।
राजा । इव । जेः । अवृके । क्षेषि । अन्तः ॥ ५

तत्रैव याज्या— 'वव्रा हि' इति त्रिष्टुप् ॥ हे ^v^सूनो पुत्र । कस्य ? सहसः यजमानस्य वा । यद्वा—पुत्रवत् सर्वेषामभिमतकारिन् । सूनुवत् सूनुः[48] उपचारपदं वा । अथवा सोता सूनुः सर्वस्योत्पादकः । सूतेः "सुवः कित्" (उ ३२२) इति नुप्रत्ययः । स त्वं ^v^वव्रा ^v^असि, वदत्यनयेति वव्रा वाक्, त्वं वागिन्द्रियम् । तस्यापि कारणं प्राणो वा, त्वया हि सर्वे वदन्ति । असीत्यस्य "हि च" (पा ८·१·३४) इति निघातप्रतिषेधः । १० वव्राशब्द उञ्छादिषु द्रष्टव्यः । पुनश्चाग्निर्विशेष्यते—^v^अद्मसद्वा । अद्यत इत्यद्म अन्नम् । अदेर्मनिन्प्रत्ययः (पा ३·२·७५) । अद्मनि [49]सीदतीत्यद्मसद्वा । "अन्येभ्योऽपि दृश्यन्ते" (पा ३·२·७५) इति सदेर्वनिप् । कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६·२·१३९)। "सोऽग्रभुग्विभजन्तिष्ठन्नाहारमजरः कविः" (तैआ १०·११) इति जन्तूनां स्थितिहेतुत्वेन [50]प्रवर्तक इत्यर्थः । यद्वा—हवीरूपेऽन्ने प्राणिनां स्थित्यर्थमेव त्वं सीदसीति ॥ यस्मादेवमत १५ एव खलु अग्निः भगवान् ^v^जनुषा जन्मना जायमान एव ^v^अन्नं ^v^चक्रे उत्पादितवान् । मध्यमस्य वा प्रथमव्यत्ययः । "जनेरुसिः" (उ २८०) इत्युसिप्रत्ययः । कीदृशमन्नम् ? ^v^अज्म अजन्त्येतत् सर्वेऽपि भोक्तृत्वेन इत्यज्म, सर्वाभिलषितमित्यर्थः । अजेर्मनिन् (पा ३·२·७५) । "वलादावार्धधातुके वेष्यते" (द्र.पा १·१·२१ वा ८) इति वीभावाभावः । यस्मादेवं त्वं सर्वेषां प्राणभृतोऽसि प्राणस्य च स्थित्यर्थमन्नमुत्पादितवान् तस्माद् स तादृग्विधः ^v^त्वं ^v^नः अस्मभ्यम् २० ^v^ऊर्जम् [51]अन्नं रसं[51] वा ^v^धाः देहि । दधातेर्लेटि "बहुलं छन्दसि" (पा २·४·७३, ७६) इति शपो लुक् । हे ^v^ऊर्जसने ऊर्जसोऽन्नस्य दाता संभक्ता वा । "छन्दसि वनसन°" (पा ३·२·२७) इत्यादिना इन्प्रत्ययः । पृषोदरादित्वात् व्यञ्जनस्य लोपः (पा ६·३·१०९) । यद्वा—ऊर्जा रसेन तद्वतां रसवताम् अन्नादीनां दातः । ऊर्क्शब्दात् मत्वर्थीयोऽकारः (पा ५·२·१२७) । पुनरपि प्रार्थितस्य शीघ्रप्रदानार्थं प्ररोचयन् स्तौति—हे अग्ने, ^v^राजा ^v^इव ^v^जेः, २५ यथा राजा [52]संनिधिमात्रेणानायासेन शत्रुं[52] जयत्येवं त्वं [53]शत्रुं जयसि । जयतेर्लेटि पूर्ववच्छपो लुक्

४८. तं–'सूनुः' इत्यस्यानन्तरम् 'अथ' । ४९. मै–सीदन्तीत्य° । ५०. तं.ति–वर्तसे । ५१–५१. तं.ति–ऊर्जितमन्नमन्नरसम् । ५२–५२. तं–संनिधिमात्रतो नैव आयासेन शत्रून्; ति–संनिधिमात्रेण नैव आयासेन शत्रून् । ५३. तं.ति–शत्रून् ।

( पा २ ४ ७३ )। किंच अवृके, वृका हिंसका कामक्रोधादय, तद्रहिते पुरुषे [54]स्वाम-निरते अन्त मध्ये तदीये हृदये क्षेषि क्षयसि निवससि तमनुग्रहीतुम्। क्षि निवासगत्यो । पूर्ववच्छपो लुक् ( पा २ ४ ७२ )। स त्व यजमानमननुग्रत कुर्विति ॥

वश्चेति ॥ अथ याज्या—' वशा हि सूनो अस्यद्मसद्वा चक्रे अग्निर्जनुषाऽज्मान्नम्। स त्व न ऊर्जसन ऊर्जं धा राजेव जेरवृके क्षेष्यन्त ' इति ॥ हे सूनो पुत्रवदभिमतकारिन् अग्ने, [■] वशा असि वदुत्वनयेति वशा वाक् तदभिमानिदेवत्वेन तद्रूपोऽसि। अस्मिन्नर्थे श्रुत्यन्तरप्रसिद्धिद्योतनाय हिशब्द । " अग्निर्वाग्भूत्वा मुख प्राविशत् " ( ऐउ १ २ ४ ) इति श्रुत्यन्तरम्। स अग्नि अस्मदर्थम् [28]अज्मम् अज्म च चक्रे [28]। अज्म गृहम्, [29]तन्नामसु पाठात् ( निघण्टु ३ ४ २२ )। विवाहाग्निर्जायमान एव गृहा धर्मं कारयति [29]। कीदृशोऽग्नि [?] अद्मसद्वा, अद्यत इत्यद्मान्न, तस्मिन्नग्नौ [30] सीदतीत्यद्मसद्वा, भुक्तमन्न जरयितु जठराग्निरूपेणात्र [31] सीदति। केन व्यापारेणाज्मम् [32] च चक्रे। जनुषा जन्ममात्रेण न तु व्यापारान्तरेण। न हि सकल्पसिद्धस्य व्यापारापेक्षाऽस्ति[33]। हे ऊर्जसने रसप्रद, त्व न अस्मभ्यम् ऊर्जं रस धा धेहि[35]। राजा इव जे राजा यथा जयति तद्वज्जय। वृकवद्धिंसको[36] वृक । अवृके हिंसादिदोषरहिते [37]यजमाने त्वमनुग्रहीतुम्[37] अन्त क्षेषि निवससि ॥

इष्ट्यन्तरे[38] विधत्ते—" अग्नयेऽन्नादाय पुरोडाशमष्टाकपाल निर्वपेद्य कामयेतान्नाद स्यामित्यग्निमेवान्नाद स्वेन भागधेयेनोप धावति स एवैनमन्नाद करोत्यन्नाद एव भवति। अग्नयेऽन्नपतये पुरोडाशमष्टाकपाल निर्वपेद्य कामयेतान्नपति स्यामित्यग्निमेवान्नपति स्वेन भागधेयेनोप धावति स एवैनमन्नपतिं करोत्यन्नपतिरेव भवति " ( तैस २ २ ४ ) इति। अन्नमत्तीत्यन्नादस्तीव्रदीपनयुक्त । अन्नपतिर्बह्वन्नस्वामी। अनयोरपीष्ट्योरुक्तमात्रलिङ्गसाधारण्यान्येव [39]याज्यापुरोनुवाक्यायुगल [39] द्रष्टव्यम्। यद्वा शाखान्तरेऽन्नादलिङ्गकमन्नपतिलिङ्गक चान्वेषणीयम् ॥ इष्ट्यन्तर हविस्त्रयोपेत विधत्ते—" अग्नये पवमानाय पुरोडाशमष्टाकपाल निर्वपेदग्नये पावकायाग्नये शुचये ज्योगामयावी यदग्नये पवमानाय निर्वपति प्राणमेवास्मिन् तेन दधाति यदग्नये पावकाय वाचमेवास्मिन् तेन दधाति यदग्नये शुचय आयुरेवास्मिन् तेन दधात्युत यदीतासुर्भवति जीवत्येव " ( तैस २ २ ४ ) इति। पवमानाय पापाना शोधयित्रे, पावकाय पापाना शुद्धिहेतवे, शुचये औज्ज्वल्यहेतवे। द्वितीयतृतीयवाक्ययोरपि ' पुरोडाशमष्टाकपाल निर्वपेत् ' इत्यनुवर्तते। ज्योगामयावी दीर्घरोगयुक्त । तथापि च यद्यपीतासुर्गतप्राणो भवेत् तथापि जीवत्येव। तत्र नीरोगो भवतीति किमु वक्तव्यम् ॥

पुनरपि तामेवेष्टिं फलान्तराय विधत्ते—" एतामेव निर्वपेच्चक्षुष्कामो यदग्नये पवमानाय निर्वपति प्राणमेवास्मिन् तेन दधाति यदग्नये पावकाय वाचमेवास्मिन् तेन दधाति यदग्नये शुचये चक्षुरेवास्मिन् तेन दधात्युत यद्यन्धो भवति प्रैव पश्यति " ( तैस २ २ ४ ) इति ॥

५४ त ति—स्वधर्मनिरते।

२८–२८ इ उ त पा मर२—अज्म चक्रे, क—अज्मम् अज्म गृह चक्रे, हा—अज्मम्। २९–२९ इ उ त पा मा मर२—' तन्नामसु कारयति ' नास्ति। ३० आ हा—तस्मिन्। ३१ [■] मर२—तत्र। ३२ इ त पा मा मर२— अज्म ' नास्ति। ३३ मा—व्यापारोऽस्ति। ३४ इ उ पा मा मर२—हे रसप्रद। ३५ आ मर२—हा—देहि। ३६ [■] मर२—वृकवद्धिंसक। ३७–३७ इ उ पा मा मर२—यजमाने तमनुग्रहीतुम्, त—यजमानमनुग्रहीतुम्। ३८ आ हा—इष्ट्यन्तरम्, मर२—द्वे इष्ट्यन्तरम्। ३९ मर२—'युगले, इ उ—याज्यानुवाक्या'।

काम्येष्टियाज्यापुरोनुवाक्याः ]

अग्न॒ आयूं॑ᳪषि ( ७ ) पवस॒ आ सु॒वोर्ज॒मिषं॑ च नः । आ॒रे बा॑धस्व दु॒च्छुना॑म् ॥

अग्ने॒ पव॑स्व॒ स्वपा॑ अ॒स्मे वर्चः॑ सु॒वीर्य॑म् । द॒धत् पोषᳪ॑ र॒यिं मयि॑ ॥

अग्ने॑ । आयूᳪ॑षि ( ७ ) । प॒व॒से॒ । एति॑ । सु॒व॒ । ऊर्ज॑म् । इष॑म् । च॒ । न॒ः ।

आ॒रे । बा॒ध॒स्व॒ । दु॒च्छुना॑म् ॥

अग्ने॑ । पव॑स्व । स्व॒पा इति॑ सु—अपाः॑ । अ॒स्मे इति॑ । वर्चः॑ । सु॒वीर्य॒मिति॑ सु—वीर्य॑म् । ५

दध॑त् । पोष॑म् । र॒यिम् । मयि॑ ॥

" अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचये ज्योगामयावी " ( तैसं २·२·४ ) इत्यस्ति त्रिहविष्केष्टिः । तत्र ' अग्नये पवमानाय ' इत्यस्य पुरोनुवाक्या—' अग्न आयूंषि ' इति गायत्री ॥ हे [V]अग्ने, [V]आयूंषि जीवनान्यन्नानि वास्मदीयानि त्वं खलु [V]पवसे शोधयसि, यथा वर्धन्ते यथा वा न क्षीयन्ते । अत [V]ऊर्ज रसं क्षीरादिकम् १० [V]इषम् अन्नं [V]च अस्मभ्यम् [V]आ [V]सुव आभिमुख्येन सुव प्रेरय उत्पादयेत्यर्थः । [V]आरे दूरे नीत्वा [V]बाधस्व बाधय नाशय [V]दुच्छुनाम् उपद्रवं ज्योगामयावित्वलक्षणम् । " उत यदीतासुर्भवति जीवत्येव " ( तैसं २·२·४ ) इति ब्राह्मणम् ॥

तत्रैव याज्या—' अग्ने पवस्व ' इति गायत्री ॥ हे [V]अग्ने, स त्वं [V]पवस्व [V]स्वपाः शोभनकर्मा । " सोर्मनसी अलोमोषसी " ( पा ६·२·११७ ) इत्युत्तरपदाद्युदात्तत्वम् । [V]अस्मे १५ अस्मभ्यम् । " सुपां सुलुक् " ( पा ७·१·३९ ) इति ' शे ' आदेशः । [V]वर्चः बलं [V]सुवीर्यं शोभनवीर्ययुक्तं पवस्व शोधय वर्धय । " वीरवीर्यौ च " ( पा ६·२·१२० ) इत्युत्तरपदाद्युदात्तत्वम् । अग्ने इत्यस्याविद्यमानवत्त्वात् ( पा ८·१·७२ ) पवस्वेति न निहन्यते । किं कुर्वन्नित्याह—[V]पोषं पुष्टिं [V]रयिं धनं च [V]मयि [V]दधत् धारयन् स्थापयन् वर्चो मे धेहीति । " अभ्यस्तानामादिः " ( पा ६·१·१८९ ) इत्याद्युदात्तत्वम् । " यदग्नये पवमानाय निर्वपति २० पुनात्येवैनम् " ( तैसं २·२·४ ) इति ब्राह्मणम् ॥

अग्न इति ॥ तत्र फलभेदेन द्विविधायामस्यामिष्टौ प्रथमहविषः पुरोनुवाक्या—' अग्न आयूᳪषि पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ' इति ॥ हे [V]अग्ने, [V]आयूंषि अस्मदीयजीवनानि [V]पवसे यथा वर्धन्ते तथा शोधयसे । [V]ऊर्जं क्षीरादिरसम् [V]इषम् अन्नं च [V]नः अस्माकम् [V]आ [V]सुव आभिमुख्येन प्रेरय । [V]दुच्छुनाम् उपद्रवम् [V]आरे दूरे नीत्वा [V]बाधस्व विनाशय ॥ २५

अग्ने पवस्वेति ॥ अथ याज्या—' अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधत् पोषᳪ रयिं मयि ' इति ॥ हे [V]अग्ने, शोभनमपः कर्म यस्यासौ [V]स्वपाः, तादृशस्त्वम् [V]अस्मे अस्मदीयं [V]वर्चः ब्रह्मवर्चसं [V]सुवीर्यं शोभनं सामर्थ्यं च [V]पवस्व शोधयस्व[40] वर्धयेत्यर्थः । पुष्टिं [V]रयिं [41]धनं च [V]मयि [V]दधत् स्थापय ॥

४०. तं.मर–शोधय । ४१. इ.उ.पा.भां.हा–' धनम् ' नास्ति । ३०

अग्नें पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् वक्षि यक्षि च ॥
स नः पावक दीदिवोऽग्ने देवाꣳ इहा वह । उप यज्ञꣳ हविश्च नः ॥
अग्ने । पावक । रोचिषा । मन्द्रया । देव । जिह्वया । एति । देवान् । वक्षि । यक्षि । च ॥
स । न । पावक । दीदिव । अग्ने । देवान् । इह । एति । वह ।
५ उपेति । यज्ञम् । हवि । च । न ॥

---

'अग्नये पावकाय' इत्यस्य पुरोनुवाक्या—'अग्ने पावक' इति गायत्री ॥ हे ᵛअग्ने ᵛपावक शोधक । "नामन्त्रिते समानाधिकरणे" ( पा ८ १ ७३ ) इति पूर्वस्याविद्यमानवत्त्वनिषेधात् परमामन्त्रित निहन्यते । ᵛरोचिषा रोचनशीलया ᵛमन्द्रया श्लक्ष्णया मदनशीलया वा, हे ᵛदेव, ᵛजिह्वया त्वदीयया वाचा वा ᵛदेवान् ᵛआ ᵛवक्षि आवह आह्वय ᵛयक्षि ᵛच यज च । उभय-
१० त्रापि लेटि "बहुल छन्दसि" ( पा २ ४ ७३ ) इति शपो लुक् । तिङ परत्वात् ( पा ८ १ २८ ) यक्षीति न निहन्यते । "चादिषु च" ( पा ८.१ ५८ ) इति द्वितीया तिङ्-विभक्तिर्न निहन्यते । इष्ट्वा च देवान् यजमानस्य अभिमत रस सपादयेति भाव । "घृत एवास्मिन्नन्नाद्य दधाति" ( तैस २ २ ४ ) इति च ब्राह्मणम् ।

तत्रैव याज्या—'स नः पावक' इति गायत्री ॥ हे ᵛअग्ने ᵛपावक शोधक, ᵛदीदिव'
१५ दीप्यमान । "छन्दसि लुङ्लङ्लिट·" ( पा ३ ४ ६ ) इति दिवेर्लिट् । "क्वसुश्च" ( पा ३ २ १०७ ) इति ⁵⁵क्वसुरादेश. । "वस्वेकाजाद्घसाम्" ( पा ७ २ ६७ ) इति नियमा-दिडभाव । वलि लोप ( पा ६ १ ६६ )। तुजादित्वादभ्यासस्य दीर्घ ( पा ६ १ ७ ) "उगिदचाम्" ( पा ७ १ ७० ) इति नुम् । "मतुवसो" ( पा ८ ३ १ ) इति रुत्वम् ।

---

अग्ने पावकेति ॥ द्वितीयस्य हविष. पुरोनुवाक्या—'अग्ने पावक रोचिषा मन्द्रया देव
२० जिह्वया । आ देवान् वक्षि यक्षि च' इति ॥ हे ᵛअग्ने ᵛपावक शोधक ᵛदेव द्योतनात्मक, ᵛरोचिषा दीप्तिमत्या ᵛमन्द्रया श्लक्ष्णया ᵛजिह्वया वाचा ᵛदेवान् ᵛआ ᵛवक्षि ᵛयक्षि आवह यज ᵛच ॥

स इति ॥ अथ याज्या—'स न पावक दीदिवोऽग्ने देवाꣳ इहा वह । उप यज्ञꣳ हविश्च न' इति ॥ हे ᵛपावक शोधक ᵛदीदिव दीप्यमान ᵛअग्ने, ᵛन. अस्मदर्थम ᵛदेवान् ᵛइह कर्मणि ᵛआ ᵛवह । अस्माकमिमं ᵛयज्ञं ᵛहविश्च ᵛउप देवसमीपे प्रापय ॥

---

२५ ५५. त ति–क्वसादेश ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

अ॒ग्निः शुचि॑व्रततमः॒ शुचि॒र्विप्रः॒ शुचिः॑ ( ८ ) क॒विः । शुची॑ रोचत॒ आहु॑तः ॥
उद॑ग्ने॒ शुच॑यस्तव॒ शुक्रा॒ भ्राज॑न्त ईरते । तव॒ ज्योतीं॑ष्य॒र्चयः॑ ॥ १४ ॥

[ पु॒रु॒निष्ठः॑ पुर्वणीक म॒राऽभि॒ वयो॑भि॒र्ये आयूँ॑षि॒ विप्रः॒ शुचि॒श्च॒तुर्द॑श च ]

अ॒ग्निः । शुचि॑व्रततम॒ इति॒ शुचि॑व्रत–त॒मः । शुचिः॑ । विप्रः॑ । शुचिः॑ । क॒विः ।
शुचिः॑ । रो॒च॒ते॒ । आहु॑त॒ इत्या–हु॒तः ॥

उदिति॑ । अग्ने॒ । शुच॑यः । तव॑ । शु॒क्राः । भ्राज॑न्तः । ई॒र॒ते॒ । तव॑ । ज्योतीं॑षि । अ॒र्चयः॑ ॥ १४ ॥

[ दे॒वस्य॑ र॒क्षो॒हणौ॒ वि॒भूस्त्वँ॒ सो॒मात्य॒न्यान॒र्गौ पृ॒थि॒व्या इ॒षे त्वाऽऽ द॑दे॒ वाक्ते॒ सं ते॑ स॒मु॒द्रँ ह॒वि॒ष्मती॑र्हृ॒दे त्वम॑ग्ने रु॒द्रश्च॒तुर्द॑श ]

[ दे॒वस्य॑ ग॒मध्ये॑ ह॒वि॒ष्मतीः॒ पव॑स्व॒ एक॑त्रिँशत् ] [ दे॒वस्या॒र्चयः॑ ]

सः त्वं नः अस्माकम् इह अस्मिन् कर्मणि देवान् आ वह । आहूय च नः अस्माकमिमं यज्ञं च हविः च उप आवह देवेभ्य उपहर देवान् प्रापयेत्यर्थः । ‘ देवान् ’ इत्यस्य नकारस्य संहितायां पूर्ववद्रुत्वानुनासिकानुस्वाराः ( पा ८·३·३ , ९ ) ॥

" अग्नये शुचये " ( तैसं २·२·४ ) इत्यस्य पुरोनुवाक्या—‘ अग्निः शुचिव्रततमः ’ इति गायत्री ॥ अयम् अग्निः स्वयमेव तावत् शुचिव्रततमः शुद्धकर्मतमः शुद्धात्मतमो वा । अग्नित्वादेव सर्वमेतत्संबन्धि शुद्धमित्यर्थः । किंच—यस्मादयं विप्रः मेधावी ब्राह्मणो वा ततोऽपि शुचिः शुद्धः, तदस्य द्वितीयं शुद्धिकारणमित्यर्थः । किंच—यतश्चायं कविः क्रान्तदर्शनः वशीकृतवाङ्मयो वा ततश्च शुचिः शुद्धः, तृतीयमिदं शुद्धिकारणम् । अथ चतुर्थमुच्यते—यस्मादयम् आहुतः मर्यादया[56] शास्त्रोक्तविधिना हुतस्ततोऽपि हेतोरिदानीं शुचिः भूत्वा रोचते । " गतिरनन्तरः " ( पा ६·२·४९ ) इति पूर्वपदप्रकृतिस्वरत्वम् ॥

तत्रैव याज्या—‘ उदग्ने ’ इति गायत्री ॥ हे अग्ने, तव शुक्राः तेजोविशेषाः

अग्निरिति ॥ [42]तृतीयस्य हविषः पुरोनुवाक्या—‘ अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः । शुची रोचत आहुतः ’ इति ॥ अयम् अग्निः प्रथमं तावत् शुचिव्रततमः स्वत एव शुचिव्रततमोऽतिशयेन शुद्धं व्रतमाचरणं दाहपाकप्रकाशरूपं यस्यासौ तादृशः । [43]तत ऊर्ध्वं विद्वदभिमानित्वादपि शुचिः । तत ऊर्ध्वं विद्वदभिमानित्वेन शुचिः । ततोऽप्यूर्ध्वमाभिमुख्येन हुतः शुचिः दीप्तिमान् रोचते शोभते ॥

उदिति ॥ अथ याज्या—‘ उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतींष्यर्चयः ’ इति ॥ हे अग्ने, शुचयः शुद्धाः तव शुक्राः रश्मयः भ्राजन्तः प्रकाशमानाः उत् ईरते उद्गच्छन्ति । [44]तव अर्चयः पूजकाः ज्योतींषि भासकानि देवतारूपाणि प्राप्नुवन्ति ॥

५६. तं.ति–मर्यादातः ।

४२ इ.उ.पा.भां.हा–तृतीय° । ४३. तं.म२–ततोऽपि । ४४. आ.क.–तथा ; इ.उ.पा.भां.हा–‘ तव ’ नास्ति ।

तैसं ३२॥

शुचयः शुद्धाः भ्राजन्तः दीप्यमानाः । व्यत्ययेन परस्मैपदम् ( पा ३ १ ८५ ) । उत् ईरते उद्गच्छन्ति । ईर गतौ आदादिक अनुदात्तेत् । "आत्मनेपदेष्वनतः" ( पा ७ १ ५ ) इत्यदादेशः । किंच तव एव स्वभूतानि सर्वाणि आदित्यादीनि[५७] ज्योतींषि अर्चयः अर्चिषश्च त्वदीया एव । यद्वा—तवार्चयः अर्चयितारः यागादिभिराराधयितारः ज्योतींषि भवन्ति ज्योतीरूपाः संपद्यन्ते । अर्चेर्ण्यन्तात् ( पा ३ १ २६ ) "अच इः" ( उ ५८८ ) इतीः प्रत्ययः । यत एवं महाप्रभावस्त्वं तस्मादस्मदभिमतं शीघ्रं संपादयेति भावः ॥

॥ इति[५८] तृतीये चतुर्दशोऽनुवाकः ॥

इति भट्टभास्करमिश्रविरचिते ज्ञानयज्ञाख्ये यजुर्वेदभाष्ये प्रथमकाण्डे तृतीयः प्रपाठकः ॥

अत्र विनियोगसंग्रहः—

"एवं याज्या रुद्रवत्यो ह्यग्ने सुरभिसंयुते ॥
अग्नन् क्षामयुजे तुभ्यं कामिनि श्रेष्ठमित्यसौ ॥ १ ॥
यविष्ठयुत आयुष्टे आयुष्मति तथोपरि ।
जातवेदयुते तस्मै शुची स्वमयुते तथा ॥ २ ॥
आ यत्तेजोयुते ह्यग्ने साहन्त्यगुणसंयुते ।
उक्षान्नसंयुते ह्यग्ने पवमानयुते तथा ॥
अग्ने पावकत्रयमिन शुचावर्णा च विंशतिः " ॥ ३ ॥ इति ॥

अत्र मीमांसा नास्ति ॥

अथ छन्दः ॥ 'त्वमग्ने रुद्रः' इत्याद्याः षट् । 'अश्याम तं', 'स प्रत्नवत्', 'आयुष्टे अग्ने', 'दिवस्परि', 'इधानो रुक्मः', 'आ यद्दिषे', 'स तेजीयसा', 'यथा हि सूनो', इति च त्रिष्टुभः । 'तुभ्य ता', 'श्रेष्ठं यविष्ठ', 'तस्मै ते', 'शुचि पावक', 'उक्षान्नाय,' इत्येताः 'अग्न आयूंषि' इत्यादयश्च पङ्गायत्र्यः । 'आयुष्टे', 'अग्ने सहन्तम्', 'तमग्ने पृतनासहम्' इत्येता अनुष्टुभः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठके चतुर्दशोऽनुवाकः ॥ १४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे तृतीयप्रपाठकः ॥ ३ ॥

५७ मे-तानि । ५८ ति मे-'इति' इत्यस्यानन्तरं 'यजुर्वेदाख्यस्य'

## ( अथ प्रथमकाण्डे चतुर्थः प्रपाठकः )

हरिः ॐ ॥ आ द॑दे ग्रावा॑स्यध्वर॒कृद्दे॒वेभ्यो॑ गम्भी॒रमि॒मम॑ध्व॒रं

एति॑ । द॒दे॒ । ग्रावा॑ । अ॒सि॒ । अ॒ध्व॒र॒कृदित्य॑ध्वर-कृत् । दे॒वेभ्यः॑ । ग॒म्भी॒रम् । इ॒मम् । अ॒ध्व॒रम् ।

अतः परं ग्रहकाण्ड सोमार्पयम् । उपांशुसवनं ग्रावाणमादत्ते—' आददे ' इति ॥ ग्रावाणमिति शेषः । " देवस्य त्वा " ( तैसं १·१·४ ) इति सावित्रः, अस्य शेषो व्याख्यात एव । " देवस्य त्वा सवितुः प्रसव इति ग्रावाणमा दत्ते प्रसूत्यै " ( तैसं ६·४·४ ) इत्यादि ब्राह्मणम् । " पशवो वै सोमो व्यान उपांशुसवनः " ( तैसं ६·४·४ ) इत्यादि च ।

तमभिमन्त्रयते—' ग्रावासि ' इति त्रिष्टुभा पञ्चपदया ॥ यथोक्तं—" चतुर्भिरष्टाक्षरैः द्वादशाक्षरेण चैकेन त्रिष्टुप् " ( द्र. ऋप्रा १६·४·८ ) इति । हे उपांशुसवन, अध्वरकृत् अध्वरस्य यज्ञस्य[1] कर्ता अभिषवद्वारेण संपादयिता ग्रावा त्वम् असि । एवं नाम प्रशस्तोऽसि । यद्वा—अध्वरकृत्त्वात् स्तोतव्यस्त्वमसि । गृणातेः स्तुतिकर्मणः " अन्येभ्योऽपि दृश्यन्ते " ( पा ३·२·७५ ) इति क्वनिप् । आडागमः इत्वाभावश्च दृशिग्रहणात् । गिरतेर्वा, गिरति सोममभिषवकाल इति । स त्वं देवेभ्यः देवार्थम् । षष्ठ्यर्थे वा चतुर्थी ( पा २·३·६२ वा १ ) । देवानां संबन्धिनं गम्भीरं गहनम् इमं प्रस्तुतम् अध्वरं कृधि

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

तृतीयप्रपाठके प्राधान्येनाग्नीषोमीयपशुः प्रतिपादितः । [1]तत ऊर्ध्वं[1] वसतीवरीग्रहणं चोक्तम् । तावता सुत्यादिवसात् पूर्वदिवसेषु यत् कर्तव्यं तत् समाप्तम् । तत उपरितनेनानुवाकेन सुत्यादिवस-कर्तव्यप्रारम्भाय सोमोपावहरणमुक्तम् । अथ चतुर्थप्रपाठके सुत्यादिने कर्तव्या ग्रहाः प्राधान्येन प्रति-पाद्यन्ते । तत्रानुवाकार्था विनियोगसंग्रहे दर्शिताः—

" ग्रहप्रश्नेऽनुवाकास्तु चत्वारिंशद्विहोदिताः
सोमाभिषव एकस्मिन् पञ्चत्रिंशत्सु तद्ग्रहाः ॥ १ ॥
[2]दाक्षिणानि समिष्टाख्ययजुंष्यवभृथस्तथा ।
काम्ययाज्या इति प्रोक्ता [3]अर्था अत्रानुवाकगाः[3] " ॥ २ ॥ इति ॥

प्रथमानुवाके पात्रेषु [4]रसग्रहणाय पूर्वमुपावहृतस्य[4] सोमस्याभिषवोऽभिधीयते ।

आ दद इति ॥ कल्पः—" [5]अथैतेषां ग्राव्णां यः [6]सुजन्तुरिव तमादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादद इति । आदायाभिमन्त्रयते ग्रावास्यध्वरकृद्देवेभ्यो गम्भीरमिमम-ध्वरं कृध्युत्तमेन पविनेन्द्राय सोमꣳ सुषुतं मधुमन्तं पयस्वन्तं वृष्टिवनिमिति " ( बौश्रौ ७·५ ) इति ॥

१. च-यज्ञस्य कृत् । २. मै-अध्वरकृत्वात् ।

१-१. इ.उ.ना.पा.हा-तदूर्ध्वम्; म१-अत ऊर्ध्वम् । २. तं.म१.म५-दक्षिणानि । ३-३. म३-अर्थास्तत्रानुवाकगाः । ४-४. इ.उ.ना.पा.हा-ग्रहणाय पूर्वमुपहृतस्य । ५. आ.ना.हा-अथैषाम्; म५-अथ तेषाम् । ६. आ-सजन्तुरिव; क.ना.हा-सुतन्तुरिव ।

कृधि्युत्तमेन॑ प॒वित्रे॒णेन्द्रा॑य॒ सोम॑ꣳ सु॒षु॑तं॒ मधु॑मन्तं॒ पय॑स्वन्तं

कृ॒धि । उ॒त्त॒मेनेत्यु॑त्-त॒मेन॑ । प॒वित्रे॑ण । इन्द्रा॑य । सोम॑म् । सु॒षु॑त॒मिति॑ सु-सु॒तम् ।
मधु॑मन्त॒मिति॒ मधु॑-म॒न्तम् । पय॑स्वन्तम् ।

सपादय । करोतेर्लोटि " बहुलं छन्दसि " ( पा २·४·७३ ) इति शपो लुक् । " श्रुशृणुपृकृ-
५ वृभ्यश्छन्दसि " ( पा ६ ४ १०२ ) इति हेर्धिभाव. । पादादिरपि व्यत्ययेन निहन्यते
( पा ८ १ १८५ ) । तदर्थं किं क्रियतामित्यत आह—उत्तमेन उत्कृष्टेन पवित्रेण पावनेन
शोधनेन अभिषवात्मना त्वत्कर्तृकेण । इन्द्राय इन्द्रार्थं सोम सुषुत सुष्ठु अभिषुत कृधीत्य-
त्रापि संबध्यते । " गतिरनन्तर " ( पा ६ २ ४९ ) इति पूर्वपदप्रकृतिस्वरत्वम् । " उप-
सर्गात् सुनोति " ( पा ८ ३ ६५ ) इति षत्वम् । यद्वा—इन्द्राय इन्द्रस्य य पवि वज्र
१० उत्तम तेन सोम सुषुत कुरु । तेनैव खल्विद कृत भवति यत्त्वया नियत इति भाव । " अच
इ " ( उ ५८८ ) इति पवतेरिप्रत्यय । उत्तमशब्द उञ्छादिरन्तोदात्त ( पा ६·१ १६० ) ।
सोमो विशेष्यते—मधुमन्त मधुररसवन्त स्वादुभूत पयस्वन्त क्षीरवन्तम्, " पयसा श्रीणाति "
( तैस ६·४ ८ ) इति श्रवणात् । यद्वा—पय पिबते: प्यायतेर्वा ( निरुक्त २ ५ ) इति
निर्वचनात् सेचनवन्त वृद्धिमन्त वा । उभयत्राप्यसुनि ( उ ६३८ ) पीमान । वृष्टिवनिं याग-
१५ साधनद्वारेण वृष्टेर्दातार सभक्तार वा । " छन्दसि वनसन " ( पा ३ २ २७ ) इतीन्प्रत्यय ।
कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६·२·१३९ ) ॥

' आ ददे ' इत्याम्नातो मन्त्र ' देवस्य त्वा ' इत्यनेन पूरित । हे ग्रावन् अभिषवसाधन, त्व यज्ञ-
निष्पादको दृढ पाषाण असि । तत इम यज्ञ देवेभ्य देवार्थं गम्भीर गहन कुरु । उत्कृष्टेन
वज्रसदृशेन स्वधाऽऽह सोमम् इन्द्राय करोमि । कीदृश ? सुषुत सम्यगभिषुत मधुमन्त स्वादुरसोपेत
२० पयस्वन्त क्षीरवद्रसोपेत वृष्टिवनिम् आहुतिसूर्यद्वारा वृष्टिप्रदम् । तथा च स्मर्यते— " अग्नौ
प्रास्ताऽऽहुति सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्न तत प्रजा " ( मनु ३·७६ )
इति ॥ इन्द्रायैव सोम करोमि ॥ विधत्ते—" देवस्य त्वा सवितु प्रसव इति ग्रावाणमा दत्ते प्रसूत्यै
अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्ता पूष्णो हस्ताभ्यामित्याह यत्यै " ( तैसं ६·४ ४ )
इति । ' ग्रावाऽसि ' इति मन्त्र उपेक्षित ॥

२५ ३ मै-पवनेन । ४. मै-तत्कर्तृकेण । ५ मे-अभिमतम् । ६. व-सपद्यते । ७ त ति.
त्रि ब-वचनात् ।

७ म१.म३-' ग्रावन् ' नास्ति; ६ उ त पा म५-अग्ने । ८-८. इ उ त पा.म१ म३ म५-
' देवेभ्य ... गहनम् ' नास्ति, आ-देवार्थं गहनम् । ९ त म५-यज्ञसदृशेन । १० तै-' आहुति '
नास्ति ।

वृष्टिवनिमिन्द्राय त्वा वृत्रघ्न इन्द्राय त्वा वृत्रतुर इन्द्राय त्वाऽभिमातिघ्न इन्द्राय त्वाऽऽदित्यवत इन्द्राय त्वा विश्वदेव्यावते

वृष्टिवनिमिति वृष्टि-वनिम् । इन्द्राय । त्वा । वृत्रघ्न इति वृत्र-घ्ने । इन्द्राय । त्वा । वृत्रतुर इति वृत्र-तुरे । इन्द्राय । त्वा । अभिमातिघ्न इत्यभिमाति-घ्ने । इन्द्राय । त्वा । आदित्यवत इत्यादित्य-वते । इन्द्राय । त्वा । विश्वदेव्यावत इति विश्वदेव्य-वते । ५

तमभिमिमीते राजानम्—' इन्द्राय त्वा ' इति । इन्द्राय त्वा वृत्रघ्ने वृत्रमसुरं हतवते त्वा सोमं मिमे इति शेषः । " ब्रह्मभ्रूण " ( पा ३-२-८७ ) इति क्विप् । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् ( पा ६-१-१६१ ) ॥

द्वितीयं मिमीते—' इन्द्राय त्वा वृत्रतुरे ' इति । तुर त्वरणे । वृत्रं बाधितवत इत्यर्थः । " बहुलं छन्दसि " ( पा ३-२-८८ ) इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६-२-१३९ )॥ १०

तृतीयं मिमीते—" इन्द्राय त्वाऽभिमातिघ्ने ' इति ॥ अभिमातिः पाप्मा। पाप्मनां हन्त्रे । द्वितीयवत् प्रत्ययः ( पा ३-२-८८ ), प्रथमवत्स्वरः ( पा ६-१-१६१ ) ॥

चतुर्थं मिमीते—' इन्द्राय त्वा आदित्यवते ' इति ॥ आदित्यैस्तद्वते ॥

पञ्चमं मिमीते—' इन्द्राय त्वा विश्वदेव्यावते " इति ॥ विश्वे देवा एव विश्वदेव्याः । स्वार्थिको यत्प्रत्ययः । " मन्त्रे सोमाश्व " ( पा ६-३-१३१ ) इति दीर्घः । मरुद्वृधादित्वात् १५ पूर्वपदान्तोदात्तत्वम् ( पा ६-२-१०६ वा २ ) । यद्वा—देवार्ह देव्यम् । " छन्दसि च " ( पा ५-१-६७ ) इति यत्प्रत्ययः । देवेषु वा साधु देव्यम् ( पा ४-४-९८ ) । विश्वं देव्यं येषामिति विश्वदेव्याः देवविशेषाः, तद्वते । " बहुव्रीहौ विश्वं संज्ञायाम् " ( पा ६-२-१०६ ) इति पूर्वपदान्तोदात्तत्वम् । " इन्द्राय त्वेन्द्राय त्वेति मिमीते " ( तैसं ६-४-४ ) इत्यादि ब्राह्मणम् ॥

इन्द्रायेति ॥ कल्पः—" अथैनं प्राञ्चं प्रश्रित्य विस्रस्य राजानं ग्रावाणमुपांशुसवनमभि २० मिमीते इन्द्राय त्वा वृत्रघ्न इन्द्राय त्वा वृत्रतुर इन्द्राय त्वाऽभिमातिघ्न इन्द्राय त्वाऽऽदित्यवत इन्द्राय त्वा विश्वदेव्यावत इति " ( बौश्रौ ७-५ ) इति ॥ हे सोम, त्वामिन्द्रार्थं मिमे । कीदृशायेन्द्राय ? [11-]वृत्रघ्ने मेघविदारयित्रे वृत्रतुरे वृत्रासुरघातिने[11], अभिमातिघ्ने पापघातिने, आदित्यार्थं तृतीयसवने गृह्यमाणत्वात् आदित्यवते, प्रातःसवने विश्वान् देवानुद्दिश्य गृह्यमाणत्वात् विश्वदेव्यावते ॥ विधत्ते— " पशवो वै सोमो व्यान उपांशुसवनो यदुपांशुसवनमभि मिमीते व्यानमेव पशुषु दधाति " ( तैसं ६-४-४ ) इति। २५ पशुप्राप्तिहेतुत्वात् सोमस्य पशुत्वम् । " प्राणापानौ वा एतौ यदुपांश्वन्तर्यामौ व्यान उपांशुसवनः " ( तैसं ६-४-६ ) इति रूपकं वक्ष्यति । अतोऽस्य व्यानत्वम् । उपांशुनामकग्रहार्थं सोमः सूयते येन पाषाणेन स उपांशुसवनः । तमभिलक्ष्य सोमो मातव्यः ॥ सर्वमन्त्रेष्विन्द्रशब्दप्रयोगस्य तात्पर्यमाह— " इन्द्राय त्वेन्द्राय त्वेति मिमीत इन्द्राय हि सोम आह्रियते " ( तैसं ६-४-४ ) इति । सौमिकदेवेषु

८. मे-तस्य । ९. ति.त्रि-साध्यम् । ३०

११-११. ङ.ख.पा-वृत्रघ्ने असुरघातिने; तं.म१.म३.म५-वृत्रघ्ने असुरघातिने वृत्रतुरे शत्रुघातिने।

आत्राः स्थ वृत्रतुरो राधोगूर्ता अमृतस्य पत्नीस्ता देवीर्देवत्रेमं यज्ञं धत्तोपहूताः सोमस्य पिबतोपहूतो युष्माकः (१) सोमः पिबतु

आत्रा । स्थ ॥ वृत्रतुर इति वृत्र–तुरः । राधोगूर्ता इति राधः–गूर्ताः । अमृतस्य । पत्नीः । ताः । देवीः । देवत्रेति देव–त्रा । इमम् । यज्ञम् । धत्त । उपहूता इत्युप–हूताः । सोमस्य । पिबत । उपहूत इत्युप–हूतः । युष्माकम् (१) । सोमः । पिबतु ।

५

तं राजानं होतृचमसीयाभिरुपसृजति [10]सोमेऽनयति—' आत्रा स्थ ' इति ॥ [V]आत्राः [V]स्थ आशुत्रा स्थ आशु त्रायका स्थ, आशु वा अभिमतसंपादने वर्तमाना स्थ । यूय हे होतृचमसीया आपः । आशुपूर्वात् त्रायतेः " आतोऽनुपसर्गे कः " ( पा ३.२.३ ) । अततेर्वा आणादिकत्रप्रत्ययः ( उ ६१९ ) । कृदुत्तरपदप्रकृतिस्वरत्वम् ( ( पा ६.२.१३९ ) । [V]वृत्रतुरः वृत्रमसुरं बाधितवत्यः । [V]राधोगूर्ताः राधोऽन्नं सोमलक्षणं, तस्मिन् गूर्तमुद्योगो यासां ताः राधोगूर्ताः तत्संपादनायोद्युक्ता इत्यर्थः । गुरी उद्यमने । भावे निष्ठा ( पा १.१.२६ ) । " श्वीदितो निष्ठायाम् " ( पा ७.२.१४ ) इतीट्प्रतिषेधः । " हलि च " ( पा ८.२.७७ ) इति दीर्घः । " नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि " ( पा ८.२.६१ ) इति नत्वाभावः । [V]अमृतस्य मृतिरहितस्य सोमस्य, अमृतत्वस्य वा पत्न्यः पालयित्र्यः । " पत्युर्नो यज्ञसंयोगे " ( पा ४.१.३३ ) इति नकारः । [V]ताः [V]पत्नीः [11]पत्न्यः । " वा छन्दसि " ( पा ६.१.१०६ ) इति पूर्वसवर्णदीर्घत्वम् । या यूयमीदृश्यः [12]–स्थ, ताः–[12] हे [V]देवीः देव्यः देवनादिगुणयुक्ताः । पूर्ववद्दीर्घत्वम् ( पा ६.१.१०६ ) । [V]इमं [V]यज्ञं [V]देवत्रा देवेषु [V]धत्त स्थापयत । " देवमनुष्य " ( पा ५.४.५६ ) इति त्राप्रत्ययः । किंच [V]उपहूताः [13]देवैरभ्यनुज्ञाता यूयं [V]सोमस्य [V]पिबत[14] । क्रियाग्रहणेन संप्रदानत्वात् ( द्र पाभा १.४.३२ ) " चतुर्थ्यर्थे बहुलं छन्दसि " ( पा २.३.६२ ) इति षष्ठी । सोऽपि [V]उपहूतः [V]युष्माकः [V]पिबतु युष्मान् पिबतु । " गतिरनन्तरः " ( पा ६.२.४९ )

इन्द्रस्य प्राधान्यम्, " इन्द्रपीतस्य " ( तैम ३.२.५ ) इत्यादिमन्त्रस्य च प्रसिद्धिं हिशब्दो द्योतयति ॥ विधत्ते—" पञ्च कृत्वो यजुषा मिमीते पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे पञ्च कृत्वस्तूष्णीं दश सं पद्यन्ते दशाक्षरा विराडन्नं विराड् विराजैवान्नाद्यमव रुन्धे " ( तैसं ६.४.४ ) इति । सोमो यथा प्रीतस्तद्द्वयमपि मातव्य ॥

२५ आत्रा इति ॥ कल्पः —" अथ मितं राजानं होतृचमसीयाभिरुपसृजति आत्रा स्थ वृत्रतुरो राधोगूर्ता अमृतस्य पत्नीस्ता देवीर्देवत्रेमं यज्ञं धत्तोपहूताः सोमस्य पिबतोपहूतो युष्माकः सोमः पिबतु इति " ( बौश्रौ ७.५ ) इति ॥ हे आपः, यूयमेवंविधाः [V]स्थ । [1]किंविधाः ? [V]आत्रा आत्र-

[V][ द्र निघण्टु २.१५ १५–१६, निरुक्त ५.३ ] । १० त.ति.त्रि–सोमे चमसे वाप उपानयति, च–सोमचमसे वा अप आनयति । ११ मैं–' पत्न्यः ' नास्ति । १२–१२ त.ति.त्रि–स्थिता । १३. मैं–' उपहूताः ' इत्यस्यानन्तरम् ' उपयामत्व चापि क्वचिदपवादत्वेनोपदिष्टास्ते ' । १४ च–सोमं पिबत, त.ति त्रि–पिबत सोमं पिबतेति ।

१२. आ ना हा–त्रीन्द्रय, क–किंविधा स्थ त्रीन्द्रय ।

यत् ते॑ सोम दि॒वि ज्योति॒र्यत् पृ॑थि॒व्यां यदु॒रावन्तरि॑क्षे॒ तेना॒स्मै
यज॑माना॒योरु॒ रा॒या कृ॒ध्यधि॑ दा॒त्रे वो॑चो

यत् । ते॒ । सो॒म॒ । दि॒वि । ज्योति॑ः । यत् । पृ॒थि॒व्याम् । यत् । उ॒रौ । अ॒न्तरि॑क्षे । तेन॑ । अ॒स्मै ।
यज॑मानाय । उ॒रु । रा॒या । कृ॒धि । अधी॑ति । दा॒त्रे । वो॒चः ।

इति पूर्वपदप्रकृतिस्वरत्वम् । "एष वा अपां सोमपीथो य एवं वेद नाप्स्वार्तिमार्च्छति" ५
( तैसं ६·४·४ ) इति ब्राह्मणम् ॥

सोमं प्रयौति—'यत्ते' इति चतुष्पदया सतोबृहत्या दशाक्षरयुतायुक्पादया, सतः-पङ्क्त्या वा द्वादशाक्षरयुगयुक्पादया ॥ हे ^v^सोम, तव ^v^यत् ^v^दिवि ^v^ज्योतिः[15] ^v^यत् च ^v^पृथिव्यां ^v^यत् ^v^उरौ विस्तीर्णे ^v^अन्तरिक्षे ^v^तेन ^v^राया तव धनभूतेन तेजसा ^v^अस्मै ^v^यजमानाय ^v^उरु ^v^कृधि भूरि देहि । यद्वा—इदं कर्म उरु विस्तीर्णं कुरु । यद्वा—इदं कर्म, राया धनेन उरु कुरु । १०
[16]पूर्ववद्धिभावः ( पा ६·४·१०२ ) । "ऊडिदम्" ( पा ६·१·१७१ ) इति रैशुभ्यां विभक्ते-रुदात्तत्वम् । "उदात्तयणः" ( पा ६·१·१७४ ) इति दातृपृथिवीभ्याम् । किंच ^v^दात्रे इन्द्राय इमं यजमानम्, इदं वा कर्म, आधिक्येन ^v^वोचः ब्रूहि सर्वयजमानानाम् ^v^अधि उपरि यजमाना-नामयं यजमान इति, सर्वयागानामुपर्ययं याग इति वा, इन्द्राय निवेदय । यद्वा—यजमानायोरु कृधीत्युक्तम्, कस्मात् पुनरेवं क्रियत इत्याह—दात्रे चरुपुरोडाशादीनि देवेभ्यो १५
ददते धार्मिकाय यजमानाय अधिब्रूहि अधिकं ब्रूहि एतत्पक्षपातेन ब्रूहि । यद्वा—स्वामि-त्वेन वचनमधिवचनं[*] तत् सर्वदा कुर्वस्मै यजमानाय । "बहुलं छन्दस्यमाङ्योगेऽपि" ( पा ६·४·७५ ) इत्यडभावः । "छन्दसि लुङ्लङ्लिटः" ( पा ३·४·६ ) इति लुङ् ।

कारिण्यः, ^v^वृत्रतुरः वृत्रघातिन्यः, राधः अन्नं गूर्ताः संपादयितुमुद्यताः, ^v^अमृतस्य सोमस्य ^v^पत्नीः पालयित्र्यः । ^v^ताः तथाविधा यूयं ^v^देवीः देवतारूपा ^v^देवत्रा देवेषु ^v^इमम् अस्मदीयं ^v^यज्ञं २०
^v^धत्त[13] स्थापयत । किंच ^v^उपहूताः अनुज्ञाताः सत्यः ^v^सोमस्य अंशं ^v^पिबत । सोमश्चानुज्ञातो युष्माकमंशं पिबतु ॥ 'उपहूताः सोमस्य पिबत' इत्यस्य [14]मन्त्रांशस्याभिप्रायमाह—"आपः स्थ वृत्रतुर इत्याहैष वा अपां सोमपीथः" ( तैसं ६·४·४ ) इति । अस्मिन् मन्त्रे 'पिबत' इति यदुच्यते [15]तद्देवाद्देवतानां सोमपानम् ॥ वेदनं प्रशंसति—"य एवं वेद नाप्स्वार्तिमार्च्छति" ( तैसं ६·४·४ ) इति । जले मरणं न प्राप्नोति ॥ २५

यद्विति ॥ बौधायनः—"अथैनं संप्रयौति यत्ते सोम दिवि ज्योतिर्यत् पृथिव्यां यदुरावन्त-रिक्षे तेनास्मै यजमानायोरु राया कृध्यधि दात्रे वोच इति" ( बौश्रौ ७·५ ) इति । आपस्तम्बः—

१५. तं.ति.त्रि.व-'ज्योतिः' इत्यस्यानन्तरं 'तेन'। १६. मै-कुरुष्वेति भावः।
[*] [ द्र.पा १·४·९७ अधिरीश्वरे । ] ।

१३. आ.क.ना.म१.म३.द्वा-'धत्त' नास्ति । १४. तं.म३.म५-'मन्त्रांशस्य' नास्ति; म१-मन्त्रस्य । १५. तं.म५-तद्देवतानाम्; आ.ना.म१.द्वा-एतद्देवाद्देवतानाम् । ३०

धिषणे वीडू सती वीडयेथामूर्जं दधाथामूर्जं मे धत्तं मा वां हिꣳसिषं मा मा हिꣳसिष्टं

धिषणे इति। वीडू इति। सती इति। वीडयेथाम्। ऊर्जम्। दधाथाम्। ऊर्जम्।

मे। धत्तम्। मा। वाम्। हिꣳसिषम्। मा। मा। हिꣳसिष्टम्।

यद्वा—पुत्रप्रभृतिषु स्थितं तेज एकत्र सम्भृत्य तेन यजमानस्याभिमतं साधयेति [17]तत्सर्वैर मया क्रियत इति यजमानाय ब्रूहि। [18]अध्यागच्छेत्यादिरदधिरनर्थक। "एभ्य एवैन लोकेभ्यः स भरति" (तैस ६.४.४) इति ब्राह्मणम् ॥

अधिषवणफलके अभिमृशति—'धिषणे' इति त्रिपदया विराजा। हे धिषणे सोम चर्म वा धारयितु धृष्टे। "धृषेर्धिष् च सञ्ज्ञायाम्" (उ २४९) इति क्युप्रत्यय। आमन्त्रिताद्युदात्तत्वम् (पा ६.१.१९८)। ईदृशौ अधिषवणफलके युवा वीडू निष्ठब्धे दृढे अपि सती सयौ। "वा छन्दसि" (पा ६.१.१०६) इति पूर्वसवर्णदीर्घत्वम्। वीडयेथाम् आत्मान सस्तम्भयत दृढ कुरुतम्। यथाभिषवकाले अभिघातेन युवयोर्विश्लेषो न भवति तथा कुरुतम्। वीडुशब्दात् दृढवाचिन. "तत्करोति" (पा ३.१.२६ वा ५) इति णिच्। किंच ऊर्जं रस सोमलक्षण दधाथा धारयतम्। किंच ऊर्जं बल मे मह्य धत्त दत्तम्, यजमानस्य याग साधयितुमनिष्ट कुरुतमित्यर्थ। किंच मा वा हिंसिषम् अभिषवकालेऽभिघातेन युवयोर्हिंसा मा कार्षम्। अत एव मामपि युवा मा हिंसिष्टम् ॥

"यत्ते सोम दिवि ज्योतिरिति राजानमभिमन्त्रयते" (आपश्रौ १२.९.१०) इति ॥ हे सोम त्रिषु लोकेषु त्वदीयं यत् [19]ज्योति अस्ति तेन ज्योतिषा अस्मै यजमानाय राया [17-17]धनेन समृद्धम् उरु विस्तीर्णं स्थान कृधि कुरु [18]। किंच अधिकोऽयं यजमानो भवत्येति दात्रे फलप्रदायेन्द्राय ब्रूहि ॥ 'दिवि' इत्यादेस्तात्पर्यमाह—"यत्ते सोम दिवि ज्योतिरित्याहैभ्य एवैनं लोकेभ्यः [illegible] भरति" (मैसं १.४.४) इति। लोकत्रयेणैनं सोम सम्यक् पोषयति ॥

धिषण इति ॥ कल्प — "तिरश्चर्मफलके अभिमृशति धिषणे वीडू सती वीडयेथामूर्जं दधाथामूर्जं मे धत्तं मा वाꣳ हिꣳसिषं मा मा हिꣳसिष्टमिति" (बौश्रौ ७.५) इति ॥ हे धिषणे सोमस्य चर्मणो वा धारयित्र्यौ, वीडू सती विष्टब्धे सत्यौ वीडयेथा पुनरप्यभिषवादिघातेन विश्लेषो मा भूदिति दृढ स्तम्भयतम्। ऊर्जं सोमरसं दधाथा युवा धारयतम्। ऊर्जं मे मह्य धत्तं प्रयच्छतम्। [illegible]ह युवा मा हिꣳसिषम्। युवामपि मा मा हिꣳसिष्टम्। मन्त्रोऽयमुपेक्षितः ॥

प्रागिति ॥ [19]"कल्प —" एकमहायाऽऽसन्न राजानमुपरे न्युप्य होतृचमसेऽꣳशूनवधाय तस्मिन् ग्रावाणमुपांशुसवनमुपरि धारयन्" त्रि प्रदक्षिण[20] परिप्लावयन्निग्राममुपैति प्रागपागुदगधरागिति।

१७ च–तत्सर्वम्। १८ च–अत्राधिरनर्थक अध्यागच्छतीत्यादिवत्। [द्र. पा १.४.९३ अधिपरी अनर्थकौ।]।

१६ इ उ ना.पा हा–'यत्' नास्ति। १७–१७ आ–धनेनोरु समृद्धम्; क ना हा–धनेन समृद्धि कुरु, इ उ.पा–धनसमृद्धं कुरु। १८ इ उ.तं पा.आं मभ–'कल्प' नास्ति। १९. आ ना हा–'मुपनिधाय; क–'मुपरि निधाय। २०. आ क ना.हा–'प्रदक्षिणम्' इत्यस्यानन्तरम् 'उपरि'।

प्रागपागुदगधराक् तास्त्वा दिश आ धावन्त्वम्ब नि ष्वर।
प्राक्। अपाक्। उदक्। अधराक्। ताः। त्वा।
दिशः। एति। धावन्तु। अम्ब। नीति। स्वर॥

होतृचमसेंऽशून् परिप्लावयति 'प्राग्' इति॥ प्राञ्चतीति प्राक् प्राची दिक्। ऋत्विगादिना (पा ३·२·५९) क्विन्प्रत्ययः। [19]वस्तुत्वेन विवक्षितत्वात्[19] नपुंसकत्वम्। "अनिगन्तोऽञ्चतौ वप्रत्यये" (पा ६·२·५२) इति पूर्वपदप्रकृतिस्वरत्वम्। अपाक् प्रतीची। पूर्ववत् प्रत्ययः (पा ३·२·५९) स्वरश्च (पा ६·२·५२)। उदक् उदीची। पूर्ववत् प्रत्ययः स्वरश्च। अधराक् अधोदिक्। पूर्ववत् प्रत्ययः, कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६·२·१३९)। प्रदर्शनार्थं चासामुपादानमन्यासामपि। एवंप्रकारा या दिशः ताः सर्वास्त्वाम् आ धावन्तु त्वत्समीपं गच्छन्तु। हे सोम, ताभिरागताभिः तत्रस्थाः त्वदीया अंशवः सर्वे एव समागता भवन्तीत्यभिप्रायः। "सोमो वै राजा दिशोऽभ्यध्यायत् स दिशोऽनु प्राविशत्" (तैसं ६·४·४) इत्यादि ब्राह्मणम्॥ किंच, अम्ब, हे मातृस्थानीय सोम। "अम्बार्थनद्योर्ह्रस्वः" (पा ७·३·१०७)। लतामन्त्रणं वा। नि ष्वर अंशुभ्यो रसात्मना निर्गच्छ। सुषामादित्वात् षत्वम् (पा ८·३·९८)। "अम्ब नि ष्वरेत्याह कामुका एनꣳ स्त्रियो भवन्ति य एवं वेद" (तैसं ६·४·४) इति ब्राह्मणम्॥

यां भार्यां कामयेत तां मनसा ध्यायेदम्ब नि ष्वरेति" (आपश्रौ १२·९·८-९) इति॥ 'प्रागपागुदगधराक् तास्त्वा दिश आ धावन्त्वम्ब नि ष्वर' इति मन्त्रपाठः। प्रागादयो या दिशः ताः सर्वाः हे सोम, त्वां प्रत्याभिमुख्येन धावन्तु। हे अम्ब मातृस्थानीय सोम, नि ष्वर अंशुभ्यो रसात्मना निर्गच्छ। प्रागादिमन्त्रः सोमनिग्रहणहेतुत्वात् 'निग्राभः' इत्युच्यते। उपरोऽभिषवाधारः पाषाणः, तस्मिन् सोममवस्थाप्य निग्राभमन्त्रं पठेत्॥ दिशामाधावनोक्तेस्तात्पर्यमाह—"सोमो वै राजा दिशोऽभ्यध्यायत् स दिशोऽनु प्राविशत् प्रागपागुदगधरागित्याह दिग्भ्य एवैनꣳ सं भरत्यथो दिश एवास्मा अव रुन्धे" (तैसं ६·४·४) इति॥ अम्ब मातरित्यादयः शब्दाः [21]स्त्रीणामुपलालनाय प्रयुज्यन्ते अतोऽम्बशब्दप्रयोगेणात्र ध्यानविधिः सूच्यत इत्यभिप्रेत्य व्याचष्टे—"अम्ब नि ष्वरेत्याह" (तैसं ६·४·४) इति। यस्मात्स्त्रीरुपलालनमाह तस्मात् ध्यायेदित्यभिप्रायः॥ वेदनं प्रशंसति—"कामुका एनꣳ स्त्रियो भवन्ति य एवं वेद" (तैसं ६·४·४) इति॥

१९-१९. व-वस्तुविवक्षया।

२१. इ.उ.ना.पां.हा-स्त्रीणां लालनाय।

यत् ते (२) सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा ॥ १ ॥

[ युष्माकं स्वः यत्ते नवं च ]

यत् । ते (२)। सोम । अदाभ्यम् । नाम । जागृवि । तस्मै । ते । सोम । सोमाय । स्वाहा ॥१॥

[ मैस १३-२, काम ३-१०, कपिस २-१७, वास ६-३०, ३२-३६ ]

५ राजन्येव पण्णामशुना द्वौद्वावशू अपि सृजति प्रक्षिपति—'यत्ते सोमादाभ्यम्' इति द्विपदया निराजा ॥ हे सोम, यत् ते नाम अभिधानम् । कीदृश ? अदाभ्यम् अनुपहिंस्यम् । दभि प्रकृत्यन्तरमस्तीत्याहु । " दभेश्चेति वक्तव्यम् " ( द्र पाभा ६ ४.१२० वा ४ ) इति ततो ण्यत् ( पा ३.१ १२४ ) । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ( पा ६ २ २ ) । जागृवि जागरणशील पापनिर्हरणादौ । " जृशस्तृजागृभ्य क्विन् " ( उ ५०३ ) इति क्विन्प्रत्यय । " जाग्रोऽविचिण्-
१० णल्ङित्सु " ( पा ७ ३ ८५ ) इति प्रतिप्रसूय गुण प्रतिषिध्यते । यदीदृश तस्मै ते तवैवा-साधारणाय नाम्ने स्वाहा स्वाहुतानिमावशू स्याताम् । किं पुनस्तन्नामेत्याह—सोमाय सोमेत्येव-रूपाय । स्वरूपप्रधानोऽय शब्दो विशेषणत्वात् । कथमस्यैतन्नामेति यो ब्रूयात् त प्रति नामत्वाभिव्यक्तये पुनरपि तेनैव राजाऽऽमन्त्र्यते सोम इति । अय भाव —" घ्नन्ति वा एतत् सोम यदभिषुण्वन्ति " ( तैस ६.४.४ ) इत्यभिषुत राजान नामैतज्जह्यात् । कपालावस्थाया
१५ घटमिव घटशब्द । ततश्च " प्राणा वा अशव पशव सोम " ( तैस ६ ४ ४ ) इति सोमे अशुहीने पशव प्राणहीना स्यु , तस्मात् " अशूनप गृह्णाति त्रायत एवैनम् " (तैस ६ ४ ४ ) इति प्राणभूता अशव प्रथम गृह्यन्ते । तस्यैवाभिषूयमाणस्य सघातस्याप्राणत्वप्रसङ्गात् । तस्मा भूदिति द्वाद्वावशू अपि सृज्येते । एव च सयय प्राणवान् भवति, सोमशब्दश्चैन न जहाति, पशवश्च प्राणवन्तो भवन्तीति प्राणभूताभ्यामशुभ्या सहाभिषुतत्वात्, अभिषुतस्यापि सोमशब्द-
२० वत्त्वात् अभिषुतमपि सोमशब्दो न जहातीति सोमाय स्वाहेति । " नम स्वस्तिस्वाहा " ( पा २ ३ १६ ) इत्यादिना चतुर्थी । यथाग्न्यादीना स्वाहाकारेण स्थितिरेवमस्यापि । तादर्थ्ये चतुर्थी वा ( पा २ ३ १३ वा १ ) । सोमाय सोमशब्दस्थित्यर्थं एतौ प्रक्षिप्येते इति । ततश्च विभक्तिसयोगात् स्वाहेत्यागत । द्वाभ्यामेव च प्राणवत्त्वस्य सिद्धे द्वौद्वावेवाशू प्रक्षिप्येते । तस्मात् द्वौद्वावेव पशूना चक्षुरादय प्राणा । अत्राशूनामग्रहणप्रदेशे महाभिषवकालभाविन
२५ अपिसर्जनमन्त्रस्य प्रासङ्गिकमाम्नानम्, यथोपधानप्रदेशे " यानि घर्मे " ( तैस १.१.७ ) इति कपालविमोकमन्त्रस्य ॥

॥ इति चतुर्थप्रपाठके प्रथमोऽनुवाक ॥

२० त ति त्रि-स्वाह । २१ त ति त्रि व-क आहास्यैव । २२ त.ति त्रि प ध-राजानभि-मन्त्रयते । २३ त ति त्रि ज-तथैवाभि । २४ ध-सोमत्वात् । २५ मै-द्वावेवाशू ।

यत्त इति ॥ कल्पः—" प्रतिप्रस्थाता *राजन्येवांशू द्वौ द्वावपि सृजति यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहेति " ( बौश्रौ ७·६ ) इति । यः सोमः उपांशुग्रहाय यद्यपि उपरे न्युप्तः, ' ग्रावाः स्थ ' इति मन्त्रेण वसतीवरीभिरुपसृष्टस्तस्मात् सोमादपाकृत्य षडंशवः स्थापिताः । तथा चोक्तम्—" उपसृष्टस्य राज्ञः षडंशूनाद्रीन् **असंश्लिष्टानादाय चर्मणि निधाय " ( आपश्रौ १२·९·१० ) इति ॥ त्रिष्वपि सवनेषु [22]महाभिषवे तेषां षण्णामंशूनां मध्ये द्वौ द्वावंशू संसृजेत् । हे [v]सोम, [v]ते त्वदीयं [v]यत् [v]नाम शत्रुभिः [v]अदाभ्यम् अतिरस्कार्यं [v]जागृवि जागरूकं, हे [v]सोम, तस्मै [v]सोमाय [v]ते तादृक्सोमनामधारिणे तुभ्यमिदं सोमांशुद्वयं [v]स्वाहा हुतमस्तु ॥ सोमायेत्युक्तेरभिप्रायमाह—" यत्ते सोमादाभ्यं नाम जागृवीत्याहैष वै सोमस्य सोमपीथः " ( तैसं ६·४·४ ) इति । यथाऽग्नौ होममन्त्रैर्देवानां सोमपानमुक्तं तथा सोमस्याप्येष एव मन्त्रेणांशुद्वयप्रक्षेपः ॥ सोमपानवेदनं प्रशंसति—" य एवं वेद न सौम्यामार्तिमार्च्छति " ( तैसं ६·४·४ ) इति । सोमयागविनाशं न प्राप्नोति ॥ षण्णामंशूनां संघातात् पृथक्करणं विधत्ते—" घ्नन्ति वा एतत्सोमं यदभिषुण्वन्त्यंशूनप गृह्णाति त्रायत एवैनम् " ( तैसं ६·४·४ ) इति । अंशूनामपनयनेनाभिषवरूपाद्वधादेनं सोमं पालयति ॥ महाभिषवे[23] तत्संसर्गं विधत्ते—" प्राणा वा अंशवः पशवः सोमोंऽशून् पुनरपि सृजति प्राणानेव पशुषु दधाति " ( तैसं ६·४·४ ) इति ॥ त्रिषु सवनेषु पृथगंशुसंसर्गं विधत्ते—" द्वौ द्वावपि सृजति तस्माद्द्वौ द्वौ प्राणाः " ( तैसं ६·४·४ ) इति ॥ चक्षुःश्रोत्रघ्राणेन्द्रियरूपाः प्राणाः प्रत्येकं द्वौ द्वौ [23-]भूत्वा तत्तच्छिद्रेषु[-23] वर्तन्ते ॥ ५ १० १५

अत्र विनियोगसंग्रहः—

" आददेऽश्मानमादाय ग्रावाऽसीत्यभिमन्त्रयेत् ।
इन्द्रा सोममिति पञ्च ग्राव्णा निग्राभ्यसेचनम् ॥ १ ॥
यत्ते सोमं मन्त्रयित्वा धियेति फलके स्पृशेत् ।
प्राक्त्रिः प्रदक्षिणाह्वावो ह्यन्व पत्नीं विचिन्तयेत् ॥ २०
यत्ते महाभिषवे ह्यंशुयोगो नवेरिताः " ॥ २ ॥ इति ॥

[24-]अत्र मीमांसाछन्दसी न स्तः[-24] ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

*[ बौश्रौसूत्रे ' राजन्येवांऽशूनाम् ' । ] । **[ आपश्रौसूत्रे ' संश्लिष्टानादाय ' । ] । २२. क– महाभिषवेषु । २३–२३. पा.आं–तत्र छिद्रेषु ; इ.उ–छिद्रेषु ; ना.हा–' भूत्वा ' नास्ति । २४–२४. आ. ना.हा–' अत्र... ... स्तः ' नास्ति । २५

वाचस्पतये पवस्व वाजिन् वृषा वृष्णो अꣳशुभ्यां गभस्तिपूतो

वाच । पतये । पवस्व । वाजिन् । वृषा । वृष्णः । अꣳशुभ्यामित्यꣳशु-भ्याम् । गभस्तिपूत इति गभस्ति-पूत ।

उपांशुग्रहं[1] गृह्णाति । "प्राणो वा एष यदुपाꣳशु" (तैस ६ ४ ५) इत्यादि
५ ब्राह्मणम् । अयं च त्रिर्हस्तेन गृह्यते । "ब्रह्मवादिनो वदन्ति कस्मात् सत्यात् त्रय पशूनां[2] हस्तादानाः" (तैस ६ ४ ५) इत्यादि ब्राह्मणम् । तत्र प्रथममष्टकृत्वोऽभिषुत प्रथमाभ्याम् अंशुभ्यामन्तर्धाय उपांशु गृह्णाति—'वाचस्पतये' इति ॥ वाचस्पति प्राण वाच पालकत्वात्[3] । "षष्ठ्या पतिपुत्र" (पा ८ ३ ५३) इति विसर्जनीयस्य सत्वम् । वाचस्पतय इति "सावेकाच" (पा ६ १ १६८) इति षष्ठ्या उदात्तत्वम् । तदर्थं हे सोम पवस्व आभ्यामंशुभ्याम्
१० आत्मान शोधय । हे वाजिन् वेगवन् नि सरणे, यद्वा अन्नवन् यागद्वारेण । "अरुणो ह स्माऽऽहौपवेशि" इत्यारभ्य "प्रात सवनमेव तेनाऽऽप्नोति" (तैस ६ ४ ५) इत्यन्त ब्राह्मणम् । "ब्रह्मवादिनो वदन्ति पवित्रवन्तोऽन्ये ग्रहा गृह्यन्ते" इत्यारभ्य "वाचैवैन पवयति" (तैस ६ ४ ५) इत्यन्त च "षड्भिरंशुभि पवयति" (तैस ६.४ ५) इत्यादि च ॥

एकादशकृत्वोऽभिषुत मध्यमाभ्यामन्तर्धाय द्वितीय गृह्णाति—'वृषा वृष्ण' इति ॥ हे
१५ सोम, वृषा वर्षिता उत्पादकस्त्वमभीष्टानाम् । "कनिन् युवृषि" (उ १६२) इत्यादिना कनिन्प्रत्यय । स एव वृष्ण तवैव अंशुभ्या पवस्व आत्मान गभस्तिपूत गभस्तिभि[4] रश्मिभि[5] पूर्वमेव पूत शोधितः सन् इदानीमंशुभ्या पवस्वेति । "तृतीया कर्मणि" (पा ६ २ ४८) इति पूर्वपदप्रकृतिस्वरत्वम् । "वृष्णो ह्येतावꣳशू" (तैस ६.४.५) इत्यादि ब्राह्मणम् । "एकादशकृत्वो द्वितीयम्" (तैस ६ ४ ५) इत्यादि च ॥

२० प्रथमेऽनुवाके उपांशुग्रहणाय सोमाभिषवसनाहोऽभिहित । अथ द्वितीये[6] उपांशुग्रहोऽभिधीयते। वाचस्पतय इति ॥ बौधायन —"अन्तर्दधाति प्रतिप्रस्थाता । प्रथमाभ्यामꣳशुभ्यामानयत्यध्वर्युर्वाचस्पतये पवस्व वाजिन्नित्यन्तर्दधाति प्रतिप्रस्थाता । मध्यमाभ्यामꣳशुभ्यामानयत्यध्वर्युर्वृषा वृष्णो अꣳशुभ्यां गभस्तिपूत इति । अन्तर्दधाति प्रतिप्रस्थाता 'उत्तमाभ्यामꣳशुभ्यामानयत्यध्वर्युर्देवो देवानां पवित्रमसि येषां भागोऽसि तेभ्यस्त्वेति" (बौश्रौ ७ ५) इति ॥ आपस्तम्बस्त्वेवमन्त्रतामाह—"अष्टौ
२५ कृत्वोऽग्रेऽभिषुणोति । अथ प्रतिप्रस्थातोपांशुपात्र 'धारयन्नुपाचानामुपरि द्वावंशू अन्तर्दधाति । तस्मिन्नभिषुतमध्वर्युरञ्जलिना गृह्णाति[3] वाचस्पतये पवस्व वाजिन् इति । । एव विहितो द्वितीयस्तृतीयश्च । अपि वैकादशकृत्वो द्वितीयमभिषुणोति । द्वादशकृत्वस्तृतीयम्" (आपश्रौ १२.१० ४-९) इति ॥

१ त ति पं च-उपांशुम् । २ त.ति-त्रिर्हविर्हस्तेन । ३. मै-त्रापकत्वात् । ४ नि च मै-इनि । ५ च-तस्य । ६ मै-अंशुभि ।

३० १. इ उ ना हा-उत्तमाभ्यामशुभ्यामवनय' । २ क ना.हा-धारयन्नुपा' । ३ क-अभिगृह्णाति ।

<u>दे</u>वो <u>दे</u>वानां <u>प</u>वित्रम<u>सि</u> येषां <u>भा</u>गोऽ<u>सि</u> तेभ्य॑स्त्<u>वा</u>

दे॒वः । दे॒वाना॑म् । प॒वित्र॑म् । अ॒सि॒ । येषा॑म् । भा॒गः । असि॑ । तेभ्यः॑ । त्वा॒ ।

द्वादशकृत्वोऽभिषुतमुत्तमाभ्यामन्तर्धाय तृतीयं गृह्णाति—' देवो देवानाम् ' इति ॥ हे सोम, देवः देवनादिगुणयुक्तस्त्वं देवानां पवित्रं पावनकारणम् असि । " पुवः संज्ञायाम् " ( पा ३·२·१८५ ) इतीत्रप्रत्ययः । त्वं हि देव एव सन् देवानां पवित्रमसीति भावः । केषाम्? येषां त्वं देवानां भागः असि तेषां पवित्रमसि । भज्यत इति भागः । कर्मणि घञ् ( पा ३·३·१९ ) । " कर्षात्वतः " ( पा ६·१·१५९ ) इत्यन्तोदात्तत्वम् । तस्मात् तेभ्यः त्वां गृह्णामीति शेषः । त्वं चाभ्यामंशुभ्यां पवस्वात्मानमिति संबध्यते । " देवो ह्येष सन् देवानां पवित्रम् " ( तैसं ६·४·५ ) इत्यादि ब्राह्मणम् । " द्वादशकृत्वस्तृतीयम् " ( तैसं ६·४·५ ) इत्यादि च ॥

हे वाजिन् अन्नप्रद सोम, पतये पालकदेवार्थं वाचः संबन्धिना मन्त्रेण पवस्व शुद्धो भव । वृषा रसरूपत्वेन वर्षणसमर्थस्त्वं गभस्तिपूतः पूर्वमरण्ये सूर्यरश्मिभिः पूत इदानीं तु वृष्णः वर्षणसमर्थस्य सोमस्य अंशुभ्याम् अन्तर्धापिताभ्यां पवस्व । किंच त्वमपि देवः एव सन् देवानां सोमपां पवित्रं शुद्धिहेतुः असि । येषां देवानां भागः असि तेभ्यः त्वा गृह्णामि ॥ विधत्ते— " प्राणो वा एष यदुपाꣳशुर्यदुपाꣳश्वग्रा ग्रहा गृह्यन्ते प्राणमेवानु प्र यन्ति " ( तैसं ६·४·५ ) इति ॥ यज्ञस्य प्राणस्थानीय उपांशुः ॥ अपानवागादिस्थानीयास्त्वन्तर्यामैन्द्रवायवादयः । अतः प्राणत्वेन मुख्यत्वात् प्रथमतस्तद्ग्रहणं युक्तम् ॥ त्रिषु पर्यायेषु विलक्षणसंख्याविशिष्टमभिषवं विधत्ते—" अरुणो ह स्माऽऽहौपवेशिः प्रातःसवन एवाहं यज्ञꣳ सꣳस्थापयामि । तेन ततः सꣳस्थितेन चरामीत्यष्टौ कृत्वोऽग्रेऽभि षुणोत्यष्टाक्षरा गायत्री गायत्रं प्रातःसवनं प्रातःसवनमेव तेनाऽऽप्नोत्येकादश कृत्वो द्वितीयमेकादशाक्षरा त्रिष्टुप् त्रैष्टुभं माध्यन्दिनं सवनं माध्यन्दिनमेव सवनं तेनाऽऽप्नोति द्वादश कृत्वस्तृतीयं द्वादशाक्षरा जगती जागतं तृतीयसवनं तृतीयसवनमेव तेनाऽऽप्नोत्येताꣳह वाव स यज्ञस्य सꣳस्थितिमुवाचास्कन्दायास्कन्नꣳ हि तद्यद्यज्ञस्य सꣳस्थितस्य स्कन्दति " ( तैसं ६·४·५ ) इति । उपवेशस्य पुत्रः कश्चिदरुणनामा यथोक्तत्रिविधाभिषवरूपामेव यज्ञस्य समाप्तिमुवाच । तदेतदविनाशाय संपद्यते । समाप्तस्य यज्ञस्य संबन्धि यद्वस्तु नश्यति तदविनष्टमेव ॥ त्रिष्वपि पर्यायेष्वष्टसंख्यैवेति पक्षान्तरं विधत्ते—" अथो खल्वाहुर्गायत्री वाव प्रातःसवने नातिवाद इत्यनतिवादुक एनं भ्रातृव्यो भवति य एवं वेद तस्मादष्टावष्टौ कृत्वोऽभिषुत्यम् " ( तैसं ६·४·५ ) इति । अतिवादे गायत्र्येव न वर्तते । त्रिष्टुब्जगत्यौ तु वर्तेते । अधिकाक्षरयुक्ततया पठ्यमानत्वमतिवादः । न चासावल्पाक्षरायां गायत्र्यां संभवति । यद्यपि प्रातःसवने छन्दोन्तराण्यपि संभवन्ति तथापि गायत्र्येवाभिमानिदेवता गायत्र्या एवातिवादाभावं यो वेद तं प्रति शत्रुरप्यनतिवादुको भवति, अनिन्दको भवतीत्यर्थः । यस्माद्गायत्र्येव सवनमभिमन्यते तस्मात्तदीयैव संख्यया प्रातःसवने त्रिष्वपि पर्यायेष्वभिषोतव्यम् ॥ मन्त्रस्य प्रथमभागे वाक्शब्दतात्पर्यमाह—" ब्रह्मवादिनो वदन्ति पवित्रवन्तोऽन्ये ग्रहा गृह्यन्ते किंपवित्र उपाꣳशुरिति वाक्पवित्र इति ब्रूयात् वाचस्पतये पवस्व वाजिन्नित्याह वाचैवैनं पवयति "

७. ति.पं–दानादि° । ८–८. ब–येषां च ।

४. तं–यथोक्तं त्रि° । ५. क–°क्षराया गायत्र्याः । ६. आ.क.ना.ह्वा–' एव ' नास्ति । ७–७. तं–शत्रुरप्यनिन्दको भवति ।

[ उपांशुग्रह

स्वांकृतोऽसि मधुमतीर्न इषस्कृधि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो

स्वाङ्कृत । असि । मधुमतीरिति मधु-मती । न । इषं । कृधि । विश्वेभ्य ।
त्वा । इन्द्रियेभ्यं । दिव्येभ्यं । पार्थिवेभ्य ।

प्रतिप्रस्थातुर्हस्तात् ग्रहमादत्ते—'स्वाकृतोऽसि' इति ॥ स्वीकृतोऽसि इत्यर्थ । [१]अस्व
५ स्वो भवतीति स्वाम्। च्वि (पा ५ ४ ५०)। ईत्वापवाद [१] आभाव छान्दस ।
"ऊर्यादिच्विडाचश्च" (पा १ ४ ६१) इति गति गात "गतिरनन्तर" (पा ६ २ ४९)
इति पूर्वपदप्रकृतिस्वरत्वम् । "प्राणमेव स्वमकृत" (तेस ६ ४ ५) इति ब्राह्मणम् ॥

ग्रहमवेक्षते—'मधुमती' इति ॥ [१०]मधुमती मधुरसा [१०] [८]इष अन्नानि [८]न
अस्माक [८]कृधि कुरु । मधुमती कुर्विति वा । प्राणात्मना ग्रह उच्यते । "प्राणो वा एप
१० यदुपांशु" (तैस ६ ४ ५) इति चामेद प्रतिपादयति । "सर्वमेवास्मा इदं स्वदयति"
(तैस ६ ४ ५) इति ब्राह्मणम् । करोतेर्लोटि "बहुल छन्दसि" (पा २ ४ ७३) इति शपो
लुक् । "श्रुशृणुपृकृवृभ्यश्छन्दसि" (पा ६ ४ १०२) इति हेर्धिभाव । "क करत" "
(पा ८ ३ ५०) इत्यादिना विसर्जनीयस्य सत्वम् ॥

एनमूर्ध्वमुन्माष्टि—'विश्वेभ्य' इति ॥ [८]विश्वेभ्य [८]इन्द्रियेभ्य इन्द्रेणेश्वरेण सृष्टेभ्य ।
१५ "इन्द्रियमिन्द्रलिङ्गम्" (पा ५ २ ९३) इत्यादौ निपात्यते । के पुनस्ते ? देवा मनुष्याश्च ।
"उभयेष्वेव देवमनुष्येषु प्राणान् दधाति" (तैस ६ ४ ५) इति ब्राह्मणम् । तानेवाह
[८]दिव्येभ्य [८]पार्थिवेभ्य इति । दिवमर्हन्तीति दिव्या (पा ५ १ ६३) । "छन्दसि च"
(तैस ६ ४ ५) इति । उपांशुव्यतिरिक्ता ग्रहा दशापवित्रनामकेन वस्त्रेण शोधिता गृह्यन्ते ■ उपांशु ।
तस्य किं शोधकमिति प्रश्न । मन्त्र एव 'शोधकमित्युत्तरम् ॥ भागान्तराणामर्थ प्रसिद्ध इत्याह—
२० "वृष्णो अंशुभ्यामित्याह वृष्णो ह्येतावंशू यौ सोमस्य गभस्तिपूत इत्याह गभस्तिना ह्येन पवयति
देवो देवाना पवित्रमसीत्याह देवो ह्येष सन् देवाना पवित्र येषा भागोऽसि तेभ्यस्त्वेत्याह येषा ह्येष
भागस्तेभ्य एन गृह्णाति" (तैस ६ ४ ५) इति ॥

स्वाकृत इति ॥ बौधायन —"अथ प्रतिप्रस्थातुर्ग्रहमादत्त स्वाकृतोऽसीति । । अथैन
मवेक्षते मधुमतीर्न इषस्कृधीति । अथैनमूर्ध्वमुन्माष्टि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्य पार्थिवेभ्य इति"
२५ (बौश्रौ ७ ५) इति । आपस्तम्बस्त्वेकमन्त्रतामाह—"स्वांकृतोऽसीत्यध्वर्युर्ग्रहमादाय" (आपश्रौ
१२ १० १३) इति ॥ हे उपांशुग्रह, ■ [८]स्वांकृत [८]असि । [८]मधुमती [८]इष मधुराण्यन्नानि [८]न अस्मदर्थं
[८]कृधि कुरु । देवजन्मनि मनुष्यजन्मनि च स्थितेभ्य सर्वेभ्य [८]इन्द्रियेभ्य हिताय त्वां स्वीकरोमि ।
स्वांकृतशब्देन प्राणरूपस्य ग्रहस्य स्वाधीनत्व विवक्षितम् । मधुमतीशब्देन स्वादुत्वम् ॥ दिव्यपार्थिवशब्दन
जन्मद्वयमिति दर्शयति—"स्वांकृतोऽसीत्याह प्राणमेव स्वमकृत मधुमतीर्न इषस्कृधीत्याह सर्वमेवास्मा
३० इदं स्वदयति विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्य पार्थिवेभ्य इत्याहोभयष्वेव देवमनुष्येषु प्राणान दधाति"
(तैस ६ ४ ५) इति ॥

९. त-अस्व स्वाधीन भवतीति स्वाधीनत्वापवाद । १०-१० मै-मधुमत्य मधुररसा ।

८ इत्व-शोधक इत्युत्तरम् ।

मन॑स्त्वाऽष्टू॒र्व॑न्तरि॑क्ष॒मन्वि॑हि॒ स्वाहा॑ त्वा सुभ॒वः सूर्या॑य

मनः॑ । त्वा॒ । अ॒ष्टु॒ । उ॒रु । अ॒न्तरि॑क्षम् । अनु॑ । इ॒हि॒ ।

स्वाहा॑ । त्वा॒ । सु॒भ॒व इति॑ सु—भ॒वः॒ । सूर्या॑य ।

(पा ५.१.६७ ) इति यत्प्रत्ययः। पृथिव्यां भवाः पार्थिवाः। " पृथिव्या ञाञौ " ( पा ४.१.८५ वा २ ) इत्यञ्प्रत्ययः। एतेभ्यस्त्वामुपांशुग्रहं प्राणभूतमुन्मार्ज्मीति शेषः। एतेषां प्राणस्थित्यर्थम्। यदाह—" उभयेष्वेव देवमनुष्येषु प्राणान् दधाति " ( तैसं ६.४.५ ) इति। यद्वा—इन्द्रियशब्देन चक्षुरादीनामधिपतय आदित्यादय उच्यन्ते। तत्र दिव्यानि ज्ञानेन्द्रियाणि, पार्थिवानि कर्मेन्द्रियाणि, तदर्थं त्वामुन्मार्ज्मीति ॥ ५

तमादायोत्तिष्ठति—' मनस्त्वाष्टु ' इति ॥ मननधर्मा प्राणो मन इत्युच्यते। सूर्यात्मना हे ग्रह, [v]मनः [v]त्वा त्वाम् [v]अष्टु अश्नुतां व्याप्नोतु। अश्नोतेर्व्यत्ययेन परस्मैपदम् ( पा ३.१.८५ )। " बहुलं छन्दसि " ( पा २.४.७३ ) इति शपो लुक्। व्रश्चादिना षत्वम् ( पा ८.२.३६ )। " मनस्त्वाष्ट्वित्याह मन एवाश्नुते " ( तैसं ६.४.५ ) इत्यादि ब्राह्मणम् ॥ १०

आहवनीयं प्रति गच्छति—' उरु ' इति ॥ व्याख्यातम् ( तैसं १.१.२ )। " अन्तरिक्षदेवत्यो हि प्राणः " ( तैसं ६.४.५ ) इत्यादि ब्राह्मणम् ॥

जुहोति—' स्वाहा त्वा ' इति। हे ग्रह उपांशो, [v]त्वा त्वां [v]स्वाहा स्वाहुतं करोमीति शेषः। हे [v]सुभवः हे प्राणात्मक। उक्तं हि—" प्राणो वा एष यदुपांशुः " ( तैसं ६.४.५ ) इति। तत्र स्वस्मादात्मनो जाताः स्वभवसः प्राणाः। " गतिकारकयोरपि " ( द.उ ६७६ ) इति भवतेरसुन्प्रत्ययः[11]। " प्राणा वै स्वभवसो देवाः " ( तैसं ६.४.५ ) इति च ब्राह्मणम्। तत्र स्वभवसो देवान् सुभव इत्याचष्टे परोक्षत्वाय। " तेनैव परोक्षं जुहोति " ( तैसं ६.४.५ ) इत्यादि ब्राह्मणम्। तत्र पूर्वपदस्य संप्रसारणम्, उत्तरपदस्य विभक्तिव्यत्ययः कृतः। [v]सूर्याय प्राणानामात्मभूताय त्वां स्वाहुतं करोमीति ॥ १५ २०

मन इति ॥ बौधायनः—" उपोत्तिष्ठति मनस्त्वाऽष्ट्विति। एत्युर्वन्तरिक्षमन्विहीति। एत्याऽऽहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहा त्वा सुभवः सूर्याय स्वाहेति " (बौश्रौ ७.६) इति ॥ आपस्तम्बः—" उर्वन्तरिक्षमन्विहीति दक्षिणेन होतारमतिक्रामति। येन वा होता प्रतिपादयेत्। मनस्त्वाष्ट्विति दक्षिणतोऽवस्थाय दक्षिणपरिधिसंधिमन्ववहृत्य। स्वाहा त्वा सुभवः सूर्यायेति दक्षिणतः प्राञ्चमृजुं संततं दीर्घं हुत्वा देवेभ्यस्त्वा मरीचिपेभ्य इति मध्यमे परिधौ लेपं निमार्ष्टि " ( आपश्रौ १२.१०.१३–१२.११.१ ) इति ॥ हे प्राणरूपोपांशुनामक ग्रह[10], त्वां [v]मनः [v]अष्टु व्याप्नोतु। विस्तीर्णम् [v]अन्तरिक्षम् अनुसृत्य स्वमाहवनीयदेशं गच्छ। हे [v]सुभवः, शोभनं भवः [11]सद्भावो [12]शोभनमध्यावस्थितिलक्षणो यस्य प्राणस्य सोऽयं सुभवाः। हे प्राण, [v]त्वा त्वद्रूपं ग्रहं [v]सूर्याय वहिष्प्राणरूपाय [v]स्वाहा जुहोमि। सूर्यस्य प्राणरूपत्वमाथर्वणैराम्नातम्—" आदित्यो ह वै बाह्यः प्राण उदयति। एष ह्येनं चाक्षुषं प्राणमनुगृह्णानः " २५ ३०

११. आ.ति.व–' प्रत्ययः ' नास्ति।

९. तं–परिधिसंधौ। १०. इ.ऊ.ना.पा.हा–' ग्रह ' नास्ति। ११. तं–स्वदेह। १२. आ–' शोभनं ' नास्ति।

## देवेभ्यस्त्वा मरीचिपेभ्यः

देवेभ्यः । त्वा । मरीचिपेभ्य इति मरीचि–पेभ्यः ।

ग्रहलेपं पाणिना मध्यमे परिधौ निमार्ष्टि—'देवेभ्यस्त्वा' इति ॥ मरीचिशब्देन मरीचिमान् सूर्य उच्यते, यस्मै ग्रहः पूर्वं हुतः । "लुगकारेकाररेफाश्च" ( पा ४ ४ १२८ वा २ ) इति मत्वर्थीयस्य लुक् । साहचर्याद्वोच्यते । मरीचिमत्सूर्यमण्डलं पान्ति रक्षन्तीति मरीचिपा रश्मयः । "आदित्यस्य वै रश्मयो देवा मरीचिपाः" ( तैस ६.४ ५ ) इति ब्राह्मणम् । यद्वा—आदित्यस्य मरीचिनैव विश्वं पान्ति तामेव पिबन्तीति वा मरीचिपा देवविशेषाः । "आदित्यस्य वै रश्मयः" ( तैस ६.४ ५ ) इति च गुणभूतत्वमुच्यते । आदित्यस्य रश्मिस्थानीया इति यावत् । तेभ्यो देवेभ्यस्त्वा ग्रहलेपं निमार्ज्मीति शेषः ॥

( प्रब १.८ ) इति । हे लेप, त्वां [13]मरीचिपेभ्यः मरीचिपालकदेवार्थं परिधौ मार्ज्मि ॥ क्रमेण मन्त्रान् व्याचष्टे—"मनस्त्वाष्टित्याह मन एवाश्नुत उर्वन्तरिक्षमन्विहीत्याहान्तरिक्षदेवत्यो हि प्राणः स्वाहा त्वा सुभव सूर्यायेत्याह प्राणा वै स्वभवसो देवास्तेष्वेव परोक्षं जुहोति देवेभ्यस्त्वा मरीचिपेभ्य इत्याहाऽऽदित्यस्य वै रश्मयो देवा मरीचिपास्तेषां तद्भागधेयं तानेव तेन प्रीणाति" ( तैस ६.४.५ ) इति । स्वभवसः स्वशरीरेऽवस्थिता देवाः प्राणवायवः । तत्र 'प्राणेभ्यः स्वाहा' इत्युक्ते तेषां प्रत्यक्षहोमो भवतीति तत्परित्यज्य 'सूर्याय' इत्युक्तत्वादयं परोक्षहोमः । यद्वा—स्वभवस इति वक्तव्ये सति 'सुभवस' इत्युक्त्या परोक्षत्वम् । रश्मिनामकाश्चेतना देवा अचेतनानां मरीचीनां पालकाः ॥ लेपमार्जने हस्तस्याधोमुखत्वमूर्ध्वमुखत्वं च फलभेदेन विधत्ते—"यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचा हस्तेन नि मृज्याद्वृष्टिमेव नि यच्छति यदि कामयेतावर्षुकः स्यादित्युत्तानेन नि मृज्याद्वृष्टिमेवोद्यच्छति" ( तैस ६ ४ ५ ) इति ॥ वैरिणं प्रत्यभिचरता पुरुषेण होमात् पूर्वं पाठ्यं मन्त्रविशेषमुत्पादयति—"यद्यभिचरेदमुं जह्यथ त्वा होष्यामीति ब्रूयादाहुतिमेवैनं प्रेप्सन् हन्ति" ( तैस ६.४ ५ ) इति ॥ हे प्राणरूप सूर्य, अमुं देवदत्तनामकं वैरिणं प्रथमतो मारय पश्चात् त्वां प्रति होष्यामीति ब्रूयात् । एतं मन्त्रं श्रुत्वा देव आहुतिमपेक्षमाण एनं वैरिणं मारयत्येव ॥ वैरिणो दूरदेशवर्तित्वे सत्यभिचरतोऽनुष्ठानविशेषं विधत्ते—"यदि दूरे स्यादा तमितोस्तिष्ठेत् प्राणमेवास्यानुगत्य हन्ति" ( तैस ६ ४.५ ) इति । आ तमितो आ ग्लानेः, यावन्तं कालं निरुद्धश्वासः स्थातुं शक्नोति तावत् तिष्ठेत् । ततोऽयं निरोधोऽस्य वैरिणः प्राणमनुगत्य मारयत्येव ॥

एष इति ॥ बौधायनः—"अथ प्रदक्षिणमावृत्याग्रयणस्थाल्या ग्रहस्य संस्रावमवनयत्येष ते योनिरिति । अथैतस्मिन्नुपांशुपात्रेऽंशुं [14]प्रास्यति अथैनं दक्षिणत उपांशुसवनेन संस्पृष्टं सादयति प्राणाय त्वेति" ( बौश्रौ ७.५ ) इति ॥ आपस्तम्बः—"सर्वमाग्रयणस्थाल्याः सपात्रमवनीय एष ते योनिः प्राणाय त्वेति रिक्तं पात्रमायतने सादयित्वा तस्मिन्नंशुमवास्य तं तृतीयसवनेऽपिसृज्याभिषुणुयात्" ( आपश्रौ १२ ११ ५ ) इति ॥ हे सस्राव सपात्र, [15]"एष" आग्रयणाख्य एव तव योनिः स्थानम् । अथवा हे उपांशुपात्र, एष खरस्य दक्षिणभागप्रदेशः ते स्थानम् । अतः प्राणदेवतातोषार्थं त्वामत्र सादयामि । खरो नाम दक्षिणस्य हविर्धानस्य पुरस्तात् मृदं प्रक्षिप्य निष्पादितो देशः पात्रप्रयोगार्थः । तथा च सूत्रम्—"खरे पात्राणि प्रयुनक्ति । . . । अग्निर्देवतेति दक्षिणेंऽस उपांशुपात्रम् । सोमो देवतेत्युत्तरेंऽसेऽन्तर्यामस्य । बृहदसीति ते अन्तरेण ग्रावाणमुपांशुसवनं दक्षिणामुखं संस्पृष्टं पात्राभ्याम् ।

१३ आ हा–'मरीचिपेभ्य' नास्ति । १४. आ पा ना.हा–ग्रास्य । १५ उ ना.पा.हा–'एष.' नास्ति ।

एष ते योनिः प्राणाय त्वा ॥ २ ॥

[ वाचः सप्तचत्वारिंशत् ]

एषः । ते । योनिः । प्राणायेति प्र—अनाय । त्वा ॥ २ ॥

[ मैसं १-३-४ ; कासं ४-१ ; कपिसं ३-१ ; वास ७-१-३ ]

आग्रयणस्थाल्यां[12] ग्रहस्य संस्रावमवनयति[13]—' एष ते योनिः ' इति ॥ हे उपांशुसंस्राव, एषः आग्रयणस्थाल्याख्यः ते तव योनिः स्थानम्, यत्र निहितस्त्वं यागसिद्ध्यै संपत्स्यसे । अतस्त्वं प्रविशेति शेषः ॥

उपांशुपात्रं दक्षिणत उपांशुसवनेन संस्पृष्टं सादयति—' प्राणाय त्वा ' इति ॥ प्राणार्थं त्वां सादयामीति शेषः । थाथादिस्वरेणान्तोदात्तः प्राणशब्दः ( पा ६-२-१४४ ) । " प्राणापानौ वा एतौ यदुपांश्वन्तर्यामौ व्यान उपांशुसवनः " ( तैसं ६-४-६ ) इत्यादि ब्राह्मणं " सर्वमायुरेति " ( तैसं ६-४-६ ) इत्यन्तम् ॥ १०

॥ इति चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥

समपरेण प्रत्यञ्चि द्विदेवत्यपात्राणि " ( आपश्रौ १२-१-६-१० ) इत्यादि ॥ ' एष ते योनिः प्राणाय त्वा ' इत्येष मन्त्र उपेक्षितः ॥ अभिचरतः पात्रासादनाय मन्त्रान्तरमुत्पादयति—" यद्यभिचरेदमुष्य त्वा प्राणे सादयामीति सादयेदसन्नो वै प्राणः प्राणमेवास्य सादयति " ( तैसं ६-४-५ ) इति । हे उपांशुपात्र, प्राणरूपं त्वाममुष्य वैरिणः प्राणे [16]सादयामि स्थापयामीत्युक्ते सत्यसन्नो विनाशरहितो यजमानप्राणो वैरिणः प्राणं सादयति विनाशयति ॥ अभिषुतः सोमरसः प्रतिप्रस्थातृहस्तगत उपांशुपात्रे यदा गृह्यते तदा ग्रहान्तरवद्वस्त्रेण शोधनं न भवति किं त्वंशुभिरिति विधत्ते—" षड्भिरंशुभिः पवयति षड्वा ऋतव ऋतुभिरेवैनं पवयति " ( तैसं ६-४-५ ) इति । नात्र षण्णामंशूनां युगपत् प्रयोगः किं तु त्रिषु पर्यायेष्विति विधत्ते—" त्रिः पवयति त्रय इमे लोका एभिरेवैनं लोकैः पवयति " ( तैसं ६-४-५ ) इति ॥ नात्र वक्ष्यमाणग्रहेष्विव दशापवित्रनाभिस्रुतया धारया ग्रहणं किं तु त्रिष्वपि पर्यायेष्वध्वर्योरञ्जलिनेति विधत्ते—" ब्रह्मवादिनो वदन्ति कस्मात् सत्यात् त्रयः पशूनां हस्तादाना इति यत् त्रिरुपांशुं हस्तेन विगृह्णाति तस्मात् त्रयः पशूनां हस्तादानाः पुरुषो हस्ती मर्कटः " ( तैसं ६-४-५ ) इति । गोमहिषादयः सर्वे पशवो मुखादानाः । एते तु त्रयो हस्तादानाः । पुरुषोऽपि " ब्रह्मणे ब्राह्मणमालभते " ( तैब्रा ३-४-१ ) इत्यादावालभ्यमानत्वात्[17] पशुः[18] ॥ १५ २० २५

अत्र विनियोगसंग्रहः—

" वाचो ह्युपांशुग्रहणं स्वामादत्तेऽन्यहस्ततः ।
उरु गत्वा मनस्त्वेति वेदेर्दक्षिणतः स्थितिः ॥ १ ॥
स्वाहा जुहोति देवेभ्यो मध्यमे परिधौ तथा[19] ।
लेपं निमार्ष्ट्येष पात्रं सादयेत् सप्त वर्णिताः " ॥ २ ॥ इति ॥ ३०

[20]अत्र मीमांसा नास्ति[20] ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

१२. मै—°स्थाल्याः । १३. मै—°मपनयति ।

१६. आ.पा.हा—' सादयामि ' नास्ति । १७. आ.क.ना.हा—°भ्यत्वात् । १८. इ.उ.ना.पा.हा—' पशुः ' नास्ति । १९. इ.उ.तं.ना.पा.हा—तदा । २०–२०. आ.पा.हा—' अत्र मीमांसा नास्ति ' नास्ति । ३५

तैसं ३३॥

उपयामगृहीतोऽस्यन्तर्यच्छ

उपयामगृहीत इत्युपयाम-गृहीतः। असि। अन्तः। यच्छ।

उदित आदित्येऽन्तर्याम गृह्णाति अतिधारायाः पवमानस्य राज्ञ.—'उपयामगृहीतोऽसि'॥ उपयम्यन्ते स्वात्मन्येव नियम्यन्ते भूतजातान्यस्मिन् अस्मिन्नेऽधिकरणे इत्युपयाम.[२] पृथ्वी। "इयं वा उपयाम" (तैस ६.५.८) इति ब्राह्मणम्। "हलश्च" (पा ३.३.१२१) इति घञ्। थाथादिस्वरेणान्तोदात्तत्वम् (पा ६.२.१४४)। तेन गृहीत त्वम् असि। कोऽन्यस्त्वां ग्रहीतु क्षम इति भाव.। पृथिव्यापो ग्रहीष्यामीतिवत् "तृतीया कर्मणि" (पा ६.२.४८) इति पूर्वपदप्रकृतिस्वरत्वम्। यद्वा—उपयामार्थं पृथिव्यर्थं गृहीतोऽसीति हे सोम। ननु "स्वाहा त्वा सुभव सूर्याय" (तैस १.४.२) इति मन्त्रवर्णाद् सूर्यदेवत्य कथ पृथिवीदेवत्य. स्यात्? नैतद्देवताभिधानम्। पृथिवीवासिनां प्रजाना यागद्वारेण स्थित्यर्थं गृहीतोऽसीति स्तूयते। यद्वा—पृथिव्यपि देवतास्य "उपयामगृहीतोऽसीत्याह्यादितिदेवत्यास्तेन" (तैस ६.४.७) इति, अदितिः पृथ्वी। "चतुर्थी" (पा २.१.३६) इति योगविभागात् समासः। "क्ते च" (पा ६.२.४५) इति[३] पूर्वपदप्रकृतिस्वरत्वम्। "इयं वा उपयामस्तस्मादिमा प्रजा अनु प्र जायन्ते" (तैस ६.५.८) इति ब्राह्मणम्॥

द्वितीयेऽनुवाक उपांशुग्रहोऽभिहित। अथ तृतीयमारभ्य षट्त्रिंशान्तेष्वनुवाकेष्वन्तर्यामादिका. षोडश्यन्ता ग्रहा अभिधीयन्ते। तत्र पौर्वापर्ये पाठ एव नियामक॥

उपयामगृहीत इति॥ कल्प —"उदित आदित्येऽन्तर्यामं गृह्णात्यतिपवमानस्य राज्ञ उपयामगृहीतोऽस्यन्तर्यच्छ मघवन् पाहि सोममुरुष्य राय समिषो यजस्वान्तस्ते दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षं सजोषा देवैरवरैः परैश्चान्तर्यामे मघवन् मादयस्वेति" (बौश्रौ ७.६) इति॥ अतिपवमानस्य दशापवित्रेणातयन्तशुद्धस्य। हे सोमरस, त्वम् उपयामगृहीत असि। उपयाम पृथिवी। "इयं वा उपयाम." (तैसं ६.५.८) इति श्रुते। पृथिव्यामुत्पन्नं दारुमयमन्तर्यामग्रहपात्रमुपयामशब्देन उपलक्ष्यते। हे मघवन् अन्त. यच्छ, इदं पात्रमस्माक आतृव्येभ्योऽन्तर्धानं यथा भवति तथा नियमय। तत्र सोम पालय। राय धनानि उरुष्य रक्ष। सम् इष समीचीनान्यन्नानि यजस्व देहि। द्यावापृथिव्यौ तवानुग्रहात् अन्त दधामि व्यवधायिके करोमि। विस्तीर्णम्

१ मं-अतिधारया, त-धाराया। २-२ त ति प.ब-अनेन वा उपयाम.। ३-३. त ति पं-तृतीयेति।

१. ग-पात्रमन्तर्याम॰। २ आ क ना पा-लक्ष्यते।

मघवन् पाहि सोममुरुष्य रायः समिषो यजस्व-

मघवन्निति मघ—वन् । पाहि । सोमम् । उरुष्य । रायः । समिति । इषः । यजस्व ।

---

संप्रति सोमस्य स्वामिनं प्रार्थयते—'अन्तर्यच्छ' इत्यादिकयाऽष्ट्या[*] षट्पदया। 'अन्तरुर्वन्तरिक्षम्' इति चतुर्थः पादः। अन्य एकादशाक्षराः। ननु पुरस्तादुपयामत्वाद्यजुषाऽनेन भवितव्यम्, यथा—"पुरस्तादुपयामा यजुषा गृह्यन्ते" (तैसं ६.५.१०) इति। नैवम्। ५ वृत्तिसंयोगाद्दचैवानया भवितव्यम्। किंच पुरस्तादुपयामाम्नानमेवास्य[4] ऋक्त्वे लिङ्गम्। तथा हि 'ये यजुषा गृह्यन्ते ते पुरस्तादुपयामाः कार्याः' इति वचनप्राप्तत्वादेव पुरस्तादुपयामस्य[5] पाठोऽनर्थकः स्यात्। ऋक्त्वे तु 'ये ऋचा गृह्यन्ते ते उपरिष्टादुपयामाः कार्याः' इति प्राप्ते तदपवादत्वेन पुरस्तादुपयामस्य पाठो युज्यते। एष एव न्यायः "उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते" (तैसं १.४.१२) इत्यत्रापि। "आ वायो भूष शुचिपाः" (तैसं १.४.४) १० इत्यादय ऋच उपरिष्टादुपयामाः पठ्यन्ते। ऋचामेव हि पुरस्तादुपरिष्टाद्वा उपयामः पठ्यते; यजूंषि पुनः निरुपयामान्येव पठ्यन्ते "सुशर्मासि" (तैसं १.४.२६) इत्यादीनि। तेषां तु वचनप्राप्तं पुरस्तादुपयामत्वम्। तत्रापि क्वचिदपवादत्वेन उपरिष्टादुपयामत्वमारभ्यते—"मधुश्च माधवश्च" (तैसं १.४.१४) इत्यादौ। अन्ये तु—तान्यपि[6] पुरस्तादुपयामान्येवेत्याहुः; यथा—"उपयामगृहीतोऽसि" इति "मधुश्च" (तैसं १.४.१४) इत्यादि॥ मन्त्रार्थस्तूच्यते— १५

---

[V]अन्तरिक्षम् अपि मन्तः दधामि। हे [V]मघवन्, [V]अवरैः [V]परैः [V]च सर्वैः [V]देवैः [V]सजोषाः सह अस्मिन्नन्तर्यामग्रहे [V]मादयस्व, [3]त्वं हृष्टः सन्नन्यानपि हर्षय॥ अन्तर्यामपात्रे सोमरसग्रहणं विधत्ते—"देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा उपांशौ यज्ञꣳ सꣳस्थाप्यमपश्यन् तमुपांशौ समस्थापयन् तेऽसुरा वज्रमुद्यत्य देवानभ्यायन्त ते देवा बिभ्यत इन्द्रमुपाधावन् तानिन्द्रोऽन्तर्यामेणान्तरधत्त तदन्तर्यामस्यान्तर्यामत्वं यदन्तर्यामो गृह्यते भ्रातृव्यानेव तद्यजमानोऽन्तर्धत्ते" (तैसं ६.४.६) इति। देववद्यज्ञमनुतिष्ठतामसुराणां व्यामोहार्थमुपांशुग्रहे यज्ञं समापनीयं मत्वा रहसि देवास्तं [4]तथा चक्रुः। तं प्रकारमज्ञात्वा क्रुद्धानसुरानिन्द्रोऽन्तर्यामग्रहेणान्तर्हितानकरोत्। ततो भ्रातृव्यान्तर्धानायान्तर्यामो ग्रहीतव्यः॥ मन्त्रभागे द्यावापृथिव्युक्तेः प्रयोजनमाह—"अन्तस्ते दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षमित्याहैभिरेव लोकैर्यजमानो भ्रातृव्यानन्तर्धत्ते" (तैसं ६.४.६) इति॥ 'सजोषाः' इत्यादेः प्रयोजनमाह—"ते देवा अमन्यन्तेन्द्रो वा इदमभूद्यद्वयꣳ स्म इति तेऽब्रुवन् मघवन्ननु न आ भजेति सजोषा देवैरवरैः परैश्चेत्यब्रवीत्थे २५

---

*[द्र. ऋप्रा, १६.५४]। ४. तं.ति—°यामाम्नानादिदमेवास्य; व—°यामत्वाम्नानादिदमेवास्य। ५. ति—°यामत्वस्य। ६. तं.ति—तान्येव; व—'तान्यपि' नास्ति।

---

३. इ.उ.ना.पा.हा—'त्वम्' नास्ति। ४. इ.उ.ना.पा.हा—'तथा' नास्ति।

अन्तस्ते दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षम् ।

अन्तः । ते । दधामि । द्यावापृथिवी इति द्यावा–पृथिवी । अन्तः । उरु । अन्तरिक्षम् ।

हे मघवन् धनवन् इन्द्र, सोमेन धनेनान्नेन वा, इमं गृह्यमाणं सोमं होमकाले सूर्यात्मना रयित्वा, पाहि पिब, पीत्वा च अन्तः उदरस्य मध्ये यच्छ स्थापय । पिबतेर्लोटि " बहुलं छन्दसि "
५ ( पा २.४.७३ ) इति शपो लुक् । धात्वादित्वान्न निहन्यते । एवम् उरुष्य रक्ष राय धनानि च यजमानस्य स्वभूतानि । छान्दसः कण्ड्वादियगन्तः *उरुष्यतिः ( पा ३.१.२७ ) । किंच इषः अन्नानि सं यजस्व सम्यक् सगमय, देहि वा यजमानाय । यद्वा–इषः प्रजा एषणीयत्वात्, ताः सम्यक् याजय, यथा यजनशीला भवन्ति तथा कुरु । अन्तर्भावितण्यर्थोऽत्र यजि ( पा १.४.५५ ) । णिलुग्वा " बहुलं संज्ञाछन्दसो " ( उ १.९० ) इति । किंच
१० ते तव प्रसादादहं द्यावापृथिवी द्यावापृथिव्यौ उरु च अन्तरिक्षम् अनेन ग्रहेण अन्तः दधामि अन्तर्हितं करोमि भ्रातृव्याणां, यथा भ्रातृव्यैरदृश्यमाना एषु लोकेषु यजेम । यद्वा– भ्रातृव्याणामस्माकं च मध्ये इमान् लोकान् दधामि एभ्यो लोकेभ्यः तानपसारयामीत्यर्थः । यद्वा–द्युप्रभृतिभिः शब्दैस्तत्स्था भ्रातृव्या उच्यन्ते । तानन्तर्दधामि अन्तरितान् करोमि नाशयामीत्यर्थः । " एभिरेव लोकैर्यजमानो भ्रातृव्यानन्तर्धत्ते " ( तैस ६.४.६ ) इति ब्राह्मणम् ।
१५ यद्वा–द्युप्रभृतीन् लोकान् मदीयेन तेजसाऽन्तर्दधामि छादयामि यथाहमेवेदं सर्वं स्याम्,

चैव देवा परे ये चावरे तानुभयानन्वाभजत् सजोषा देवैरवरैः परैश्चेत्याह ये चैव देवाः परे ये चावरे तानुभयानन्वाभजति " ( तैस ६.४.६ ) इति । यदैश्वर्यं प्राप्तुं वयमिच्छामस्तत् इदं सर्वमिन्द्र एवाभूत् प्राप्तवानिति मत्वा ते देवा अब्रुवन्–हे मघवन्, त्वामन्वस्मानपि भागिनः कुर्विति । तत इन्द्रः 'सजोषा' इत्यादि वाक्येनानुज्ञां । तयाऽनुज्ञया ये चोत्कृष्टा देवा ये च निकृष्टास्तान् सर्वान्
२० भागिनोऽकरोत् । अतोऽत्रापि 'सजोषा' इत्याद्युक्तया सर्वान् भागिनः करोति ॥ 'मादयस्व' इत्यत्र यथा भागलाभेन देवानां हर्षस्तथा यज्ञविघ्नाभावेन यजमानस्यापि हर्षं द्योतयति–" अन्तर्यामे मघवन् मादयस्वेत्याह यज्ञादेव यजमानं नान्वेतीति " ( तैसं ६.४.६ ) इति ॥ मन्त्रोपक्रमगतस्य गृहीतशब्दस्य प्रयोजनमाह–" उपयामगृहीतोऽसीत्याहापानस्य धृत्यै " ( तैस ६.४.६ ) इति । अपानदेवताया अन्तर्यामाभिमानित्वात् तस्मिन् गृहीते प्राणिनामपानो धृतो भवति ॥ नात्रोपांशोरिवाञ्जलिना ग्रहणं किंतु
२५ दशापवित्रेणाभिषुतया धारयेत्यभिप्रेत्याह–" यदुभावपवित्रौ गृह्येयातां प्राणमपानोऽनु न्यृप्येत् प्रमायुकः

*[ द्र निरुक्त ५.२३–उरुष्यति रक्षाकर्मा । ] ।

५. त–जने । ६. त–हर्षेगमस्त्वया । ७. इ उ ना पा दा–विघ्नाभावेन । ८. त–मानित्वात् ।
९. इ उ न पा–दशापवित्रगतया, ना दा–दशापवित्रगतनाभिरत्( सु )तया ।

सजोषा देवैरवरैः परैश्चान्तर्यामे मघवन् मादयस्व

सजोषा इति स–जोषाः । देवैः । अवरैः । परैः । च ।

अन्तर्याम इत्यन्तः–यामे । मघवन्निति मघ–वन् । मादयस्व ।

यथान्तर्यामेण सर्वमन्तर्धाय त्वमेव सर्वमभूः । यथा—"ते देवा अमन्यन्तेन्द्रो वा इदमभूद्वयं स्म इति तेऽब्रुवन् मघवन्नु न आ भज" (तैसं ६·४·६) इति । इन्द्र एवेदं सर्वमभूत्, वयमपि भवितुमिच्छामः, तस्मात् मघवन्, अस्मानाभज विभक्तान् कुर्विति तेऽब्रुवन् देवाः, मघवां-स्तानपि ये चैव देवाः परे उपरि स्थिताः उत्तमाः ये चावरे अधः स्थिता निकृष्टाः तानुभयानन्वा-भजत् विभक्तानकरोदिति । तदिदमाह—[7]अवरैः [7]परैः [7]च [7]देवैः [7]सजोषाः सह प्रीयमाणः सेव्यमानो वा । "परादिश्छन्दसि बहुलम्" (पा ६·२·१९९) इत्युत्तरपदाद्युदात्तत्वम् । [7]अन्तर्यामे हूयमाने [7]मघवन्, [7]मादयस्व तर्पयस्व [8]यज्ञात्मना [8]स्थितमात्मानं द्विप्रकारांश्च देवान् न केवलमात्मानमेव । "यज्ञादेव यजमानं नान्तरेति" (तैसं ६·४·६) इति ब्राह्मणम् । "देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा उपांशौ यज्ञं संस्थाप्यमपश्यन्" (तैसं ६·४·६) इत्यादि ब्राह्मणम् । "यदुभावपवित्रौ गृह्येयाताम्" (तैसं ६·४·६) इत्यादि च । केचिदाहुः — हे मघवन्, सोममिममन्तर्यच्छ [9]आस्यादौ निधाय तिरोहितं कुरु । तथा च कृत्वा पाहि रक्ष यथा न मे भ्रातृव्याः पश्येयुः । "उरुष्य रायः" (तैसं १·३·३) इत्यादि पूर्ववत् ॥

स्यात् पवित्रवानन्तर्यामो गृह्यते प्राणापानयोर्विधृत्यै" (तैसं ६·४·६) इति । प्राणवृत्तिः स्वभावतो बहिर्गच्छत्यतः प्राणरूपस्योपांशोः पवित्रेण नियमनं नापेक्षितम् । यद्यन्तर्यामोऽपि तद्वदपवित्रः स्यात् तर्ह्यनियमितत्वात् तद्रूपोऽपानोऽपि निर्गच्छन्तं प्राणमनु निर्गच्छेत् । ततः प्राणापानयोरभावात् म्रियेत । पवित्रेण नियमिते त्वपानेऽग्रे तदविनाभूतः प्राणो निर्गच्छन्नपि नात्यन्तं देहं परित्यजेत् । तस्मादुभयोर्धार-णाय दशापवित्रेणान्तर्यामं गृह्णीयात् । तत्प्रकारः सूत्रेऽभिहितः—"अदाभ्यांशुमुपांशुपावनौ[10] चापिसृज्य सर्वेऽध्वर्यवो दिग्भ्यो महाभिषवमभिषुण्वन्ति । ....। अभिषुतमध्वर्युरञ्जलिना संसिञ्चति । तमुन्नेताऽन्त-र्वेद्येणोद्धृत्योत्तरत आधवनीयेऽवनयति । ....। उद्गातारो द्रोणकलशं प्रतिष्ठाप्य तस्मिन्नुदीचीनं दशापवित्रं वितन्वन्ति । ....। पवित्रस्य यजमानो नाभिं कृत्वा तस्मिन् होतृचमसेन धारां स्रावयति । उदञ्चनेनो-न्नेताऽऽधवनीयाद्धोतृचमस आनयति । संतता धारा स्रावयितव्या । .....। धारायाः अन्तर्यामं गृह्णाति । सर्वांश्चातो ग्रहाना ध्रुवात्" (आपश्रौ १२·१२·१–१२; १३·१–५) इति ॥

७. तं.ति.पं.व–यं सूर्यात्मना । ८. व–स्थित्वात्मानम् । ९. मं–तस्याधोदेशे ।

१०. ना.हा–°सवनौ ।

स्वांकृतोऽसि मधुमतीर्न इषस्कृधि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाऽष्टूर्वन्तरिक्षमन्विहि स्वाहा त्वा सुभवः सूर्याय देवेभ्यस् (१) त्वा मरीचिपेभ्य एष ते योनिरपानाय त्वा ॥ ३ ॥

[ देवेभ्य सप्त च ]

५ स्वाकृत । असि । मधुमतीरिति मधु–मती. । नः । इषं । कृधि । विश्वेभ्य । त्वा । इन्द्रियेभ्य । दिव्येभ्य. । पार्थिवेभ्य । मनं । त्वा । अष्टु । उरु । अन्तरिक्षम् । अन्विति । इहि । स्वाहा । त्वा । सुभव इति सु–भव । सूर्याय । देवेभ्य. (१) । त्वा । मरीचिपेभ्य इति मरीचि–पेभ्य । एष । ते । योनिः । अपानायेत्यप–अनाय । त्वा ॥ ३ ॥

[ मैस १·३·५, कासं ४ १, कपिस ३ १; वास ७ ४–६ ]

१० 'स्वाकृतोऽसि' इति ग्रहमादत्ते ॥ 'मधुमतीर्नः' इतीक्षते ॥ 'विश्वेभ्य.' इत्युन्माष्टि ॥ 'मनस्त्वा' इत्युत्तिष्ठति ॥ 'उर्वन्तरिक्षम्' इत्येति ॥ 'स्वाहा' इत्याहवनीये जुहोति ॥ 'देवेभ्य' इति परिधौ निमार्ष्टि[10] ॥

'एष ते योनि' इति आग्रयणस्थाल्या सस्रावमवनयति[11] ॥

उत्तरत उपांशुसवनेन संस्पृष्ट सादयति—'अपानाय त्वा' इति ॥ व्याख्याता

१५ मन्त्रा. ( तैस १ ४ २ ) ॥

॥ इति चतुर्थप्रपाठके तृतीयोऽनुवाक ॥

स्वांकृत इति ॥ ग्रहणादूर्ध्वमन्तर्यामस्योपांशुवत् स्वांकृतादिमन्त्रप्रयोग. कर्तव्यः । 'स्वांकृतोऽसि मधुमतीर्न इषस्कृधि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्य पार्थिवेभ्यो मनस्त्वाष्टूर्वन्तरिक्षमन्विहि स्वाहा त्वा सुभव सूर्याय देवेभ्यस्त्वा मरीचिपेभ्य एष ते योनिरपानाय त्वा' इति । एते मन्त्रा उपेक्षिता ॥

२० उपांश्वन्तर्यामपात्रयोरासादने मध्यगतेनोपांशुसवनेन सह स्पर्शं विधत्ते—"प्राणापानौ वा एतौ यदुपांश्वन्तर्यामौ व्यान उपांशुसवनो यं कामयेत प्रमायुक स्यादित्यसंस्पृष्टौ तस्य सादयेद्व्यानेनैवास्य प्राणापानौ वि छिनत्ति ताजक् प्र मीयते य कामयेत सर्वमायुरियादिति संस्पृष्टौ तस्य सादयेद्व्यानेनैवास्य प्राणापानौ सं तनोति सर्वमायुरेति" ( तैसं ६·४ ६ ) इति । अत्र सूत्रम्—"*सर्वमाग्रयणस्थाल्यां संपातमानीयैष ते योनिरपानाय त्वेति रिक्त पात्रमायतने सादयित्वा[11] व्यानाय त्वेति ते अन्तरेण

२५ ग्रावाणमुपांशुसवन दक्षिणामुख संस्पृष्टं पात्राभ्याम्" ( आपश्रौ १२ १३·९ ) इति ॥

अत्र विनियोगसंग्रह —

"उपान्तर्यामकस्तत्र स्वांकृतादि तु पूर्ववत्" ॥ इति ॥

[12]–अत्र मीमांसाच्छन्दसी न स्त–[12] ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये

३० प्रथमकाण्डे चतुर्थप्रपाठके तृतीयोऽनुवाक ॥

१० तं ति.व–उन्मार्ष्टि । ११ मै–*अपनयति ।

*आपश्रौसूत्रे तु 'असर्वं' इति पाठ. । ११. आ–सादयति । १२–१२. आ.पा हा–'अत्र - स्त' नास्ति ।

आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार।
उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयम् ॥
उपयामगृहीतोऽसि वायवे

एति । वायो इति । भूष । शुचिपा इति शुचि—पाः । उपेति । नः ।
सहस्रम् । ते । नियुत इति नि—युतः । विश्ववारेति विश्व—वार ।
उपो इति । ते । अन्धः । मद्यम् । अयामि । यस्य ।
देव । दधिषे । पूर्वपेयमिति पूर्व—पेयम् ॥
उपयामगृहीत इत्युपयाम—गृहीतः । असि । वायवे ।

ऐन्द्रवायवपात्रेण वायव्यं गृह्णाति—'आ वायो' इति चतुष्पदया त्रिष्टुभा ॥ हे वायो, शुचिपाः शुचेः शुद्धस्य पातः । उपेत्युपसर्गश्रुतेर्योग्यं क्रियापदमध्याह्रियते । नः अस्मानुपेत्य, इममस्मदीयं [1]-यज्ञं सोमपानेन-[1] आ भूष आ समन्तादलंकुरु । यद्वा—अस्मदीयं यज्ञमागमनेनालंकुरु । भूष अलंकारे भौवादिकः । कथमनेनागमनेन यज्ञोऽलंक्रियत इत्याह—विश्ववार निजबलेन विश्वस्यावारक, विश्वेषां वा वरणीय, ते तव सहस्रं नियुतः अश्वाः, अतस्त्वदागमनं भूषणाय भवति । [2]-वायोरश्वा *नियुतः-[2] । यद्वा—वायो, आभूषय यज्ञम् । तदर्थं किं क्रियतामित्याह—तव सहस्रं नियुतः अस्मानुपागच्छन्तु । यद्वा—भूषेत्यामन्त्रितमेव, भूषयतीति भूषः अलंकर्ता । कस्य ? तस्य यत्र यत्र गच्छतीति । हे एवंगुणक वायो, तव

आ वायविति ॥ कल्पः—"ऐन्द्रवायवं गृह्णाति । आ वायो भूष शुचिपा इत्यनुद्रुत्योपयामगृहीतोऽसि वायवे त्वेति गृहीत्वोपयम्येन्द्रवायू इमे सुता इत्यनुद्रुत्योपयामगृहीतोऽसीन्द्रवायुभ्यां त्वेति गृहीत्वा पवित्रदशाभिः परिमृज्यैष ते योनिः सजोषाभ्यां त्वेति सादयति" ( आपश्रौ १२·१४·८–९ ) इति ॥ मन्त्रास्त्वेवं पठ्यन्ते—'आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार । उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयम् । उपयामगृहीतोऽसि वायवे त्वेन्द्रवायू इमे सुताः । उप प्रयोभिरागतमिन्दवो वामुशन्ति हि । उपयामगृहीतोऽसीन्द्रवायुभ्यां त्वैष ते योनिः सजोषाभ्यां त्वा' इति ॥ हे वायो, त्वमागत्य ग्रहान् भूष अलंकुरु । हे शुचिपाः शुद्धसोमपाः, त्वं नः अस्मानुपागच्छ । हे विश्ववार विश्वव्यापक, ते सहस्रं नियुतः सन्ति । *नियुच्छब्देन वायुवाहनभूता अश्वा उच्यन्ते । तव अन्धः सोमरसरूपमन्नं मद्यं हर्षकरं तस्मात् उपो समीपे त्वाम् अयामि प्राप्नोमि । हे देव, यस्य सोमस्य[1] संबन्धि रसद्रव्यं पूर्वपेयं प्रथममेव पातव्यमिति मनो दधिषे धृतवानसि तादृशेन सोमेन वामुपयामीत्यन्वयः । हे सोमरस, त्वमुपयामेन पृथिवीरूपदारुपात्रेण गृहीतः असि । त्वां वायवे गृह्णामि ।

१–१. मै—सोमं पानेन । २–२. मै—हे वायो नियुतमश्वा अस्मानुपयान्तु । *[ द्र. निघण्टु १·१५·१० ] ।

१. क.ना.पा.द्वा—सोमरसस्य, तं—सोमरस' ।

त्वेन्द्रवायू इमे सुताः । उप प्रयोभिरा गतमिन्दवो वामुशन्ति हि ।
त्वा । इन्द्रवायू इतीन्द्र-वायू । इमे । सुता । उपेति । प्रयोभिरिति प्रयः-भि. । एति । गतम् ।
इन्दवः । वाम् । उशन्ति । हि ।

सहस्र नियुतोऽस्मानुपयन्तु तै. सहित सन्नस्मत्सकाशमागच्छेत्यर्थ । उपसर्गद्वयेन क्रियापदमध्या-
५ हियते । उपो इत्युपशब्दस्यार्थे वर्तते । उपो अयामि समीप प्रापयामि । किं ? सोमम् । अह
तुभ्यमागताय सोममुपहरामि । इ गतौ भौवादिक । अन्तर्भावितण्यर्थ (पा ३.१.२६),
गिलुग्वा (उ १९०) । कीदृशमित्याह—अन्ध अदनीयम् । "अदेर्नुम्धश्च" (उ ६५५)
इत्यसुन् । मद्य मदकरम् । "गदमदचर" (पा ३ १ १००) इत्यादिना यत् । "यतोऽनाव"
(पा ६ १ २१३) इत्याद्युदात्तत्वम् । पुनश्च सोमो विशेष्यते—हे देव वायो, यस्य पूर्व-
१० पेय प्रथमपान त्व दधिषे दधासि आचरसि, य लब्ध्वा प्रथम पिबसि, अन्यमग्रे पिबन्त न
क्षमसे यागेषु । "छन्दसि लुङ्लङ्लिट." (पा ३.४ ६) इति दधातेर्लिट् । पिबतेर्भावे
"अचो यत्" (पा ३ १ ९७) । कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६ २ १३९) । "यतो-
ऽनाव" (पा ६.१.२१३) ॥

एवमिमामनुद्रुत्य गृह्णाति ॥ हे सोम, त्वमपि उपयामगृहीत, असि, अतो वायवे त्वा
१५ गृह्णामीति शेषः । जुष्टमिति केचिच्छेषमिच्छन्ति, इष्ट सेव्य वा गृह्णामीत्यर्थः ॥

तस्मिन्नैन्द्रवायव गृह्णाति—'इन्द्रवायू' इति गायत्र्या ॥ हे इन्द्रवायू, इमे सोमा.
सुता अभिषुता युष्मदर्थं सम्यक् सस्कृता, अत. उप आ गतम् उपागच्छतम् । "बहुल
छन्दसि" (पा २ ४ ७३) इति शपो लुक् । प्रयोभि. अन्नै सह यान्यस्मभ्यं दास्यसे
तान्यप्यादाय आगच्छतमिति । प्रीणातेरसुन्प्रत्यय (उ ६२८) । हि यस्मादर्थे, यस्मादेते इन्दव
२० सोमा वा युवाम् उशन्ति कामयन्ते युवयोरागमन प्रतीक्षन्ते, तस्मादुपागच्छतमिति । "उन्देरि-
च्चादे" (उ १२) इत्युप्रत्यय, आदे इ । "यद्धितुपरं छन्दसि" (पा ८.१ ५६) इति
निघातप्रतिषेधः ॥

हे इन्द्रवायू इमे सोमा सुता अभिषुता., अतो युवां प्रयोभि एतैः सोमरसरूपैरन्नैर्निमित्तभूतै
उप समीप आ गतम् आगच्छतम् । हि यस्मात् इन्दव सोमरसा वाम् उशन्ति युवा
२५ कामयन्ते । हे सोम, दारुपात्रेण गृहीत असि । इन्द्रवायुभ्या त्वा गृह्णामि । हे पात्र, एष स्तरस्यैक-
देश ते योनि तव स्थानम् । अतोऽत्र सजोषाभ्यां समानप्रीतिभ्यामिन्द्रवायुभ्यामिन्द्रवाय्वर्थं त्वा
सादयामि । एते मन्त्रा उपेक्षिताः ॥ द्विदेवत्यग्रहेष्वस्य प्राथम्य विधत्ते—"वाग्वा एषा यदैन्द्रवायवो
यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते वाचमेवानु प्र यन्ति" (तैसं ६.४.७) इति । ऐन्द्रवायवमैत्रावरुणाश्विन
ग्रहाणामभिमानिदेवता वाक्चक्षु श्रोत्राभिधा । तस्मादैन्द्रवायवो वागित्युच्यते । तस्य प्राथम्ये सति

३० २ त.ति.सं व-उच्छिष्टम् ।

स्थाल्यादीनि तु साक्षादेव भूमेः कार्याणि । तस्मादुपयामगृहीत , इत्येव मन्त्रो ग्रूते ॥ ५इन्द्रवाय्वो-रेकस्मिन पात्रे सह ग्रहण विधत्ते—" वाग्वै पराच्यव्याकृतावदत् ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति सोऽब्रवीद्वरं वृणै मह्यं चैवैष वायवे च सह गृह्याता इति तस्मादैन्द्रवायव सह गृह्यते तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत् तस्मादियं व्याकृता वागुद्यते " ( तैसं ६.४ ७ ) इति । येयं वैदिक
५ मन्त्ररूपा वाक् सा पूर्वं पराची समुद्रघोषवदेकस्वरूपेण वर्तमाना तस्या वाक्यैतावदेक वाक्य, तस्मिन् वाक्येऽप्येतावदेकं पद, तस्मिन् पदेऽपीयं प्रकृतिरयं प्रत्यय इत्येव विभज्य सर्वत्र करण व्याकरण, तद्रहित-त्वादव्याकृतैवावदत् प्रवृत्ता । तामिन्द्रो मध्यतोऽवक्रम्य वाक्यपदादिरूपेण तत्र तत्र विच्छिद्य ""विभिन्नां कृतवान्" ॥ ऐन्द्रवायवग्रहणमुपसंहरति—" तस्मात् सकृदिन्द्राय मध्यतो गृह्यते द्विर्वायवे द्वौ हि स वराववृणीत " ( तैस ६ ४ ७ ) इति । यस्मादिन्द्र एकमेव सहग्रहणरूप वरमवृणीत् तस्मात् सकृदेवेन्द्रस्य
१० सोमग्रहणम् । यस्माच्च वाच मध्यतो विभक्तवांस्तस्मादुभयोर्वायवर्थग्रहणयोर्मध्य इन्द्रार्थं ग्रहणम् । ' आ वायो भूष ' इति केवलस्य वायोरादौ ग्रहणम् । ' इन्द्रवायू इमे सुता ' इत्यत्र वायुः पश्चात् पठ्यते । तस्मादिन्द्रस्य मध्ये स्थानम् । तस्माद्वायोर्ग्रहाग्रत्वमेको वर सर्वपात्राणां वायव्यत्व द्वितीयो वर । तस्मात्तस्य द्वि. सोमग्रहणम् ॥
"इत आरभ्य" विनियोगसंग्रह षट्त्रिंशानुवाकस्यान्त उदाहरिष्यते ॥
१५ अथ मीमांसा ॥ दशमाध्यायस्य पञ्चमपादे चिन्तितम्—
" पुरोपांशोरुत स्वस्य स्थाने स्यादैन्द्रवायव ।
आद्योऽग्रत्वनिर्धैव "धारायुक्ताग्रतोदित " ॥ ( जैन्या १० ५ ३० ) इति ॥
ज्योतिष्टोमे श्रूयते—" ऐन्द्रवायवाग्रा ग्रहा गृह्यन्ते " ( तैसं ६ ४.७ ) इति । ""मन्त्रकाण्ड-विधिकाण्डयोर्ग्रहाणामय पाठक्रम —उपांशुग्रह प्रथम , अन्तर्यामग्रहो द्वितीय , ऐन्द्रवायवस्तृतीय ,
२० मैत्रावरुणग्रहश्चतुर्थ इत्यादि । तत्रैन्द्रवायवस्याग्रत्वविधानादुपांशुग्रहात् पूर्वमेव ग्रहणमिति पूर्व पक्ष । नैतद्युक्तम् । अग्रत्वस्य धाराग्रहापेक्षत्वात् । ऐन्द्रवायवादयो धाराग्रहा । तद्वाक्ये ' धारया गृह्णाति ' इति श्रुतत्वात् । एव सति पाठक्रमो न बाध्यते । तस्मादैन्द्रवायव. स्वस्यैव स्थाने ग्रहीतव्य' ॥
तत्रैवान्यच्चिन्तितम्—
" सर्वादौ स्वस्य वा स्थाने काम्य स्यादैन्द्रवायव. ।
२५ पुनर्विधेरादिमोऽस्य कामायैतद्विधानत " ॥ ( जैन्या १० ५ ३१ ) इति ॥
ज्योतिष्टोम एव श्रूयते—" ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात य कामयेत यथापूर्वं प्रजा. कल्पेरन् " ( द्र तैस ७ २ ७ ) इति । सोऽयं काम्य" ऐन्द्रवायव सर्वेषामुपांशुप्रभृतीनां ग्रहाणामादौ स्यात् । कुत. ? धाराग्रहादित्वस्य पूर्वमेव सिद्धौ सत्यां पुनरप्यग्रताभिधानादिति प्राप्ते ब्रूम —नात्र सर्वा-ग्रत्व विधातु शक्यम् । धाराग्रहाणां प्रकृतत्वात् । अतो यथाप्राप्ताग्रत्वोपेताना धाराग्रहाणा काममयोगोऽत्र
३० विधीयत इति स्वस्थान एवाग्रमैन्द्रवायवग्रह ॥

४. ख ना हा-ऐन्द्रवाय्वो॰ । ५-५ इ उ त भा पा हा-' विभिन्ना कृतवान् ' नास्ति, ख-विभिन्न कृतवान् । ६-६ इ उ ना पा हा-' इत आरभ्य ' नास्ति । ७ इ उ ख.पा.हा-धारायुक्ताग्रतो॰, त-धारायुक्त्यग्रतो॰ । ८-८ इ उ त पा हा-' मन्त्र काण्ड काम्य ' नास्ति ।

ऐन्द्रवायवग्रहः ]

द्वितीयाध्यायस्य तृतीयपादे चिन्तितम्—

" रथन्तरं साम सोमे भवेत्तद्वत् बृहज्जगत् ।
ऐन्द्रवायवशुक्राग्रयणाग्राश्च ग्रहाः श्रुताः ॥
रथन्तरादिसंयुक्तमन्यत्कर्माथ वा गुणः ।
गायत्र्यादियुतात् पूर्वादन्यद्व्यावृत्तितो गुणैः ॥
सोमशब्दप्रकरणे ज्योतिष्टोमसमर्पके ।
ग्रहाग्रत्वं गुणस्तत्र व्यावृत्तिस्तु परस्परम् " ॥ ( जैन्या २·३·१–२ ) इति ॥

ज्योतिष्टोमप्रकरणे श्रूयते—" यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् । यदि बृहत्सामा शुक्राग्रान् । यदि जगत्सामाऽऽग्रयणाग्रान् " ( आपश्रौ १२·१४·१ ) इति[9] । सोमशब्देन सोमलतासाधनको यागोऽभिधीयते । तस्मिंश्च यागे माध्यंदिनसवने पृष्ठस्तोत्रे रथन्तरबृहज्जगन्नामकानि सामानि विकल्पेन विहितानि । ' अभि त्वा शूर ' इत्यस्यां योनावुत्पन्नं रथन्तरम्[*] । ' त्वामिद्धि हवामहे ' इत्यस्यामुत्पन्नं बृहद्[*] । जगतीछन्दस्कायामुत्पन्नं जगत्[*] । ऐन्द्रवायवः मैत्रावरुणः आश्विनः शुक्रः मन्थी आग्रयण उक्थ्यः ध्रुव इत्यादयो ग्रहाः प्रातःसवने गृह्यन्ते । दारुपात्रेषु[10] सोमरसस्य ग्रहणाद्ग्रहा भवन्ति । सोमयागस्य रथन्तरसामोपेतत्वपक्षे तेषु ग्रहेष्वैन्द्रवायवः प्रथमं ग्रहीतव्यः । बृहत्सामोपेतत्वपक्षे शुक्रः प्राथमिकः । जगत्सामोपेतत्वपक्ष आग्रयणः प्राथमिक इति विषयवाक्यार्थः । तत्र प्रकृतो ज्योतिष्टोमो गायत्र्यादिसामोपेतः । तद्व्यावृत्त्यर्थमिह रथन्तरादयो गुणाः कीर्त्यन्ते । तस्मादैन्द्रवायवाग्रत्वादिगुणोपेतानि कर्मान्तराणि विधीयन्त इति प्राप्ते ब्रूमः—' यदि रथन्तरसामा सोमः स्यात् ' इत्युक्तौ यः सोमशब्दस्तेन प्रकरणेन चात्र[11] ज्योतिष्टोमः समर्प्यते । तस्मिन् समर्पिते यथोक्तग्रहाग्रत्वं[12] गुणो विधीयते । न च रथन्तरादिगुणानुवादेन ज्योतिष्टोमस्य व्यावृत्तिः संभवति । तस्य प्रातःसवनादौ गायत्र्यादिसामोपेतत्वेऽपि पृष्ठस्तोत्रे रथन्तरादियोगस्यापि संभवात् । किं तर्हि व्यावर्त्यत इति चेत् रथन्तरबृहज्जगतां [13]परस्परव्यावृत्तिरिति [14]वदामः । रथन्तरादयः पृष्ठस्तोत्रे विकल्पिताः । तत्र रथन्तरानुवादेनेतरौ पक्षौ व्यावर्त्येते । एवमितरत्रापि । तस्मादयं गुणविधिः । ननु यः प्रकृतो ज्योतिष्टोमः सोऽन्येषां सोमयागानां प्रकृतिः । न हि प्रकृतौ जगत्यामुत्पन्नं साम विहितमस्ति । अत एव दशमाध्याये पञ्चमपादस्य पञ्चदशाधिकरणे प्रथमवर्णके ' यदि जगत्सामा ' इति वाक्योक्तमाग्रयणाग्रत्वं विकृतौ [15]विषुवन्नामके मुख्येऽहनि व्यवस्थापितम् । बाढम्, तथापि नात्र कश्चिद्विरोधः । आग्रयणाग्रत्ववाक्यं न कर्मान्तरविधायकं किं त्वन्येन विहिते सोमयागे यत्र जगत्साम संभवति तत्र गुणविधायकमित्येतावत एवात्र प्रतिपाद्यत्वात् ॥

तृतीयाध्यायस्य पञ्चमपादे चिन्तितम्—

" ऐन्द्रवायवशेषस्य सकृद्भक्ष उतासकृत् ।
पूर्वन्यायात् सकृद्भक्षो द्विर्भक्षो वचनाद्भवेत् " ॥ ( जैन्या ३·५·८ ) इति ॥

ज्योतिष्टोमे योऽयमैन्द्रवायवग्रहस्तत्र संस्कार्यस्य सोमस्यैकत्वात् सकृदेव शेषकार्यमिति चेत् । नैवम् । " द्विरैन्द्रवायवस्य भक्षयति द्विर्ह्येतस्य वषट्करोति " (द्र.शांब्रा १३·६) इति वचनात् द्विर्भक्षणम् ॥

अथ छन्दः—' आ वायो भूष ' इति त्रिष्टुप् । ' इन्द्रवायू ' इति गायत्री ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

---

९. आ–' इति ' इत्यस्यानन्तरं ' तत्र ' । [*][ सासं २·१·१·११ ऊह्य १·१·१ ] । [*][ सासं २·२·१·१२ ऊह्य १·१·५ ] । [*][ सासं २·६·३·५ ऊह्य २·१·१२ ] । १०. तं–दारुपात्रेण । ११. इ.उ.ना.पा.हा–च । १२. आ.ना.हा–ग्रहाग्रत्वम्, इ.उ.ना.पा.हा–' यथोक्तग्रहाग्रत्वम् ' नास्ति ; १३. आ.क.ना.हा–परमार्थतः व्यावृत्तिरिति । १४. आ.क.ना.पा.हा–वक्ष्यामः । १५. आ.क.तं.ना.पा.मा.हा–विषुवनामके ।

अयं वां मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुतꣳ हवम् ।
उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वैष ते योनिर्ऋतायुभ्यां त्वा ॥ ५ ॥

[ अयं वां विꣳशति ]

अयम् । वाम् । मित्रावरुणेति मित्रा-वरुणा । सुतः । सोमः । ऋतावृधेत्यृत-वृधा ।
५ मम । इत् । इह । श्रुतम् । हवम् ।
उपयामगृहीत इत्युपयाम-गृहीतः । असि । मित्रावरुणाभ्यामिति मित्रा-वरुणाभ्याम् ।
त्वा । एषः । ते । योनिः । ऋतायुभ्यामित्यृतायु-भ्याम् । त्वा ॥ ५ ॥

[ मैस १·३·७, वास ४·२, कपिसं ३ २, वास ७·९ ]

मैत्रावरुणं गृह्णाति—'अयं वाम्' इति गायत्र्या त्रिपदया ॥ हे मित्रावरुणा मित्रावरुणौ,
१० ऋतावृधा ऋतावृधौ, ऋतस्य सत्यस्य यज्ञस्य वा वर्धयितारौ । उभयत्र "सुपां सुलुक्" (पा ७·१ ३९) इत्याकारः । वृधेः क्विप् (पा ३ २ ७६)। "अन्येषामपि दृश्यते" (पा ६ ३·१३७) इत्युपपदस्य दीर्घः[1]। अयं सोमः वां युवयोः अर्थाय सुतः अभिषुतः । इत् इति हेतौ । यस्मादेवं तस्मात् इह अस्मिन् कर्मणि मम हवम् आह्वानं श्रुतं शृणुतम् । श्रुत्वा चागत्य इह सोमं पिबतमित्यर्थः । "भावेऽनुपसर्गस्य" (पा ३ ३ ७५) इति ह्वयतेः
१५ अप्, सम्प्रसारणं च । शृणोतेर्लेटि "बहुलं छन्दसि" (पा २ ४·७३) इति शपो लुक् ।

इमामनुद्रुत्य "उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा" इति गृह्णाति ॥ "देवताद्वन्द्वे च" (पा ६ २ १४१) इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् ॥

'एष ते योनिर्ऋतायुभ्यां त्वा' इति सादयति । ऋतं सत्यं यज्ञं वा आत्मनो यजमानानां वा इच्छतीति ऋतायुः । "छन्दसि परेच्छायामपि" (द्र पाभा ३·१·८) इति
२० क्यच् । "न च्छन्दस्यपुत्रस्य" (पा ७ ४ ३५) इतीत्वप्रतिषेधः । "क्याच्छन्दसि" (पा ३ २ १७०) इत्युप्रत्ययः । "मित्रं देवा अब्रुवन्" (तैस ६·४ ८) इत्यादि ब्राह्मणम् । "सोऽब्रवीद्वरं वृणै मत्त चैव मित्राय च" (तैस ६ ४ ८) इत्यादि च । "तावब्रूतां वरं वृणावहा एक एवाऽऽवत् पूर्वो ग्रहो गृह्यातै" (तैस ६·४ ८) इत्यादि च ।

॥ चतुर्थप्रपाठके पञ्चमोऽनुवाकः ॥

२५ अयमिति ॥ कल्पः—"अयं वां मित्रावरुणेति मैत्रावरुणं गृहीत्वा[1] शृतशीतेन पयसा श्रीत्वा, एष ते योनिर्ऋतायुभ्यां त्वेति सादयति" (आपश्री १२·१४·१२) इति ॥ मन्त्रपाठस्तु—'अयं वां मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुतꣳ हवम् । उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वैष ते योनिर्ऋतायुभ्यां त्वा' इति ॥ हे ऋतावृधा सत्यस्य वर्धकौ मित्रावरुणौ, वां युवयोः सोमः सुतः अभिषुतः । इद् इति हेतौ । यस्मादभिषुतस्तस्मात् इह कर्मणि मम[2] हवं मदीयमाह्वानं श्रुतं युवां

३० १-१ ब-द्विवचनस्याकारः । २. ब मे-'इह' नास्ति ।

१. इ.उ.ना.पा.भा.हा-'गृहीत्वा' नास्ति । २ इ उ ना.पा भा हा-'मम' नास्ति ।

श्रृणुतम्। [४]ऋतायुभ्यां सत्यमिच्छद्भ्यां [५]मित्रावरुणाभ्याम्। स्पष्टमन्यत्॥ मन्त्रानुपेक्ष्य गृहीतस्य सोमरसस्य क्षीरमेलनं विधित्सुः प्रस्तौति—"मित्रं देवा अब्रुवन्त्सोमꣳ राजानꣳ हनामेति सोऽब्रवीन्नाहꣳ सर्वस्य वा अहं मित्रमस्मीति तमब्रुवन् हनामैवेति सोऽब्रवीद्वरं वृणै पयसैव मे सोमꣳ श्रीणन्निति तस्मान्मैत्रावरुणं पयसा श्रीणन्ति तस्मात् पशवोऽपाक्रामन् मित्रः सन् क्रूरमकरिति" (तैसं ६·४·८) इति। हनाम त्वया सहिता वयमित्यर्थः। नाहं सोमं हन्मीति शेषः। सर्वमित्रत्वमहनने हेतुः। अत एवास्माकमपि मित्रत्वात् हनामैवास्मदीयं कार्यं हननरूपं त्वया सहैव कुर्मः। श्रीणन् मिश्रयन्तु[३]। क्रूरं सोमवधं कृतवतस्तस्मात् मित्राद्भीताः पशवोऽपक्रान्ताः॥ विधत्ते—"क्रूरमिव खलु वा एष करोति यः सोमेन यजते तस्मात् पशवोऽप क्रामन्ति यन्मैत्रावरुणं पयसा श्रीणाति पशुभिरेव तन्मित्रꣳ समर्धयति पशुभिर्यजमानम्" (तैसं ६·४·८) इति। तत् तेन श्रयणेन मित्रदेवयजमानयोः पशुसमृद्धिर्भवति॥ अस्तु यजमानस्य पशुसमृद्धिर्मित्रस्य तु कुतस्त्येत्याशङ्क्य तदर्थमेव [४]वरस्य वृतत्वादित्याह—"पुरा खलु वावैवं मित्रोऽवेदप मत्क्रूरं चक्रुषः पशवः क्रमिष्यन्तीति तस्मादेवमवृणीत" (तैसं ६·४·८) इति। क्रूरं सोमवधं कृतवतो मत्तोऽपक्रमिष्यन्तीत्यमुमर्थं मित्रः सोमवधात् पुरैव खल्ववेदीदिति वान्। तस्मादेव कारणात् पशुसमृद्धिहेतुं क्षीरमिश्रणमवृणीत॥ अथ मित्रावरुणयोरेकेनैव पात्रेण ग्रहणं विधत्ते—"वरुणं देवा अब्रुवन् त्वयाऽꣳशभुवा सोमꣳ राजानꣳ हनामेति सोऽब्रवीद्वरं वृणै मह्यं चैवैष मित्राय च सह गृह्याता इति तस्मान्मैत्रावरुणः सह गृह्यते तस्माद्राज्ञा राजानमꣳशभुवा घ्नन्ति वैश्येन वैश्यꣳ शूद्रेण शूद्रम्" (तैसं ६·४·८) इति। अंशं द्रव्यभागं भवते प्राप्नोतीत्यंशभूर्दायादः। सोमो वरुणश्च परस्परं दायादौ। "इन्द्रो वरुणः सोमो रुद्रः" (बृ १·४·११) इत्यादिना बृहदारण्यके क्षत्रियत्वेनैककुलवर्तित्वस्य समाम्नातत्वात्। यस्मादंशभुवा वरुणेन सह सोमं राजानं[५] हनामेति देवस्त्वं तस्माल्लोकेऽपि तथा कुर्वन्ति। तद्यथा—रामो विभीषणेनांशभुवा सहितो रावणं जघान। वैश्यशूद्रयोरप्युदाहार्यम्॥ [६]मैत्रावरुणग्रहस्यैन्द्रवायवानन्तर्यं विधत्ते—"न वा इदं दिवा न नक्तमासीदव्यावृत्तं ते देवा मित्रावरुणावब्रुवन्निदं नो वि वासयतमिति तावब्रूतां वरं वृणावहा एक एवाऽऽवत् पूर्वो ग्रहो गृह्याता इति तस्मादैन्द्रवायवः पूर्वो मैत्रावरुणाद्गृह्यते" (तैसं ६·४·८) इति। इदं कालस्वरूपमव्यावृत्तमविभक्तं पूर्वमासीत्। एतावदहरिति दिवा नाऽऽसीत्। एतावती रात्रिरिति नक्तं नाऽऽसीत्। इदमविभक्तं कालस्वरूपं नोऽस्मदर्थं[७] विवासयतं विभज्य स्थापयतम्। [८]आवत् आवाभ्यामस्मदीयग्रहादित्यर्थः॥ ननूपांश्वन्तर्यामावपि मैत्रावरुणात् पूर्वमेव गृहीतावित्याशङ्क्याह—"प्राणापानौ ह्येतौ यदुपाꣳश्वन्तर्यामौ" (तैसं ६·४·८) इति॥ प्राणापानयोः सतोः पश्चादितरेन्द्रियस्थितिरिति तयोः पूर्वभावित्वमविवादम्। इतरेषु तु ग्रहेष्वैन्द्रवायव एक एव मैत्रावरुणात् पूर्वः। वरं लब्ध्वाऽहोरात्रयोर्विभागमजनयतामित्याह[९]—"मित्रोऽहरजनयद्वरुणो रात्रिं ततो वा इदं व्यौच्छद्यन्मैत्रावरुणो गृह्यते व्युष्ट्यै" (तैसं ६·४·८) इति। सूर्योदयमारभ्य तदस्तमयपर्यन्तं कालोऽहरित्येवं मित्रः कल्पयामास। तदूर्ध्वं पुनः सूर्योदयपर्यन्ता रात्रिरित्येतद्वरुणस्य कल्पनम्। तत आरभ्य [१०]उभयकालस्वरूपं व्यौच्छद्विभक्तमासीत्। व्युष्ट्यै अहोरात्रविभागाय॥

[११]अथ छन्दः[११]—'अयं वाम्' इत्येषा गायत्री॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके पञ्चमोऽनुवाकः॥ ५॥

---

३. आ—मिश्रयेतुः; इ.क.ना.पा.हा—मिश्रयन्। ४. आ.क.ना.हा—च तस्य। ५. आ.क.ना.हा—'राजानम्' नास्ति। ६. आ.ना.हा—मैत्रावरुणस्यैन्द्र°। ७. आ.क—°दर्थम्। ८. इ.उ.पा.भां—'आवत्' नास्ति। ९. इ.उ.क.ना.पा.हा—°भागं जनयत इत्याह। १०. क.तं—उदय°। ११–११. इ.उ.ना.पा.भां.हा—'अथ छन्दः' नास्ति।

या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् । उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिर्माध्वीभ्यां त्वा ॥ ६ ॥

[ या वांमष्टादश ]

या । वाम् । कशा । मधुमतीति मधु-मती । अश्विना । सूनृतावतीति सूनृता-वती । तया । यज्ञम् । मिमिक्षतम् ॥ उपयामगृहीत इत्युपयाम-गृहीत. । असि । अश्विभ्यामित्यश्विभ्याम् । त्वा । एष । ते । योनि । माध्वीभ्याम् । त्वा ॥ ६ ॥

[ मैस १ ३ ८, कासं ४.२, कपिसं ३ २, वासं ७ ११ ]

बहिष्पवमाने स्तुते आश्विन गृह्णाति—' या वा कशा ' इति गायत्र्या त्रिपदया ॥ हे [v]अश्विना अश्विनौ। पूर्ववदाकार. ( पा ७ १ ३९ ) । [v]मधुमती [1]मधुरसवती, [v]सूनृतावती, [2]प्रियवचन सूनृत[2], तद्वती । " अन्येषामपि दृश्यते " ( पा ६ ३ १३७ ) इति दीर्घत्वम् । ईदृशी [v]या [v]वा युवयो. [v]कशा* वाक्प्रवृत्ति सुक्तिलक्षणा युष्मद्विषया अस्माभि क्रियमाणा, [v]तया हेतुभूतया ता श्रोतु [v]यज्ञम् इम [v]मिमिक्षतम् आगत्योत्पादयितुमिच्छतम् । मिहे सनि ( पा ३ १.७ ) ढत्वे ( पा ८ २ ३१ ) " षढो. कः सि " ( पा ८ २ ४१ ) इति कत्वम् । तया वाचा[3] करणभूतया यज्ञ निर्वर्तयतम् ॥

इत्यनुद्रुत्य ' उपयामगृहीतोऽस्यश्विभ्या त्वा ' इति गृह्णाति ॥

' एष ते योनिर्माध्वीभ्या त्वा ' इति सादयति ॥ मध्वस्यास्तीति मध्वम् मधुभाजन, दृति-रूप " यो ह वा मधुनो दृति " ( ऋस ८ ५१९ ) इत्यादौ प्रसिद्धम् । तदन्तात् मत्वर्थीय ईकार ( पा ५.२ १०९ वा २ ) । " ऋत्व्यवास्त्व्यवास्त्व° " ( पा ६ ४.१७५ ) इत्यादौ ' माध्वी ' इति निपात्यते । यद्वा—मध्वेव माध्वी । आग्नीध्रादिवत् स्वार्थेऽञ् ( पा ५.४ ३६ वा ५ ), माध्वीभ्यामिति मधुमद्भ्यामित्यर्थ । " यज्ञस्य शिरोऽच्छिद्यत ते देवा अश्विनावब्रुवन् " ( तैस ६ ४ ९ ) इत्यादि ब्राह्मणम्, " ते देवा अब्रुवन्पूतौ वा इमौ ' ( तैस ६ ४ ९ ) इत्यादि च, " तस्माद्बहिष्पवमाने स्तुत आश्विनो गृह्यते " ( तैस ६ ४ ९ ) इत्यन्तम्[4] । " ग्राव्णा ऐन्द्रवायव " ( तैस ६.४ ९ ) इत्यादि च ॥

॥ इति चतुर्थप्रपाठके षष्ठोऽनुवाक ॥

या वामिति ॥ कल्प —" आश्विन गृह्णाति । या वा कशेति ग्रहणसादनौ । द्रोणकलशा-द्धाराग्रहा परिप्लवया गृह्यन्ते । वचनादन्यत " ( आपश्रौ १२ १८ ९–११ ) इति ॥ पाठस्तु— ' या वा कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् । उपयामगृहीतोऽस्यश्विभ्या त्वैष ते योनि-र्माध्वीभ्यां त्वा ' इति ॥ हे [v]अश्विना अश्विनौ देवौ, [v]वा युवयो [v]या [v]कशा या वाक् [v]तया [v]यज्ञ [v]मिमिक्षतं सेक्तुमिच्छत निष्पादयतमित्यर्थ । कशासमानया निह्वयोत्प्रेरकत्वाद्वागेवात्र कशा । कीदृशी ? [v]मधुमती[1] परुषशब्दरहिता । सूनृतावती प्रियवचनोपेता । मधुना पूर्णो 'दृतिर्माध्वी । तादृशीभ्यामश्वि-मूर्तिभ्या त्वा सोम[3] सादयामि ॥

१ मै-मधुररसवती । २-२ मै-प्रियं सूनृत वचनम् । *[ निघण्टु १.११.४३, निरुक्त ९.१९ ] । ३ व मै-वा । ४ व-इति च ।

१. इ.ऊ ना या हा-' मधुमती ' नास्ति । २ व-अतिमाध्वी । ३ आ.ना हा-' गोमम् ' नास्ति ।

प्रातर्युजौ वि मुच्येथामश्विनावेह गच्छतम् । अस्य सोमस्य पीतये ।
उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिरश्विभ्यां त्वा ॥ ७ ॥

[ प्रातर्युजावेकान्नविंशतिः ]

प्रातर्युजाविति प्रातः–युजौ । वीति । मुच्येथाम् । अश्विनौ । एति । इह । गच्छतम् ।
अस्य । सोमस्य । पीतये ।

उपयामगृहीत इत्युपयाम–गृहीतः । असि । अश्विभ्यामित्यश्वि–भ्याम् । त्वा ।
एषः । ते । योनिः । अश्विभ्यामित्यश्वि–भ्याम् । त्वा ॥ ७ ॥

---

पुनरप्याश्विनग्रहणमन्त्रः—' प्रातर्युजौ ' इति गायत्री त्रिपदा । पूर्वेण सहास्य विकल्पः ॥ हे अश्विनौ यौ युवां प्रातर्युजौ प्रातर्योक्तारौ तौ वि मुच्येथां यजमानान्तरैर्विमुक्तौ भवतम्, अन्यानपि यजमानान् विहाय इह अस्मिन् कर्मणि आ गच्छतम् । किमर्थम् ? अस्य सोमस्य पीतये पानाय । " क्तिच्क्तौ च संज्ञायाम् " ( पा ३.३.१७४ ) इति क्तिच्, पानविशेषस्य संज्ञात्वात् ॥

इत्यनुद्रुत्य ' उपयामगृहीतोऽसि अश्विभ्यां त्वा ' इति गृह्णाति ॥

' एष ते योनिरश्विभ्यां त्वा ' इति सादयति ॥

॥ इति चतुर्थप्रपाठके सप्तमोऽनुवाकः ॥

---

**प्रातर्युजाविति** ॥ आश्विनग्रहार्थ एवान्यो विकल्पितो मन्त्र एवमाम्नायते—" प्रातर्युजौ वि मुच्येथामश्विनावेह गच्छतम् । अस्य सोमस्य पीतये । उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिरश्विभ्यां त्वा ' इति । हे अश्विनौ, युवां प्रातर्युजौ प्रातःकाल एवानेन यजमानेन युक्तौ सन्तावितरैर्यजमानैः वि मुच्येथाम् । इह कर्मणि आ गच्छतम् । किमर्थम् ? अस्य सोमस्य पीतये पानाय । स्पष्टमन्यत् ॥ एतान् मन्त्राननुपेक्ष्याऽऽश्विनग्रहणं विधत्ते—" यज्ञस्य शिरोऽच्छिद्यत ते देवा अश्विनावब्रुवन् भिषजौ वै स्थ इदं यज्ञस्य शिरः प्रति धत्तमिति तावब्रूतां वरं वृणावहै ग्रह एव नावत्रापि गृह्यतामिति ताभ्यामेत-माश्विनमगृह्णन् ततो वै तौ यज्ञस्य शिरः प्रत्यधत्तां यदाश्विनो गृह्यते यज्ञस्य निष्कृत्यै " ( तैसं ६.४.९ ) इति । यज्ञपुरुषः पुरा कदाचित् देवानां वस्तु गृहीत्वा देवैः सह योद्धुं सज्यं धनुर्वामहस्ते धृत्वा धनुष एकां कोटिं भूमौ द्वितीयां कोटिं गले च प्रतिष्कभ्यातिष्ठत् । तदानीमुपदीकानामभिर्जन्तुभिः भूमिस्पृष्टे[1] ज्याभागे भक्षिते सति त्रुटितज्याकस्य धनुष [2]ऊर्ध्वा कोटिः स्वयमुद्गच्छन्ती यज्ञस्य शिरोऽपि च्छित्त्वा स्वात्मना सहोर्ध्वमुदगमयत् । सोऽयं वृत्तान्तः प्रवर्ग्यब्राह्मणे समाम्नातः—" तस्य धनुर्विप्रवमाणᳲ शिर उदवर्तयत् " ( तैआ ५.१ ) इति । तदिदमत्र संगृह्यते—" यज्ञस्य शिरोऽच्छिद्यत " ( तैसं ६.४.९ ) इति ।

---

१. आ.ना.हा–भूमिष्ठे । २. आ.पां.हा–ऊर्ध्व ।

अत्राप्यग्निष्टोमेऽप्यावयोर्ग्रह एव ग्रहीतव्यः। यद्यपि " आश्विनं द्विकपालम् " ( तैसं २ ६·३ ) " आश्विनं धूम्रललाममालभेत " ( तैसं २·१·१० ) इतीष्टिपश्वोरस्त्यावयोर्हविस्तथाऽप्यग्निष्टोमे पूर्वं नास्ति। तत्रापि लेपमार्जनादिना नाऽऽवयोः परितोषः किं तु ग्रहेणैवेत्यभिप्रायः। तस्मादाश्विनग्रहणं यज्ञस्य निष्कृत्यै[3] भवति ॥ आश्विनग्रहणस्य स्तोत्रादूर्ध्वकालं विधत्ते—" तौ देवा अब्रुवन्नपूतौ वा इमौ मनुष्यचरौ भिषजाविति तस्माद्‌ब्राह्मणेन भेषजं न कार्यमपूतो ह्येषोऽमेध्यो यो भिषक् तौ बहिष्पवमानेन पवयित्वा ताभ्यामेतमाश्विनमगृह्णन् तस्माद्बहिष्पवमाने स्तुत आश्विनो गृह्यते " ( तैसं ६·४ ९ ) इति। छन्दोगानामुत्तरग्रन्थोपक्रमे[4] सूक्तत्रयम् " उपास्मै गायता नरः " ( सासं २·१·१·१–३ ) इत्यादिकमाम्नातं तच्च गायत्रसाम्ना गातव्यम्। तदिदं बहिष्पवमानस्तोत्रम्। यावश्विनौ [5]चिकित्सकरूपेण [6]मनुष्यचारित्रेण युक्तत्वादपूतौ तयोः स्तोत्रेण शुद्धत्वात् तत्स्तोत्रादूर्ध्वं तदीयग्रहस्य कालः ॥ विधत्ते—" तस्मादेव विदुषा बहिष्पवमान उपसद्यः पवित्रं वै बहिष्पवमान आत्मानमेव पवयते " ( तैसं ६·४·९ ) इति। एवं विदुषा स्तोत्रस्य शुद्धिहेतुत्वं जानतोपसद्योऽनुष्ठेयः। तत्प्रकारः सूत्रे दर्शितः—" उदञ्च ग्रहा बहिष्पवमानाय प्रह्वाः[illegible] समन्वारब्धा सर्पन्ति। अध्वर्युं प्रस्तोताऽन्वारभते प्रस्तोतारं प्रतिहर्ता प्रतिहर्तारमुद्गातोद्गातारं ब्रह्मा ब्रह्माणं यजमानः " ( आपश्रौ १२·१६ १७–१२·१७ १ ) इत्यादि ॥ अत्र प्रसङ्गाल्लौकिकचिकित्सायामदृष्टोपकारजनकं किंचिद्विधत्ते—" तयोस्त्रेधा भैषज्यं वि न्यदधुरग्नौ तृतीयमप्सु तृतीयं तस्मादुदपात्रमुपनिधाय ब्राह्मणं दक्षिणतो निषाद्य भेषजं कुर्याद्यावदेव भेषजं तेन करोति समर्धुकमस्य कृतं भवति " ( तैसं ६·४ ९ ) इति। अग्न्युदकब्राह्मणेष्वदृष्टद्वारेणोपकारकं यद्भैषज्यं त्रेधा स्थितं तद्देवास्तयोरश्विनोः स्थापितवन्तः। तस्मादश्विनोरनुग्रहाय लौकिको भिषगुदकुम्भं समीपे निधाय ब्राह्मणमुपवेश्याग्निं चोपसमिध्य भैषज्यं कुर्यात्। तथा सति यावदङ्गजातमावश्यकं तेन सर्वेण सह कृतत्वात् समृद्धं भैषज्यं भवति ॥ अत्र द्विदेवत्यानामैन्द्रवायवमैत्रावरुणाश्विनग्रहाणां तत्तत्प्रतिनिग्राह्यपात्रैः सह होमविधिमर्थवादेनोत्थितुकाम प्रश्नमुत्थापयति—" ब्रह्मवादिनो वदन्ति कस्मात् सत्याद्देकपात्रा द्विदेवत्या गृह्यन्ते द्विपात्रा हूयन्त इति " ( तैसं ६·४ ९ ) इति। ग्रहणकाले सोमानामैकैकपात्रत्वमुक्तरीत्या द्रष्टव्यम्। होमकाले द्विपात्रत्वं सूत्रे दर्शितम्—" हविर्धानं गच्छन् संप्रेष्यति वायव इन्द्रवायुभ्यामनुब्रूहीति। उपयामगृहीतोऽसि वाक्षसदसीत्यादित्यपात्रेण प्रतिप्रस्थाता द्रोणकलशादैन्द्रवायवस्य प्रतिनिग्राह्यं गृहीत्वा न[7] सादयति। ऐन्द्रवायवसादायाध्वर्युर्द्रोणकलशाच्च परिप्लवया राजानमुभौ निष्क्रम्य दक्षिणतोऽवस्थाय दक्षिणं परिधिसन्धिमन्ववहृत्याध्वर्युः यज्ञोऽयमस्तु देवा इति परिप्लवयाऽऽघारमाघारयति। . ।आश्राव्य प्रत्याश्राविते संप्रेष्यति वायव इन्द्रवायुभ्यां प्रेष्येति। वषट्कृते जुहोति। पुनर्वषट्कृते जुहुत। .। एवमुत्तराभ्यां ग्रहाभ्यां प्रचरत " ( आपश्रौ १२ २० १८–२४, १२ २१ ७ ) इति ॥ प्रश्नस्योत्तरं दर्शयति—" यदेकपात्रा गृह्यन्ते तस्मादेकोऽन्तरतः प्राणो द्विपात्रा हूयन्ते तस्माद्द्वौद्वौ बहिष्टात् प्राणाः " ( तैसं ६·४ ९ ) इति। चक्षुरादिप्राणानामन्तरेकारम्भकत्वात् बहिर्द्वारभेदेन द्वित्वात् तत्साम्यायैकपात्रत्वं द्विपात्रत्वं च कुर्यादित्यर्थः ॥ अत्र सवनीयपुरोडाशानां स्विष्टकृति हुते सति द्विदेवत्यग्रहप्रचारो विहितः। पुरोडाशसंबन्धिन इडोपाह्वानस्यापि स्विष्टकृदनन्तरभाविनो चोदकप्राप्तः कालस्तं बाधित्वा द्विदेवत्यशेषभक्षणादूर्ध्वमुपाह्वानस्योत्कर्षं विधत्ते—" प्राणा वा एते यद्द्विदेवत्याः पशव इडा यदिडां पूर्वां द्विदेवत्येभ्य उपह्वयेत पशुभिः प्राणानन्तर्दधीत प्रमायुकः स्याद्द्विदेवत्यान् भक्षयित्वेडामुप ह्वयते प्राणानेवाऽऽत्मन्धित्वा पशूनुप ह्वयते "

---

[3] त–' निष्कृत्यै ' इत्यस्यानन्तरं ' ह्यसमवत्यै '। [4] आ,पा हा–उत्तराग्रन्थोपक्रमे। [5] त—चिकित्सकरूपौ। [6] आ–मनुष्यचारित्रेण, क–मनुष्यचारित्र्येण। [7] आ ना पा हा–' न ' नास्ति।

(तैसं ६.४.९) इति । द्विदेवत्यशेषभक्षणेभ्यः प्रागिडायाः पशुरूपाया उपाह्वाने ⁸प्राणैर्व्यवहितत्वात् यजमानो म्रियेत । पश्चादाह्वाने तु नायं दोषोऽस्ति ॥ भक्षणे विशेषं विधत्ते—"वाग्वा ऐन्द्रवायवश्चक्षुर्मैत्रावरुणः श्रोत्रमाश्विनः पुरस्तादैन्द्रवायवं भक्षयति तस्मात् पुरस्ताद्वाचा वदति पुरस्तात् मैत्रावरुणं तस्मात् पुरस्ताच्चक्षुषा पश्यति सर्वतः परिहारमाश्विनं तस्मात् सर्वतः श्रोत्रेण शृणोति" (तैसं ६.४.९) इति । पुरस्तादग्रतो यथागृहीतमेवेत्यर्थः । सर्वतः परिहारं शिरः प्रदक्षिणीकृत्येत्यर्थः ॥ पात्राणां सादने पुरोडाशशकलादिसहितत्वं विधत्ते—"प्राणा वा एते यद्द्विदेवत्या अरिक्तानि पात्राणि सादयति तस्मादरिक्ता अन्तरतः प्राणा यतः खलु वै यज्ञस्य विततस्य न क्रियते तदनु यज्ञꣳ रक्षाꣳस्यव चरन्ति यदरिक्तानि पात्राणि सादयति क्रियमाणमेव तद्यज्ञस्य शये रक्षसामनन्ववचाराय" (तैसं ६.४.९) इति । शकलादियोगः सूत्रे दर्शितः—"पुरोडाशशकलमैन्द्रवायवस्य पात्रेऽवदधाति । पयस्यां मैत्रावरुणस्य । धाना आश्विनस्य" (आपश्रौ १२.२५.६) इति । अन्तरतः प्राणानामरिक्तत्वं नामाऽऽहैस्थानोपेतत्वम् । पात्राणामरिक्तत्वेन यज्ञे विस्मृतमप्यङ्गं क्रियमाणमेव संतिष्ठत इति रक्षसां संचारद्वारं नास्ति ॥ सादनस्थानं विधत्ते—"दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्याꣳ सादयति वाच्येव वाचं दधाति" (तैसं ६.४.९) इति । उत्तरस्य चक्रस्य मार्गे सादयेत् । वर्त्मरूपायां वाच्येव ग्रहरूपां वाचं स्थापयति ॥ सादितानां ⁹ग्रहाणामवस्थानावधिं विधत्ते—"आ तृतीयसवनात् परि शेरे यज्ञस्य संतत्यै" (तैसं ६.४.९) इति । शेरे वसन्तीत्यर्थः ॥

अथ मीमांसा ॥ पञ्चमाध्यायस्य चतुर्थपादे चिन्तितम्—

"आश्विनो दशमः पाको यवाग्वा ऐच्छिकः क्रमः ।
नियतो वाऽग्निमः पाठश्रुत्यर्थानां समत्वतः ॥
पाठात् क्रमः कल्पनीयः प्रत्यक्षस्तु श्रुतेः क्रमः ।
वस्तुशक्तिमुल्लङ्घ्य श्रुत्यर्थौ प्रबलौ ततः" ॥ (जैन्या ५.४.१–२) इति ॥

ज्योतिष्टोम ऐन्द्रवायवादिग्रहेष्वाश्विनग्रहस्तृतीयस्थाने पठितः । तस्य च दशमस्थानत्वं वाचकेनैव शब्देनाऽऽम्नायते—"आश्विनो दशमो गृह्यते" (मैसं ४.६.१) इति । तत्र क्रमबोधकौ श्रुतिपाठौ समबलौ । तथाऽग्निहोत्रहोमादूर्ध्वं यवागूपाकः पठितः । स चार्थवशात् पूर्वं प्राप्तः । तत्रार्थपाठौ समबलौ । तस्मादुभयत्रैच्छिकः क्रम इति प्राप्ते ब्रूमः—पाठो हि न क्रमस्याभिधायकः, किं त्वन्यथाऽनुपपत्त्या क्रमं कल्पयति । 'दशमः' इत्येषा श्रुतिस्तु साक्षादेव क्रममभिधत्ते । ततः पाठादपि श्रुतिः प्रबला । अतः¹⁰ पाठः क्रमं कल्पयन् वस्तुसामर्थ्यमनुसृत्यैव कल्पयति । ¹¹असामर्थ्यं च¹¹ यवाग्वाः पूर्वमग्निहोत्रं निष्पत्तुम्; द्रव्यमन्तरेण होमासंभवात् । तस्मात् पाठेन वस्तुसामर्थ्यलक्षणोऽर्थ उपजीव्य इत्यर्थस्य पाठात् प्राबल्यम् । श्रुत्यर्थौ पाठं बाधित्वा क्रमं नियच्छतः ॥

'या वां कशा', 'प्रातर्युजौ' इत्येते गायत्र्यौ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके षष्ठसप्तमानुवाकौ ॥

---

८. आ.पा.हा–प्राणानां व्यव° । ९. तं–ग्रहाणां स्थानविधिम् । १०. तं–तत्र । ११–११. उ.ना.पा.हा–असमर्थम्; उ.ना.पा.हा–असमर्थं च ।
तैसं ३४ ॥

अयं वेनश्चोदयत् पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने ।
इममपाः संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति ॥
उपयामगृहीतोऽसि शण्डाय त्वैष ते योनिर्वीरतां पाहि ॥ ८ ॥

[ अय वेन पञ्चविंशति ]

अयम् । वेन । चोदयत् । पृश्निगर्भा इति पृश्नि-गर्भा ।
ज्योतिर्जरायुरिति ज्योतिः-जरायुः । रजसः । विमान इति वि-माने ।
इमम् । अपाम् । संगम इति सं-गमे । सूर्यस्य ।
शिशुम् । न । विप्राः । मतिभिरिति मति-भिः । रिहन्ति ।
उपयामगृहीत इत्युपयाम-गृहीतः । असि । शण्डाय । त्वा ।
एषः । ते । योनिः । वीरताम् । पाहि ॥ ८ ॥

[ मैस १ ३·१०, गाम ४ २, वपिस ३ ३, वासं ७ १२ ]

शुक्रं गृह्णाति—'अयं वेन' इति त्रिष्टुभा चतुष्पदया ॥ वेनते कान्तिकर्मणो वेनः, कान्तः वर्षाद्यभीष्टप्रद उच्यते । ज्योतिर्जरायुः ज्योतिर्जरायुस्थानीयमाच्छादकं, यस्य जरायुणा गर्भ इव तेजसा वेष्टितस्तेजोराशिरित्यर्थः । ईदृशः अयं वेनशब्दवाच्य इन्द्रः पृश्निरादित्य तस्मिन् गर्भाः पृश्निगर्भाः गर्भ्यमाणाः । पचाद्यच् ( पा ३ १ १३४ ) । गर्भवद्धर्यमाणा आपः । भूमिगतान् हि रसान् सूर्यरश्मयो वायुना सह सूर्यमण्डले स्थापयन्ति, ते च तस्मिन् वर्धन्ते,

अयमिति ॥ कल्पः —"अयं वेनश्चोदयदिति शुक्रं गृहीत्वा हिरण्येन श्रीत्वैष ते योनिर्वीरतां पाहीति सादयति" ( आपश्री १२ १४ १३ ) इति ॥ पाठस्तु—'अयं वेनश्चोदयत् पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने । इममपाः संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति । उपयामगृहीतोऽसि शण्डाय त्वैष ते योनिर्वीरतां पाहि' इति ॥

अयमितीन्द्रो निर्दिश्यते । वेनः कान्तोऽभीष्टः । *विन कान्तौ इत्यस्माद्धातोरुत्पन्नत्वात् । पृश्निरादित्यस्तस्य गर्भभूता आपः । तथा चान्यत्र प्रश्नोत्तराभ्यामयमर्थः श्रूयते—"केमा आपो निविशन्ते । यदीतो यान्ति सम्प्रति" ( तैआ १ ८ ) इति प्रश्नः । "आपः सूर्ये समाहिताः । अभ्राण्यपः प्रपद्यन्ते" ( तैआ १ ८ ) इत्युत्तरम् । अयं वेनः पृश्निगर्भाः चोदयत् । अपो वर्षतीत्यर्थः । कीदृशोऽयम् ? ज्योतिर्जरायुः । विद्युल्लक्षणं तेजो जरायुवद्वेष्टनं यस्यासौ ज्योतिर्जरायुः । कुत्राय वर्षति । रजसः विमाने । धूलेर्विशोषेण निर्माणं यस्मिञ्छुष्कभूप्रदेशे तत्र वर्षति । अपां सूर्ये गर्भाभावः कथं संपन्न इति चेत् । अत्रोच्यते—विप्रा ऋत्विजः सूर्यस्य अपां च संगमे निमित्तभूते सति इमम् इन्द्रं शिशुं स्तनन्धयं शिशुमिव लालयन्तः मतिभिः मन्त्रसहिताभिराहुतिभिः रिहन्ति प्रीणयन्तीत्यर्थः । आहुतिद्वाराभिरिमा आपो नीयन्ते । एतदेवाभिप्रेत्य श्रूयते—"भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नय" ( तैआ १ ९ ) इति । हे शुक्रग्रह, दारुपात्रेण गृहीत असि । शुक्रपुत्राय शण्डाय त्वा गृह्णामि । एष खरैकदेशः ते योनिः स्थानम् । तादृशस्त्वं यजमानस्य वीरतां कर्मशूरत्वं पालय ॥

१ त—गृह्यमाणः, ति—गर्भमाणः, व—'गर्भ्यमाणाः' नास्ति । २ त रि व-अस्मिन् ।

* [ धातुपाठे नोपलभ्यते । द्र. निघण्टु २ ६ ] । १ क ना हा—लाल्यन्ते ।

आगामिसंवत्सरवृष्ट्यर्थम् । यथोक्तं—"समानमेतदुदकम्" ( तैआ १·९ ) इत्यादि । सप्तमीपूर्वपदप्रकृतिस्वरत्वम् ( पा ६·२·२ ) । ताश्च स्वकाले सूर्येण समर्पिताः चोदयत् चोदयति । लेट् । भुवं प्रति प्रेरयत्ययमादित्यो वेनः । तथा चोक्तम्—"यदा खलु वा असावादित्यो न्यङ् रश्मिभिः" ( तैसं २·४·१० ) इत्यादि । कुत्र स्थितोऽयमेवं करोतीत्यत[3] आह रजसः उदकस्य विमाने निर्माणस्थानेऽन्तरिक्षे । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६·२·१३९ ) । य ५ एवं प्रजानामुपकरोति इमं वेनं खलु विप्राः मेधाविनः मतिभिः बुद्धिभिः रिहन्ति लिहन्ति । रलयोरेकत्वं स्मरन्ति* । स्तुवन्ति पूजयन्ति बुद्धिपूर्वकमेव ते स्तवादि कुर्वन्तीति भावः । हविःप्रदानादिना संवर्धयन्तो न त्यजन्तीत्यर्थः । "मन्त्रे वृष" ( पा ३·३·९६ ) इति क्तिन उदात्तत्वम् । शिशुं न शिशुमिव यथा शिशुं क्षीरादिदानेन संवर्धयन्ति । किमर्थम्? सूर्यस्य अपां च संगमे संगमनाय सूर्यस्याद्भिः सगमो यथा स्यात् वृद्धयर्थं तदर्थमित्यर्थः । "ग्रह- १० वृदनिश्चिगमश्च" ( पा ३·३·५८ ) इत्यप् । थाथादिस्वरेणोत्तरपदान्तोदात्तत्वम् ( पा ६·२·१४४ ) । यद्वा—अयं वेनः कमनीयरूपः ज्योतिर्जरायुः ज्योतिषा जरायुस्थानीयेन वेष्टितः रजसो विमाने स्थितः । रजो नाम गर्भधारणहेतुर्योनिस्थ उदकविशेषः, तन्निर्माणस्थाने प्रजननस्थानीये स्थितः । पृश्निगर्भाः प्रेरयति काले प्रसूत्यर्थं मातरमिव त्वरयति । गर्भं करोतीति गर्भयिता गर्भः । पचाद्यच् ( पा ३·१·१३४ ) । पृश्निर्गर्भो यासां ताः अपः प्रेरयति काले वृष्ट्यर्थम् । बहुव्रीहौ १५ पूर्वपदप्रकृतिस्वरत्वम् ( पा ६·२·१ ) । ततः स पुत्रस्थानीयः प्रसूतः पर्जन्यात्मा वर्षति । एवमिमं वेनाख्यं सूर्यस्यापां संगमे संयोगे प्रसूतं शिशुमिव विप्रा मतिभिः पूजयन्तीति । सूर्यो हि भार्यास्थानीया अपः संगच्छति वत्सरान्ते चायं जायते, जातश्च वर्षति । वृष्टं चोदकं रश्मय आदाय सूर्याय समर्पयन्ति । स च ता अपः संगच्छतीति । यत एवं तस्मादहमपि तत्पूजार्थं शुक्रं गृह्णामीति शेषः । ननु शण्डाय गृह्यते? सत्यम् । इन्द्रायैव तु हूयते । "इन्द्राय सुतमा २० जुहोमि" ( तैब्रा १·१·१ ) इति होममन्त्रलिङ्गात् । "तौ देवा अपनुद्याऽऽत्मन इन्द्रायाजुहवुः" ( तैसं ६·४·१० ) इति च ब्राह्मणम् ॥

इमामनुद्रुत्य 'उपयामगृहीतोऽसि शण्डाय त्वा' इति गृह्णाति । शण्डो नामासुरपुरोहितः ॥

'एष ते योनिर्वीरतां पाहि' इति सादयति ॥ वीरता शूरता यागलक्षणं प्रति । "बृहस्पतिर्देवानां पुरोहित आसीत्" ( तैसं ६·४·१० ) इत्यादि ब्राह्मणम् । "असौ वा २५ आदित्यः शुक्रश्चन्द्रमा मन्थी" ( तैसं ६·४·१० ) इत्यादि, "चक्षुषी वा एते यज्ञस्य यच्छुक्रामन्थिनौ" ( तैसं ६·४·१० ) इत्यादि च ॥

॥ इति चतुर्थप्रपाठकेऽष्टमोऽनुवाकः ॥

---

३. तं.ति–'अतः' नास्ति । *[ द्र. पा ८·२·१८ ] ४. तं.ति.पं.व–वृष्ट्याद्यर्थम् । ५. तं.ति.व–तद्विनिर्माण° । ६. मै–एनमिमम् । ७. तं.ति.पं.व–संयोगहेतौ । ८–८. तं.ति.पं.व–तामिः । ९. मै– ३० यागलक्षणत्यागम् ।

तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतांतिं बर्हिषदं॑ सुवर्विदं
प्रतीचीनं वृजनं दोहसे गिराऽऽशुं जयन्तमनु यासु वर्धसे ।
उपयामगृहीतोऽसि मर्काय त्वैष ते योनिः प्रजाः पाहि ॥ ९ ॥

[ तं प्रत्नथा षड्विंशतिः ]

५ तम् । प्रत्नथा । पूर्वथा । विश्वथा । इमथा ।
ज्येष्ठतातिमिति ज्येष्ठ-तातिम् । बर्हिषदमिति बर्हि-सदम् । सुवर्विदमिति सुव-विदम् ।
प्रतीचीनम् । वृजनम् । दोहसे । गिरा ।
आशुम् । जयन्तम् । अन्विति । यासु । वर्धसे ॥
उपयामगृहीत इत्युपयाम-गृहीत । असि । मर्काय । त्वा ।
१० एष । ते । योनिः । प्रजा इति प्र-जाः । पाहि ॥

[ मैस १ ३.११, काम ४ ३, कपिस ३.३, वासं ७.१६-१७ ]

मन्थिनं गृह्णाति—' तं प्रत्नथा ' इति चतुष्पदया जगत्या ॥ अत्रापि स एवेन्द्रः प्रत्यक्षेण स्तूयते। प्रत्नशब्दः पुराणवचनः[*] । " प्रगस्य गलोपः " ( द्र पाभा ४ ३.२३ ) इति व्युत्पादितः । थेत्युपमायाम्[**] । " प्रत्नपूर्वविश्वेमात्थाल् छन्दसि " ( पा ५ ३ १११ ) इति थाल्। लिति
१५ प्रत्ययात् पूर्वस्योदात्तत्वम् ( पा ६ १ १९३ )। 'तम्' इत्यत्र 'त्वा स्तुम ' इति शेषः। अयमर्थः —यथा [1]प्रत्ना पुराणास्त्वामस्तुवन् तथा [2]वयमपि त्वां[2] स्तुमः। यथा च ततोऽपि पूर्वे भृगुप्रभृतयो मदीयाः पित्रादयो वा त्वामस्तुवन् तथा वयं स्तुमः। यथा विश्वेऽपि त्वा स्तुवन्ति तमिति ॥ कल्पः — " तं प्रत्नथेति मन्थिनं गृहीत्वा । सक्तुभिः श्रीणाति । एष ते योनिः प्रजाः पाहीति सादयति " ( आपश्रौ १२.१४.१५-१६ ) इति ॥ पाठस्तु—' तं प्रत्नथा पूर्वथा
२० विश्वथेमथा ज्येष्ठतातिं बर्हिषदं॑ सुवर्विदं प्रतीचीनं वृजनं दोहसे गिराऽऽशुं जयन्तमनु यासु वर्धसे । उपयामगृहीतोऽसि मर्काय त्वैष ते योनिः प्रजाः पाहि ' इति ॥ " इन्द्रायाजुहवु " ( तैसं ६.४ १० ) इति [1]ब्राह्मणवचनादयं मन्त्र ऐन्द्रः। [V]तम् इन्द्र स्तुम इति शेषः। [V]प्रत्नथा इत्यादौ ' था ' प्रत्यय उपमार्थः । प्रत्ना पुरातना भृग्वादयो यथा त्वामस्तुवंस्तथा वयमपि त्वा स्तुमः। [V]पूर्वथा पित्रादय इव । [V]विश्वथा अतीताः सर्वे यजमाना इव । कीदृशमिन्द्रम् ? [V]ज्येष्ठतातिम्। स्वार्थे तातिप्रत्ययः । [V]बर्हिषदं
२५ यागे सन्निहितत्वेन तिष्ठन्तम् । [V]सुवर्विदं यजमानाय दातव्यत्वेन स्वर्गं वेत्तीति सुवर्विद् तम्। हे इन्द्र, यस्त्वं [V]प्रतीचीनं प्रतिगमनमस्मत्प्रतिकूलं [V]वृजनं वर्जनीयमालस्याश्रद्धादि [V]दोहसे रिक्तीकरोषि विनाशयसि तादृशं त्वां स्तुमः। के पुनः स्तुमः ? [V]यासु क्रियासु त्वम् [V]आशुं क्षिप्रकारिणं [V]जयन्तं सम्यगनुष्ठानेन यजमानान्तराण्यतिशयानमेनं[2] यजमानम् [V]अनु सोमपानेन स्तुत्या च [V]वर्धसे तासु क्रियासु

[*] [ द्र निघण्टु ३.२७.१ ]। [**] [ द्र निघण्टु ३.१३.१२, निरुक्त ३.१६ ] १ व मै-
३० शक्लादय । २-२. व-वयं तं त्वाम् ।

१. व-ब्राह्मणवाक्यादयम्, आ.ना हा-ब्राह्मणादयम्। २. ब्रा क ना हा-यजमानान्तरादतिशयेनोपेतम्।

तथा च स्तुमः । यथा वा इमे वर्तमानास्त्वां स्तुवन्ति तथा स्तुमः । कीदृशम् ? ज्येष्ठतातिं प्रशस्ततमम् । "वृकज्येष्ठाभ्याम्" (पा ५.४.४१) इति स्वार्थिकस्तातिल्प्रत्ययः । बर्हिषि यागे सीदतीति बर्हिषदम् । पृषोदरादित्वात् सकारलोपः (पा ६.३.१०९)। "सत्सूद्विष" (पा ३.२.६१) इत्यादिना क्विप् । सुवः स्वर्गमादित्यं वा वेत्तीति सुवर्विदम् । अधुनार्धर्चान्तरेण स्तुतिहेतुमाह— त्वां खलु प्रतीचीनं प्रतीचीनगतिं पराङ्मुखमपि सामर्थ्यात् मेघम् । "विभाषाऽञ्चेरदिक्स्त्रियाम्" (पा ५.४.८) इति खः । वृजनं बलवन्तम् । उभयत्र मत्वर्थीयोऽकारः (पा ५.२.१२७)। प्रतीचीना गतिरस्यास्तीति प्रतीचीनम् । मत्वर्थीयोऽकारो लुप्यते । गिरा गर्जितलक्षणया शब्देन जयन्तं लोकानभिभवन्तम् । आशुं शीघ्रं, व्यापकं वा दिगन्तानाम् । "कृवापाजि" (उ १) इत्युण्प्रत्ययः । ईदृशं मेघं दोहसे क्षारयसि । विकरणव्यत्ययेन "शपो न लुक्" । स्वरितेत् । 'यः' इति वाऽध्याहियते, यस्त्वं धोक्षि तं स्तुमः । क्व पुनः स्तुमः इति चेदाह— यासु क्रियासु यागलक्षणासु त्वम् अनु वर्धसे अनुक्रमेण वृद्धिं गच्छसि, तासु स्तुमः । यद्वा— यासु स्तुतिषु त्वमनुवर्धसे स्तुतो वृद्धिं गच्छसि ताः स्तुतीः कुर्म इति शेषः । स्तुत्या हि स्तोतव्यो वर्धते, यथा—"वर्धन्तु त्वा सुष्टुतयः" (तैसं २.२.१२) इति । यद्वा—ईदृशं मेघं दोहसे । कम् ? वृजनं बलकरमुदकं, गिरा गर्जितेनोपलक्षितः ॥

इमामनुद्रुत्य 'उपयामगृहीतोऽसि मर्काय त्वा' इति गृह्णाति ॥

'एष ते योनिः प्रजाः पाहि' इति सादयति ॥ प्रजाः यजमानस्य स्वभूताः सर्वा वा ॥

॥ इति चतुर्थप्रपाठके नवमोऽनुवाकः ॥

---

तमिन्द्रं स्तुमः । हे मन्थिग्रह, त्वम् उपयामगृहीतः असि, शुक्रपुत्राय मर्कनामकाय त्वां गृह्णामि । एष खरप्रदेशस्तव स्थानम् । त्वं यजमानस्य प्रजाः पालय ॥ मन्त्राननुपेक्ष्य ग्रहौ विधत्ते— "बृहस्पतिर्देवानां पुरोहित आसीच्छण्डामर्कावसुराणां ब्रह्मण्वन्तो देवा आसन् ब्रह्मण्वन्तोऽसुरास्तेऽन्योन्यं नाशक्नुवन्नभिभवितुं ते देवाः शण्डामर्कावुपामन्त्रयन्त तावब्रूतां वरं वृणावहै ग्रहावेव नावत्रापि गृह्येतामिति ताभ्यामेतौ शुक्रामन्थिनावगृह्णन् ततो देवा अभवन् पराऽसुरा यस्यैवं विदुषः शुक्रामन्थिनौ गृह्येते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति" (तैसं ६.४.१०) इति ॥ ब्रह्मण्वन्तः पुरोहितानुष्ठितमन्त्रसामर्थ्योपेताः । उपामन्त्रयन्त रहस्युपच्छन्दितवन्तः । यद्यप्यन्यत्र शण्डामर्कयोरावयोर्यज्ञभागो नास्ति तथाऽप्यत्राग्निष्टोमे सोऽस्तु । तत्रापि ग्रहावेव न तु लेपादिः । अत्र 'गृह्येताम्' इत्येतावदेव शण्डामर्काभ्यां वृतं न तु हूयेतामिति । ततो देवा ग्रहणमात्रेण एव स्वकार्यं साधितवन्तः ॥ अथार्थवादेन ग्रहयोरधस्तात्स्थानां पांसूनामपध्वंसनविधिमुन्नयति— "तौ देवा अपनुद्याऽऽत्मन इन्द्रायाऽऽजुहवुरपनुत्तौ शण्डामर्कौ सहामुनेति ब्रूयाद्यं द्विष्याद्यमेव द्वेष्टि तेनैनौ सहापनुदते" (तैसं ६.४.१०) इति । देवाः स्वकार्यसिद्धेरूर्ध्वं तौ शण्डामर्कावपसार्य स्वकीयायेन्द्राय तौ शुक्रामन्थिग्रहावजुहवुः । तस्माद्ग्रहयोरधोलग्नां धूलिमपध्वंसयन्नन्यत्र समाम्नातम्—"अपनुत्तौ" (तैब्रा १.१.१) इति मन्त्रं ब्रूयात् । 'अमुना' इत्यत्र द्वेष्यस्य द्वेष्टुश्च नाम ध्यायेत् । अत्र सूत्रम्— "तौ प्रोक्षिताभ्यां शकलाभ्यामपिधायाप्रोक्षिताभ्यामवघ्नन् पांसूनपध्वंसयत्यपनुत्तौ शण्डामर्कौ सहा-

---

३. तं.ति.व.मै-सुवर्विन् । [द्र. निघण्टु २.९.२१] । ४. व-मत्वर्थीयः । ५-५. मै-शप् ।

---

३. आ.क.ना.हा-'एव' नास्ति । ४. आ.क-'धमनं विधातुं विधिमुन्नयति; ना.हा-'ध्वंसनं विधातुं समुन्नयति; तं-'ध्वंसनं विधातुं नयति । ५. आ.ना.हा-'तौ' नास्ति । ६. ट.ड.ना.पा.हा-'तौ' नास्ति ।

मुनेति। अप्नुत्त शण्ड इति वाऽध्वर्युर्द्देष्य मनसा ध्यायन्। अपनुत्तो मर्क इति" प्रतिप्रस्थाता।" ( आपश्रौ १२ २२ २ ) इति ॥ अन्यत्राऽऽम्नातेन मन्त्रेण ग्रहहोमस्य विधिमर्थवादेनाऽवयति— "स प्रथम सङ्कृति विश्वकर्मेत्येवैनावाऽऽत्मन इन्द्राधाजुहवुरिन्द्रा ह्येतानि रूपाणि करिक्रदचरत्" (तैस ६ ४ १० ) इति ॥ मन्त्रपाठस्तु— "स प्रथम सङ्कृतिर्विश्वकर्मा। स प्रथमो मित्रो वरुणो अग्नि । स प्रथमो बृहस्पतिश्चिकि

५ त्वान्। तस्मा इन्द्राय सुतमा जुहोमि" (तैब्रा १ १ १ ) इति। स इन्द्र प्रथमो देवाना मुख्य सर्वाधिपतित्वात्। समीचीना कृतिर्निर्माण यस्यासौ सङ्कृति । तादृशो विश्वकर्मनामको देवोऽपि स इन्द्र एव। मित्रो वरुणोऽग्नि स एव। चिकित्वानभिज्ञो बृहस्पतिरपि स एव। तादृशायेन्द्रायाभिषुत सोमं सर्वतो जुहोमि। यस्मादिन्द्र एतानि 'विश्वकर्मादीनि रूपाणि करिक्रदत्यर्थं कुर्वञ्जगदचरत्', तस्मात् तत्प्रतिपादकनाम्नैव मन्त्रेण होमो युज्यते॥ होमात् पुरा महावादायाऽऽच्छाद्याध्वर्युप्रतिप्रस्थातारौ प्राङ्मुखौ निर्गच्छेता

१० मिति' विधत्ते— "असौ वा आदित्य शुक्रश्चन्द्रमा मन्थ्यपिगृह्य प्राञ्चौ निष्क्रामतस्तस्मात् प्राञ्चौ यन्तौ न पश्यन्ति" (तैस ६ ४ १० ) इति। पश्चिमदिश्यस्त गत्वा पुनरुदयाय प्राङ्मुखतया" गच्छन्तौ सूर्याचन्द्रमसौ द्रष्टु कऽपि न शक्नुवन्ति। तस्माद्ग्रहयोराच्छादन युक्तम्॥ होमाय प्रत्यङ्मुखत्व विधत्ते— "प्रत्यञ्चावावृत्य जुहुतस्तस्मात् प्रत्यञ्चौ यन्तौ पश्यन्ति" (तैस ६ ४ १० ) इति। उदयादूर्ध्वं प्रत्यङ्मुखतया गच्छन्तौ सूर्याचन्द्रमसौ सर्वेऽपि पश्यन्ति। अतो "ग्रहयोराच्छादनमपनीय प्रत्यङ्मुखत्वेनाऽऽवृत्य

१५ होमार्थो युक्त ॥ उत्तरवेदेरभित परिक्रमण विधत्ते— "चक्षुषी वा एते यज्ञस्य यच्छुक्रामन्थिनौ नासिको त्तरवेदिरभित परिक्रम्य जुहुतस्तस्मादभितो नासिका चक्षुषी तस्मान्नासिकया चक्षुषी विधृते सर्वत परि क्रामतो रक्षसामपहत्यै" (तैस ६ ४ १० ) इति। अत्र सूत्रम्— "उत्तरवेदिं "परिक्रामत । सुवीरा प्रजा प्रजनयन् परीहि शुक्र शुक्रशोचिषेति दक्षिणेनाध्वर्यु प्रतिपद्यते। सुप्रजा प्रजा प्रजनयन् परीहि मन्थी मन्थिशोचिषेत्युत्तरेण प्रतिप्रस्थाता" ( आपश्रौ १२ २२ ७-८ ) इति। तदेतत्सर्वत परि

२० क्रमण रक्षोवधाय सम्पद्यते॥ अत्र चमसहोमे प्राङ्मुखत्व ग्रहहोमे प्रत्यङ्मुखत्व च विधत्ते— "देवा वै या प्राचीराहुतीरजुहवुर्ये पुरस्तादसुरा आसन्ताꣳस्ताभि प्राणुदन्त या प्रतीचीर्ये पश्चादसुरा आसन्ताꣳस्ता भिरपानुदन्त प्राचीरन्या आहुतयो हूयन्ते प्रत्यञ्चौ शुक्रामन्थिनौ पश्चाच्चैव पुरस्ताच्च यजमाना भ्रातृव्यान् प्र णुदते तस्मात् पराचीं प्रजा प्र वीयन्ते प्रतीचीर्जायन्ते" (तैस ६ ४ १० ) इति। अत्र सूत्रम्— "पुरस्तात् प्रत्यञ्चावध्वर्यू जुहुत । पश्चात् प्राञ्चश्चमसैश्चमसाध्वर्यवो जुह्वति"

२५ ( आपश्रौ १२ २३ ६ ) इति। वाक्य तु धिष्ण्यप्रस्तावेऽपि *गतम्॥ सूत्रकारेणोदाहृतौ परिक्रमण मन्त्रौ प्रदेशान्तर आम्नाताविह व्याचष्टे— "शुक्रामन्थिनौ वा अनु प्रजा प्र जायन्तेऽत्त्रीश्चाऽऽद्याश्च सुवीरा प्रजा प्रजनयन् परीहि शुक्र शुक्रशोचिषा सुप्रजा प्रजाः प्रजनयन् परीहि मन्थी मन्थि शोचिषेत्याहैता वै सुवीरा या अत्त्रीरेता सुप्रजा या आद्या" (तैस ६ ४ १० ) इति। अत्त्रीभोक्त्र्य उत्तम जातयो ब्राह्मणादय आद्या भोग्या नीचजातयो भृत्यकर्मकरादय । मन्त्रार्थस्तु—शोभना वीरा उत्तमा यासां

३० ता सुवीरा । शोभना सेवाकुशला प्रजा पुत्रादयो यासा ता सुप्रजा "। हे शुक्रग्रह, त्व यजमानस्य शोभनभोक्तृयुक्ता प्रजा उत्पादयन्नुत्तरवेदेर्दक्षिणत परीहि । हे शुक्रग्रह, शुक्रदेवतासम्बन्धिना तेजसा रक्षसामपघात' कुर्विति शेष । हे मन्थिग्रह, त्व यजमानस्य शोभनसेवकरूपा प्रजा उत्पादयन्नुत्तरवेदे रुत्तरत परीहि । मन्थिग्रहस्त्व मन्थिदेवतासम्बन्धिना तेजसा रक्षास्यपजहि। 'एता वै सुवीरा ' इत्यादिक

७ आ ना हा–' इति ' इत्यस्यानन्तर ' तम् '। ८ आ क त मै१–विश्वकर्मत्वादीनि। ९. त

३५ मै१–जगदत्यचरत्। १०. त–निर्गच्छत तमिम मिथिम। ११ उ ना पा हा–' प्राङ्मुखतया ' नास्ति। १२ उ ना पा हा–' ग्रहयो ' इत्यस्यानन्तर ' प्रत्यङ्मुखतया '। १३ त–विपरिक्रामत । *[ द्र तैस ६ ३ १ ] । १४ उ त पा म१–'सुप्रजा ' नास्ति। १५ त–'मपयातम्।

मन्त्रव्याख्यानम् ॥ वेदनं प्रशंसति—"य एवं वेदाम्यस्य प्रजा जायते नाऽऽर्त्या" ( तैसं ६.४.१० ) इति। मन्थिपात्रस्य विकङ्कतवृक्षत्वं[16] सक्तुमेलनं च विधत्ते—"प्रजापतेरक्ष्यश्वयत् तत्पराऽपतत् तद्विकङ्कतं प्राविशत् तद्विकङ्कते नारमत तद्यवं प्राविशत्तद्यवेऽरमत तद्यवस्य यवत्वं यद्वैकङ्कतं मन्थिपात्रं भवति सक्तुभिः श्रीणाति प्रजापतेरेव तच्चक्षुः सं भरति" ( तैसं ६.४.१० ) इति। सक्तवो यवपिष्टानि ॥ "आहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति" ( तैसं ६.२.११ ) इति वचनादितरपात्रवत् मन्थिपात्रस्यापि सदःप्रवेशः प्राप्नोति, तन्निषेधं प्रश्नोत्तराभ्यामुन्नयति—"ब्रह्मवादिनो वदन्ति कस्मात् सत्यात् मन्थिपात्रं[18] सदो नाश्नुत इत्यार्तपात्रं[18] हीति ब्रूयाद्यदश्नुवीतान्धोऽध्वर्युः स्यादार्तिमार्च्छेत्तस्मान्नाश्नुते" ( तैसं ६.४.१० ) इति। आर्तपात्रं [17]रोगयुक्तचक्षुःस्वरूपमिदं पात्रम् ॥

अथ मीमांसा ॥ दशमाध्यायस्य पञ्चमे पादे चिन्तितम्—

"स्वस्थाने प्रतिकर्षो वा शुक्रादेः पूर्ववद्भवेत् ।
स्थाने नैवं तदग्रत्वाप्राप्तेः स प्रतिकृष्यताम्"॥ ( जैन्या १०.५.३२ ) इति॥

ज्योतिष्टोमे श्रूयते—"शुक्राग्रान् गृह्णीयादभिचरतो मन्थ्यग्रान् गृह्णीयादभिचर्यमाणस्य" ( द्र. तैसं ७.२.७ ) इत्यादि। ऐन्द्रवायवन्यायेन शुक्रादीनां स्वस्थाने ग्रहणमिति प्राप्ते ब्रूमः—ऐन्द्रवायवस्य धाराग्रहाग्रत्वं स्वस्थाने पाठादेव प्राप्तम्। शुक्रादीनां तु [19]तन्नेति वैषम्यम् ॥ तथा सति विधीयमानमग्रत्वं पाठक्रमबाधमन्तरेणानुपपन्नत्वात् प्रतिकृष्यते ॥

तत्रैवान्यच्चिन्तितम्—

"स सर्वादावैन्द्रवायवादौ वाऽत्राविशेषतः ।
सर्वादावाश्रयादैन्द्रवायवादौ धृतेरपि" ॥ ( जैन्या १०.५.३३ ) इति ॥

स पूर्वोक्तः प्रतिकर्षः सर्वेषामुपांश्वादीनां ग्रहाणामादौ युक्तः। कुतः? विशेषाश्रवणात्। सामान्यतः श्रुतमग्रत्वमनपेक्षितत्वात् सर्वादौ मुख्यम्। नैतदेवम्। [19]प्रकृतान् धाराग्रहानाश्रित्य फलाय [20]शुक्राद्यग्रत्वविधानात्। किंच—"धारयेयुस्तं यं कामाय गृह्णीयुरैन्द्रवायवं गृहीत्वा सादयेत्" ( द्र. मैसं ४.८.९ ) इति श्रूयते। तत्र काम्यस्य शुक्रादेर्धारणाद्वाऽनन्तरमैन्द्रवायवग्रहणं विवक्षितार्थे लिङ्गम्। तस्मादैन्द्रवायवादौ प्रतिकर्षः ॥

तत्रैवान्यच्चिन्तितम्—

"नापकर्षोऽपकर्षो वा सादनस्याश्रुतत्वतः ।
न नैवं ग्रहशेषत्वात्तच्चाशक्तेर्ग्रहान्तरम्[21]" ॥ ( जैन्या १०.५.३४ ) इति ॥

सर्वत्र ग्रहो गृहीत्वा साद्यते। तथा सति यत्र काम्यस्य ग्रहस्यापकर्षस्तत्र सादनस्यापकर्षो न शङ्कनीयः। [22]कुतः? अश्रुतत्वात्। शुक्राग्रानित्यग्रशब्देन[23] यथा ग्रहस्यापकर्षः श्रूयते न तथा सादनापकर्षप्रतिपादकः कश्चित् शब्दोऽस्ति। तस्मान्नापकर्षः। नैतद्युक्तम्। सादनस्य ग्रहशेषत्वात्। तच्च शेषत्वमशक्तेः अवगम्यते। न हि पूर्वं ग्रहमसादयित्वा ग्रहान्तरं ग्रहीतुं शक्यम्। अतोऽत्र ग्रहाणामपकर्षे तच्छेषभूतं सादनमप्यपकृष्यते ॥

[24]-अथ छन्दः-[25] ॥ 'अयं वेनः' इति त्रिष्टुप् ॥ 'तं प्रत्नथा' इति जगती ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठकेऽष्टमनवमानुवाकौ ॥

---

१६. उ.तं.ना.पा.मै१.हा–'वृक्षम्। १७. क–रोगयुक्तं चक्षुः°। १८. आ.पा.हा–नेति। १८. आ.पा.हा–नेति। १९. आ–प्रकृतान्; मै१–अपाकृतत्वात्। २०. आ–शुक्राग्रत्व°। २१. आ–°हान्तरे। २२. आ–'कुतः' नास्ति। २३. क.ना.हा–°मित्यत्र शब्देन। २४–२५. उ.त्रि१.पा.हा–'अथ छन्दः' नास्ति; ना–'अथ' नास्ति।

ये दे॑वा दि॒व्येका॑दश॒ स्थ पृ॑थि॒व्याम॒ध्येका॑दश॒ स्था॒प्सु॒षदो॑ म॒हि॒नैका॑दश॒ स्थ ते दे॑वा य॒ज्ञमि॒मं जु॑षध्वमुपया॒मगृ॑हीतोऽस्याग्रय॒णो॑ऽसि॒ स्वा॑ग्रय॒णो॒ जिन्व॑ य॒ज्ञं जिन्व॑ य॒ज्ञप॑तिम॒भि सव॑ना पा॒हि विष्णु॒स्त्वां पा॑तु वि॒शं त्वं पा॑हीन्द्रि॒येणै॒ष ते॒ योनि॒र्विश्वे॑भ्यस्त्वा दे॒वेभ्यः॑ ॥ १० ॥

[ ये दे॑वास्त्रिच॑त्वारिंशत् । ]

५ ये । दे॒वाः॒ । दि॒वि । एका॑दश । स्थ । पृ॒थि॒व्याम् । अधी॑ति॑ । एका॑दश । स्थ । अ॒प्सु॒षद॒ इत्य॑प्सु-सद॑ । म॒हि॒ना । एका॑दश । स्थ । ते । दे॒वाः॒ । य॒ज्ञम् । इ॒मम् । जु॒ष॒ध्व॒म् । उ॒प॒या॒मगृ॑हीत॒ इत्यु॑पया॒म-गृ॒ही॒तः॒ । अ॒सि॒ । आ॒ग्र॒य॒णः॒ । अ॒सि॒ । स्वा॑ग्रयण॒ इति॑ सु-आ॒ग्र॒य॒णः॒ । जिन्व॑ । य॒ज्ञम् । जिन्व॑ । य॒ज्ञप॑ति॒मिति॑ य॒ज्ञ-प॒ति॒म् । अ॒भीति॑ । सव॑ना । पा॒हि॒ । विष्णुः॑ । त्वाम् ।
१० पा॒तु॒ । वि॒शम् । त्वम् । पा॒हि॒ । इ॒न्द्रि॒येण॑ । ए॒षः । ते॒ । योनिः॑ । विश्वे॑भ्यः । त्वा॒ । दे॒वेभ्यः॑ ॥ १० ॥

[ मैस १ ३·१३, काठ ४ ५, कपिसं ३·४, वासं ७ १९–२० ]

आग्रयणं गृह्णाति 'ये देवा' इति चतुष्पदया पङ्क्त्या ॥ हे देवा, ये यूयं दिवि द्युलोके एकादश स्थ । एकश्च दश चेत्येकादश । "सङ्ख्या" (पा ६ २ ३५) इति पूर्वपद-प्रकृतिस्वरत्वम् । ये पृथिव्याम् अधि उपरि एकादश स्थ ये च अप्सुषदः अन्तरिक्षसदः
१५ एकादश स्थ । अप्सु सीदन्तीत्यप्सुषदः । "तत्पुरुषे कृति" (पा ६ ३·१४) इत्यलुक् ।

ये देवा इति ॥ कल्पः—"ये देवा दिवीत्युपरिष्टादुपयामया पुरस्तादुपयामेन वा यजुषा द्वाभ्यां धाराभ्यां स्थाल्यामाग्रयणं गृह्णाति । । एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयित्वा" (आपश्रौ १२ १५ ६–९) इति । पाठस्तु—'ये देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्थाप्सुषदो महिनैकादश स्थ ते देवा यज्ञमिमं जुषध्वमुपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व
२० यज्ञपतिमभि सवना पाहि विष्णुस्त्वा पातु विशं त्वं पाहीन्द्रियेणैष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य' इति ॥ अप्सुषदः अप्युपलक्षितेऽन्तरिक्षे सीदन्तीति अप्सुषदः । महिना स्वमहिम्ना तत्र सीदन्ति । हे देवा, ये यूयं त्रिषु लोकेषु प्रत्येकम् एकादश अवस्थिताः ते सर्वे यज्ञम् इमं सेवध्वम् । हे सोम, त्वमुपयामेन स्थाल्यात्मकेन पार्थिवपात्रेण गृहीतः असि । आग्रयणनामा असि । सुष्ठु अग्रं श्रेष्ठं तस्य प्रापकः स्वाग्रयणः । तादृशस्त्वं यज्ञं प्रीणय । यजमानं च प्रीणय । सवनान्याभिमुख्येन पालय । विष्णुना
२५ रक्षितस्त्वं यजमानस्य प्रजाम् इन्द्रियेण सामर्थ्यप्रदानेन पालय । एष "स्थप्रदेश तव" स्थानम् । विश्वेभ्य देवेभ्य अत्र[1] त्वा सादयामि । 'ये देवाः', 'आग्रयणोऽसि' इत्येतौ मन्त्रावापस्तम्बमतेन विकल्पितौ । बौधायनमते—"ये देवाः" (बौश्रौ ७ ६) इति ग्रहणम्, "आग्रयणोऽसि" (बौश्रौ ७ ७) इति भक्षितव्येव ॥

१ क-स्थाल्यामाग्रयणग्रहम्, (आपश्रौसूत्रे—'स्थाल्यामाग्रयणम्')। २–२. आ ना हा–स्वरन्ते।
३० ३. आ ना.हा–'अत्र' नास्ति।

सुषामादित्वात् षत्वम् (पा ८-३-९८)। [v]महिना महत्त्वेन। "बहुलमन्यत्रापि" (उ २१६, २१३) इति महेरिनच्प्रत्ययः। "सुपां सुलुक्" (पा ७-१-३९) इति तृतीयैकवचनस्य डादेशः। माहात्म्येन ह्यन्तरिक्षे सीदन्तीति। एवं त्रयस्त्रिंशदपि यूयं हे [v]देवाः, [v]इमम् आग्रयणसाध्यं [v]यज्ञं [v]जुषध्वं सेवध्वम्। नन्वस्य ग्रहस्य देवः सविता, पत्नीवानग्निः, हरिवानिन्द्रः इति देवताः, न तु विश्वे देवाः। सत्यम्। सवितर्यग्नाविन्द्रे च द्युपृथिव्यन्तरिक्षस्था दश दशान्ये देवा अन्तर्भूता इति तेऽपि 'जुषध्वम्' इत्युच्यन्ते। पत्नीवदभिप्रायं वा॥ ५

इमामनुद्रुत्य 'उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यः' इति गृह्णाति। अस्य ग्रहणमन्त्रस्य साकाङ्क्षत्वात् सादनमन्त्रे श्रुतं 'विश्वेभ्यस्त्वा' इति संबध्यते॥

अधिवदते— [v]आग्रयणः [v]असि आग्रयणाख्यो ग्रहस्त्वमसि। अग्रे ईयते गृह्यत इत्यग्रयणः[1] ग्रहाणामग्रेसरोऽसि। "ते देवा आग्रयणाग्रान् ग्रहानपश्यन्" (तैसं ६·४·११) इति ब्राह्मणम्। शकन्ध्वादित्वात् पररूपम् (पा ६·१·९४ वा ४)। अग्रयण एवाग्रयणः। "सान्नाय्यानुजावर" (द्र. पाभा ५·४·३६ वा ४) इत्यादिना स्वार्थिकोऽण् निपातितः। यद्वा—वाचा अग्रे प्रथममीयत इत्याग्रयणः। "वाग्वै देवेभ्यः" इत्यादि ब्राह्मणं, "तदाग्रयणस्याग्रयणत्वम्" (तैसं ६·४·११) इत्यन्तम्। [v]स्वाग्रयणः सुष्ठु[3] अग्र्यं श्रैष्ठ्यं यन्ति प्राप्नुवन्त्यनेनेत्याग्रयणः, शोभन आग्रयणः स्वाग्रयणः। त्वां गृहीत्वा देवा अग्रे पर्यासन्, तथा यजमानोऽपि त्वां गृहीत्वा समानानामग्रे पर्येत्विति भावः। "अग्रमेव समानानां पर्येति" (तैसं ६·४·११) इति ब्राह्मणम्। यस्मादीदृशस्त्वम् [v]असि तस्मात् [v]जिन्व प्रीणय [v]यज्ञं [v]यज्ञपतिं च [v]जिन्व। उभयत्रापि वाक्यादित्वात् न निहन्यते। जिवि प्रीणने। [v]सवना सवनानि, अभि [v]पाहि आभिमुख्येन पालय तवाक्षीणतया। त्वयि हि क्षीणे प्रायश्चित्तप्रसंगात् अरक्षितानि सवनानि स्युः, तस्मान्मा क्षेष्ठा इत्यर्थः। तदर्थं भगवान् [v]विष्णुः [v]त्वां [v]पातु यः सर्वं पाति। [v]त्वम् अपि [v]विशं प्रजां यजमानस्य स्वभूतां [v]पाहि सर्वा वा [v]इन्द्रियेण इत्थंभूतां प्रजामविकलेन्द्रियां कुर्वित्यर्थः॥ १० १५ २०

[v]एवमनुद्रुत्य[4] 'एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः' इति सादयति। "वैश्वदेवो ह्येष देवतया" (तैसं ६·४·११) इति ब्राह्मणम्। "आत्मा वा एष यज्ञस्य यदाग्रयणः" (तैसं ६·४·११) इत्यादि च॥ २५

॥ इति चतुर्थप्रपाठके दशमोऽनुवाकः॥

१. तं.ति.पं.व—इस्वाग्रायणः। २. तं.पं.व—आग्रयणग्रहः; ति—अग्रयणग्रहः। ३. मे—'सुष्ठु' नास्ति। ४. व—एवमभ्युदाहृत्य; तं—एवमध्याहृत्य।

त्रिꣳशत्त्रयश्च गणिनो रुजन्तो दिवꣳ रुद्राः पृथिवीं च सचन्ते ।
एकादशासो अप्सुषदः सुतꣳ सोमं जुषन्ताꣳ सवनाय विश्वे ।
उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभि सवना
पाहि विष्णुस्त्वां पातु विशं त्वं पाहीन्द्रियेणैष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥११॥

५ [ त्रिꣳशद्द्विचत्वारिꣳशत् ]

त्रिꣳशत् । त्रयः । च । गणिनः । रुजन्तः । दिवम् । रुद्राः । पृथिवीम् । च । सचन्ते ।
एकादशासः । अप्सुषद इत्यप्सु-सदः । सुतम् । सोमम् । जुषन्ताम् । सवनाय । विश्वे ।
उपयामगृहीत इत्युपयाम-गृहीतः । असि । आग्रयणः । असि । स्वाग्रयण इति सु-आग्रयणः ।
जिन्व । यज्ञम् । जिन्व । यज्ञपतिमिति यज्ञ-पतिम् । अभीति । सवना । पाहि ।
१० विष्णुः । त्वाम् । पातु । विशम् । त्वम् । पाहि । इन्द्रियेण ।
एषः । ते । योनिः । विश्वेभ्यः । त्वा । देवेभ्यः ॥ ११ ॥

आग्रयणमेव[1] भ्रातृव्यवतो गृह्णाति 'त्रिꣳशत्' इति चतुष्पदया त्रिष्टुभा ॥ "त्रिगणवत्यर्चा भ्रातृव्यवतो गृह्णीयात्" (तैसं ६ ४ ११) इति ब्राह्मणम् । त्रिꣳशत् त्रयः च गणिनः गणवन्तः एकादशात्मकैस्त्रिभिर्गणैश्च तद्वन्तः रुजन्तः सामर्थ्यात् भ्रातृव्यान् । रुजो भङ्गे तौदा-
१५ दिकः । रुद्राः रोदयितारः शत्रूणां नारीणाम् । "रोदेर्णिलुक्च" (उ १८९) इति रक्प्रत्ययः । एकादशासः एकादशानां पूरणाः (पा ५ २ ४८) । पूरणप्रत्ययान्तात् "आज्जसेरसुक्" (पा ७ १ ५०) । एतदुक्तं भवति—ये त्रिंशद्देवाः दशवर्गत्रयात्मकाः ये च त्रयो गणिनः तत्तद्दशात्मकगणवन्तः एकादशाः स्वयमिति इत्थं त्रयस्त्रिंशत् सचन्ते[2] । क्व पुनस्ते वर्तन्ते इत्याह—ये दिवं सचन्ते सेवन्ते, ये च पृथिवीं, ये च अप्सुषदः [5]अन्तरिक्षेणान्तरीक्षं,
२० पूरणप्रत्ययान्ता वा ये त्रयो गणिनः[5], त्रयश्च गणा वर्तन्त इति, ते च विश्वे देवा इमं सुतं सोमम् आग्रयणाख्यं जुषन्तां सेवन्तां सवनाय सवनार्थं तृतीयसवनार्थम् । तत्र हि तस्य सावित्रपात्नीवतहारियोजनेषु विनियोगः । यद्वा—तृतीयसवने जुषन्तामिति सप्तम्यर्थे चतुर्थी । "भ्रातृव्यवतो गृह्णीयात" (तैसं ६ ४ ११) इति ब्राह्मणम् ॥

१ त ब–'आग्रयणमत्र' इत्यस्यानन्तरं 'तत्र' । २ मै–'गृह्णीयात्' नास्ति । ३. ब–भवन्त, २५ तं ति–भजन्त । ४. त नि ब–भवन्ति । ५–५ त नि पं ब–अन्तरिक्षे सीदन्ति ये त्रिषु स्थानेषु ये गणिनः ।

भ्रातृव्यवतः आग्रयणग्रहः ]

इत्यनुद्रुत्य 'उपयामगृहीतोऽसि' इति यजुरादिकया गृह्णाति ॥

अधिवदते— 'आग्रयणोऽसि' इत्यादि ।

'एष ते योनिः' इत्यादिना सादयति ॥

॥ इति चतुर्थप्रपाठके एकादशोऽनुवाकः ॥

त्रिंशत्त्रयश्चेति ॥ 'ये देवाः' इत्येतस्य स्थाने भ्रातृव्यवतो मन्त्रान्तरमाम्नायते— 'त्रिंशत्त्रयश्च गणिनो रुजन्तो दिवं रुद्राः पृथिवीं सचन्ते । एकादशासो अप्सुषदः सुतं सोमं जुषन्तां सवनाय विश्वे । उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभि सवना पाहि विष्णुस्त्वां पातु विशं त्वं पाहीन्द्रियेणैष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः' इति । एकादशात्मकास्त्रयो गणा एषां सन्तीति गणिनः । ते च त्रयस्त्रिंशत्संख्याकाः रुजन्तः शत्रून् विनाशयन्तो रुद्राः शत्रुनारीणां रोदयितारः । तन्मध्ये केचन दिवं सचन्ते सेवन्ते । अपरे पृथिवीं सेवन्ते । अवशिष्टास्त्वेकादश-संख्याका अप्सुपलक्षितेऽन्तरिक्षे सीदन्ति । ते विश्वे सर्वे सुतम् अभिषुतमिमं सोमं सवनाय तृतीय-सवने सेवन्ताम् ॥ मन्त्रान् व्याख्यायासुराग्रयणस्य ग्रहणं विधत्ते—" देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा आग्रयणाग्रान् ग्रहानपश्यन् तानगृह्णत ततो वै तेऽग्रं पर्यायन् यस्यैवं विदुष आग्रयणाग्रा ग्रहा गृह्यन्तेऽग्रमेव समानानां पर्येति " ( तैसं ६·४·११ ) इति । आग्रयणमग्रं ( णोऽग्रः ) प्रथमं ( मो ) येषां त आग्रयणाग्राः । अत्र सूत्रम्—" यदि रथन्तरसामा सोमः स्यादैन्द्रवायवाग्रान् गृह्णीयात् । यदि बृहत्सामा शुक्राग्रान् । यदि जगत्सामाऽऽग्रयणाग्रान् । यद्युभयसामा याथाकामी " (आपश्रौ १२·१४·१–२) इति । माध्यन्दिने सवने पृष्ठस्तोत्राणामाद्ये स्तोत्रे रथन्तराख्यं साम यस्मिन् सोमयागे स यागो रथन्तर-सामा । एवमन्यत्रापि योज्यम् । एकस्मिन् भागे रथन्तरं भागान्तरे बृहदित्येवमुभयसामत्वम् । अग्रं पर्यायन् श्रैष्ठ्यं प्राप्ताः[3] । त्रिंशत्त्रयश्चेति मन्त्रस्य विषयं दर्शयति—" रुणवत्यर्चा भ्रातृव्यवतो गृह्णीयाद्-भ्रातृव्यस्यैव रुक्त्वाऽग्रं समानानां पर्येति " ( तैसं ६·४·११ ) इति ॥ रुणे रुजिधातुः, सोऽस्या-मस्तीति रुणवती । 'गणिनो रुजन्तः' इति रुजिधातुर्मन्त्रे दृश्यते । रुक्त्वा रोगमुत्पाद्य ॥ तयोर्मन्त्रयो-र्देवसंख्योक्तिस्तान् सर्वानुद्दिश्य ग्रहीतुमित्याह—" ये देवा दिव्येकादश स्थ इत्याहैतावतीर्वै देवतास्ताभ्य एवैनं सर्वाभ्यो गृह्णाति " ( तैसं ६·४·११ ) इति ॥ सादनमन्त्रे 'विश्वेभ्यः' इत्यभिधानं युक्तमित्याह— " एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्याह वैश्वदेवो ह्येष देवतया " ( तैसं ६·४·११ ) इति ॥ वाग्वि-सर्गं विधत्ते—" वाग्वै देवेभ्योऽपाक्रामद्यज्ञायातिष्ठमाना ते देवा वाच्यपक्रान्तायां तूष्णीं ग्रहानगृह्णत साऽमन्यत वागन्तर्यन्ति वै मेति साऽऽग्रयणं प्रत्याऽगच्छत् तदाग्रयणस्याऽऽग्रयणत्वं तस्मादाग्रयणे वाग्वि-सृज्यते यत्तूष्णीं पूर्वे ग्रहा गृह्यन्ते " ( तैसं ६·४·११ ) इति । केनापि निमित्तेन वाग्देवता यज्ञार्थं स्वकीयं रूपमप्रकाशयमाना देवेभ्योऽपक्रम्य देवैर्वाग्रहितैः तूष्णीमेव गृहीतेषु सा वागित्थममन्यत—एते देवा वर-दानादिना मां न समादधते किं [illegible] मयि निरपेक्षा एव स्वकार्यं कुर्वन्तो मामन्तर्यन्ति परित्यजन्त्येवेति । ततो देवैरनाहूता सा वागाग्रयणं प्रति स्वयमागच्छत्, तस्मादग्रमभिमुखमयति(ते)[4] गच्छति वागित्याग्रायणं ( आग्रयस्य सोऽग्रायणः । ) तत्र दीर्घव्यत्ययादाग्रयणनाम संपन्नम् । यद्यस्मात् पूर्वे तूष्णीं गृहीता वाक्-चेदानीमागता तस्माद्वाचोऽस्मिन् काले समागमादाग्रयणे गृहीते वाचं विसृजेन्न तु पूर्वग्रहवदुत्तरग्रहांस्तूष्णीं गृह्णीयात् । ननु पूर्वग्रहेष्वपि [6]प्रतिग्रहं मन्त्राणामाम्नातत्वात् कथं तूष्णीं ग्रहणम् ? एवं तर्हि तूष्णींशब्द-

६. व–इमामनु° ।

१. आ,क,ना–केचन । २. आ.क.त्रि२.ना–पर्याप्ताः । ३. आ–देवैर्विगृहीतैः ; क–चा गृहीतैः ; त्रि१.त्रि२.त्रि३–विगृहीतेषु ग्रहेषु गृहीतेषु । ४. आ–°मुखमेति । ५. इ.उ.पा–प्रति° ।

वाग्विसर्गशब्दाभ्यामुपांशूच्चौ ध्वनी विवक्ष्येयाताम्। अत एवौपानुवाक्यकाण्डे समाम्नायते—“ यान् प्राचीनमाग्रयणाद्ग्रहान् गृह्णीयात्तानुपांशु गृह्णीयाद्यानूर्ध्वांस्तानुपब्दिमत. ” ( तैस ३.१.९ ) इति ॥ ध्वनिद्वयं लौकिकदृष्टान्तेन विशदयति—“ यथा त्सारीयति म आस्त इयति नाप राल्स्यामीत्युपावसृजत्येवमेव तदध्वर्युराग्रयणं गृहीत्वा यज्ञमारभ्य वाचं वि सृजते ” ( तैस ६.४.११ ) इति। त्सारी छद्मगतिर्व्याध । ५ त्सर छद्मगताविति धातु । स व्याधो मनस्यादौ विचार्य पश्चाद्बाणानुपावसृजति मुञ्चति। [६]वराहान् वा गजान् वा[६] पातयितु मार्गे यो गर्ते आयामेन रुन्यते स आस्त । ममैतावति दूरमास्तस्तिष्ठति अह त्वीपत पुरोगत इयति दूरे स्थितो नापराल्स्यामि। वराहाग्निमि स्वस्य मारणमेकोऽपराध । स्वात्मान दृष्ट्वा वराहादे पलायनमन्योऽपराध । स्वेन मुक्तस्य बाणस्य स्खलनमपराधान्तरम्। एतत् सर्वमियति दूरे मम न भविष्यतीति निश्चित्य [७]भगतिस्तत्र स्थित्वा पश्चादवसरे सति [८]स्वयमुद्भूतो यथा १० बाणान्[९] मुञ्चति तथैव तत्राध्वर्युर्गूढध्वनि काश्चिद्ग्रहान् गृहीत्वा यज्ञं दृढमवष्टभ्य पश्चात् ध्वनिं प्रकटीकरोतीत्येतदुपपद्यते ॥ विधत्ते—“ त्रिर्हिं करोत्युद्गातॄनेव तद्वृणीते ” ( तैस ६.४.११ ) इति। हिंकारस्य सामसु प्रसिद्धत्वात् सामगाना तेन वरणं युक्तम् ॥ हिंकारस्य काल विधत्ते—“ प्रजापतिर्वा एष यदाग्रयणो यदाग्रयणं गृहीत्वा हिं करोति प्रजापतिरेव तत्प्रजा अभि जिघ्रति ” ( तैस ६.४.११ ) इति। आग्रयणहिंकारयो पौर्वापर्यं यदस्ति तत्तेन प्रजापतिरेव यजमानस्य प्रजाना मूर्धन्याघ्राणं करोति। अत एव १५ पशुष्वप्येतद्दृश्यते ॥ [१०]त्रिष्वपि सवनेषु[१०] आग्रयणं विधत्ते—“ आत्मा वा एष यज्ञस्य यदाग्रयण सवनेसवनेऽभि गृह्णात्यात्मन्नेव यज्ञस्‍ सं तनोति ” ( तैस ६.४.११ ) इति ॥ दशापवित्रस्योपरि सोमरसस्यानयन विधत्ते—“ उपरिष्टादानयति रेत एव तद्दधाति ” ( तैस ६.४.११ ) इति ॥ दशापवित्रस्याधस्तात् स्रवन्त्या [११]धारया ग्रहण[११] विधत्ते—“ अधस्तादुप गृह्णाति प्र जनयत्येव तत् ” ( तैस ६.४.११ ) इति॥ [१२]सवनत्रयगतमाग्रयणं प्रशंसति—“ ब्रह्मवादिनो वदन्ति कस्मात् सत्याद्गायत्री २० कनिष्ठा छन्दसा सती सर्वाणि सवनानि वहतीत्येष वै गायत्रियै वत्सो यदाग्रयणस्तमेव तदभिनिवर्तं सर्वाणि सवनानि वहति तस्मादृत्समपाकृतं गौरभि नि वर्तते ” ( तैस ६.४.११ ) इति। अल्पाक्षरत्वात् कनिष्ठा। प्रात सवने बहिष्पवमानसूक्तानाम् ‘ उपास्मै गायता ’ इत्यादीना छन्दो गायत्री। माध्यन्दिनसवने माध्यन्दिनपवमानसूक्तस्य ‘ उच्चा ते जातमन्धस ’ इत्यस्य गायत्री। तृतीयसवनस्याऽऽर्भवपवमानसूक्तस्य ‘ स्वादिष्ठया ’ इत्यस्य गायत्री। एवमुदाहर्तव्यम्। यथा गौरपाकृत[१३] [१४]स्वीयं वत्समभिलक्ष्य २५ तृणादिकमपि परित्यज्य निवर्तते तथा गायत्री स्ववत्समाग्रयणमभिलक्ष्य पुन पुनर्निवृत्य सवनानि निर्वहति।

‘ ये देवा ’, ‘ त्रिंशच्च ’ इत्येतौ [१५]त्रिष्टुभौ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके दशमैकादशावनुवाकौ ॥

३० ६ आ क—वराहान् गजान्, त्रि३ ना—वराहान् गजान् वा। ७. आ—आगति । ८. आ क ना—पश्चादुद्भूत । ९. त्रि२ त्रि३—बाणम्। १०–१० आ हा—सवनत्रयेऽपि, ना—सवनत्रयेषु। ११–११ क—धारया आनयनम्, त्रि१ त्रि२ त्रि३ हा—धारयाग्रयणम्। १२. आ क ना हा—सवनत्रयगता’। १३ इ उ ना पा मा हा—‘अपाकृतम्’ नास्ति। १४ क—स्व’। १५. आ क त्रि१ त्रि२ ना मा हा—इत्येते।

उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थायुवे
यत् त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वैष ते योनिरिन्द्राय त्वोक्थायुवे ॥ १२ ॥

[ उपयामगृहीतोऽसि द्वाविंशतिः ]

उपयामगृहीत इत्युपयाम-गृहीतः । असि । इन्द्राय । त्वा ।
बृहद्वत इति बृहत्-वते । वयस्वते । उक्थायुव इत्युक्थ-युवे ।　　५
यत् । ते । इन्द्र । बृहत् । वयः । तस्मै । त्वा । विष्णवे । त्वा ।
एषः । ते । योनिः । इन्द्राय । त्वा । उक्थायुव इत्युक्थ-युवे ॥ १२ ॥

[ मैसं १·३·१४; कासं ४·५; कपिसं ३·४; वासं ७·२२ ]

स्थाल्योक्थ्यं गृह्णाति उपयामगृहीतोऽसीति यजुरादिकया 'इन्द्राय त्वा बृहद्वते' इति चतुष्पदयानुष्टुभा । ऋक्त्वादुपरिष्टादुपयामत्वे प्राप्ते अपवादत्वेन पुरस्तादुपयामत्वमाम्नायते ॥ हे　१० सोम, ^V^उपयामगृहीतः ^V^असि, तस्मै[1] त्वाम् ^V^इन्द्राय वक्ष्यमाणगुणाय गृह्णामीति शेषः । ^V^बृहद्वते बृहता साम्ना पृष्ठाख्येन तद्वते । ^V^वयस्वते अन्नवते, ^V^उक्थायुवे उक्थं शस्त्रं कामयमानाय । "क्याच्छन्दसि" ( पा ३·२·१७० ) इत्युप्रत्ययः । "न च्छन्दस्यपुत्रस्य" ( पा ७·४·३५ ) इतीत्वाभावः । "जसादिषु वावचनम्" (द्र. पा ७·३·१०९ वा १ ) इति, "घेर्ङिति" ( पा ७·३·१११ ) इति गुणाभावः । हे ^V^इन्द्र, तव बृहत् प्रभूतं यद् ^V^वयः अन्नं सोमलक्षणं　१५ गृह्यमाणं ^V^तस्मै तदर्थं तत्पानार्थं त्वां प्रार्थयामह इति शेषः । ^V^विष्णवे व्यापकाय तस्मै वयसे त्वां प्रार्थयामह इति । यद्वा—हे सोम, विष्णवे भगवते च त्वां गृह्णामीत्येव शेषः । अत्र विष्णुर्ग्रहण-काल एव देवता, यागकाले तु मित्रावरुणाविन्द्राग्नी च । विष्णुर्हि वृत्रवधे साहाय्यकमिन्द्र-स्याचरत् । "यदेव विष्णुरन्वतिष्ठत जहीति तस्माद्विष्णुमन्वाभजति" ( तैसं ६·५·१ ) इति च ब्राह्मणम् । य[2] इन्द्रस्य सखा विष्णुः तस्मै तदर्थं तत्प्रीत्यर्थम् इन्द्राय त्वा गृह्णामीति ॥　२०

'एष ते योनिरिन्द्राय त्वोक्थायुवे' इति सादयति । "इन्द्रो वृत्राय वज्रमुदयच्छत्" ( तैसं ६·५·१ ) इत्यादि ब्राह्मणम्, "चक्षुर्वा एतद्यज्ञस्य यदुक्थ्यः" ( तैसं ६·५·१ ) इत्यादि च ॥

॥ इति चतुर्थप्रपाठके द्वादशोऽनुवाकः ॥

१. मै–तस्मात्; व–तत् । २. मै–'यः' नास्ति ।　२५

उपयामगृहीतोऽसीति ॥ कल्प —“ स्थाल्योक्थ्यं गृह्णाति । उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत इति मंदणसादनौ ” ( आपश्रौ १२·१५ ११ ) इति ॥ पाठस्तु—‘ उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थायुवे यत्त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वैष ते योनिरिन्द्राय त्वोक्थायुवे ’ इति ॥ हे सोम, उपयामेन स्थाल्या गृहीत ᵛअसि । ᵛइन्द्राय त्वा गृह्णामि । कीदृशाय ? ᵛबृहद्वते ५ बृहत्सामप्रियाय, तत् साम्नयोन्याम् ऋचि ‘ त्वा वृत्रेष्विन्द्र सत्पतिम् ’ इति हि श्रुतम् । ᵛवयस्वते वयोऽन्न सोमरूप तद्वते तत्प्रियाय । उक्थ शस्त्र *तदात्मन इच्छतीत्युक्थायुस्तस्मै ते । ᵛइन्द्र ᵛयत् ᵛते तव ᵛबृहत् ᵛवय महदन्न सोमरूप ᵛतस्मै पानार्थं त्वा प्रार्थय इति शेष । हे सोम, ᵛविष्णवे त्वा गृह्णामि । ᵛएष खरप्रदेश तव स्थानम् । उक्थशस्त्रप्रियाय ᵛइन्द्राय त्वा खरे सादयामि ॥ मन्त्रव्याख्यानायाऽऽदावुक्थ्यग्रहणं विधत्ते—“ इन्द्रो वृत्राय वज्रमुदयच्छत् स वृत्रो वज्रादुद्यतादबिभेत् सोऽब्रवीन्मा मे प्र हारस्ति वा इद मयि १० वीर्यं तत्ते प्र दास्यामीति तस्मा उक्थ्य प्रायच्छत् तस्मै द्वितीयमुदयच्छत् सोऽब्रवीन्मा मे प्र हारस्ति वा इद मयि वीर्यं तत्ते प्र दास्यामीति तस्मा उक्थ्यमेव प्रायच्छत् तस्मै तृतीयमुदयच्छत् त विष्णुरन्वतिष्ठत जहीति सोऽब्रवीन्मा मे प्र हारस्ति वा इद मयि वीर्यं तत्ते प्र दास्यामीति तस्मा उक्थ्यमेव प्रायच्छत् त निर्मायं भूतमहन् यज्ञो हि तस्य मायाऽऽसीद्यदुक्थ्यो गृह्यत इन्द्रियमेव तद्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्ते ” ( तैस ६ ५·१ ) इति । मा मे प्रहा मा मा प्र हार्षी । वीर्यमुक्थ्यरूप श्रेष्ठ वस्तु, उक्थ्यस्थाल्या मन्त्रेण १५ गृहीत सोम इत्यर्थ । तस्य सवनत्रयापेक्षया त्रि प्रदानम् अग्निष्टोमे तृतीयसवन उक्थ्याभावेऽपि सस्थान्तरेषु विद्यते । अथवा प्रात सवन एवोक्थ्यस्थाल्यामुक्थ्यपात्रे त्रिर्ग्रहीतव्यम्, तदपेक्षया त्रि प्रदानम् । तृतीयपर्याये विष्णु ‘ जहि ’ इत्येव वदन् इन्द्रमन्वतिष्ठत सहकारी सन्नवस्थित । उक्थ्यरूपो यज्ञो वृत्रस्य माया । यस्मादुक्थ्यलोभेन मोहित इन्द्रो वृत्र न जघान, त्रिष्वप्युक्थ्येषु दत्तेषु निर्माय मोहयितुमसमर्थं वृत्र हतवास्तस्मादिन्द्रवद्वैरिगतमिन्द्रियसामर्थ्यं विनाशयितुमुक्थ्य गृह्णीयात् ॥ वृत्रेणेन्द्राय दत्तत्वात् मन्त्रेऽपि २० ‘ इन्द्राय ’ इत्युक्तिर्युक्तेत्याह— “ इन्द्राय त्वा बृहद्वते वयस्वत इत्याहेन्द्राय हि स त प्रायच्छत् ” ( तैस ६ ५ १ ) इति ॥ विष्णोरपि सहकारित्वेन भागित्वात् तन्मन्त्रोऽपि युक्त इत्याह— “ तस्मै त्वा विष्णवे त्वेत्याह यदेव विष्णुरन्वतिष्ठत जहीति तस्माद्विष्णुमन्वाभजति ” ( तैस ६ ५ १ ) इति ॥ स्थाल्या गृहीत्वा सादितस्य सोमस्य होमकाले पुनर्दारुपात्रे त्रिवारग्रहण विधत्ते— “ त्रिर्निर्गृह्णाति त्रिर्हि स त तस्मै प्रायच्छत् ” ( तैस ६ ५ १ ) इति । स वृत्रस्तमुक्थ्य तस्मा इन्द्राय त्रि प्रायच्छत् । ‘तस्मात् स्थालीगत २५ सोमं त्रिधा निष्कृष्य पर्यायत्रयेण गृह्णीयात् ॥ दारुपात्रे गृहीतस्याऽऽसादनमन्त्रं स्थाल्यभिमर्शनमन्त्र चोत्पाद्य व्याचष्टे— “ एष ते योनि पुनर्हविरसीत्याह पुन पुनर्ह्यस्मान्निर्गृह्णाति ” ( तैसं ६ ५ १ ) इति ।

---

*[ पा ३·१·७,८ ] । १. त्रि—पात्रेण । २ क.पा हा—तत ।

हे दारुपात्रे गृहीत सोम, तव [१]एष खरप्रदेशः स्थानम्। अनेन मन्त्रेण सादयेत्। हे स्थालीगत सोम, त्वं गृहीतशेषोऽपि पुनर्गृह्यमाणत्वात् हविरेवाऽसि। अस्मात् स्थालीगतात् सोमाद्ग्रहीष्यमाणं पर्यायद्वयमपेक्ष्य पुनः पुनरित्युक्तिः। अत्र सूत्रम्— "उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा जुष्टं गृह्णामि देवेभ्यो देवायुवमुक्थेभ्य उक्थायुवमित्युक्थ्यात् तृतीयं गृहीत्वैष ते योनिर्मित्रावरुणाभ्यां त्वेति सादयित्वा पुनर्हविरसीति स्थालीमभिमृशति। ...। एवं विहितावुत्तरौ पर्यायौ। ताभ्यां प्रतिप्रस्थाता चरति" ( आपश्रौ ५ १२·२८·११–१२·२९·३ ) इति॥ [३]उक्थ्यहोममनु चमसहोमान् विधत्ते— "चक्षुर्वा एतद्यज्ञस्य यदुक्थ्यस्तस्मादुक्थ्य१ हुत१ सोमा अन्वायन्ति तस्मादात्मा चक्षुरन्वेति तस्मादेकं यन्तं बहवोऽनु यन्ति तस्मादेको बहूनां भद्रो भवति। तस्मादेको बह्वीर्जाया विन्दते[४]" ( तैसं ६·५·१ ) इति। चक्षुःस्थानीय उक्थ्ये हुते सत्यनन्तरमेवेतरस्थानीयाश्चमसा होतव्याः। आत्मा सर्वावयवसंघातरूपः पुरुषः[५]। अवयवेषु मुख्यस्य चक्षुषो दृष्टिः पुरतो मार्गे प्रसरति। ततः संघातरूपः आत्माऽनुगच्छति। एकं मुख्यं [६]परिगच्छन्तं बहवो १० भृत्या अनुगच्छन्ति। एको मुख्यश्चक्षुरिव ज्ञापक आचार्यो बहूनां शिष्याणां मध्ये भद्रः पूज्यो भवति। एको मुख्यः स्वतन्त्रः पुरुषः परतन्त्रा बह्वीर्जाया लभते। एभिर्दृष्टान्तैश्चमसानामुक्थ्यानन्तर्यं होमो युक्तः। अत्र सूत्रम्— "ग्रहमध्वर्युरादत्ते चमसांश्चमसाध्वर्यव आश्राव्य प्रत्याश्राविते संप्रेष्यति उक्थशा यज सोमानामिति वषट्कृतानुवषट्कृते जुह्वति भक्षान् हरन्ति" ( आपश्रौ १२·२८·१४ ) इति॥ मुख्यचमसे संपातस्यावनयनं विधत्ते— "[७]यदि कामयेताध्वर्युरात्मानं यज्ञयशसेनार्पयेयमित्यन्तराऽऽहवनीयं च १५ हविर्धानं च तिष्ठन्नव नयेदात्मानमेव यज्ञयशसेनार्पयति[७] यदि कामयेत यजमानं यज्ञयशसेनार्पयेयमित्यन्तरा सदोहविर्धाने तिष्ठन्नव नयेद्यजमानमेव यज्ञयशसेनार्पयति यदि कामयेत सदस्यान् यज्ञयशसेनार्पयेयमिति सद आलभ्याव नयेत् सदस्यानेव यज्ञयशसेनार्पयति" ( तैसं ६·५·१ ) इति। यज्ञयशसं यज्ञफलम्। आलभ्य प्रविश्य। अत्र सूत्रम्— "देवेभ्यस्त्वा देवायुवं पृणच्मि यज्ञस्याऽऽयुष इति मुख्ये संपातमवनयति यदि कामयेताध्वर्युरात्मानं यज्ञयशसेनार्पयेयमित्युक्तम्" ( आपश्रौ १२·२८·२–१२·२९·१ ) इति॥ २०

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके द्वादशोऽनुवाकः॥

---

३. आ.ना–उक्थहोमं। ४. आ–'विन्दते' इत्यस्यानन्तरं–'यदि कामयेताध्वर्युरात्मानं २५ यज्ञयशसेनार्पयेयमित्यन्तराऽऽहवनीयं च हविर्धानं च तिष्ठन्नव नयेदात्मानमेव यज्ञयशसेनार्पयति यदि कामयेत यजमानं यज्ञयशसेनार्पयेयमित्यन्तरा सदोहविर्धाने तिष्ठन्नव नयेद्यजमानमेव यज्ञयशसेनार्पयति'। ५. इ.ज.ना.पा.भां.ह्वा– 'पुरुषः' नास्ति। ६. क.त्रि.–परिवृढं गच्छन्तम्। ७–७. आ–'यदि... ...नयेद्यजमानमेव यज्ञयशसेनार्पयति' नास्ति।

मूर्धानं॑ दि॒वो अ॑र॒तिं पृ॑थि॒व्या वै॑श्वान॒रमृ॒ताय॑ जा॒तम॒ग्निम् ।
क॒वि॒ꣳ स॒म्राज॒मति॑थि॒ जना॑नामा॒सन्ना पात्रं॑ जनयन्त दे॒वाः ॥
मू॒र्धान॑म् । दि॒वः । अ॒र॒तिम् । पृ॒थि॒व्याः ।
वै॒श्वा॒न॒रम् । ऋ॒ताय॑ । जा॒तम् । अ॒ग्निम् ।
५ क॒विम् । स॒म्राज॒मिति॑ सम्–राज॑म् । अति॑थिम् । जना॑नाम् ।
आ॒सन् । एति॑ । पात्र॑म् । ज॒न॒य॒न्त॒ । दे॒वाः ॥

स्थाल्या ध्रुवं गृह्णाति 'मूर्धानम्' इति चतुष्पदया त्रिष्टुभा ॥ मूर्धानं शिरोभूतम् । कस्य ? दिवः द्युलोकस्य । अरतिं गन्तारम् । "वहादिभ्यश्चित्" (द. उ ५०९) इत्यर्तेरति प्रत्ययः । पृथिव्याः च गन्तारं प्रजानां रक्षणार्थं पृथिव्यामपि वर्तमानम् । "उदात्तयण" (पा ६ १ १७४) इति विभक्तेरुदात्तत्वम् । वैश्वानरं विश्वेषां नराणां सबन्धिनम् । "नरे
१० संज्ञायाम्" (पा ६ ३ १२९) इति पूर्वपदस्य दीर्घः । ऋताय सत्याय यज्ञाय वा जातम् । कविं मेधाविनम् । सम्राजं सम्यग्भ्राजन्तम् । "मो राजि समः क्वौ" (पा ८ ३ २५) । कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६ २ १३९) । जनानां यजमानलक्षणानाम्, अतिथिं यजमानगृहान् सातत्येन गच्छन्तम् । "ऋतन्यञ्जि" (द उ ४५०) इत्यादिना अततेरिथिन्प्रत्ययः ।
१५ यजमानगृहेष्वतन्तमित्यर्थः । ईदृशमग्निं देवाः पात्रम् आ जनयन्त आभिमुख्येन जनितवन्तः । पिबत्यनेनेति पात्रम् । "ष्ट्रन् सर्वधातुभ्यः" (द उ ६०८) इति ष्ट्रन्प्रत्ययः । सोमं पातुं तत्पात्रतयाग्निं कृतवन्त इत्यर्थः । कीदृशं तत्पात्रमित्यत आह—आसन् आस्ये । द्वितीयार्थे सप्तमी, तस्याश्च लुक् । अग्निमास्यं कृतवन्त इति यावत् । "पदन्" (पा ६ १ ६३) इत्यादिना आस्यशब्दस्यासन्नादेशः । यद्वा—निमित्तसप्तम्येषा, आस्यनिमित्तम् आस्यत्वाय अग्नि-
२० रस्माकमास्यमिव भूयादिति । अग्निना ह्यास्येन देवा आहुतीः पिबन्ति, अग्निमुखत्वात्तेषाम् ॥

मूर्धानमिति ॥ कल्पः— "मूर्धानं दिवो अरतिं पृथिव्या इति स्थाल्या ध्रुवं पूर्णं गृह्णाति । । एष ते योनिरग्नये त्वा वैश्वानरायेत्यायतने हिरण्ये सादयेत्" (आपश्रौ १२-१६ १-३) इति ॥ पाठस्तु—'मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृताय जातमग्निम् । कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः । उपयामगृहीतोऽस्यग्नये त्वा वैश्वानराय ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तम एष ते योनिरग्नये त्वा वैश्वानराय" इति । अत्र गृहीत्वा पश्चात्—'ध्रुवोऽसि' इत्यादिकं
२५ पठेत् । तदुक्तं बौधायनेन—"अथैनमधिवदते ध्रुवोऽसि इति" (बौश्रौ ७ ७) इति ॥ 'मूर्धानम्' इति मन्त्रे 'स्तुमः' इति पदमध्याहृत्य अग्निं वयं स्तुमः इति यानलीयम् । कीदृशमग्निम् ? दिवः

१ व—तत्र पात्र' । २ तं ति-पात्रमिति । ३ त ति-'मास्यमत्र ।

१ आ पा द्वा—वैश्वानरायेति । २ आ पा द्वा—'पश्चात्' नास्ति ।

उपयामगृहीतोऽस्यग्नये त्वा वैश्वानराय ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां
ध्रुवतमोऽच्युतानामच्युतक्षित्तम एष ते योनिरग्नये त्वा वैश्वानराय ॥ १३ ॥

[ मूर्धानं पञ्चत्रिंशत् ]

उपयामगृहीत इत्युपयाम–गृहीतः । असि । अग्नये । त्वा । वैश्वानराय । ध्रुवः । असि ।
ध्रुवक्षितिरिति ध्रुव–क्षितिः । ध्रुवाणाम् । ध्रुवतम इति ध्रुव–तमः । अच्युतानाम् । अच्युतक्षित्तम ५
इत्यच्युतक्षित्–तमः । एषः । ते । योनिः । अग्नये । त्वा । वैश्वानराय ॥ १३ ॥

[ मैसं १·३·१५; कासं ४·५; कपिसं ३·५; वासं ७·२४–२५ ]

इमामनुद्रुत्य ' उपयामगृहीतोऽस्यग्नये त्वा वैश्वानराय ' इति गृह्णाति ॥

अधिवदते—' ध्रुवोऽसि ' इति ॥ ध्रुवः त्वम् असि यो[4] यज्ञस्यायुष्ट्वात् ग्रहाणामुत्तमः स त्वमसि । " आयुर्वा एतद्यज्ञस्य यद्ध्रुवः " ( तैसं ६·५·२ ) इत्यादि ब्राह्मणम् । यद्वा— १० पृथिव्या धृतिहेतुत्वादस्य ध्रुवत्वं, ध्रुवं करोतीति ध्रुवः । " असुरा वा उत्तरतः पृथिवीं पर्याचिकीर्षन् " ( तैसं ६·५·२ ) इत्यादि ब्राह्मणम् । ध्रुवक्षितिः ध्रुवनिवासः निश्चलावस्थानः यावद्वैश्वदेव्या ऋचः शंसनं तावदवस्थानात्; यथोक्तम्—" वैश्वदेव्यामृचि शस्यमानायामवनयति " ( तैसं ६·५·२ ) इति[5] । ध्रुवाणाम् आदित्यस्थाल्यादीनां मध्ये ध्रुवतमः त्वमसि । अच्युतानामच्युतस्थानानां मध्ये अच्युतक्षित्तमः त्वमसि । अच्युतं स्थानं क्षियति निवसतीति क्विप् १५ ( पा ३·२·७६ ) । यद्वा—अच्युतानां स्थानानां मध्ये [6]यदच्युतमतिशयेनाच्युततमं निषेवते इति[6] अच्युततमक्षिदिति यावत् ब्रूयात्तावदच्युतक्षित्तम इति । तत्र सामर्थ्यादुपसर्जनातिशायने तमप्प्रत्ययः, छान्दसो वा । ईदृशस्त्वमसीत्यधिवादः[7] ॥

' एष ते योनिरग्नये त्वा वैश्वानराय ' इति सादयति ॥

॥ इति चतुर्थप्रपाठके त्रयोदशोऽनुवाकः ॥ २०

मूर्धानं शिरोवदुन्नतदेशे सूर्यरूपेणावस्थाय द्युलोकस्य भासकम् । अरतिं पृथिव्याः, रतिरुपरतिस्तद्रहितम् । न हि पृथिव्या उपरि कदाचिदग्निरुपरमते किंतु दाहपाकप्रकाशैः सर्वाननुगृह्णन् सर्वदा वर्तते । स चाग्निर्वैश्वानरनामकः । यथा–" दिवि नाको नामाग्नी रक्षोहा " ( मैसं ४·१·९ ) इत्याम्नाते तथा पृथिव्यां वैश्वानरः । [3]ऋताय जातं यज्ञार्थमाहवनीयादिरूपेणोत्पन्नम् । कविं स्वभक्ताननुग्रहीतुमभिज्ञम् । सम्राजं सम्यक् दीप्यमानम् । जनानां यजमानानाम् अतिथिं हविर्भिः सत्कारयोग्यम् । आसन् ईदृशस्याग्नेरास्ये होतुं देवाः २५ पात्रं सोमग्रहचमसरूपम् आ जनयन्त सर्वत्र ऐन्द्रवायवादिस्थानेषूत्पादितवन्तः । हे सोम, स्थालीरूपेणोपयामेन गृहीतः असि । वैश्वानराय अग्नये त्वां गृह्णामि । हे ग्रह, त्वं ध्रुवः असि ध्रुवनामकोऽसि । ध्रुवक्षितिः स्थिरनिवासः, आ वैश्वदेवशंसनमवस्थानात् । ध्रुवाणाम् आदित्यस्थाल्यादीनां मध्येऽतिशयेन ध्रुवः । तस्यैव व्याख्यानम् अच्युतानाम् अच्युतक्षित्तम इति । एषः अनुपोसदेशस्तव स्थानं तत्र वैश्वानराय

४. तं.ति–ध्रुवस्य; व–ध्रुवः । ५. व–' इति ' नास्ति; तं.ति.ध–इति ब्राह्मणम् । ६–६. व– ३० यदतिशयेनाच्युतं स्थानमिति यावत् । ७. तं.ति–अर्थवादः ।

३. आ.पा.हा–तथा पृथिव्यां ऋताय ।

अग्नये त्वा सादयामि ॥ [4]ध्रुवग्रहणं विधत्ते—"आयुर्वा एतद्यज्ञस्य यद्ध्रुव उत्तमो ग्रहाणां गृह्यते तस्मादायुः
प्राणानामुत्तमम्" ( तैसं ६ ५ २ ) इति। ऐन्द्रवायवादयो यथा यज्ञस्य वागादिप्राणरूपास्तथा ध्रुवोऽप्यायु-
स्स्वरूप। स च ध्रुवोऽन्तर्यामैन्द्रवायवादीनां धाराग्रहाणामुत्तमश्चरमो यथा भवति तथा ग्रहीतव्य। अत
एव ध्रुवग्रहप्रस्तावे सूत्रकारेणोक्तम्—" अत्र धारा निरमति " ( आपश्रौ १२-१६ ९ ) इति। यस्मादायु-
५ स्स्थानीयो ध्रुवो ग्रहाणामुत्तमस्तस्माद्वागादीनां [5]प्राणानां मध्ये जीवनरूपमायुरुत्तमम्। सति हि जीवने
[6]प्राणा शोभन्ते[6] ॥ मन्त्रे ' [7]मूर्धानम् ' इत्यादिशब्दप्रयोगेण[7] ज्ञातीनां मध्ये यजमानं श्रेष्ठं करोती-
त्याह—" मूर्धानं दिवो अरतिं पृथिव्या इत्याह मूर्धानमेवैनꣳ समानानां करोति " ( तैसं ६.५ २ ) इति।
आयुषो वैश्वानराभिमानिदेवत्वादायुःस्थानीयध्रुवस्य ग्रहणे वैश्वानरशब्दो युक्त इत्याह—" वैश्वानर-
मृताय जातमग्निमित्याह वैश्वानरꣳ हि देवतयाऽऽयु " ( तैसं ६ ५ २ ) इति। अस्यामृच्युपरितने यजुषि च
१० वैश्वानरशब्दप्रयोगो नाभेरूर्ध्वाधोवर्तिप्राणसाम्यायेत्याह—" उभयतोवैश्वानरो गृह्यते तस्मादुभयत प्राणा
अधस्ताच्चोपरिष्टाच्च " ( तैसं ६ ५ २ ) इति ॥ यथा वाक्चक्षुरादय [8]उपरिभागवर्तिनो मनस्त्वान्धत्वबधिर-
त्वादिकृतानल्पान् व्यवहारनिरोधान् वारयन्तो देहस्यार्थं कृत्स्नं निर्वहन्ति अधोभागवर्ती तु प्राणो मलमूत्र-
निरोधं महान्तं निवारयन्नर्धंकृत्स्नं निर्वहति तथैवान्ये ग्रहा यज्ञस्यार्धं निर्वहन्ति ध्रुवस्त्वर्धमिति प्रशंसति—
" अर्धिनोऽन्ये ग्रहा गृह्यन्तेऽर्धी ध्रुवस्तस्मादर्ध्यवाङ्प्राणोऽन्येषां प्राणानाम् " ( तैसं ६ ५ २ ) इति ॥
१५ [9]अर्धित्वमिति शेष ॥ ध्रुवस्येतरविलक्षणं [10]सादनस्थानं विधत्ते—" उपोप्तेऽन्ये ग्रहा साद्यन्तेऽनुपोप्ते
ध्रुवस्तस्मादस्थ्नाऽन्या प्रजा प्रतितिष्ठन्ति मांसेनान्या " ( तैसं ६.५ २ ) इति। मृदमुपोप्य खरीकृते
प्रदेशे [11]ग्रहान्तरसादनम्, केवलभूम्या[11] ध्रुवस्य सादनम्। यस्मादेव वैलक्षण्यं तस्माल्लोकेऽपि अन्या
गवादिरूपा प्रजा अस्थिवत् कठिनखुरेण भूमौ तिष्ठन्ति, अन्यास्तु मनुष्यरूपा प्रजा पादतलगतेन मांसे-
नावतिष्ठन्ते ॥ भूमौ साद्यमानस्य ध्रुवस्योत्तरहविर्धानसमीपदेशं विधत्ते— " असुरा [illegible] उत्तरत पृथिवीं
२० पर्याचिकीर्षन् तां देवा ध्रुवेणादृꣳहन् तद्ध्रुवस्य ध्रुवत्वम्, यद्ध्रुव उत्तरत साद्यते धृत्यै " ( तैसं
६ ५ २ ) इति ॥ पर्याचिकीर्षन् पर्याकर्तुमुत्तरत आक्रष्टुमैच्छन्। ध्रुवस्योत्तरदेशे सादनेन पृथिवी
धृता भवति। अत्र सूत्रम्— " उत्तरस्य हविर्धानस्याग्रेणोपस्तम्भनमनुपोप्ते ध्रुवस्थालीम् " ( बौश्रौ
७ ७ ) इति ॥ ध्रुवेऽवस्थितस्य सोमस्य होतृचमसेऽवनयनं विधत्ते— " आयुर्वा एतद्यज्ञस्य यद्ध्रुव
आत्मा होता यद्धोतृचमसे ध्रुवमवनयत्यात्मन्नेव यज्ञस्याऽऽयुर्दधाति " ( तैसं ६ ५ २ ) इति ॥ अवन-
२५ यनस्य कालं विधिरसुमतान्मराण्युपन्यस्यति—" पुरस्तादुक्थस्यावनीय इत्याहु पुरस्तान्ध्यायुषो भुङ्क्ते
मध्यतोऽवनीय इत्याहुर्मध्यमेन ह्यायुषो भुङ्क्ते " ( तैसं ६ ५ २ ) इति ॥ उक्थं शस्त्रम्। तच्च त्रेधा
विभज्य पूर्वभागे शस्यमानेऽवनयेत्। एवमितरयोरपि। आयुष पूर्वभागे बाल्ये यद्बहुकृत्वो भुज्यते।
मध्यमे भागे यद्बहुत्र भुज्यते। [12]उत्तमे भागे शक्त्यभावेऽपि बहु भोक्तुमिच्छति ॥ इदानीं विधत्ते—
" वैश्वदेव्यामृचि शस्यमानायामव नयति वैश्वदेव्यो वै प्रजा प्रजास्वेवाऽऽयुर्दधाति " ( तैसं ६ ५ [illegible] )
३० इति ॥ ' उत नोऽहिर्बुध्न्य शृणोतु ' इत्येषा वर्धद्वरी ॥

" मूर्धानं दिव " इत्येषा त्रिष्टुप् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
प्रथमकाण्डे चतुर्थप्रपाठके त्रयोदशोऽनुवाक ॥

---

४ आ क हा–ध्रुवग्रहम्। ५ इ उ त्रि पा भा हा–' प्राणानाम् ' नास्ति। ६–६ हा–प्रशो-
३५ भन्ते, इ उ–प्रशोभते। ७–७ क–मूर्धशब्दप्रयोगेण। ८ आ पा हा–उपरिवर्तिन। ९ त्रि–अर्धमिति।
१०. क–स्थानसादन। ११ क–ग्रहान्तरासादनम्। १२ उ–केवलभूम्यामेव, पा.भा हा–केवलमेव
भूम्याम्। १३. इ उ पा भा हा–उत्तमे।

मधुश्च माधवश्च शुक्रश्च शुचिश्च नभश्च नभस्यश्चेषश्चोर्जश्च सहश्च सहस्यश्च
तपश्च तपस्यश्चोपयामगृहीतोऽसि सꣳसर्पोऽस्यꣳहस्पत्याय त्वा ॥ १४ ॥

[ मधुस्त्रिꣳशत् ]

मधुः । च । माधवः । च । शुक्रः । च । शुचिः । च । नभः । च । नभस्यः । च । इषः ।
च । ऊर्जः । च । सहः । च । सहस्यः । च । तपः । च । तपस्यः । च ।
उपयामगृहीत इत्युपयाम—गृहीतः । असि । सꣳसर्प इति सं—सर्पः । असि ।
अꣳहस्पत्यायेत्यꣳहः —पत्याय । त्वा ॥ १४ ॥

[ मैसं १.२.१६; कासं ४.७; कपिसं ३.५; वासं ७.३० ]

अथ ऋतुग्रहास्त्रयोदश । तेषां ग्रहणमन्त्राः त्रयोदशैव यजूंषि । तत्र तेषामन्त्यस्य पुरस्तादुपयामत्वमाम्नायते—'उपयामगृहीतोऽसि संसर्पोस्यंहस्पत्याय त्वा' इति । पूर्वेऽपि "पुरस्तादुपयामा यजुषा गृह्यन्ते" (तैसं ६.५.१०) इति पुरस्तादुपयामाः कर्तव्याः । तदर्थमन्त्यमन्त्रादौ समाम्नातं तैरप्यनुषज्यते, तेषां साकाङ्क्षत्वाच्च; 'उपयामगृहीतोऽसि मधुश्च' इत्यादि । हे सोम, [v]उपयामगृहीतः [v]असि, ततस्त्वां मधुश्च [1]प्रतिपद्यतां संप्रदानत्वेन तव वर्तताम् । मधुर्नाम वासन्तिको मासः, "मधुश्च माधवश्च वासन्तिकावृतू" (तैसं ४.४.११) इति । ऋत्ववयवौ मासावित्यर्थः । यथा[2]—"तस्माद् द्वौद्वावृतू" (तैसं ६.५.३) इति । स च मधुप्रायत्वान्मधुरुच्यते । *भूम्नि मत्वर्थीयः "मत्वर्थे मासतन्वोः" (पा ४.४.१२८) इति । तस्य "लुगकारेकाररेफाश्च" (पा ४.४.१२८ वा २) इति लुक् । मधुमानित्यर्थः । [3]सोमश्च चार्यः[3] । मासाश्च[4] चान्द्राः, त्रयोदशस्य चान्द्रत्वात्, पौर्णमासीनिमित्तस्य चैत्रादिव्यपदेशस्य चान्द्राणामेव संभवात् । अत एव मासानुविधायि मधुशब्दः । "यज्ञेन वै देवाः सुवर्गं लोकमायन्" (तैसं ६.५.३) इत्यादि ब्राह्मणं समस्तोऽनुवाकः ॥

मधुरिति ॥ कल्पः– "ऋतुग्रहैः प्रचरतः[1] । द्रोणकलशाद् गृह्यन्ते । न साद्यन्ते । पूर्वेषां शेषेपूत्तरानभिगृह्णीतः । पूर्वोऽध्वर्युर्गृह्णाति जघन्यः प्रतिप्रस्थातोपयामगृहीतोऽसि मधुश्च...इत्येतैः प्रतिमन्त्रम् । ...सꣳसर्पोऽस्यꣳहस्पत्याय त्वेति त्रयोदशचतुर्दशौ गृह्णीते" (आपश्रौ १२.२६.८–११; १२.२७.५) इति ॥ मन्त्रपाठस्तु—'मधुश्च माधवश्च शुक्रश्च शुचिश्च नभश्च नभस्यश्चेषश्चोर्जश्च सहश्च सहस्यश्च तपश्च तपस्यश्चोपयामगृहीतोऽसि सꣳसर्पोऽस्यꣳहस्पत्याय त्वा' इति ॥ अत्र मध्वादिशब्दाः क्रमेण चैत्रादिमासानां वाचकाः । संसर्पांहस्पतिशब्दयोरर्थोऽन्यत्र दर्शितः— "असंक्रान्तावेकवर्षे द्वौ चेत्संसर्प आदिमः । क्षयमासो द्विसंक्रान्तः स चांहस्पतिसंज्ञकः" (कालमाधव १७) इति ॥ मन्त्रादौ 'उपयाम°' इति प्रयुञ्जीत । हे सोम, त्वम् [v]उपयामगृहीतः [v]मधुः[v]च [v]असि । एवमन्यत्रापि योज्यम् । ऋतुग्रहं(हान्) विधत्ते—"यज्ञेन वै देवाः सुवर्गं लोकमायन् तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति ते संवत्सरेण योप-

१. पं–प्रपद्यताम् । २. तं.ति.व–'यथा' नास्ति । *[ द्र. पाभा ५.२.९४ वा १ ] । ३–३. तं.ति.व–'सोमश्च चार्यः' नास्ति । ४. तं.ति.व–'च' नास्ति ।

१. इ.उ.पा.भां–प्रचरति; हा–प्रचरते ।

द्वितीयं गृह्णाति—'उपयामगृहीतोऽसि माधवश्च' इति । [1]माधव [2]च त्वा प्रतिपद्यता-
मिति शेषः । एवं सर्वत्र। माधव इति तस्यैव द्वितीयो मासः । "मधोर्ञ च" ( पा ४ ४ १२९ )
इति मत्वर्थे ञप्रत्ययः । मधुमानित्येवार्थः ॥

तृतीयं गृह्णाति—'शुक्रश्च' इति ॥ शुग्दीप्तिरस्मिन्नस्तीति भूम्नि तेनैव मत्वर्थीयो
५ रप्रत्ययः ( पा ४ ४ १२८ वा २ )। ग्रेष्मो मास उच्यते ॥

चतुर्थं गृह्णाति—'शुचिश्च' इति ॥ शोचयिता शोषयिता सलिलानामिति[3] शुचिः, स
हि बहूष्णत्वात् सर्वं सलिलं शोषयति। "इन् सर्वधातुभ्यः" ( उ उ ५६७ ) इति शुचेरिन्प्रत्ययः ॥

पञ्चमं गृह्णाति—'नभश्च' इति ॥ नह्यति बध्नाति जन्तूनिति नभः । "नहेर्दिवि
भश्च" ( उ ६६० ) इत्यसुन्प्रत्ययः । वार्षिको मास उच्यते । स हि वर्षाभिभवेन जन्तून्
१० प्रवृत्तिशून्यान् [6]बद्धानिव करोति[6] । यद्वा—न भातीति नभः, स हि मेघाच्छादितत्वात्[7] न
भाति । भातेरसुनि ( उ ६३८ ) नञ्समासे नलोपाभावो बहुलवचनत्वात् ।

षष्ठं गृह्णाति—'नभस्यश्च' इति ॥ [8]न भातीति[8] नभः । भातेरसुन् । समानमन्यत् ।
अप्रकाशो नभोऽस्यास्तीति नभस्यः । "मत्वर्थे मासतन्वोः" ( पा ४ ४ १२८ ) इति यत् ॥

सप्तमं गृह्णाति—'इषश्च' इति ॥ इडन्नम् । भूम्नि मत्वर्थीयोऽकारप्रत्ययः[9] ( पा ५.२ १२७ )।
१५ इष इति शारदो मास उच्यते, शरदि हि प्रायेणौषधयः संपद्यन्ते ॥

अष्टमं गृह्णाति—'ऊर्जश्च' इति ॥ ऊर्ग् रसः । स एव मत्वर्थीयोऽकारः ( पा ५ २ १२७ )।
तत्र हि गावो बहुक्षीरा भवन्ति । प्रसन्नाश्च सरित्तटाकादयो रसवन्तो भवन्ति ॥

---

यित्वा सुवर्गं लोकमायन् तमृषय ऋतुग्रहैरेवानु प्राजानन् यदृतुग्रहा गृह्यन्ते सुवर्गस्य लोकस्य प्रज्ञात्यै "
( तैसं ६ ५ ३ ) इति । [2]संवत्सरेण योपयित्वा कालविलम्बेन मोहयित्वा । यत ऋषयो मनुष्येष्वभिज्ञा ॥
२० तस्या विधत्ते— "द्वादश गृह्यन्ते द्वादश मासाः संवत्सरः संवत्सरस्य प्रज्ञात्यै" ( तैसं ६ ५ ३ ) इति ।
त्रयोदशचतुर्दशयोरप्येतदुपलक्षणम् । अत एव सूत्रकार आह— "द्वादश त्रयोदश चतुर्दश वा गृह्यन्ते"
( आपश्रौ १२ २७ १ ) इति ॥ आदावन्ते च [3]द्वयोर्द्वयोर्ग्रहणं विधत्ते— "सह प्रथमौ गृह्णीत सहोत्तमौ
तस्माद्द्वौद्वावृतू" ( तैसं ६ ५ ३ ) इति । मधुश्च माधवश्चेत्येतौ प्रथमौ । तपश्च तपस्यश्चेत्येतावुत्तमौ[4]।
यस्माद्द्वयोः साहित्यमत्र विहितं तस्माद्द्वौ मासावृतुत्ववन्तौ ॥ पात्रस्थसोमं वह्नौ स्रावयितुं तिरस्य
२५ पार्श्वयोर्द्वे मुखे[5] विधत्ते— "उभयतोमुखमृतुपात्रं भवति को हि तद्वेद यत ऋतूनां मुखम्" ( तैसं
६ ५ ३ ) इति । ऋतूनां मुखमृतुधर्मप्रवृत्त्यारम्भो यतो यस्मात् [6]कालादारभ्य भवति तत् को नाम वेद ।
तस्मादृतुपात्रस्य मुखद्वयं कुर्यात् ॥ अध्वर्युप्रतिप्रस्थात्रोः प्रैषमन्त्रावुत्पादयति— "ऋतुना प्रेष्येति षड्कृत्वः

---

५ मे-'इति' नास्ति । ६-६ मे-करोतीति बध्नाति, व-बध्नाति । ७ त प य-मेघैश्छा-
दितत्वात्, त-मेघच्छादितत्वात् । ८-८ तं ति प र-नभनात् । ९. ति प-प्रत्ययः । शीतवानिति
३० यावत्, तं-प्रत्ययः । ओषधिमानिति यावत् ।

---

२-२ ड उ पा भा हा-'संवत्सरेण इति' नास्ति । ३. आ क हा-द्वयोर्ग्रहणम् ।
४ ति१-उत्तमौ । ५. ड उ ति१.पा मा-त्वमे । ६ ड उ ति१ पा.मा-कारणादारभ्य ।

नवमं गृह्णाति—'सहश्च' इति ॥ हैमन्तिको मास उच्यते। सहते अभिभवतीति सहः। स हि शीतेन प्रजा अभिभवति। कर्तर्यसुन् ( उ ६३८ )॥

दशमं गृह्णाति—'सहस्यश्च' इति ॥ प्रजानामभिभावकेन शीतेन तद्वान्। तेनैव यत्प्रत्ययः ( पा ४·४·१२८ )। शीतवानिति यावत् ॥

एकादशं गृह्णाति—'तपश्च' इति ॥ शैशिर उच्यते। तपति दहति हिमेनेति तपः। कर्तर्येवासुन् ( उ ६३८ ) ॥ ५

द्वादशं गृह्णाति—'तपस्यश्च' इति ॥ तपता हिमेन तद्वान् तपस्यः। [10]"स एव यत्"[10] ( पा ४·४·१२८ )। एवं नभःसहस्तपःशब्दाः स्वरानुरोधेनासुन्प्रत्ययान्ता व्याख्याताः। तथैव चाहुर्लौकिकाः— "नभोनभस्यौ कथिताविषोर्जौ सहःसहस्यौ च तपस्तपस्यौ" इति। आचार्याभिप्रायेण त्वेते अकारान्ता लक्ष्यन्ते; यथोक्तम् "नभाय त्वा जुष्टं गृह्णामि" ( बौश्रौ ७·१६ ) इत्यादि। तदा ते इमे मत्वर्थीयाकारान्ता द्रष्टव्याः। क्विबन्तेभ्यो ( पा ३·२·७६ ) वाऽसुन् ( उ ६३८ ) कार्यः। पचाद्यजन्तेभ्यो ( पा ३·१·१३४ ) वा मत्वर्थीयो लुप्यते। सर्वथा त्वेते वृषादयो ( पा ६·१·२०३ ) द्रष्टव्याः ॥ १०

त्रयोदशं गृह्णाति—'उपयामगृहीतोऽसि संसर्पोऽस्यंहस्पत्याय त्वा जुष्टं गृह्णामि' इति। हे सोम, उपयामगृहीतोऽसि, ततस्त्वामंहस्पत्याय त्वां जुष्टं गृह्णामीति वक्ष्यमाणेन संबध्यते। संसर्प इति त्रयोदशो मास उच्यते। स हि द्वादशेन मासेन सह[11] संसर्पति[12] संगच्छते। १५

---

आह षड्वा ऋतव ऋतूनेव प्रीणात्यृतुभिरिति चतुश्चतुष्पद एव पशून् प्रीणाति द्विः पुनर्ऋतुनाऽऽह द्विपद एव प्रीणाति" ( तैसं ६·५·३ ) इति। हे मैत्रावरुण, ऋतुना निमित्तेन होतारं प्रेष्य। तमिमं मन्त्रं प्रथमतृतीयपञ्चमेष्वध्वर्युर्ब्रूयात्, द्वितीयचतुर्थषष्ठेषु प्रतिप्रस्थाता ब्रूयात्। एवं षट्कृत्वस्तद्वचनम्। तेन षड्ऋतूनां प्रीतिः। 'ऋतुभिः प्रेष्य' इति सप्तमनवमयोरध्वर्युर्ब्रूयात्, अष्टमदशमयोः प्रतिप्रस्थाता। तेन चतुरावर्तनेन पशूनां प्रीतिः। 'ऋतुना प्रेष्य' इत्यध्वर्युरेकादशे ब्रूयात्, प्रतिप्रस्थाता द्वादशे। तेन द्विरावर्तनेन मनुष्याणां पक्षिणां च प्रीतिः ॥ पूर्वोक्तामेव षट्चतुर्द्विसंख्यामुपजीव्योपजीवकभावेन प्रशंसति— "ऋतुना प्रेष्येति षट्कृत्व आहर्तुभिरिति चतुस्तस्माच्चतुष्पादः पशव ऋतूनुप जीवन्ति द्विः पुनर्ऋतुनाऽऽह तस्माद्द्विपादश्चतुष्पदः पशूनुप जीवन्ति" ( तैसं ६·५·३ ) इति। गवादयश्चतुष्पादः [7]शीतोष्णादीन् धर्मानुपजीवन्ति[7], मनुष्याश्च द्विपादः पशुगतक्षीरादीनुपजीवन्ति ॥ स्वर्गारोहणसोपानरूपेण[8] प्रशंसति— "ऋतुना प्रेष्येति षट्कृत्व आहर्तुभिरिति चतुर्द्विः पुनर्ऋतुनाऽऽहाऽऽक्रमणमेव तत्सेतुं यजमानः कुरुते सुवर्गस्य लोकस्य समष्ट्यै" ( तैसं ६·५·३ ) इति। आक्रम्यते प्राप्यते स्वर्गोऽनेनेत्याक्रमणः सेतुः। यथा सेतोरधोभागो विशालः, ऊर्ध्वभागः[9] संकुचितस्तथैवात्र षट्चतुर्द्विसंख्या द्रष्टव्या। सोपानेष्वप्येतत् समानम् ॥ अध्वर्युप्रतिप्रस्थात्रोर्युगपद्गमनं निषेधति— "नान्योऽन्यमनु प्र पद्येत यदन्योऽन्यमनु प्रपद्येतर्तुर्ऋतुमनु प्र पद्येतर्तवो मोहुकाः स्युः" ( तैसं ६·५·३ ) इति। अध्वर्युप्रतिप्रस्थातृभ्यां प्रथमद्वितीयौ ग्रहौ सह गृहीतौ। [10]ततो हविर्धानान्निष्क्रम्य गत्वाऽऽहवनीये हुत्वा पुनः प्रत्यागत्य हविर्धाने ग्रहान्तरं २० २५ ३०

---

१०–१०. व–शैशिर एव; तं–स एव यत्प्रत्ययः। ११. मै–'सह' नास्ति। १२. ति–सर्पति।

---

७–७. आ–शीतोष्णादीनृतुधर्मानुपजीवन्ति; क–शीतोष्णादिनृधर्मानुपजीवन्ति। ८. क–'रूपेण' इत्यस्यानन्तरं 'पुनः'। ९. क-त्रि१–ऊर्ध्वप्रदेशः। १०. इ.ड.पा.हा–'ततः' नास्ति।

यद्वा—यस्मादय मासि मास्यंशेनांशेन निष्पद्यते तस्मात् संसृष्ट एव मासान्तरै सर्पति । त्रिंशता च मासैर्मासत्वेन संपद्यते । ईदृशस्त्वमसि न कर्मणा त्रयोदशमासार्होऽसीति । " परादिश्छन्दसि बहुलम् " ( पा ६ २ १९९ ) इत्युत्तरपदाद्युदात्तत्वम् । [11]अधुना सोम उच्यते—अंहस्पत्याय त्वा जुष्टं गृह्णामीति शेष । अंहस्पत्यस्त्रयोदशो मास । अंहांसि पापानि पातयति । " अमे-
५ र्हुक्च " ( उ ६६२ ) इत्यसुन् । पातयिता नाशयिता अंहस्पत्य । पततेर्ण्यन्ताद् ( पा ३ १ २६ ) " कृत्यल्युटो बहुलम् " ( पा ३ ३ ११३ ) इति कर्तरि यत्प्रत्यय । " बहुल संज्ञाछन्दसो " ( उ १९० ) इति णिलुक् । " कस्कादिषु च " ( पा ८ ३·४८ ) इति सत्वम् । यद्वा— अंहतेर्गतिकर्मणोऽसुन् ( उ ६३८ ) । अंहसा गतीना पति पाता प्रवर्तक आदित्य, तदधीनत्वात् सर्वचेष्टानाम् । " पातेर्डति " ( उ ५०६ ) । यद्वा—ङनानु-
१० स्वारोपजनमहरेनाह इत्युच्यते, यथोक्तम् " वर्णागमो वर्णविपर्ययश्च " ( द्र काशिका पा ६ ३ १०९ ) इति । तस्य पतिर्दिनपतिरादित्य एव । तत आगतस्तस्यापत्य वा अंहस्पत्य । पत्युत्तरपदलक्षणो ण्य. ( पा ४ १·८५ ) । छान्दस आदिवृद्ध्यभाव । " संज्ञापूर्वको विधिरनित्य " ( द्र काशिका ६ ४·१४६, परिभाषेन्दुशेखर ९४ ) इति वा । आदित्यवशेन हि त्रयोदशो मासो जायते । यथोक्तम्— " अधिमासका युगे ते रविमासेभ्योऽधिकास्तु ये चान्द्रा "
१५ इति । तस्मात्तत आगत इति वा, तदपत्यमिति वा शक्यते वक्तुम् । " अस्ति त्रयोदशो मास इत्याहु " ( तैसं ६ ५ ३ ) इति च ब्राह्मणम् । यद्वा—संसर्पोऽयं सोम एव संसर्प इत्युच्यते ।

यद्वा—उपयामगृहीतोऽसि संसर्पोऽयंश्चासि, तस्मादंहस्पत्याय त्वा गृह्णामीति । चतुर्थ्यर्थे वा द्वितीया, अंहस्पत्याय तुभ्यमिमं सोम गृह्णामीति शेष ॥

॥ इति चतुर्थप्रपाठके चतुर्दशोऽनुवाक ॥

---

२० ग्रहीतव्यम् । तत्रैक पुरतोऽन्य पृष्ठत इत्येव युगपद्य गन्तव्य किं तु पर्यायेण । यद्युतुग्रहे तयो सहगमनं स्यात् तदानीमेकमृतुमन्योऽनुप्रविशेत् । [11]तदा साकर्यादृतवो मोहहेतवो भवेयु ॥ कालभेदवदुभयोर्मार्ग-भेद विधत्ते— " प्रसिद्धमेवाध्वर्युर्दक्षिणेन प्र पद्यते प्रसिद्ध प्रतिप्रस्थातोत्तरेण तस्मादादित्य. षण्मासो दक्षिणेनैति षडुत्तरेण " ( तैसं ६ ५ ३ ) इति । प्रथमत सिद्ध प्रसिद्धमादित आरभ्येत्यर्थ । यस्मादृत्विनो-र्दक्षिणोत्तरौ द्वौ मार्गौ तस्मादादित्यस्यापि दक्षिणायनोत्तरायणे भवत । अत्र सूत्रम्— " प्रद्वाव्रादा-
२५ योपनिष्क्रामत । दक्षिणमेनाध्वर्युर्द्वारबाहुं निश्रयमाण उपनिष्क्रामति । उत्तरं प्रतिप्रस्थाता द्वार्याहुं निश्रयमाण उपरमति । अथाध्वर्युराश्रावयत्यो श्रावयास्तु[12] श्रौषड्ऋतूनाप्रेष्येति । वषट्कृते जुहोति । निष्क्रामत्येव प्रति-प्रस्थाता । [13]प्रपद्यतेऽध्वर्यु " इति ( बौश्रौ ७·१६ ) ॥ यदा हविर्धानात् प्रतिप्रस्थाता निष्क्रामति तदाऽध्वर्यु-र्हविर्धान प्रविशतीत्येव व्यत्ययेनोभयोर्गमनम् ॥ ' मधुश्च ' इत्यादिमन्त्रैरेव द्वादशमासाना प्रीतत्वाद् संसर्पमन्त्रस्य निर्विषयत्वमाशङ्क्य व्याचष्टे—" उपयामगृहीतोऽसि संसर्पोऽस्यंहस्पत्याय त्वेत्याहास्ति
३० त्रयोदशो मास इत्याहुस्तमेव तत्प्रीणाति " ( तैसं ६ ५ ३ ) इति । अधिकमासस्त्रयोदश ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके चतुर्दशोऽनुवाक ॥ १४ ॥

---

१३ ॥ ति–अथवा, व–अंहसा ।

---

११ क–तत । १२ आ–'श्रावयति आश्रावयास्तु । १३ आ–प्रपद्यते वधाऽध्वर्यु ।

इन्द्राग्नी आ गतꣳ सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता ॥
उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वैष ते योनिरिन्द्राग्निभ्यां त्वा ॥ १५ ॥
[ इन्द्राग्नी विꣳशतिः ]

इन्द्राग्नी इतीन्द्र–अग्नी । एति । गतम् । सुतम् । गीर्भिः । नभः । वरेण्यम् । अस्य । पातम् । धिया । इषिता ॥
उपयामगृहीत इत्युपयाम–गृहीतः । असि । इन्द्राग्निभ्यामितीन्द्राग्नि–भ्याम् । त्वा । एषः । ते । योनिः । इन्द्राग्निभ्यामितीन्द्राग्नि–भ्याम् । त्वा ॥ १५ ॥ ५

[ मैसं १·३·१७ ; कासं ४·७ ; कपिसं ३५ ; वासं ७·३१ ]

ऋतुपात्रेणैन्द्राग्नं गृह्णाति ॥ "यदैन्द्राग्नमृतुपात्रेण गृह्णाति" (तैसं ६·५·४) इति ब्राह्मणम्, "ओजोभृतौ वा एतौ देवानाम्" (तैसं ६·५·४) इत्यादि च । 'इन्द्राग्नी आ गतम्' इति त्रिपदा गायत्री । हे ᵛइन्द्राग्नी, ᵛआ ᵛगतम् आगच्छतम् । "बहुलं छन्दसि" (पा २·४·७३) इति शपो लुक् । ᵛसुतम् अभिषुतं सोमं प्रति ᵛगीर्भिः स्तुतिभिः ᵛवरेण्यं वरणीयं प्रार्थनीयं स्तुत्यं सोमं, ᵛनभः नहनं बन्धकं रसवत्तया मनसाम् । "नहेर्दिवि भश्च" (उ ६६०) इत्यसुन् दिवोऽन्यत्रापि बहुलवचनात् । यद्वा—गीर्भिर्नहनीयं बन्धनीयं स्तुत्यमिति यावत् । यद्वा—नभ इव नभः आदित्यः स इव गीर्भिर्वरणीयः । "वृञ एण्यः" (उ ३८५) । वृषादिर्द्रष्टव्यः (पा ६·१·२०३) । आगत्य च ᵛअस्य सोमस्य ᵛपातं पिबतम् । कर्मणः संप्रदानत्वात् (द्र. पाभा १·४·३२) चतुर्थ्यर्थे षष्ठी (पा २·३·६२) । पूर्ववच्छपो लुक् (पा २·४·७३) । ᵛधिया बुद्ध्यास्मदीयया ᵛइषिता ¹इषितौ प्रार्थितौ युवां पिबतम् । "सावेकाचः°" (पा ६·१·१६८) इति धियो विभक्तिरुदात्ता । "तीषसहलुभ°" (पा ७·२·४८) इतीडागमः । यद्वा—इष गतौ । धिया इषितौ प्राप्तौ ॥ १० १५ २०

इमामनुद्रुत्य 'उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वा' इति गृह्णाति ॥
'एष ते योनिरिन्द्राग्निभ्यां त्वा' इति सादयति ॥

॥ इति चतुर्थप्रपाठके पञ्चदशोऽनुवाकः ॥

इन्द्राग्नी इति ॥ कल्पः—"अभक्षितेन पात्रेणाध्वर्युरैन्द्राग्नं गृह्णातीन्द्राग्नी आ गतꣳ सुतमिति ग्रहणसादनौ" (आपश्रौ १२·२७·८) इति ॥ पाठस्तु—'इन्द्राग्नी आ गतꣳ सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता । उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वैष ते योनिरिन्द्राग्निभ्यां त्वा' इति ॥ हे २५

१. मै–इषितौ अद्वेषितौ ।

ओमासश्चर्षणीधृतो विश्वे देवास आ गत । दाश्वांसो दाशुषः सुतम् ॥
उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ १६ ॥

[ ओमासो विंशति ]

ओमास । चर्षणीधृत इति चर्षणि-धृत । विश्वे । देवास । एति । गत ।
५ दाश्वांसः । दाशुषे । सुतम् ॥
उपयामगृहीत इत्युपयाम-गृहीत । असि । विश्वेभ्य । त्वा । देवेभ्य ।
एष । ते । योनि । विश्वेभ्य । त्वा । देवेभ्य ॥ १६ ॥

[ मैस १ ३·१८, काम ४ ७, कपिसं ३ ५, वास ७ ३३ ]

शुक्रपात्रेण वैश्वदेव कलशात् गृह्णाति—'ओमास' इति त्रिपदया गायत्र्या ॥ हे
१० ᵛओमास अवितार प्रजाना रक्षितार । अवतेर्मन्प्रत्ययान्तात् "ज्वरत्वर" (पा ६ ४·२०)
इत्यादिना ऊठादेशे गुण । "आज्जसेरसुक्" (पा ७·१ ५०) । ᵛचर्षणीधृत , चर्षणयो
मनुष्या *, तेषा प्रतिष्ठाद्यनुप्रदानेन धारयितार । "अन्येषामपि दृश्यते" (पा ६ ३ १३७)
इति पूर्वपदस्य दीर्घ । "विभाषित विशेषवचने बहुवचनम्" (पा ८·१ ७४) इति पूर्वस्या-
विद्यमानवत्त्वनिषेधात्¹ निहन्यते । ᵛविश्वे इति पादादित्वान्न निहन्यते (पा ८ १ १८)।
१५ ᵛदेवास इति पूर्ववन्निहन्यते (पा ८ १ ७४)। पूर्ववदसुक् (पा ७ १ ५०)। हे ईदृशा
विश्वे देवा , ᵛआ ᵛगत आगच्छत । पूर्ववत् शपो लुक् (पा २·४ ७३)। आमन्त्रितानामविद्यमान-

ᵛइन्द्राग्नी, ᵛसुतम् अभिषुतं सोमं ᴹति ᵛआ ᵛगतम् आगच्छतम् । कीदृश सोमम् ? ᵛगीर्भि स्तुतिभिर्युक्त-
मिति शेष । ᵛनभ ¹नभोऽवस्यिते स्वर्गनिवासिभिर्देवै ᵛवरेण्यं प्रार्थनीयम् । ᵛअस्य सोमस्य संबन्धिन
स्वर्गीयम्॥ ᵛपातं युवा पिबतम् । कीदृशौ युवाम् ? ᵛधिया ²बुद्धया ᵛइषिता प्रार्थितौ । स्पष्टमन्यत् ॥

२० ओमास इति ॥ कल्प —"वैश्वदेव शुक्रपात्रेण गृह्णाति । ओमासश्चर्षणीधृत इति ग्रहणसादनौ"
(आपश्रौ १२ २८ ४) इति । पाठस्तु—'ओमासश्चर्षणीधृतो विश्वे देवास आ गत । दाश्वांसो दाशुष
सुतम् । उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य ' इति । हे ᵛविश्वे देवा ,
ᵛआ ᵛगत आगच्छत । कीदृशाः ? ᵛओमास रक्षितार ᵛचर्षणीधृत मनुष्यपोषका । अनिष्टनिवारण
रक्षणम्, इष्टप्रापण पोषणम् । ᵛसुतम् अभिषुत ᵛदाशुष दत्तवतो यजमानस्य ᵛदाश्वास फलं पूर्वं दत्त-
२५ वन्त ³। स्पष्टमन्यत् ॥ मन्त्रानुपेक्ष्यैन्द्राग्नग्रह विधत्ते— "सुवर्गाय वा एते लोकाय गृह्यन्ते यदृतुग्रहा

*[द्र निघण्टु २ ३]। १ मं-°मानवत्त्वनिषेधात् ।

१ क त्रि१—नभस्यितै । २ त्रि१—स्वबुद्धया, क—अस्मद्बुद्धया । ३ आ.क.त्रि१—पूर्वं दत्तवन्त ।

वस्त्वेऽपि[२] आङः परत्वान्न निहन्यते। [V]दाश्वांसः यूयम्। दाशृ दाने। लिटः क्वसुः (पा ३·२·१०७)। "दाश्वान्साह्वान्" (पा ६·१·१२) इति निपातितः। यजमानेभ्यो धनानि दत्तवन्तः। [V]दाशुषः अस्य यजमानस्य [V]सुतं सोमं प्रत्यागच्छत। अयं हि यजमानो युष्मभ्यं हवींषि दत्तवान् ददाति दास्यति। तेन युष्मदुपकारिणोऽस्य सुतं प्रति दानशीला यूयं प्रत्यागच्छत। यद्वा—चतुर्थ्यर्थे षष्ठी (पा २·३·६२)। यो नाम कश्चिद्युष्मभ्यं हवींषि ददाति तस्मै दाशुषे दाश्वांसो यूयं धनानि दत्तवन्तो यूयम्। यद्वा—"छन्दसि लुङ्लङ्लिटः" (पा ३·४·६) इत्युभयत्र वर्तमाने लिट्। युष्मभ्यं हवींषि ददतोऽस्य सुतं प्रति यूयमपि धनानि ददत एवागच्छत इति॥

इमामनुद्रुत्य 'उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यः' इति गृह्णाति॥

'एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः' इति सादयति॥ "वैश्वदेव्यो वै प्रजा असावादित्यः शुक्रः" (तैसं ६·५·४) इत्यादि ब्राह्मणम्॥

॥ इति चतुर्थप्रपाठके षोडशोऽनुवाकः॥

---

ज्योतिरिन्द्राग्नी यदैन्द्राग्नमृतुपात्रेण गृह्णाति ज्योतिरेवास्मा उपरिष्टाद्दधाति सुवर्गस्य लोकस्यानुख्यात्यै" (तैसं ६·५·४) इति। यदेतदृतुपात्रमध्वर्युहस्ते अक्षणीयेन सोमेनोपेतं तेनैन्द्राग्नं गृह्णीयात् तथा सत्यृतुग्रहैः प्राप्तः स्वर्ग इन्द्राग्निज्योतिषा प्रकाशितो भवति॥ बलप्रदत्वेनैन्द्राग्नं प्रशंसति— "ओजोभृतौ वा एतौ देवानां यदिन्द्राग्नी यदैन्द्राग्नो गृह्यत ओज एवाव रुन्धे" (तैसं ६·५·४) इति। ग्रहान्तरं विधत्ते— "वैश्वदेव शुक्रपात्रेण गृह्णाति वैश्वदेव्यो वै प्रजा असावादित्यः शुक्रो यद्वैश्वदेव शुक्रपात्रेण गृह्णाति तस्मादसावादित्यः सर्वाः प्रजाः प्रत्यङ्ङुदेति तस्मात् सर्व एव मन्यते मां प्रत्युदगादिति" (तैसं ६·५·४) इति। शुक्रग्रहस्य यत्पात्रं तेन वैश्वदेवं गृह्णीयात्। वैश्वदेवीः सर्वाः प्रजाः प्रति शुक्रग्रहाभिमान्यादित्यः प्रत्यङ् प्रत्येकमभिमुख उदेति। तदेतत्[२] सर्वस्याप्यनुभवसिद्धम्॥ तेजःप्रदत्वेन वैश्वदेवं प्रशंसति— "वैश्वदेव शुक्रपात्रेण गृह्णाति वैश्वदेव्यो वै प्रजास्तेजः शुक्रो यद्वैश्वदेव शुक्रपात्रेण गृह्णाति प्रजास्वेव तेजो दधाति" (तैसं ६·५·४) इति॥

'इन्द्राग्नी', 'ओमासः' इत्येते गायत्र्यौ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके पञ्चदशषोडशावनुवाकौ॥

---

२. मे–ʼमानत्वेऽपि।

---

२. इ.ट.त्रि१.पा.हा–तत्।

मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यꣳ शासमिन्द्रम् ।
विश्वासाहमवसे नूतनायोग्रꣳ सहोदामिह तꣳ हुवेम ॥
उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ १७ ॥
[ मरुत्वन्तꣳ षड्विꣳशतिः ]

५ मरुत्वन्तम् । वृषभम् । वावृधानम् । अकवारिमित्यकवा-अरिम् । दिव्यम् । शासम् । इन्द्रम् ।
विश्वासाहमिति विश्व-साहम् । अवसे । नूतनाय ।
उग्रम् । सहोदामिति सह-दाम् । इह । तम् । हुवेम ॥
उपयामगृहीत इत्युपयाम-गृहीतः । असि । इन्द्राय । त्वा । मरुत्वते ।
एषः । ते । योनिः । इन्द्राय । त्वा । मरुत्वते ॥ १७ ॥
१० [ मैसं १.३.२१, कासं ४.८, कपिसं ३.६, वास ७.३६ ]

त्रयो मरुत्वतीया माध्यन्दिने सवने गृह्यन्ते । "इन्द्रो मरुद्भिः सांविद्येन" (तैस ६.५.५) इत्यादि ब्राह्मणम् । ते च ऋतुपात्रेण गृह्यन्ते । "तस्य वृत्रं जघ्नुष ऋतवोऽमुह्यन्" (तैस ६.५.५) इत्यादि ब्राह्मणम् । "वज्रं वा एतं यजमानो भ्रातृव्याय प्रहरति यन्मरुत्वतीयाः" (तैस ६.५.५) इत्यादि च । तत्र प्रथमं गृह्णाति-'मरुत्वन्तम्' इति त्रिष्टुभा चतुष्पदया ॥ मरुतो देवविशेषाः,
१५ तैस्तद्वन्तम् । "तसौ मत्वर्थे" (पा १.४.१९) इति भत्वम् । "झयः" (पा ८.२.१०) इति मतुपो वत्वम् । [v]वृषभं वर्षितारं कामानाम् अपां वा । "ऋषिवृषिभ्यां कित्" (उ ४.१०) इति वृषेरभच्प्रत्ययः । [v]वावृधानम् ऐश्वर्येण । वृधेः ताच्छीलिकश्चानश् (पा ३.२.१२९) ।

मरुत्वन्तमिति ॥ कल्पः — "मरुत्वन्तमिति स्वेनर्तुपात्रेणाध्वर्युः पूर्वं [1]मरुत्वतीयं गृह्णाति । इन्द्र मरुत्व इति स्वेन प्रतिप्रस्थातोत्तरम्" (आपश्रौ १२.२.४) इति ॥ पाठस्तु—'मरुत्वन्तं वृषभं वावृ-
२० धानमकवारिं दिव्यꣳ शासमिन्द्रम् । विश्वासाहमवसे नूतनायोग्रꣳ सहोदामिह तꣳ हुवेम । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ।', 'इन्द्र मरुत्व इह पाहि सोमं यथा शार्याते अपिबः सुतस्य । तव प्रणीती तव शूर शर्मन्ना विवासन्ति कवयः सुयज्ञाः । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते' इति ॥ इहास्मिन् कर्मणि तमिन्द्रमाह्वयाम । कीदृशम् ? मरुद्गणैरुपेतम्, जलस्य वर्षितारं, कामानां वर्धयितारम्, अकुत्सितारिं शत्रूणामतिप्रबलत्वात्, दिवि भवं, दुष्टानां
२५ शासितारं विश्वं पालयितुं सहिष्णुमनल्पमित्यर्थः । [v]अवसे रक्षणाय । [v]नूतनाय [v]उग्रम्, इदानींतनेभ्यो वैरिभ्यो यजमानं रक्षितुं तद्वैरिषूग्रमित्यर्थः । [v]सहोदा बलप्रदम् ।

१. इ उ-मरुत्वन्तम् ।

" बहुलं छन्दसि " ( पा २·४·७६ ) इति शपः श्लुः। तुजादित्वाद्दीर्घः ( पा ६·१·७ )। लसार्वधातुकानुदात्तत्वाभावात् " चितः " ( पा ६·१·१६३ ) इत्यन्तोदात्तत्वम्। [v]अकवारिम् अकुत्सितारिम्। कुत्सिता अरयो यस्य सः कवारिः। कुशब्दस्याकारोपसर्जनो गुणश्छान्दसः, ततो नञ्समासः, अव्ययपूर्वपदप्रकृतिस्वरत्वम् ( पा ६·२·२ )। योऽल्पान् शत्रुत्वेन विषयीकरोति सोऽकवारिः। यद्वा—[1]कविः प्रज्ञातः अरिर्यस्य[1] स कवारिः। कविशब्दस्यावङादेशश्छान्दसः। ततोऽन्यो अकवारिः [2]अप्रज्ञातशत्रुरित्यर्थः। दिवमर्हतीति [v]दिव्यः। " छन्दसि च " ( पा ५·१·६७ ) इति यत्प्रत्ययः। [v]शासं शासकं शत्रूणाम्। पचाद्यच् ( पा ३·१·१३४ )। [v]विश्वासाहं विश्वेषां शत्रूणामभिभवितारम्। " छन्दसि सहः " ( पा ३·२·६३ ) इति ण्विप्रत्ययः। " अन्येषामपि दृश्यते " ( पा ६·३·१३७ ) इति पूर्वपदस्य दीर्घत्वम्। [v]उग्रम् उद्गूर्णमायुधैः, [v]सहोदां सहसो बलस्य दातारम्। " आतो मनिन्क्वनिब्वनिपश्च " ( पा ३·२·७४ ) इति विच्प्रत्ययः। ईदृशं [v]मरुत्वन्तम् इन्द्रं[3] [v]हुवेम आह्वयाम इहास्मिन् कर्मणि। ह्वयतेराशिषि लिङ्। " लिङ्याशिष्यङ् " ( पा ३·१·८६ ), यासुडादि ( पा ३·४·१०३ )। " छन्दस्युभयथा " ( पा ३·४·११७ ) इति सार्वधातुकत्वात् सलोपः। " किदाशिषि " ( पा ३·४·१०४ ) इति कित्त्वात् वचिस्वप्यादिना संप्रसारणम् ( पा ६·१·१५ )। किमर्थमाह्वयामः? [v]अवसे रक्षणाय। अवतेरसुन् ( उ ६३८ )। [v]नूतनाय अभिनवाय अद्यप्रभृति विशिष्टं रक्षणं कर्तुम्। " नवस्य नू आदेशः त्नप्तनप्खाश्च प्रत्ययाः [4]वक्तव्याः " ( द्र. पा ५·४·३० वा ६ ) इति तनप्प्रत्ययः॥

इमामनुद्रुत्य ' उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वते ' इति गृह्णाति॥

' एष ते योनिरिन्द्राय त्वा मरुत्वते ' इति सादयति॥

॥ इति चतुर्थप्रपाठके सप्तदशोऽनुवाकः॥

---

१–१. च–कवयः प्रज्ञाता अरयो यस्य। २. तै.ति.पं–अजातशत्रु°। ३. तं–तमिन्द्रम्। ४. ति.मैं–' वक्तव्याः ' नास्ति।

[ उत्तरो मरुत्वतीयग्रहः

इन्द्र॑ मरुत्व इ॒ह पा॑हि॒ सोमं॒ यथा॑ शार्या॒ते अपि॑बः सु॒तस्य॑ ।
तव॒ प्रणी॑ती॒ तव॑ शूर॒ शर्म॒न्ना वि॑वासन्ति क॒वय॑ः सुय॒ज्ञाः ॥
उ॒प॒या॒मगृ॑हीतो॒ऽसीन्द्रा॑य त्वा म॒रुत्व॑त ए॒ष ते॒ योनि॒रिन्द्रा॑य त्वा म॒रुत्व॑ते ॥ १८ ॥

[ इन्द्रैकान्नत्रिंशत् ]

५ इन्द्र॑ । म॒रु॒त्व॒ । इ॒ह । पा॒हि॒ । सोम॑म् । यथा॑ । शा॒र्या॒ते । अपि॑बः । सु॒तस्य॑ ।
तव॑ । प्रणी॑ती॒ति॒ प्र–नी॒ती॒ । तव॑ । शू॒र॒ । शर्म॑न् ।
एति॑ । वि॒वा॒स॒न्ति॒ । क॒वय॑ । सु॒य॒ज्ञा इति॑ सु–य॒ज्ञाः ॥
उ॒प॒या॒मगृ॑हीत॒ इत्यु॑पया॒म–गृ॒ही॒तः । अ॒सि॒ । इन्द्रा॑य । त्वा॒ । म॒रुत्व॑ते ।
ए॒षः । ते॒ । योनि॑ । इन्द्रा॑य । त्वा॒ । म॒रुत्व॑ते ॥ १८ ॥

१० [ मैसं १ ३ १९, काम ४ ८, कपिस ३ ६, वास ७ ३५ ]

द्वितीय मरुत्वतीयं गृह्णाति—'इन्द्र मरुत्व' इति चतुष्पदया त्रिष्टुभा ॥ हे [v]इन्द्र [v]मरुत्व । "मतुवसो॰" (पा ८ ३ १) इति रुत्वम् । "नामन्त्रिते समानाधिकरणे" (पा ८ १ ७३) इति पूर्वपदस्याविद्यमानवत्त्वनिषेधात् निहन्यते । [v]इह अस्मिन् कर्मणि [v]सोम [v]पाहि पिब । पूर्ववच्छपो लुक् (पा २ ४ ७३) । शर्यातिर्नाम राजा, तस्येदं शार्यातम् । यथा [v]शार्याते[1]

१५ यागे [v]सुतस्य सोमस्य [v]अपिब [v]तथा पिब[2] । [3]पूर्ववत् सम्प्रदानत्वात् (द्र पाभा १ ४.३२) चतुर्थ्यर्थे षष्ठी[3] (पा २ ३ ६२) । कस्मात् पुनरेवमभ्यर्थ्यत इत्याह—हे [v]शूर इन्द्र, [v]तव [v]प्रणीती प्रणीत्या । "सुपां सुलुक्" (पा ७ १.३९) इति तृतीयायाः पूर्वसवर्णदीर्घत्वम् । त्वद्विषयेण[4] प्रणयनेन[5] [v]तव एव [v]शर्मन् शर्मणि शरणभावे । निमित्तसप्तमी (पा २ ३ ३६ वा ६), भावे सुखे वा निमित्ते सप्तमी । त्वमेव शरणं मे यथा भवसि, तदर्थं [v]सुयज्ञाः

२० शोभनयज्ञाः [v]कवयः मेधाविनस्त्वामेव [v]आ [v]विवासन्ति परिचरन्ति* । तस्मात् त्वामेव प्रार्थयामहे ॥ पूर्ववद्ग्रहणं सादनं च ॥

॥ इति चतुर्थप्रपाठके अष्टादशोऽनुवाकः ॥

हे मरुद्गणयुक्तेन्द्र, त्वम् [v]इह अस्मिन् कर्मणि [v]सोमं [v]पाहि पिब । यथा शार्यातिनामकस्य यजमानस्य सम्बन्धिनि कर्मण्यभिषुतस्य सोमस्यांशम् [v]अपिब, तद्वत् [v]शूर [v]तव [v]प्रणीती प्रणयनेना-

२५ नुग्रहया [v]सुयज्ञाः पूर्वे [v]कवयः [v]तव शर्मणि सुखे निमित्तभूते[2] सत्याभिमुख्येन [v]विवासन्ति परिचरन्ति* तद्वद्वयमपि यजमाना इत्यर्थः । स्पष्टमन्यत् ॥

[1] मं-शार्याते । २–२ मै-'तथा पिब' नास्ति । ३–३ ति मै-पूर्ववत्सम्प्रदानत्व षष्ठ्या । षष्ठी च, ब-'पूर्ववत् . षष्ठी' नास्ति । ४ मं-तद्विषयेण । ५. त ति प च-प्रणयेन ।

२ द उ.पा हा-'निमित्तभूते' नास्ति । *[ द्र निघ ११ २३ विवासति परिचर्यायाम् । ]।

तृतीयो मरुत्वतीयग्रहः ]

मरुत्वाꣳ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय।
आ सिञ्चस्व जठरे मध्व ऊर्मिं त्वꣳ राजाऽसि प्रदिवः सुतानाम्॥
उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते॥ १९॥

[ मरुत्वानेकान्नत्रिꣳशत् ]

मरुत्वान्। इन्द्र। वृषभः। रणाय। पिब। सोमम्। अनुष्वधमित्यनु–स्वधम्। मदाय। ५
एति। सिञ्चस्व। जठरे। मध्वः। ऊर्मिम्।
त्वम्। राजा। असि। प्रदिव इति प्र–दिवः। सुतानाम्॥
उपयामगृहीत इत्युपयाम–गृहीतः। असि। इन्द्राय। त्वा। मरुत्वते।
एषः। ते। योनिः। इन्द्राय। त्वा। मरुत्वते॥ १९॥

[ मैसं १.३.२२; कासं ४.८; कपिसं ३.६; वासं ७.३६ ] १०

तृतीयं मरुत्वतीयं गृह्णाति—'मरुत्वानिन्द्र' इति चतुष्पदया त्रिष्टुभा॥ हे इन्द्र, यस्त्वं मरुत्वान् वृषभः च स त्वं रणाय संग्रामाय पिब सोमम्। "द्व्यचोऽतस्तिङः" (पा ६.३.१३५) इति दीर्घः। अनुष्वधं स्वधामन्नं अनुस्वदनीयं पुरोडाशात्मकमन्नं सोमम्, सुषामादित्वात् षत्वम् (पा ८.३.९८)। "अनोरप्रधानकनीयसी" (पा ६.२.१८९) इत्युत्तरपदान्तोदात्तत्वम्। मदाय, माद्यत्यनेनेति मदः। "मदोऽनुपसर्गे" (पा ३.३.६७) १५ इत्यप्। ईदृशाय रणाय जयकरायेत्यर्थः। "वार्त्रघ्ना एव ते यजमानस्य गृह्यन्ते ........ ........ यन्मरुत्वतीयाः" (तैसं ६.५.५), "आयुधं वा एतद्यजमानः सꣳस्कुरुते यन्मरुत्वतीयाः (तैसं ६.५.५) इत्यादि च ब्राह्मणम्। किं बिन्दुमात्रमपि पीतं मदाय भवतीत्याशङ्क्य [१-]नेति प्रतिपाद्यते[-१]—आ सिञ्चस्व आभिमुख्येन क्षारय जठरे उदरे यथा ते मदो भवति तथा प्रभूतं पिबेत्यर्थः। मध्वः मधुसदृशास्यास्य सोमस्य ऊर्मिं संघातम्। "जसादिषु २० वावचनं छन्दसि" (द्र. पा ७.३.१०९ वा १) इति गुणाभावः। राजा विशेष्यते—प्रदिवः* पुराणः नेदानीमेव। मदस्योत्पाद्यत्वे हेतुमाह—त्व राजा सुतानां सोमानां, तव मदाय

मरुत्वानिति॥ कल्पः—"अभक्षितेन पात्रेणाध्वर्युस्तृतीयं मरुत्वतीयं गृह्णाति। मरुत्वाꣳ इन्द्र इति ग्रहणसादनौ" (आपश्रौ १३.८.२) इति॥ पाठस्तु—'मरुत्वाꣳ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय। आ सिञ्चस्व जठरे मध्व ऊर्मिं त्वꣳ राजाऽसि प्रदिवः सुतानाम्। उपयामगृहीतोऽ- २५ सीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते' इति॥ हे इन्द्र, मरुद्भिर्युक्तो वर्षिता च त्वं रणाय क्रीडार्थं सोमं पिब। कीदृशम्? अनुष्वधम्। स्वधाशब्दोऽन्नवाची सवनीयपुरोडाशानाचष्टे। [१]ताननुसृत्य वर्तमानम्। किं च मदाय हर्षाय मध्वः मधुरस्य पीतस्य सोमस्य ऊर्मिं सारं त्वदीये जठरे आ सिञ्चस्व स्थापय। त्वं प्रदिवः प्राप्यस्य स्वर्गस्य सुतानां च राजा असि। अत एव प्रार्थ्यसे। स्पष्टमन्यत्॥ ३०

१-१. ब–आह। *[ द्र. निघण्टु ३.२७.२ ]।

१. आ.पा–तामनुसृत्य।

महा२ इन्द्रो य ओजसा पर्जन्यो वृष्टिमा२ इव । स्तोमैर्वत्सस्य वावृधे ॥
उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा ॥ २० ॥

[ महानेकान्नत्रिंशति ]

महान् । इन्द्रः । यः । ओजसा । पर्जन्यः । वृष्टिमानिति वृष्टि—मान् । इव ।
स्तोमैः । वत्सस्य । वावृधे ॥
५ उपयामगृहीत इत्युपयाम—गृहीत । असि । महेन्द्रायेति महा—इन्द्राय । त्वा ।
एष । ते । योनिः । महेन्द्रायेति महा—इन्द्राय । त्वा ॥ २० ॥

[ मैस १·३ २४, काम ४·८, कपिस ३·६, वासं ७·४० ]

[2]सोमा अभिषूयन्ते[2] इति भावः, अतिक्रान्तेष्वप्यहःसु त्वमेव सोमानां राजेति । यद्वा—त्वमेव ह्यतिक्रान्तेष्वहःसु [3]सुतानां राजाऽभूः, तस्मादिदानीमपि पिबेति प्रार्थ्यसे । प्रगता दिवसा अस्येति प्रदिवः । छान्दसोऽकारः समासान्तः । "परादिश्छन्दसि बहुलम्" (पा ६ २·१९९)
१० इत्युत्तरपदाद्युदात्तत्वम् । मरुत्वानित्यत्र पूर्ववत् संहितायां रुत्वादि ( पा ८ ३ ९, ३ )॥
पूर्ववदेव ग्रहणसादने ॥

॥ इति चतुर्थप्रपाठके एकोनत्रिंशोऽनुवाकः ॥

शुक्रपात्रेण माहेन्द्रं गृह्णाति—'महान्' इति गायत्र्या त्रिपदया ॥ यः [v]ओजसा बलेन [v]महान् [v]इन्द्रः । पूर्ववद्रुत्वादि संहितायाम् (पा ८·३ ९,३ ) । स इन्द्रः [v]वत्सस्य वत्सस्थानीयस्य यजमानस्य ऋत्विग्भिर्वा वत्सनाम्नः स्वभूतैः [v]स्तोमैः स्तोत्रैः [v]वावृधे वर्धताम्[1] । "छन्दसि लुङ्लङ्-
१५ लिटः" (पा ३ ४ ६) इति लिट् । "तुजादीनाम्" (पा ६ १·७) इति अभ्यासस्य दीर्घः । कः इव? [v]पर्जन्यः [v]वृष्टिमा२ [v]इव । यथा वृष्टिमान् पर्जन्योऽभिवर्धते लोकाभिवृद्धया तथेत्यर्थः । वृष्टिमानित्यस्य "ह्रस्वनुड्भ्यां मतुप्" (पा ६ १·१७६) इति मतुप उदात्तत्वम् । पूर्ववद्रुत्वादि संहितायाम् ( पा ८ ३ ९, ३ )॥
इमामनुद्रुत्य 'उपयामगृहीतोऽसि महेन्द्राय त्वा' इति गृह्णाति ॥
२० 'एष ते योनिर्महेन्द्राय त्वा'. इति सादयति ॥ "इन्द्रो वृत्रमहन् त देवा अब्रुवन् महान् वा अयमभूत्" (तैस ६ ५ ५) इत्यादि ब्राह्मणम् ॥

॥ इति चतुर्थप्रपाठके त्रिंशोऽनुवाकः ॥

महानिति ॥ कल्प.—"माहेन्द्रं शुक्रपात्रेण गृह्णाति । महा२ इन्द्रो य ओजसेति ग्रहणसादनौ" (आपश्रौ १२ ८ ४) इति ॥ पाठस्तु—'महा२ इन्द्रो य ओजसा पर्जन्यो वृष्टिमा२ इव ।
२५ स्तोमैर्वत्सस्य वावृधे । उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा' इति ॥ [v]वृष्टिमान् [v]पर्जन्यः [v]इव [v]यः [v]इन्द्रः [v]ओजसा बलेन [v]महान् स इन्द्रः वत्सस्थानीयस्य यजमानस्य [v]स्तोमैः स्तोत्रैः [v]वावृधे वर्धताम् । स्पष्टमन्यत् ॥

२–२ ब—सोमोऽभिषूयते । ३ ब—सुतानां सोमानाम् ॥ १ ब—अवर्धत ।

महाꣳ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः ।
अस्मद्रियग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् ॥
महान् । इन्द्रः । नृवदिति नृ–वत् । एति । चर्षणिप्रा इति चर्षणि–प्राः ।
उत । द्विबर्हा इति द्वि–बर्हाः । अमिनः । सहोभिरिति सहः–भिः ।
अस्मद्रियगित्यस्म–द्रियक् । वावृधे । वीर्याय । ५
उरुः । पृथुः । सुकृत इति सु–कृतः । कर्तृभिरिति कर्तृ–भिः । भूत् ॥

बृहत्पृष्ठपक्षे माहेन्द्रं गृह्णाति—'महाꣳ इन्द्रो नृवत्' इति चतुष्पदया त्रिष्टुभा ॥ महान् अयम् इन्द्रः यः चर्षणिप्राः, *चर्षणयो मनुष्याः तेषां पूरयिता कामैः । प्रा पूरणे । "आतो मनिन्क्वनिब्वनिपश्च" ( पा ३.२.७४ ) इति विच्प्रत्ययः । नृवत् मनुष्यवत्, यथा मनुष्या[1] आराधयितॄन् कामैः पूरयन्ति[2] तद्वदयमपि[3]—चर्षणीनां चर्षणव्रतामाचारवतां कामैः पूरयिता । १० समन्तादित्यर्थे आकारः, [4]सर्वत्र पूरयिता, तस्मान्महान् । यद्वा—नृवत् एकस्मिन्निव नरे समन्तात् सर्वेष्वपि लोकेषु चरणशीलानां पूरयिता, ततोऽयं महानिति । चरेरनिप्रत्ययः ( द्र. उ २६७ ) । बहुलवचनात् सुडागमः ( द्र. पा ६.१.१३५ ) । यद्वा—"कृषेरादेश्च चः" ( उ २६९ ) इति कृषेरेतद्रूपम् । आङापि कृष्यर्थो विशेष्यते । उदात्तश्रुतेश्चायमसमस्त[5] एव कृष्यर्थं विशिनष्टि । द्विः-

महानिति ॥ अस्मिन्नेव माहेन्द्रग्रहे विकल्पितं मन्त्रान्तरमेवमाम्नायते—'महाँ इन्द्रो नृवदा १५ चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः । अस्मद्रियग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् । उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा' इति । अयं महान् इन्द्रः नृवत् मनुष्यवत् आ चर्षणिप्राः *चर्षणीन् मनुष्यान् प्रति [1]तदभीष्टभोगैः पूरयतीति चर्षणिप्राः । यथा राजामात्यादिर्मनुष्यः सेवकानभीष्टभोगैरापूरयति तद्वत् । अपि चायं द्वयोः [2]प्रकृतिविकृतिरूपयोः सोमयागयोर्बर्हो वृद्धिर्यस्येति द्विबर्हाः । सहोभिः बलैः अमिनः अमित उपमानरहितः । अस्मद्रियक् अस्मत्सदृशो वावृधे वृद्धिं २० प्राप्तः । यथा वयमस्यानुग्रहाद्वृद्धिं प्राप्तास्तथैवायमप्यस्मदीयैर्हविर्भिर्विवृद्धः[3] । एतदेव प्रपञ्च्यते– वीर्याय सामर्थ्यसिद्ध्ये कर्तृभिः यजमानैरयं सुकृतः भूत् सुष्ठु वर्धितोऽभूत् । कीदृशी [4]तस्य वृद्धिः[5] ? उरुः यद्वासा विपुलः पृथुः बलेन विस्तृतः । स्पष्टमन्यत् । मन्त्रा उपेक्षिताः ॥ त्रीन् मरुत्वतीयग्रहान्

*[ द्र. निघण्टु २.३.८ ] । १. तं.ति.पं.च–मनुष्यः । २. तं.ति.पं.च–पूरयति । ३. मै–तद्वत् । यद्वा । ४. तं.ति.पं–समन्तात् सर्वत्र । ५. तं–°ममर्थः । २५

१. आ.हा–अभीष्टभोगैः । २. इ.उ.पा–प्रकृतिरूपयोः । ३. त्रि१–'निर्वृद्धः'; इ.उ.पा.हा–'विवृद्धः' नास्ति । ४–५. क–तस्याभिवृद्धिः ।

उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा ॥ २१ ॥

[ महान्नृवत्पङ्क्तिंशति. ]

उपयामगृहीत इत्युपयाम–गृहीत । असि । महेन्द्रायेति महा–इन्द्राय । त्वा ।

एष । ते । योनि । महेन्द्रायेति महा–इन्द्राय । त्वा ॥ २१ ॥

५ [ मैस १·३·५, कास ४·८, कपिम ३ ६, वास ७·३९ ]

प्रदानादिना आकर्षयता वशीकुर्वता कामं पूरयितेति । [^]उत अपि च [^]द्विबर्हा द्वयोर्लोकयोर्बृंहित. प्रवृद्धस्तेजसास्मिन्नमुष्मिंश्च । [6]बृहतेरनिदितोऽसुन्प्रत्यय (उ ६३८)। "परादिश्छन्दसि बहुलम्" (पा ६ २ १९९)। पुनश्च विशेष्यते—[^]सहोभि बलै [^]अमिन. अपरिच्छेद्य[7]। मान मिनम्। मातेर्निष्ठा, छान्दस निष्ठानत्वम्। तदस्य नास्तीत्यमिन., न [8]ह्यस्यैतावद्

१० [9]बलमिति मातु[9] शक्यते। यद्वा—सहोभि अमिन सगत। अम गत्यादिषु। "बहुलमन्यत्रापि" (उ २१६) इतीनच्प्रत्यय। ईदृश इन्द्र. [^]वीर्याय वीर्यार्थम्। यद्वा—[10]वीर्यं कर्म वृत्रवधादि तदर्थम्। [^]अस्मद्र्यक् [^]वावृधे वर्धताम्। "छन्दसि लुङ्लङ्लिट." (पा ३ ४ ६) इति लिट्। तुजादित्वाद्दीर्घ (पा ६ १ ७)। [11]अस्मानञ्चतीति अस्मद्र्यक्। "विष्वग्देवयोश्च" (पा ६ ३ ९२) इति [12]टेरद्र्यादेश। क्रियाविशेषणत्वात् नपुसकत्वम्। अस्माभिर्यजमानै-

१५ र्दत्तानि हवींषि गृहीत्वा वर्धतामिति यावत्। किंच [^]कर्तृभि परिचरद्भि अस्माभिर्यजमानैरिन्द्र. [^]उरु निस्तीर्णो बलेन [^]पृथु प्रथित. सर्वत्र यशसा. [^]सुकृत सुष्ठु कृत वशीकृतश्च [^]भूत् भवतु। भवतेर्लुङि (पा ३ ४ ६) पूर्ववच्छपो लुक् (पा २ ४ ७३)। "भूसुवोस्तिङि" (पा ७ ३ ८८) इति गुणाभाव। यद्वा—कर्तृभिरस्माभि सुकृत सम्यक् कृतोऽयमुरु पृथुश्च भवतु। "सु पूजायाम्" (पा १ ४ ९४) इति कर्मप्रवचनीयत्वम्। "स्वती पूजायाम्"

२० (द्र पामा २ २ १८ वा ३, ४) इति प्रादिसमास.। तेन गतित्वाभावात् "सूपमानात् क्त" (पा ६ २·१४५) इत्युत्तरपदाद्युदात्तत्वाभावे अव्ययपूर्वपदप्रकृतिस्वरत्वमेव (पा ६ २ २) भवति ॥

ग्रहणसादने पूर्ववदेव ॥

॥ इति चतुर्थप्रपाठके एकविंशोऽनुवाक ॥

२५ ६ मै–व्रहेर', त–वर्हतेर', च– वृहतेर'। ७. मै–अपरिच्छेद:। ८. मै–ह्यस्यैतावृद्! ९–९ मै–बलमस्तीति निश्चेतुम्, त–बहुलमिति मातुम्, च–इति मातुम्। १०. मै–'वीर्यम्' नास्ति। ११ मै–अस्मानञ्चतीति। १२ मै–अद्र्यादेश।

विधत्ते— " इन्द्रो मरुद्भिः सांविद्येन माध्यन्दिने सवने वृत्रमहन् यन्माध्यन्दिने सवने मरुत्वतीया गृह्यन्ते वार्त्रघ्ना एव ते यजमानस्य गृह्यन्ते " ( तैसं ६.५.५ ) इति। सांविद्यं [5]संप्रतिपत्तिरैकमत्यम् ॥ तेषां ग्रहाणां पात्रं विधत्ते— " तस्य वृत्रं जघ्नुष ऋतवोऽमुह्यन्त्स ऋतुपात्रेण मरुत्वतीयानगृह्णात् ततो वै स ऋतून् प्राजानाद्यदृतुपात्रेण मरुत्वतीया गृह्यन्त ऋतूनां प्रज्ञात्यै " ( तैसं ६.५.५ ) इति ॥ ग्रहत्रयं वज्ररूपेण प्रशंसति– " वज्रं वा एतं यजमानो भ्रातृव्याय प्र हरति यन्मरुत्वतीया उदेव प्रथमेन यच्छति प्र हरति द्वितीयेन स्तृणुते तृतीयेन " ( तैसं ६.५.५ ) इति। स्तृणुते हिनस्ति ॥ धनुःसंपादनरूपेण पुनः प्रशंसति–" आयुधं वा एतद्यजमानः सꣳ स्कुरुते यन्मरुत्वतीया धनुरेव प्रथमो ज्या द्वितीय इषुस्तृतीयः " ( तैसं ६.५.५ ) इति ॥ संपादितस्य धनुषः प्रयोगरूपेण [6]पुनः प्रशंसति— " प्रत्येव प्रथमेन धत्ते वि सृजति द्वितीयेन विध्यति तृतीयेन " ( तैसं ६.५.५ ) इति। प्रतिधत्त एव बाणं संदधात्येव ॥ प्राणादिप्रीणयितृत्वरूपेण पुनः प्रशंसां कर्तुमाख्यायिकामाह— " इन्द्रो वृत्रꣳ हत्वा परां परावतमगच्छदपाराधमिति मन्यमानः स हरितोऽभवत् स एतान् मरुत्वतीयानात्मस्परणानपश्यत्तानगृह्णीत प्राणमेव प्रथमेनाऽस्पृणुतापानं द्वितीयेनाऽऽत्मानं तृतीयेन " ( तैसं ६.५.५ ) इति। प्रबलेनारिकुलेन सह विरोधरूपमपराधं कृतवानस्मीति भीत्या परां परावतमत्यन्तदूरं पलाय्य स हरितो विवर्णोऽभवत्। आत्मस्परणान् स्वस्य भीतिनिवारणेन प्रीणयितॄन् [7]प्रतिजग्राह प्राणापानक्षेत्रज्ञानां प्रीतिरभूत् ॥ इदानीं प्रशंसति— " आत्मस्परणा वा एते यजमानस्य गृह्यन्ते यन्मरुत्वतीयाः प्राणमेव प्रथमेन स्पृणुतेऽपानं द्वितीयेनाऽऽत्मानं तृतीयेन " ( तैसं ६.५.५ ) इति ॥ अथ माहेन्द्रग्रहं विधत्ते—" इन्द्रो वृत्रमहन् तं देवा अब्रुवन् महान् वा अयमभूद्यो वृत्रमवधीदिति तन्महेन्द्रस्य महेन्द्रत्वꣳ स एतं माहेन्द्रमुद्धारमुदहरत वृत्रꣳ हत्वाऽन्यासु देवतास्वधि यत् माहेन्द्रो गृह्यत उद्धारमेव तं यजमान उद्धरतेऽन्यासु प्रजास्वधि " ( तैसं ६.५.५ ) इति। उद्ध्रियते गृह्यत इत्युद्धारो ग्रहः समुदहरतागृह्णात्। वृत्रहननेनोद्धारेणैवायमन्यासु देवतासु मध्येऽप्यधिकोऽभवत् ॥ माहेन्द्रस्य पात्रं विधत्ते—" शुक्रपात्रेण गृह्णाति यजमानदेवत्यो वै माहेन्द्रस्तेजः शुक्रो यन्माहेन्द्रꣳ शुक्रपात्रेण गृह्णाति यजमान एव तेजो दधाति " ( तैसं ६.५.५ ) इति ॥

'मरुत्वन्तम्', 'इन्द्र मरुत्वः', 'मरुत्वान्', 'महाꣳ इन्द्रो नृवत्' इत्येतास्त्रिष्टुभः। 'महाꣳ इन्द्रो य ओजसा' इति गायत्री ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके सप्तदशाष्टादशैकोनविंशविंशैकविंशानुवाकाः ॥

५. त्रि१–प्रतिपत्ति°। ६. इ.उ.त्रि१.पा.हा–' पुनः ' नास्ति। ७. त्रि१–त्रिभिर्ग्रहैः।

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते ॥
उपयामगृहीतोऽस्यादित्येभ्यस्त्वा ॥

कदा । चन । स्तरीः । असि । न । इन्द्र । सश्चसि । दाशुषे ।
५ उपोपेत्युप-उप । इत् । नु । मघवन्निति मघ-वन् ।
भूयः । इत् । नु । ते । दानम् । देवस्य । पृच्यते ॥
उपयामगृहीत इत्युपयाम-गृहीतः । असि । आदित्येभ्यः । त्वा ॥

तृतीयसवने आदित्यं गृह्णाति—'कदा चन स्तरीरसि' इति पथ्यया पञ्चपदया । यथोक्तम्—'पथ्या पञ्चभिरष्टाक्षरैः' इति । इयं तु शङ्कुमती नाम पथ्या, यथोक्तम्—
१० "एकस्मिन् पञ्चके छन्दः शङ्कुमती" ( पिसू ३ ५५ ) इति । पथ्या बृहती वा जागततृतीयपादत्वात् ॥ हे [v]इन्द्र, [v]न कदाचिदपि त्वं [v]स्तरीः [v]असि धनानां छादकोऽसि । "अवितृस्तृतन्त्रिभ्य ईः" ( उ ४४६ ) इतीप्रत्ययः । किमनाच्छादनमात्रमेव[1] नेत्याह—[v]सश्चसि [v]दाशुषे । [*]सश्चतिर्गतिकर्मा । दाशुषे हवींषि दत्तवते सश्चसि दित्सया । "क्रियाग्रहणं कर्तव्यम्" ( द्र पाभा १ ४ ३२ ) इति सम्प्रदानत्वम् । दातुमिति वा पदाध्याहारः । दाशुषे दातुं सश्चसि धनानि
१५ दातुं दाशुषः सकाशं त्वमेव सश्चसि । किमुच्यते सकृद्ददासीति[2] हे [v]मघवन्, तव देवस्य [v]दानादिगुणयुक्तस्य [v]दानं [v]भूयः अपि [v]उप [v]पृच्यते उपगृह्यते पुनः पुनरपि समुत्पाद्यते । न सकृद्दत्तमिति विच्छिद्यते[1], किंतु पुनः पुनर्दीयत एवेति [3]भावः । पृची संपर्के । अत्र 'भूय इन्नु ते' इति चतुर्थः पादः । "प्रसमुपोदः पादपूरणे" ( पा ८ १ ६ ) इत्युपशब्दस्य द्विर्वचनम् ।

कल्पः — "आदित्यपात्रेण य आदित्यस्थाल्या द्विदेवत्यग्रहसंपातास्तेभ्यः[1] सोमं गृह्णाति कदा
२० चन स्तरीरसीति । कदा चन प्र युच्छसीति शृताऽतङ्क्य दधि । यज्ञो देवानामिति पुनः सोमं गृहीत्वा विवस्व आदित्यैषेति तस्मिन् ग्रावाणमुपांशुसवनमवधाय तेनैनं मेक्षयित्वा[2] । या दिव्या वृष्टिस्तया त्वा श्रीणामीति शृतातङ्क्येन दध्ना पयसा वा वृष्टिकामस्य श्रीत्वा तद्ग्रावाणमुद्गृह्णाति । यद्युद्गृहीतस्य[3] तानि बिन्दुः प्रस्कन्देद्वर्षुकः पर्जन्यः स्यात् । यदि चिरमवर्षुकः । न सादयति" ( आपश्रौ १३ ९ ७-१० ) इति ॥

कदेति ॥ अथसमन्त्रपाठस्तु— 'कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन्
२५ भूय इन्नु ते दानं देवस्य पृच्यते । उपयामगृहीतोऽस्यादित्येभ्यस्त्वा ' इति ॥ हे [v]इन्द्र, त्वं कदाचिदपि [v]स्तरीः हिंसको न भवसि । किंतु [v]दाशुषे हविर्दत्तवते यजमानाय फलप्रदानार्थं [v]सश्चसि गच्छसि । कुत्र ? [v]उपोप [v]इत् [v]नु यजमानस्याप्यन्तसमीप एव । हे [v]मघवन्, [v]भूयः [v]इत् [v]नु "पुनः पुनरेव"[4-5] [v]देवस्य तव [v]दानं हविः [v]पृच्यते संबध्यते यजमानेन हविर्दीयत इत्यर्थः । स्पष्टमन्यत् ॥

[ द्र निघण्टु २ १४-४१ ] । १. मं-देवनादि । २. मं-स्मर्यते । ३. मं-'भावः' नास्ति ।

३० १ ड उ पा मा-'सशानास्तदीय' । २ आ हा-मेक्षयित्वा । ३ ड उ पा मा-यद्गृहीतस्य । ४-५. आ क पा हा-पुनरेव ।

कदा चन प्र युच्छस्युभे नि पासि जन्मनी ।
तुरीयाऽऽदित्य सवनं त इन्द्रियमा तस्थावमृतं दिवि ॥
कदा । चन । प्रेति । युच्छसि । उभे इति । नीति । पासि । जन्मनी इति ।
तुरीय । आदित्य । सवनम् । ते । इन्द्रियम् । एति । तस्थौ । अमृतम् । दिवि ॥

" अनुदात्तं च " ( पा ८·१·३ ) इति द्वितीयो निहन्यते । इच्छब्दोऽवधारणार्थः उपपृच्यत एव । [4]नुशब्दः[4] प्रसिद्धौ, नन्वेवं खलु सर्वदा क्रियते । " नु इति " पुराणवचनो वा । पुराणोऽयं तव स्वभावः । द्वितीय इच्छब्दः [5]अप्यर्थः, मयोऽपि । द्वितीयो नुशब्दो हेतौ, यस्मादेवं तस्मात् कदा चन स्तरीः असि इति । तस्मादेवंप्रभावः त्वम् अस्मानप्यनुगृहाण इत्याशिषा समाप्यते ॥　　५

इमामनुद्रुत्य ' उपयामगृहीतोऽसि आदित्येभ्यस्त्वा ' इति गृह्णाति । " अदितिः पुत्र-कामा " ( तैस ६·५·६ ) इत्यादि ब्राह्मणम् ॥　　१०

शतात्तङ्क्यन श्रीणाति—' कदा चन प्र युच्छसि ' इति पथ्ययैव पूर्वोक्तया ॥ अत्र तु तृतीयपादः पञ्चाक्षरः । आदित्यग्रह एवात्राऽऽमन्त्र्यते । हे ग्रह, कदाचिदपि प्र युच्छसि न युच्छसि । युच्छ प्रमादे । [6]कस्यांचिदप्यवस्थायां स्वकार्यं प्रति प्रमादं न करोषीत्यर्थः । यागसाधन-मेव स्वकार्यमस्य । अत्र धात्वर्थस्य निवृत्तिं प्रशब्द आचष्टे, यथा—प्रस्मरणं प्रस्थानं प्रपूरण-मिति । यद्वा—किंशब्दोऽत्र गम्यमानार्थो न प्रयुज्यते । किं कदाचित्त्वं प्रयुच्छसि प्रमाद्यसि ? न खल्वेतत्संभाव्यते [7]सर्वदावहितत्वादित्यर्थः । तदेवावधानं दर्शयितुमाह—उभे खलु जन्मनी वर्तमानभविष्यल्लक्षणे नि पासि नियमेन रक्षसि, ऐहिकादामुष्मिकात् [8]चानर्थाद्यजमानं रक्षसी-त्यर्थः । अधुना आदित्यग्रहमेव चतुर्थसवनत्वेन रूपयन्नामन्त्रयते—हे आदित्य । " दित्यदित्या-दित्यपत्युत्तरपदाण्ण्यः " ( पा ४·१·८५ ) । आदित्यग्रह, तुरीय चतुर्थ चतुर्थसवनात्मक[9] । आदित्यग्रहमेव चतुर्थं सवनं रूपयित्वा स्तौति । तृतीयसवनात् प्रागेवेदं चतुर्थं सवनं संपद्यते, यदिदं तव ग्रहणमिति । अस्य च सवनस्य सवनान्तरेभ्यो विशिष्टतामाह—ते तव खल्विदं सवनम् इन्द्रियम् इन्द्रजुष्टम् । " इन्द्रियमिन्द्रलिङ्गम् " ( पा ५·२·९३ ) इत्यादिना निपात्यते । इन्द्रप्रीतिकरमित्यर्थः । पुनश्च सवनं विशिनष्टि—दिवि आदित्ये द्युलोके वा अमृतत्वेन आ तस्थौ आस्थितम् । नास्मिन् मृतं, मरणमस्य वा नास्तीति अमृतम् अमरणहेतुरित्यर्थः । " नञो जरमर-　　१५　　२०

कदेति ॥ उत्तरमन्त्रस्तु—' कदा चन प्र युच्छस्युभे नि पासि जन्मनी । तुरीयाऽऽदित्य सवनं त इन्द्रियमा तस्थावमृतं दिवि ' इति ॥ प्रशब्दो निषेधार्थः । युच्छिधातुः प्रमादार्थः । हे इन्द्र, कदाचिदपि न प्रमाद्यसि किंतु वर्तमानमागामि चेति उभे यजमानस्य जन्मनी नि पासि नितरां पालयसि । तृतीयमित्यस्मिन्नर्थे वर्णव्यत्ययेन तुरीयशब्दः प्रयुक्तः । हे आदित्य, तृतीयसवनं ते त्वदीयं, तस्मिन् सवने इन्द्रियाभिवृद्धिकारणममृतसमानं दधि दिवि द्युलोकसमाने हविर्धाने आभिमुख्येन स्थितम् ॥　　२५

४–४. व–नुशब्द: । ५. व–अप्यर्थं । ६. व–कदाचिदप्य° । ७. तं–सर्वदाव', व–सर्वधाव' । ८. तं.पं.व–चानर्था° । ९. मै–°सवनात्मन् ।　　३०

यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः ।
आ वो(१)ऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तराऽसत् ॥
यज्ञः । देवानाम् । प्रतीति । एति । सुम्नम् । आदित्यासः । भवत । मृडयन्तः ।
एति । वः ( १ ) । अर्वाची । सुमतिरिति सु-मतिः । ववृत्यात् ।
५　अꣳहोः । चित् । या । वरिवोवित्तरेति वरिवोवित्-तरा । असत् ॥

मित्रमता " ( पा ६ २ ११६ ) इत्युत्तरपदाद्युदात्तत्वम् । यद्वा—दिवि हविर्धाने आतस्थो, इद मनन हविर्धान एव समाप्यत इत्यर्थ । " द्योर्हविर्धानम् " ( तब्रा २ १ ५ ) इति च मन्त्रवर्ण । " ऊडिदम् " ( पा ६ १ १७१ ) इत्यादिना दिवो विभक्तिरुदात्ता । यद्वा—" तस्यै चत्वार आदित्या अजायन्त " ( तैस ६ ५ ६ ) इति तुरीयादित्योऽस्त्येव, स एवात्रामन्त्र्यते ॥

१०　इमामनुद्रुत्य ' उपयामगृहीतोऽस्यादित्येभ्यस्त्वा जुष्ट गृह्णामि ' इति श्रीणाति । उपयाम गृहीतोऽसि ' इत्यस्य पूर्वत्राम्नातस्य उत्तरयानया ऋचा सबन्ध । " पशवो वा एते यदादित्य ऊर्ग् दधि " ( तैस ६ ५ ६ ) इत्यादि ब्राह्मणम् ॥

पुनरपि तस्मिन्नेव सोम गृह्णाति—' यज्ञो देवानाम् ' इति चतुष्पदया त्रिष्टुभा ॥ " तिसृभिर्ऋग्भिर्गृह्णाति " ( तैस ६ ५ ६ ) इति ब्राह्मणम् ॥ अय यज्ञोऽस्मदीय[10] धन "देवाना
१५　"सुम्न सुख "प्रति "एति एतु प्राप्नोतु सुख सपादयतु । यद्वा—अय देवाना यज्ञ अस्माक सुख प्रत्येतु प्रत्याययतु । किंच हे "आदित्यास आदित्या , अस्मान् "मृडयन्त सुखयन्तो "भवत । असुक् ( पा ७ १ ५० ) । आमन्त्रितस्याविद्यमानत्वात् ( पा ८ १ ७२ ) तिङन्त न निहन्यते । " छन्दस्युभयथा " ( पा ३ ४ ११७ ) इति शतुरार्धधातुकत्वे " अदुपदेशात् " ( पा ६ १ १८६ ) इति लसार्वधातुकानुदात्तत्वाभाव । किंच "व युष्माक या "सुमति शोभनामिकानु-
२०　ग्रहपरा[11] मति सा "अर्वाची अस्मदभिमुखी "आ "ववृत्यात् आवर्तताम् । वृतेर्व्यत्ययेन परस्मैपदम् । लिङि यासुट् ( पा ३ ४ १०३ ) । " बहुल छन्दसि " ( पा २ ४ ७६ ) इति शप श्लु । अर्वागञ्चतीति अर्वाची । ऋत्विगादिना क्विन् ( पा ३ २ ५९ ) । " अञ्चते श्चोपसख्यानम " ( पा ४ १ ६ वा २ ) इति ङीप् । ' मन्क्तिन्व्याख्यान ' ( पा ६ २ १५१ ) इति सुमतिशब्दस्योत्तरपदान्तोदात्तत्वम् । पुनरपि सुमतिर्विशेष्यते—"या युष्माक सुमति "अहो

२५　यज्ञ इति ॥ उत्तरमन्त्रस्तु—' यज्ञो देवाना प्रत्येति सुम्नमादित्यासो भवता मृडयन्त । आ वोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तराऽसत् ' इति ॥ अय यज्ञपुरुष "देवाना "सुम्न सुख "प्रति एति नानाविधसुखमुत्पादयतीत्यर्थ । हे आदित्या , अस्मान् "मृडयन्त सुखयन्तो भवत । युष्माक "सुमति अनुग्रहबुद्धिरर्वाचीनेष्वस्मासु प्रवृत्ता सती "आ "ववृत्यात् वर्तताम् । या सुमतिरेव "अꣳहो "चित् अस्मदीयपापात् व्यावर्तने पार विनाशयतीत्यर्थ । सा सुमति "वरिवोवित्तरा "असत् अतिशयेन परिचर्या-
३०　ऽभिज्ञा भवतु ॥

१० ति च-'स्मदीय । ११ घ-शोभना अनुग्रहात्मिका ।

विवस्व आदित्यैष ते सोमपीथस्तेन मन्दस्व तेन तृप्य

विवस्वः । आदित्य । एषः । ते । सोमपीथ इति सोम-पीथः । तेन । मन्दस्व । तेन । तृप्य ।

हननशीलस्य दुरात्मनः ॱचित् स्वयञ्छेत्री । छिदेः कर्तरि क्विप् ( पा ३·२·७६ ) । आदिवर्णव्यत्ययः । हन्तीत्यंहुः । हन्तेरौणादिक उप्रत्ययः ( उ १ ) । आद्यो हकारो अन्तेऽवतिष्ठते । नकारस्यानुस्वारः ( पा ८·३·२४ ) । यद्वा--अहि गतौ । स एव प्रत्ययः । गत्यर्थाश्च बुद्ध्यर्थाः । [12]ज्ञातुः पुरुषस्य या चित् चेतिः । चेततेः क्विप् ( पा ३·२·७६ ) । [13]ज्ञातुर्हि मतिः सुमतिर्भवतीति भावः । व्युत्पत्तिद्वयेऽपि चिच्छब्दस्यानुदात्तत्वं मृग्यम् । अथ ब्रूमः--चिदिति निपातः चादित्वादनुदात्तः ( फि ८४ ) अवधारणे वर्तते, इवार्थे वा । [14]अंहोरेव ज्ञातुरेव, अंहोरिव ज्ञातुरिव वा[14] या मतिः सा आवर्ततामिति । ॱवरिवोवित्तरा च ॱया मतिः ॱअसत् भवेद् । अस्तेर्लेडन्तस्य अडागमः ( पा ३·४·९४ ) । सा आवर्ततामिति । *वरिवो धनं, तस्य वेदयित्री लम्भयित्री वरिवोवित् । विन्दतेर्ण्यन्तात् ( पा ३·१·२६ ) क्विपि ( पा ३·२·७६ ) " बहुलं संज्ञाछन्दसोः " ( उ १९० ) इति णिलुक् । ततोऽतिशायने तरप्प्रत्ययः ( पा ५·३·५७ ) । ज्ञातुरेव हि मतिर्वरिवोवित्तरा भवति । तस्माद्या ईदृशी मतिर्भवति सा सुमतिः [15]अस्मानावर्ततामिति ।

इमामनुद्रुत्य ' उपयामगृहीतोऽस्यादित्येभ्यस्त्वा ' इति गृह्णाति ॥

एनमुपांशुसवनेन[16] [17]श्रीणाति--' विवस्वः ' इति ॥ हे ॱविवस्वः, विव इति धननाम, तद्वान् विवस्वान्, " ततो विवस्वानादित्योऽजायत " ( तैसं ६·५·६ ) इति य उच्यते । रश्मिलक्षणैर्धनैस्तद्वान् । " मतुवसोः° " ( पा ८·३·१ ) इति रुत्वम् । ॱआदित्य अदितेः पुत्र । " नामन्त्रिते समानाधिकरणे° " ( पा ८·१·७३ ) इति पूर्वस्याविद्यमानवत्त्वनिषेधाद् द्वितीयं निहन्यते । ॱएषः ॱते तव ॱसोमपीथः सोमपानम् । " पातृतुदिवचि° " ( उ १७२ ) इत्यादिना थक्प्रत्ययः । ॱतेन अनेन ॱमन्दस्व मादयस्व तव भ्रातॄन् । " तस्यै चत्वार आदित्या अजायन्त " ( तैसं ६·५·६ ) इति चत्वार आदित्या बभूवुः । तेषां चैको विवस्वान् य इहामन्त्र्यते । " योऽतो जायाता अस्माकं स एकोऽसत् " ( तैसं ६·५·६ ) इत्यदितिं प्रथमजा आदित्याः प्रार्थयांचक्रिरे । तस्मात् मन्दस्वेति मादयस्वेति व्याख्यायते मदि स्तुतिमोदमदस्वप्नगतिषु । ॱतेन सोमपीथेन ॱतृप्य तृप्तो भव । ॱते तव ॱतर्पयितारः ॱवयम् अपि ॱतृप्यास्म तृप्ता भूयास्म । आशिषि लिङ् ( पा ३·३·१७३ ) । तिङः परत्वान्न निहन्यते ( पा ८·१·२८ ) । किंच ॱया

**विवस्व इति** ॥ उत्तरमन्त्रस्तु--' विवस्व आदित्यैष ते सोमपीथस्तेन मन्दस्व तेन तृप्य तृप्यास्म ते वयं तर्पयितारः ' इति । हे ॱविवस्वः, विशिष्टनिवास ॱआदित्य विवस्वन्नामक ॱएषः ॱतृतीयः तव ॱसोमपीथः पातव्यः सोमः ॱतेन सोमदर्शनेन ॱमन्दस्व हृष्टो भव । तेन सोमपानेन तृप्तो भव । तव ॱतर्पयितारः वयमपि तृप्ता भूयास्म ॥

१२. मै-' ज्ञातुः ' नास्ति । १३. ति.मै-ज्ञाता हि । १४-१४. मै-अंहोरेव ज्ञातुरिव वा । *[ द्र. निघण्टु २·१०·५ ] । १५. तं.ति.व-अस्मारवाव° । १६. पं-°शुवचनेन । १७. तं-प्रीणाति ।

५. त्रि१-पातव्यः ।

तृप्यास्मे ते वयं तर्पयितारो या दिव्या वृष्टिस्तया त्वा श्रीणामि ॥ २२ ॥

[ त्र सप्तविंशतिश्च ]

तृप्यास्मे । ते । वयम् । तर्पयितारः । या । दिव्या । वृष्टिः । तया । त्वा । श्रीणामि ॥ २२ ॥

[ मैस १-३-२६, कास ४ १०, कपिस ३-८, वास ८-१-५ ]

५ [v]दिव्या [v]वृष्टि । दिवमर्हतीति " छन्दसि च " ( पा ५ १ ६७ ) इति यत्प्रत्यय. । ननु " मन्त्रे वृष० " ( पा ३ ३ ९६ ) इति क्तिन उदात्तत्वेन भवितव्यम् । भाव्य भावे क्तिन , इह तु करणे क्तिन् । [v]तया हे सोम त्वा [v]श्रीणामि श्रयामि । ननूपांशुसवनेन श्रीणातीत्युक्त, तत्कथ वृष्टया श्रीयत इति । नैष दोष., " वृष्टिकामस्य श्रीणीयात् " ( तैस ६ ५ ६ ) इति श्रयणस्य वृष्टिहेतुत्वादभेदोपचार । वृष्टिहेतुनोपांशुसवनेन श्रीणामीति यावत् । " यदि ताजक् प्रस्कन्देद् "

१० ( तैस ६ ५ ६ ) इत्यादि ब्राह्मणम् ॥

॥ इति चतुर्थप्रपाठके द्वात्रिंशोऽनुवाक ॥

येति ॥ उत्तरमन्त्रस्तु—' या दिव्या वृष्टिस्तया त्वा श्रीणामि ' इति ॥ हे सोम, दिव्यवृष्टिहेतुना दध्ना त्वा मिश्रयामि ॥

अत्राऽऽदित्यग्रह विधातुमाख्यायिकामाह—" अदिति. पुत्रकामा साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत्तस्या उच्छेषणमददुस्तत्प्राश्नात् सा रेतोऽधत्त तस्यै चत्वार आदित्या अजायन्त " ( तैस

१५ ६ ५ ६ ) इति । साध्येभ्य साध्यनामकेभ्य । आधानप्रकरणोक्तविधानेन सपादितो ब्रह्मौदन । उच्छेषण हुतशिष्टम् ॥ पुत्रचतुष्टयेनाप्यनिवृत्ते कामे पुन प्रयुक्तवतीत्याह—" सा द्वितीयमपचत् साऽमन्यतोच्छेषणान्म इमेऽज्ञत यदग्रे प्राशिष्यामीतो मे वसीयाꣳसो जनिष्यन्त इति साऽग्रे प्राश्नात्सा रेतोऽधत्त तस्यै व्यृद्धमाण्डमजायत " ( तैसं ६ ५ ६ ) इति । इमेऽज्ञत चत्वारोऽजायन्त । अत्यन्तधनिकपुत्रोत्पत्त्यपेक्षया होमात् प्रागेव

२० प्राशनेनैवापराधेन तस्या आण्ड गर्भस्थान व्यृद्ध गर्भशून्यमभवत् ॥ व्यृद्धिनिवारणाय पुन प्रयुक्तवतीत्याह— " साऽऽदित्येभ्य एव तृतीयमपचत् भोगाय म इदꣳ [*]श्रान्तमस्त्विति तेऽब्रुवन् वर वृणामहै योऽतो जायाता अस्माकꣳ स एकोऽसद्योऽस्य प्रजायामृध्याता अस्माक भोगाय भवादिति ततो विवस्वानादित्योऽजायत तस्य वा इय प्रजा यत् मनुष्यास्तास्वेक एवर्द्धो यो यजते स देवाना भोगाय भवति " ( तैस ६ ५ ६ ) इति । इदमाण्डं [*]श्रान्त गर्भाधानेन पुरा [*]सतप्तमासीत् । इदानीं मम गर्भधारणेनादितेर्भोगा-

२५ यास्त्वित्युक्त्वा ब्रह्मौदनमादित्येभ्योऽजुहोत् । [6]अत [*]आण्डात् यो जायते सोऽस्माक मध्य एक आदित्योऽस्तु । अस्याऽऽदित्यस्य सबन्धिन्या प्रजाया य समृद्ध सोऽस्माक भोगाय भवत्विति वर । तत आण्डात् विवस्वन्नामक आदित्य उत्पन्न । ये मनुष्या [8]ते तस्याऽऽदित्यस्य [9]प्रजावृष्टिद्वारेणोत्पादकत्वात् । तासु प्रजासु यो यजते स एव समृद्धत्वात् देवाना भोगाय भवति ॥ इत्थमाख्यायिकया ग्रहदेवता निरूप्य ग्रहणापादान निरूपयितुमाख्यायिकान्तरमाह—" देवा वै यज्ञाद्रुद्रमन्तरायन्त्स आदित्यानन्वाक्रमत ते

३० द्विदेवत्यान् प्रापद्यन्त तान्न प्रति प्रायच्छन् तस्मादपि वध्य प्रपन्न न प्रति प्र यच्छन्ति " ( तैस ६ ५ ६ ) इति । देवा यज्ञ कुर्वन्त तस्मिन् यज्ञे रुद्रं विस्मृतवन्त । स च रुद्र आदित्याननुप्राप्याबाधत । तेन बाधिता आदित्या ऐन्द्रवायवादिग्रहान् शरणं प्रपन्ना । ते च [10]ग्रहदेवा. [11]तानादित्यान् रुद्राय नैव प्रत्यर्पितवन्त । तस्माल्लोके परैर्वध्योऽपि चोरादिर्यदि शरण प्राप्नुयात् तदा [12]तमपरेभ्यो नैव प्रत्यर्पयन्ति ॥

*[ भाष्यमनुसृत्य ' श्रातम् ' इति सभाव्यते । अत्र भट्टभास्कराचार्या —' श्रान्त प्रतितप्तम् '

३५ इत्याहु । द्र पा ६ १-३६ ]। ६ आ क-तत । ७ उ पा हा-अण्डान् । ८ इ उ पा-' ते ' नास्ति । ९. इ-'वृष्टिद्वा' । १० क-ग्रहदेवता । ११. इ उ पा हा-' तानादित्यान् ' नास्ति । १२ आ त-अपरेभ्य ।

आदित्यग्रहः ]

आदित्यग्रहं विधत्ते—“ तस्माद्द्विदेवत्येभ्य आदित्यो निर्गृह्यते ” ( तैसं ६·५·६ ) इति । यस्मादादित्या द्विदेवत्यग्रहान् प्रपन्नास्तस्मात् द्विदेवत्यग्रहेभ्यो निषिच्याऽऽदित्यग्रहं गृह्णीयात् ॥ आदित्यानां हुतशेषेण ग्रहौदनेनोत्पन्नत्वात् तेषां द्विदेवत्यशेषो[13] युक्त इत्याह—“ यदुच्छेषणादजायन्त तस्मादुच्छेषणाद्गृह्यते ” ( तैसं ६·५·६ ) इति ॥ ग्रहणे ‘ कदा चन ’ इत्यादिमन्त्रान् विनियुङ्क्ते—“ तिसृभिर्ऋग्भिर्गृह्णाति माता पिता पुत्रस्तदेव तन्मिथुनमुल्वं गर्भो जरायु तदेव तन्मिथुनम् ” ( तैसं ६·५·६ ) इति । मातापितृरूपं मिथुनं पुत्रेण सह तदेकं[14] त्र्यात्मकं, गर्भवेष्टनोदकमुल्वं तद्वेष्टनं [15]पटसदृशं जरायुनामकम् ; तदुभयरूपं मिथुनं गर्भेण सह त्र्यात्मकम् । तेन सदृशमिदम् ऋक्त्रयात्मकम्[16] ॥ अस्मिन् ग्रहे दधिमेलनं विधत्ते—“ पशवो वा एते यदादित्य ऊर्ग्दधि दध्ना मध्यतः श्रीणात्यूर्जमेव पशूनां मध्यतो दधाति ” ( तैसं ६·५·६ ) इति । आदित्यस्य [17]वृष्टिद्वारा पशूपकारित्वात् पशुत्वम् । दध्नो भोज्यत्वात् तद्रूपत्वम् । तेन दध्ना सोमं मध्ये मेलयेत् । प्रथममन्त्रेण सकृत् सोमं गृहीत्वा तृतीयमन्त्रेण पुनर्ग्रहीष्यमाणो[18] मध्यममन्त्रेण दधि प्रक्षिपेदित्यर्थः ॥ दध्नः कंचिद्गुणं विधत्ते— “ शृतातङ्क्येन मेध्यत्वाय तस्मादामा पक्वं दुहे ” ( तैसं ६·५·६ ) इति । ‘ [19]शीते शुष्ममातनक्ति* ’ इति वचनात् सांनाय्यभाण्डे क्षीरे सम्यक्शीते सति पश्चादातञ्चनीयम् । इह तु उष्ण एव क्षीरे यदातञ्चनेन निष्पन्नं दधि तेन मेलनीयम् ॥ [20]यस्मादत्र उष्णं[21] क्षीरं तस्माल्लोकेऽपि आमा पाकरहिता गौः पक्वं धारोष्णरूपं क्षीरं दुहे[22] दुग्धं प्रयच्छति ॥ ग्रहस्याऽऽच्छादनं विधत्ते— “ पशवो वा एते यदादित्यः परिश्रित्य गृह्णाति प्रतिरुध्यैवास्मै पशून् गृह्णाति ” ( तैसं ६·५·६ ) इति । अन्यतः पशून्निरुध्य यजमानार्थमेव तान् गृहीतवान् भवति । अत्र सूत्रम्—“ दर्भैर्हस्तेन वाऽपिधायोत्तिष्ठति ” ( आपश्रौ १३·९·१२ ) इति ॥ तदेतदेवाऽऽदित्यग्रहपरिश्रयणमनूद्य प्रशंसति— “ पशवो वा एते यदादित्य एष रुद्रो यदग्निः परिश्रित्य गृह्णाति रुद्रादेव पशूनन्तर्दधाति ” ( तैसं ६·५·६ ) इति । अनेन ग्रहरूपाणां पशूनां घातकाद्रुद्रादव्यवधानं भवति ॥ [23]मन्त्रगतमादित्यपदं ग्रावपरतया व्याचष्टे— “ एष वै विवस्वानादित्यो यदुपांशुसवनः स एतमेव सोमपीथं परि शय आ तृतीयसवनात् विवस्व आदित्यैष ते सोमपीथ इत्याह विवस्वन्तमेवाऽऽदित्यꣳ सोमपीथेन समर्धयति ” ( तैसं ६·५·६ ) इति । विवस्वन्नामकादित्यस्य ग्रहाभिमानित्वात् ग्राव्णस्तद्रूपत्वम् । स च ग्रावैतमेवाऽऽदित्यग्रहगतं सोमं पातुं[24] तृतीयसवनसमाप्तिपर्यन्तं परितः शेते । अतो ग्रावविषयत्वं मन्त्रस्य युक्तम् ॥ काम्यदधिश्रयणं समन्त्रकं विधत्ते— “ या दिव्या वृष्टिस्तया त्वा श्रीणामीति वृष्टिकामस्य श्रीणीयात् वृष्टिमेवाव रुन्धे यदि ताजक् प्रस्कन्देद्वर्षुकः पर्जन्यः स्याद्यदि चिरमवर्षुकः ” ( तैसं ६·५·६ ) इति ॥ अस्यार्थः पूर्वमेव सूत्रे स्पष्टमुदाहृतः ॥ ग्रहान्तरवत् सादनादिप्रसक्तौ प्रतिषेधति— “ न सादयत्यसन्नाद्धि प्रजाः प्रजायन्ते नानु वषट्करोति यदनुवषट्कुर्याद्रुद्रं प्रजा अन्ववसृजेन्न हुत्वाऽन्वीक्षेत यदन्वीक्षेत चक्षुरस्य प्रमायुकꣳ स्यात्तस्मान्नान्वीक्ष्यः ” ( तैसं ६·५·६ ) इति । ‘ एष ते योनिः ’ इति मन्त्रस्य अनाम्नातत्वात्[25] नात्र गृहीतस्य सादनं सिद्धम्[26] । किं तु [27]तथैव प्रचारः । असन्नाद्गर्भाशयव्यतिरिक्तस्थानेऽपतितात् । यथा ग्रहान्तरं वषट्कारानुवषट्कारयोर्भिन्नं हूयते नात्र तथा । किं तु सकृदेव । अनुवषट्कारे तु प्रजा अनुलक्ष्य रुद्रं क्रूरं प्रेरयेत् । अन्वीक्षणेऽध्वर्युरन्धो भवेत् ।

इत आरभ्य [28]छन्दो लक्षणग्रन्थाद्वेतव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके द्वाविंशोऽनुवाकः ॥

१३. आ.पा.हा—द्विदेवत्यशेषोपाद्यहः । १४. त्रि—तदेवैक° । १५. आ.क.हा—पट° । १६. इ.उ.पा—ऋक्त्रयात्मकमिति; त्रि१—मन्त्रमृक्त्रयम् । १७. इ.उ.पा—वृष्टिद्वारा । १८. पा.हा—पुनर्ग्रहीष्यमाणे । १९. त्रि१—शीते° । *[ द्र. भारद्वाजश्रौतसूत्रम् १·१४·४, सत्याषाढश्रौतसूत्रम् १·४·२२ ] । २०. इ.उ.पा—तस्मादत्र । २१. आ.हा—तप्तम् । २२. इ.उ.पा.हा—‘ दुहे ’ नास्ति । २३. त्रि१—मन्त्रैपदमादित्यपदम् ; आ—मन्त्रमादित्यपरम् । २४. आ.हा—‘ पातुम् ’ नास्ति । २५. त्रि१—आम्नानत्वात् । २६. त्रि१—अस्ति । २७. त्रि१—तदेव; इ.उ.पा.हा—‘ तथैव ’ नास्ति । २८. त्रि१—छन्दोलक्षणं ग्रन्था° ।

वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यꣳ सावीः ।
वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम ॥
उपयामगृहीतोऽसि देवाय त्वा सवित्रे ॥ २३ ॥

[ वाम चतुर्विꣳशति ]

५ वामम् । अद्य । सवित । वामम् । उ । श्वः ।
दिवेदिव इति दिवे दिवे । वामम् । अस्मभ्यमित्यस्मभ्यम् । सावी ॥
वामस्य । हि । क्षयस्य । देव । भूरे । अया । धिया । वामभाज इति वाम–भाजः । स्याम ॥
उपयामगृहीत इत्युपयाम–गृहीत । असि । देवाय । त्वा । सवित्रे ॥ २३ ॥

[ मैस १ ३·२७, काास ४·१०, कपिस ३ ८, वास ८·६–७ ]

१० अन्तर्यामपात्रेण सावित्रमाग्रयणाद्गृह्णाति—'वाममद्य सवित' इति चतुष्पदया त्रिष्टुभा ॥ 'वाममु श्व' इति [1]प्रथम पाद समाप्यते[1] । हे [v]सवित, [v]अद्य अस्मिन्नहनि यद् [v]वाम वननीय मङ्गल तदेव सावीरिति वक्ष्यमाणेन सबन्ध । [v]वामम् [v]उ [v]श्व आगामिन्यप्यहनि वाममेव । उकार समुच्चये, श्वोऽपीति । अवधारणे वा, वाममेव । किं बहुना [v]दिवेदिवे [v]अस्मभ्य [v]वामम् एव [v]सावी सुष्ठु प्रेरय अनुजानीहीत्यर्थ । षूङ् प्रेरणे । "छन्दसि लुङ्-
१५ लङ्लिट" (पा ३ ४ ६) इति लुङि "बहुल छन्दस्यमाङ्योगेऽपि" (पा ६·४ ७५) इत्यडभाव । दिवेदिव इति सप्तम्यर्थे चतुर्थी । "ऊडिदम्" (पा ६ १ १७१) इति विभक्त्युदात्तत्वम् । तादर्थ्ये वा चतुर्थी (पा २ ३·१३ वा १)। दिवसाय सर्वदिवसार्थं मङ्गलस्य अनुज्ञा कुरु । किंच [v]अया [v]धिया अनया बुद्धया वामप्राप्तिमाशासनया, तादृश्या [v]वामभाज [v]स्याम तादृश्या वाम भजाम । कीदृशम्[2] [v]वामस्य सर्वाङ्गीणमङ्गलस्य [v]भूरे अनल्पस्य
२० [v]क्षयस्य निवासस्य । "क्षयो निवासे" (पा ६ १ २०१) इत्याद्युदात्तत्वम् । ईदृशस्य निवासस्य यद्वाम [2]तद्भाज स्याम[2] हे देवा, धनधान्यपशुपुत्रपौत्रादिसमृद्धिमहाभाग्यवन्त

वाममद्येति ॥ कल्प — "वाममद्य सवितरित्यन्तर्यामपात्रेण सावित्रमाग्रयणाद्गृहीत्वा न सादयति" (आपश्रौ १२·१२·१) इति ॥ पाठस्तु— 'वाममद्य सवितर्वाममु श्वो दिवेदिवे वामम-स्मभ्यꣳ सावी । वामस्य हि क्षयस्य देव भूरेरया धिया वामभाज स्याम । उपयामगृहीतोऽसि देवाय
२५ त्वा सवित्रे' इति ॥ 'हे [v]सवित [v]अद्य अस्मभ्य [v]वाम [v]वननीयं कर्मफल [v]सावी प्रेरय देहीत्यर्थ । श्वोऽपि वामं सावी । तत ऊर्ध्वं दिने दिने सावी । हे [v]देव, [v]वामस्य वननीयस्य [v]भूरे. विस्तीर्णस्य क्षयस्य स्वर्गनिवासस्येच्छया [v]अया[1] अनया श्रद्धायुक्तया [v]धिया[1] बुद्ध्या [v]वामभाज वननीयकर्मानुष्ठान वन्त स्याम । स्पष्टमन्यत् ॥

१–१ ब–पादान्तः । २–२ ब–तद्भजामहे ।

३० १ इ उ–हे देव । २ क–'अया' नास्ति । ३. आ त्रि१ पा हा–'धिया' नास्ति ।

अद॑ब्धेभिः सवितः पा॒युभि॒ष्ट्वꣳ शि॒वेभि॑र॒द्य परि॑ पाहि॒ नो॒ गय॑म् ।
हिर॑ण्यजिह्वः सुवि॒ताय॒ नव्य॑से॒ रक्षा॒ माकि॑र्नो॒ अ॒घश꣡ꣳस ईशत ॥
उ॒प॒या॒मगृ॑हीतोऽसि दे॒वाय॑ त्वा सवि॒त्रे ॥ २४ ॥
[ अद॑ब्धेभिस्त्रयोविꣳशतिः ]

अद॑ब्धेभिः । स॒वि॒तः । पा॒युभि॒रिति॑ पा॒यु-भिः । त्वम् ।
शि॒वेभिः॑ । अ॒द्य । परीति॑ । पा॒हि॒ । नः॒ । गय॑म् ।
हिर॑ण्यजिह्व इति॒ हिर॑ण्य–जि॒ह्वः । सु॒वि॒ताय॑ । नव्य॑से ।
रक्ष॑ । माकिः॑ । नः॒ । अ॒घश꣡ꣳस इत्य॒घ–श꣡ꣳसः । ई॒शत ॥
उ॒प॒या॒मगृ॑हीत॒ इत्यु॑पया॒म–गृ॒हीतः । अ॒सि । दे॒वाय॑ । त्वा॒ । स॒वि॒त्रे ॥ २४ ॥

स्यामेत्यर्थः । इदमः परस्य तृतीयैकवचनस्य “सुपां सुलुक्” ( पा ७·१·३९ ) इति याजादेशः । “ऊडिदम्” ( पा ६·१·१७१ ) इत्यादिना उदात्तत्वम् । वियेति तु “सावेकाचः” ( पा ६·१·१६८ ) इति विभक्तेरुदात्तत्वम् । वामं भजन्तीति वामभाजः । भजेर्ण्विप्रत्ययः ( पा ३·२·६२ ) । क्षयमपेक्षमाणस्यापि गमकत्वात् समासः, यथा देवदत्तस्य गुरुकुलमिति । ‘देव भूरेः’ इति तृतीयपादावसानम् ॥

इमामनूद्रुत्य ‘उपयामगृहीतोऽसि देवाय त्वा सवित्रे’ इति गृह्णाति । “एष वै गायत्रो देवानाम्” ( तैसं ६·५·७ ) इत्यादि ब्राह्मणं, “विश्वे देवास्तृतीयꣳ सवनं नोदयच्छन्” ( तैसं ६·५·७ ) इत्यादि च ॥

॥ इति चतुर्थप्रपाठके त्रयोविंशोऽनुवाकः ॥

सावित्रस्यैव ग्रहणविकल्पः पूर्वेण सह विकल्पार्थः ‘अदब्धेभिः’ इति चतुष्पदया त्रिष्टुभा ॥ हे सवितः, अद्य अस्मिन्नहनि नः अस्माकं गयं गृहं परि पाहि सर्वतो रक्ष । अदब्धेभिः अदब्धैः केनाप्यहिंसितैः क्वचिदप्यप्रतिहतैर्वा, पायुभिः पालनैः प्रजानां रसानाम् । त्रिभिर्वा रश्मय उच्यन्ते । शिवेभिः शिवैः शान्तकलुषैः पावनैरिति यावत् । “बहुलं छन्दसि”

अदब्धेभिरिति ॥ ‘अत्रैव विकल्पितो द्वितीयो मन्त्र एवमाम्नायते— ‘अदब्धेभिः सवितः पायुभिष्ट्वꣳ शिवेभिरद्य परि पाहि नो गयम् । हिरण्यजिह्वः सुविताय नव्यसे रक्षा माकिर्नो अघशꣳस ईशत । उपयामगृहीतोऽसि देवाय त्वा सवित्रे’ इति ॥ हे सवितः, त्वम् अदब्धेभिः अहिंसितैः पायुभिः पालकैः शिवेभिः मङ्गलैरनुग्रहविशेषैः नः अस्माकं गयं गृहं परि पाहि सर्वतो रक्ष । हिरण्यजिह्वः हिता रमणीया जिह्वा यस्य सोऽस्माकं हितं प्रियं च वदतीत्यर्थः । तादृशस्त्वं सुविताय सुष्ठु गमनाय स्वर्गप्राप्तये नव्यसे नूतनाय तदिदं कर्म रक्ष । नः अस्माकं अघशंसः पापापवादनिन्दको भवान् माकिः ईशत शक्तो मा भूत् ॥

१. तं–पात्रभिर्वा ।

१. इ.उ.त्रि१.पा.हा–तर्कन ।

हिर॑ण्यपाणिमू॒तये॑ सवि॒तार॒मुप॑ ह्वये । स चेत्ता॑ दे॒वता॑ प॒दम् ॥
उ॒प॒या॒मगृ॑हीतोऽसि दे॒वाय॑ त्वा सवि॒त्रे ॥ २५ ॥
[ हिर॑ण्यपाणिं चतु॑र्दश ]

हिर॑ण्यपाणि॒मिति॒ हिर॑ण्य-पा॒णि॒म् । ऊ॒तये॑ । स॒वि॒तार॑म् । उपेति॑ । ह्व॒ये॒ । सः । चेत्ता॑ । दे॒वता॑ । प॒दम् ॥
५ उ॒प॒या॒मगृ॑हीत॒ इत्यु॑पया॒म-गृ॒ही॒तः॒ । अ॒सि॒ । दे॒वाय॑ । त्वा॒ । स॒वि॒त्रे ॥ २५ ॥

( पा ७ १ १० ) इत्यैसभाव । पायुभिरित्यत्र ' कृवापाजि " ( उ १ ) इत्यादिनोण्प्रत्यय । " युष्मत्तत्ततक्षु ष्वन्त पादम् " ( पा ८ ३-१०३ ) इति संहितायां भिस मकारस्य षत्वम् । ऐहामुष्मिकभोगस्थानगृहस्य रक्षा प्रार्थिता । आमुष्मिकसुखस्थानमधुना प्रार्थ्यते — सुविताय सुष्ठु इताय प्राप्ताय स्थानाय, सङ्केन प्राप्तायेति यावत् । " तन्वादीनां छन्दसि बहुलम् "
१० ( पा ६ ४ ७७ वा १ ) इत्युवङादेश । " मृषमानात् क्त " ( पा ६ २ १४५ ) इत्युत्तरपदान्तोदात्तत्वम् । नव्यसे नवतराय सर्वदाभिनवाय । ईयसुन ईकारस्य ‍यकारस्य वा छान्दसो लोप । ईदृशमस्मदीय स्वर्गस्थान रक्षेत्यर्थ । हिरण्यजिह्व इव रसाहरणसाधनतया जिह्वास्थानीया रश्मयो जिह्वा उच्यन्ते, हिरण्यस्वभावा कमणशीला जिह्वा यस्य तादृशस्त्व रक्ष । हर्यं गतिकान्त्यो ।
" हर्यते कन्यन् हिर च " ( उ ७३२ ) इति कन्यन्प्रत्यय । किंच न अस्माक कश्चिदपि
१५ अघशस अघे शसनमभिलापो यस्य तादृश माकि ईशिता मा ईशिष्ट । माकिरिति छान्दस उपजन निपातान्तर वा, यथाह गणकार —" यत्र माकिर्निकिर्नभ " (द्र पा १-४ ५७ चादिगण ) इति । ईष्टेर्लिङि विकरणव्यत्ययेन श्लेरडादेश ( पा ३ १ ५२ ८५ ) । " अनुदात्ते च कुधपरे " ( पा ६ १ १२० ) इति संहिताया प्रकृतिभाव । " द्व्यचोऽतस्तिङ " ( पा ६ ३ १३५ ) इति रक्षेत्यस्य दीर्घ । इत्थ प्रार्थयमानानामस्माक न कश्चिदप्यनिष्टकर्ता स्यादित्यर्थ ॥
२० ' उपयामगृहीतोऽसि ' इत्यादि पूर्ववत् ॥

॥ इति चतुर्थप्रपाठके चतुर्विंशोऽनुवाक ॥

पुनश्च सावित्र गृह्णाति—' हिरण्यपाणिम् ' इति त्रिपदया गायत्र्या । पूर्ववत् विकल्प एव । हिरण्यस्य विकार कटककेयूराङ्गुलीयादीनि आभरणानि पाण्यो यस्य स हिरण्यपाणि । समुदायविकारषष्ठ्या बहुव्रीहिर्याचोत्तरपदलोपश्च ( द्र पा २ २ २४ वा १३ ) । यद्वा— रसहरणशीला

२५ हिरण्यमिति ॥ तृतीयो मन्त्रो विकल्पित पश्चादाम्नायते—' हिरण्यपाणिमूतये सवितारमुप ह्वये । स चेत्ता देवता पदम् । उपयामगृहीतोऽसि देवाय त्वा सवित्रे ' इति ॥ अस्मभ्य दातु हिरण्य पाणौ यस्य स हिरण्यपाणि । तादृश सवितारम् उपगम्य ह्वये आह्वयामि । किमर्थम् ? ऊतये रक्षणाय । स सविता देवतारूप पदम् अस्मदीय स्थान चेत्ता ज्ञाता ॥

२ व-भोगस्थानस्य । ३ व-आमुष्मिकभोगस्थान । ४ व-प्रार्थ्यते । ५ व-किंचिदपि ।
३० ६ ति-किंचिदप्यनिष्टम्, व-किंचिदप्यनिष्टम् ॥ १ व-दीन्यङ्गुलीयकादीनि ।

सुशर्मा॑ऽसि सुप्रतिष्ठा॒नो बृ॒हदु॒क्षे नम॑ ए॒ष ते॒ योनि॒र्विश्वे॑भ्यस्त्वा दे॒वेभ्यः॑ ॥ २६ ॥

[सुशर्मा द्वादश]

सु॒शर्मेति॑ सु-शर्मा॑ । अ॒सि॒ । सु॒प्र॒ति॒ष्ठा॒न इति॑ सु-प्र॒ति॒ष्ठा॒नः॑ । बृ॒हत् । उ॒क्षे । नम॑ः । ए॒षः । ते॒ । योनि॑ः । विश्वे॑भ्यः । त्वा॒ । दे॒वेभ्य॑ः ॥ २६ ॥

[मैसं १·३·२८ ; कासं ४·१० ; कपिसं ३·८ ; वासं ८·८]

पाणयो रश्मयो यस्य । [2]यद्वा—हितरमणीयाः[2] पाणयो यस्य वा[3] । तं हिरण्यपाणिं सवितारम् उप ह्वये मनसा उपेत्याह्वयामि । ऊतये अवनाय तर्पणाय वा । "ऊतियूति" (पा ३·३·९७) इति क्तिन उदात्तत्वम् । कः पुनस्तस्य विशेष इत्याह—सः हि देवः सविता अस्माकं पदम् आस्पदं स्थानमित्यर्थः । कीदृशः ? चेत्ता ज्ञाता, रक्षाविधानोपायज्ञः । साधुकारिणि तृन् (पा ३·२·१३५) । व्यत्ययेन इडभावः (पा ३·१·८५) । देवता चास्माकम् ॥ १०

'उपयामगृहीतोऽसि' इत्यादि पूर्ववत् ॥

॥ इति चतुर्थप्रपाठके पञ्चविंशोऽनुवाकः ॥

सवितृपात्रेण वैश्वदेवं कलशात् गृह्णाति—'सुशर्मा' इति यजुषा ॥ वैश्वदेवो गण उच्यते । सुशर्मा सुसुखः शोभनग्रहो वा त्वम् असि । "सोर्मनसी" (पा ६·२·११७) इत्युत्तरपदाद्युदात्तत्वम् । सुप्रतिष्ठानः शोभनं प्रतिष्ठानं प्रतिष्ठा यज्ञाख्या यस्य त्वम् । यद्वा—सुष्ठु [1]प्रतितिष्ठन्त्यनेन सर्वे यागाभिनिर्वृत्तिद्वारेण[1] इति सुप्रतिष्ठानः । "मन्क्तिन्व्याख्यान" (पा ६·२·१५१) इत्यादिना उत्तरपदान्तोदात्तत्वमकारकादावपि भविष्यति । तस्मै तुभ्यम् उक्षे सेक्त्रे [2]वृष्टिमुत्पादयित्रे । "सावेकाचः" (पा ६·१·१६८) इति चतुर्थ्या उदात्तत्वम् । इदं बृहत् नमः । "नञ्सुभ्याम्" (पा ६·२·१७२) इत्युत्तरपदान्तोदात्तत्वम् । अन्नं सोमाख्यं गृह्यते त्वदर्थं गृह्णीमः । यद्वा—सोम एवोच्यते, हे सोम, सुशर्माऽसीत्यादि समानम् । २० तादृशस्त्वं बृहन्नमः प्रभूतमन्नं अदनीयमस्मै उक्षे वैश्वदेवाय गणाय गृह्णास इति ॥

सुशर्मेति ॥ कल्पः—"[1]एतेनैव सशेषेण वैश्वदेवं पूतभृतो गृह्णाति । उपयामगृहीतोऽसि सुशर्माऽसीति ग्रहणसादनौ" (आपश्रौ १२·१३·४-५) इति ॥ पाठस्तु—'सुशर्माऽसि सुप्रतिष्ठानो बृहदुक्षे नम एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः' इति ॥ हे वैश्वदेवग्रह, शोभनं शर्म [2]सुखं यस्य तव स त्वं सुशर्मा असि । सुष्ठु प्रतिष्ठानं पात्रे स्थितिर्यस्यासौ सुप्रतिष्ठानः असि । उक्षे शक्ते शस्यमानाय तुभ्यं बृहत् २५

२-२. व.मै-हितरमणीयपाणिर्वा; तं-हिरण्यरमणीयः(याः) पाणयो यस्य वा । [3][द्र. निरुक्त २·१०] ॥

१-१. मै-प्रतिष्ठन्ति सर्वे यागाभिनिर्वृत्तिद्वारेण; पं-प्रतीक्षन्त्यनेन सर्वे यागाः अभिनिर्वृत्तिद्वारेण । २. व-वृष्टेरुत्पा° ।

१. इ.उ.पा-एवमेव । २. आ-'सुखं' नास्ति ।

‘ एष ते योनिः ’ इत्यादि व्याख्यातप्रायमेव[1] । “ वैश्वदेव्यो वै प्रजा वैश्वदेवः कलशः ” (तैसं ६ ५ ७) इत्यादि ब्राह्मणम् ॥

॥ इति चतुर्थप्रपाठके षड्विंशोऽनुवाकः ॥

---

[4]नमः अस्तु । स्पष्टमन्यत् ॥ सावित्रग्रहं विधत्ते— “ अन्तर्यामपात्रेण सावित्रमाग्रयणाद्गृह्णाति प्रजा-
५ पतिर्वा एष यदाग्रयणः प्रजानां प्रजननाय ” (तैसं ६ ५ ७) इति । आग्रयणग्रहस्य कर्मनिष्पत्तिद्वारेण प्रजापालकत्वात् प्रजापतित्वादाग्रयणात् ग्रहणं प्रजोत्पत्त्यै भवति ॥ सादनादिकं पूर्ववन्निषेधति— “ न सादयत्यसन्नाद्धि प्रजाः प्रजायन्ते नानु वषट्करोति यदनुवषट्कुर्याद्रुद्रं प्रजा अन्ववसृजेत् ” (तैसं ६.५ ७) इति ॥ विहितं सावित्रग्रहं प्रशंसति— “ एष वै गायत्रो देवानां यत्सवितैष गायत्रियै लोके गृह्यते यदा-ग्रयणो यदन्तर्यामपात्रेण सावित्रमाग्रयणाद्गृह्णाति स्वादेवैनं योनेर्निर्गृह्णाति ” (तैसं ६ ५ ७) इति ।
१० ‘ तत्सवितुर्वरेण्यम् ’ इत्याम्नातत्वाद्देवानां मध्ये सविता गायत्रीसंबद्धः । आग्रयणश्च गायत्र्याः स्थाने प्रातः-सवने गृह्यते । अनेन संबन्धेनाऽऽग्रयणः सावित्रस्य स्वकीयो योनिः ॥ सावित्रस्य तृतीयसवनसंबन्धं विधत्ते— “ विश्वे देवास्तृतीयꣳ सवनं नोदयच्छन् ते सवितारं प्रातःसवनभागꣳ सन्तं तृतीयसवनमभि पर्यणयन् ततो वै ते तृतीयꣳ सवनमुदयच्छन् यत् तृतीयसवने सावित्रो गृह्यते तृतीयस्य सवनस्योद्यत्यै ” (तैसं ६ ५ ७) इति । विश्वे देवाः स्वकीयं तृतीयसवनं [2-3]“नोदयच्छन् उद्धोढुं नाशक्नुवन् ”[3] प्रातःसवने
१५ भागं सवितुः[4] युक्तस्य गायत्रत्वात् । तादृशमपि सहकारित्वेन समानीय तृतीयसवनमुदयच्छन् । अतोऽत्र सावित्रो युक्तः ॥ वैश्वदेवग्रहं विधत्ते— “ सवितृपात्रेण वैश्वदेवं कलशाद्गृह्णाति वैश्वदेव्यो वै प्रजा वैश्वदेवः कलशः सविता प्रसवानामीशे यत्सवितृपात्रेण वैश्वदेवं कलशाद्गृह्णाति सवितृप्रसूत एवास्मै प्रजाः प्र जनयति ” (तैसं ६ ५ ७) इति । यद्यपि पूर्वमन्तर्यामपात्रं तथाऽपीदानीं सवितृपात्रं संपन्नम् । कलशाद्द्रोणकलशात् । प्रजानां विश्वैर्देवैः पाल्यत्वेन वैश्वदेवत्वम् । सर्वदेवसाधारणसोमाधारत्वात् कलशस्य वैश्वदेवत्वम् ॥
२० सावित्रशेषे सोमे वैश्वदेवं विधत्ते— “ सोमे सोममभि गृह्णाति रेत एव तद्दधाति ” (तैसं ६.५.७) इति ॥ अत एव मन्त्रे सुप्रतिष्ठानः इत्येतदुपपन्नमित्याह— “ सुशर्माऽसि सुप्रतिष्ठान इत्याह सोमे हि सोममभि गृह्णाति प्रतिष्ठित्यै ” (तैसं ६ ५ ७) इति ॥ मन्त्रपदानां [5]किंचिद्विशेषविषयत्वं दर्शयति— “ एतस्मिन् वा अपि ग्रहे मनुष्येभ्यो देवेभ्यः पितृभ्यः क्रियते सुशर्माऽसि सुप्रतिष्ठान इत्याह मनुष्येभ्य एवैतेन करोति बृहदित्याह देवेभ्य एवैतेन करोति नम इत्याह पितृभ्य एवैतेन करोत्येतावतीर्वै देवतास्ताभ्य
२५ एवैनꣳ सर्वाभ्यो गृह्णाति ” (तैसं ६ ५ ७) इति ॥

अपि [6]एतस्मिन्नेव वैश्वदेवग्रहे मन्त्रपदैर्मनुष्यादीनां सूचितत्वात् सर्वार्थमिदं ग्रहणम् । तत्र सुशर्माशब्देन समीचीनसुखार्थिनो मनुष्याः सूचिताः , बृहच्छब्देनाधिकमहिमोपेता[7] देवाः , नमःशब्देन नमस्कारप्रियाः पितरः ॥ सादनमन्त्रे विश्वेभ्य इत्येतत्सर्वार्थत्वादुपपन्नमित्याह— “ एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्याह वैश्वदेवो ह्येष ” (तैसं ६ ५ ७) इति ॥
३० इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये चतुर्थप्रपाठके त्रयोविंशमारभ्य षड्विंशान्ताश्चत्वारोऽनुवाकाः ॥

---

१ मै–‘ एव ’ नास्ति ।

---

२–३ आ हा–उद्धोढुं नाशक्नुवन् त्रि१–उद्धोढुं नोदयच्छन । ४ त्रि१–सवितृ । ५ क–वचिद्विशेषम् । ६ त्रि१–चैतस्मिन्नेव । ७ क–धिकतममहिमोपेता ।

बृहस्पतिसुतस्य त इन्दो इन्द्रियावतः पत्नीवन्तं ग्रहं गृह्णाम्यग्ना३इ पत्नीवा३ः सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा ॥ २७ ॥

[ बृहस्पतिसुतस्य पञ्चदश ]

बृहस्पतिसुतस्येति बृहस्पति–सुतस्य । ते । इन्दो इति । इन्द्रियावत इतीन्द्रिय–वतः । पत्नीवन्तमिति पत्नी–वन्तम् । ग्रहम् । गृह्णामि । अग्ना३इ । पत्नीवा३ इति पत्नी–वा३ः । सजूरिति स–जूः । देवेन । त्वष्ट्रा । सोमम् । पिब । स्वाहा ॥ २७ ॥

[ मैसं १·३·२९ ; कासं ४·११ ; कपिसं ३·९ ; वासं ८·९–१० ]

उपांशुपात्रेण पात्नीवतमाग्रयणात् गृह्णाति—'बृहस्पतिसुतस्य' इति । उत्तरया जुहोति । तत्र प्रथमा त्रिपदा गायत्री, द्वितीया द्विपदा षोडशाक्षरा स्वाहाकारान्ता स्वयं यजुः ॥ तत्र 'अग्ना३इ, पत्नीवा३ः' इत्युभयत्रापि "दूराद्धूते च" ( पा ८·२·८४ ) इत्युदात्तप्लुतः, १० "एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ" ( पा ८·२·१०७ ) इति पूर्वस्य प्लुतविकार इकारः । स च छन्दःसंख्याने नाद्रियते, उत्तरस्य पत्नीवा इत्यस्य "मतुवसोः" ( पा ८·३·१ ) इति रुत्वम् । द्वयोरपि पाष्ठिकमामन्त्रितायुदात्तत्वम् ( पा ६·१·१९८ ) । द्वितीयस्यापि पूर्वस्याविद्यमानवत्त्वात् ( पा ८·१·७२ ) प्लुतस्योदात्तस्यासिद्धत्वात् वर्ण्यमानस्वरेण न[2] निवृत्तिः । तत्र 'बृहस्पतिसुतस्य' इति प्रथमा व्याख्यायते । सोम उच्यते । हे १५ इन्दो सोम, ते तव बृहस्पतिसुतस्य बृहस्पतिना ब्रह्मणैव सुतस्य । यद्वा—बृहतो महतो यज्ञाख्यस्य कर्मणः पत्या पालयित्रा यजमानेन सुतस्याभिषुतस्य । "तृतीया कर्मणि" ( पा ६·२·४८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । पूर्वपदं च वनस्पत्यादि ( पा ६·२·१४० ) । तस्य च सुट्स्वरावुक्तौ ( पाभा ६·१·१५७ ) । तत्र वृत्तिविषये बृहच्छब्द आद्युदात्तः । इन्द्रियावतः वीर्यवतः । "मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ" ( पा ६·३·१३१ ) इति दीर्घः । तदेकदेशेन २० पत्नीवन्तं ग्रहं गृह्णामि । "छन्दसीरः" ( पा ८·२·१५ ) इति मतुपो वत्वम् ॥

अथ द्वितीया—हे अग्ने पत्नीवन्, देवेन त्वष्ट्रा सजूः समानप्रीतिः । नास्य पानेऽन्वयः । "ससजुषोः" ( पा ८·२·६६ ) इति रुत्वम् । सोमं पिब । द्वौ प्रत्येकमुच्येते[3] स्वाहा स्वाहुतमिदं तवास्तु । "देवा वा इतइतः पत्नीः" ( तैसं ६·५·८ ) [4]इत्यादि ब्राह्मणम्[4], "स सोमो नातिष्ठत स्त्रीभ्यो गृह्यमाणः" ( तैसं ६·५·८ ) इत्यादि च[5] ॥ २५

॥ इति चतुर्थप्रपाठके सप्तविंशोऽनुवाकः ॥

१. व–इत्यत्रापि । २. ति.मै–'न' नास्ति । ३. तं.ति–प्रकृत्यैकमुच्यते । *[ द्र.निरुक्त ८·२० ] । ४–४. व–सुवर्गमिति । ५–५. व–इति ब्राह्मणम् ।

बृहस्पतिसुतस्येति ॥ कल्प — “ उपयामगृहीतोऽसि बृहस्पतिसुतस्य त इत्युपांशुपात्रेण पात्नीवतमाग्रयणाद्गृहीत्वा न सादयति । अग्नाइ पत्नीवा इति वषट्कृते जुहोति । नानुवषट् करोति । अपि वोपांश्वनुवषट्कुर्यात् ” ( आपश्रौ १३·१४ ७–१० ) इति ॥ पाठस्तु— ‘ बृहस्पतिसुतस्य त इन्दो इन्द्रियावत पत्नीवन्तं ग्रहं गृह्णाम्यग्नाइ पत्नीवाः सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा ’ इति ॥ हे [1]इन्दो
५ सोम, तव सम्बन्धिन ग्रहं गृह्णामि । कीदृशम् ? पत्नीवदेवताकम् । कीदृशस्य तव ? [1]इन्द्रियावत. वीर्यवत । बृहस्पतिर्यजमान , बृहता यज्ञस्य परिपालनात् । तेन सुतस्याभिषुतस्य । हे पत्नीवन्नग्ने, [1]त्वष्ट्रा [1]देवेन [1]सजूः सह [1]सोमं [1]पिब [1]स्वाहा हुतमिदमस्तु ॥ पात्नीवतस्य ग्रहस्य पात्रं विधत्ते— “ प्राणो वा एष यदुपांशुर्यदुपांशुपात्रेण प्रथमश्चोत्तमश्च ग्रहौ गृह्येते प्राणमेवानु प्रयन्ति प्राणमनूद्यन्ति ” ( तैसं ६ ५ ८ ) इति । उपांशो प्राणत्वं पूर्वमुक्तम् । “ वाचस्पतये पवस्व ” ( तैसं १·४ २ ) इत्यनेन गृहीत प्रथमो ग्रह ।
१० ‘ बृहस्पतिसुतस्य ’ इति गृह्यमाणश्चोत्तमो ग्रह । यद्यपि दधिग्रह पूर्वभावी तथापि नासौ सोमग्रह । अदाभ्यांशू सोमग्रहावपि न तौ नित्यौ । तस्मान्नित्येषु सोमग्रहेषूपांशुरेव प्रथम । हारियोजनस्य पश्चाद्भावित्वेऽप्यग्निष्टोमसाम्नि समाप्ते सति यज्ञशेषत्वेनानुष्ठानम् । तस्मादग्निष्टोमापेक्षया पात्नीवतस्योत्तमत्वम् ।
तयो प्रथमोत्तमयोरुपांशुपात्रेण ग्रहणं कुर्यात् । तथा सति प्राणमेवानुसृत्य प्रयन्ति प्रारभन्ते । उद्यन्ति समापयन्ति ॥ पात्नीवतग्रहं विधत्ते— “ प्रजापतिर्वा एष यदाग्रयण. प्राण उपांशु पत्नी प्रजा प्र जनयन्ति
१५ यदुपांशुपात्रेण पात्नीवतमाग्रयणाद्गृह्णाति प्रजाना प्रजननाय तस्मात् प्राण प्रजा अनु प्र जायन्ते ” ( तैसं ६·५ ८ ) इति । पत्नीरिति प्रथमा । प्राणमनु प्राणयुक्ता [1]प्रजा उत्पद्यन्ते ॥ विहित ग्रह प्रशंसति— “ देवा वा इतइत पत्नी सुवर्गं लोकमजिगांसन् ते सुवर्गं लोकं न प्राजानन् त एत पात्नीवतमपश्यन् तमगृह्णत ततो वै ते सुवर्गं लोकं प्राजानन् यत्पात्नीवतो गृह्यते सुवर्गस्य लोकस्य प्रज्ञात्यै ” ( तैसं ६·५·८ ) इति । [ देवा ] पत्नीरित इत पात्नीवतग्रहमुपेक्ष्यान्यस्माद्ग्रहात्
२० [ स्वर्गं ज्ञातुमिच्छन्तोऽपि ॥ प्रज्ञातवन्त । पात्नीवतग्रहणेन तु प्रज्ञातवन्त ] इत्येतद्ग्रहो गृह्यते ॥ एतद्ग्रहे घृतमेलनं विधत्ते— “ स सोमो नातिष्ठत स्त्रीभ्यो गृह्यमाणस्त घृतं वज्रं कृत्वाऽघ्नन् त निरिन्द्रियं भूतमगृह्णन् तस्मात् स्त्रियो निरिन्द्रिया अदायादीरपि पापात् पुंस उपस्तितर वदन्ति यद्घृतेन पात्नीवतं श्रीणाति वज्रेणैवैन वशे कृत्वा गृह्णाति ” ( तैसं ६·५·८ ) इति । नातिष्ठत स्त्रीदेवताकत्वमसहमान स्वात्मान न प्रकाशितवान् । अघ्नन्नताडयन् । निरिन्द्रियं भूत “ निर्वीर्यं जातम् ”[1] ।
२५ यस्मात् स्त्रीदेवताभ्यो गृह्यमाण सोमो नि सामर्थ्यस्तस्माल्लोकेऽपि[2] स्त्रिय सामर्थ्यरहिता अपत्येषु[3] दायभाजो न भवन्ति[4] । पापात् पतितादपि पुंसोऽप्युपस्तितर क्षीणतर स्त्रीस्वरूप वदन्ति ॥ आम्नातस्य ‘ बृहस्पतिसुतस्य ’ इति मन्त्रस्य शेष पूरयित्वा व्याचष्टे— “ उपयामगृहीतोऽसीत्याहेय वा उपयामस्तस्मादिमा प्रजा अनु प्र जायन्ते ” ( तैसं ६·५·८ ) इति । उपेता प्रजा यमयति[5] उत्पादनधारणादिना व्यवस्थापयतीत्युपयामो भूभागविशेष । बृहस्पतिशब्दस्यैव प्रयोगेऽभिप्रायमाह—
३० “ बृहस्पतिसुतस्य त इत्याह ब्रह्म वै देवाना बृहस्पतिर्ब्रह्मणैवास्मै प्रजा प्र जनयति ” ( तैसं ६ ५ ८ ) इति ॥ इन्दुशब्दो द्रवत्वसाम्येन रेत उपलक्षयतीत्याह— “ इन्दो इत्याह रेतो वा इन्दू रेत एव

१. इ.उ पा त्रि१–‘ प्रजा ’ नास्ति । २–२. इ उ पा हा–‘ निर्वीर्यं जातम् ’ नास्ति । ३ आ. क त्रि१ पा हा–‘ अपि ’ नास्ति । ४. इ.उ–भजन्ति । ५ आ पा हा–यच्छति ।

तद्धाति" (तैसं ६.५.८) इति ॥ इन्द्रियशब्देन तत्कार्यभूताः प्रजा उपलक्ष्यन्त इत्याह— "इन्द्रियाव इत्याह प्रजा वा इन्द्रियं प्रजा एवास्मै प्र जनयति" (तैसं ६.५.८) इति॥ अग्निशब्दपत्नीशब्दयोरभिप्रायं दर्शयति—"अग्ना३ इत्याहाग्निर्वै रेतोधाः पत्नीव इत्याह मिथुनत्वाय" (तैसं ६.५.८) इति॥ त्वष्टृशब्द-प्रयोजनमाह—"सजूर्देवेन त्वष्ट्रा सोमं पिबेत्याह त्वष्टा वै पशूनां मिथुनानाᳪ रूपकृद्रूपमेव पशुषु दधाति" (तैसं ६.५.८) इति॥ पात्नीवतग्रहस्य होममन्त्रे त्वष्टुः परामर्शो न युक्त इति शङ्कां वारयति—"देवा वै त्वष्टारमजिघाᳪसन्त्स पत्नीः प्रापद्यत तं न प्रति प्रायच्छन् तस्मादपि वध्यं प्रपन्नं न प्रति प्र यच्छन्ति तस्मात् पात्नीवते त्वष्टेऽपि गृह्यते" (तैसं ६.५.८) इति। यस्मात् पत्नीः शरणं गतस्तस्मात्त्वष्टा पत्नी-रनुभागी भवति॥ सादनस्य प्रसक्तौ तद्वारयति— "न सादयत्यसन्नाद्धि प्रजाः प्रजायन्ते" (तैसं ६.५.८) इति॥ अनुवषट्कारे तूपांशुत्वगुणं विधत्ते—"नानु वषट्करोति यदनुवषट्कुर्याद्रुद्रं प्रजा अन्ववसृजेद्यन्नानुवषट्कुर्यादशान्तमग्नीत्सोमं भक्षयेदुपाᳪश्वनु वषट्करोति न रुद्रं प्रजा अन्ववसृजति शान्तमग्नीत्सोमं भक्षयति" (तैसं ६.५.८) इति॥ अन्ववसृजेदनुप्राप्य सृष्टिं वारयेत्। अशान्तमनिष्टकरम्॥ अग्नीन्नेष्ट्रोरध्वर्योः प्रैषमन्त्रमुत्पादयति—"अग्नीन्नेष्टुरुपस्थमा सीद नेष्टः पत्नीमुदानयेत्याहाग्नीदेव नेष्टरि रेतो दधाति नेष्टा पत्नियाम्" (तैसं ६.५.८) इति। हे आग्नीध्र, नेष्टुः समीपस्थानमुपविश। हे नेष्टः, पत्नीमुदानय[6] पत्नीमुत्थाप्येहाऽऽनय। अनेन प्रैषद्वयेन रेतः प्रजोत्पादनसामर्थ्यं[7] स्थापितं भवति॥ नेष्टृ-कारयितृकमुद्गातृकर्तृकं पत्नीविषयं दर्शनं विधत्ते— "उद्गात्रा सं ख्यापयति प्रजापतिर्वा एष यदुद्गाता प्रजानां प्रजननाय" (तैसं ६.५.८) इति॥ पत्नीकर्तृकं "[8]स्वगुह्ये पन्नेजनीसंज्ञकस्य जलस्य"[8] प्रवर्तनं विधत्ते— "अप उप प्र वर्तयति रेत एव तत्सिञ्चति" (तैसं ६.५.८) इति॥ प्रवर्तनाय तज्जलप्रक्षेपस्य स्थानं विधत्ते—"ऊरुणोप प्र वर्तयत्यूरुणा हि रेतः सिच्यते" (तैसं ६.५.८) इति॥ ऊरुप्रदेशे स्रावितं जलं गुह्यपर्यन्तं प्रवर्तते। लोकेऽप्यूरुसहितेन प्रजननेन रेतः सिच्यते॥ ऊरुप्रदेशे वस्त्रापनयनं विधत्ते— "नग्नंकृत्योरुमप प्र वर्तयति यदा हि नग्न ऊरुर्भवत्यथ मिथुनी भवतोऽथ रेतः सिच्यतेऽथ प्रजाः प्र जायन्ते" (तैसं ६.५.८) इति[9]॥

अथ मीमांसा॥ तृतीयाध्यायस्य द्वितीयपादे चिन्तितम्—

"द्विदेवशेष आदित्यस्थाल्या[10] आग्रयणाभिधाम्।
स्थालीं प्राप्तस्ततः पात्नीवतस्य ग्रहणे सति॥

---

६. आ.पा.हा–'पत्नीमुदानय' नास्ति। ७. आ–'सामर्थ्योपेतम्। ८–८. आ.हा–पन्नेजनी-संज्ञकस्य जलस्य; पा–स्वपन्नेजनीसंज्ञकजलस्य; इ.उ–स्वपन्नेजनीसंज्ञकस्य जलस्य। ९. पा.भां–'इति' इत्यारभ्य अनुवाकसमाप्ति यावन्नास्ति। [अत्र स्थाने 'अत्र शोधपत्रकं द्रष्टव्यम्' इत्युपलभ्यते लिखित-पुस्तकद्वये।]। १०. इ.उ.क.हा–'स्थाल्याम्।

तद्भक्षणे द्विदेवा किं सार्धं पात्नीवतेन ते ।
उपलक्ष्या न वा पूर्वन्यायेनास्तूपलक्षणम् ॥
अन्य आग्रयणात् पात्नीवतो नैतस्य विद्यते[११] ।
आकाङ्क्षा पूर्वदेवेषु पत्नीवानेव लक्ष्यते[१२] ॥" ( जैन्या ३ २·३१–३३ ) इति॥

५ ऐन्द्रवायवादयो द्विदेवत्या । तेषां शेष आदित्यस्थालीमागच्छति । पुनरपि[१३] तस्या स्थाल्या आग्रयणस्थालीमागच्छति । तस्या आग्रयणस्थाल्या पात्नीवतो गृह्यते । तस्य पात्नीवतस्य भक्षण इन्द्र-वाय्वादय उपलक्षणीया । पूर्वाधिकरणे यथा मित्रावरुणादिभि. सहेन्द्र उपलक्षितस्तद्वदिति प्राप्ते ब्रूम.– "[१४]यदुपांशुपात्रेण पात्नीवतमाग्रयणाद्गृह्णाति " ( तैसं ६ ५·८ ) इत्याग्रयणपात्रस्यापादानत्वश्रवणात् ततो नि सृतस्य सोमरसस्य तत्सम्बन्धेऽपेते सति पश्चात् पत्नीवद्देवतायै ग्रहण भवति। तथा सत्यत्यन्तभिन्नस्य

१० पात्नीवतस्य पूर्वदेवेष्वाकाङ्क्षा नास्ति । [१५]पूर्वाधिकरणेऽवितस्तु पुनरभ्युन्नीत[१५] सोम. ऐन्द्रशेषेण संसृष्ट । तस्य [१६]संसृष्टस्य भक्षणे मित्रावरुणादीनामिवेन्द्रस्यापि सम्बन्धो नापैतीति वैषम्यम् । तस्मात् पात्नीवतभक्षण इन्द्रवाय्वादयो नोपलक्षणीया ।

तत्रैवान्यच्चिन्तितम्—

" सह पत्नीवता त्वष्टा [१७]तद्ग्रहे लक्ष्यते न वा ।
सह त्वष्ट्रा पिबेत्युक्तेर्देवत्वात् सोऽपि लक्ष्यते ॥

१५ सहत्वमात्र त्वष्टु स्यान्न पातृत्वमशब्दनात् ।
[१८]चोदनाया अभावाच्च न देवोऽतो न लक्ष्यते ॥ "

( जैन्या ३ २ ३४–३५ ) इति ॥

तस्मिन्नेव पात्नीवतग्रहे शेषभक्षणमन्त्रे पत्नीवता सह त्वष्टाऽप्युपलक्षणीय । कुत· ? त्वष्टुरपि सदेवत्वात् । तच्च होममन्त्रादवगतम् । " अग्ना३इ पत्नीवा३ सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा "

२० इत्यस्मिन् मन्त्रे पत्नीवन्तमग्निं प्लुतान्तेन पदेन संबोध्य त्वष्ट्रा देवेन सह पिबेत्यभिधानात् पातृत्वेन पत्नी-वत इव त्वष्टुस्तद्देवत्वम् । तत पत्नीवत्त्वष्टृपीतस्येत्युपलक्षणमिति प्राप्ते ब्रूम — पानकाले सहावस्थानमात्र 'त्वष्ट्रा सजू ' इत्यनेन पदेन प्रतीयते न तु पातृत्वम् । असंबोधितस्य त्वष्टु. पिबेत्यनेन शब्देन सामानाधिकरण्याभावात् । न च पातृसहभावमात्रेण पातृत्व, 'सहैव दशभि. पुत्रैर्भारं वहति गर्दभी ' इत्यत्र पुत्राणा वोढृत्वादर्शनात् । आस्ता मन्त्र , विधिबलात् त्वष्टुर्देवत्वमिति चेत् । न ।

२५ " पात्नीवतमाग्रयणाद्गृह्णाति " ( तैसं ६ ५·८ ) इत्यत्र त्वष्टुरप्रतीते । तस्माद्देवत्वाभावात्त्वष्टा नोपलक्षणीय ।

---

११. इ उ–गृह्यते । १२. इ उ–लभ्यते । १३. इ उ–पुनः । १४. इ उ–उपांशुपात्रेण । १५–१५ त्रि–तत पुनरभ्युन्नीतस्तु । १६ इ उ–'संसृष्टस्य' नास्ति । १७ इ उ–भक्षणे । १८. इ. उ.हा–चोदनायाम् ।

[19]तत्रैवान्यच्चिन्तितम्—

"पत्नीवन्तस्त्रयस्त्रिंशद्देवास्तान्मादयेत्यमी।
लक्ष्या न वा याज्ययोक्तेर्देवत्वादुपलक्षणम्॥
एकोऽग्निर्यजमानेन मादितोऽन्ये तु वह्निना।
अतोऽग्नेरेव देवत्वात्तान्येषामुपलक्षणम्॥" (जैन्या ३·२·३६–३७)॥ ५.

तस्यैव पात्नीवतग्रहस्य याज्यायामग्निं संबोध्य 'पत्नीवन्नामधारिणस्त्रयस्त्रिंशद्देवान् मादय' इत्यभिधीयते—"पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमा वह मादयस्व" (ऋसं ३·६·९) इति। अनुष्वधमनुप्रदानम्। अत्र हूयमानेन सोमरसेन मादनीयत्वात् त्रयस्त्रिंशतां तद्देवत्वम्। अतस्तेऽपि भक्षणे लक्षणीया इति चेत् न। यजमानेन मादनीयस्याग्नेरेव तद्देवत्वात्। त्रयस्त्रिंशद्देवास्तु वह्निना माद्यन्त इति न तेषामत्र देवत्वम्। तस्मान्नोपलक्षणम्॥ १०.

[20]तत्रैवान्यच्चिन्तितम्—

"सोमस्याग्न इति प्रोक्तानुवषट्कारदेवता।
लक्ष्या न वा देवतात्वाल्लक्ष्या त्रिंशद्विलक्षणा॥
प्रकृतौ विद्यमानोऽग्निरनुद्देशादलक्षितः।
उद्देश्येन्द्रो लक्षितोऽतो विकृतावपि तत्तया॥" (जैन्या ३·२·३८–३९) इति॥ १५.

"सोमस्याग्ने वीहीत्यनुयजति" (आपश्रौ १९·३·१) इति श्रूयते। तत्रानुवषट्कारस्य मान्त्रवर्णिकोऽग्निः देवता। न च त्रयस्त्रिंशतामिव वह्नेरदेवतात्वं, मन्त्रे वह्निं संबोध्य सोमपातृत्वाभिधानात्। तस्मादग्निर्न लक्षणीय इति चेत्। न। प्रकृतावलक्षितत्वात् ऐन्द्रश्चमसः प्रकृतिः, इतरे विकृतिरूपाः। तथा हि—ऐन्द्रः सोमो गृह्यते मीयते च तेनैन्द्रेष्वेव सोमः अनैन्द्रेषु सोम एव नास्तीति सर्वे सोमधर्मा ऐन्द्रेष्वेव। अनैन्द्रा अधर्मकाः। धर्मसाकाङ्क्षाश्चोदकेन [21]सधर्मका इति विकृतित्वम्। गृह्यमाणस्य [22]मीयमानस्य च सोमस्यैन्द्रत्वम् "इन्द्राय त्वा वसुमते" (वासं ६·३२) इत्यादि ग्रहणमन्त्रादवगम्यते। तस्य प्रकृतिभूतस्यैन्द्रचमसस्य भक्षणेऽग्निरनुवषट्कारदेवो नोपलक्षितः। कुतः? ग्रहणे तदुद्देशाभावात्। इन्द्रस्तूद्देश्यत्वात् उपलक्षितः। एवं विकृतावप्युद्देश्यदेवानामेवोपलक्षणं न्याय्यम्। तस्मादग्निर्नोपलक्ष्यः॥ २०.

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठके सप्तविंशोऽनुवाकः॥ २७॥ २५.

---

१९. इ.उ.दा–'तत्रैवान्यच्चिन्तितम्' इत्यारभ्यानुवाकसमाप्तिं यावन्नास्ति। २०. आ–'तत्रैवान्यच्चिन्तितम्' इत्यारभ्यानुवाकसमाप्तिं यावन्नास्ति। २१. त्रि१–अधर्मका। २२. त्रि१–नीयमानस्य।
तैसं ३७॥

हरि॑रसि हारियोज॒नो हर्यो॑ः स्था॒ता वज्र॑स्य भ॒र्ता पृश्ने॑ः प्रे॒ता तस्य॑ ते देव
सोमे॒ष्टय॑जुषः स्तु॒तस्तो॑मस्य श॒स्तोक्थ॑स्य॒ हरि॑वन्तं॒ ग्रहं॑ गृह्णामि
ह॒रीः स्थ॒ हर्यो॑र्धा॒नाः स॒हसो॑मा॒ इन्द्रा॑य॒ स्वाहा॑ ॥ २८ ॥
[ हरि॑रसि॒ षड्वि॑ꣳशति ]

५ हरि॑ । अ॒सि । हा॒रि॒यो॒ज॒न इति॑ हारि–यो॒ज॒न । हर्यो॑ः । स्था॒ता । वज्र॑स्य । भ॒र्ता । पृश्ने॑ः । प्रे॒ता । तस्य॑ । ते॒ । दे॒व॒ । सो॒म॒ । इ॒ष्टय॑जुष॒ इती॒ष्ट–य॒जु॒षः । स्तु॒तस्तो॑मस्येति॑ स्तु॒त–स्तो॒म॒स्य॒ । श॒स्तोक्थ॒स्येति॑ श॒स्त–उ॒क्थ॒स्य॒ । हरि॑वन्त॒मिति॒ हरि॑–व॒न्त॒म् । ग्रह॑म् । गृ॒ह्णा॒मि॒ । ह॒री । स्थ॒ । हर्यो॑ । धा॒ना । स॒हसो॑मा॒ इति॑ स॒ह–सो॒मा॒ । इन्द्रा॑य । स्वाहा॑ ॥ २८ ॥

हारियोजन गृह्णाति—' हरिरसि ' इति ॥ सोम एवोच्यते । ᵛहरि इन्द्र , स एव त्वम् ᵛअसि इति इन्द्रात्मना सोम स्तूयते । यद्वा—हरिर्हर्ता अभिमताना श्रेयसामाहर्ता त्वमसि । ᵛहारियोजन , हरि अश्वविशेष योजनो वाहन यस्य स हरियोजन इन्द्र , तस्य स्वभूत हारियोजन , ऐन्द्रोऽसीत्यर्थ । ᵛहर्यो ᵛस्थाता , इन्द्ररूपत्वात् , हरिभ्या भक्षितऋजीपरूप नाद्वा । ᵛवज्रस्य ᵛभर्ता धारयिता इन्द्ररूपत्वादेव । ᵛपृश्ने ᵛप्रेता पृश्नेरन्नस्य यागसाधनद्वारेण[1] प्रेरयिता प्रापयिता वा । प्रीङ् तर्पणे । हे ᵛसोम ᵛदेव, ᵛतस्य तादृशस्य ᵛते तव ᵛइष्टयजुष अध्वर्युभि-
१५ यैर्ये इष्टानि विनियुक्तानि सर्वाणि यजूंषि प्रायेण त्वसंस्कारार्थानीति इष्टयजुष्ट्वम् । ᵛस्तुत-स्तोमस्य उद्गातृभिश्च स्तुता स्तोमा स्तोत्राणि त्वदर्थमिति स्तुतस्तोमत्वम् । ᵛशस्तोक्थस्य होतृभि । शस्तान्युक्थानि शस्त्राणि त्वदर्थमिति शस्तोक्थत्वम् । यद्वा—इन्द्ररूपत्वात् सर्वमुपपद्यते । तस्य तव निर्दोषसंस्कारसंस्कृतस्य ᵛहरिवन्त [2]हरिमन्त ᵛग्रह गृह्णामि, आग्रयणस्याऽऽगतस्य सर्वस्य[3] गृह्यमाणत्वात । ᵛतस्येत्यन्तात् कर्मणि षष्ठ्यन्तत्वात् ( पा २ ३ ६५ ) तादृश हरिवन्तम्
२० इन्द्रवन्त ग्रह गृह्णामीति । " छन्दसीर " ( पा ८ २ १५ ) इति मतुपो वत्वम् ॥

धानाभि श्रीणाति—' हरी स्थ ' इति ॥ हरिभ्या तद्वानिन्द्रो लक्ष्यते । ततस्तादृशेन्द्रात्मतया धाना स्तूयन्ते । तत इन्द्रप्रियतया इन्द्राभेदेन स्तुति । यद्वा—अश्वात्मतया धाना स्तूयन्ते । इन्द्रार्थं हे धाना , ᵛहरी ᵛस्थ । किंच ᵛहर्यो अश्वयो ᵛधाना स्थ । हरिवत इन्द्रस्य[4] इति भाव । ' इन्द्रो वृत्रमहन् तस्य शीर्षकपालमुदौब्जत् " ( तैस ६ ५ ९ ) इत्यादि ब्राह्मणम् ॥

२५ जुहोति—ᵛसहसोमा सोमेन सहिता । " वोपसर्जनस्य " ( पा ६ ३ ८२ ) इति पाक्षिकत्वात समासाभाव । हे धाना , ईदृशो यूयम् ᵛइन्द्राय ᵛस्वाहा स्वाहुता स्थ ॥

॥ इति चतुर्थप्रपाठके अष्टाविंशोऽनुवाक ॥

१. मै– 'द्वारेण ' इत्यस्यानन्तर ' प्रेता ' । २. व–इन्द्रवन्तम । ३. त प–' गदस्य ' इत्यस्यानन्तर ' ग्रहस्य ' । ४ ति मै–तस्येन्द्रस्य । ५. त ति प व–इन्द्रपीतस्य ।

हारियोजनग्रहः ]

हरिरिति ॥ कल्पः—" परिधिषु [1]प्रहृतेषून्नेता हारियोजनं गृह्णाति । उपयामगृहीतोऽसि हरि-रसीति द्रोणकलशेन सर्वमाग्रयणं गृहीत्वा न सादयति । बह्वीभिर्धानाभिः श्रीत्वा.... हरीः स्थ हर्योर्धाना इति वषट्कृतानुवषट्कृते हुत्वा हरति भक्षम् " (आपश्रौ १३·१७·१–२) इति ॥ पाठस्तु—' हरिरसि हारियोजनो हर्योः स्थाता वज्रस्य भर्ता पृश्नेः प्रेता तस्य ते देव सोमेष्टयजुषः स्तुतस्तोमस्य शस्तोक्थस्य हरिवन्तं ग्रहं गृह्णामि हरीः स्थ हर्योर्धानाः सहसोमा इन्द्राय स्वाहा ' इति ॥ हे सोम, त्वं हरिः असि हरितवर्णोऽसि । हरितमश्वं रथे[2] युनक्तीति हरियोजन इन्द्रस्तस्य संबन्धी हारियोजनः । इन्द्रदेवताक इत्यर्थः । हर्योः अश्वयोः स्थाता हरिभ्यामश्वाभ्यां युक्ते रथे तिष्ठतीत्यर्थः । यद्यपीन्द्र एव रथे तिष्ठति तथापि तदीयत्वात् सोमोऽपि तिष्ठतीत्युपचर्यते । इन्द्रेण पेयत्वादिन्द्राभेदेन वज्रस्य पोषकः । पृश्निरन्नं तस्य प्रेता यागसाधनद्वारेण प्रेरयिता । हे सोम देव, तस्य ते तादृशस्य तव संबन्धिनं ग्रहं[3] गृह्णामि । कीदृशम् ? हरिवन्तम् इन्द्रदेवताकम् । कीदृशस्य ? इष्टयजुषः । इष्टं यज्ञसाधनत्वेन प्रयुक्तं ग्रहण-सादनादिमन्त्ररूपं यजुर्यस्य सोऽयमिष्टयजुः । स्तुतास्त्रिवृत्पञ्चदशसप्तदशैकविंशनामकाः स्तोमा यस्यासौ स्तुतस्तोमः । शस्तानि उक्थानि प्रउगाज्यनिष्केवल्यमरुत्वतीयवैश्वदेवाग्निमारुतनामकानि शस्त्राणि यस्यासौ शस्तोक्थः । भृष्टास्तण्डुला धानाः । हे धानाः, यूयं हर्योरिन्द्ररथवाहकाश्वयोः संबन्धित्वेन हरीः हरिशब्दार्थेन रूढाः स्थ । सोमेन मिश्रितत्वात् सहसोमाः स्थ । तादृशमिदं हविः इन्द्राय स्वाहा हुतमस्तु ॥ हारि-[4]योजनग्रहविधिमर्थवादेनोन्नयति—" इन्द्रो वृत्रमहन् तस्य शीर्षकपालमुदौब्जत् स द्रोणकलशोऽभवत् तस्मात् सोमः समस्रवत् स हारियोजनोऽभवत् " (तैसं ६·५·९) इति । उदौब्जदुत्तानमभवत् । तस्मात् वृत्रशिरसो निष्पन्नात् द्रोणकलशात् स्रुतः सोमरसो हारियोजनोऽभवत् । तस्माद् द्रोणकलशेन हारियोजनं गृह्णीयात् ॥ धानामेलनं विधत्ते—" तं व्यचिकित्सत् जुहवानी३ मा हौषा३मिति सोऽमन्यत यद्धोष्या-म्यामꣳ होष्यामि यन्न होष्यामि यज्ञवेशसं करिष्यामीति तमध्रियत होतुꣳ सोऽग्निरब्रवीन्न मय्यामꣳ होष्य-सीति तं धानाभिरश्रीणात्तꣳ शृतं भूतमजुहोद्यद्धानाभिर्हारियोजनꣳ श्रीणाति शृतत्वाय शृतमेवैनं भूतं जुहोति " (तैसं ६·५·९) इति । तं हारियोजनं ग्रहं प्रति । आमम् अपक्वं । यज्ञवेशसं यज्ञविघातम्[5] स इन्द्रस्तं ग्रहं होतुमध्रियत[6] निश्चयमकरोत् । न होष्यसि मा हौषीः, शृतं भूतं पक्वं जातम् ॥ धानानां बाहुल्यं विधत्ते—" बह्वीभिः श्रीणात्येतावतीरेवास्यामुष्मिंल्लोके कामदुघा भवन्त्यथो खल्वाहुरेता वा इन्द्रस्य पृश्नयः कामदुघा यद्धारियोजनीरिति तस्माद्बह्वीभिः श्रीणीयात् " (तैसं ६·५·९) इति । संख्यया यावत्यो धानास्तावत्यो यजमानस्य स्वर्गे कामधेनवो भवन्ति । किंच [7]हारियोजनीर्धाना इन्द्रस्य कामधेनवः । पृश्नयोऽल्पतनवः ॥ सवनीयस्य पशोः परिधिषु प्रहृतेषु हारियोजनकाल इत्येतद्विधत्ते— " ऋक्सामे वा इन्द्रस्य हरी सोमपानौ तयोः परिधय आधानं यदप्रहृत्य परिधीञ्जुहुयादन्तराधानाभ्यां घासं प्र यच्छेत् प्रहृत्य परिधीञ्जुहोति निराधानाभ्यामेव घासं प्र यच्छति " (तैसं ६·५·९) इति । ऋक्सामवेदात्मकाविन्द्रस्याश्वौ । तावप्यत्र सोमं पिबतः । अत एव हर्योर्धाना इत्युक्तम् । सवनीयपश्व-

---

१. त्रि१.पा.मां–अग्रह° । २. आ.हा–' रथे ' नास्ति । ३. इ.उ.पा.मां.हा–' ग्रहम् ' नास्ति । ४. इ.उ.पा.मां.हा–हारियोजनमर्थ°; त्रि१–हारियोजनग्रहमर्थ° । ५. इ.उ.क.पा.मां.हा–यज्ञविघातकम-ध्रियत । ६. इ.उ.क.त्रि१.पा.मां.हा–' अध्रियत ' नास्ति । ७. त्रि१–हारियोजनस्थाना: ।

भूता ये परिधयोऽग्निं परित आवृत्य तिष्ठन्ति त तयोरश्वयोराधानम् । आधीयते मुख प्रक्षिप्यतेऽश्व नियन्तुमित्याधान खलीनम् । मुखस्यान्त स्थितमाधानं ययोरश्वयोस्ताभ्यामन्तराधानाभ्याम । परिधिप्रहरणादूर्ध्वं होम निराधानत्वात् सुखेनैव [8]धासमत्तु शक्यते ॥ नन्वाध्वर्योहाम कि तूष्णीमुतेत्युभयं विधत्ते—" उन्नेता जुहोति यातयामेव ह्येतदध्वर्यु स्वगाकृतो यदध्वर्युर्जुहुयाद्यथा विमुक्त पुनर्युनक्ति तादृगेव तत्" (तैस ६ ५ ९ ) इति । एतस्मिन् काले [9]अध्वर्युरस्मात् स्वगाकृत स्वाधीनगति कृत प्रधानग्रहाणा समाप्तत्वेन पारतन्त्र्याभावात् तस्मादय गतसारत्व[10] इव । तथा सत्यध्वर्युहोमे विमुक्तस्य बलीवर्दस्य श्रान्तस्य पुन शकटे [11]योगवत् भवति ॥ गृहीतस्य हारियोजनस्य होमात् पूर्वं शिरसि धारण विधत्ते—" शीर्षन्नधिनिधाय जुहोति शीर्षतो हि स समभवत्" (तैस ६ ५ ९ ) इति । अत्र सूत्रम्— " मही-भिर्धानाभि [?]था शीर्षन्नधिनिधायोपनिष्क्रम्य " (आपश्रौ १३ १७ २ ) इति ॥ होमकालेऽत्याश्रावण देशादीपत् पुरतो गमन[12] कृत्वा होतव्यमिति विधत्ते— " विक्रम्य जुहोति विक्रम्य हीन्द्रो वृत्रमहन्त्समृद्ध्यै " (तैस ६ ५ ९ ) इति ॥ भक्षणकाले हारियोजनधानाना मानस चर्वण विधत्ते—" पशवो वै हारियोजनीर्यत् सभिन्द्याद्दल्पा एन पशवो भुञ्जन्त उप तिष्ठेरन् यन्न सभिन्द्याद्बहव एन पशवोऽभुञ्जन्त उप तिष्ठेरन् मनसा स बाधत उभय करोति बहव एवैन पशवो भुञ्जन्त उप तिष्ठन्ते " (तैस ६ ५ ९ ) इति । पशुप्राप्तिहेतुत्वात् धाना पशव । सभिन्द्यात् दन्तै खण्डयेत् । तथा सति कतिचिदेव पशव एन यजमान क्षीरदानादिभि [13]पालयन्त प्राप्नयु । असभेदे बहव प्राप्नुवन्तोऽपि क्षीरादिभिर्न पालयन्ति । मानसचर्वणे तु सभेदनमसभेदन चेत्युभयस्य कृतत्वात् पशूना नाल्पत्वं नापि क्षीरादिराहित्यम् ॥ उन्नेतृहस्तगत हुतशेष सर्व भक्षयितुमुन्नेतुरन्येषामपेक्षेत्युक्ते विधत्ते—" उन्नेतुरुपह्वयमिच्छन्ते य एव तत्र सोमपीथस्तमेवाव रुन्धते " ( तैस ६ ५ ९ ) इति ॥ सर्वभक्षितावशेषाणा द्रोणकलशगतसोमाना नियम विधत्त—" उत्तरवेद्या नि वपति पशवो वा उत्तरवेदि पशवो हारियोजनी पशुष्वेव पशून् प्रति ष्ठापयन्ति (तैस ६ ५ ९ ) इति ॥

ग्रहहोमे परिसमाप्ते सति ग्रहान् प्रशसति—" ग्रहान् वा अनु प्रजा पशव प्र जायन्ते" (तैस ६ ५ १० ) इति ॥ [14]एतदेव निरूपयति[15]—" उपांश्वन्तर्यामावजावय शुक्रामन्थिनौ पुरुषा ऋतुग्रहानेकशफा आदित्यग्रह गाव " (तैस ६ ५ १० ) इति ॥ आग्रयणग्रहस्य गवा च सादृश्यप्रदर्शना[15] च ग्रहमनु गवा उत्पत्तिमुपपादयति—" आदित्यग्रहो भूयिष्ठाभिर्ऋग्भिर्गृह्यत तस्माद्गाव पशूना भूयिष्ठा " (तैस ६ ५ १० ) इति । 'कदा चन स्तरीरसि' इत्यादिका ऋचो भूयिष्ठा ॥ उपांश्वन्तर्यामावनु जायमानामजाविना[16] ग्रहण सह त्रित्वसाम्य[17] दर्शयति—" यत्त्रिरुपांशु हस्तेन विगृह्णाति तस्माद्द्वौ त्रीनजा जनयति" (तैस ६ ५ १० ) इति । द्वौ वा त्रीन् वा न तु त्रिभ्योऽधिकमपत्य सा मह जनयति ॥ यस्मादन्तर्यामग्रहे सकोचरूपसङ्ख्याविशेषो न श्रुतस्तस्मात् तमनु जायमानामवीना भूयिष्ठत्व [18]युगपद्गृहीतमित्याह—" अथावयो भूयसी " (तैस ६ ५ १० ) इति ॥ अथ कथचिदाग्रयणसोम क्षीयेत तदा द्रोणकलशात्तद्ग्रहण विधत्ते—" पिता वा एष यदाग्रयण पुत्र कलशो यदाग्रयण उपदस्येत् कलशाद्गृह्णीयाद्यथा पिता पुत्र क्षित उपधावति तादृगेव तत्" (तैस ६ ५ १० ) इति । प्रथमोत्पन्नत्वादाग्रयण पिता । पश्चाज्जातत्वात् कलश पुत्र । क्षित क्षीणवृत्ति[19] । उप

८ क धासमत्तुम् । ९ ड उ पा भो हा–'अध्वर्युरस्मात्' नास्ति, त्रि१– 'रस्मात्' नास्ति । १० त्रि१–गतसारत्व । ११ आ क–योग इव । १२ आ पा–गमनम् । १३ त्रि१–भारादिभि । १४–१४ क–उ त र त निरूप्य स्पष्टयति । १५ त्रि१–प्रदानन क–प्रदर्शनेन । १६ आ हा–जातानामजाना[?]म् । १७ त्रि१ त्रित्वसाम्यम । १८ आ क–युगपद्गृहीतमित्याह । १९ क–क्षीणवृत्ति पिता ।

धावति जीवनार्थमुपसर्पति ॥ [20]कलशसोमक्षये वैपरीत्यं विधत्ते—"यत्कलश उपदस्येदाग्रयणाद् गृह्णीयात् यथा पुत्रः पितरं क्षित उपधावति तादृगेव तत्" (तैसं ६·५·१०) इति ॥ कलशन्यायं ग्रहेऽपि दर्शयति—"आत्मा वा एष यज्ञस्य यदाग्रयणो यद्ग्रहो वा कलशो वोपदस्येदाग्रयणाद्गृह्णीयात् आत्मन एवाधि यज्ञं निष्करोति" (तैसं ६·५·१०) इति। यज्ञमध्यवर्तित्वादाग्रयणो यज्ञस्याऽऽत्मा। दृष्टान्तत्वेन कलशस्य पुनरुपादानम्। नष्टं यज्ञमनेन ग्रहेणाऽऽत्मन उपरि पुनः संदधाति ॥ अथ स्थाल्या होमसाधनत्वाभावेन तां निन्दन्निव होमसाधनं [21]दारुपात्रं प्रशंसति—"अविज्ञातो वा एष गृह्यते यदाग्रयणः स्थाल्या गृह्णाति वायव्येन जुहोति तस्माद्गर्भेणाविज्ञातेन ब्रह्महा" (तैसं ६·५·१०) इति। "आ वायो भूष" (तैसं १·४·४) इत्यादि ग्रहणमन्त्रेषु यथा देवता स्वनामविशेषेण विज्ञायते न तथा "ये देवा दिव्येकादश स्थ" (तैसं १·४·१०) इत्यत्र, नामविशेषाश्रुतेः। तस्मादविज्ञात आग्रयणः स्थाल्या [22]मृन्मय्या गृह्यत्येव न तु जुहोति। वायव्येन तु दारुपात्रेण जुहोति। यस्मात् 'ये देवाः' [23]इति मन्त्रोक्त्यान्[23] अविज्ञातनामकांस्त्रयस्त्रिंशतो देवानुद्दिश्य स्थाल्या[24] गृहीतः सोमो ग्रहणमात्रेण[25] तद्देवतात्वेऽप्यपि होमाभावात् परित्यक्त इव, तस्माल्लोकेऽप्यविज्ञातेन गर्भेण ब्रह्महा भवति। [26]प्रोषिते भर्तरि जारजन्यो गर्भो भर्तारं प्रत्यविज्ञातस्तेन गर्भेणोत्पन्नं ब्रह्म जहाति परित्यजतीति ब्रह्महा। अविज्ञातयोर्गर्भाग्रयणयोः परित्यागस्तुल्यः। तं च स्थालीगतं सोमं [27]पुनर्दारुमयेनान्तर्यामपात्रेण[27] त्रिविभ्रयं गृहीत्वा जुहोति। ततो दारुपात्रं प्रशस्तम् ॥ प्रकारान्तरेण दारुपात्राणि प्रशंसति—"अवभृथमव यन्ति परा स्थालीरस्यन्त्युद्वायव्यानि हरन्ति तस्मात् स्त्रियं जातां पराऽस्यन्त्युत्पुमांसꣳ हरन्ति" (तैसं ६·५·१०) इति। यदाऽवभृथं गच्छन्ति तदानीमाग्रयणोक्थ्यध्रुवादिस्थस्थालीश्चतस्रो येषामेव परास्यन्ति परित्यजन्ति। वायव्यानि तु दारुपात्राण्युद्धरन्त्यवभृथदेशे नयन्ति। तस्मात् स्थालीवत् लोकेऽपि स्त्रियं दुहितरं विवाहेन वरकुले परित्यजन्ति, पुमांसं तु वायव्यवदुद्धरन्ति सम्यक् पोषयन्ति ॥ पुरोरुचं ग्रहणं सादनं च क्रमेण प्रशंसति—"यत्पुरोरुचमाह यथा वस्यस आहरति तादृगेव तद्यद्ग्रहं गृह्णाति यथा वस्यस आहृत्य प्राह तादृगेव तद्यत्सादयति यथा वस्यस उपनिधायापक्रामति तादृगेव तत्" (तैसं ६·५·१०) इति। 'उपयामगृहीतोऽसि' इत्येतस्मात् पूर्वं पठ्यमानत्वात् 'आ वायो भूष' इत्यादिका पुरोरुक्। वस्यसे वसुमत्तमाय राजामात्यादिकाय। यथा लोके धनिकायोपायनमाहृत्य तवेदमित्युक्त्वा[28] पुरतो निधाय गच्छन्ति तथा पुरोरुगादित्रयं द्रष्टव्यम् ॥ यजुःसामनी निन्दन्निव पुरोरुचं प्रशंसति—"यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तद्यदृचा तद्दृढं पुरस्तादुपयामा यजुषा गृह्णन्त उपरिष्टादुपयामा ऋचा यज्ञस्य धृत्यै" (तैसं ६·५·१०) इति। यज्ञसंबन्धि यदङ्गं यजुःसामभ्यां क्रियते तद्धि शिथिलमिव। वेदेषु सर्वत्र विश्वासाय 'तदेतदृचाऽभ्युक्तम्' इत्यृच एवोदाहरणात्। 'उपयामगृहीतोऽसि', 'अन्तर्यच्छ मघवन्' इत्यादिमन्त्रैर्गृह्यमाणाः पुरस्तादुपयामाः। 'आ वायो भूष' इत्यादिभिस्तूपरिष्टादुपयामाः। तत्र यजुषो दार्ढ्यार्थमुपयामपूर्वत्वम्। ऋचस्तु स्वयमेव दृढत्वात्तत्पूर्वत्वम्। तदुभयं यज्ञस्य धृत्यै [29]भवति ॥

२०. क-कलशे सोमक्षये। २१. इ.उ.त्रि१-पा.मां.हा-पात्रम्। २२. मृन्मय्या। २३-२३. आ.हा-इति मन्त्रोक्तौ। २४. क-स्थाल्याम्। २५. इ.उ.पा.मां-ग्रहणमन्त्रेण। २६. इ.उ.पा.मां.हा-प्रोषित'। २७-२७. आ-पुनर्दारुमयेऽन्तर्यामपात्रे। २८. इ.उ.पा.मां.हा-तदेव ममेत्युक्त्वा; आ.क-एतदेव ममेत्युक्त्वा। २९. इ.उ.पा.मां.हा-'भवति' 'नास्ति'।

सोमपात्राणि प्रशंसितु द्वेधा विभजति—" प्रान्यानि पात्राणि युज्यन्ते नान्यानि " (तैस ६ ५ ११) इति। कानिचित् पात्राणि प्रकर्षेण युज्यन्तेऽनुष्ठीयन्ते पुनरावर्त्यन्त इत्यर्थ । [30]यथा— उपांश्वन्तर्यामपात्रयो [31] प्रातःसवने प्रयुक्तयो पुनस्तृतीयसवनेऽपि प्रयोग । " यदुपांशुपात्रेण पात्नीवतमाग्रयणाद्गृह्णाति " (तैस ६ ५ ८), " अन्तर्यामपात्रेण सावित्रमाग्रयणाद्-
५ गृह्णाति " (तैस ६ ५ ७) इत्याम्नातत्वात्। अन्यानि तु नावर्त्यन्ते किं तु सकृदेवानुष्ठीयन्ते। तद्यथा— [32]द्विदेवत्यग्रहादीनि [33], तेषु सकृदनुष्ठितेषु [34] स्वर्गजय ॥ आवृत्तेरस्मिँल्लोकजय इति प्रशंसति— " यानि पराचीनानि प्रयुज्यन्तेऽमुमेव तैर्लोकमभि जयति पराङिव ह्यसौ लोको यानि पुन प्रयुज्यन्त इममेव तैर्लोकमभि जयति पुन पुनरिव ह्यय लोक " (तैस ६ ५ ११) इति। पराचीनान्यनिवृत्तानि। स्वर्ग पराङिवानावृत्त इव। [35]स्वर्गे स्थितस्यापि पुनर्जन्मान्तरेऽपि स्वर्गं प्राप्तुमुद्योगासंभवात्। मनुष्यलोके स्थितस्य पुनरेतदर्थ-
१० मुद्यमोऽस्तीति तस्य पौन पुन्यम् ॥ प्रकारान्तरेण प्रशंसति —" प्रान्यानि पात्राणि युज्यन्ते नान्यानि यानि पराचीनानि प्रयुज्यन्ते तान्यन्वोषधय परा भवन्ति यानि पुन प्रयुज्यन्ते तान्यन्वोषधय पुनरा भवन्ति " (तैस ६ ५ ११) इति। फलपाके विनाश पराभव । संवत्सरान्ते तदुत्पत्ति पुनराभवनम् ॥ प्रकारा-न्तरेण प्रशंसति—" प्रान्यानि पात्राणि युज्यन्ते नान्यानि यानि पराचीनानि प्रयुज्यन्ते तान्यन्वारण्या पशवोऽरण्यमप यन्ति यानि पुन प्रयुज्यन्ते तान्यनु ग्राम्या पशवो ग्राममुपावयन्ति " (तैस ६ ५ ११)
१५ इति। आरण्या व्याघ्रादयोऽरण्यमेवापयन्ति न कदाचिदपि ग्रामम्। ग्राम्यास्तु गवादयस्तृणमनुमरण्य गत्वा पुनर्ग्रामं प्रत्यागच्छन्ति ॥ शस्त्रं प्रशंसति — " यो वै ग्रहाणा निदान वेद निदानवान् भवत्याज्यमित्युक्थं तद्वै ग्रहाणा निदान यदुपांशु शंसति तदुपांश्वन्तर्यामयोर्यदुच्चैस्तदितरेषा ग्रहाणामेतद्वै ग्रहाणा निदान य एव वेद निदानवान् भवति " (तैस ६ ५ ११) इति। आज्य-मित्युक्थमाज्यप्रउगादिनामक शस्त्र प्रशंसाद्वारा ग्रहानुष्ठानप्रयोजकत्वात् ग्रहाणा निदान मूलकारणम्।
२० तदेतद्यो वेद स निदानवद्भिर्जीविभिर्मातापितृस्थानिभि सयुक्तो भवति। शस्त्रेऽपि यदुपांशु शस्यते तदुद्वयोर्ग्रहयोर्निदान, यदुच्चैस्तदितरेषा सर्वेषामित्येव विशेष जानतोऽपि तदेव फलम् ॥ [36]"स्थाली वायव्यरूप द्वन्द्व"[36] प्रशंसति— " यो वै ग्रहाणा मिथुन वेद प्र प्रजया पशुभिर्मिथुनैर्जायते स्थालीभिरन्ये ग्रहा गृह्यन्ते वायव्यैरन्य एतद्वै ग्रहाणा मिथुन य एव वेद प्र प्रजया पशुभिर्मिथुनैर्जायते " (तैस ६ ५ ११) इति। आग्रयणोक्थ्यादिग्रहा स्त्रीरूपाभिर्मृन्मयस्थालीभिर्गृह्यन्ते। उपांश्वन्तर्यामादिग्रहास्तु पुरुष-
२५ रूपैर्दारुमये [37] वायव्यै । वेदने तु मनुष्यमिथुने पशुमिथुनेश्च प्रजायते युक्तो भवति। ' य एव वेद ' इति-पुनरभिधानमुपसंहारार्थम् ॥ अथ [38]सवनीयपुरोडाशान् विधत्ते— " इन्द्रस्त्वष्टु सोममभीषहाऽपिबत् स विष्वङ् व्यार्छत् स आत्मन्नारमण नाविन्दत् स एताननुसवनं पुरोडाशानपश्यत् तान्निरवपत् तैर्वै स आत्म-न्नारमणमकुरुत तस्मादनुसवन पुरोडाशा निरुप्यन्ते तस्मादनुसवन पुरोडाशाना प्राश्नीयादात्मन्नेवाऽऽरमण कुरुते नैनं सोमोऽति पवते " (तैस ६ ५ ११) इति। इन्द्रेण विश्वरूपाभिधे त्वष्टु पुत्रे हते सति कुपित

३० [30] इ उ पा मा हा–' यथा ' नास्ति। [31] इ उ प मा हा–°र्यामयो , ति१–°यामयो प्रातयो ।
[32] हा–न प्रयुज्यन्त न निवर्त्यन्ते । [33] क–द्विदेवत्यदधिग्रहादीनि । [34] त्रि१–सकृदनुष्ठीयन्ते, इ उ पा मा हा–सकृदनुष्ठानात्। [35]. इ उ त्रि१–पा मा हा–स्वर्गा° । [36]–[36]. त्रि१–स्थालीवायव्यादिरूप-द्वयम्। [37]. मा हा–' दारुमये ' नास्ति। [38]. इ उ.पा हा–सवनीयस्य पुरो° ।

[हारियोजनग्रहः]

त्वष्टा विनेन्द्रं सोमयागं कर्तुं प्रवृत्तस्तदानीमिन्द्रोऽभीषहा बलादेवापिबत्। स इन्द्रः सहसा पीतस्य सोमस्योदरमध्य इतस्ततो विधावनादूर्ध्वाधश्छिद्रविधामार्तिं प्राप्नोत्। तेनाऽऽर्तः स इन्द्रः स्वात्मनि आरमणं[39] सुखं नालभत। ततस्त्रिष्वपि सवनेषु सवनीयपुरोडाशैः सुखं प्राप्तवान्। तस्मात् पुरोडाशान्निरुप्य तच्छेषभक्षणेन सुखं भवति। सोमश्चैनं नातिपवते नेतस्ततः संचारेण बाधते॥ तेषु सवनीयपुरोडाशेषु[40] पञ्चद्रव्यविधिमर्थवादेनोन्नयति—"ब्रह्मवादिनो वदन्ति नर्चा न यजुषा पङ्क्तिराप्यतेऽथ किं यज्ञस्य पाङ्क्तत्वमिति धानाः करम्भः परिवापः पुरोडाशः पयस्या तेन पङ्क्तिराप्यते तद्यज्ञस्य पाङ्क्तत्वम्" (तैसं ६.५.११) इति। "पञ्चाक्षरा पङ्क्तिः" (तैसं ६.१.१) इत्याम्नानात् पञ्चसंख्यायोगेन पाङ्क्तत्वं वक्तव्यम्। ऋचो यजुषो वा नास्ति काचिन्नियता पञ्चसंख्या। न च मा भूत् पाङ्क्तत्वमिति वाच्यम्। "पाङ्क्तो यज्ञः" (तैसं ६.१.१) इति सर्वत्रोद्घोपणात्[41]। अतः "[42]किं पाङ्क्तत्वमिति प्रश्नः। धानादिद्रव्येषु नियतया यवा धानाः। आज्यसंयुक्ताः सक्तवः करम्भः। व्रीहिजन्या लाजाः परिवापः। पिष्टविकारः पुरोडाशः। पञ्चसंख्यया पाङ्क्तत्वमित्युत्तरम्। सृष्टा क्षीरविकारः पयस्या॥

अथ मीमांसा॥ तृतीयाध्यायस्य पञ्चमपादे चिन्तितम्—

"किं स्याच्चमसिनामेव हारियोजनभक्षणम्।
सर्वेषां वाऽग्रिमस्तेषां पूर्ववाक्येणसंनिधेः॥
लिप्सन्ते सर्व एवेति हारियोजनवाक्यतः।
ग्रावस्तुतोऽप्यस्ति भक्षश्चमासित्वमकारणम्॥"

(जैन्या ३.५.१४–१५) इति॥

'हरिरसि हारियोजनः' इत्यनेन मन्त्रेण गृह्यमाणो ग्रहो हारियोजनः। होतृब्रह्मादयश्चमसिनः। यस्तु चतुर्णां होतॄणां मध्ये चतुर्थो ग्रावस्तुन्नामकोऽस्ति नासौ चमसी। तत्र चमसिनामेव हारियोजनभक्षणम्। कुतः? '[43]यथाचमसमन्यांश्चमसांश्चमसिनो भक्षयन्ति, अथैतस्य हारियोजनस्य सर्व एव लिप्सन्ते' इत्यत्र पूर्ववाक्ये चमसिनां संनिहितत्वेनोत्तरवाक्ये सर्वशब्देन तेषामेवाभिधातव्यत्वात्। अतो नास्ति ग्रावस्तुतस्तत्र भक्ष इति प्राप्ते ब्रूमः—अथशब्देनैवकारेण च चमसिमात्रशङ्कामपोह्य[44] वाक्येन विहितस्य सर्वभक्षणस्य संनिधिमात्रेण[45] संकोचायोगादस्ति ग्रावस्तुतोऽपि भक्षः। तस्माच्चमसित्वं न भक्षणे कारणम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठकेऽष्टाविंशोऽनुवाकः॥ २८॥

---

३९. आ.'आरमणम्' नास्ति। ४०. इ.उ.पा.हा–सवनीयेषु; त्रि१–पुरोडाशेषु। ४१. त्रि१–सर्वत्रोपपादनात्। ४२. इ.उ.त्रि१.पा–'किम्' नास्ति। ४३. इ.उ.पा.हा–'यथा' नास्ति। ४४. त्रि१–चमसिमात्रत्वशङ्कामपोह्य; क–चमसिमात्रित्वशङ्कामपोह्य। ४५. पा–संनिहितस्य मात्र'; इ.हा–संनिहितमात्र'।

अग्न॒ आयूं॑ᳯषि पवस॒ आ सु॒वोर्ज॒मिषं॑ च नः ।
आ॒रे बा॑धस्व दु॒च्छुना॑म् ॥
उ॒प॒या॒मगृ॑हीतोऽस्य॒ग्नये॑ त्वा॒ तेज॑स्वत
ए॒ष ते॒ योनि॑र॒ग्नये॑ त्वा॒ तेज॑स्वते ॥ २९ ॥

[ अग्न॒ आयूं॑ᳯषि॒ त्रयो॑विᳯशतिः ]

अग्ने॑ । आयूं॑ᳯषि । प॒व॒से॒ । एति॑ । सु॒व॒ । ऊर्ज॑म् । इष॑म् । च॒ । न॒ ।
आ॒रे । बा॒ध॒स्व॒ । दु॒च्छुना॑म् ॥
उ॒प॒या॒मगृ॑हीत॒ इत्यु॑पया॒म-गृ॒ही॒त॒ । अ॒सि॒ । अ॒ग्नये॑ । त्वा॒ । तेज॑स्वते ।
ए॒ष । ते॒ । योनि॑ । अ॒ग्नये॑ । त्वा॒ । तेज॑स्वते ॥ २९ ॥

---

अथातिग्राह्याणामाग्नेय गृह्णाति—'अग्न आयूषि' इति गायत्र्या । व्याख्याता चेय "त्वमग्ने रुद्रः" ( तैस १ ३·१४ ) इत्यत्र । "देवा वा इन्द्रिय वीर्यं व्यभजन्त ततो यदत्यशिष्यत" ( तैस ६ ६ ८ ) इत्यादि ब्राह्मणम्, "अप्यग्निष्टोमे ग्रहीतव्याः" ( तैस ६ ६ ८ ) इत्यादि च । हे अग्ने, आयूषि पवस्व ऊर्जं रसम् इषम् अन्न च न. अस्मभ्यम् आ सुव आनय दुच्छुना दौर्गत्य चास्माकम् आरे दूरे बाधस्व इति ॥

ग्रहणसादनमन्त्रौ[1] गतौ[2] ॥

॥ इति चतुर्थप्रपाठके एकोनत्रिंशोऽनुवाक ॥

---

अग्न इति ॥ कल्प —"श्रीनग्निष्टोमेऽतिग्राह्यान् गृह्णाति । आग्नेयमैन्द्रं सौर्यमिति । अग्न आयूᳯषि उत्तिष्ठन् तरणिरिति ग्रहणसादना" ( आपश्रौ १२ १५ ९–१० ) इति ॥ प्रथममन्त्रपाठस्तु—'अग्न आयूᳯषि पवस आ सुवोर्जमिषं च न· । आरे बाधस्व दुच्छुनाम् । उपयामगृहीतोऽस्यग्नये त्वा तेजस्वत एष ते योनिरग्नये त्वा तेजस्वते' इति ॥ हे अग्ने, [illegible] भक्तानाम् आयूᳯषि पवसे शोधयसि वर्धयसीत्यर्थं । अस्माकम् इषम् अन्नम् ऊर्जम् बलम् आ सुव प्रयच्छ । दुच्छुना वैरिसेनाम् आरे दूर यथा स्यात्तथा बाधस्व । स्पष्टमन्यत् ॥

---

१. य–°मन्त्रा. । २. व–गता ।

उत्तिष्ठन्नोजसा सह पीत्वा शिप्रे अवेपयः । सोममिन्द्र चमू सुतम् ॥
उपयामगृहीतोऽसीन्द्राय त्वौजस्वत एष ते योनिरिन्द्राय त्वौजस्वते ॥ ३० ॥

[ उत्तिष्ठन्नेकविंशतिः ]

उत्तिष्ठन्नित्युत्–तिष्ठन् । ओजसा । सह । पीत्वा । शिप्रे इति । अवेपयः ।
सोमम् । इन्द्र । चमू इति । सुतम् ॥
उपयामगृहीत इत्युपयाम–गृहीतः । असि । इन्द्राय । त्वा । ओजस्वते ।
एषः । ते । योनिः । इन्द्राय । त्वा । ओजस्वते ॥ ३० ॥

[ वासं ८·३९ ]

---

अथैन्द्रं गृह्णाति—' उत्तिष्ठन् ' इति गायत्र्या ॥ हे [v]इन्द्र, [v]सुतम् अभिषुतं [v]सोमं [v]पीत्वा [v]ओजसा बलेन महता [v]सह [v]उत्तिष्ठन् [v]शिप्रे हनू । कीदृग्भूते ? [v]चमू अदनकरण-भूते [v]अवेपयः वेपय आचूषणिकां तां तृप्तिं जनयन् हनुयुगलं चालय[1] । चमु छमु अदने । औणादिक ऊप्रत्ययः ( उ ८१ ) ॥

ग्रहणसादने व्याख्याते ॥

॥ इति चतुर्थप्रपाठके त्रिंशोऽनुवाकः ॥

अथ सौर्यं गृह्णाति—' [v]तरणिः ' इति गायत्र्या ॥ केचिदाहुः एकत्रिंशोऽयमनुवाकः अस्मिन् प्रदेशेऽध्येतव्य इति । अन्ये तु यथाम्नातेनैव सौर्योऽतिग्राह्यो गृह्यते, नावश्यकमत्राध्ययन-मित्याहुः ॥ [v]तरणिः क्षिप्रगामी पापानां तारयिता वा । तरतेरनिप्रत्ययः ( उ २६७ ) । [v]विश्व-दर्शतः विश्वं दर्शयितव्यं यस्य सः विश्वदर्शतः । दृशेरौणादिकोऽतच्प्रत्ययः (उ ३९७) । " बहुव्रीहौ विश्वं संज्ञायाम् " ( पा ६·२·१०६ ) इति विश्वशब्दस्यान्तोदात्तत्वम् । यद्वा—विश्वस्य दर्शयिता विश्वदर्शतः । व्यत्ययेन पूर्वपदान्तोदात्तत्वम् । [v]ज्योतिष्कृत् ज्योतिषः प्रकाशस्य कर्ता उत्पा-दयिता । यद्वा—ज्योतिषां ग्रहनक्षत्रादीनां कर्ता उद्भावयिता, त्वदधीनप्रकाशत्वात् तेषाम् ।

---

उत्तिष्ठन्निति ॥ द्वितीयमन्त्रपाठस्तु—' उत्तिष्ठन्नोजसा सह पीत्वा शिप्रे अवेपयः । सोममिन्द्र चमू सुतम् । उपयामगृहीतोऽसीन्द्राय त्वौजस्वत एष ते योनिरिन्द्राय त्वौजस्वते ' इति ॥ हे [v]इन्द्र, [v]सुतं [v]सोमं पीत्वा [v]ओजसा बलेन [v]सह उत्तिष्ठन् [v]चमू भक्षणकरणभूते [v]शिप्रे हनू [v]अवेपयः चालय । तच्चालनलिङ्गेन तुष्टमात्मानमस्माकं दर्शयेरर्थः । स्पष्टमन्यत् ॥

---

१. तं.ति.य–चालयन् ।

*[ ६०२ पृष्ठे टिप्पणी द्रष्टव्या । ] ।

*तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमा भासि रोचनम् ॥
उपयामगृहीतोऽसि सूर्याय त्वा भ्राजस्वत एष ते योनिः सूर्याय त्वा भ्राजस्वते ॥३१॥
[ तरणिर्विंश्शतिः ]

तरणिः । विश्वदर्शत इति विश्व-दर्शतः । ज्योतिष्कृदिति ज्योतिः - कृत् । असि । सूर्य ।
विश्वम् । एति । भासि । रोचनम् ॥
उपयामगृहीत इत्युपयाम-गृहीतः । असि । सूर्याय । त्वा । भ्राजस्वते ।
एषः । ते । योनिः । सूर्याय । त्वा । भ्राजस्वते ॥ ३१ ॥

यथाऽऽह —' सूर्याभिमुखानि दीप्यन्ते ' इति । हे सूर्य, ईदृशस्त्वम् असि । स त्वं विश्व रोचनं प्रकाशकं ग्रहनक्षत्रादिकं सुषुम्नाख्येन रश्मिनाऽनुप्रविश्य आ भासि दृश्यसे लोकैः, तानि वा प्रकाशयसि, तस्मादुच्यते—' ज्योतिष्कृदसि ' इति ॥

ग्रहणसादने गते । न त्वाम्नातमित्युक्तम् ॥

॥ इति चतुर्थप्रपाठके एकत्रिंशोऽनुवाकः ॥

*तरणिरिति ॥ [1]"तृतीयमन्त्रपाठस्तु—' तरणि ' [2]इत्यादिरारण्यके समाम्नातत्वात् नात्र व्याख्येयः" ॥

[ अथ सूर्योपस्थाने विनियुक्तं मन्त्रमाह—' तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमा भासि रोचनम् । उपयामगृहीतोऽसि सूर्याय त्वा भ्राजस्वत एष ते योनिः सूर्याय त्वा भ्राजस्वते ' इति ॥ हे सूर्य, त्वं तरणिः अन्धकारोत्तरणहेतुः विश्वदर्शतः विश्वैः सर्वैः प्राणिभिर्दर्शनीयः ज्योतिष्कृत् सर्वस्मिँल्लोके प्रकाशकृच्चासि । विश्वं सर्वं जगत् रोचनं दीप्यमानं यथा भवति तथा आ भासि सर्वतः प्रकाशयसि । अग्निष्टोमे योऽयमतिग्राह्यरूपो ग्रहोऽस्ति तादृश हे ग्रह, भ्राजस्वते दीप्तियुक्ताय यथोक्त-महिमोपेताय सूर्याय त्वा गृह्णामि । अतएव तदर्थम् उपयामगृहीतः उपयामेन पृथिवीकार्येण पात्रेण गृहीतः असि । एषः हविर्धानमण्डपस्थः खरप्रदेशः ते तव योनिः स्थानम् । अतो भ्राजस्वते दीप्तिमते सूर्याय त्वां तत्र प्रदेशे सादयामि । ईदृशोऽयमतिग्राह्यो यस्मै सूर्याय गृह्यते किमु वक्तव्यं तस्य माहात्म्यमित्ययमुपस्थानकाले स्तुत्यर्थो ग्रहोपन्यासो लिङ्गबलात्तस्यातिग्राह्यस्य ग्रहणेऽप्ययं मन्त्रो विनियुज्यते ॥ ]

१-१ च-तृतीयमन्त्रपाठस्तु पाठकसंप्रदायानुसारेण तरणिरित्याद्येकत्रिंशानुवाकमारभ्य मन्त्रपञ्चकपरित्रिंशदनुवाकान्तं संहितोपनिषत्सु प्रथमप्रपाठकत्वेन स्वीकृतत्वात्तु नचित्यारण्यकतृतीयप्रपाठके समाम्नातत्वान्न व्याख्येयम् । २ हा—इत्यादिमन्त्रषट्कमारण्यके ।

*[ तरणिरित्यारभ्य षडनुवाकाः तैत्तिरीयारण्यकेऽपि ( ३·१६–२१ ) पठिताः । सायणाचार्यैः एतेऽनुवाकाः आरण्य एव व्याख्याताः । भट्टभास्करमिश्रैरपि आम्नायस्तैरारभ्य षडनुवाकाः आरण्ये एव व्याख्याताः । आरण्यककाण्डस्थ भाष्यद्वय जिज्ञासुना इते तत उद्धृत्यात्र मुद्रितमित्यवधेयम् । एतेषामनुवाकानामत्र व्याख्यानाभावात् अनुवाकपरिगणनसंख्यापि भाष्यकारयोः दृष्ट्वा भिद्यते इति अनुवाकसमाप्तिदर्शकेषु वाक्येषु स्पष्टमेतत् । ] ।

आ प्यायस्व मदिन्तम सोम विश्वाभिरूतिभिः । भवा नः सुप्रथस्तमः ॥३२॥

[ आप्यायस्व नव ]

एति । प्यायस्व । मदिन्तम । सोम । विश्वाभिः । ऊतिभिरित्यूति—भिः ।

भव । नः । सुप्रथस्तम इति सुप्रथः—तमः ॥ ३२ ॥

ईयुष्टे ये पूर्वतरामपश्यन् व्युच्छन्तीमुषसं मर्त्यासः ।

अस्माभिरू नु प्रतिचक्ष्याभूदो ते यन्ति ये अपरीषु पश्यान् ॥ ३३ ॥

[ ईयुरेकान्नविंशतिः ]

ईयुः । ते । ये । पूर्वतरामिति पूर्व—तराम् । अपश्यन् ।

व्युच्छन्तीमिति वि—उच्छन्तीम् । उषसम् । मर्त्यासः ।

अस्माभिः । उ । नु । प्रतिचक्ष्येति प्रति—चक्ष्या । अभूत् ।

ओ इति । ते । यन्ति । ये । अपरीषु । पश्यान् ॥ ३३ ॥

[ चमसोपदंशने प्रायश्चित्तम्—'आ प्यायस्व' इति गायत्री ॥ सोम मदिन्तम मादयितृतम । यद्वा—माद्यतम आत्मानन्दमय । "शमित्यष्टाभ्यो घिनुण्" (पा ३·२·१४१)। "नाद् घस्य" (पा ८·२·१७) इति नुट् । आ प्यायस्व वर्धस्व विश्वाभिः ऊतिभिः रक्षणैः तर्पणैर्वा अस्माकं सुप्रथस्तमः भव । अतिशयेन प्रथासमन्वितः सुप्रथस्तमः । त्वम् अस्मद्विषयाभिः सर्वाभिः ऊतिभिः भृशं प्रथितो भव अस्माभिः सह वर्धस्व ॥ ]

\+ + + +

[ सन्ति वृष्टयो नाम षोडशेष्टकाः "इयमेव सा या" (तैसं ४·३·११) इत्याद्याः । तासामियं षोडशी—'ईयुष्टे' इति त्रिष्टुप् ॥ ईयुः गताः ते मर्त्याः ये पूर्वतराम् पुराणतराम् अतीतां व्युच्छन्तीं विवसन्तीम् उषसम् अपश्यन् दृष्टवन्तः । अस्माभिः एव त्विदानीं प्रतिचक्ष्या प्रतिदिनं द्रष्टव्या अभूत् । ल्यबादेशाभावश्छान्दसः* । ये पुनः अपरीषु परासु

[ आप्यायस्वेति ॥ प्रेतदाहस्थानसमीपेऽवटं खात्वा जलं प्रक्षिप्य तेन सेचनं संगाहनम्, तत्र विनियुक्तां सौमीमृचमाह—'आप्यायस्व मदिन्तम सोम विश्वाभिरूतिभिः । भवा नः सप्रथस्तमः' इति ॥ हे मदिन्तम अतिशयेन हर्षयुक्त सोम, विश्वाभिः ऊतिभिः सर्वप्रकारैरस्मदीयरक्षणैः आ प्यायस्व सर्वतो वर्धस्व । नः अस्मान् प्रति सप्रथस्तमः अतिशयेन प्रथायुक्तो भव ॥ ]

* * * *

[ ईयुरिति ॥ अथावगाहने विनियुक्तामृचमाह—'ईयुष्टे ये पूर्वतरामपश्यन् व्युच्छन्तीमुषसं मर्त्यासः । अस्माभिरू नु प्रतिचक्ष्याऽभूदो ते यन्ति ये अपरीषु पश्यान्' इति ॥ ये मर्त्यासः मनुष्याः व्युच्छन्तीं प्रभातं कुर्वतीम् उषसम् उषःकालदेवतां पूर्वतराम् इतरेभ्योऽत्यन्तं पूर्वाम् अपश्यन् पश्यन्ति, ते मनुष्याः ईयुः तां देवतां प्राप्नुवन्ति । [ सा ] अस्माभिः, ऊ नु अस्माभिरपि नु

*( द्र.पा २·४·५४ वा॰११ )

ज्योति॑ष्मतीं त्वा सादयामि ज्यो॒ति॒ष्कृतं॑ त्वा सादयामि ज्यो॒ति॒र्विदं॑ त्वा सादया॒मि भास्व॑तीं त्वा सादया॒मि ज्वल॑न्तीं त्वा सादयामि मल्मला॒भव॑न्तीं त्वा सादया॒मि दीप्य॑मानां त्वा सादया॒मि रोच॑मानां त्वा सादया॒म्यज॑स्रां त्वा सादयामि बृ॒हज्ज्यो॑तिषं त्वा सादयामि बो॒धय॑न्तीं त्वा सादया॒मि जाग्र॑तीं त्वा सादयामि ॥३४॥

[ ज्योति॑ष्मती॒ऽ षट्त्रिं॑ऽशत् ]

ज्योति॑ष्मतीम् । त्वा । सा॒द॒या॒मि॒ । ज्यो॒ति॒ष्कृत॒मिति॑ ज्योतिः-कृत॑म् । त्वा । सा॒द॒या॒मि॒ । ज्यो॒ति॒र्विद॒मिति॑ ज्योतिः-विद॑म् । त्वा । सा॒द॒या॒मि॒ । भास्व॑तीम् । त्वा । सा॒द॒या॒मि॒ । ज्वल॑न्तीम् । त्वा । सा॒द॒या॒मि॒ । म॒ल्म॒ला॒भव॑न्ती॒मिति॑ मल्मला-भव॑न्तीम् । त्वा । सा॒द॒या॒मि॒ । दीप्य॑मानाम् । त्वा । सा॒द॒या॒मि॒ । रोच॑मानाम् । त्वा । सा॒द॒या॒मि॒ । अज॑स्राम् । त्वा । सा॒द॒या॒मि॒ । बृ॒हज्ज्यो॑तिष॒मिति॑ बृ॒हत्-
१० ज्यो॒ति॒ष॒म् । त्वा । सा॒द॒या॒मि॒ । बो॒धय॑न्तीम् । त्वा । सा॒द॒या॒मि॒ । जाग्र॑तीम् । त्वा । सा॒द॒या॒मि॒ ॥३४॥

[ मैसं २ १३ १९, काठसं ४०.१४ ]

---

अनागतासु उषःसु [v]पश्यान् पश्येयु द्रष्टार स्यु । लेट्याडागम. (पा ३ ४ ९४) । ते अपि आ [v]यन्ति एव आगमिष्यन्त्येव । एव त्रैकाल्येऽपि सर्वै. प्रतीक्ष्यते उषसो महिमा । [v]आ [v]उ ओ इति निपातसमुदायात्मा निपात । अपरशब्दात् छान्दसो ङीप् (द्र पा ४ १ ३०)।
१५ एवम् आत्मज्योति एव व्याप्य तिष्ठतीति उषसः स्तुति ॥ ]

\+ + + +

[ द्वादश ज्योतिष्मतीरुपदधाति—' ज्योतिष्मतीः ' इति ॥ आत्मज्योतिषो वृत्तिभेदा' ते इष्टकात्वेन स्तूयन्ते—ज्योतिष्मती प्रशस्तज्योतिः । ज्योतिष्कृत् ज्योतिरन्तरस्य कर्त्री ज्योतिषा लम्भयित्री भास्वती बहुप्रकाशा । ज्वलन्ती अविच्छिन्नप्रकाशा । मल्मलाभवन्ती महाघोषवती । " अव्यक्तानुकरणात् " (पा ५.४ ५७) इति डाच् । दीप्यमाना हृदये आनिर्भवन्ती ।
२० रोचमाना गगने आनिर्भवन्ती ॥ अजस्रा अनुपहिंस्या केनचिदपि । बृहज्ज्योति' बृहित्ज्योति' । बोधयन्ती द्रव्य प्रकाशयन्ती । जाग्रती स्वयप्रकाशात्मना ॥ ]

\+ + + +

---

क्षिप्र [v]प्रतिचक्ष्या [v]अभूत् प्रत्यक्ष दर्शनीयाऽभूत् । [v]ये अन्येऽपि [v]अपरीषु अपररात्रिषु रात्रीणामवसानेषु [v]पश्यान पश्यन्ति ते [v]ओ [v]यन्ति तेऽपि तां देवता सर्वथा प्राप्नुवन्ति ॥ ]

* * * *

[ ज्योतिष्मतीमिति ॥ अथोपोषणे दाहे विनियुक्तानि यजूंष्याह—' ज्योतिष्मतीं त्वा सादयामि
२५ ज्योतिष्कृतं त्वा सादयामि ज्योतिर्विदं त्वा सादयामि भास्वतीं त्वा सादयामि ज्वलन्तीं त्वा सादयामि मल्मलाभवन्तीं त्वा सादयामि दीप्यमाना त्वा सादयामि रोचमाना त्वा सादयाम्यजस्रां त्वा सादयामि बृहज्ज्योतिषं त्वा सादयामि बोधयन्तीं त्वा सादयामि जाग्रतीं त्वा सादयामि ' इति ॥ प्रेत दग्धुं या समित् प्रक्षिप्यते सा संबोध्योच्यते— हे समित्, त्वामस्य प्रेतस्योपरि [v]सादयामि स्थापयामि ।

प्रयासाय स्वाहाऽऽयासाय स्वाहा वियासाय स्वाहा संयासाय स्वाहोद्यासाय स्वाहाऽवयासाय स्वाहा शुचे स्वाहा शोकाय स्वाहा तप्यत्वै स्वाहा तपते स्वाहा ब्रह्महत्यायै स्वाहा सर्वस्मै स्वाहा ॥ ३५ ॥

[ प्रयासाय चतुर्विंशतिः ]

प्रयासायेति प्र-यासाय । स्वाहा । आयासायेत्या-यासाय । स्वाहा । वियासायेति वि-यासाय । स्वाहा । संयासायेति सं-यासाय । स्वाहा । उद्यासायेत्युत्-यासाय । स्वाहा । अवयासायेत्यव-यासाय । स्वाहा । शुचे । स्वाहा । शोकाय । स्वाहा । तप्यत्वै । स्वाहा । तपते । स्वाहा । ब्रह्महत्याया इति ब्रह्म-हत्यायै । स्वाहा । सर्वस्मै । स्वाहा ॥ ३५ ॥ ५

[ काठं-अश्वमेधानुवचनम् ५.८; वासं ३९.११ ]

[ अश्वमेधे रात्रिहोमेषु-'प्रयासाय' इति परमात्मपरिस्पन्दभेदा उच्यन्ते—प्रयासः प्रकृष्टो यासः क्रिया यागादिः । आयासः शास्त्रपूर्वः प्रयासः अर्थार्जनादिः । मर्यादायामाकारः (पा २.१.१३) । वियासः विविधो व्यापारः हसितकण्डूयितादिः । संयासः समीचीनप्रयत्नः परोपकारादिः । उद्यासः उद्भूतो व्यापारः महाभूतविकारादिः । अवयासः निकृष्टो व्यापारः दुष्कर्म । शुक् शोचयितृस्वभावं दुःखात्मकं कर्म । शोकः तत्फलमात्मधर्मः । तप्यतुः तापहेतुः अनिष्टाचरणम् । तपतेरौणादिकोऽतुच्प्रत्ययः (द्र. उ ४५०) । यकारोपजनश्छान्दसः । "उदात्तयणः" (पा ६.१.१७४) इति विभक्तेरुदात्तत्वम् । तपः कृच्छ्रादि देहशोषकम् । ब्रह्महत्याग्रहणं महापातकानामुपलक्षणम् । सर्वग्रहणं अनुक्तपरिस्पन्दपरिग्रहार्थम् ॥ ] १० १५

\+ \+ \+ \+

[ ब्रह्ममेधे प्रेतस्य देहावयवानां स्वकारणोपसंहारे— 'चित्तम्' इत्यादि ॥ परमेश्वरस्य प्रपञ्चाधिष्ठातृरूपाण्युच्यन्ते एते शरीरहोमाः इमां देवताम् अनेन यजामीति । चित्तं महान् तस्य अधिष्ठाता संतानः पुत्रपौत्रादिः, आन्त्रं माला पुरीतदित्येके । भवः अपामधिष्ठाता । यकृत् २०

'ज्योतिष्मतीम्' इत्यादिभिर्विशेषणैस्तत्समिद्धिष्टाया ज्वालाया उत्तरोत्तराभिवृद्ध्याऽवस्थाविशेषा उच्यन्ते । अत्यल्पप्रकाशोपेता ज्योतिष्मती । ईषदधिकप्रकाशोपेता ज्योतिष्कृत् । ततोऽप्यधिकप्रकाशोपेता ज्योतिर्वित् । एवं भास्वत्यादिषु योजनीयम् । मल्मलेति दह्यमानकाष्ठध्वनेरनुकरणम् । लिङ्गानुसारेणायं मन्त्र इष्टकोपधानेऽपि विनियोक्तव्यः ॥ ] ❀ ❀ ❀ ❀

[ प्रयासायेति ॥ अथ स्रुवाहुतिमन्त्रा उच्यन्ते । तत्र द्वादशमन्त्रानाह—'प्रयासाय स्वाहाऽऽयासाय स्वाहा वियासाय स्वाहा संयासाय स्वाहोद्यासाय स्वाहाऽवयासाय स्वाहा शुचे स्वाहा शोकाय स्वाहा तप्यत्वै स्वाहा तपते स्वाहा ब्रह्महत्यायै स्वाहा सर्वस्मै स्वाहा' इति ॥ प्रेतस्य यमलोके बाधका देवताविशेषाः प्रयासादिशब्दवाच्याः तन्निर्वचनानि तु यथायोगमुन्नेयानि । तस्यै तस्यै देवतायै स्रुवेण गृहीतमिदमाज्यं स्वाहुतमस्तु ॥ ] ❀ ❀ ❀ ❀ २५

चित्तꣳ संतानेन भवं यक्ना रुद्रं तनिम्ना
पशुपतिꣳ स्थूलहृदयेनाग्निꣳ हृदयेन रुद्रं लोहितेन शर्वं मतस्नाभ्यां
महादेवमन्तःपार्श्वेनौषिष्ठहनꣳ शिङ्गीनिकोश्याभ्याम् ॥ ३६ ॥

[ चित्तमष्टादश ]

५ चित्तम् । संतानेनेति सं—तानेन । भवम् । यक्ना । रुद्रम् । तनिम्ना । पशुपतिमिति पशु—पतिम् । स्थूलहृदयेनेति स्थूल—हृदयेन । अग्निम् । हृदयेन । रुद्रम् । लोहितेन । शर्वम् । मतस्नाभ्याम् । महादेवमिति महा—देवम् । अन्तःपार्श्वेनेत्यन्तः—पार्श्वेन । ओषिष्ठहनमित्यौषिष्ठ—हनम् । शिङ्गीनिकोश्याभ्यामिति शिङ्गी—निकोश्याभ्याम् ॥ ३६ ॥

कृष्णो मासविशेष । रुद्र आदित्यस्याधिष्ठाता । तनिमा पञ्चदलवत् ततो मांसविशेष । पशुपति
१० पृथिव्या अधिष्ठाता । स्थूलहृदय पद्मकोशाकारो मासविशेष । अग्नि अग्नेरधिष्ठाता । हृदय सूक्ष्माकाशाधार प्रदेशविशेष । रुद्र यजमानस्याधिष्ठाता । लोहित रक्तम् । शर्वम् आकाशस्या धिष्ठाता । मतस्ने दीर्घौ सिराविशेषौ । महादेव प्राणस्य वायोरधिष्ठाता । अन्त पार्श्व पार्श्वयोरन्त अन्त पार्श्वम् । ओषिष्ठहा ओषधिपक्षगामी [ ओषिष्ठ क्षयपक्ष तद्गामी ] चन्द्र । ओषिष्ठशब्दात् " तुश्छन्दसि " ( पा ५ ३ ५९ ) इतीष्ठ प्रत्यय । शिङ्गीनिकोश्ये शिञ्जनाधार कोशाकारश्च
१५ स्थानविशेषो यत्र । शिञ्जन नाद । वलि कुत्वे ( पा ७ ३ ५२ ) मत्वर्थीय ईकार ( पा ५ २ १०९ वा २ ) । निभृत कोश निकोश तयोर्भवौ शिङ्गीनिकोश्यौ मासविशेषौ । " भवे छन्दसि " ( पा ४ ४-११० ) इति यत् ॥ ]

\+ \+ \+ \+

[ चित्तमिति ॥ अथ राजगवीहविषो होमार्थोऽयमनुवाक उच्यते । तत्र प्रथममन्त्रानाह—' चित्तꣳ संतानेन भवं यक्ना रुद्रं तनिम्ना पशुपतिꣳ स्थूलहृदयेनाऽग्निꣳ हृदयेन रुद्रं लोहितेन शर्वं मतस्नाभ्यां
२० महादेवमन्तःपार्श्वेनौषिष्ठहनꣳ शिङ्गीनिकोश्याभ्याम् ' इति ॥ अत्र द्वितीयान्ताश्चित्तादिशब्दा देवताविशेष वाचिन । तृतीयान्ता संतानादिशब्दा पशोर्मांसविशेषवाचिन । संतानाख्येन मासविशेषेण चित्ताख्य, देवताविशेष परितोषयामि इति वाक्यशेष । एव सर्वत्र योजनीयम् । तदेवमस्मिन् प्रपाठके महाचिति ब्रह्ममेधयोरङ्गभूता मन्त्रा उक्ता । चातुर्होत्रियचितिर्ब्रह्मचिति । " ब्रह्म वै चतुर्होतार " ( तैब्रा ३. १२ ५ ), इत्याम्नातत्वात् । तस्या ब्रह्मचितौ " चित्ति स्रुक् " इत्यादय " सुवर्णं घर्मम् " ( तैब्रा ३ १–११ ) इत्येव
२५ मन्त्रा अनुवाका विनियुक्ता । ब्रह्ममेधे तु कृत्स्नोऽपि प्रपाठको विनियुक्त । आहिताग्नेर्यो दहनादिसंस्कार सोऽय पितृमेध । आहिताग्नित्वे सति यो ब्रह्मतत्त्व जानाति तस्य दहनादिसंस्कारो ब्रह्ममेध इत्युच्यते । तस्मिन् ब्रह्ममेधेऽस्य प्रपाठकस्य विनियोग भरद्वाज आह—" अथात उत्तर पितृमेध व्याख्यास्यामो य ब्रह्ममेध इत्या

आ तिंष्ठ वृत्रहुन् रथं युक्ता ते ब्रह्मणा हरीं।
अर्वाचीनं॰ सु ते मनों ग्रावां कृणोतु वुग्नुनां ॥
उपयामगृंहीतोऽसीन्द्राय त्वा षोडुशिनं एष ते योनिरिन्द्राय त्वा षोडुशिनें ॥३७॥

[ आ तिंष्ठ षड्विंश्शतिः ]

एतिं । तिष्ठ । वृत्रहन्निति वृत्र–हुन् । रथम् । युक्ता । ते । ब्रह्मणा । हरी इतिं । अर्वाचीनम् । स्विति । ते । मनः । ग्रावा । कृणोतु । वग्नुना ॥ उपयामगृहीत इत्युपयाम–गृहीतः । असि । इन्द्राय । त्वा । षोडुशिनें । एषः । ते । योनिः । इन्द्राय । त्वा । षोडुशिनें ॥ ३७ ॥ ५

[ वासं ८·१३ ]

षोडशिनं गृह्णाति—' आ तिष्ठ ' इत्यनुष्टुभा ॥ हे वृत्रहन्, रथम् आ तिष्ठ । यस्मात् ते तव स्वभूतौ हरी अश्वौ ब्रह्मणा मन्त्रेण युक्ता युक्तौ । " सुपां सुलुक् " ( पा ७·१·३९ ) इत्याकारः । तस्मात् रथमातिष्ठ इति । किंच—ते तव मनः अर्वाचीनं अस्मद्यज्ञाभिमुखं ग्रावा अभिषवाश्मा सु कृणोतु सुष्ठु करोतु वग्नुना वचनीयेन श्रवणीयेनाभिषवशब्देन ॥ १०

ग्रहणसादने व्याख्याते । षोडशिने[1], षोडशेन स्तोत्रेण शस्त्रेण च तद्वान् इन्द्रः षोडशी । " प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत् स रिरिचानोऽमन्यत स यज्ञानां षोडशधा " ( तैसं ६·६·११ ) इत्यादि ब्राह्मणम् ॥ १५

॥ इति चतुर्थप्रपाठके द्वात्रिंशोऽनुवाकः ॥

चक्षते । तथाऽप्युदाहरन्ति—द्विजातीनामपवर्गो( वर्गो ह्यर्थे )र्थस्तत्त्वदर्शिभिः । ऋषिभिस्तपसो योगाद्दृष्टितुं पुरुषोत्तमम् ॥ होतॄंश्च पितृमेधं च संसृज्य विधिरुत्तरः । विहितस्तु समासेन क्रतूनामुत्तमः क्रतुः ॥ इति ॥ तस्य सग्रहैर्होतृभिर्होमो भर्तृसूक्तेन भरणं, पत्नीभिरुपसादनं, दक्षिणाप्रतिग्रहैर्निर्मोगो हृदयैर्हिरण्यशकलान् (लाः) संभारयजुर्भिः पात्रचयनं ज्योतिष्मतीभिरुपोषणं नारायणाभ्यामुपस्थानं ब्राह्मण एकहोतेति चानुमन्त्रणं चित्तꣳ सन्तानेनेति हविराहुतीः प्रयासाय स्वाहेति स्रुवाहुतीर्मृत्युसूक्तेनानुशंसनं सौम्या संगाहनं सौर्येणाऽऽदित्योपस्थानमीयुष्ट इत्यवगाहनं समानमत ऊर्ध्वं पैतृमेधिकमायर्वोदनप्राशनात् परं ब्रह्मेत्याचक्षते तानसाधारणे श्मशाने प्रयुञ्जीत नानाचार्याय द्विजातीनामेव संविष्टे ब्रह्ममेधः " ( भारद्वाज पैतृ २·१·१–२४ ) ( इति ) । ] ॥ २०

आ तिष्ठेति ॥ कल्पः— " आग्रयणग्रहं गृहीत्वाऽथ षोडशिनं गृह्णाति आ तिष्ठ वृत्रहन्नित्यनुद्रुत्योपयामगृहीतोऽसीन्द्राय त्वा षोडशिने जुष्टं गृह्णामीति । परिमृज्याऽऽसादयति एष ते योनिरिन्द्राय त्वा षोडशिने इति " ( बौश्रौ १७·१ ) इति ॥ पाठस्तु—' आ तिष्ठ वृत्रहन् रथं युक्ता ते ब्रह्मणा हरी । अर्वाचीनꣳ सु ते मनो ग्रावा कृणोतु वग्नुना । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ' इति ॥ हे वृत्रहन् इन्द्र, [1]तव हरी अश्वौ ब्रह्मणा मन्त्रेण युक्ता रथयोजितौ । अतो रथम् आ तिष्ठ आरोह । अयं ग्रावा वग्नुना वचनेनाभिषवध्वनिना त्वन्मनोऽभिषुते सोमे अर्वाचीनम् अभिमुखं करोतु । षोडशसंख्यापूरकं स्तोत्रं शस्त्रं च यस्येन्द्रस्यास्त्यसौ षोडशी । स्पष्टमन्यत् ॥ २५ ३०

१. मै–षोडशिनः ।

१. इ.ड.पा–' तव ' नास्ति ।

इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसमृषीणां च स्तुतीरुप यज्ञं च मानुषाणाम् ॥
उपयामगृहीतोऽसीन्द्राय त्वा षोडशिने एष ते योनिरिन्द्राय त्वा षोडशिने ॥३८॥
[ इन्द्रमित् त्रयोविंशतिः ]

इन्द्रम् । इत् । हरी इति । वहतः । अप्रतिधृष्टशवसमित्यप्रतिधृष्ट–शवसम् । ऋषीणाम् ।
५ च । स्तुती । उपेति । यज्ञम् । च । मानुषाणाम् ॥ उपयामगृहीत इत्युपयाम–गृहीत । असि ।
इन्द्राय । त्वा । षोडशिने । एष । ते । योनिः । इन्द्राय । त्वा । षोडशिने ॥ ३८ ॥

असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।
आ त्वा पृणक्त्विन्द्रियꣳ रजः सूर्यं न रश्मिभिः ॥
उपयामगृहीतोऽसीन्द्राय त्वा षोडशिने एष ते योनिरिन्द्राय त्वा षोडशिने ॥३९॥
१० [ असावि सप्तविꣳशतिः ]

असावि । सोमः । इन्द्र । ते । शविष्ठ । धृष्णो । एति । गहि । एति । त्वा । पृणक्तु ।
इन्द्रियम् । रजः । सूर्यम् । न । रश्मिभिरिति रश्मि–भिः ॥ उपयामगृहीत इत्युपयाम–गृहीतः ।
असि । इन्द्राय । त्वा । षोडशिने । एष । ते । योनिः । इन्द्राय । त्वा । षोडशिने ॥ ३९ ॥
[ मैस १·३·३४; कास ४·११ ]

१५ तस्मिन्नेव माध्यन्दिनसवने गृह्णाति—' इन्द्रम् ' इत्यनुष्टुभा ॥ " सवने सवनेऽभि गृह्णाति " ( तैस ६ ६ ११ ) इत्यादि ब्राह्मणम् । इन्द्रम् इत् इन्द्रमेव अप्रतिधृष्टशवसं केनाप्यप्रधर्षितबलम् । हरी अश्वौ यज्ञम् उप वहत यज्ञस्य समीपं प्रापयतः । ऋषीणां मनुष्याणां च स्तुती स्तोत्राणि उपवहत यत्र यत्र ते स्तुवन्ति तत्र सर्वत्र इन्द्रं प्रापयत[1] । यद्वा—इन्द्रं हरी अश्वा यज्ञं प्रापयतः ऋषीणां च मनुष्याणां च स्तुतय इन्द्रमेव यज्ञसमीपं
२० प्रापयन्ति[3], यथाऽसौ यज्ञसमीपमागच्छति तथा ते अमुं स्तुवन्तीत्यर्थः । व्यत्ययेन प्रथमास्थाने द्वितीया । " मनोर्जातौ " ( पा ४ १ १६१ ) इति मनुशब्दादञ् षुगागमश्च ॥
ग्रहणसादने गते ॥

॥ इति चतुर्थप्रपाठके त्रयस्त्रिंशोऽनुवाकः ॥

तस्मिन्नेव तृतीयसवने गृह्णाति—' असावि ' इत्यनुष्टुभा ॥ हे इन्द्र शविष्ठ बलवत्तम ।
२५ शवस्वच्छब्दादिष्ठनि " विन्मतोर्लुक् " ( पा ५·३ ६५ ) इति मतुपो लुक् । " टे "

इन्द्रमिति ॥ अस्मिन्नेव ग्रहे पञ्च मन्त्रा विकल्प्यन्ते । तत्र प्रथमः—' इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसमृषीणां च स्तुतीरुप यज्ञं च मानुषाणाम् । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ' इति ॥ ऋषीणां मन्त्राणां स्तुती च मानुषाणां यज्ञं च उपेत्य अप्रतिधृष्टशवसं केनाप्यतिरस्कृतबलम् इन्द्रम् एव हरी रथेन वहत ॥
३० असावीति ॥ अथ द्वितीयः—' असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि । आ त्वा पृणक्त्विन्द्रियꣳ रजः सूर्यं न रश्मिभिः । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने '

१ व–च वहत । २. मै–' इन्द्रम् ' नास्ति । ३ व–प्रापयन्ति ।

सर्वस्य प्रतिशीवरी भूमिस्त्वोपस्थ आऽधित।
स्योनाऽस्मै सुषदा भव यच्छास्मै शर्म सप्रथाः॥
उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने॥ ४०॥
[ सर्वस्य षड्विंशतिः ]

सर्वस्य। प्रतिशीवरीति प्रति-शीवरी। भूमिः। त्वा। उपस्थ इत्युप-स्थे। एति। अधित। ५
स्योना। अस्मै। सुषदेति सु-सदा। भव। यच्छ। अस्मै। शर्म। सप्रथा इति स-प्रथाः॥
उपयामगृहीत इत्युपयाम-गृहीतः। असि। इन्द्राय। त्वा। षोडशिने।
एषः। ते। योनिः। इन्द्राय। त्वा। षोडशिने॥ ४०॥

( पा ६·४·१५५ ) इति टिलोपः। हे ^V^धृष्णो शत्रूणां धर्षयितः। "त्रसिगृधिधृषिक्षिपेः क्नुः" ( पा ३·२·१४० ) इति क्नुप्रत्ययः। ^V^आ ^V^गहि आगच्छ. अस्मद्यज्ञम्। गमेः शपो १० लुक् ( पा २·४·७३ )। कस्मादेवमुच्यस[1] इति चेत्? त्वदर्थमयं ^V^सोमः ^V^असावि अभिषुतः तस्मात् आगच्छेति। किंच—^V^इन्द्रियं वीर्यं सोमपानेन च प्रभूततां गतं त्वाम् ^V^आ ^V^पृणक्तु आपूरयतु। ^V^सूर्यम् इव ^V^रजः उदकं यथा ^V^रश्मिभिः द्वारभूतैः सूर्यमापूरयति॥

ग्रहणसादने समाने॥

॥ इति चतुर्थप्रपाठके चतुस्त्रिंशोऽनुवाकः॥ १५

अतः परं षोडशिग्रहणमन्त्राः[1] पूर्वैः सह विकल्प्यन्ते। तत्र प्रथमा 'सर्वस्य' इत्यनुष्टुप्॥ ^V^सर्वस्य भूतजातस्य ^V^प्रतिशीवरी प्रत्येकं सुखेन शयनाधिकरणभूता। शेतेरौणादिके क्वरचि उत्तरपदाद्युदात्तत्वम्। यद्वा—शयानस्य सर्वभूतजातस्य प्रतिशयनं प्रतिमुखं शयनं बालस्य जननीव करोतीति प्रतिशीवरी। "अन्येभ्योऽपि दृश्यन्ते" ( पा ३·२·७५ ) इति क्वनिप्, "वनो र च" ( पा ४·१·७ ) इति ङीब्रेफौ। हे इन्द्र, ईदृशी ^V^भूमिः त्वाम् ^V^उपस्थे ^V^आ २०

इति॥ हे ^V^शविष्ठ अतिशयेन बलवन् ^V^इन्द्र, ^V^ते त्वदर्थं ^V^सोमः ^V^असावि सुतः। हे ^V^धृष्णो धार्ष्ट्ययुक्त, ^V^आ ^V^गहि आगच्छ। इन्द्रियशक्तिः त्वाम् ^V^आ ^V^पृणक्तु आपूरयतु। किमिव? ^V^रश्मिभिः स्वीकृतं ^V^रजः उदकं ^V^सूर्यम् इव। एतच्चान्यत्राऽऽम्नातम्[2]—"आपः सूर्ये समाहिताः। अभ्राण्यपः प्रपद्यन्ते" ( तैआ १·८ ) इति॥

सर्वस्येति॥ अथ तृतीयः—'सर्वस्य प्रतिशीवरी भूमिस्त्वोपस्थ आऽधित। स्योनाऽस्मै सुषदा २५ भव यच्छास्मै शर्म सप्रथाः। उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने' इति॥ सर्वस्य भूतजातस्य ^V^प्रतिशीवरी आभिमुख्यशायिनी ^V^भूमिः त्वामिन्द्र ^V^उपस्थे उपरितनस्थाने ^V^आ ^V^अधित आदधातु। हे भूमे, ^V^अस्मै इन्द्राय ^V^स्योना सुखप्रदा ^V^सुषदा शोभननिवासस्थाना च ^V^भव। ^V^अस्मै यजमानाय ^V^सप्रथाः अतिविस्तृता सती ^V^शर्म सुखं प्रयच्छ॥

१. घ-मुच्यते॥ १. ख-ग्रहमन्त्राः। ३०

२. क-एतच्चारण्यके समाम्नातम्।

तैसं ३८॥

महाँ२ इन्द्रो वज्रबाहुः षोडशी शर्म यच्छतु।
स्वस्ति नो मघवा करोतु हन्तु पाप्मानं योऽस्मान् द्वेष्टि ॥
उपयामगृहीतोऽसीन्द्राय त्वा षोडशिने एष ते योनिरिन्द्राय त्वा षोडशिने ॥ ४१ ॥
[ महान् षट्त्रिंशति ]

५ महान्। इन्द्रः। वज्रबाहुरिति वज्र–बाहुः। षोडशी। शर्म। यच्छतु।
स्वस्ति। नः। मघवेति मघ–वा। करोतु। हन्तु। पाप्मानम्। यः। अस्मान्। द्वेष्टि ॥
उपयामगृहीत इत्युपयाम–गृहीतः। असि। इन्द्राय। त्वा। षोडशिने।
एषः। ते। योनिः। इन्द्राय। त्वा। षोडशिने ॥ ४१ ॥

अजित आदधातु। हे भूमे, त्वमपि असै इन्द्राय यजमानाय वा स्योना सुखा सुषदा
१० सुखासनभूता च भव। किंच अस्मै शर्म शरणं सुखं वा यच्छ देहि। सप्रथाः
सर्वत्र प्रथिता निस्तीर्णा। छान्दसः सर्वस्य सभावः*। प्रथया सहितेति वा[M]। बहुव्रीहौ
"परादिश्छन्दसि बहुलम्" (पा ६.२.१९९) इत्युत्तरपदाद्युदात्तत्वम् ॥
ग्रहणसादने उक्ते ॥
॥ इति चतुर्थप्रपाठके पञ्चत्रिंशोऽनुवाकः ॥

१५ 'महाँ२ इन्द्र' इत्यादि। इयमप्यनुष्टुप् ॥ महत्त्वादिगुणविशिष्ट इन्द्र अस्मभ्यं शर्म
सुखं यच्छतु ददातु। स्वस्ति अविनाशं चास्माकं करोतु। हन्तु चास्माकं पाप्मानं पापम्।
यः अस्मान् द्वेष्टि तं च हन्तु। यद्वा—योऽस्मान् द्वेष्टि तं पाप्मानं हन्तु ॥
ग्रहणसादने स्पष्टे ॥
॥ इति चतुर्थप्रपाठके षट्त्रिंशोऽनुवाकः ॥

२० महानिति ॥ अथ चतुर्थं—'महाँ२ इन्द्रो वज्रबाहुः षोडशी शर्म यच्छतु। स्वस्ति नो मघवा करोतु हन्तु पाप्मानं योऽस्मान् द्वेष्टि। उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने" इति ॥ स्पष्टोऽर्थः ॥

सजोषेति ॥ अथ पञ्चमं—'सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहञ्छूर विद्वान्। जहि शत्रूँ२रप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः। उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनि-
२५ रिन्द्राय त्वा षोडशिने' इति ॥ हे वृत्रहन् शूर इन्द्र, सजोषाः प्रीतिसहितो मरुद्भिः युक्ततया सगणः त्वं यजमानभक्तिं विद्वान् सोमं पिब।[1] अस्माकं मारणोद्यतान्[2] शत्रून् मारय। इतरान् मृधः वैरिणः अप नुदस्व। अनन्तरम् अस्माकं सर्वतो भयराहित्यं कुरु ॥
अथ विनियोगसंग्रहः —

"ऐन्द्रवायव आ वायो इन्द्र तस्य पुनर्ग्रहः।
३० मैत्रावरुणकेऽयं वामाश्विने द्वौ विकल्पितौ ॥ १ ॥
शुक्रे मन्थिनि चैकैकं आग्रयणे द्वयम्।
एकैकं उक्थ्यध्रुवयोश्चतुर्दश मन्त्रकाः ॥ २ ॥

२ मै–या त्वमपि। *[द्र पा ५ ३.६]। M[द्र पा ६.३.७८]।

१ त्रि–अस्मन्मरणोद्यतान्। २. ग उ नि१.पा–'अनन्तरम्' नास्ति।

सुजोषा इन्द्र सगणो मुरुद्भिः सोमं पिब वृत्रहञ्छूर विद्वान् ।
जहि शत्रूँरप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः ॥
उपयामगृहीतोऽसीन्द्राय त्वा षोडशिने एष ते योनिरिन्द्राय त्वा षोडशिने ॥ ४२ ॥

[ सजोषालिङ्गशत् ]

सजोषा इति स–जोषाः । इन्द्र । सगण इति स–गणः । मरुद्भिरिति मरुत्–भिः ।
सोमम् । पिब । वृत्रहन्निति वृत्र–हन् । शूर । विद्वान् ।
जहि । शत्रून् । अपेति । मृधः । नुदस्व । अथ । अभयम् । कृणुहि । विश्वतः । नः ॥
उपयामगृहीत इत्युपयाम–गृहीतः । असि । इन्द्राय । त्वा । षोडशिने ।
एषः । ते । योनिः । इन्द्राय । त्वा । षोडशिने ॥ ४२ ॥

[ मैसं १-३-२३ ] १०

'सजोषा' इत्यादि त्रिष्टुप् । हे ^v^इन्द्र, ^v^सगणः सर्वगणैः सहितः ^v^मरुद्भिः ^v^सजोषाः समानप्रीतिः । पूर्ववदुत्तरपदाद्युदात्तत्वम् ( पा ६-२-१९९ ) । हे इन्द्र ^v^वृत्रहन् वृत्रहन्तः, ^v^शूर महाबल, ^v^विद्वान् [1]स्वमधिकारं जानन्, सर्वविशेषज्ञानदक्षो वा । ईदृशस्त्वं ^v^सोमं ^v^पिब । पीत्वा चास्मदीयान् ^v^शत्रून् ^v^जहि नाशय । ^v^मृधः च संग्रामान् कर्तुकामान् ^v^अप ^v^नुदस्व । ^v^अथ अनन्तरं अस्मभ्यं ^v^विश्वतः [2]सर्वतोऽपि ^v^अभयं ^v^कृणुहि कुरु । "उतश्च प्रत्ययाच्छन्दोवावचनम्" १५ ( पा ६-४-१०६ वा १ ) इति हिलोपाभावः । 'शत्रून्' इत्यस्य संहितायां "दीर्घादटि समानपादे" ( पा ८-३-९ ) इति रुत्वम् । पूर्ववदनुनासिकत्वम् ( पा ८-३-२ ) ॥

ग्रहणसादने प्रसिद्धे ॥

॥ इति चतुर्थप्रपाठके सप्तत्रिंशोऽनुवाकः ॥

ऋतुग्रहेषूपयामः सर्वेष्वादौ प्रयुज्यते । २०
ऐन्द्राग्नो वैश्वदेवश्च त्रयो मारुत्वतग्रहाः ॥ ३ ॥
वैकल्पिकौ द्वौ माहेन्द्रे कदाऽऽदित्यग्रहस्तथा ।
कदा दधिग्रहस्तत्र यन्नः सोमं पुनः क्षिपेत् ॥ ४ ॥
विव आण्णाऽऽलोडयेद्वा[3] काम्यो दध्नः प्रतिग्रयः ।
त्रयो विकल्प्याः सावित्रे वैश्वदेवे परो ह्यसौ ॥ ५ ॥ २५
पात्नीवतग्रहस्यास्य होमोऽग्ना इति मन्त्रतः ।
हारियोजननाम्नस्तु हरीः स्थेति हुतिर्भवेत् ॥ ६ ॥
अग्नेऽतिग्राह्य आग्नेय [4]"उत्तिष्ठन् ओजसा"[4] ऐन्द्रकः ।
षड्विकल्प्याः षोडशिनि ग्रहकाण्डं समाप्यते ॥ ७ ॥ " इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये ३० प्रथमकाण्डे चतुर्थप्रपाठके एकोनत्रिंशमारभ्य षट्त्रिंशपर्यन्ता अष्टानुवाकाः ॥

१. तं.ति–स्वयमधि° । २. ब–सर्वदापि ।

३. क–°लोडयेद्वा । ४-४. त्रि१.पा–उत्पत्तिग्राह्य; ङ–इत्यतिग्राह्य (?) ।

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥
उदिति । उ । त्यम् । जातवेदसमिति जात–वेदसम् । देवम् । वहन्ति । केतवः ।
दृशे । विश्वाय । सूर्यम् ॥

अथ दाक्षिणं काण्डं सौम्यमेव । तत्र—"सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोति" (तैस ६ ६ १) इति ब्राह्मणम् । 'उदु त्यम्' इति प्रथमा गायत्री । द्वितीया त्रिष्टुप् ॥ तत्र प्रथमा—"उदायुषा" (तैस १ २ ८) इत्यत्र व्याख्याता । त्यं तम् इमं देवं जातवेदसं जातप्रज्ञं जातानां वा वेदितारं केतवः रश्मयः उद् वहन्ति दृशे द्रष्टुं विश्वाय विश्वार्थं, विश्वो लोको यथैनं पश्येदिति । "सुवर्गाय वा एतानि लोकाय हूयन्ते यद्दाक्षिणानि" (तैस ६ ६ १) इत्यादि ब्राह्मणम् ॥

१० अथ द्वितीया—चित्रं चायनीयं देवानाम् अनीकं सङ्घातरूपं मण्डलम् । यद्वा—देवानां रश्मीनाम् अनीकं मुखं समुदायस्थानीयं वा । मित्रादीनां देवानामपि चक्षुः स्थानीयं तेऽपि हि तेन प्रकाशितं पश्यन्ति । यद्वा—मित्रादिपदप्राप्तिहेतुत्वात् चक्षुरित्युपचर्यते । उपलक्षणं चैतद्, सर्वदेवतापदलाभहेतुत्वात् भवति मण्डलोपासनमिति । ईदृशं मण्डलम् उत् अगात उदेति । छान्दसो लुङ् (पा ३ ४ ६) । "गातिस्था" (पा २ ४ ७७) इति सिचो लुक् ।
१५ यदा ईदृशं मण्डलमुदेति तदा तन्मण्डलान्तर्गतो भगवान् सूर्यः जगतः जङ्गमस्य तस्थुषः स्थावरस्य च विश्वस्य आत्मा द्यावापृथिवी द्यावापृथिव्यौ अन्तरिक्षं च रश्मिभिः आ अप्राः आपूरयति । प्रा पूरणे । पुरुषव्यत्ययः । अदादित्वात् शपो लुक् (पा २ ४ ७२) । द्यौश्च पृथिवी च द्यावापृथिव्यौ । "दिवो द्यावा" (पा ६ ३ २९) इति द्यावादेशः, "वा छन्दसि" (पा ६ १ १०६) इति पूर्वसवर्णदीर्घः । "देवताद्वन्द्वे च" (पा ६ २ १४१) इति
२० पूर्वोत्तरयोर्युगपत्प्रकृतिस्वरत्वम् (पा ६.२ १४०) । पृथिवीशब्दो ङीषन्तोऽन्तोदात्तः । ईदृशो भगवाननेन होमेन अस्माकमभिमतं साधयत्विति ॥

षट्त्रिंशेऽनुवाके ग्रहाः समापिताः । सप्तत्रिंशे दक्षिणा वर्ण्यते ।
उदिति ॥ कल्प—"प्रचरण्या दाक्षिणानि जुहोति । हिरण्यं प्रबध्य घृतेऽवधाय उदु त्यं चित्रमिति द्वाभ्यां गार्हपत्ये जुहोति" (आपश्रौ १३.५ ६–७) इति ॥ तत्र प्रथमा—'उदु त्यं जातवेदसं
२५ देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम्' इति ॥ केतवः रश्मयः, त्यं जातवेदसं तमग्निसदृशं सूर्यं देवम् उत वहन्ति ऊर्ध्वदेशं एव प्रापयन्ति । किमर्थम्? विश्वाय कृत्स्नस्य जगतः सूर्यं दृशे द्रष्टुम् ॥

१. त नि व–अन । २–२ मं–'इति ब्राह्मणम्' नास्ति । ३[निरुक्त १२ १५] । ३. मं–'स्थानम्' ।
४. म–मित्रादि' । ५. व–सूर्यमण्डलं' । ६ त ति–पूर्वोत्तरपदयोर्युग' । ७ त ति व–अस्मदभिमतम् ।

१. नि१–वर्ध्यन्ते ।

दक्षिणा ]

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आऽप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च ॥
अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥

चित्रम् । देवानाम् । उदिति । अगात् । अनीकम् । चक्षुः । मित्रस्य । वरुणस्य । अग्नेः । एति । अप्राः । द्यावापृथिवी इति द्यावा-पृथिवी । अन्तरिक्षम् । सूर्यः । आत्मा । जगतः । तस्थुषः । च ॥

अग्ने । नय । सुपथेति सु-पथा । राये । अस्मान् । विश्वानि । देव । वयुनानि । विद्वान् । युयोधि । अस्मत् । जुहुराणम् । एनः । भूयिष्ठाम् । ते । नमउक्तिमिति नमः- उक्तिम् । विधेम ॥

आग्नीध्रीये जुहोति—' अग्ने नय ' इति त्रिष्टुभा ॥ व्याख्याता चेयम् " उभा वाम् " ( तैसं १·१·१४ ) इत्यत्र । हे अग्ने, शोभनेन मार्गेण अस्मान् नय धनार्थम् । हे देव, विश्वानि वयुनानि ज्ञानोपायभूतानि विद्वान् । किंच—जुहुराणं कुटिलस्वभावं च एनः पापम् अस्मत्तः युयोधि पृथक् कुरु । वयं च ते भूयिष्ठां नमउक्तिं विधेम इति ॥

---

चित्रमिति ॥ अथ द्वितीया—' चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आऽप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ' इति ॥ चित्रं रक्तश्वेतादिविविधवर्णं देवानां रश्मीनाम् अनीकं सैन्यसदृशं मण्डलम् उत् अगात् [2]"उदयं गच्छति"[2] । कीदृशम् ? मित्रादिदेवोपलक्षितस्य कृत्स्नस्य प्राणिजातस्येन्द्रियाधिष्ठातृत्वाच्चक्षुःस्थानीयं तन्मण्डलस्थः सूर्यः जगतः जङ्गमस्य तस्थुषः स्थावरस्य च आत्मा सन् लोकत्रयम् आ अप्राः सर्वत्र[3] पूरितवान् ॥

अग्न इति ॥ कल्पः—" अग्ने नयेत्याग्नीध्रमेत्य जुहोति " ( द्र. आपश्रौ १३·६·१० ) इति ॥ पाठस्तु—' अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ' इति ॥ हे अग्ने, राये पारलौकिकधनप्राप्त्यर्थम् अस्मान् शोभनेन मार्गेण नय । हे देव, त्वं विश्वानि वयुनानि सर्वान् मार्गान् विद्वान् जानासि । जुहुराणं कुटिलम् एनः पापम् अस्मत् युयोधि वियोजय । [4]"ते तुभ्यं भूयिष्ठां बहुतरां नमउक्तिं नमस्कारोक्तिं विधेम कुर्याम । बहुतरां नमस्कारोक्त्या परिचरेमेत्यर्थः"[4] ॥ दाक्षिणहोमं विधत्ते—" सुवर्गाय वा एतानि लोकाय हूयन्ते यद्दाक्षिणानि " ( तैसं ६·६·२ ) इति । दक्षिणां दित्सुना होतव्यानि दाक्षिणानि ॥ होमाधिकरणं विधत्ते—" द्वाभ्यां गार्हपत्ये जुहोति द्विपाद्यजमानः प्रतिष्ठित्या आग्नीध्रे जुहोत्यन्तरिक्ष एवाऽऽक्रमते " ( तैसं ६·६·१ ) इति । द्वाभ्यां वक्ष्यमाणाभ्याम् ॥ आग्नीध्रहोमादूर्ध्वं सदःप्रवेशं विधत्ते—" सदोऽभ्यैति सुवर्गमेवैनं लोकं गमयति " ( तैसं ६·६·१ ) इति ॥ मन्त्रान् विनियुङ्क्ते—" सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोत्यमुमेवैनं लोकꣳ समारोहयति नयवत्यर्चाऽऽग्नीध्रे जुहोति सुवर्गस्य लोकस्याभिनीत्यै " ( तैसं ६·६·१ ) इति । ' उदु त्यम् ', ' चित्रम् ' इत्येते सौर्यौ । ' अग्ने नय सुपथा ' इति नयवती ॥

---

२-२. क्रि१-उदेति । ३. आ.क-' सर्वत्र ' नास्ति । ४-४. आ-तुभ्यं भूयिष्ठां नमस्कारोक्तिं विधेम कुर्याम ।

दिवं गच्छ सुवः पत रूपेण(१)वो रूपमभ्यैमि वयसा वयः ।
तुथो वो विश्ववेदा वि भजतु वर्षिष्ठे अधि नाके ॥

दिवम् । गच्छ । सुवः । पत । रूपेण ( १ ) । वः । रूपम् । अभि । एति । एमि । वयसा । वयः ।
तुथः । वः । विश्ववेदा इति विश्व-वेदाः । वीति । भजतु । वर्षिष्ठे । अधीति । नाके ॥

५ हिरण्य हुत्वा उद्गृह्णाति—' दिवम् ' इत्येकपदया गायत्र्या ॥ हे हिरण्य, ᵛदिव ᵛगच्छ, दीप्तिं वा प्राप्नुहि । ततः ᵛसुव आदित्य ᵛपत गच्छ ॥

दक्षिणा अभ्यैति—' रूपेण ' इति प्रथमया चतुर्दशाक्षरया ॥ ' अभ्यैमि वयसा वयः ' इति द्वितीयः पादः । हे दक्षिणाः, ᵛवः युष्माकं ᵛरूपं मदीयेन ᵛरूपेण ᵛअभि ᵛआ ᵛएमि आभिमुख्येन मर्यादया च एमि प्राप्नोमि । किंच—मदीयेन ᵛवयसा युष्मदीयं ᵛवयः अभ्यैमि इत्येव । गमन

१० वा वयः । मदीयेन गमनेन युष्मदीयं गमनमभ्यैमि, युष्माभिस्तुल्यरूपः तुल्यगतिश्च भूयासमिति ॥

दक्षिणा विभजति—' तुथो वः ' इति यजुषा ॥ ᵛतुथः नामाग्निः, ᵛविश्ववेदा विश्वस्य विभागादेर्वेदिता । पूर्ववदसुन् ( उ ६३८ ) पूर्वपदप्रकृतिस्वरत्व ( पा ६·२ २ ) च । स एव ᵛवः युष्मान् ᵛवि ᵛभजतु । ᵛवर्षिष्ठे वृद्धतमे ᵛनाके सुखैकरूपे स्थाने यथा भवत्यर्थः[८] तथा वो विभजतु । यद्वा—वर्षिष्ठे नाकात्मनि अत्र स्थाने स एवागत्य वो विभजतु इति ॥

१५ दिवमिति ॥ कल्पः—" दिवं गच्छ सुवः पतेति हिरण्य हुत्वोद्गृह्णाति " ( आपश्रौ १३ ५ ८ ) इति ॥ हे हिरण्य, त्वमाकाशं प्रति ᵛगच्छ, तत स्वर्गं प्राप्नुहि ॥ अनेन यजमानस्य स्वर्गप्राप्तिरित्याह— " दिवं गच्छ सुवः पतेति हिरण्यं हुत्वोद्गृह्णाति सुवर्गमेवैन लोकं गमयति " ( तैसं ६·६·१ ) इति । यद्धिरण्यं प्रबध्य घृतेऽवहित तद्धिरण्यं घृतहोमादूर्ध्वं हस्तेनोद्धरेत् ॥

रूपेणेति ॥ कल्पः — " रूपेण वो रूपमभ्यैमीति दक्षिणा अभ्यैति " ( आपश्रौ १३·५९ )

२० इति । पाठस्तु—' रूपेण वो रूपमभ्यैमि वयसा वयः ' इति ॥ हे दक्षिणाः, अनेनोद्धृतहिरण्यरूपेण सह[५] वेदेर्दक्षिणभागेऽवस्थितानां युष्माकं ᵛरूपम् आभिमुख्येन प्राप्नोमि । कीदृशेन हिरण्यरूपेण ? ᵛवयसा कमनीयेन । कीदृशं युष्मद्रूपम् ? ᵛवयः कमनीयम् ॥ रूपेणेत्ययं शब्दो हिरण्यपर इत्येतद्दर्शयति— " रूपेण वो रूपमभ्यैमीत्याह रूपेण ह्यासां रूपमभ्यैति यद्धिरण्येन " ( तैसं ६·६·१ ) इति । हिरण्येन यद्रूपमभ्यैति तद्रूपेण वा रूपमिति मन्त्रेणोच्यत इत्यर्थः ॥

२५ तुथ इति ॥ कल्पः—" तुथो वो विश्ववेदा वि भजत्विति ता यजमानश्चतुर्धा कृष्णाजिने व्युद्धृत्य चतुर्थमध्वर्युभ्यो विभजति । यावदध्वर्यवे ददाति तस्यार्धं प्रतिप्रस्थात्रे तृतीयं नेष्ट्रे चतुर्थमुन्नेत्रे । एतेनेतरेषां दानमुक्तम् " ( आपश्रौ १३ ५·११–१३ ) इति ॥ पाठस्तु—' तुथो वो विश्ववेदा वि भजतु वर्षिष्ठे अधि नाके ' इति ॥ हे दक्षिणाः, वृद्धतमे स्वर्गेऽधिरूढस्तुथनामको देवः सर्वज्ञो युष्मान् यथोचितं ᵛवि ᵛभजतु ॥ एतमेवार्थं स्पष्टयति—" तुथो वो विश्ववेदा वि भजत्वित्याह तुथो ह स्म वै विश्ववेदा देवानां

३० दक्षिणा वि भजति तेनैवैना वि भजति " ( तैसं ६·६ १ ) इति ॥

८ व-भजतीत्यर्थः ।

५ आ-' सह ' नास्ति ।

एतत् ते अग्ने राध ऐति सोमच्युतं तन्मित्रस्य पथा नयर्तस्य पथा प्रेत
चन्द्रदक्षिणा यज्ञस्य पथा सुविता नयन्तीर्-
एतद् । ते । अग्ने । राधः । एति । एति । सोमच्युतमिति सोम—च्युतम् ।
तद् । मित्रस्य । पथा । नय । ऋतस्य । पथा । प्रेति । इत ।
चन्द्रदक्षिणा इति चन्द्र—दक्षिणाः । यज्ञस्य । पथा । सुविता । नयन्तीः । ५

सदोऽभ्येति—' एतत्ते अग्ने ' इति मध्येज्योतिषा जगत्या । ' तन्मित्रस्य पथा नय ' इति द्वितीयः पादः ॥ धिष्ण्यैरग्निभिरग्निमत् सदोऽग्निशब्देनोच्यते । मत्वर्थीयो लुप्यते । ते इति कर्मणः संप्रदानत्वात् ( द्र. पाभा १·४·३२ ) चतुर्थ्यर्थे षष्ठी ( पा २·३·६२ ) । अग्ने, सदः एतद्दक्षिणालक्षणं, राधः धनं ते त्वाम् आ एति, त्वत्समीपं प्राप्नोति ऋत्विग्भ्यो दातुम् । सोमच्युतं सोमेन च्यावितं, सोमेन राज्ञा स्वयमानीतम् । " तृतीया कर्मणि " ( पा ६·२·४८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । यद्वा—सोमयागार्थं च्युतं च्यवनम् अङ्गत्वेनानुप्रवेशो यस्य, सोमयागद्रव्यमध्याद्वा दक्षिणार्थं च्युतिः यस्य तत्सोमच्युतम् । तत् राधः मित्रस्य आदित्यस्य पथा मार्गेण नय येन मार्गेण पदार्थं मित्रो नयति तेन नय [10]प्रापयेत्यर्थः । कश्चिदाह—सोमयागेन हि अस्य [11]प्रच्युतमभूत् धनम्[11], तदिदानीं दक्षिणार्थं [12]सदस्यान्न नेतव्यम्[12] । तदुच्यते—हे सदः, सोमयागार्थं च्युतं च्यावनम् अङ्गत्वेनानुप्रवेशो यस्य तत् सोमच्युतं त्वमेव मित्रस्य पथा नयेति । उदात्तनिवृत्तिस्वरेण ( पा ६·१·१६१ ) पथस्तृतीयायाः उदात्तत्वम् । अधुना दक्षिणा आह—ऋतस्य पथा प्र इत गच्छत । यज्ञस्य अङ्गभावं प्रतिपद्यमानाः सदः प्रति गच्छत । चन्द्रदक्षिणाः, चन्द्रं हिरण्यं तद्दक्षिणं प्रधानं श्रेष्ठं यासां तादृश्यो गच्छत, हिरण्यसहिता इत्यर्थः । किंच—यज्ञस्य पथा " द्वाभ्यां गार्हपत्ये जुहोति " ( तैसं ६·६·१ ) इत्यादि प्रसिद्धेन मार्गेण सुविता सुवितेन स्वितेन सुगमेन । " सुपां सुलुक् " ( पा ७·१·३९ ) इति तृतीयायाः आकारः । " सूपमानात् क्तः " ( पा ६·२·१४५ ) इत्युत्तरपदान्तोदात्तत्वम् । तन्वादित्वात् सोरुवङादेशः ( पा ६·४·७७ वा १ ) । विकृतत्वादनवग्रहः । ईदृशेन मार्गेण नयन्तीः नयन्त्यः नीयमानाः प्रवर्तमाना वा । " वा छन्दसि " ( पा ६·१·१०६ ) इति पूर्वसवर्णदीर्घः ॥ १० १५ २०

एतदिति ॥ कल्पः—" एतत्ते अग्ने राध इति [6]दक्षिणा निनयतीति[6] " ( आपश्रौ १३·६·९ ) इति । [7]निनयनं मन्त्रेणेति[7] शेषः । पाठस्तु—' एतत्ते अग्ने राध ऐति सोमच्युतं तन्मित्रस्य पथा प्रेत चन्द्रदक्षिणा यज्ञस्य पथा सुविता नयन्तीः ' इति ॥ हे अग्ने, दक्षिणाद्रव्याणि ते राधः तव समृद्धि- २५

९. मै—' ते ' नास्ति । १० मै—प्रकाशयेत्यर्थः । ११—११. मै—प्रच्युतं भूर्धनम् । १२—१२. व—सदस्यानेतव्यम् ।

६—६. आ—दक्षिणानिनयने; ( आपश्रौसूत्रे ' दक्षिणातिनयनः ' ) । ७—७. आ—मन्त्र इति ।

ब्राह्मणमद्य राध्यासमृषिमार्षेयं पितृमन्तं पैतृमत्यꣳ सुधातुदक्षिणं

ब्राह्मणम् । अद्य । राध्यासम् । ऋषिम् । आर्षेयम् । पितृमन्तमिति पितृ-मन्तम् ।
पैतृमत्यमिति पैतृ-मत्यम् । सुधातुदक्षिणमिति सुधातु-दक्षिणम् ।

आत्रेयमभ्यर्थयति—'ब्राह्मणम्' इति ॥ °अद्य अस्मिन्नहनि °ब्राह्मण °राध्यास ससाधयेय
५ लभेय इत्यर्थ । °ऋषि द्रष्टार वेदार्थज्ञम् । °आर्षेयम् ऋषेर्वेदार्थज्ञस्यापत्यम् । "इतश्चानिञ"
( पा ४ १ १२२ ) इति ढक् । °पितृमन्त पित्रा सम्यगनुशिष्टम् । स हि पितृमानुच्यते मदा
यस्मै जागर्ति पिता । "ह्रस्वनुड्भ्या मतुप्" ( पा ६·१ १७६ ) इति मतुप उदात्तत्वम् ।
°पैतृमत्य पितृमत पितुरपत्यम् । "वाव्यतिपितृमता छन्दसि ण्य" ( द्र पा ४ १ ८५ वा १ ) ।
°सुधातुदक्षिण शोभनो धातु सुधातु, धातूनामुत्तम हिरण्यमुच्यते । तद्दक्षिणा यस्मै स सुधातु-
१० दक्षिण । पूर्वपदप्रकृतिस्वरत्वम् ( पा ६ २ १ ) । तत्र च "आद्युदात्त द्व्यच् छन्दसि"
( पा ६·२ ११९ ) इत्युत्तरपदाद्युदात्तत्वम् ॥

कारण °सोमच्युत सोमयाग प्राप्तमेतद्दक्षिणाद्रव्यम् °आ °एति आगच्छति । °तत् द्रव्य °मित्रस्य °पथा शान्तस्य तत्र मार्गेण °नय । हे °चन्द्रदक्षिणा॰ सुवर्णादिद्रव्यरूपा, °ऋतस्य सत्यस्य °पथा मार्गेण °प्र °इत प्रकर्षेण गच्छत सत्यफलकेन देवन यथायथ विभक्ता गच्छतेत्यर्थ । कीदृश्य॰ चन्द्रदक्षिणा ?
१५ °सुविता शोभनगमनयुक्तेन °यज्ञस्य °पथा यज्ञपुरुषस्य मार्गेण सदोहविर्धानयोर्मध्यवर्तिना °नयन्ती दक्षिणदेशादुत्तरदेशे नीयमाना । अत्र सूत्रम्—"हिरण्यपाणिरग्रेण गार्हपत्यं नयति जघनेन सद । अन्तराऽऽग्नीध्र च सदश्च ता उदीची" ( आपश्रौ १३ ६ ८ ) ॥ दक्षिणाद्रव्यस्य सोमच्युतत्व प्रशस्त॰ मित्याह—"एतत्ते अग्ने राध एति सोमच्युतमित्याह सोमच्युतꣳ ह्यस्य राध एति" ( तैस ६ ६·१ ) इति ॥ मित्रपथ्वप्रयोजनमाह—"तन्मित्रस्य पथा नयेत्याह शान्त्यै" ( तैस ६ ६·१ ) इति । 'उग्रो
२० रुद्रोऽसि' इति श्रवणात् रुद्रस्य पथा चेत् अशान्ति॰ स्यादतो मित्रस्येत्युच्यते ॥ ऋतशब्दो नात्र यज्ञवाची किंतु सत्यवाचीत्याह—"ऋतस्य पथा प्रेत चन्द्रदक्षिणा इत्याह सत्यं वा ऋतꣳ सत्येनैवैना ऋतेन वि भजति" ( तैस ६ ६·१ ) इति । सुरुयस्य अर्धिनस्तृतीयिन पादिनश्चर्त्विजा यथोचित विभक्तीरित्यर्थ । दक्षिणाना सदोहविर्धानयोर्मध्यवर्तिना यज्ञमार्गेण गमन प्रसिद्धमित्याह—"यज्ञस्य पथा सुविता नयन्ती॰ रित्याह यज्ञस्य ह्येता पथा यन्ति यद्दक्षिणा" ( तैस ६ ६ १ ) इति ॥
२५ ब्राह्मणमिति ॥ कल्प—"ब्राह्मणमद्य राध्यासमित्यात्रेयाय प्रथमाय हिरण्य ददाति । द्विती याय तृतीयाय वा । तदभावे च आर्षेय सन्निहितस्तस्मै दद्यात्" ( आपश्रौ १३·६·१२-१३ ) इति ॥ त्रिविधा आत्रेया प्रवरे पठिता, अत 'प्रथमाय' इत्यादि विशेषणम् । पाठस्तु—'ब्राह्मणमद्य राध्यास॰ मृषिमार्षेय पितृमन्त पैतृमत्यꣳ सुधातुदक्षिणम्' इति ॥ °अद्य अस्मिन् यज्ञदिने °ब्राह्मणम् अत्रिगोत्रोत्पन्नं °राध्यास हिरण्येन साधयानि तोषयाणीत्यर्थ । कीदृशम् ? °ऋषि वेदार्थज्ञम् । °आर्षेयं वेदार्थविद
३० पुत्रम् । °पितृमन्त पित्रा सम्यगनुशिष्टम् । °पैतृमत्य पितृमता सम्यगनुशिष्टाया॰ पतिव्रताया पुत्रम् ।

८ त्रि१–हे गाव । ९ उ त्रि१–पा–कौर्शी । १०–१० त्रि१–रुद्रो वा अग्नि । ११ क–
'इति' इत्यस्यानन्तर 'सत्येनैव विभजतीति कृत्वा'।

वि सु॒वः॑ पश्य॒ व्य॑न्तरि॑क्षं॒ यत॑स्व॒ सद॒स्यैः॑(२)र॒स्मद्दा॑त्रा दे॒व॒त्रा ग॑च्छत॒ मधु॑मतीः
प्र॒दा॒तार॒मा वि॑श॒तान॑वहाया॒स्मान् दे॑व॒याने॑न प॒थेत॑ सु॒कृतां॑
लो॒के सी॑दत॒ तन्नः॑ स॒ꣳस्कृ॒तम् ॥ ४३ ॥
[ रू॒पेण॒ सद॒स्यै॑रष्टा॒द॑श च ]

वीति॑ । सु॒वः॑ । पश्य॑ । वीति॑ । अ॒न्तरि॑क्षम् । यत॑स्व । स॒द॒स्यैः॑ (२) । अ॒स्मद्दा॑त्रा इत्य॒स्मत्—दा॒त्राः॒ । ५
दे॒व॒त्रेति॑ दे॒व—त्रा । ग॒च्छ॒त॒ । मधु॑मती॒रिति॒ मधु॑—म॒तीः॒ । प्र॒दा॒तार॒मिति॑ प्र—दा॒तार॑म् । एति॑ ।
वि॒श॒त॒ । अन॑वहा॒येत्यन॑व—हा॒य॒ । अ॒स्मान् । दे॒व॒याने॒नेति॑ दे॒व—याने॑न । प॒था । इ॒त॒ ।
सु॒कृ॒तामिति॑ सु॒—कृता॑म् । लो॒के । सी॒द॒त॒ । तत् । नः॒ । स॒ꣳस्कृ॒तम् ॥ ४३ ॥
[ मैसं १·३·३७; कासं ४·९; कपिसं ३·७; वासं ७·४१—४८ ]

यजमानमादित्यमीक्षयति[११]—' वि सुवः ' इति ॥ ^सुवः स्वर्गमादित्यं वा ^वि ^पश्य १०
विशेषेण पश्य । ^अन्तरिक्षं च विपश्य इत्येव ।

तं सदस्युपवेशयति—' यतस्व ' इति ॥ ^यतस्व व्याप्रियस्व ^सदस्यैः सह, इदमुपस्थितं कर्म कुरु इत्यर्थः । सदसि स्थिता ऋत्विगादयः सर्वेऽपि सदस्याः ॥

यजमानो दक्षिणाः समनुदिशति—'अस्मद्दात्रा ' इति ॥ वयं दातारो यासां तादृश्यो यूयम् । छान्दसोऽच् समासान्तः । यद्वा—" ऋतश्छन्दसि " ( पा ५·४·१५८ ) इति कपि प्रतिषिद्धे १५
छान्दसोऽकारोपजनः । ^देवत्रा देवान् ^गच्छत । " देवमनुष्य " ( पा ५·४·५६ ) इति द्वितीयान्तात् त्राप्रत्ययः । किंच ^मधुमतीः मधुमत्यः मधुरगुणाः ^प्रहृणीयाः । यद्वा—मधुर्वसन्तः, मधुमत्यः बहुवसन्ता बहुवयस्का इत्यर्थः । पूर्वसवर्णदीर्घत्वम् ( पा ६·१·१०६ ) । ईदृश्यो भूत्वा ^प्रदातारं मां यजमानम् ^आ ^विशत फलरूपेण । " त्रयमिह " ( तैसं ६·६·१ ) इत्यादि ब्राह्मणम् । किंच

शोभनो धातुः सर्वधातुभ्य उत्तमं हिरण्यं दक्षिणा यस्यासौ सुधातुदक्षिणस्तादृशम् ॥ ब्राह्मणादिशब्दैर्वेद- २०
शास्त्रपारंगतो विवक्षित इति दर्शयति—" ब्राह्मणमद्य राध्यासमृषिमार्षेयमित्याहैष वै ब्राह्मण ऋषिरार्षेयो यः शुश्रुवान् तस्मादेवमाह " ( तैसं ६·६·१ ) इति ॥

वीति ॥ कल्पः—" सद्द गत्य वि सुवः पश्येत्यनुवीक्षते " ( आपश्रौ १३·६·१४ ) इति ॥ एतदेवाभिप्रेत्य सदोऽभ्येतीति पूर्वं विहितम् । पाठस्तु—' वि सुवः पश्य व्यन्तरिक्षं च यतस्व सदस्यैः ' इति ॥ हे यजमान स्वर्गं ^वि ^पश्य । सदस्यत्रस्थितैर्विप्रैः सह ^यतस्व अनुतिष्ठ ॥ ' सुवः पश्य ' इत्यस्या- २५
भिप्रायं दर्शयति—" वि सुवः पश्य व्यन्तरिक्षमित्याह सुवर्गमेवैनं लोकं गमयति " ( तैसं ६·६·१ ) इति ॥ 'सदस्यैः ' इत्यनया सहार्थे तृतीयया मित्रताऽभिहितेत्याह[१२]—" यतस्व सदस्यैरित्याह मित्रत्वाय " ( तैसं ६·६·१ ) इति ॥

अस्मदिति ॥ कल्पः—" अस्मद्दात्रा देवत्रा गच्छतेति नीता अनुमन्त्र्य " ( आपश्रौ १३·६·१४ ) इति ॥ पाठस्तु—" अस्मद्दात्रा देवत्रा गच्छत मधुमतीः प्रदातारमा विशतानवहाया- ३०

११. ब—'त्यमुदीक्षयति ।

१२. क—मित्रता विवक्षितत्वाह ।

अनवहाय । क्त्वो ल्यप् । अपरित्यज्य अस्मान् अस्माभि संहृत्र वर्तमाना अस्मच्छरीरपातोत्तर-कालम् अस्माभि संहृत्र देवयानेन पथा इत । देवा येन प्राप्यन्ते तादृशेण मार्गेण इत गच्छत । गत्वा च सुकृता लोके सीदत अस्माभि सह निषीदत । तत् स्थानं नः अस्माक संस्कृत सम्यगुपभोगयोग्यतया कृत निष्पन्न विश्वकर्मणा ईश्वरेण । " सपर्युपेभ्य " ( पा ६ १·१३७ ) इति सुट् । " सपुकानाम् " ( पा ८ ३ १२ वा १ ) इति सत्वम् । पूर्ववदनवग्रह. । यद्वा—तत्तत्र न अस्माक संस्कृत समवाय । " समवाये च " ( पा ६ १·१३८ ) इति सुट् ॥

इति चतुर्थप्रपाठके अष्टात्रिंशोऽनुवाक ॥

---

स्मान् देवयानेन पथेत सुकृता लोके सीदत तत्र संस्कृतम् ' इति ॥ हे दक्षिणा., अस्माभिर्दत्ता सत्यो देवेषु ऋत्विक्षु गच्छत, हे गाव., मधुरक्षीरोपेता सत्य. परलोके प्रदातारं यजमानं रूपान्तरेण आ विशत । अस्मान् अनवहाय अपरित्यज्य देवयानेन पथा इत सुकृतां मार्गेण गच्छत । गत्वा च पुण्यकृतां स्थाने सीदत । तत् स्थान नः अस्मदर्थं संस्कृतं सम्यगुपभोगयोग्यतया निष्पादितम् ॥ ' प्रदातारमाविशत ' इत्यस्यार्थमाह—" अस्मदात्रा देवत्रा गच्छत मधुमती प्रदातारमा विशतेत्याह वयमिह प्रदातार सोऽस्मानमुत्र मधुमतीरा विशतेति वावैतदाह " ( तैसं ६·६·१ ) इति ॥ प्रथमतो दातव्य विधत्ते—" हिरण्यं ददाति ज्योतिर्वै हिरण्य ज्योतिरेव पुरस्ताद्धत्ते सुवर्गस्य लोकस्यानुख्यात्यै " ( तैसं ६·६·१ ) इति ॥ तस्य प्रतिग्रहीतृसबन्ध विधत्ते—" अग्नीधे ददात्यग्निमुखानेवर्तून् प्रीणाति " ( तैसं ६·६·१ ) इति । अग्निमुखानग्निसहितान् आधानकालीनवसन्तादृतून् । अत्र सूत्रम्—" हिरण्यं पूर्णपात्रमुपबर्हणं सार्वसूत्रमित्यग्नीधे* ददाति " ( आपश्रौ १३·६ १ ) इति ॥ ऋत्विगन्तरे दानं विधत्ते—" ब्रह्मणे ददाति प्रसूत्यै होत्रे ददात्यात्मा वा एष यज्ञस्य यद्धोताऽऽत्मानमेव यज्ञस्य दक्षिणाभि. समर्धयति " ( तैसं ६ ६·१ ) इति । प्रसूत्या अनुज्ञानाय । होतुर्बहुमन्त्रपाठेन यज्ञात्मत्वम् । एवमृत्वि-गन्तरे दानमुन्नेयम् ॥

अत्र विनियोगसग्रह —

" ऋग्भिस्त्रिभिर्दक्षिणाना होमो द्विवमयो घृतात् ।
हिरण्यमुद्गृह्य रूपे दक्षिणा अभिगच्छति ॥ १ ॥
तुथो वो विश्ववेदेति सिन्व्याच्चर्मणि दक्षिणा ।
एतत्ता निनयेत् ब्राह्य हेमाऽऽत्रेयाय यच्छति ॥ २ ॥
वि सुव सद् आलोक्य ह्यस्मदात्राऽनुमन्त्रणम् ।
मष्टात्रिंशेऽनुवाकेऽस्मिन् दश मन्त्रा उदीरिता ॥ ३ ॥ " इति ॥

अथ मीमासा ॥

दशमाध्यायस्य द्वितीयपादे चिन्तितम्—

" ऋत्विग्दानमदृष्टार्थमानत्यै वाऽग्रिम श्रुते ।
"वैरूप्यान्नियमान्नैवं दृष्टत्वाद्दानते " श्रुति ॥

---

*[ पा ७ १·३७ ] । १४ व—°पतनोत्तरकालम् ।

१३. आ उ त्रि१ मा—आधानकालवस°, पा—आधानकाले वस° । *[ आपश्रौसूत्रे ' अग्नीधे ' इत्यस्यानन्तर ' अग्ने ' इति । ] । १४ उ—त्राह्मम्, ति१ मा—ब्रह्म । १५. इ उ ति१—पा.मा—ह्यस्मदातृ° ।
१६. इ.उ त्रि१—पा मा—वैरूप्यनियमा° । १७. इ उ त्रि१.पा मा—°दानति. ।

भृतौ च नियमादेतददृष्टं स्याद्विरूपता ।
वचनात्तेन सत्रेषु स्वामित्वान्न भृतिः क्वचित् ॥ " ( जैन्या १०-२-९-१० ) इति ॥

'ऋत्विग्भ्यो दक्षिणां ददाति' इति प्रकृतौ श्रूयते । तत्किमदृष्टार्थम् आनत्यर्थं वेति संशयः । भृत्या परिक्रीय वशीकार आनतिः । अदृष्टार्थं तत्स्यात् । अन्नहिरण्यादीनामदृष्टार्थे त्यागे दानशब्दस्य प्रसिद्धत्वात् । [18]यद्येतद्दानं भृतिः स्यात्तदानीमल्पाधिककर्मानुरूप्येण[19] द्रव्यं देयम् । वैरूप्यं त्वत्र दृश्यते—स्वल्पकर्मणि त्रैधातवीये सहस्रं देयम् । अधिके कर्मणि ऋतपेये स्वल्पं सोमचमसमात्रं दीयते । तथा द्वादशशतादिपरिमाणनियमो मन्त्रनियमश्च भृतौ नोपपद्यते । कर्मकरानुमत्या न्यूनाधिकभावसंभवात् [20]तक्षरजकादिभृतौ मन्त्रादर्शनाच्च । तस्माददृष्टार्थमित्यग्रिमः पक्षः प्राप्नोति । मैवम् । आनतेर्दृष्टप्रयोजनत्वात् । दानश्रुतिस्तु दृष्टार्थभूतावप्यस्ति । भृतिर्देयेति प्रयोगात् । परिमाणमन्त्रनियमादृष्टमस्तु । दृष्टस्याभावात् । वैरूप्यं तु वचनबलादभ्युपगम्यते । दक्षिणाया भृतिरूपत्वं प्रत्यक्षवेदवाक्यादप्यवगम्यते—" दीक्षितमदीक्षिता दक्षिणापरिक्रीता ऋत्विजो याजयेयुः " ( द्र. काठसं ३४-९ ) इति । तस्मादृत्विग्दानमानत्यर्थम् । एवं च सति सत्र ऋत्विजां यजमानत्वाद्भृतिरूपा दक्षिणा न क्वापि देयेत्येतद्विचारफलं द्रष्टव्यम् ॥

तत्रैव तृतीयपादे चिन्तितम्—

" दक्षिणा द्वादशशतं तस्येत्येतद्गवादिषु ।
सर्वेषु केषुचिद्वाऽऽद्ये प्रत्येकं [21]मिलितेषु वा ॥
संख्यागुणस्य प्रत्येकं गवाद्यन्वयतोऽग्रिमः ।
वाक्यभेदान्न तत्किं तु मिलितेषु समुच्चयात् ॥
प्रत्यर्थाौचित्यतो वान्ये सर्वेषां न समुच्चयः ।
असर्वेष्विति पक्षेऽपि पशवो नैकमेव वा ॥
संख्यौचित्येन पशवो नैतत्तस्येत्यनन्वयात् ।
एकत्वेऽप्यत्र यत्किंचिन्माषा वा गाव एव वा ॥
यत्किंचिन्नियमाभावान्माषाः संनिहितत्वतः ।
माषा निराकृता गावः प्राथम्याच्चोपकारतः ॥
तस्येति वाक्याद्गोद्रव्यं न युक्तः प्रकृतः क्रतुः ।
संख्यान्तरं चेद्विकृतौ[22] स्याद्गवां बाध्यतामियम् ॥ " (जैन्या १०-३-१५-२०) इति ॥

ज्योतिष्टोमे देयद्रव्याण्यनुक्रम्य संख्याविशिष्टा दक्षिणा विधीयते—" गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा " (पंचविंशब्रा १०-१-१०-११) इति । द्वादशाधिकं शतं द्वादशशतम् । तत्र संशयः—येयं संख्या सा किं गवादिसर्वद्रव्यविषया किं वा कतिपयविषया । सर्वपक्षेऽपि प्रतिद्रव्यमियं संख्या उत मिलितानाम् । तत्र गवादिद्रव्याणि प्रधानानि, संख्या तु तद्गतो गुणः । प्रतिप्रधानं गुणावृत्तिर्न्याय्या । तस्माद्गवादिद्रव्येषु सर्वेषु प्रत्येकमियं संख्येति प्रथमपक्षगते [23]"प्रथमे सांख्ये विकल्पे"[24] ब्रूमः—नैतद्युक्तं वाक्यभेदप्रसङ्गात् । अतो मिलितानामियं संख्येति द्वितीयः [24]सांख्यो विकल्पोऽभ्युपगन्तव्यः । तथा सति समुच्चयवाचिनश्च शब्दा अनुगृह्यन्ते । मुद्गप्ययुक्तमनौचित्यात् । न व्रीहियवादिधान्येषु द्वादशाधिकशतान्तर्गता द्वित्र्यादिसंख्योचिता । परिक्रीतस्यर्त्विजो द्वित्रैर्व्रीहिबीजैः प्रयोजनाभावात् प्रस्थाधिकखार्यादिसंख्या तत्रोचिता । न चेयमत्र श्रुता । तस्मात् मिलि-

१८. उ.पा—यद्दानम् । १९. ड.उ.पा.भां–°कर्मरूपेण । २०. ड.उ.क.त्रि१—तक्षकरज° । २१. ड.उ.पा—चामितेषु । २२. ड.उ.पा.भां—नेत्प्रकृतम् । २३. आ—प्रथमे संख्याविकल्पे; उ.पा.भां—प्रथमसांख्ये विकल्पे; क—प्रथमसंख्याविकल्पे; त्रि१—प्रथमे शाखाविकल्पे । २४. आ—संख्या°; त्रि१—शाखा° ।

तानां सर्वेषां समुच्चय इत्ययं पक्षो न युक्त । कतिपयद्रव्यविषया संख्येत्यस्मिन्नपि पक्षे किं गवाद्या षड्विधा पशव किं वा दशसु गवादिद्रव्येष्वेकं द्रव्यम् । तत्र पशुषु श्रूयमाणाया. संख्याया उचितत्वात् पशव इति प्राप्ते ब्रूम —नैतद्युक्तम् । 'तस्य द्वादशशतं दक्षिणा' इत्यत्र तस्येत्यनेनैकवचनान्तेन षण्णां गवादिपशूनामन्वेतुमयोग्यत्वात् । एकत्वपक्षेऽपि यत्किंचिदेकं किं वा माषद्रव्यमुत गोद्रव्यम् । तत्र नियामकाभावाद्यत्किंचिदिति प्राप्तम् । उच्य । संनिधेर्नियामकत्वात् । 'माषाश्च तस्य द्वादशशतं दक्षिणा' इति माषा संनिहिता । तर्हीस्तु माषद्रव्यमिति चेत् । न । प्रस्थादिपरिमाणसव्यपेक्षत्वेन निराकृतत्वात् । तस्माद्गोद्रव्यमिति पक्ष परिशिष्यते । प्रथमश्रुतत्वोपकारौ तत्र नियामकौ । अस्ति हि महानुपकार । ऋत्विज प्रतिग्रहीतुर्गव्यैराज्यक्षीरादिभिरग्निहोत्रदर्शपूर्णमासादिसिद्धे । ननु तस्य प्रकृतस्य क्रतोर्द्वादशशतं दक्षिणेत्यन्वयाद्गोद्रव्य न प्रतीयत इति चेत । न । यद्गोद्रव्य तस्य द्वादशशतमिति वाक्येन तत्प्रतीते । वाक्य हि प्रकरणाद्बलीयः ( उ मीसू ३ ३ १४ ) । तस्माद्गवा द्वादशशतमिति सिद्धान्त. । विकृतिषु यत्र गोदक्षिणाया संख्यान्तर श्रुत तत्रान्या संख्याया बाधो विचारफलम् ॥

तत्रैवान्यच्चिन्तितम्—

"गोदाने विहिते[25] स्वेच्छा नियतिर्वाऽन्तिमेऽपि किम् ।
अविभागो विभागो वा नियमानुक्तितोऽग्रिम ॥
अविभागो बहुत्वोक्तेर्बहुत्व न विवक्षितम् ।
विभाग स्यात् परस्वत्वसिद्धेर्लिङ्गं च दृश्यते ॥" ( जैन्या १० ३ २१–२२ ) इति ॥

पूर्वोक्त एव गवा दाने भवाय । ऋत्विग्भ्यो देयानामुक्तसंख्यानां गवां विभागाविभागयोर्यजमानेच्छैव प्रयोजिका, उताहोस्विदन्यतरनियति । यद्यपि नियतिस्तदाऽप्यविभागो विभागो वा । तत्र नियामकस्यानुक्तत्वादिच्छेति तावत् प्राप्तम् । 'ऋत्विग्भ्यो दक्षिणा ददाति' इति बहुवचनश्रवणेन समूहस्य प्रतिग्रहीतृत्वादविभाग इति पक्षान्तरम् । ग्रहैकत्ववदुद्देश्यगतत्वाद्बहुवचनं न विवक्षितमित्येकैक. प्रतिग्रहीता । तथा सति विभागोऽवश्यं भवति । समूहाय दत्ते सत्येकैकस्य स्वामित्वाभावात् परस्वत्वापादनलक्षणो दानशब्दार्थो न सिध्यति । किं च—'सुयो वो विश्ववेदा वि भजतु' इति मन्त्रे विभागलिङ्ग दृश्यते । तस्माद्विभागनियमो राद्धान्त· ॥

तत्रैवान्यच्चिन्तितम्—

"स विभाग. समो नो वा विशेषाश्रवणात् सम ।
वैषम्य स्याद्यथायासमेव[26] तत्स्यात् समाख्यया ॥" ( जैन्या १० ३ २३ ) इति ॥

पूर्वोक्त स विभाग सम स्यात् । कुत[27] । वैषम्यहेतोर्विशेषस्याश्रवणात् । साम्यहेतुस्तु लौकिको न्याय । लोके हि पुत्राणां पितृधने समविभागो दृष्ट । तस्मात् सम इत्येक पक्ष । कर्मकरेषु प्रयासानुरूपेण भृतितारतम्यं दृष्ट तद्वदत्रापीति द्वितीय पक्ष । द्वादशाहे दीक्षायामेव समाख्यायते—"अर्धिनो दीक्षयन्ति पादिनो दीक्षयन्ति" ( द्र आपश्रौ २१ २ १७–१८ सत्याषाढश्रौ १६ १ ३० ) इति । अर्धं येषां ऋत्विजां तेऽर्धिन । एवं पादिनो योजनीय । तद्विशेषो याज्ञिकमुखादवगन्तव्य । तत श्रौतसमाख्यानुरूपे (प्ये)ण केषांचिदर्धं केषांचित्पाद इत्यादिर्विषमो विभाग इति राद्धान्त· ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
प्रथमकाण्डे चतुर्थप्रपाठके सप्तत्रिंशोऽनुवाक. ॥ ३७ ॥

---

२५ क—अभिहिते । २६. इउ कर्मा-'यासं मैवम् । २७. आ—'कुत ' नास्ति ।

धाता रातिः सविते॒दं जुषन्तां प्रजाप॑तिर्निधि॒पति॑र्नो अ॒ग्निः ।
त्वष्टा॒ विष्णुः प्रजया॑ सꣳरराणो यज॑मानाय द्रवि॑णं दधातु ॥

धाता । रातिः । सविता । इदम् । जुषन्ताम् । प्रजापतिरिति प्रजा–पतिः । निधिपतिरिति निधि–पतिः । नः । अग्निः । त्वष्टा । विष्णुः । प्रजयेति प्र–जया । सꣳरराण इति सं–रराणः । यजमानाय । द्रविणम् । दधातु ॥

समिष्टयजूंषि जुहोति । पङ्क्तिप्रियाणि जुहोति, त्रीणि यजूंषि । "यद्वै यज्ञस्य क्रूरम्" (तैसं ६.६.२) इत्यादि ब्राह्मणम् । तत्र प्रथमा 'धाता रातिः' इति त्रिष्टुप् ॥ धाता स्रष्टा, रातिः दाता सर्वश्रेयसाम् । "मन्त्रे वृष" (पा ३.३.९६) इति क्तिन उदात्तत्वम् । सविता सर्वस्य प्रेरयिता अभ्यनुज्ञाता वा प्रजापतिः परमेष्ठी । स एव विशेष्यते– निधिपतिः निधीयन्ते वेदाः[1] पुरुषार्था वाऽस्मिन्निति[2], तेषां[3] पाता रक्षिता निधिपतिः । "परादिश्छन्दसि बहुलम्" (पा ६.२.१९९) इत्युत्तरपदाद्युदात्तत्वम् । इतरत्र तु "पत्यावैश्वर्ये" (पा ६.२.१८) इति पूर्वपदप्रकृतिस्वरत्वम् । अग्निः त्वष्टा विष्णुः चैते धात्रादयः सर्वे इदं हविः जुषन्तां सेवन्ताम् । एते[4] च धात्रादयो यज्ञतनुविशेषा देवता द्रष्टव्याः, यथा—"धाता दीक्षायाम्" (तैसं ४.४.९) इत्यादि । अधुना एते एकैकश उच्यन्ते । एष धात्रादिर्देवः प्रजया संरराणः सम्यक् रममाणः प्रजया उत्पत्त्या हेतुना यजमानाय द्रविणं वरिष्ठं प्रजादिकं धनं[5] दधातु ददातु[6] । रातेस्ताच्छीलिके चानशि (पा ३.२.१२९) शपः श्लुः (पा २.४.७६) । रमतेर्वाऽन्त्यलोपः ॥

सप्तत्रिंशेऽनुवाके दक्षिणा निरूपिता[1] । अष्टात्रिंशे समिष्टयजुर्होमो निरूप्यते ।

धातेति ॥ कल्पः —"जुह्वां नवगृहीतं गृहीत्वा धाता रातिरित्यन्ववैद्ध्यर्चैस्त्रिवृदन् संततं समसो नव समिष्टयजूंषि जुहोति" (आपश्रौ १३.१८.४) इति ॥ तत्र पञ्चदशानि यजूंषि जुहोति ॥ पदम्नु प्रथमा तावदेवं पठिता—'धाता रातिः सवितेदं जुषन्तां प्रजापतिर्निधिपतिर्नो अग्निः । त्वष्टा विष्णुः प्रजया सꣳरराणो यजमानाय द्रविणं दधातु' इति ॥ धाता सविता प्रजापतिः अग्निः त्वष्टा विष्णुः च इत्येते षड्देवा नः अस्माकम् इदं हविः जुषन्ताम् । कीदृशो धाता ? रातिः दानशीलः । कीदृशः प्रजापतिः ? निधिपतिः 'महापद्मशङ्खादिनामकानां नवानां निधीनां[3] पालयिता । सोऽयं देवगणो यजमानसंबन्धिन्या प्रजया संरराणः सम्यक् रममाणः सन् यजमानार्थं द्रविणं दधातु[4] पोषयतु ॥

१. पं–देवाः; ब–'वेदाः' नास्ति । २. ब–'वा' नास्ति । ३. ब–निधिः वेदः तस्य । ४. ति–एवम् । ५. मं–प्रजादिम्; ब–प्रजातिलक्षणं धनम् । ६. मं–'ददातु' नास्ति ।

१. त्रि१–निरूपिताः । २. त्रि१–महापद्मशङ्खपद्मादि°; क–महापद्मशङ्खपद्मादि° । ३. पा.भां–'निधीनाम्' नास्ति । ४. ड.ड.त्रि१.पा.भां–'दधातु' नास्ति ।

मभिन्द्र णो मनसा नेषि गोभिः सꣳ सूरिभिर्मघवन्त्सꣳ स्वस्त्या ।
सं ब्रह्मणा देवकृतं यदस्ति सं देवानाꣳ सुमत्या यज्ञियानाम् ॥

समिति । इन्द्र । न । मनसा । नेषि । गोभि । समिति । सूरिभिरिति सूरि–भि ।
मघवन्निति मघ–वन् । समिति । स्वस्त्या ।
५ समिति । ब्रह्मणा । देवकृतमिति देव–कृतम् । यत् । अस्ति । समिति ।
देवानाम् । सुमत्येति सु–मत्या । यज्ञियानाम् ॥

अथ द्वितीया— ' समिन्द्र ण ' इति त्रिष्टुप् ॥ हे ᵛइन्द्र, ᵛन अस्मान् । छान्दस साहितिक णत्वम्ᵛ । ᵛमनसा प्राणेन समीचीनेन ᵛगोभि च शब्दै स्तुतिलक्षणैश्च ᵛस ᵛनेषि सनय सयोजय । मनस्विनो वाग्मिनश्च कुरु, त्वा स्तोतुमित्यर्थ । नयतेर्लोटि शपो लुक् ( पा २ १० ४ ७३ ) । किंच—ᵛसूरिभि विद्वद्भि होतृप्रभृतिभि स्तोत्रकुशलैश्च अस्मान् सनेषि हे ᵛमघवन् महाधन, ᵛस्वस्त्या अविनाशेन च अस्मान् सनेषि । किच—ᵛब्रह्मणा वेदेन, ᵛवेदार्थज्ञानेन वा, तदर्थानुष्ठानेन वा अस्मान् सनेषि । किंच यच्चान्यद् ᵛदेवकृत देवार्थं कृतमस्ति । ᶜकिम्ᶜ अग्निहोत्रादिकर्मᶜ, तेनापि सनेषि । " क्ते च " ( पा ६ २ ४५ ) इति पूर्वपदप्रकृतिस्वरत्वम् । किंच ᵛदेवाना ᵛयज्ञियाना यज्ञार्हाणा यज्ञसपादितानामग्न्यादीना ᵛसुमत्या कल्याण १५ मत्या अनुग्रहबुद्ध्या चास्मान् सयोजय । " यज्ञर्त्विग्भ्या घखञौ " ( पा ५ १ ७१ ) इति घ । " मन्त्रे वृष " ( पा ३ ३ ९६ ) इति उदात्त क्तिन् । " मन्क्तिन्व्याख्यान " ( पा ६ २ १५१ ) इत्यादिनोत्तरपदान्तोदात्तत्वम् । " उदात्तयण " ( पा ६ १ १७४ ) इति विभक्तेरुदात्तत्वम् ॥

समिति ॥ अथ द्वितीया—' समिन्द्र णो मनसा नेषि गोभि सꣳसूरिभिर्मघवन्त्सꣳ स्वस्त्या । २० स ब्रह्मणा देवकृत यदस्ति स देवानाꣳ सुमत्या यज्ञियानाम् ' इति ॥ हे ᵛइन्द्र, त्वमनुग्रहयुक्तेन ᵛमनसा ᵛन अस्मान् ᵛगोभि ᵛस ᵛनेषि सयोजय । ᵛसूरिभि विद्वद्भिर्होतृप्रमुखै ᵛस योजय । हे ᵛमघवन् ᵛस्वस्त्या क्षेमेण ᵛस योजय । ᵛब्रह्मणा वेदेनार्थज्ञानसहितेन ᵛदेवकृत देवार्थं कर्म ᵛयद् ᵛअस्ति तेन ᵛस योजय । यज्ञसबन्धिना देवाना ᵛसुमत्या अनुग्रहबुद्ध्या ᵛस योजय ।

२५ ᵛ[ द्र तैसा ७-१ ] । ७. त.ति प व–वेदान्तज्ञानेन । ८–८ म–कर्म अग्निहोत्रादिकम् ।

सं वर्चसा पयसा सं तनूभिरगन्महि मनसा स२ँ शिवेन ।
त्वष्टा नो अत्र वरिवः कृणोत्व(१)नु मार्ष्टु तनुवो यद्विलिष्टम् ॥

समिति । वर्चसा । पयसा । समिति । तनूभिः । अगन्महि ।
मनसा । समिति । शिवेन ।
त्वष्टा । नः । अत्र । वरिवः । कृणोतु ( १ ) । अन्विति । मार्ष्टु ।
तनुवः । यत् । विलिष्टमिति वि–लिष्टम् ॥

अथ तृतीया—' सं वर्चसा ' इति त्रिष्टुप् ॥ वर्चसा बलेन पयसा पालनेन, क्षीरादिना वा वयं सम् अगन्महि संगता भूयास्म । छान्दसो लुङ् ( पा ३·४·६ ) । " मन्त्रे घस " ( पा २·४·८० ) इति लेः लुक् । " समो गम्यृच्छि " ( पा १·३·२९ ) इत्यात्मनेपदम् । लङि वा " बहुलं छन्दसि " ( पा २·४·७३ ) इति शपो लुक् । तनूभिः शरीरैश्च शोभनैः समगन्महि । शिवेन च कल्याणेन च मनसा समगन्महि । त्वष्टा च देवः नः अस्माकम् अत्र अस्मिन्नेव कर्मणि अस्मिन्नेव वा जन्मनि वरिवः वरणीयं धनं कृणोतु करोतु । किंच— अनु मार्ष्टु शोधयतु च अस्माकं तनुवः शरीरात् यद् विलिष्टं विलग्नं विगुणीकृतकर्मनिमित्तं पापं तत्सर्वं विशोधयतु । लिशेरिरोर्वा निष्ठायां " गतिरनन्तरः " ( पा ६·२·४९ ) इति गतेः प्रकृतिस्वरत्वम् ॥

अथ चतुर्थी—' यदद्य ' इति त्रिष्टुप् ॥ अद्य अस्मिन्नहनि प्रयति वर्तमाने अविच्छेदेन वितायमाने अस्मिन् यज्ञे । " शतुरनुमः " ( पा ६·१·१७३ ) इति सप्तम्या उदात्तत्वम् । हे अग्ने, यत् यदर्थं त्वां होतारम् अवृणीमहि वृतवन्तो वयम् इह अस्मिन् प्रयोजने एतदनुरूपमेव त्वया कृतमिति प्रदर्शयति । कथम् ? ऋधक् समृद्धं वैगुण्यं यथा न भवति तथा

सं वर्चसेति ॥ अथ तृतीया—' सं वर्चसा पयसा सं तनूभिरगन्महि मनसा स२ँ शिवेन । त्वष्टा नो अत्र वरिवः कृणोत्वनु मार्ष्टु तनुवो यद्विलिष्टम् ' इति । वयं देवतानुग्रहबलात् वर्चसा बलेन तद्धेतुना च पयसा क्षीरादिना सम् अगन्महि संगताः स्मः । तनूभिः शरीरैः[6] शोभनैः संगताः । शिवेन श्रद्धालुना मनसा संगताः । त्वष्टा देवो नः[7] अस्माकम् अत्र अस्मिन् कर्मणि वरिवः वरणीयं धनं कृणोतु करोतु । किंच तनुवः शरीराणि अनु मार्ष्टु शोधयतु । यद् विलिष्टं पापं तदप्यनुमार्ष्टु[8] ॥

९. मै–अस्मिन् ।

५. त्रि१–ग्रहात् । ६. ३.ज.पा–' शरीरैः ' नास्ति । ७. ३.ज.त्रि.१पा–' नः ' नास्ति ।
८. क–तदपि शोधयतु ।

यदद्य त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह ।
ऋधगयाडृधगुताशमिष्ठाः प्रजानन् यज्ञमुप याहि विद्वान् ॥
स्वगा वो देवाः सदनमकर्म य आजग्म सवनेदं जुषाणाः ।
जक्षिवांसः पपिवांसश्च विश्वेऽस्मे धत्त वसवो वसूनि ॥

५ यत् । अद्य । त्वा । प्रयतीति प्र–यति । यज्ञे । अस्मिन् ।
अग्ने । होतारम् । अवृणीमहि । इह ।
ऋधक् । अयाट् । ऋधक् । उत । अशमिष्ठाः । प्रजानन्निति प्र–जानन् ।
यज्ञम् । उपेति । याहि । विद्वान् ॥
स्वगेति स्व–गा । वः । देवाः । सदनम् । अकर्म । ये ।
१० आजग्मेत्या–जग्म । सवना । इदम् । जुषाणाः ।
जक्षिवांसः । पपिवांसः । च । विश्वे । अस्मे इति ।
धत्त । वसवः । वसूनि ॥

अयाट् अयाक्षी । यजेर्लुङि सिचि वृद्धौ “ बहुलं छन्दसि ” ( पा ७ ३ ९७ ) इतीडभाव । यत एवमत त्वमेव प्रजानन् आत्मीयमविकार जानन् अनुसदधान इत्थमिष कृतवानसि, तस्मात्
१५ भूयोऽपि अस्मदीय यज्ञ पुन पुन उप याहि आगच्छ विद्वान् सर्वार्थसाधनोपायज्ञ त्वम् ॥

अथ पञ्चमी–“ स्वगा व ’ इति त्रिष्टुप् ॥ हे देवा, व युष्माक सदन स्थान स्वगा अकर्म स्वगा कृतवन्तो वयम्। स्वगा इति निपात यथास्वकरण द्योतयति, यथायथम् असकीर्ण स्थान कृतवन्तो वयमित्यर्थ । करोतेर्लुङि “ मन्त्रे घस ” ( पा २ ४ ८० ) इति च्लेर्लुक् ।

यदिति ॥ अथ चतुर्थी—‘यदद्य त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह । ऋधगयाडृध
२० गुताशमिष्ठा प्रजानन् यज्ञमुप याहि विद्वान् ’ इति । हे अग्ने, यत् यस्मात् कारणात् अद्य अस्मिन् दिने इह देवयजनदेशे अस्मिन् यज्ञ प्रयति प्रवर्तमाने सति त्वा होतारम् होमनिष्पादकम् अवृणीमहि तस्मात् कारणात् ऋधक् समृद्ध यथा भवति तथा अयाट् अयाक्षी । उत अपि च त्वम् ऋधक् समृद्ध प्रजानन् अशमिष्ठा ⁹अस्मद्विघ्नशान्तिमकार्षी । अतस्त्व विद्वान् अस्मदर्तिं जानन्निम यज्ञ उप याहि प्राप्नुहि ॥

२५ स्वगेति ॥ अथ पञ्चमी—‘ स्वगा वो देवा सदनमकर्म य आजग्म सवनेद जुषाणा । जक्षिवा
ंस पपिवांसश्च विश्वेऽस्मे धत्त वसवो वसूनि ’ इति ॥ हे देवा ये यूय जुषाणा प्रीयमाणा इद सवना इमानि त्रीणि सवनानि आजग्म आगतास्तेषा व सदन स्थान स्वगा स्वाधीनम् अकर्म वयमकार्ष्म । विश्वे ते सर्वे यूय जक्षिवास सवनीयपुरोडाशान् भक्षितवन्त । पपिवांस सोम पीतवन्तश्च । हे वसव निवासहेतवो ¹¹यूयम् अस्मे ¹¹ अस्मासु वसूनि धनानि धत्त स्थापयत ॥

३० ९ इ उ पा–‘ त्वम् ’ नास्ति । १० इ उ पा–असच्छान्ति । ११-११ क–यूय विश्वेऽस्मे उ पा–विश्वेऽस्मे ।

यानाऽव॑ह उश॒तो दे॑व दे॒वान् तान् (२) प्रेर॑य॒ स्वे अ॑ग्ने स॒धस्थे॑ ।
वह॑माना॒ भर॑माणा ह॒वीꣳषि॒ वसुं॑ घ॒र्मं दिव॒मा ति॑ष्ठ॒तानु॑ ॥

यान् । एति॑ । अव॑हः । उ॒श॒तः । दे॒व॒ । दे॒वान् । तान् ( २ ) ।
प्रेति॑ । ई॒र॒य॒ । स्वे । अ॒ग्ने॒ । स॒धस्थ॒ इति॑ स॒ध-स्थे॒ ॥
वह॑मानाः । भर॑माणाः । ह॒वीꣳषि॑ । वसु॑म् । घ॒र्मम् ।
दिव॑म् । एति॑ । ति॒ष्ठ॒त॒ । अनु॑ ॥

"छन्दस्युभयथा" (पा ३·४·११७) इति तिङ आर्धधातुकत्वात् ङित्त्वाभावः। देवा विशेष्यन्ते—ये यूयम् इदम् इदानीं सवना सवनानि आजग्म आगताः जुषाणाः प्रीयमाणाः सेवमाना वा, तेषां सदनम् अकर्म इति । "सुपां सुलुक्" (पा ७·१·३९) इति इदमो विभक्तेर्लुक् । सवनशब्दात् "शेश्छन्दसि" (६·१·७०) इति शेर्लोपः । जुषतेस्ताच्छीलिके चानशि (पा ३·२·१२९) शपो लुक् (पा २·४·७२)। ते विश्वे सर्वेऽपि यूयं जक्षिवांसः सवनीयपुरोडाशादि भक्षितवन्तः पपिवांसः च सोमं पीतवन्तः हे वसवः लोकानां वासयितारः, अस्मे अस्मासु धत्त स्थापयत वसूनि धनानि । "लिङ्यन्यतरस्याम्" (पा २·४·४०) इत्यदेर्घस्लादेशः । अस्मच्छब्दात् परस्याः सप्तम्याः "सुपां सुलुक्" (पा ७·१·३९) इति शेआदेशः ॥

अथ षष्ठी—'यानावह' इति त्रिष्टुप् ॥ हे अग्ने देव दीप्यमान, यान् देवान् उशतः हवींषि कामयमानान् । "शतुरनुमः" (पा ६·१·१७३) इति विभक्तेरुदात्तत्वम् । आ अवहः आहूतवानसि तान् देवान् प्र ईरय स्वे आत्मीये सधस्थे सहस्थाने[M], यत्र ते सह तिष्ठन्ति तत्र प्रस्थापय । "सुपि स्थः" (पा ३·२·४) इति तिष्ठतेः कः । "सध मादस्थयोः" (पा ६·३·९६) इति सहस्य सधादेशः । अधुना देवान् प्रत्याह—हे देवाः, यूयमपि हवींषि वहमानाः रथादिभिर्वाहनैः वाहयन्तः भरमाणाः हस्तादिभिर्धारयन्तः । यद्वा—भुक्तशेषाण्यपत्याद्यर्थं [१०]परिपालयन्तः वसुं सर्वस्य लोकस्य वासयितारं घर्मम् आदित्यम् आ तिष्ठत प्राप्नुत । अनु अनन्तरं च दिवं द्युलोकमातिष्ठत ॥

यानिति ॥ अथ षष्ठी—'यानाऽवह उशतो देव देवान् तान् प्रेरय स्वे अग्ने सधस्थे । वहमाना भरमाणा हवीꣳषि वसुं घर्मं दिवमा तिष्ठतानु' इति ॥ हे अग्ने, देव,[१२] उशतः हवींषि कामयमानान् यान्[१३] देवान् आ अवहः वर्णव्यत्ययात् आ हव आहूतवानसि । तान् देवान् स्वे स्वकीये सधस्थे सहनिवासस्थाने प्रेरय । हे देवाः, हवींषि वहमानाः [१४]रथादिभिर्नयन्तो भरमाणाः पोषयन्तः वसुं जगन्निवासहेतुं घर्मम् आदित्यं आ तिष्ठत आगच्छत । अनु अनन्तरं दिवं[१५] स्वर्गमागच्छत ॥

[M] [द्र. निरुक्त ३·१५] १०. व-धारयन्तः परिपालयन्तः ।

१२. इ.उ.पा-'देव' नास्ति । १३. इ.उ.पा-'यान्' नास्ति । १४. इ.उ.पा-रथ्यादि° । १५. इ.उ.त्रि१-'दिवम्' नास्ति ।

तैसं ३९ ॥

यज्ञ॑ य॒ज्ञं ग॑च्छ य॒ज्ञप॑तिं गच्छ॒ स्वां योनिं॑ गच्छ॒ स्वाहै॒ष ते॑ य॒ज्ञो य॑ज्ञपते

स॒हसू॑क्तवाकः सु॒वीर॒ः स्वाहा॑

यज्ञ॑ । य॒ज्ञम् । ग॒च्छ॒ । य॒ज्ञप॑ति॒मिति॑ य॒ज्ञ-प॒तिम् ।

ग॒च्छ॒ । स्वाम् । योनि॑म् । ग॒च्छ॒ । स्वाहा॑ ।

ए॒ष । ते॒ । य॒ज्ञ । य॒ज्ञप॒त॒ इति॑ य॒ज्ञ-प॒ते॒ ।

स॒हसू॑क्तवाक॒ इति॑ स॒हसू॑क्त-वा॒क॒ । सु॒वीर॒ इति॑ सु-वीरः॑ । स्वाहा॑ ।

५

'यज्ञ यज्ञम्' इत्यादीनि त्रीणि यजूंषि ॥ हे ^१यज्ञ, ^१यज्ञ परमात्मानं विष्णुं ^१गच्छ येन त्वं प्रतिष्ठितः स्याः । अनन्तरं ^१यज्ञपतिं यज्ञस्य पालयितारं यजमानं ^१गच्छ फलप्रदानेन । अनन्तरं च ^१स्वाम् आत्मीयां ^१योनिं ^१गच्छ, योनिं कारणं सर्वपरिस्पन्दहेतुर्वातात्या परमेश्वरस्य क्रियाशक्तिः । यथा—'वाताद्वा अध्वर्युर्यज्ञं प्रयुङ्क्ते" ( तैब्रा ३ ३ ९ ) इति । तां गच्छ । ^१स्वाहा स्वाहुतमिदं ^११आज्यमग्नयेऽस्त्विति ॥

१०

अथ द्वितीयम्—हे ^१यज्ञपते यजमान, ^१एष ^१यज्ञ ^१सहसूक्तवाकः सूक्तवाकसहितः निविगत्स्तोत्रकः ^१सुवीरः शोभनैर्वीरैः पुत्रपौत्रादिभिर्युक्तः तद्धेतुतां ^१प्रतिपद्यमानः ^१ते तव स्वाहुतमिदमाज्यमग्नयेऽस्तु, इत्यमिदं तव भूयादिति ॥

अथ तृतीयम्—'देवा गातुविद' इति ॥ व्याख्यातं—"वाजस्य मा प्रसवेन" ( तैसं १ १ १३ ) इत्यत्र । ^१देवा ^१गातुविद गतिज्ञाः ^१गातुं मार्गं ^१वित्त्वा लब्ध्वा आगमनकाले

१५

यज्ञमिति ॥ अथ त्रयाणां यजुषां मध्ये प्रथमं यजुः—'यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहा' इति ॥ हे ^१यज्ञ, त्वं स्वप्रतिष्ठार्थं यज्ञनामकं विष्णुं ^१गच्छ । फलप्रदानार्थं ^१यज्ञपतिं यजमानं गच्छ । स्वनिष्पत्यर्थं ^१स्वां ^१योनिं स्वकारणभूतां वायोः क्रियाशक्तिं ^१गच्छ । ^१स्वाहा हुतमस्तु ॥

एष इति ॥ अथ द्वितीयम्—'एष ते यज्ञो यज्ञपते सहसूक्तवाकः सुवीरः स्वाहा' इति ॥ हे ^१यज्ञपते यज्ञस्वामिन्, ^१एष अनुष्ठीयमानः ^१ते ^१यज्ञः सूक्तवाकैः स्तोत्रैः सहितः, शोभना वीराः कर्मकुशला ऋत्विजो यस्यासौ ^१सुवीरः । तव इदमाज्यं ^१६त्वया ^{१७}स्वाहा हुतमस्तु^{१७} ॥

२०

११ त ति च—'स्वाहुतमिदम्' इत्यस्यानन्तरं 'तव'। *[मैसूरुमुद्रितपुस्तके 'प्रतिपायमानः' इति ।] ।

१६. त्रि१—'त्वया' नास्ति, क—त्वयि । १७–१७ ङ.छ.त्रि१.पा—स्वाहुतमस्तु ।

देवा॑ गातुविदो गा॒तुं वि॒त्त्वा गा॒तुमि॑त॒ मन॑सस्पत इ॒मं नो॑
दे॒व दे॒वेषु॑ य॒ज्ञ१॑ स्वाहा॑ वा॒चि स्वाहा॒ वाते॑ धाः ॥ ४४ ॥

[ कृणो॒तु तानुष्टाचत्वारि॑ꣳशच्च ]

देवाः॑ । गा॒तु॒वि॒द॒ इति॑ गातु-वि॒दः॒ । गा॒तुम् ।
वि॒त्त्वा । गा॒तुम् । इ॒त॒ । मन॑सः । प॒ते॒ । इ॒मम् । नः॒ ।
दे॒व॒ । दे॒वेषु॑ । य॒ज्ञम् । स्वाहा॑ । वा॒चि । स्वाहा॑ । वाते॑ । धाः॒ ॥ ४४ ॥

[ मैसं १-३-३८ ; कासं ४-१२ ; कपिसं ३-१० ; वासं ८-१४-२२ ]

यत्र स्थितास्ते यूयं [v]गातुम् [v]इत तमेव मार्गं समाप्ते कर्मणि गमनाय भजत । किंच हे [v]मनसः [v]पते, सर्वभूतानामन्तरात्मतया मनसोऽपि पते [v]देव, इमम् अस्माकं [v]यज्ञं [v]देवेषु अग्न्यादिषु [v]धाः धेहि स्थापय । एवं हि सरस्वत्याह । तदनन्तरं [v]वाचि वाग्देवतायां शाब्दे ब्रह्मणि धाः स्थापय । ततः पश्चादिमं यज्ञं [v]वाते सर्वक्रियाधारे धाः स्थापय, यस्मादयं यज्ञः प्रयुक्तः तत्रैव वाते स्थापय । " वाताद्वा अध्वर्युर्यज्ञं प्रयुङ्क्ते " ( तैब्रा ३-३-९ ) इत्यादि ब्राह्मणम् । " वासिष्ठो ह सात्यहव्यः " ( तैसं ६-६-२ ) इत्यादि च ॥ १०

॥ इति चतुर्थप्रपाठके एकोनचत्वारिंशोऽनुवाकः ॥

देवा इति ॥ अथ तृतीयम्—' देवा गातुविदो गातुं वित्त्वा गातुमित मनसस्पत इमं नो देव देवेषु यज्ञꣳ स्वाहा वाचि स्वाहा वाते धाः ' इति ॥ हे [v]गातुविदः मार्गज्ञाः [v]देवाः, [v]गातुं [v]वित्त्वा भवदागमनमार्गं ज्ञात्वा यज्ञे समाप्ते सति [v]गातुम् [v]इत पुनस्तमेव[18] मार्गं गच्छत । हे [v]मनसस्पते [v]देव परमेश्वर, [v]नः अस्माकम् [v]इमं यज्ञं [v]देवेषु हविर्भुक्षु [v]स्वाहा प्रथमं स्थापय । ततो [v]वाचि मन्त्ररूपायां वाग्देवतायां स्थापय । ततो [v]वाते क्रियाप्रवर्तके देवे [v]धाः स्थापय ॥ यथोक्तमन्त्रसाध्यं होमं विधत्ते—" समिष्टयजूꣳष्यपि जुहोति यज्ञस्य समिष्ट्यै यद्वै यज्ञस्य क्रूरं यद्विलिष्टं यदत्येति यन्नात्येति यदतिकरोति यन्नापि करोति तदेव तैः प्रीणाति " ( तैसं ६-६-२ ) इति । सम्यग्यजनं समिष्टं, युज्यन्ते प्रयुज्यन्त इति[19] ' धाता रातिः ' इत्यादयो मन्त्राः यजूंषि । समिष्टार्थानि यजूंष्युच्चार्याऽऽज्यं जुहुयात् । तच्च यज्ञस्य सम्यगनुष्ठित्यै संपद्यते । क्रूरादिदोषाणां होमेन समाहितत्वात् । क्रूरं पशुहिंसादि । विलिष्टं [20]विहितस्य दक्षिणादिद्रव्यस्याल्पीभावः । अत्ययानत्ययौ कालकृतौ । तथा हि—पाशुकानां प्रयाजानां चोदकवशेन[21] हविरासादनादूर्ध्वमनुष्ठानं प्राप्तं, तत्तु ' तिष्ठन्तं पशुं प्रयजन्ति ' इति वचनेन पशुविशसनात् प्रागेवापकृष्टं[22], तदनादृत्य चोदकवशेनैवानुष्ठानमशास्त्रीयः कालात्ययः । तथा तृतीयसवनोपक्रमे सवनीयपशोरङ्गप्रचारानन्तर- १५ २० २५

१८. त्रि१—उक्तमेव । १९. क—इति यजूंषि । २०. इ.ड.पा—विहित° । २१. त्रि१—' चोदकवशेन ' इत्यस्यानन्तरं ' वेद्याः ' । २२. आ—प्रागपकृष्टम् ।

मेवानूयाजाश्चोदकान्तेन प्राप्तास्ते तु ' अग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति ' इति वचनेन तृतीयसवनस्य समा-
प्तिकाल उत्कृष्टा तदनादृत्योपक्रम एव तदनुष्ठानमशास्त्रीय काला [न] त्यय । " अपबर्हिष प्रयाजान्
यजति " ( तैस ६.६.३ ) इति वचनेनावभृथे बर्हिर्नामकश्चतुर्थप्रयाजो निषिद्ध । तन्निषेधमतिक्रम्य तस्यानु-
ष्ठानमतिकरणम् । विहितस्य कस्यचिदङ्गस्य विस्मृतिरकरणम् । अपिशब्द मूरादीना समुच्चयार्थं । तच्च
५ मूरादिकं तैरेव होमै प्रीणाति समादधाति ॥ आहुतिसख्या विधत्ते— " नव जुहोति नव वै पुरुषे प्राणा
पुरुषेण यज्ञ संमितो यावानेव यज्ञस्त प्रीणाति " ( तैस ६.६.२ ) इति ॥ प्राणास्तदाधारच्छिद्राणि ॥
नवसु मन्त्रेषु ऋग्यजुषोरवान्तरसख्या विधत्ते– " षडृग्मियाणि जुहोति षड्वा ऋतव ऋतूनेव प्रीणाति
त्रीणि यजूंषि त्रय इमे लोका इमानेव लोकान् प्रीणाति " ( तैस ६.६.२ ) इति ॥ यज्ञस्य यजमानप्राप्ति
स्वकारणप्राप्तिश्च मन्त्रपाठादेव संपद्यत इत्याह— " यज्ञ यज्ञ गच्छ यज्ञपतिं गच्छेत्याह यज्ञपतिमेवैनं गम-
१० यति स्वा योनिं गच्छेत्याह स्वामेवैन योनिं गमयति " ( तैस ६.६.२ ) इति ॥ सुवीरशब्देन वीर्यप्राप्तिः
सूच्यत इत्याह— " एष ते यज्ञो यज्ञपते सहसूक्तवाक सुवीर इत्याह यजमान एव वीर्यं दधाति "
( तैस ६ ६ २ ) इति ॥ देवा गातुविद इत्येतन्मन्त्रप्रशसार्थमाख्यायिकामाह—" वासिष्ठो ह सात्यहव्यो
देवभाग पप्रच्छ यत् सृञ्जयान् बहुयाजिनोऽयीयजो यज्ञे यज्ञ प्रत्यतिष्ठिपा३ यज्ञपता३ इति स होवाच यज्ञ-
पताविति सत्याद्वै सृञ्जया परा बभूवुरिति होवाच यज्ञे वाव यज्ञ प्रतिष्ठाप्य आसीद्यजमानस्यापराभावा-
१५ येति देवा गातुविदो गातु वित्वा गातुमितेत्याह यज्ञ एव यज्ञ प्रति ष्ठापयति यजमानस्यापराभावाय "
( तैस ६ ६ २ ) इति । [23]वसिष्ठगोत्रोत्पन्न सत्यहव्यस्य पुत्रो देवभागनामान मुनिं पप्रच्छ–" यदा
सृञ्जयाख्यदेशस्थान् बहुविधसोमयागानुष्ठायिनो याजितवानसि तदा किं ' यज्ञं स्वाहा ' इत्येवं यज्ञलिङ्गके
' देवा गातुविद ' इत्येतस्मिन् मन्त्रे यज्ञ समिष्टयजुर्होम समापितवानसि । उत, ' यज्ञपतिं गच्छ ' इत्येव
यज्ञपतिलिङ्गके ' यज्ञ यज्ञं गच्छ ' इत्येतस्मिन् मन्त्रे " इति । तत्र द्वितीयपक्षे सति यस्मात् [24]सत्याद्
२० यज्ञात् पराभवस्तस्मात् प्रथमपक्ष एवोपादेय इत्युत्तरम् ॥

अत्र विनियोगसंग्रह —

" धातानुवाके सर्वस्मिन् समिष्टाख्ययजूंषि हि ।
ऋच षडाद्या शेषाणि यजूंष्येतैर्जुहोति हि ॥ " इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
२५ प्रथमकाण्डे चतुर्थप्रपाठकेऽष्टात्रिंशोऽनुवाक ॥ ३८ ॥

---

२३ इ.उ.पा–वानष्ट' । २४ इ उ पा–' सत्यान् ' नास्ति ।

उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ ।
अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ॥
उरुम् । हि । राजा । वरुणः । चकार । सूर्याय । पन्थाम् । अन्वेतवा इत्यनु–एतवै । उ ।
अपदे । पादा । प्रतिधातव इति प्रति–धातवे । अकः । उत । अपवक्तेत्यप–वक्ता ।
हृदयाविध इति हृदय–विधः । चित् ॥ ५

अवभृथार्थमन्तरेण चात्वालोत्करावुपनिष्क्रामति—' उरुं हि राजा ' इति त्रिष्टुभा ॥ वरुणो हि राजा सूर्याय अन्वेतवै सूर्यमन्वेतुम्[1] अनुक्रमेण गन्तुम् उरुं विस्तीर्णं पन्थां पन्थानं मार्गं चकार करोति । साधुनि कर्मणि पुरुषं प्रवर्तयन् अभ्युदयेन योजयतीत्यर्थः । उ इत्यवधारणे, वरुण एव हि राजा इत्थं करोति । किंच— स एव अपदे [2]अपदनीयस्थाने असाधुनि[2] कर्मणि पादा पादान् प्रतिधातवे प्रतिधातुम् अकः करोति पुरुषं प्रवर्तयतीत्यर्थः । १०
कथमित्याह— उत अपवक्ता [3]अप्यपवदिता यः परोक्षे परिवदति पिशुनो [4]यश्च हृदयाविधः प्रत्यक्षमेव अप्रियाणि वदन् हृदयानि[5] विध्यति, वरुणेनैव हि प्रेरितः तथातथा परुषो भवति, सोऽस्मान् [6]साधुनि कर्मणि पदं कारयत्विति[6] शेषः । अन्य आह—अपदे अनालम्बेऽन्तरिक्षे अन्वेतवै अनुक्रमेण गन्तुं सूर्यस्य पन्थां पन्थानमुरुं वरुणो राजा यस्माच्चकार, तस्मात् सोऽस्माकमपि पादान् प्रतिधातुं विस्तीर्णं पन्थानम् अकः करोतु अवभृथार्थमपि; यो नाम १५
अपवक्ता पुरुषो हृदयाविधश्च सोऽस्माकमवभृथार्थं मार्गं करोतु गमनप्रतिबन्धं मा कार्षीदित्यर्थः । चकारेत्यस्य " हि च " ( पा ८·१·३४ ) इति निघातप्रतिषेधः । सूर्यशब्दात् कर्मणः संप्रदानत्वात् चतुर्थी ( द्र. पाभा १·४·३२ ) । पथ आत्वं व्यत्ययेन ( पा ७·१·८५; ३·१·८५ ) द्वितीयायामपि भवति । अनुपूर्वात् एतेः " तुमर्थे सेसेन् " ( पा ३·४·९ ) इति तवैप्रत्ययः, " तवै

अष्टात्रिंशेऽनुवाके समिष्टयजुर्होमोऽभिहितः । एकोनचत्वारिंशेऽनुवाकेऽवभृथो वर्ण्यते । २०
उरुमिति ॥ कल्पः—" उरुं हि राजा वरुणश्चकारेति वेद्या [1]अभिप्रयान्तो वदन्ति । चात्वालाद्धा " ( आपश्रौ १३·२०·२ ) इति । पाठस्तु—' उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ । अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ' इति । उशब्दोऽवधारणे । वरुण एव राजा सूर्याय सूर्यस्य अन्वेतवै अनुक्रमेण गन्तुम् अपदे निरालम्बेऽन्तरिक्षे उरुं पन्थां विस्तीर्णं मार्गं यस्मात् चकार तस्मादस्माकमपि पादा प्रतिधातवे पादं प्रक्षेप्तुं मार्गम् अकः करोतु । उत अपि च यः शत्रुः २५
अपवक्ता निन्दको यश्च हृदयाविधः हृदयोपलक्षितं शरीरं ताडयति, चिच्छब्दः समुच्चये, सोऽपि प्रतिबन्धमकृत्वा मार्गं करोत्वित्यर्थः ॥

१. व–°मनुगन्तुम् । २. व–अस्थाने असाधु° । ३. मै–अप्यवदिता । ४. तं.ति–अपि च । ५. मै–हृदयादि । ६–६. व–साधूनि कर्माणि कथं कारयत्विति ।

१. त्रि१–अवभृथं प्रयान्तः । ३०

शतं ते राजन् भिषजः सहस्रमुर्वी गम्भीरा सुमतिष्टे अस्तु ।
बाधस्व द्वेषो निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत् ॥

शतम् । ते । राजन् । भिषजः । सहस्रम् । उर्वी । गम्भीरा । सुमतिरिति सु-मतिः । ते । अस्तु ।
बाधस्व । द्वेषः । निर्ऋतिमिति निः-ऋतिम् । पराचैः । कृतम् । चित् ।
५ एनः । प्रेति । मुमुग्धि । अस्मत् ॥

चान्तश्च युगपत् " ( पा ६.२.५१ ) इत्येते तवैप्रत्ययान्तस्य युगपत् प्रकृतिस्वरत्वम् । " सुपां सुलुक् " ( पा ७.१.३९ ) इति पादशब्दात् द्वितीयाया आकारः । प्रतिपूर्वादयातेः तेनैव सूत्रेण तवेन्प्रत्ययः । " तादौ च " ( पा ६.२.५० ) इति गते प्रकृतिस्वरत्वम् । करोतेश्छान्दसे लुङि ( पा ३.४.६ ) " मन्त्रे घस " ( पा २.४.८० ) इति लेर्लुक् । हृदयं विध्यतीति
१० हृदयाविध । क्विबन्तादकारोपजनः छान्दसः । " नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ " ( पा ६.३.११६ ) इति पूर्वपदस्य दीर्घः । बहुवचनान्तमेव वा । चिदिति चार्थे उपमार्थे वा ( द्र. निरुक्त १.४ ) ॥

अपो दृष्ट्वा यजमानं वाचयति—' शतं ते राजन् ' इति त्रिष्टुभम् ॥ हे [v]राजन् वरुण अपामधिष्ठातः, [v]शतं बहवः [v]सहस्रं बहुतमाश्च [v]ते तव [v]भिषजः पापस्य शमनहेतवः सन्ति ।
१५ तस्मात् त्वत्प्रसादात् अस्मत्पापमपि ते शमयन्त्विति शेषः । किंच—[v]उर्वी महती [v]गम्भीरा दुरवगाहा च [v]ते [v]सुमतिः कल्याणी मतिः [v]अस्तु अस्मदनुग्रहपरैव सर्वदा भूयात् । " युष्मत्तत्ततक्षुःषु " ( पा ८.३.१०३ ) इति संहितायां षत्वम् । किंच—[v]बाधस्व विनाशय [v]द्वेषः द्वेष्टॄन् । विजन्ताच्छस् ( पा ३.२.७५, ४.१.२ ) । जातौ वा एकवचनम् । द्वेषांसि रक्षःप्रभृतीनीत्यर्थः । [v]निर्ऋतिं च बाधस्व [v]पराचैः पराङ्मुखीभूताम् । उच्चैरादिवदव्ययं द्रष्टव्यम् । निर्ऋतिम् इति
२० प्रादिसमासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् ( पा ६.२.२ ) । गतिसमासे " तादौ च " ( पा ६.२.५० ) इति गते प्रकृतिस्वरत्वम् । किंच चेदर्थे चित्शब्दः । [v]कृतं [v]चित् [v]एनः पापम् अस्मत्तः [v]प्र [v]मुमुग्धि प्रकर्षेण मोचय । व्यत्ययेन शपः श्लुः[7] ( पा २.४.७६, ३.१.८५ ) ॥

शतमिति ॥ कल्पः—" शतं ते राजन् भिषजः सहस्रमित्यपो दृष्ट्वा जपति " ( आपश्रौ ८.७.२५ ) इति । पाठस्तु—' शतं ते राजन् भिषजः सहस्रमुर्वी गम्भीरा सुमतिष्टे अस्तु । बाधस्व द्वेषो
२५ निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत् ' इति ॥ हे [v]राजन् वरुण, [v]ते तव शतसहस्रसंख्याकाः [v]भिषजः अस्मदुपद्रवनिवारकाः सन्ति । तस्मादस्मासु तव [v]सुमतिः अनुग्रहबुद्धिः [v]अस्तु । कीदृशी ? [v]उर्वी

७. प—लुक् ।

अभिष्ठितो वरुणस्य पाशोऽग्नेरनीकमप आ विवेश ।
अपां नपात् प्रतिरक्षन्नसुर्यं दमेदमे(१)समिधं यक्ष्यग्ने ॥
प्रति ते जिह्वा घृतमुच्चरण्येत्

अभिष्ठित इत्यभि–स्थितः । वरुणस्य । पाशः । अग्नेः । अनीकम् । अपः । एति । विवेश ।
अपाम् । नपात् । प्रतिरक्षन्निति प्रति–रक्षन् । असुर्यम् ।
दमेदम इति दमे–दमे (१) । समिधमिति सम्–इधम् । यक्षि । अग्ने ॥
प्रतीति । ते । जिह्वा । घृतम् । उदिति । चरण्येत् ।

अधितिष्ठति—– 'अभिष्ठितः' इति विराजैकपदया ॥ अभिष्ठितः अभिभूय क्रान्तोऽस्माभिर्वरुणस्य पाशः ॥

अप्सु बर्हिः प्रास्यति—– 'अग्नेरनीकम्' इति त्रिपदया विराजा ॥ हे अपां नपात्, अपां नप्तः चतुर्थः । "सुबामन्त्रिते" (पा २·१·२) इति पराङ्गवद्भावे षष्ठ्यामन्त्रितसमुदायस्य षाष्ठिकमामन्त्रिताद्युदात्तत्वम् (पा ६·१·१९८)। अग्नेः तव अनीकं मुखम् अपः अब्रूपम् आ विवेश । तस्माद् असुर्यम् *असुरस्य स्वम्* असुरैः क्रियमाणं यज्ञविघातं प्रतिरक्षन् प्रतिनिवारयन् तत्प्रतिनोदेन अस्मान् रक्षन् दमेदमे यज्ञगृहे यज्ञगृहे यागे यागे इत्यर्थः । समिधं समित्स्थानीयं तव समिन्धनम् इदं बर्हिः हे अग्ने, यक्षि स्वीकुरु तेन संगतो भव । संगतिकरणे यजिः[८] । लेटि "बहुलं छन्दसि" (पा २·४·७३) इति शपो लुक् ॥

तत्स्रुवाहुत्याभिजुहोति—– 'प्र ते' इति त्रिष्टुभैकपदया ॥ हे अग्ने तव जिह्वा घृतं प्रतीत्य उत् चरण्येत् उत्क्षिप्य भक्षयतु । चरण गतौ कण्ड्वादिः ॥

विपुला सार्वकालिकी[२] । गम्भीरा आदरयुक्तेत्यर्थः । द्वेषः द्वेषिणो बाधस्व । निर्ऋतिं यज्ञविघातिनीं पराचैः कुरु[३] तिरस्कुर्वित्यर्थः । अस्माभिः कृतम् अपि पापमस्मत्तः प्रमोचय ॥

अभिष्ठित इति ॥ कल्पः—– "अभिष्ठितो वरुणस्य पाश इत्युदक्रान्तमभितिष्ठन्ते[४]" (आपश्रौ ८·७·२६) इति । जलमध्यवर्ती सूक्ष्मतन्त्वाकारो बन्धनहेतुर्जीवविशेषो वरुणस्य[५] पाशः । सोऽयम् अभिष्ठितः पादाक्रमणेन तिरस्कृतः ॥

अग्नेरिति ॥ कल्पः—– "अग्नेरनीकमप आ विवेशेति सुच्यमाधारयति" (आपश्रौ ८·८·३) इति । पाठस्तु—– 'अग्नेरनीकमप आ विवेश । अपां नपात् प्रतिरक्षन्नसुर्यं दमेदमे समिधं यक्ष्यग्ने' इति ॥ अग्नेः अनीकं मुखमप्सु प्रविष्टम् । हे अपां नपात् एतन्नामक अग्ने, दमेदमे तत्तद्गृहे असुर्यम् असुरैः कृतं यज्ञविघ्नं प्रतिरक्षन् प्रतिनिवर्त्य यज्ञं पालयन् समिधं समिन्धनसाधनं घृतं यक्षि संगतं कुरु । ते तव

*–*[द्र. पा ४·४·१२३] । ८. व–यजेः ।

२. आ–'कालिकीत्यर्थः । ३. क–'कुरु' नास्ति । ४. क–'मधितिष्ठन्ते । ५. इ.व.क.त्रि१–वरुण' ।

जिह्वा घृत प्रति शत वरणेत् उद्युक्ता भवतु ॥ 'उरु हि राजा,' इत्यादिमन्त्रान् व्याचिख्यासु प्राचीन-मनुष्ठानं विधत्ते—" अवभृथयजूंषि जुहोति यदेवार्वाचीनमेकहायनादेनः करोति तदेव तैरव यजते " ( तैसं ६ ६·३ ) इति । अवभृथाख्यं कर्म कर्तुमुदकसमीपं जिगमिषुः " आयुर्दा " ( तैस १·३·१४ ) " इत्यादिभि-स्त्रिभिर्मन्त्रैर्जुहुयात् " । तथा च सूत्रम्—" आयुर्दा अग्ने हविषो जुषाण इत्यवभृथमवैष्यञ्जुहुयात् । अवभृथ निचङ्कुणेति च । नमो रुद्राय वास्तोष्पतय आयने विद्रवण उद्याने यत्परायण आवर्तने विवर्तने यो गोपायति तं हुवे " ( आपश्रौ १३·१९ १०–१३ २०·१ ) इति । इत पूर्वमेकस्मिन् संवत्सरे यत् कृत पापं " तदेतै होमैः " अवयजते विनाशयति ॥ अवभृथमुद्दिश्योदकसमीपे गमनं विधत्ते—" अपोऽवभृथमवैत्यप्सु वै वरुण साक्षादेव वरुणमव यजते " ( तैस ६·६·३ ) इति । अपां प्राप्त्या तदभिमानिनं वरुणं साक्षादव्यवधानेनैवाव-यजते पूजयति ॥ गमनकाले प्रस्तोतुः सामगानं विधत्ते—" वर्त्मना वा अन्वित्य यज्ञं रक्षांसि जिघां-सन्ति साम्ना प्रस्तोताऽन्ववैति साम वै रक्षोहा रक्षसामपहत्यै " ( तैस ६·६·३ ) इति । त्रिरवसरणा विधत्ते—" त्रिर्निधनमुपैति त्रय इमे लोका एभ्य एव लोकेभ्यो रक्षांस्यप हन्ति " ( तैसं ६·६·३ ) इति ॥ ऋत्विग्यजमानानां सर्वेषां निधनोच्चारणं विधत्ते—" पुरुषःपुरुषो निधनमुपैति पुरुष पुरुषो हि रक्षस्वी रक्षसामपहत्यै " ( तैस ६ ६·३ ) इति । रक्षस्वी सर्वेषां प्रत्येकं बाधकं रक्षोऽस्तीत्यर्थ । अत्र सूत्रम्—" सर्वे *सपत्नीकाश्च साम्नो निधनमुपयन्ति । अर्धाध्वे द्वितीयम् । प्राप्य तृतीयम् " ( आपश्रौ १३ २०·४ ) इति ॥ मन्त्रोक्तो मार्गविस्तारः पादप्रतिष्ठार्थं इत्याह—" उरु हि राजा वरुणश्चकारेत्याह प्रतिष्ठित्यै " ( तैस ६ ६·३ ) इति ॥ भिषक्शब्देन यजमानस्य पापोपद्रवपरिहारः सूच्यत इत्याह—" शतं ते राजन् भिषज सहस्रमित्याह भेषजमेवास्मै करोति " ( तैसं ६ ६ ३ ) इति ॥ मन्त्रेणैव वरुणपाश परिहियत इत्याह—" अभिष्ठितो वरुणस्य पाश इत्याह वरुणपाशमेवाभि तिष्ठति " ( तैसं ६ ६·३ ) इति ॥ अप्सु बर्हिः प्रक्षिप्य तस्योपरि जुहुयादिति विधत्ते—" बर्हिरभि जुहोत्याहुतीनां प्रतिष्ठित्या अथो अग्निवत्येव जुहोति " ( तैसं ६ ६·३ ) इति ॥ " अग्निवान् वै दर्भस्तम्बः " ( तैब्रा २ २·१ ) इति श्रुतेरग्नियुक्ततरम् । अत्र सूत्रम्—" तृणं प्रहृत्य स्रौवमाघारयति । यदि वा पुरा तृणं स्यात् तस्मिञ्जुहुयात् " ( आपश्रौ ८·७ २८–२९ ) इति । चोदकप्राप्तेषु पञ्चसु प्रयाजेषु बर्हिर्नामकं चतुर्थं प्रयाजं निषेधति—" अपबर्हिषः प्रयाजान् यजति प्रजा वै बर्हिः प्रजा एव वरुणपाशान् मुञ्चति " ( तैस ६ ६ ३ ) इति ॥ यद्यप्यत्राऽऽज्यभागौ चोदकादेव प्राप्तौ तथाऽपि मन्त्रविशेषमभिप्रेत्य पुनर्विधत्ते—" आज्यभागौ यजति यज्ञस्यैव चक्षुषी नान्तरेति " ( तैसं ६·६·३ ) इति । आज्यभागयोर्यज्ञचक्षुष्ट्वमन्यत्र श्रुतम्—" चक्षुषी वा एते यज्ञस्य यदाज्यभागौ " ( तैसं २ ६ २ ) इति । प्रकृतौ " अग्निर्वृत्राणि " ( तैसं ४ ३ १३ ) इत्यादिके पुरोनुवाक्ये । [illegible] तु " अप्स्वग्ने सधिष्टव " ( तैस ४·२·११ ) इत्यादिके । तथा च सूत्रम्—" अप्सुमन्तावाज्यभागौ यजति । अप्स्वग्ने इत्येषा । अप्सु मे सोमो अब्रवीत् " ( आपश्रौ ८·८ ६–७ ) इति ॥ प्रधानदेवतां विधत्ते—" वरुणं यजति वरुणपाशादेवैनं मुञ्चति " ( तैस ६ ६ ३ ) इति ॥ स्विष्टकृद्देवतां विधत्ते—" अग्नीवरुणौ यजति साक्षादेवैनं वरुणपाशान् मुञ्चति " ( तैस ६ ६ ३ ) इति ॥ साक्षाच्छीघ्रमेवेत्यर्थः ॥ चोदकप्राप्तेषु त्रिष्वनूयाजेषु बर्हिर्नामकं प्रथमानूयाजं निषेधति—" अपबर्हिषावनूयाजौ यजति प्रजा वै बर्हिः प्रजा एव

६. त्रि१–'मनुष्टेयम् । ७–७. आ–इत्यादीनि यजूंषि जुहुयात्, त्रि–इत्यादीनि त्रीणि यजूंषि जुहुयात् । ८–८ आ–तदेत ते , त्रि१–तदेव तै होमै । ९. आ पा–' गमनकाले ' नास्ति । १० आ पा–साम्नाऽनुयानम् । ११ क–गीयमानेन साम्ना सह गच्छेयुरितिशेष । साम्नोऽन्तेऽवस्थितस्य निधननामकस्य भागस्य निरावृत्तिं त्रित्वसंख्या च, द उ–गीयमानेन साम्ना गच्छेयुरिति शेष । साम्नोऽन्तेवस्थितस्य निधन-[साधकस्य] भागस्य निरावृत्तिम्, त्रि१–गीयमानेन साम्नोऽन्तेऽवस्थितस्य निधननामकस्य भागस्य त्रिरावृत्तिम् । १२. आ–' ऋत्विग्यजमानानाम् ' नास्ति । *[ आपश्रौसूत्रे ' सहपत्नीका ' इति । ] ।

समुद्रे ते हृदयमप्स्वन्तः ।
सं त्वा विशन्त्वोषधीरुताऽऽपो यज्ञस्य त्वा यज्ञपते हविर्भिः ॥
सूक्तवाके नमोवाके विधेमा-

समुद्रे । ते । हृदयम् । अप्स्वित्यप्-सु । अन्तरिति । समिति । त्वा । विशन्तु । ओषधीः । उत । आपः । यज्ञस्य । त्वा । यज्ञपत इति यज्ञ-पते । हविर्भिरिति हविः-भिः ॥ ५.
सूक्तवाक इति सूक्त-वाके । नमोवाक इति नमः-वाके । विधेम ।

अप्सु स्रुचं प्रतिष्ठापयति—' समुद्रे ते ' इति त्रिष्टुभैकपदया ॥ हे अग्ने, तव हृदयं जुहूलक्षणं ᵛसमुद्रे समुन्दनशीलासु ᵛअप्सु अन्तः अपां मध्ये प्रतिष्ठापयामीति शेषः । " ऊडिदम् " (पा ६.१.१७१ ) इत्यप्सुः सतम्युदात्ता । " उदात्तस्वरितयोः " ( पा ८.२.४ ) इति ततः परस्यानुदात्तस्य संहितायां स्वरितत्वम् ॥ १०.

तामद्भिः पूरयति—' सन्तु ' इति त्रिष्टुभैकपदया ॥ हे जुहु, त्वाम् ᵛओषधीः ᵛउत अपि च ᵛआपः च साक्षादिदानीं त्वां ᵛसं ᵛविशन्तु प्राप्नुवन्तु । ओषधीरिति पूर्ववत् पूर्वसवर्णदीर्घः ( पा ६.१.१०१ ) ॥

ता अप्सु जुहोति—' यज्ञस्य त्वा ' इति द्विपदया त्रिष्टुभा ॥ हे ᵛयज्ञपते यजमान ᵛयज्ञस्य ᵛसूक्तवाके सूक्तवाकप्रतिष्ठे फले ᵛनमोवाके नमोवाकप्रतिष्ठे फले ᵛत्वां विधेम स्थापयामः । १५.
स्थापनकर्माऽत्र विदधातिः । ᵛहविर्भिः आभिरद्भिः अप्सु हूयमानाभिः विधेमेति ॥

---

वरुणपाशान्मुञ्चति " ( तैसं ६.६.३ ) इति ॥ प्रयाजानूयाजान् प्रशंसति—" चतुरः प्रयाजान् यजति द्वावनूयाजौ षट् सं पद्यन्ते षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठति " ( तैसं ६.६.३ ) इति ॥

समुद्रेति ॥ बौधायनः—" अथाऽप्सु स्रुचं प्रतिष्ठापयति समुद्रे ते हृदयमप्स्वन्तरिति अथैनामद्भिः पूरयति सं त्वा विशन्त्वोषधीरुताप इत्यप्स्वेवापो जुहोति यज्ञस्य त्वा यज्ञपते हविर्भिः सूक्तवाके २० नमोवाके विधेमेति " ( बौश्रौ ८.२० ) इति । आपस्तम्बस्त्वेकमन्त्रतामाह—" ऋजीषस्य स्रुचं पूरयित्वाऽप्सूपमारयति समुद्रे ते हृदयमप्स्वन्तरिति । ततो यो बिन्दुरुत्प्लवते[13] तमुपस्पृशेत् " ( आपश्रौ १३.२०.१०-११ ) इति ॥ हे जुहु, ते ᵛहृदयं बिलं समुद्रसमासु ᵛअप्सु ᵛअन्तः मध्ये प्रतितिष्ठतु । ऋजीषरूपा ओषधयस्त्वां सम्यक् प्रविशन्तु । अपि च ᵛआपः ᵛविशन्तु । अथ वा वरुणं संबोध्य व्याख्येयम् । " इदं द्यावापृथिवी " ( तैसं २.६.९ ) इत्यादिको मन्त्रः सूक्तवाकः । " नमो वाचे या चोदिता " २५.
( द्र.मैसं ४.९.२ ) इत्यादिको मन्त्रो नमोवाकः । हे ᵛयज्ञपते यजमान, त्वदीयैः ᵛहविर्भिः देवताः संतर्प्य त्वां सूक्तवाकनमोवाकद्वयोक्तफले ᵛविधेम स्थापयामः ॥

---

९. तं.व-प्रतिष्ठितमिति ।

---

१३. उ.क-ष्प्लवते ।

-वभृथ निचङ्कुण निचेरुरसि निचङ्कुणाव
देवैर्देवकृतमेनोऽयाडव मर्त्यैर्मर्त्यकृतमुरोरा नो देव रिषस्पाहि
अवभृथेत्यव-भृथ। निचङ्कुणेति नि-चङ्कुण। निचेरुरिति नि-चेरु। असि।
निचङ्कुणेति नि-चङ्कुण। अवेति। देवैः। देवकृतमिति देव-कृतम्। एनः। अयाट्।
५ अवेति। मर्त्यैः। मर्त्यकृतमिति मर्त्य-कृतम्। उरो। एति। नः। देव। रिषः। पाहि।

अप्सु अवभृथद्रव्याण्यवकिरति—'अवभृथ' इति। अत पराणि यजूंषि॥ अवभ्रियन्ते उत्सृज्यन्ते कानिचित् द्रव्याण्यस्मिन्निति अवभृथ कर्मविशेष। "अवे भृञः" (उ १६८) इति क्थन्-प्रत्यय। हे ᵛअवभृथ। कर्मण इदमामन्त्रणम्, तदभिमानिन्या देवताया वा वरुणस्य। हे ᵛनिचङ्कुण, नीचै क्वणति शब्द करोति अवकीर्णद्रव्यद्वारेणेति निचङ्कुण। कुणतेर्यङ्लुगन्तात्
१० (पा २ ४ ७४) पचाद्यचि (पा ३ १ १३४) छान्दस सप्रसारणम्। कुण शब्दोपकरणयो इत्यस्माद्वा। "न धातुलोप आर्धधातुके" (पा १ १ ४) इति गुणाभाव। "घञर्थे कविधानम्" (पा ३ ३ ५८ वा ४) इति वाऽधिकरणे क, निभृतशब्दकारद्रव्याधिकरणत्वात्। ᵛनिचेरु ᵛअसि निभृत चरसीति, निभृत वा चरत्यस्मिन्निति औणादिके उप्रत्यये (उ १) छान्दसमेत्वम्। अत्वर क्रियमाणोऽसीत्यर्थ, निगूढचरद्रव्याभिप्राय वा। किंच—हे निचङ्कुण। व्याख्यातम्। तिरोहित-
१५ द्रव्याभिप्रायम्। यद्वा—कण निमीलने, छान्दसमुत्वम्। कण गतौ वा। यन्नाम किंचित् ᵛदेवकृत देवेषु कृतमस्माभि ᵛएन पाप सम्यगनुष्ठानाभावनिमित्तम्। सप्तमीपूर्वपदप्रकृतिस्वरत्वम् (पा ६ २ २)। तत्सर्वं ᵛदेवै सह ᵛअव ᵛअयाट् अवायाक्षी अवयज विनाशयेत्यर्थ, अवयजिर्विनाशे वर्तते। यच्च ᵛमर्त्यकृत मर्त्येषु कृत पापम्। पूर्ववत् स्वर. (पा ६ २ २)। तच्च ᵛमर्त्यै सहावयज। यजे छान्दसि लुङि (पा ३ ४ ६) सिचिवृद्धौ "बहुल छन्दसि" (पा
२० ७ ३ ९७) इति तदभाव[10]। किंच—हे ᵛदेव ᵛउरो विस्तीर्णात् ᵛरिष हिंसितु हिंसाया[11] वा। रिषे क्विबन्तात् "सावेकाच" (पा ६ १ १६८) इति पञ्चम्या उदात्तत्वम्। "पातौ च बहुलम्" (पा ८ ३ ५२) इति तस्या संहिताया सत्वम्। तत ᵛन ᵛआ ᵛपाहि परिपाहि॥

अवभृथेति॥ बौधायन — "अथैतमवभृथ सप्रकिरन्ति यत्किंच सोमलिप्त भवत्यवभृथ निचङ्कुण निचेररसि निचङ्कुणाव देवैर्देवकृतमेनोऽयाडव मर्त्यैर्मर्त्यकृतमुरोरा णो देव रिषस्पाहि
२५ इति" (बौ श्रौ ८ २०) इति॥ आपस्तम्बस्तु— 'आयुर्दा अग्न', 'नमो रुद्राय वास्तोष्पतये' इत्येताभ्या मन्त्राभ्या [14]महेत मन्त्र[14] होमे विनियुक्तवान्। तच्च पूर्वमुदाहृतम् (आपश्रौ १३ १९.१-१३ २० १०)। हेऽवभृथाभिमानिन्[15] वरुण ᵛनिचङ्कुण, राक्षसभत्सनार्थं नितरा ध्वनि कारितवानसि। ᵛनिचेरु ᵛअसि अस्मद्रक्षार्थं निगूढत्वेन चरणशीलोऽसि। हे ᵛनिचङ्कुण, अस्माभिर्देवेषु कृतम् ᵛएन अपराध तै ᵛदेवै सह त्वम् ᵛअव ᵛअयाट् विनाशय। मर्त्येषु ऋत्विक्षु कृत तत्तै ᵛमर्त्यै
३० ᵛसहावायाट् विनाशय। हे ᵛदेव, ᵛउरो अधिकात् ᵛरिष देवमर्त्यकृतहिंसनात् ᵛन अस्मान् ᵛआ समन्तात्

१० त ति–इभाव। ११ मै–हिंसायाम्।

१४–१४ इ उ.पा–'सहेत मन्त्रम्' नास्ति। १५ क–°भृथकर्माभिमानिन्।

सुमित्रा न आप ओषधयः (२) सन्तु दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मो देवीराप एष वो गर्भस्तं वः सुप्रीतꣳ सुभृतमकर्म देवेषु नः सुकृतो ब्रूतात् —

सुमित्रा इति सु—मित्राः । नः । आपः । ओषधयः (२) । सन्तु । दुर्मित्रा इति दुः—मित्राः । तस्मै । भूयासुः । यः । अस्मान् । द्वेष्टि । यम् । च । वयम् । द्विष्मः । देवीः । आपः । एषः । वः । गर्भः । तम् । वः । सुप्रीतमिति सु—प्रीतम् । सुभृतमिति सु—भृतम् । अकर्म । देवेषु । नः । सुकृत इति सु—कृतः । ब्रूतात् ।

अञ्जलिनाऽप [12]उपवहति—'सुमित्रा' इति ॥ आपः ओषधयः च नः अस्मभ्यं सुमित्राः सन्तु । शोभनं मित्रं वा यासाम् । "नञ्सुभ्याम्" (पा ६·२·१७२) इत्युत्तरपदान्तोदात्तत्वम् ॥

द्वेष्टारं द्वेष्यं च [13]प्रतिरुक्षति—[14]'दुर्मित्राः' इति[14] ॥ यः अस्मान् द्वेष्टि यं च वयं द्विष्मः तस्मै आप ओषधयश्च दुर्मित्राः भूयासुः, दुष्टं [15]मित्रं मित्रवद्वर्तमानं यासाम् । छान्दसमन्तोदात्तत्वम् ॥ १०

ऋजीषमप्सु प्लावयति—'देवीरापः' इति ॥ हे देवीः देव्यः आपः । पूर्वसवर्णदीर्घः (पा ६·१·१०२) । "विभाषितं विशेषवचने बहुवचनम्" (पा ८·१·७४) इति प्रथमस्याविद्यमानवत्त्वनिषेधात् द्वितीयं निहन्यते । एषः ऋजीषाख्यः वः युष्माकं गर्भः युष्मत्प्रभवः । अतः तं वः युष्मदर्थं सुप्रीतं युष्माकं सर्वलोकस्य अतिशयेन प्रीतिकरं सुभृतं सुष्ठु भृतं च अकर्म कृतवन्तो वयम् । "मन्त्रे घस॰" (पा २·४·८०) इति ल्लेर्लुक्, "गतिरनन्तरः" (पा ६·२·४९) इति गतेः प्रकृतिस्वरत्वम् । अतोऽस्मानपि यूयं देवेषु सुकृतः सुष्ठु कर्म कृतवतः ब्रूतात् ब्रूत । "तस्य तात्" (पा ७·१·४४) इति तादादेशः ॥ १५

पाहि ॥ पाठक्रममनादृत्यैतन्मन्त्रमादौ व्याचष्टे—"अवभृथ निचङ्कुणेत्याह यथोदितमेव वरुणमवयजते" (तैसं ६·६·३) इति । निचेरनिचङ्कुणादिशब्दोदितं वरुणमवयजत उपचरति । धातूनामनेकार्थत्वाद्यथोचितं व्याख्येयम् ॥ वरुणसंबोधनपक्षमाश्रित्य व्याचष्टे—"समुद्रे ते हृदयमप्स्वन्तरित्याह समुद्रं ह्यन्तर्वरुणः" (तैसं ६·६·३) इति ॥ संशब्देन यजमानस्याद्भिरोषधीभिश्च समृद्धिः सूच्यत इत्याह—"सं त्वा विशन्त्वोषधीरुताप इत्याहाद्भिरेवैनमोषधीभिः सम्यञ्चं दधाति" (तैसं ६·६·३) इति ॥ २०

सुमित्रेति ॥ बौधायनः—"अथाञ्जलिनाऽप [16]उपहन्ति सुमित्रा न आप ओषधयः सन्त्विति । तां दिशं निरुक्षति यस्यां दिश्यस्य द्वेष्यो भवति दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यं च वयं द्विष्म इति" (बौश्रौ ८·२०) इति । आपस्तम्बस्यैक एव मन्त्रः—"सुमित्रा न आप ओषधय इत्यपः प्रगाह्य" (आपश्रौ १३·२१·१; ८·८·१५) इति ॥ स्पष्टो मन्त्रार्थः ॥ २५

देवीरिति ॥ कल्पः—"देवीराप इत्यवभृथं यजमानोऽभिमन्त्र्य" (आपश्रौ १३·२१·१) इति । पाठस्तु—'देवीराप एष वो गर्भस्तं वः सुप्रीतꣳ सुभृतमकर्म देवेषु नः सुकृतो ब्रूतात्'

१२. तं.ति.पं.च—उपहरति । १३. च—प्रतिनिक्षिपति । १४—१४. मे—'दुर्मित्राः इति' नास्ति । ३०
१५. तं—अमित्रम् ।

१६. आ.क—उपसंगृह्य ।

प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाश

एधोऽस्येधिषीमहिं समिदसि तेजोऽसि तेजो मयिं

प्रतियुत इति प्रति-युत । वरुणस्य । पाशं । प्रत्यस्त इति प्रति-अस्त । वरुणस्य । पाशं ।

एधं । असि । एधिषीमहि । समिदिति सम्-इत् । असि । तेजं । असि । तेजं । मयिं ।

अपामन्त प्रतियोति—' प्रतियुत ' इति ॥ प्रतियुत प्रत्येक पृथक्कृत वरुणस्य पाश । पृथक्कृत्य च प्रत्यस्त प्रतिक्षिप्त. विनाशित इत्यर्थः । पूर्ववद्गते प्रकृतिस्वरत्वम् (पा ६ २ ४९ ) ॥

प्रपये समिध कुर्वते—' एधोऽसि ' इति ॥ हे समित्, एधः अमि एधनी वर्धनी त्वमस्यग्ने । अतस्तादृश्या त्वया वयमपि एधिषीमहि वृद्धिं प्राप्नुयाम । यद्वा—तादृश्या त्वया अग्निं वर्धयेम ॥

आहवनीये समिधमभ्यादधाति—' समित् ' इति ॥ समित् समिन्धनी सदीपनी त्वमग्ने असि । तस्मात् तेज असि तेज साधनमग्नेरसि । तादृशी सा त्व मयि अपि तेजो धेहि स्थापय ॥

इति । हे आप. देव्य , एष वरुणो युष्माकं गर्भवदन्तरवस्थितोऽतो व[17] युष्माकं परितोषाय त वरुण हविषा सुप्रीत सुभृत सुष्ठु पुष्टं च अकर्म वय कृतवन्त । स वरुण न अस्मान् सुकृत सम्यगनुष्ठातृन् प्रीणातु ॥ स्पष्टार्थत्वात्[18] ' सुमित्रा न आप ' इति मन्त्रमुपेक्ष्य ' देवीराप ' इत्यस्य स्पष्टार्थतामाह—" देवीराप एष वो गर्भ इत्याह यथायजुरेवैतत् " (तैसं ६ ६ ३ ) इति ॥ ऋजीषस्याऽप्सु प्रहारेणोद्गताना बिन्दूना भक्षणाभक्षणयोर्दोषसद्भावात् तत् परिहारायोपस्पर्शं विधत्ते—" पशवो वै सोमो यद्बिन्दूना भक्षयेत पशुमान्स्याद्वरुणस्त्वेन गृह्णीयाद्यन्न भक्षयेदपशु स्यान्नैन वरुणो गृह्णीयादुपस्पृश्यमेव पशुमान् भवति नैनं वरुणो गृह्णाति " (तैसं ६ ६ ३ ) इति । सोमस्य पशुप्राप्तिसाधनत्वात् पशुत्वम् । भिद्यन्त इति भिन्दवो जलकणा । वरुणग्रहण नाम महोदराख्यरोगोत्पत्ति ॥

प्रतियुत इति ॥ कल्प —" अथापामन्ते प्रतियौति प्रतियुतो वरुणस्य पाश प्रत्यस्तो वरुणस्य पाश इति " (बौश्रौ ८·२० ) इति ॥ बन्धनस्य हेतु वरुणस्य पाश प्रतियुत पृथक्कृत । प्रत्यस्त विनाशित ॥ मन्त्रस्यार्थस्तथैव फलतीत्याह—" प्रतियुतो वरुणस्य पाश इत्याह वरुणपाशादेव निर्मुच्यते " (तैसं ६ ६ ३ ) इति ॥ जलान्निर्गत्य पुनस्तज्जलमदृष्ट्वैव देवयजनदेशे गन्तव्यमिति विधत्ते—" अप्रतीक्षमा यन्ति वरुणस्यान्तर्हित्यै " (तैसं ६ ६ ३ ) इति । अन्तर्हितिरदर्शनम् ॥

एध इति ॥ कल्प —" एधोऽस्येधिषीमहीत्याहवनीये समिध आधाय अपो अन्वचारिषमित्युपतिष्ठन्ते " (आपश्रौ १३·२२·६ ) इति । पाठस्तु—' एधोऽस्येधिषीमहि समिदसि तेजोऽसि तेजो मयि धेह्यपो अन्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वाꣳ अग्न आऽगमं तं मा सꣳ सृज वर्चसा ' इति ॥ हे समित् , त्वम् एध असि वृद्धिहेतुरसि । अतो वयम् एधिषीमहि अभिवृद्धिं प्राप्ता. । अयमाद्यो मन्त्र । समित् समिन्धनसाधनम् असि, इति द्वितीय[19] । तेज कान्तिसाधनम् असि । कान्ति

१७ इ उ पा मा–देव । १८ इ उ त्रि१.पा मा–' स्पष्टार्थत्वात् ' नास्ति । १९. इ उ– द्वितीयो मन्त्र ।

धेह्यपो अन्वचारिषꣳ रसेन समसृक्ष्महि ।
पयस्वाꣳ अग्न आऽगमं तं मा सꣳसृज वर्चसा ॥ ४५ ॥
[ दमेदम ओषधय आ षट् च ]

धेहि । अपः । अन्विति । अचारिषम् । रसेन । समिति । असृक्ष्महि ।
पयस्वान् । अग्ने । एति । अगमम् । तम् । मा । समिति । सृज । वर्चसा ॥ ४५ ॥ ५
[ मैसं १-३-३९; कासं ४-१३; कपिसं ३-११; वासं ८-२३-२७ ]

आहवनीयमुपतिष्ठते—'अपः' इत्यनुष्टुभा ॥ हे अग्ने, [v]अपः कर्म । व्यत्ययेनान्तोदात्तत्वम् । अप्शब्द एव वा कर्मणि वर्तते । "ऊडिदम्" (पा ६-१-१७१) इति शस उदात्तत्वम् । अपोऽवभृथाख्यं कर्म [v]अनु [v]अचारिषम् आनुपूर्व्येण कृतवानस्मि । अतो वयं सर्वेऽपि [v]रसेन फलेन [v]सम् [v]असृक्ष्महि संगताः स्मः । वचनव्यत्ययो वा, समसृक्ष्महि संगतोऽस्मि । "लिङ्सिचावात्मनेपदेषु" (पा १-२-१०) इति सिचः कित्त्वम् । हे [v]अग्ने, [v]पयस्वान् अन्नवान् हविर्भिस्तद्वान् त्वाम् [v]आ [v]अगमम् आगतोऽस्मि । "आतोऽटि नित्यम्" (पा ८-३-३) इति संहितायां रुत्वम् । तस्मात्त्वां प्राप्तं [v]मा [v]सं [v]सृज संयोजय [v]वर्चसा [19]दीप्त्या बलेन वा[19] ॥ १०

॥ इति चतुर्थप्रपाठके चत्वारिंशोऽनुवाकः ॥

[v]मयि [v]धेहि[20] स्थापय, इति तृतीयः । एतैस्त्रिभिः समिध आदध्यात् । [v]अपः [v]अनु जलमनुप्राप्य [v]अचारिषम् अवभृथकर्मानुष्ठितवानस्मि । [v]रसेन फलेन [v]समसृक्ष्महि संगतोऽस्मि । हे अग्ने, [v]पयस्वान् क्षीरादिसमृद्धियुक्त, [v]आ [v]अगमम् इहाऽऽगतोऽस्मि । [v]तं [v]मा वर्चसा बलेन संयोजय ॥ समिदाधानेन वह्निः पूज्यत इत्याह— "एधोऽस्येधिषीमहीत्याह समिधैवाग्निं नमस्यन्त उपायन्ति" (तैसं ६-६-३) इति । नमस्यन्तः पूजयन्तः ॥ 'मयि धेहि' इत्यस्याभिप्रायमाह—"तेजोऽसि तेजो मयि धेहीत्याह तेज एवाऽऽत्मन् धत्ते" (तैसं ६-६-३) इति । अवशिष्टः [21]स्पष्टत्वादुपेक्षितः ॥ १५ २०

अत्र विनियोगसंग्रहः—

"उरुं वदन्ति गच्छन्तः सर्वेऽप्यवभृथं प्रति ।
प्राप्तं दृष्ट्वा [22]जलं जप्यमभ्याक्रामति तज्जलम् ॥ १ ॥
अग्नेः स्रुचाऽधारयेत्तु समृजीषं जले[23] क्षिपेत् ॥
अवेति गमने होमः सुमित्रा अवगाहनम् ॥ २ ॥ २५
देवीरित्यभिमन्त्र्याथ प्रत्युदृच्छति तज्जलात् ।
एधः समित्तेज एतैर्होम आहवनीयके ॥
[24]अपो अग्नेरुपस्थानमिति[24] मन्त्रास्त्रयोदश" ॥ ३ ॥ इति ॥

१९-१९. मै-बलेन; ति.पं-दीप्त्या वा बलेन ।

२०. इ.उ.त्रि१.पा.मां-'धेहि' नास्ति । २१. इ.उ.त्रि१.पा.मां-'स्पष्टत्वात्' नास्ति । ३०
२२. आ.क-जले । २३. आ.ब-जलम् । २४-२४. त्रि१-अपोऽस्याग्नेरुपस्थानमिति ।

यद्यप्येतावता सौमिकमन्त्रकाण्डं तद्व्याख्यानरूपं ब्राह्मणं च समाप्तं तथाऽपि सन्ति ब्राह्मणशेषा अष्टावनुवाकाः [२५]ते स्वत्रैव विवियन्ते[२६]। तेष्वनुवाकेषु क्रमेणैतेऽर्था प्रतिपाद्यन्ते—यूपैकादशिनी, पश्वेकादशिनी, पात्नीवत पशु, साम्यचर्वादि, [२६]अतिग्राह्यो ग्रह, अदाभ्यग्रह, अंशुग्रह, षोडशीग्रहश्चेति[२६]। तत्र समनन्तरानुवाकप्रतिपाद्या यूपैकादशिन्येकयूपेन सह विकल्पिता। तथा चान्यत्र श्रूयते—"एकयूपो

५ वैकादशिनी वा। अन्येषा यज्ञाना यूपा भवन्ति। एकविंशिन्यश्वमेधस्य" ( तैब्रा ३.८.१९ ) इति। अग्निष्टोमे च सवनीयः पशुस्तेन सहोपरितनानुवाके वक्ष्यमाणा ऐकादशिना पशवो विकल्पिता। तथा च सूत्रम्—"क्रतुपशव ऐकादशिनाश्च विकल्पन्ते" ( आपश्रौ १४.१.१ ) इति। तत्रैकादशिनपश्वर्था यूपैकादशिनी, ता विधत्ते—"स्फ्येन वेदिमुद्धन्ति रथाक्षेण वि मिमीते यूपं मिनोति त्रिवृतमेव वज्रं संभृत्य भ्रातृव्याय प्र हरति स्तृत्यै" ( तैसं ६.६.४ ) इति। भूमेरुपरितनममेध्यमपहन्तुं वेदिस्थानमुद्ध-

१० न्यात्। तस्मिन् स्थाने वेदिरेकयूपपक्षे पदैर्विमातव्या[२७]। तथा च पूर्वमुदाहृतम्—"त्रिंशत् पदानि पश्चात्तिरश्ची" ( तैसं ६.२.४ ) इत्यादि। एकादशिनीपक्षे स्ववकाशस्य पर्याप्तये रथाक्षेण वेदिं मातव्या। तथा च सूत्रम्—"यत्प्राग्वेदिसंमानात् तत्कृत्वा दशरथाक्षामेकादशोत्तरां रज्जुं मित्वा" ( आपश्रौ १४.५.१० ) इति॥ उपरशब्देन प्रादेशपरिमिता यूपावटदेशा विवक्षिता। द्वयोर्द्वयोरवटदेशयोर्मध्यदेशो रथाक्षेण परिमितस्तादृश्या वेदेर्दक्षिणासमारम्योत्तरासपर्यन्तेषु पङ्क्तिरूपेणावस्थितेष्वेकादशस्ववटेषु

१५ यूपानुच्छ्रयेत्। यूपमिति जात्येकवचनम्। स्फ्यरथाक्षयूपास्त्रयो वज्रस्य भागा। तथा चाऽऽम्नातम्—"इन्द्रो वृत्राय वज्रं प्राहरत् स त्रेधा व्यभवत् स्फ्यस्तृतीयं रथस्तृतीयं यूपस्तृतीयम्" ( तैसं ५.२.६ ) इति। तेषां त्रयाणामत्र मेलनाद्वज्रस्त्रिवृत् संपद्यते। स्तृत्यै हिंसार्थे॥ यूपावटस्यार्धं वेद्यामर्धं बहिश्चेत्येवं तद्देशं विधत्ते—"यदन्तर्वेदि मिनुयाद्देवलोकमभि जयेद्यद्बहिर्वेदि मनुष्यलोकं वेद्यन्तस्य संधौ मिनोत्युभयोर्लोकयोरभिजित्यै" ( तैसं ६.६.४ ) इति। अन्त समीपदेश। वेदिश्चान्तश्च वेद्यन्त तत्संधावुच्छ्रयेत्॥

२० उच्छ्रये काश्चित् काम्यान् विशेषान् विधत्ते—"उपरसंमितां मिनुयात् पितृलोककामस्य रशनसंमितां मनुष्यलोककामस्य चषालसंमितामिन्द्रियकामस्य सर्वान्त्समान् प्रतिष्ठाकामस्य ये त्रयो मध्यमास्तान्त्समान् पशुकामस्य" ( तैसं ६.६.४ ) इति। तक्षणरहितानि यूपमूलानि उपराणि तैरेकादशिनी संमिता सदृशी। एकस्योपरस्य यावान् आयामस्तावानेव इतरेषां दशानामित्यर्थ। रशनादेशस्यैक्येन समाना रशनसंमिता। चषालविस्तारेण समाना चषालसंमिता। अत एव सूत्रकारेणोक्तम्—"आयामत उपराणि समानि स्यु।

२५ तिर्यक्तो मध्यानि रशनाश्च। प्रथिम्नश्चषालानि" ( आपश्रौ १४.६.११ ) इति। सर्वानुपररशनादेशचषालविस्तारान्। एकादशसु यूपेषु मध्यमस्तच्छार्श्ववर्तिनौ द्वौ तेषां त्रयाणामेवोपरादिसाम्यनियमो नेतरेषाम्। तथा च सति पशुप्राप्ति॥ तामेव पशुप्राप्तिं दर्शयति—"एतान् वा अनु पशव उप तिष्ठन्ते पशुमानेव भवति" ( तैसं ६.६.४ ) इति॥ एतान्[२८] समान् अनु यजमानं पशव प्राप्नुवन्ति॥ त्रिभ्योऽतिरिक्तेष्वष्टास्वन्योन्यस्पर्शं विधत्ते—"व्यतिषजेदितरान् प्रजयैवैनं पशुभिर्व्यतिषजति" ( तैसं ६.६.४ ) इति।

३० यूपैकादशिन्या कामनाभेदेन दक्षिणदेशप्रवणत्वं निन्दित्वोत्तरदेशप्रवणत्वं विधत्ते—"यं कामयेत प्रमायुकः स्यादिति गर्तमितं तस्य मिनुयादुत्तरार्ध्यं वर्षिष्ठमथ ह्रसीयाꣳसमेषा वै गर्तमिद्यस्यैवं मिनोति ताजक् प्र मीयते दक्षिणार्ध्यं वर्षिष्ठं मिनुयात् सुवर्गकामस्याथ ह्रसीयाꣳसमाक्रमणमेव तत्सेतुं यजमान कुरुते सुवर्गस्य लोकस्य समष्ट्यै" ( तैसं ६.६.४ ) इति। गर्तशब्देन दक्षिणदेशनिम्नश्मशाने[२९] विवक्षितं गर्तवत् मीयन्ते यूपा अस्यामेकादशिन्यामिति गर्तमित्, तादृशीमुच्छ्रयेत्। अग्निष्ठनामको यो मध्यमो यूपस्तस्मा-

३५ २५–२५ ऽ ड.पा–तेऽत्रैवाधीयते, मा–तत्रैवाधीयन्ते। २६–२६ आ–अतिग्राह्योऽदाभ्योऽंशुः षोडशी चेति। २७. आ–विमिता। २८ क त्रि१–एतांश्चान्। २९. त्रि१–निम्ने श्मशानम्, क–निम्नत्वं श्मशानम्।

दुत्तरार्धे स्थितं यूपपञ्चकं वर्षिष्ठमत्युन्नतम्। दक्षिणार्धे स्थितं पञ्चकं ह्रसीयांसं ह्रस्वम्। ईदृश्येकादशिनी गर्तमिद् तस्यामुच्छ्रितायां तदानीमेव म्रियते। स्वर्गार्थमुक्तवैपरीत्यं कुर्यात्। आक्रम्यत आरुह्यते स्वर्गः अनेन सेतुनेत्याक्रमणः॥ लौकिकदृष्टान्तेन [30]एकस्मिन्नग्निष्ठे रशनाद्वयवेष्टनमग्निष्ठद्वये एकरशनावेष्टननिषेध-द्वारा पुरुषस्य विवाहद्वयविधिः स्त्रिया विवाहद्वयनिषेधश्च विदधदेकस्मिन् यूपे[30] रशनाद्वयं विधत्ते—"यदेकस्मिन् यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्दते यन्नैकां रशनां द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्दते" (तैसं ६·६·४) इति। अत्र सूत्रम्—"अग्निष्ठं द्वाभ्यां रशनाभ्यां परिवीय" (आपश्रौ १४·५·१२) इति॥ [31]रशनायाः स्त्रीत्वादेकस्मिन् यूपे[31] रशनाद्वयस्यान्तयोर्मेलनं प्रवेष्टनं च कामनाभेदेन विधत्ते—"यं कामयेत स्त्र्यस्य जायेतेत्युपान्ते तस्य व्यतिषजेत् स्त्र्येवास्य जायते यं कामयेत पुमानस्य जायेतेत्याऽन्तं तस्य प्र वेष्टयेत् पुमानेवास्य जायते" (तैसं ६·६·४) इति। अन्तयोः समीप उपान्ते। अन्तेन सहितमान्तं रशनाद्वयभागम्॥ एकादशभ्योऽतिरिक्तमुपशयाख्यं यूपं विधत्ते—"असुरा वै देवान् दक्षिणत उपानयन् तान् देवा उपशयेनैवापानुदन्त तदुपशयस्योपशयत्वं यद्दक्षिणत उपशय उपशये भ्रातृव्यापनुत्त्यै" (तैसं ६·६·४) इति॥ पुरा कदाचिदसुरा देवान् स्ववशान् कृत्वाऽग्निष्ठाद्यूपाद् दक्षिणभागे समानयन्। तानसुरान् देवा उपशयेनैकादशिनीसमीपे शयानेन यूपेनापानुदन्त। समीपशयनाद् उपशयनाम संपन्नम्। उपशय उपशेते शयानत्वेन पातयेदित्यर्थः। अत्र सूत्रम्—"उपशयं द्वाभ्यां रशनाभ्यां[32] परिवीयाग्रेण दक्षिणं यूपं [33]प्राञ्चं निदधाति" (आपश्रौ १४·६·१२) इति॥ द्वेष्यं पशुत्वेन निर्दिशेदिति विधत्ते—"सर्वे वा अन्ये यूपाः पशुमन्तोऽथोपशय एवापशुस्तस्य यजमानः पशुर्यन्न निर्दिशेदार्तिमार्च्छेद्यजमानोऽसौ ते पशुरिति निर्दिशेद्यं द्विष्यात्तमेव द्वेष्टि तमस्मै पशुं निर्दिशति" (तैसं ६·६·४) इति। अग्निष्ठादय एकादश यूपा वक्ष्यमाणैराग्नेयादिपशुभिरुपेताः। उपशये [illegible] पश्वन्तराभावात् यजमानस्याऽऽर्तिप्राप्तिर्द्वेष्यं निर्दिश्य तद्वारयेत्॥ द्वेष्याभावे सूचकं निर्दिशेदिति विधत्ते—"यदि न द्विष्यादाखुस्ते पशुरिति ब्रूयान्न ग्राम्यान् पशून् हिनस्ति नाऽऽरण्यान्" (तैसं ६·६·४) इति॥ विहितानाम् एकादशिनीं प्रशंसति—"प्रजापतिः प्रजा असृजत सोऽन्नाद्येन व्यार्ध्यत स एतामेकादशिनीमपश्यत् तया वै सोऽन्नाद्यमवारुन्ध यद्दश यूपा भवन्ति दशाक्षरा विराडन्नं विराड् विराजैवान्नाद्यमव रुन्धे य एकादशः स्तन एवास्यै स दुह एवैनां तेन" (तैसं ६·६·४) इति॥ दशयूपानां विराड्रूपत्वेन धेनुत्वादेकादशो यूपः स्तनो भवति॥ पात्नीवताख्यं त्रयोदशं यूपं विधत्ते—"वज्रो वा एषा सं मीयते यदेकादशिनी सेश्वरा पुरस्तात् प्रत्यञ्चं यज्ञं संमर्दितोर्यत् पात्नीवतं मिनोति यज्ञस्य प्रत्युत्तब्ध्यै सयत्वाय" (तैसं ६·६·४) इति। सैकादशिनी वज्ररूपा सती पुरस्तादवस्थाय प्रत्यगवस्थितं यज्ञं संमर्दितुमीश्वरा भवति। मर्दितस्य पुनः समाधानं प्रत्युत्तब्धिः। सयो बन्धः। 'पिञ् बन्धने' इत्यस्माद्धातोरुत्पन्नत्वात्। सयत्वाय दृढत्वायेत्यर्थः॥ यूपैकादशिनी निरूपिता॥

अथ पश्वेकादशिनीं विधत्ते—"प्रजापतिः प्रजा असृजत स रिरिचानोऽमन्यत स एतामेकादशिनीमपश्यत् तया वै स आयुरिन्द्रियं वीर्यमात्मन्नधत्त प्रजा इव खलु वा एष सृजते यो यजते स एतर्हि रिरिचान इव यदेषैकादशिनी भवत्यायुरेव तयेन्द्रियं वीर्यं यजमान आत्मन् धत्ते" (तैसं ६·५·५) इति। प्रजासृष्ट्या वीर्यादिक्षयाद्रिक्तोऽहमिति धीः। तथा यज्ञप्रयासेनाऽपि। पश्वेकादशिन्या तत्समाधानम्। ते च पशुविशेषा देवतासहिता अश्वमेधप्रकरणे समाम्नाताः—"आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्यः पौष्णः श्यामः शितिपृष्ठो बार्हस्पत्यः शिल्पो वैश्वदेव ऐन्द्रोऽरुणो मारुतः कल्माष ऐन्द्राग्नः संहितोऽधोरामः सावित्रो वारुणः पेत्वः" (तैसं ५·५·२२) इति। कृष्णग्रीवत्वादिभिर्विशेषिताः सर्वेऽप्यजाः।

---

३०–३०. आ.हा–' एकस्मिन्नग्निष्ठे......यूपे ' नास्ति। ३१–३१. आ.हा–' रशनायाः स्त्रीत्वादेकस्मिन् यूपे ' नास्ति। ३२. आ.हा–' रशनाभ्याम् ' नास्ति। ३३. आ–' प्राञ्चम् ' नास्ति।

मेषी स्त्रैणैश्चान्यज्जाति । विशेषणानि च तस्मिन्नेव प्रकरणे व्याख्यास्यन्ते ॥ तानेतानत्र पशून् विशेषेण प्रशंसन् विशेषविधिमुन्नयति—"प्रैवाऽऽग्नेयेन वापयति मिथुनं सारस्वत्या करोति रेतः सौम्येन दधाति प्र जनयति पौष्णेन बार्हस्पत्यो भवति ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै प्रजाः प्र जनयति वैश्वदेवो भवति वैश्वदेव्यो वै प्रजाः प्रजा एवास्मै प्र जनयतीन्द्रियमेवैन्द्रेणाव रुन्धे विशं मारुतेनौजो बलमैन्द्राग्नेन प्रसवाय सावित्रो निर्वरुणत्वाय वारुणः" ( तैसं ६.६.७ ) इति । प्रवापयति बीजं स्वतः[35] संपादयति । आग्नेयस्य पुंसः सारस्वत्या स्त्रिया सह मिथुनीकरणम् । सौम्येन योषिति रेतोधारणम् । पौष्णेन प्रजोत्पत्तिः । बार्हस्पत्येन ब्रह्मण उत्पत्तिसाधनत्वम् । वैश्वदेवेन प्रजानां सर्वत्वानुग्रहः । ऐन्द्रेणेन्द्रियपाटवम् । मारुतेन जनपदप्राप्तिः । ऐन्द्राग्नेन [36]देहपुष्टिर्बलं च । सावित्रेणानुष्ठाने प्रेरणम् । वारुणेनोपद्रवराहित्यम् ॥ अत्र पठ्यमानानां पशूनां वैश्वदेवैन्द्रमारुतानामितरपशुवत् पाठत एव क्रमो यद्यपि प्राप्तस्तथापि तं क्रममनूद्य प्रशंसति—"मध्यत ऐन्द्रमा लभते मध्यत एवेन्द्रियं यजमाने दधाति पुरस्तादैन्द्रस्य वैश्वदेवमा लभते वैश्वदेवं वा अन्नमन्नमेव पुरस्ताद्धत्ते तस्मात् पुरस्तादन्नमद्यत ऐन्द्रमालभ्य मारुतमा लभते विड्वै मरुतो विशमेवास्मा अनु बध्नाति" ( तैसं ६.६.७ ) इति । वैश्वदेवमारुतयोर्मध्यमैन्द्रस्य स्थानम् । तेन मध्यम एव वयसि बलाधिक्यं यजमाने स्थापयति । विश्वे देवा अन्नाभिमानिनः । वैश्वदेवस्य पुरस्तादनुष्ठितत्वात् तत्संपन्नमन्नं पुरस्तादेव स्थापयति । तथाऽन्नं पुरस्तात् मुखेनाद्यते । मारुतस्यैन्द्रमनु वर्तमानत्वात् मरुद्रूपा ग्रामनिवासिप्रजा[37] अस्य यजमानस्यानुरूपाः करोति ॥ कामनाविशेषेण क्रमव्यत्यासं विधत्ते—"यदि कामयेत योऽवगतः सोऽप रुध्यतां योऽपरुद्धः सोऽव गच्छत्विति ऐन्द्रस्य लोके वारुणमा लभेत वारुणस्य लोक ऐन्द्रं य एवावगतः सोऽप रुध्यते योऽपरुद्धः सोऽव गच्छति" ( तैसं ६.६.५ ) इति । अवगतः प्राप्तैश्वर्यः । अपरुध्यतामैश्वर्यात् भ्रश्यताम्[38] । अयमेकः कामः । एतद्विपर्ययोऽन्यः कामः । तस्मिन्नुभयविधेऽपि कामे सत्यमैकादशस्थानयोरैन्द्रवारुणयोः स्थानव्यत्ययं कुर्यात् ॥ प्रजानां व्याकुलीभावं चेत् कामयेत तदानीमेकादशानां पशूनां क्रमसांकर्यं विधत्ते—"यदि कामयेत प्रजा मुह्येयुरिति पशून् व्यतिषजेत् प्रजा एव मोहयति" ( तैसं ६.६.५ ) इति ॥ उदक्प्रवणत्वेन[39] स्थापिताया एकादशयूपपङ्क्तेर्दक्षिणयूपे वारुणस्याऽऽलम्भं विधत्ते—"यदभिवाहतोऽपां वारुणमालभेत प्रजा वरुणो गृह्णीयाद्दक्षिणत उदञ्चमा लभतेऽपवाहतोऽपां प्रजानामवरुणग्राहाय" ( तैसं ६.६.५ ) इति । अपामभिवाहस्तत्प्रवाहस्थानभूतो निम्नो देशः । तत्रावस्थित उत्तरयूपे वारुणालम्भेन प्रजानां वरुणग्रहरूपो रोगः स्यात् । दक्षिणयूपे पशोरुदङ्मुखत्वेनाऽऽलम्भे रोगो न भवति । दक्षिणयूपस्योन्नतदेशवर्तित्वेनापामपवाहतः प्रवाहस्थानाभावादित्यर्थः । अत्र सूत्रम्—"आग्नेयं कृष्णग्रीवमग्निष्ठ उपाकरोति । उत्तरे सारस्वतीं मेषीम् । दक्षिणे सौम्यं बभ्रुम् । एवं व्यत्यासं दक्षिणापवर्गान् पशूनुपाकरोति । वारुणमन्ततो दक्षिणत उदञ्चम्" ( आपश्रौ १४ ६.१३–१७ ) इति ॥ पश्वेकादशिनी निरूपिता ॥

अथ पात्नीवतपशुं विधत्ते—"इन्द्रः पत्निया मनुमयाजयत् तां पर्यग्निकृतामुदसृजत् तया मनुरार्ध्नोद्यत्पर्यग्निकृतं पात्नीवतमुत्सृजति यामेव मनुर्ऋद्धिमार्ध्नोत् तामेव यजमान ऋध्नोति" ( तैसं ६.६.६ ) इति । अत्र पत्नीशब्देन पात्नीवतसंज्ञके यूप उपाकृतस्त्वाष्ट्रदेवताकः पशुरुपलक्ष्यते । शाखान्तरे तथा विधानात् । पश्वेकादशिनीगतपत्नीसंयाजानन्तरभावित्वादस्य यूपस्य पात्नीवतत्वम् । अत्र सूत्रम्—"जाघनीभिश्च पत्नीः संयाजयन्ति । अनूबन्ध्यावपायां हुतायामग्रेण शालामुखीयं पात्नीवतं मिनोति यथाऽधोनाभिमनवस्तीर्णेऽचषालम् । तस्मिंस्त्वाष्ट्रं साण्डं लोमशं [39]पिङ्गलं पशुमुपाकृत्य पर्यग्निकृतमुत्सृज्याऽऽज्येन शेषं संस्थापयेत्[40] । यावन्ति पशोरवदानानि स्युस्तावत्कृत्व आऽऽयस्यावद्येत् पशुधर्माऽऽज्यं भवति

३४ त्रि१–स्वदेहे । ३५ आ–'देह' नास्ति । ३६ क–'सिन. प्रजा । ३७ आ–क्रियताम् । ३८ त्रि१–उदकप्रवाहणत्वेन । ३९. इ उ पा–पिशङ्गम् । ४०. क–समापयेत् ।

शालामुखीये प्रचरन्तीति विज्ञायते" (आपश्रौ १४·७·११–१६) इति। तस्मादिन्द्रः पात्नीवतयूपे नियुक्तेन पशुना मनुमयाजयदिति व्याख्येयम्॥ पर्यग्निकृते पशावुत्सृष्टे सति कर्मशेषस्याऽऽज्येन समाप्तिं विधत्ते—"यज्ञस्य वा अप्रतिष्ठितायज्ञः परा भवति यज्ञं पराभवन्तं यजमानोऽनु परा भवति यदाज्येन पात्नीवतꣳ सꣳस्थापयति यज्ञस्य प्रतिष्ठित्यै यज्ञं प्रतितिष्ठन्तं यजमानोऽनु प्रति तिष्ठति" (तैसं ६·६·६) इति। [41]अप्रतिष्ठितादसंस्थापनात्॥ [42]अत्र पशोः कालं विधत्ते—"इष्टं वपया भवत्यनिष्टं वशयाऽथ पात्नीवतेन प्र चरति तीर्थ एव प्र चरत्यथो एतर्ह्येवास्य यामः" (तैसं ६·६·६) इति। वशा वन्ध्या, सा चानूबन्ध्येत्यनेन नाम्नोच्यते। तदीयवपाहोमादूर्ध्वं हृदयाद्यङ्गहोमात् प्रागेतस्य पात्नीवतपशोः कालः। स च तीर्थमुचितं स्थानम्। किं चैतस्मिन् कालेऽनूबन्ध्याख्यस्य पशोर्याम उपरमः समाप्तिर्भवति। तस्य चान्तिमपशुत्वात् समाप्तेः प्रागेव पात्नीवतप्रचारो युक्तः॥ देवतां विधत्ते—"त्वाष्ट्रो भवति त्वष्टा वै रेतसः सिक्तस्य रूपाणि वि करोति तमेव वृषाणं पत्नीष्वपि सृजति सोऽस्मै रूपाणि वि करोति" (तैसं ६·६·६) इति। विकरोति विविधानि करोतीत्यर्थः॥ [43]पात्नीवतपशोस्त्वाष्ट्रत्वे सति तमेव यजमानं त्वष्टा वृषाणं रेतः सिञ्चन्(न्तं) यजमानस्य पत्नीष्वपि संयोजयति। स चास्मै यजमानार्थं रूपाणि विकरोति विविधानि करोतीति[43]। इति पात्नीवतपशुर्निरूपितः॥ ५ १०

अथ सौम्यं चरुं विधत्ते—"घ्नन्ति वा एतत् सोमं यदभिषुण्वन्ति यत् सौम्यो भवति यथा मृतायानुस्तरणीं घ्नन्ति तादृगेव तत्" (तैसं ६·६·७) इति। सोमस्याभिषवो वधस्थानीयः, अतः अनुस्तरणीयस्थानीयः सौम्यश्चरुः कर्तव्यः। मृतं दीक्षितमनु स्तीर्यते हन्यत इत्यनुस्तरणी काचिद्गौः। दीक्षितशवस्यावयवेषु हृदयहस्तादिषु गोशवस्य हृदयाद्यवयवान् संस्थाप्य तं दीक्षितं दहेत्। तदर्थं काचिद् गौर्हन्यते॥ चरुहोमस्थानं विधत्ते—"यदुत्तरार्धे वा मध्ये वा जुहुयाद्देवताभ्यः समदं दध्याद्दक्षिणार्धे जुहोत्येषा वै पितृणां दिक् स्वायामेव दिशि पितॄन्निरवदयते" (तैसं ६·६·७) इति॥ वह्नेरुत्तरार्धमध्यदेशयोर्देवाहुतिस्थानत्वात् तत्र पित्र्ये होमे देवताभिः सह पितॄणां समदं कलहं कुर्यात्। [44]अतो निरवदयते देवदेशान्निष्क्रम्य पितॄन् यजते॥ चरुशेषस्य दानं विधत्ते—"उद्गातृभ्यो हरन्ति सामदेवत्यो वै सौम्यो यदेव साम्नश्छम्बट्कुर्वन्ति तस्यैव स शान्तिः" (तैसं ६·६·७) इति। सामैव सौम्यचरोरभिमानिदेवता। तथा सति सामवेदसंबन्धि यदङ्गमुद्गातार इत्थं छम्बट्कुर्वन्ति विनष्टं कुर्वन्ति तस्य दोषस्य स चरुः प्रतीकारः॥ तस्मिन्नाज्यपूर्णे चरावुद्गातृभिः स्वदेहच्छाया द्रष्टव्येति विधत्ते—"अवेक्षन्ते पवित्रं वै सौम्य आत्मानमेव पवयन्ते" (तैसं ६·६·७) इति। सौम्यचरोः शुद्धिहेतुत्वात् तत्प्रेक्षणेनोद्गातारः स्वदेहं शोधयन्ति। अत्र सूत्रम्—"आज्येन चरुमभिपूर्योद्गातृभ्यो हरन्ति तमुद्गातारोऽवेक्षन्ते" (आपश्रौ १३·१३·२२–१३·१४·१) इति॥ आज्यस्यापर्याप्तौ पुनरप्यन्यत् पूरणं विधत्ते—"य आत्मानं न परिपश्येदितासुः स्यादभिदद्धिं कृत्वाऽवेक्षेत तस्मिन् ह्यात्मानं परिपश्यत्यथो आत्मानमेव पवयते" (तैसं ६·६·७) इति। इतासुर्गतप्राणः। अभितो दीयते प्रक्षिप्यत आज्यमस्मिंश्चरावित्यभिदद्धिः॥ काम्येऽवेक्षणे मन्त्रविशेषं विधत्ते—"यो गतमनाः स्यात् सोऽवेक्षेत यन्मे मनः परागतं यद्वा मे अपरागतम्। राज्ञा सोमेन तद्वयमस्मासु धारयामसीति मन एवाऽऽत्मन् दाधार न गतमना भवति" (तैसं ६·६·७) इति। गतमना अव्यवस्थितचित्तः। उद्गातॄणां मध्ये गतमनाः 'यन्मे मनः' इत्यादिमन्त्रेणावेक्षेत। मदीयं मनो यदि मत्तो निष्क्रान्तं, यदि वा निष्क्रमणोन्मुखं [45]न त्विदानीं निष्क्रान्तं[45], सोमस्य राज्ञः प्रसादाद्वयं तन्मनोऽस्मास्वेव धारयामः। मन्त्रसामर्थ्याच्चित्तसमाधानं भवति॥ १५ २० २५ ३०

४१. इ.उ.पा—अप्रतीतात्। ४२. आ.हा—अस्य। ४३–४३. आ.हा—'पात्नीवत...... करोतीति' नास्ति। ४४. इ.उ.त्रि१.पा—'अतः' नास्ति। ४५–४५. आ.क—तदिदानीं निष्क्रान्तस्य। ३५

"अग्नाविष्णू महि धाम प्रियं वाम्" (तैसं १ ८ २२) इत्यनयर्चा घृतयागं विधत्ते—"अप वै तृतीयसवने यज्ञः क्रामतीजानादनीजानमभ्याग्नावैष्णव्यर्चा घृतस्य यजत्यग्निः सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं च दाधार" (तैसं ६ ६ ७) इति ॥ ईजानादिष्टवतो यजमानादनीजानं पुरुषमभिलक्ष्य यज्ञोऽपक्रामति तत्समाधानायाऽऽग्नावैष्णवमन्त्रयागः ॥ तत्र नीचध्वनिं विधत्ते—"उपाꣳशु यजति मिथुनत्वाय" (तैसं ६ ६ ७) इति। सौम्यचरुगतेनोच्चध्वनिना सहोपांशुध्वनेर्मिथुनत्वम् ॥ अनूबन्ध्यां विधत्ते—"ब्रह्मवादिनो वदन्ति मित्रो यज्ञस्य स्विष्टं युवते वरुणो दुरिष्टं क्व तर्हि यज्ञः क्व यजमानो भवतीति यन्मैत्रावरुणीं वशामालभते मित्रेणैव यज्ञस्य स्विष्टꣳ शमयति वरुणेन दुरिष्टं नाऽऽर्तिमार्च्छति यजमान" (तैसं६.६ ७) इति। यज्ञस्य यदङ्गं सम्यगिष्टं तस्याधिपतिर्मित्रः स्वयमनाराधितस्तदङ्गं दुरिष्टेन मिश्रयति। दुरिष्टस्याङ्गस्याधिपतिर्वरुणश्चानाराधितस्तद्दुरिष्टं संपाद्य स्विष्टेन मिश्रयति। तथा सत्युभाभ्यां स्विष्टस्य विनाशितत्वात् यज्ञः क्वास्तिष्ठेत? यज्ञाभावे यजमानोऽपि कुत्र फलोपेतो भवेत्? वशालम्भेन तुष्टो मित्रः स्विष्टं पालयति। वरुणो दुरिष्टं नाशयति। ततो यज्ञस्य सुस्थितत्वाद्विफलत्वरूपामार्तिं यजमानो न प्राप्नोति। अत्र सूत्रम्—"मैत्रावरुणीं गां वशामनूबन्ध्यामालभेत" (आपश्रौ १३.२३.६) इति ॥ तामनूबन्ध्यां प्रशंसति—"यथा वै लाङ्गलेनोर्वरां प्रभिन्दन्त्येवमृक्सामे यज्ञं प्र भिन्तो यन्मैत्रावरुणीं वशामालभते यज्ञायैव प्रभिन्नाय मत्यमन्ववास्यति शान्त्यै" (तैसं ६ ६ ७) इति। सर्वसस्योपेता भूमिरुर्वरा, तस्यां कृष्टायां कर्षणमनु तत्र मत्यं क्षिपन्ति। शाल्याधानसाधनं गोमयादिद्रव्यं मत्यं, मतमभिमतफलमर्हतीति मत्यम्। तद्वदृक्सामाभ्यां "कर्षणवद्योग्यतामापादितस्य यज्ञस्य वशालम्भेन मत्यप्रक्षेपवत् फलजननशक्तिर्भवति। तेन चाशक्तिलक्षणस्य दोषस्य शान्तिर्भवति ॥ पुनरपि वशां प्रशंसति—"यातयामानि वा एतस्य छन्दाꣳसि य ईजानश्छन्दसामेष रसो यद्वशा यन्मैत्रावरुणीं वशामालभते छन्दाꣳस्येव पुनरा प्रीणात्ययातयामत्वायाथो छन्दःस्वेव रसं दधाति" (तैसं ६ ६ ७) इति। ईजानो यज्ञं कृतवान्। एतस्य च्छन्दांसि गतसाराणि भवन्ति। वशा तु छन्दसां सारः, वषट्कारदेवतया गायत्रीदेवतायाः शिरसि छिन्ने पतितेन रसेनोत्पन्नत्वात्। एतच्च काम्यपशुकाण्डे (तैसं २ १ ७) समाम्नातम्। अतो वशालम्भेन च्छन्दसां गतसारत्वाभावात् प्रीतिर्भवति। प्रत्युत च्छन्दःसु विशेषरसः स्थाप्यते ॥ सौम्यचरुघृतयागानूबन्ध्या निरूपिता ॥

अथातिग्राह्यान् विधत्ते—"देवा वा इन्द्रिय वीर्यं व्यभजन्त ततो यदत्यशिष्यत तदतिग्राह्या अभवन् तदतिग्राह्याणामतिग्राह्यत्वं यदतिग्राह्या गृह्यन्त इन्द्रियमेव तद्वीर्यं यजमान आत्मन् धत्ते" (तैसं ६.६ ८) इति। इन्द्रवायुमित्रावरुणादिदेवैरिन्द्रियगतसामर्थ्यहेतौ सोमरसे विभक्ते सत्यतिरिक्तात् रसांशे गृह्यन्ते। तद्ग्रहणेन सामर्थ्यं यजमाने स्थाप्यते ॥ विहितानामतिग्राह्याणामग्न्यादिदेवतासंबन्धं विधत्ते—"तेज आग्नेयेनेन्द्रियमैन्द्रेण ब्रह्मवर्चसमꣳ सौर्येण" (तैसं ६ ६ ८) इति। 'यजमान आत्मन् धत्ते' इत्यनुवर्तते। तत्र कान्तिः। इन्द्रियं बलम्। ब्रह्मवर्चसं श्रुताध्ययनसंपत्तिः। प्रातःसवन आग्रयणसादनादूर्ध्वमेते त्रयो ग्रहीतव्याः। अत्र सूत्रम्—"एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयित्वा शीनग्निष्टोमेऽतिग्राह्यान् गृह्णाति। आग्नेयमैन्द्रꣳ सौर्यमिति। अग्न आयूꣳषि उत्तिष्ठन् तरणिरिति ग्रहणसादनाः" (आपश्रौ १२ १५ ९–१०) इति। व्यतिरेकमुखेण पृष्ठ्यषडहे तानतिग्राह्यान् विधत्ते—"उपस्तम्भनं वा एतद्यज्ञस्य यदतिग्राह्याश्चक्रे पृष्ठानि यत् पृष्ठ्ये न गृह्णीयात् प्राञ्चं यज्ञं पृष्ठानि सꣳ शृणीयु" (तैसं ६ ८ ८) इति। यज्ञरूपस्य रथस्यातिग्राह्या उत्तम्भनकाष्ठस्थानीयाः। षट्सु दिनेषु क्रमेण रथन्तरबृहद्वैरूपवैराजशाक्वररैवतसामनामकानि षट्सामानि पृष्ठस्तोत्राणि चक्रस्थानीयानि। ततः पृष्ठ्यषडहे अतिग्राह्यरूपोत्तम्भनाभावे तानि पृष्ठानि च यज्ञरथं पुरः पातयित्वा सञ्शृणीयुर्विनाशयेयुः। तस्मात्तान

४६ क–रुपणेन वधसाम्यतामा°।

गृह्णीयादित्यर्थः ॥ उक्थ्ये[४७]चोदकप्राप्तानतिग्राह्यान् प्रतिषेधति— " यदुक्थ्ये गृह्णीयात् प्रत्यञ्चं यज्ञमति ग्राह्याः सꣳशृणीयुः " ( तैसं ६·६·८ ) इति। उत्तम्भनमन्तरेणैव पुरस्त[४७]दुन्नतसदृश उक्थ्यस्तस्मिन् गृहीता अतिग्राह्याः। पुरस्तादस्यौन्नत्यमापाद्य यज्ञरथं प्रत्यञ्चं पातयित्वा विनाशयेयुः। तस्मात् तान्न गृह्णीयादित्यर्थः ॥ पृष्ठ्यषडहेऽप्युक्थ्यसद्भावादेतं प्रतिषेधं वारयितुं पूर्ववाक्येनैते विहितास्तद्वद्विश्वजिद्यागस्याप्युक्थ्यसंस्थस्य शास्त्रान्तरे सद्भावात् तत्रापि निषेधं वारयितुं विधत्ते— " विश्वजिति सर्वपृष्ठे ग्रहीतव्या यज्ञस्य सवीर्यत्वाय " ( तैसं ६·६·८ ) इति। रथन्तरादीनि यद्यपि पृष्ठस्तोत्राणि यस्मिन् सन्ति स सर्वपृष्ठः ॥ अग्निष्टोमे तान् विधत्ते— " प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत् स प्रियास्तनूरप न्यधत्त तदतिग्राह्या अभवन् वितनुस्तस्य यज्ञ इत्याहुर्यस्यातिग्राह्या न गृह्यन्त इत्यप्यग्निष्टोमे ग्रहीतव्या यज्ञस्य सतनुत्वाय " ( तैसं ६·६·८ ) इति। व्यादिशत् विभज्य दत्तवान्। तदा स प्रजापतिर्यज्ञसंबन्धिनीः प्रियास्तनूः अपन्यधत्त[४८] अपनीय क्वचिन्निगोपितवान्। तास्तनवोऽतिग्राह्याः। तस्मादग्निष्टोमस्य सतनुत्वाय तां गृह्णीयात्। अत्रातिग्राह्याणां पृष्ठ्यषडहादिविकृतिसंबन्धप्रतीतेः प्रकृतावग्निष्टोमेऽपि विधीयन्ते ॥ व्यावृत्तिकामस्य तान् विधत्ते—" देवता वै सर्वाः सदृशीरासन् ता न व्यावृतमगच्छन् ते देवा एत एतान् ग्रहानपश्यन् तान गृह्णताऽऽग्नेयमग्निरैन्द्रमिन्द्रः सौर्यꣳ सूर्यस्ततो वै तेऽन्याभिर्देवताभिर्व्यावृतमगच्छन् यस्यैवं विदुष एते ग्रहा गृह्यन्ते व्यावृतमेव पाप्मना भ्रातृव्येण गच्छति " ( तैसं ६·६·८ ) इति। सदृशीस्तुल्यैश्वर्याः। व्यावृतमैश्वर्यविषयलक्षणम्। इतरेभ्यो व्यावृत्तं भ्रातृव्यादैश्वर्यविशिष्यमेतैरतिग्राह्यैः प्राप्नोति ॥ तानतिग्राह्यान् प्रशंसति—" इमे लोका ज्योतिष्मन्तः समावद्वीर्याः कार्या इत्याहुराग्नेयेनास्मिँल्लोके ज्योतिर्धत्त ऐन्द्रेणान्तरिक्ष इन्द्रवायू हि सयुजौ सौर्येणामुष्मिँल्लोके ज्योतिर्धत्ते ज्योतिष्मन्तोऽस्मा इमे लोका भवन्ति समावद्वीर्यानेनान् कुरुते " ( तैसं ६·६·८ ) इति। इमे पृथिव्यन्तरिक्षद्युलोकास्ते वाग्न्यादिदेवतानुग्रहेण [४९]ज्योतिष्मन्तस्तुल्यसामर्थ्याः। अन्तरिक्षस्य वायुर्देवता न त्विन्द्र इति चेत् न। इन्द्रवाय्वोः सहावस्थानादैन्द्रवायवग्रहे तद्दर्शनात् ॥ प्रकारान्तरेण तान् प्रशंसति—" एतान् वै ग्रहान् बम्बाविश्ववयसावविदां ताभ्यामिमे लोकाः पराञ्चश्चार्वाञ्चश्च प्राभुर्यस्यैवं विदुष एते ग्रहा गृह्यन्ते भ्रस्मा इमे लोकाः पराञ्चश्चार्वाञ्चश्च भान्ति " ( तैसं ६·६·८ ) इति। बम्बाश्च विश्ववयाश्च तयोरतिग्राह्यमहिमाभिज्ञत्वात् तदर्थमुत्तमा अधमाश्चेमे लोकाः प्राभुः [५०]प्रभावं संपन्नाः[५०]। अतिग्राह्या निरूपिताः ॥

अथादाभ्यग्रहं विधत्ते—" देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा अदाभ्ये छन्दाꣳसि सवनानि समस्थापयन् ततो देवा अभवन् पराऽसुरा यस्यैवं विदुषोऽदाभ्यो गृह्यते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति " ( तैसं ६·६·९ ) इति। असुरा मात्सर्येण देवैरनुष्ठितं यज्ञाङ्गं स्वयमप्यनुष्ठितवन्तः। ततः[५१] असुरवञ्चनेन देवा गायत्रीत्रिष्टुब्जगतीभिर्निष्पाद्यानि त्रीणि सवनान्यदाभ्यग्रहे समापितवन्तः। तत्र हि " वसवस्त्वा प्र वृहन्तु गायत्रेण छन्दसा " ( तैसं ३·३·३ ) इत्यादिभिस्त्रिभिर्मन्त्रैस्त्रयः सोमांशवः पृथक्कर्तव्याः। अत्र सूत्रम्—" उपनद्धस्य राजस्त्रीनꣳशून् प्रवृहन्ति। वसवस्त्वा प्र वृहन्तु गायत्रेण छन्दसेत्येतैः प्रतिमन्त्रम्। वैरेनं चतुराधूनोति " ( आपश्रौ १२·७·१९–१२·८·२ ) इति ॥ तदिदं छन्दसां सवनानां च समापनम्। तेन देवानां विभूतिरसुराणां पराभवश्चाभूत्। तद्वदन्यस्याप्यदाभ्यग्रहणेन भवति ॥ निर्वचनेन प्रशंसति—" यद्वै देवा असुरानदाभ्येनादभ्नुवन् तददाभ्यस्यादाभ्यत्वम् " ( तैसं ६·६·९ ) इति। अदभ्नुवन् हिंसितवन्तः। असुरदम्भनहेतुरयं ग्रहः स्वयमन्येन केनचिदपि दम्भितुमशक्यत्वाददाभ्यः ॥

४७. त्रि१–उन्नतरथसदृशः। ४८. इ.ड.त्रि१.पा–'अपन्यधत्त' नास्ति। ४९. त्रि१–'ज्योतिष्मन्तः' इत्यस्यानन्तरम् 'अत एव'। ५०–५०. आ–प्रभावन्तः; क–प्रभावसंपन्नाः; त्रि१–प्रभावन्तः संपन्नाः। ५१. आ.क–तदा।

एतद्वेदनं प्रशंसति—"य एवं वेद दभ्नोत्येव भ्रातृव्यं नैनं भ्रातृव्यो दभ्नोति" (तैसं ६.६.९) इति ॥ [52]अथ अदाम्यग्रहस्य[53] कालं विधत्ते—"एषा वै प्रजापतेरतिमोक्षिणी नाम तनूर्यददाभ्य उपनद्धस्य गृह्णात्यति-मुक्त्यै" (तैसं ६.६.९) इति। अतिशयेन पापान् मोक्षोऽतिमोक्षः। [54]सोऽस्या अस्तीत्यतिमोक्षिणी। प्रजापतेः [55]ताद्रूप्योऽयमदाभ्यः। तस्मादुपनद्धस्य वस्त्रेण बद्धस्य सोमस्य बन्धनादतिमुक्त्यर्थं गृह्णीयात्।
५ शकटादवरोपितो वस्त्रबद्धसोमोऽधिषवणफलकयोरुपर्यवतिष्ठते। तस्य च सोमस्य [56]बन्धनमुग्राग्रहकाले विस्रस्य "इन्द्राय त्वा वृत्रघ्ने" (तैसं १.४.१) इत्यादिभिर्मन्त्रैः सोमं मिमीते। तस्मात् विस्रसनात् प्रागेवादाभ्यो ग्रहीतव्य इत्यर्थः ॥ एतद्वेदनं प्रशंसति—"अति पाप्मानं भ्रातृव्यं मुच्यते य एवं वेद" (तैसं ६.६.९) इति। पापरूपं वैरिणमुत्क्रम्य सत्कृतोपद्रवात् मुच्यते ॥ अदाभ्यस्य सोमव्यतिरिक्तं द्रव्यं विधत्ते—"घ्नन्ति वा एतत् सोमं यदभिषुण्वन्ति सोमे हन्यमाने यज्ञो हन्यते यज्ञे यजमानो ब्रह्मवादिनो
१० वदन्ति किं तद्यज्ञे यजमानः कुरुते येन जीवन्त्सुवर्गं लोकमेतीति जीवग्रहो वा एष यददाभ्योऽनभिषुतस्य गृह्णाति जीवन्तमेवैनꣳ सुवर्गं लोकं गमयति" (तैसं ६.६.९) इति। अभिषवेण सोमस्य हतत्वाद्यज्ञे हते यजमानो हतप्रायो भवति। तादृग्वधमन्तरेण स्वर्गप्राप्त्युपायात् ब्रह्मवादिनो विचार्यादाभ्यं निश्चितवन्तः। स च जीवनोपेतो ग्रहः। तस्मादनभिषुतस्याभिषवरूपवधरहितस्य द्रव्यस्य रसं तत्र [57]गृह्णीयात्। अत्र सूत्रम्—"अꣳशुमदाभ्यं वा प्रथमं गृह्णाति। शुभ्रं ते शुभ्रेण गृह्णामीति दध्नः पयसो निग्राभ्याणां वा"
१५ (आपश्रौ १२.७.१७–१८) इति ॥ अदाभ्यग्रहस्याऽऽधवनहेतूनां सोमांशूनां त्रयाणां सवनत्रयगतेषु त्रिषु[58] महाभिषवेषु मेलनं विधत्ते—"वि वा एतद्यज्ञं छिन्दन्ति यददाभ्ये सꣳ स्थापयन्त्यꣳशूनपि सृजति यज्ञस्य सतत्यै" (तैसं ६.६.९) इति। अमरवचनाय "वसवस्त्वा" (तैसं १.३.२) इत्यादिभिर्मन्त्रैरंशुत्रय-पृथक्करणरूपं सवनत्रयसमापनं [59]इति कृतं तद्वदन्येनापि कृतं सत्युपांश्वन्तर्यामादीनाम(न)नुष्ठानात् यज्ञो विच्छिद्येत, तत्परिहाराय पृथक्कृतानंशूनभिषवेषु मेलयेत्। [60]अत्र सूत्रम्—"आधवनानꣳशून्
२० ग्रहान्नाभिधायोशिकस्य देव सोम गायत्रेण छन्दसेत्येतं *प्रतिमन्त्रसवनमेकैकं महाभिषवेष्वपिसृजति" (आपश्रौ १२.८.४) इति ॥ अदाभ्यो निरूपितः ॥

अथांशुग्रहं विधत्ते—"देवा वै प्रबाहुग्ग्रहानगृह्णत स एतं प्रजापतिरꣳशुमपश्यत् तमगृह्णीत तेन वै स आर्ध्नोद्यस्यैवं विदुषोऽꣳशुर्गृह्यत ऋध्नोत्येव" (तैसं ६.६.१०) इति। प्रबाहुक् तुल्यस्वभावान्। [61]प्रजापतिस्तु समृद्ध्यर्थं[61] विलक्षणमंशुग्रहं गृहीत्वा समृद्धोऽभवत् ॥ इतरग्रहवैलक्षण्यं क्रमेण दर्शयन्नभि-
२५ षवस्याऽऽवृत्त्यभावं विधत्ते—"सकृदभिषुतस्य गृह्णाति सकृद्धि स तेनाऽऽर्ध्नोत्" (तैसं ६.६.१०) इति। "अष्टौ कृत्वोऽग्रेऽभिषुणोति" (आपश्रौ १२.१०.४) इत्यादिना ग्रहान्तरेऽभिषवावृत्तिः श्रुता, न त्वत्र तथा कुर्यात् किं तु[62] सकृदेव। यस्मात् स प्रजापतिः सकृदेवाभिषुत्य तेन ग्रहेण सम्यक् समृद्धिं गतः ॥ ग्रहणमन्त्रस्योच्चारणं निवारयितुं मानसमनुसंधानं विधत्ते—"मनसा गृह्णाति मन इव हि प्रजापतिः प्रजापतेराप्त्यै" (तैसं ६.६.१०) इति। संकल्पमात्रेण जगत्सर्जनात् प्रजापतेर्मनः सादृश्यम् ॥
३० ग्रहणपात्रं विधत्ते—"औदुम्बरेण गृह्णात्यूर्ग्वा उदुम्बर ऊर्जमेवाव रुन्धे" (तैसं ६.६.१०) इति ॥ पात्रस्याऽऽकारं विधत्ते—"चतुःस्रक्ति भवति दिक्ष्वेव प्रति तिष्ठति" (तैसं ६.६.१०) इति। चतुष्कोणमित्यर्थः ॥ वामदेवेन दृष्टस्य "कया नश्चित्र आ भुवत्" (सासं १.२.२.३.५) इत्यस्यामृच्युत्पन्नस्य साम्नो ग्रहणमन्त्रतामाह—"यो वा अꣳशोरायतनं वेदाऽऽयतनवान् भवति वामदेव्यमिति साम तद्वा

५२ इ उ क त्रि१–'अथ' नास्ति। ५३ आ क–अदाभ्यस्य। ५४ त्रि१–मोऽस्यां ता वाम्।
३५ ५५ त्रि१–तादृक्स्वरूपो°। ५६ आ क बन्धम्°, इ उ पा–संबन्धम्°। ५७ इ उ –'तत्र' नास्ति।
५८ क–'त्रिषु' नास्ति। ५९ इ उ क पा–°त्रयमापन्नम्। ६० इ उ पा–तत्र। *[आपश्रौसूत्रे 'प्रतिसवनमनु°' इति।]। ६१–६१ इ उ पा–प्रजापतिः सुसमृद्ध्यर्थम्। ६२ इ उ–त्वत्र।

मस्याऽऽयतनं मनसा गायमानो गृह्णात्यायतनवानेव भवति" (तैसं ६·६·१०) इति। गृहवानित्यर्थः॥
अनुच्छ्वासं ग्रहणकाले विधत्ते—"यदध्वर्युरंशुं गृह्णन्नार्धयेदुभाभ्यां नर्ध्येताध्वर्यवे च यजमानाय च यद्-
र्धयेदुभाभ्यामृध्येतानवानं गृह्णाति सैवास्यर्द्धिः" (तैसं ६·६–१०) इति। अंशुं नार्धयेत् समृद्धं न कुर्यात्।
तदानीमध्वर्युयजमानयोः समृद्धिर्न स्यात्। अनुच्छ्वासगृहीतिरेवानयोः समृद्धिः। अत्र सूत्रम्—"अंशुं
गृह्णन्नेकग्रहायाऽऽहं राजानमुपरे न्युप्य सकृदभिपुत्य वामदेव्यं मनसा गायमानोऽनवानं गृह्णाति" (आपश्रौ ५
१२·८·५) इति। कथंचिदुच्छ्वासश्चेत् तद्दोषनिवारणाय [६३]विधत्ते—"हिरण्यमभि व्यनित्यमृतं वै हिरण्य-
मायुः प्राण आयुषैवामृतमभि धिनोति" (तैसं ६·६·१०) इति। हिरण्यस्याऽऽभिमुख्येन श्वासं कुर्यात्।
तथा सत्यायुःस्वरूपेणैव प्राणवायुना हिरण्यरूपममृतमभिप्रीणयति॥ हिरण्यस्येयत्तां विधत्ते—"शतमानं
भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठति" (तैसं ६·६·१०) इति। शतनिष्कपरिमितं
[६४]शतमानपरिमितं वा हिरण्यं भवति। दशानां ज्ञानकर्मेन्द्रियाणाम् [६५]एकैकस्य दशनाडीषु[६५] संचारात् १०
शतेन्द्रियत्वम्। अत्र सूत्रम्—"यदि व्यवानेदा नः प्राण एतु परावत इति शतमानं हिरण्यमभि [६६]व्यनीया-
तामध्वर्युर्यजमानश्च" (आपश्रौ १२·८·७) इति॥ अंशुग्रहादाभ्यग्रहयोः पौर्वापर्यं विकल्पितम्। अत एव
सूत्रकारेणोक्तम्—"अंशुमदाभ्यं वा प्रथमं गृह्णाति" (आपश्रौ १२·७·१७) इति॥ अंशुग्रहो निरूपितः॥

अथ षोडशिग्रहं विधत्ते—"प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत् स रिरिचानोऽमन्यत स यज्ञानां
षोडशधेन्द्रियं वीर्यमात्मानमभि समक्खिदत् तत् षोडश्यभवत् वै षोडशी नाम यज्ञोऽस्ति यद्वाव १५
षोडशः स्तोत्रः षोडशः शस्त्रं तेन षोडशी तत् षोडशिनः षोडशित्वं यत् षोडशी गृह्यत इन्द्रियमेव
तद्वीर्यं यजमान आत्मन् धत्ते" (तैसं ६·६·११) इति। देवेभ्यो यज्ञान् विभज्य दत्त्वा स्वार्थस्य कस्याप्य-
भावाद्रिक्तोऽहमिति मन्यमानः स्वात्मानमभिलक्ष्य सर्वयज्ञसंबन्धिनमिन्द्रियसामर्थ्यप्रदमंशं षोडशधा छित्त्वा
समक्खिदत् समुपादाय श्रान्तोऽभवत्। तच्च सामर्थ्यं षोडशिनामकः क्रतुरभवत्। स च सोमयाग-
व्यतिरिक्तो यज्ञः कश्चित् [६७]नूतनो न[६८]॥ प्रकारान्तरेण प्रशंसति[६७]—"देवेभ्यो वै सुवर्गो लोको न २०
प्राभवत् त एतं षोडशिनमपश्यन् तमगृह्णन् ततो वै तेभ्यः सुवर्गो लोकः प्राभवत् यत् षोडशी गृह्यते
सुवर्गस्य लोकस्याभिजित्यै" (तैसं ६·६·११) इति। न प्राभवत् न स्वाधीनः॥ [६९]पुनः प्रकारान्तरेण
प्रशंसति—"इन्द्रो वै देवानामानुजावर आसीत् स प्रजापतिमुपाधावत् तस्मा एतं षोडशिनं प्रायच्छत्
तमगृह्णीत ततो वै सोऽग्रं देवतानां पर्यैद्यस्यैवं विदुषः षोडशी गृह्यतेऽग्रमेव समानानां पर्येति" (तैसं
६·६·११) इति। अनुजेभ्यो निकृष्टेभ्योऽवरोऽत्यन्तनिकृष्टः। आनुजेति दीर्घश्छान्दसः। अग्रं श्रैष्ठ्यम्॥ २५
कालं विधत्ते—"प्रातःसवने गृह्णाति वज्रो वै षोडशी वज्रः प्रातःसवनं स्वादेवैनं योनेर्निर्गृह्णाति"
(तैसं ६·६·११) इति। वज्रवदनिष्टनिवारकत्वादुभयोर्वज्रत्वम्। तस्मादेव साम्यात् प्रातःसवनं वज्रस्य
स्वयोनिः॥ पक्षान्तरमाह—"सवनेसवनेऽभि गृह्णाति सवनात् सवनादेवैनं प्र जनयति" (तैसं ६·६·११)
इति। अत्र सूत्रम्—"षोडशिनो ग्रहणम्। प्रातःसवन उत्तमो धाराग्रहाणाम्। सवनेसवने वा"
(आपश्रौ १४·२·२–५) इति॥ नित्यत्वेन विहितस्यैव काम्यत्वमपि विधत्ते—"तृतीयसवने पशुकामस्य ३०
गृह्णीयात् वज्रो वै षोडशी पशवस्तृतीयसवनं वज्रेणैवास्मै तृतीयसवनात् पशूनव रुन्धे" (तैसं ६·६·११)
इति। यथा "खादिरो यूपो भवति" (तैब्रा ३·६·२·१२) 'खादिरं वीर्यकामस्य यूपं कुर्वीत'

---

६३. इ.उ.क.पा–विधीयते। ६४. त्रि१–शतमाषपरि°। ६५–६५. इ.उ–दशसु नाडीषु।
६६. क–व्यतीयाताम°; (आपस्तम्बश्रौतसूत्रे–'व्यनेयाताम°' इति)। ६७–६७. त्रि१–नूतनः षोडशी
विद्यते। किं तर्हि सोमयागमेव। यथा स्तोत्रशस्त्रे द्वादशभिर्युक्तः अग्निष्टोमः पञ्चदशभिर्युक्तः उक्थ्यः ३५
तथा षोडशसंख्यापूरकं स्तोत्रं शस्त्रं यस्मिन् सोमयागे विद्यते स यागः षोडशी। विहितं ग्रहं प्रशंसति।
६८. इ.उ.पा–'न' नास्ति। ६९. इ.उ.पा–'पुनः' नास्ति।

( द्र पश्रा ४ ५ ) इति °श्रुतिवचनद्वयादेकस्यैव नित्यत्व काम्यत्व च सद्वत् ॥ उक्थ्यक्रतावपि शाखान्तरानुसारेण प्रसक्त प्रतिषेधति—" नोक्थ्ये गृह्णीयात् प्रजा वै पशव उक्थानि यदुक्थ्ये गृह्णीयात् प्रजा पशूनस्य निर्दहेत् " ( तैस ६ ६ ११ ) इति। उक्थ्यक्रतुगताना शस्त्राणा प्रजापशुरूपत्वात् वज्ररूपेण षोडशिना दाह स्यात्। शाखान्तरे विधानादिह निषेधाच्च विकल्प सूत्रे दर्शित —" नोक्थ्ये गृह्णीयात् ।
५ गृह्णीयाद्वा " ( आपश्रौ १४ २ ८ ) इति ॥ षोडशिक्रतावतिरात्रक्रतावपि काम्यमह विधत्ते—" अतिरात्र पशुकामस्य गृह्णीयाद्वज्रो वै षोडशी वज्रेणैवास्मै पशूनवरुध्य रात्रियोपरिष्टाच्छमयति " ( तैस ६.६ ११ ) इति। "°वज्ररूपेण षोडशिना°° पशूनामवरोधेऽपि नास्ति बाध । षोडशिशस्त्रस्योपरिष्टादनुष्ठेयेन रात्रि शब्दोपलक्षितेन शस्त्रसमूहेन तद्बाधोपशमनात्। पशुकामस्येति विशेषणादन्यस्यातिरात्रे षोडशिग्रहो नास्ति ॥ अधिकारिविशेषेण ग्रह विधत्ते—" अग्निष्टोमे राजन्यस्य गृह्णीयाद्व्यावृत्कामो हि राजन्यो
१० यजते " ( तैस ६ ६ ११ ) इति। द्वादशभि स्तोत्रै शस्त्रैश्चोपेतोऽग्निष्टोमो वर्णत्रयसाधारण । राजन्यस्तु विप्रवैश्याभ्या व्यावृत्तिमुत्कर्ष कामयते तदर्थं ग्रहमेत° गृह्णीयात् ॥ अस्मिन् षोडशिग्रहस्तोत्रस्यैकविंश नामक°° स्तोम विधत्ते—" साह्न एवास्मै वज्र गृह्णाति स एन वज्रो भूत्या इन्धे निर्वा दहत्येकविंश॰ स्तोत्र भवति प्रतिष्ठित्यै " ( तैस ६ ६ ११ ) इति। अह्ना सह वर्तत इति एकदिवसनिष्पाद्य सोमयाग साह्न । तस्मिन्नेव यजमानार्थमध्वर्यु षोडशिरूप वज्र गृह्णाति। स च वज्रो वैरिविनाशाय प्रयुक्त एन
१५ यजमानमैश्वर्यार्थं प्रकाशयति°°। अथ वा प्रयोगकौशलाभावादग्निरिव यजमाने परीतो नि शेषेणैनमेव दहति। अत पाक्षिकदाहनिवृत्त्या यजमानस्य प्रतिष्ठार्थमेक विंशस्तोत्र संपादयेत्। प्रगीतमन्त्रसाध्यस्तुति स्तोत्रम्। तच्च गान तृचे कर्तव्यम्। एक साम तृचे क्रियते स्तोत्रीयमिति विधानात्। षोडशिस्तोत्रस्य* " असावि सोम इन्द्र त " ( सास २ ३ २ २३ १ ) इत्यृक्प्रथमा। " इन्द्रमिद्धरी वहत " ( सास २ ३ २ २३ ३ ) इति द्वितीया। " आ तिष्ठ वृत्रहन् " ( सास २ ३ २ २३ २ ) इति तृतीया। सोऽय तृचस्त्रिभि पर्यायैरावृत्ति
२० विशिष्ट गीयमान एकविंशत्यृगात्मको भवति। प्रथमे पर्याये प्रथमद्वितीययोर्ऋचोस्त्रिस्त्रिर्गानम्। तृतीयस्या सकृद्गानम्। द्वितीयपर्याये प्रथमाया सकृद्गानम्। तृतीयपर्याये मध्यमाया सकृद्गानम्। तथा च छन्दोग ब्राह्मण आम्नायते—" सप्तभ्यो हिं करोति स तिसृभि स तिसृभि स एकया सप्तभ्यो हिं करोति स एकया स तिसृभि स तिसृभि सप्तभ्यो हिं करोति स तिसृभि स एकया स तिसृभि सप्तसप्तिने(न्ये)क विंशस्य विष्टुति " ( ताब्रा २ १४ १ ) इति। सप्तभ्य सप्तभिर्ऋग्भिर्हिं करोति गायेत्। यथोक्तावृत्तिवि
२५ शिष्टेयमेकविंशनामकस्य स्तोमस्य संबन्धिनी विशिष्टा स्तुति । तस्याश्च सप्तसप्तिनि(नी)ति नामधेय मित्यर्थ ॥ षोडशिशस्त्र विधत्ते—" हरिवच्छस्यत इन्द्रस्य प्रिय धामोपाऽऽप्नोति " ( तैस ६ ६ ११ ) इति। हरिशब्दोऽस्मिन्नस्तीति हरिवच्छस्त्रम्। " इन्द्रमिद्धरी वहत " इत्यादिष्वृक्षु हरिशब्दो बहुल-मुपलभ्यते। तेन शस्त्रेणेन्द्रस्य परितोषात् तदीयो लोक प्राप्यते। तच्च शस्त्र द्विविध विहृतमविहृत च। नानाविधच्छन्दसामृचा संमेलनेन निष्पादित विहृतम्। त(य)थावस्थितमविहृतम् ॥ तत्र
३० विहरणप्रकार विधत्ते—" कनीयांसि वै देवेषु छन्दांस्यासञ्ज्यायांस्यसुरेषु ते देवा कनीयसा छन्दसा ज्यायश्छन्दोऽभि व्यशंसन् ततो वै तेऽसुराणा लोकमवृञ्जत यत् कनीयसा छन्दसा ज्यायश्छन्दो भि विशंसति भ्रातृव्यस्यैव तल्लोक वृङ्क्ते " ( तैस ६ ६ ११ ) इति। सन्त्यस्मिञ्छस्त्रे बहूनि छन्दांसि। तान्याश्वलायनेनोदाहृतानि—" आ त्वा वहन्तु हरय इति तिस्रो गायत्र्य । उपो षु शृणुही गिर सुसदृशा वय मघवन् इत्येका द्वे च पङ्क्ती। यदिन्द्र पृतनाज्ये अय ते अस्तु हर्यत इत्यौष्णिहबार्हतौ तृचौ "
३० ( आश्वश्रौ ६ २ ३–५ ) इत्यादिना। तत्र चतुर्विंशत्यक्षरा गायत्री। अष्टाविंशत्यक्षरोष्णिक्। अनयोरल्पाक्षर-

७० आ–' श्रुति° ' नास्ति। ७१–७१ आ क–वज्रषोडशिना। ७२ आ–' ग्रहमेतम् ' नास्ति। ७३ इ उ क पा–°विंशतिनामकम्। ७४ नि१–प्रशसति। *[ षोडशिस्तोत्रे गौरीवित षोडशिसाम ( ऊह २३.१४ ) भवति।]।

स्त्वेन कनीयस्त्वाद्देवच्छन्दस्त्वम् । अष्टाक्षरपादैः पञ्चभिश्चत्वारिंशदक्षरा पङ्क्तिः । षट्त्रिंशदक्षरा बृहती । अनयोरधिकाक्षरत्वेन [७५]ज्यायस्त्वादसुरच्छन्दस्त्वम् । एवं छन्दोन्तरेष्वप्युन्नेयम् । तत्र देवा गायत्रीछन्दसा पङ्क्तिच्छन्दोऽभितो विहृत्य शस्त्रमपठन् । विहार आश्वलायनेन सूत्रे[७६] दर्शितः—" तदेव शंस्यं विहरेत् । पादान् व्यवधायार्धर्चशः शंसेत् । पूर्वासां पूर्वाणि पदानि । गायत्र्यः पङ्क्तिभिः । पङ्क्तीनां तु द्वे द्वे पदे शिष्येते ताभ्यां [७७]प्रणुयात् । उष्णिहो बृहतीभिः[७७] " ( आश्वश्रौ ६.३.२–७ ) इत्यादिना । अस्यायमर्थः— अविहृतं यच्छस्त्रं तदेव विहृतं कुर्यात् । तद्यथा–गायत्र्याः प्रथमं पादं पङ्क्तेः प्रथमपादेन संयोज्यैकमर्धर्चं संपादयेत् । एवं द्वितीयतृतीयपादसंयोगेन पुनरर्धर्चद्वयं संपाद्यम् । पङ्क्तेरवशिष्टं पादद्वयमेकोऽर्धर्चस्तस्यान्ते प्रणवं कुर्यात् । तैरेतैश्चतुर्भिरर्धर्चैर्द्वे अनुष्टुभौ संपद्येते । एवं गायत्र्यः पङ्क्तिभिः संयोज्याः । अनया विशंसति विहरेदिति । तेन विहृतेन शस्त्रेण भ्रातृव्यस्थानं विनाशयति ॥ [७८]संख्यान्तरमभिप्रेत्य विहरणं दर्शयति—" षडक्षराण्यति रेचयन्ति षड्वा ऋतव ऋतूनेव प्रीणाति चत्वारि पूर्वाण्यव कल्पयन्ति चतुष्पद एव पशूनव रुन्धे द्वे उत्तरे द्विपद एवाव रुन्धे " ( तैसं ६.६.११ ) इति । काचिद् ऋगष्टाविंशत्यक्षरा, अन्या त्वष्टात्रिंशदक्षरा अपरा[७९] त्रिंशदक्षरा । [८०]तत्र [८१]मध्यमायाः षडक्षराण्यनुष्टुभोऽतिरिच्यन्ते[८०] । तस्या ऋच आद्यानि चत्वारि पूर्वस्यामृचि संयोज्यानि । अन्तिमं द्वयमुत्तरस्यामृचि संयोज्यम् ॥ विहरणे फलितं दर्शयति—" अनुष्टुभमभि सं पादयन्ति वाग्वा अनुष्टुप् तस्मात् प्राणानां वागुत्तमा " ( तैसं ६.६.११ ) इति । तत्र[८२] आश्वलायनः—" अनुष्टुप्प्रकारं शंसेत् । ऊर्ध्वं स्तोत्रियानुरूपाभ्यामातो विहृतः " ( आश्वश्रौ ६.३.१२–१३ ) इति ॥ स्तोत्रोपाकरणस्य कालं विधत्ते—" समयाविषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोत्येतस्मिन् वै लोक इन्द्रो वृत्रमहन्त्साक्षादेव वज्रं भ्रातृव्याय प्र हरति " ( तैसं ६.६.११ ) इति । समयाविषितोऽर्धास्तमितः । [८३]तस्मिन्नेवार्धास्तमयकाले पूर्वमिन्द्रो भूलोके वृत्रं जघान ॥ षोडशिनो योग्यां दक्षिणां विधत्ते—" अरुणपिशङ्गोऽश्वो दक्षिणैतद्वै वज्रस्य रूप[८४] समृद्ध्यै " ( तैसं ६.६.११ ) इति । [८४]अरुणमिश्रपिशङ्गवर्णः । तदेवं ब्राह्मणशेषाणामष्टानुवाकानामर्था निरूपिताः[८५] ॥

अथ मीमांसा ॥ चतुर्थाध्यायस्य द्वितीयपादे चिन्तितम्—

" पात्रस्यावभृथे[८६] सोमलिप्तस्य नयनं तु किम् ।
साधनं प्रतिपत्तिर्वा यन्ति[८७] तेनेत्यतः श्रुतेः ॥
प्राप्ता साधनता मैवं पुरोडाशहविष्ट्वतः[८८] ।
पात्रस्य तदसंबन्धात् प्रक्षेपः प्रतिपत्तये " ॥ ( जैन्यमा ४.२.१५–१६ ) इति ॥

ज्योतिष्टोमे श्रूयते—" [८९]वरुणगृहीतं वा एतद्यज्ञस्य यदृजीषं यद्ग्रावाणो यदौदुम्बर्यधिषवणफलके तस्माद्यत्किंचित्सोमलिप्तं द्रव्यं तेनावभृथं यन्ति " ( द्र. मैसं ४.५.८ ) इति । निष्पीडितस्य सोमस्य नीरसो भाग ऋजीषम् । तदेतदृजीषग्रावादिकं सोमाभिषवादौ सोमेन लिप्यते । तस्य लिप्तस्य सर्वस्य द्रव्यस्यावभृथसाधनत्वमभ्युपेयम् । कुतः ? ' तेनावभृथं यन्ति ' इति तृतीयाश्रुत्याऽवभृथसाधनत्वावगमात् । तस्मात् सोमलिप्तं द्रव्यमवभृथे हविष्ट्वेन नीयत इति चेत् । मैवम् । ' वारुणेनैककपालेनावभृथमवयन्ति ' इत्यनेनोत्पत्तिवाक्यशिष्टपुरोडाशहविषाऽवरुद्धेऽवभृथे सोमलिप्तस्य पात्रस्य हविष्ट्वेन संबन्धासंभवात् । तथा सत्यवभृथशब्देन तदीयं देशं लक्षयित्वा तस्मिन् देशे सोमलिप्तस्य पात्रस्य

७५. आ.क–भूयस्त्वा° । ७६. आ–' सूत्रे ' नास्ति । ७७–७७. क–प्रहिणुयादुष्णिहा बृहतीः; ७८. क.त्रि१–शाखान्त° । ७९. आ–अन्या । ८०–८०. इ.उ.पा–तत्र प्रथमायाः प्राचीं षडक्षरा अन्त्यानुष्टुभोऽतिरिच्यन्ते । ८१. त्रि१–मध्यमायामपि । ८२. आ–' तत्र ' नास्ति क–अत्र; । ८३. क. त्रि१–एतस्मिन्नेव । ८४. त्रि१–आरुण्यमिश्र° । ८५. क.त्रि१–विवृताः; पा–विहृताः । ८६. त्रि१–°भृथम् । ८७. त्रि१–यान्ति । ८८. इ.उ.पा–°हविष्ट्ववत् । ८९. क–वरुणहृतम् ।

नयनमत्र विधीयते । तच्च नयनं प्रतिपत्तये भवति । पात्रस्य पूर्वमुपयुक्तत्वात् । तस्मादेतत्प्रतिपत्तिकर्म ॥

दशमाध्यायस्य सप्तमपादे चिन्तितम्—

" किं स्यादवभृथे बर्हिर्वर्ज्यं सर्वमुताऽऽचरेत् ।
यावदुक्तं प्रयाजानुयाजवर्हिर्निषेधतः ॥
५ आद्योऽप्सुमन्तवित्याज्यभागोक्तथा परिसख्यया ।
"° अन्यनात्र गुणप्राप्तेरपूर्वत्वेन "° चाऽन्तिम " ॥ ( जैन्या १० ७ २६–२७ ) इति ॥

ज्योतिष्टोमगतेऽवभृथे चतुर्थेष्वयाजप्रयमानूयाजस्यौ बर्हिर्योगौ वर्जयित्वा शिष्ट चोदकप्राप्त सर्वमनुष्ठेयम् । कुत ? " अपबर्हिष प्रयाजान् यजति " ( तैस ६ ६ ३ ) " अपबर्हिषावनूयाजौ यजति " ( तैस ६ ६ ३ ) इति बर्हिर्योगद्वयमात्रवर्जनावगमात्" इति प्राप्ते ब्रूम —' अप्सुमन्तावाज्यभागौ
१० यजति ' ( आपश्रौ ८ ८ ६ ) इति परिसंख्यानात्तुक्तमेवानुष्ठेयम् । अथोच्येत चोदकप्राप्तावाज्य भागावनूद्याप्सुमच्छब्दोपेतमन्त्रद्वयरूपस्य गुणस्यात्र विधानान्न परिसंख्येति । नैवम् । लिङ्गक्रमाभ्यामेव मन्त्रयो प्राप्तत्वात् । अत परिसख्यया गृहमेधायज्ञसपूर्वकर्मत्वेन वा यावदुक्तमनुष्ठेयम् ॥

एकादशाध्यायस्य द्वितीयपादे चिन्तितम्—

" किमप्स्ववभृथे मुख्यमात्र साङ्गमुताग्रिम ।
१५ मुख्यत्वेनान्वयामैव प्रयोगेण तदन्वयात् " ॥ ( जैन्या ११ २ १० ) इति ॥

इद श्रूयते— अप्स्ववभृथेन चरन्ति ' ( द्र हिश्रौ ९ ५ २३ ) इति । तत्र वारुण एककपालोऽवभृथ शब्दवाच्यत्वात् मुख्य कर्म, तेन ' मुख्येनापामन्वय श्रूयते । अतोऽत्र द्रव्यदेवतावदपा मुख्यमात्रा ङ्गत्वात् प्रधानस्यैवाप्स्वनुष्ठानम् । आघाराज्यभागादान्याहवनीयेऽनुष्ठेयानीति प्राप्ते ब्रूम —स्यादप्येवम् " । ' यदि ' अवभृथ ' इत्येतावदेव श्रूयेत । इह तु ' अप्सु चरन्ति ' इति श्रवणादवभृथप्रयोगेणापामन्व
२० यात् साङ्ग प्रधानमप्सु कर्तव्यम् । एतद्विचारत्रयम् " अवभृथयजूंषि जुहोति " ( तैस ६ ६ ३ ) इत्यस्मिन्ननुवाके द्रष्टव्यम् ॥

पञ्चमाध्यायस्य द्वितीयपादे चिन्तितम्—

" यूपाञ्जनादिरेकैक सर्वा वाऽनुसमीयते ।
एकैक पूर्ववन्नैव वचनात् काण्डसगते ' " ॥ ( जैन्या ५ २ ८ ) इति ॥

२५ ज्योतिष्टोमेऽग्नीषोमीयपशौ यूपस्य घृतेनाञ्जनमुच्छ्रयणमवटस्य पर्यूहण यूपमूलस्य दृहण " मध्ये रशनया परिव्ययणमित्येते पदार्था आम्नाता । त चैकयूपपक्षे तथैव कर्तव्या । एकयूपस्य च विकल्प श्रूयते—" एकयूपा एकादशिनी वा । अन्येषा यज्ञानां यूपा भवन्ति । एकविंशिन्यश्वमेधस्य " ( तैब्रा ३ ८ १९ ) इति । तत्र बहुयूपेष्वञ्जनादिरेकैक पदार्थ प्राजापत्यपशूपाकरणादिवदनुसमेतव्य इति प्राप्ते ब्रूम —" अञ्जनादिपरिव्ययणान्त यजमानो यूप नावसृजेत् " ( द्र आपश्रौ ७ १० ५ ) इति वचनेन
३० यजमानस्य यूपत्यागनिषेधादञ्जनादिकाण्डस्यानुसमये सत्युपपद्यते । तस्मादत्र पदार्थानुसमय ।

सप्तमाध्यायस्य तृतीयपादे चिन्तितम्—

' संस्कार स्यात्पशवे न वा यूपोक्तितोऽग्रिम ।
न "स्वाश्रियोनामाभावात् तर्णो छेन्न यूपता " ॥ ( जैन्या ७ ३ २३ ) इति ॥

---

९०–९० क–अन्यनात्र गुणप्राप्तेरपूर्वत्वेन, इ उ पा–अन्यथा नाङ्गगुणे प्राप्ते, त्रि१–अन्त्यो नाय
३५ गुणप्राप्त ( "जैमिनीयन्यायमालाविस्तरे ' अन्यनात्र ' गुणप्राप्तेरपूर्वत्वेन ' इति ) ९१ आ क–ज्योति-ष्टोमावभृथ । ९२ इ ई पा–मात्रस्य वर्जनावगतत्वात् । ९३–९३ क–मुख्यकर्मत्वेन । ९४ आ–स्यान्त दवम् । ९५–९५ आ क–यद्यप्स्ववभृथ इत्येतावदेव । ९६ क हा–वाक्यान्तरिता । ९७ क–परिदृहणम् । ९८ क–साप्राप्त ।

यूप-पश्वेकादशिन्यौ ]

यूपैकादशिन्यां श्रूयते—“उपशयो यूपो भवति” (द्र. शाखा २·७·२·१) इति। एकादशानां यूपानां समूह एकादशिनी। तत्र दक्षिणतोऽवस्थापित एकादशातिरिक्तो[९९] यूप उपशयः। तथा च श्रूयते—“यद्दक्षिणत उपशयः” (तैसं ६·६·४) इति। तस्मिन्नुपशये परिव्ययणादिको यूपसंस्कारोऽस्ति, संस्कारनिमित्तस्यैकस्य यूपशब्दस्य तत्र प्रयुक्तत्वादिति चेत्। मैवम्। संस्कारप्रयोजनस्यात्राभावात्। पशुं नियोक्तुं यूपः संस्क्रियते। [१००]तच्च नियोजनमितरेष्वेकादशसु यूपेष्वस्ति न तु द्वादश उपशये। तथा च तैत्तिरीयकब्राह्मणम्—“सर्वे वा अन्ये यूपाः पशुमन्तोऽथोपशय एवापशुः” (तैसं ६·६·४) इति। परिव्ययणादिसंस्काराभावेऽप्यमन्त्रच्छेदनादयः केचिद्धर्मास्तत्र वाचनिका विद्यन्ते। तावतात्पेन सादृश्येन गौणी तत्र यूपोक्तिः। तस्मान्न यूपशब्दो धर्मानतिदिशतीति। एतद्विचारद्वयं “स्फ्येन वेदिमुद्धन्ति” (तैसं ६·६·४) इत्येतस्मिन्ननुवाके द्रष्टव्यम्॥

अष्टमाध्यायस्य प्रथमपादे चिन्तितम्—

“स्यादेकादशिने दैक्षात् सौत्याद्वाऽऽद्योऽस्तु पूर्ववत्।
रशनाद्वयसौत्यत्वविशेषाल्लिङ्गतोऽन्तिमः” ॥ (जैन्या ८·१·१०) इति॥

ऐकादशिनाः पशव एवमाम्नायन्ते—“आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्यः पौष्णः श्यामः शितिपृष्ठो बार्हस्पत्यः शिल्पो वैश्वदेव ऐन्द्रोऽरुणो मारुतः कल्माष ऐन्द्राग्नः संहितोऽधोरामः सावित्रो वारुणः पेत्वः” (तैसं ५·५·२२) इति। यद्यप्यश्वमेधप्रकरण एते पठितास्तथाऽपि ज्योतिष्टोमप्रकरणेऽप्येते विधीयन्ते—“प्रैवाग्नेयेन वापयति मिथुनं सारस्वत्या करोति रेतः सौम्येन दधाति प्र जनयति पौष्णेन” (तैसं ६·६·५) इत्यादिना। तेष्वेकादशिनेषु[१०१] दैक्षादग्नीषोमीयाद्धिष्यन्तातिदेशः स्यात्। कुतः? अग्नीषोमीयस्य पशुप्रकृतित्वेन पूर्वाधिकरणे निर्णीतत्वादिति चेत्। मैवम्। सौत्यगतविशेषलिङ्गदर्शनात्। सुत्याकाले भवः सौत्यः सवनीयः पशुः। तत्र चोदकप्राप्ता रशनैका, वाचनिकी द्वितीया। एतच्च तृतीये निर्णीतम्। तदेतत् रशनाद्वयमग्नीषोमीयपशावसंभवात् सवनीयस्य विशेषलिङ्गमेकं, सुत्याकालीनत्वं द्वितीयम्। तच्च द्वे लिङ्गे ऐकादशिनेषु दृश्येते। तत्रेदमाम्नायते—“द्वे द्वे रशने आदाय द्वाभ्यां द्वाभ्यां रशनाभ्यामेकैकं यूपं परिव्ययति” (द्र. तैसं ६·६·४) इति। सुत्याकालीनत्वं च तेष्वस्ति। [१०२]ततः सौत्याद्धर्मातिदेशः॥

नवमाध्यायस्य तृतीयपादे चिन्तितम्—

“कृष्णग्रीवादिके नोह ऊहो वाऽस्त्य[१०३] न पूर्ववत्।
देवत्वं न गणस्यात ऊहो बह्वभिधित्सया” ॥ (जैन्या ९·३·१८) इति॥

यूपैकादशिन्यामग्न्यादिदेवताकाः पशव आम्नाताः—“प्रैवाऽऽग्नेयेन वापयति मिथुनं सारस्वत्या करोति रेतः सौम्येन दधाति प्र जनयति पौष्णेन” (तैसं ६·६·५) इत्यादिना। ते च स्वनामभिरन्यत्राऽऽम्नाताः—“आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्यः पौष्णः श्यामः” (तैसं ५·५·२२) इत्यादिना। तत्राप्येकवचनान्तस्य मेषपतिशब्दस्याऽऽदित्येष्विव नोह इति चेत्। मैवम्। वैषम्यात्। आदित्यगणस्य तत्र देवत्वम्। इह त्वेकैकस्य पृथग्देवत्वम्। अतो बहून् देवानभिधातुं बहुवचनान्तत्वमूहनीयम्[१०४]॥

---

९९. आ—द्वादशः। १००. इ.उ.पा—तत्रं। १०१. इ-उ.त्रि१—°दशेषु। १०२. क—अतः। १०३. आ—वाऽस्ति। १०४. आ—°न्तत्वेनोहनीयम्।

एकादशाध्यायस्य द्वितीयपादे चिन्तितम्—

" [105]ऐकादशिनगे तन्त्रं वसाहोमेऽथ भिन्नता ।
तन्त्र शक्य त्वतो भेद [106]प्रदानार्थचभेदत " ॥ (जैन्या ११.२.८) इति ॥

ऐकादशिनेष्वाग्नेयसारस्वतसौम्यादिपशुषु वसाहोमस्य सह कर्तुं शक्यत्वात् तन्त्रमिति प्राप्ते ब्रूम —देवताभेदेन [107]प्रदानभेदात् तत्तद्याज्यार्थचान्तकालानां भिन्नत्वेनानुष्ठानयौगपद्यासंभवाद्भेद ॥

तत्रैवान्यच्चिन्तितम्—

" यूपैकादशिनी यूपाहुतेर्भेदोऽथ तन्त्रता ।
सामीप्यभेदाद्भेदोऽन्त्य सामीप्य दृष्टिग यतः" ॥ (जैन्या ११.२.९) इति ॥

यूपैकादशिन्या चोदकप्राप्ता यूपाहुति प्रतियूपं भिद्यते । कुत ? " यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोति " ( द्र. मैसं ३.९.२ ) इति तद्विधानात्, सामीप्यानां च भेदादिति प्राप्ते ब्रूम —न तावदत्यन्तसामीप्य सभवति यूपदाहप्रसङ्गात् । अतो यावता व्यवधानेन यूपा दृष्टिगोचरा भवन्ति तावतो देशस्य समीपत्वमभ्युपेतव्यम् । तथा सति [108]देशैक्यादाहुतेस्तन्त्रता ॥

तत्रैव चतुर्थपादे चिन्तितम्—

" किमैकादशिनेष्वस्य कुम्भ्यादेर्भिन्नता न वा ।
असदेहाय [109]भेदो नो[109] लिङ्गादेवास्य [110]सिद्धित " ॥
(जैन्या ११.४.१५) इति ॥

भिन्नदेवताकेष्वैकादशिनेषु पशुष्वेककुम्भीपाके सति किमङ्ग कां देवतां प्रत्युपाहृतस्य पशो संबन्धीति संदेहे सति प्रदाने संकीर्येत । तस्मात् कुम्भ्यादेरावाप इति चेत् । मैवम् । [111]चिह्नकरणमात्रेण संदेहापगमसिद्धौ लाघवात् । तस्मादत्र तन्त्रता ॥

तत्रैवान्यच्चिन्तितम्—

" तत्तन्त्र हेयमुत नो चिह्नं नास्ति वसास्वत ।
हेयं नो प्रतिपत्तित्वात् सांकर्येणाप्यदोषत " ॥ (जैन्या ११.४.१६) इति ॥

ऐकादशिनेषु[112] कुम्भ्यादेर्यत् तन्त्र निर्णीत तत्परित्याज्यम् । [113]कुत ? अङ्गानामिव वसाना चिह्नकरणासंभवेन साकर्यप्रसङ्गादिति चेत् । मैवम् । वसाहोमस्य प्रतिपत्तिकर्मत्वेन द्रव्य प्रत्यपि प्रयोजकत्वाभावेन तद्द्रव्यश्रपणार्थं कुम्भीभेदप्रयोजकत्वस्य दूरापेतत्वात् । न चात्र द्रव्यसांकर्यं दोषाय भवति, व्यवस्थापकप्रमाणाभावात् । ननु तत्तद्देवताविषययाज्यार्धर्चान्तेषु भिन्ना होमा पूर्वं निर्णीता । बाढम् । [114]तथैवार्धर्चान्ते तद्भूयतां[114] क्रियाघात द्रव्यसाकर्य । तस्मात् कुम्भ्यादेस्तन्त्र ॥ त्याज्यम्, इद पदक " प्रजापति प्रजा असृजत " (तैब्रा ६.६.५) इत्यस्मिन्ननुवाके द्रष्टव्यम् ॥

द्वितीयाध्यायस्य तृतीयपादे चिन्तितम्—

" पर्यग्निकृत पात्नीवत उत्सृज्यत इत्यसौ ।
यागो गुणो वा याग स्यादन्त्रयाव्यवधानत ॥
प्रत्यभिज्ञातमालभ्यमनूद्योत्सर्गतस्ततः ।
गुणं पर्यग्निकृत्यास्य चवत्युत्तरनिवृत्तये ॥

---

१०५. जैमिनीयन्यायमालामनुसृत्य शुद्धीकृत , आ–ऐकादशिनके, क–एकादशिनथम्; त्रि१–एकादशिनिके । १०६. शुद्धीकृत, हस्तलिखितेषु मुद्रितपुस्तकेषु च–' प्रधानार्थ ' इति । १०७. शुद्धीकृत', हस्तलिखितेषु मुद्रितपुस्तकेषु च ' प्रधानभेदात् ' इति । १०८. क नि१ पा–देशैक्यासमवा° । १०९–१०९. इ उ. क पा–भेदोऽस्तु । ११०. इ त्रि१ पा–सिध्यति, क–सिध्यति । १११ इ उ.पा–चिह्नादिकरण° । ११२ क त्रि१–एकादशिनेषु । ११३ आ क–' कुत ' नास्ति । ११४–११४. आ–तथैवैकादशाहुत्यो हूयताम् ।

न दुष्टा परिसंख्याऽत्र चोदकात् प्राग्विधौ सति ।
पर्यग्निकरणान्ताङ्गरीतिः क्लृप्तोपकारतः " ॥ ( जैन्या २.३.१९–२१ ) इति ॥

"त्वाष्ट्रं पात्नीवतमालभेत" इति प्रकृत्यैवमाम्नातम्—"पर्यग्निकृतं पात्नीवतमुत्सृजति" ( तैसं ६.६.६ ) इति । तत्र पर्यग्निकृतशब्देन संस्कृतपशुद्रव्यस्य, पात्नीवतशब्देन पत्नीवन्नामकदेवतासंबन्धस्य च प्रतीयमानत्वादयं यागविधिः । एवं सति पर्यग्निकृतपात्नीवतशब्दयोरव्यवहितान्वयो लभ्यते । सिद्धान्ते तु 'पर्यग्निकृतमुत्सृजति' इत्यन्वयं वाञ्छन्ति । तत्रा व्यवहितान्वयो दुर्वारः । तस्माद्वायव्यपशुवद्यागविधिरिति प्राप्ते ब्रूमः—अनारभ्याधीतत्वान्नास्ति वायव्ये प्रकृता[115] प्रत्यभिज्ञा । इह त्वालम्भत्वेन प्रकृतः पशुः पात्नीवतशब्देन प्रत्यभिज्ञायते । तमनूद्य पर्यग्निकृतशब्दान्वितेनोत्सृजतीत्याख्यातेन पर्यग्निकरणाख्यो गुणो विधीयते । न च [116]प्रकृतिगतस्य पर्यग्निकरणस्य विकृतौ चोदकेन प्राप्तत्वादनर्थकोऽयं विधिरिति वाच्यम् । [117]उपरितनाङ्गाननुवृत्तेर्विधिप्रयोजनत्वात्[118] । नन्वेवं सति परिसंख्या स्यात् । सा च दोषत्रयदुष्टा । स्वार्थत्यागोऽन्यार्थस्वीकारः प्राप्तबाधश्चेति त्रयो दोषाः । पर्यग्निकरणवाक्ये [119]स्वार्थो विधिस्त्यज्येत । अन्यार्थो निषेधः स्वीक्रियेत । चोदकप्राप्तान्युपरितनान्यङ्गानि बाध्येरन् । नैवम् । पर्यग्निकरणोत्तरभावीन्यङ्गानि नानुष्ठेयानीत्येतस्याः परिसंख्याया अनङ्गीकारात् । कथं तर्हि तन्निवृत्तिः ? आर्थिकीति ब्रूमः । चोदकप्रवृत्तेः प्रागेवायं विधिः प्रवर्तते । प्रत्यक्षोपदेशस्य शीघ्रबुद्धिजनकतया कल्प्यातिदेशात् प्रबलत्वात् । तथा सत्युपदिष्टैरेवाङ्गैर्निराकाङ्क्षायां विकृतौ चोदकस्याप्रवृत्त्यैवोपरितनान्यङ्गानि न प्राप्यन्ते । न चानेन न्यायेन पर्यग्निकरणात् प्राचीनानामप्यप्राप्तिरिति वाच्यम् । विधीयमानस्य पर्यग्निकरणस्य नूतनत्वे सत्युपकारकल्पनापत्त्या प्रकृतौ यत्क्लृप्तोपकारं पर्यग्निकरणं तदवस्थापन्नस्यैवात्र विधेयत्वात् । प्रकृतौ च प्राचीनाङ्गानन्तरभाविनः[120] एवोपकारः क्लृप्त इत्यत्रापि तादृशस्यैव विधानात् पर्यग्निकरणान्ताङ्गरीतिः सिध्यति । एवं च सत्युत्सृजतीत्याख्यातेन यथोक्तपर्यग्निकरणविधानार्थसिद्ध[121] उपरितनाङ्गोत्सर्गो धातुनाऽनूद्यते । तदेवमत्र गुणविधिः ॥

नवमाध्यायस्य चतुर्थपादे चिन्तितम्—

" आज्येन शेषमित्युक्तौ द्रव्यप्रतिनिधिर्भवेत् ।
कर्मान्यद्वाऽग्निमस्त्यागशेषसंस्थापनोक्तिभिः ॥
अङ्गरीत्या समाप्तत्वाद्देवतोक्त्यनुवर्तनात्[122] ।
साम्याच्छेषः संस्थितिस्तु याग आलम्भनादिवत्[123] " ॥
( जैन्या ९.४.१९–२० ) इति ॥

"त्वाष्ट्रं पात्नीवतमालभेत" इति प्रकृत्य "पर्यग्निकृतं पात्नीवतमुत्सृजति" इति श्रुतम् । तत्र [124]पुनः श्रूयते—"आज्येन शेषं संस्थापयेत्" ( द्र. तैसं ६.६.६, आपश्रौ १४.७.१३ ) इति । तदिदमाज्यं पशुद्रव्यस्य प्रतिनिधिर्भवेत् । कुतः ? उत्सर्गशेषसंस्थापनशब्दैस्तदवगमात् । पर्यग्निकरणादूर्ध्वं पशुद्रव्यस्य त्यागमभिधाय 'आज्येन' इति द्रव्यान्तरं पशुस्थानीयं साधनभूतमुपदिश्य[125] चोदकप्राप्तमुत्तरकालीनम् अङ्गजातं तेन द्रव्येण समापनीयमिति विधीयत इति प्राप्ते ब्रूमः—पूर्वाधिकरणन्यायेनाङ्गरीत्या[126] पात्नीवतः पशुः समाप्तः[127] । यदि 'पात्नीवतमालभेत' इति विहितस्य कर्मणः समाप्तिर्न स्यात्, केवलं पशुद्रव्यत्यागः क्रियेत तदा विहितो द्रव्यदेवतासंबन्धरूपो यागो नानुष्ठितः स्यात् । ततो देवतामुद्दिश्य त्यागोऽवश्यं कर्तव्यः ।

115. आ.क–प्रकृत°; त्रि१–प्रकृति° । 116. इ.उ.पा–श्रुति° । 117. आ–उपरितनाङ्गनिवृ°; इ.उ.पा–'उपरितनाङ्गाननुवृत्तेः' नास्ति । 118. इ.उ.क.पा–°प्रयोजनात् । 119. इ.उ.पा–'स्वार्थः' नास्ति । 120. क–°भावित्वेन । 121. इ.उ.पा.क–°सिद्धिः । 122. इ.उ.त्रि१–°देवतोक्त्यानुवर्तनात् । 123. इ.उ.पा–आलम्भनादि तत्; क–आलम्भनादिति । 124. इ.उ.पा–'पुनः' नास्ति । 125. इ.उ–°मुद्दिश्य । 126. इ.उ.पा–°करणेनाङ्गरीत्या । 127. इ.उ.पा–समाप्यः ।

तथा सति पशुसाधनके यागे मुख्येन पशुनैव साधिते कुतः प्रतिनिधिः । देवतोद्देशत्यागस्य चोत्पत्तिवाक्येनैव सिद्धत्वात् । पर्यग्निकरणोत्सर्गवाक्येण [128]-अङ्गरीतिविधाने तस्यापनीय-[128] दोषो न कोऽप्यस्ति । तस्मात् आज्यवाक्येन कर्मान्तरं विधीयते । देवता तु पात्नीवतशब्दस्यानुवृत्त्या लभ्यते । कर्मान्तरत्वेऽपि शेषत्वमुपपद्यते पश्वाज्यद्रव्यकयोः पूर्वोत्तरकर्मणोः पत्नीवदाख्याया देवताया एकत्वेनाव्यवहितानुष्ठानेन चोपक्रमोपसंहारसद्भावात् । सस्थितिक्रियया चाऽऽलम्भननिर्वापादिव्यागो लक्ष्यते । लिङ्गप्रत्ययश्चापूर्वभावनामभिधत्ते । तस्मादाज्यद्रव्यक पत्नीवद्देवताक शेषवत्पशुयागसमनन्तरोत्तरभाविकर्मान्तरमत्र विधीयते । एतदुभयम् " इन्द्र. पत्निया " ( तैस ६ ६ ६ ) इत्यनुवाके द्रष्टव्यम् ॥

द्वादशाध्यायस्य द्वितीयपादे चिन्तितम्—

" अस्त्याहुतिश्चरौ सौम्ये नास्ति वा पशुपाकतः ।
निवृत्तत्वादस्ति नैवमनिवृत्तेः पुरोदितेः ॥ " ( जैन्या १२ २.४ ) इति ॥

तृतीयसवनीये ये सौम्यचर्वादयस्तेषु हविष्कृदाह्वानं पुनः कर्तव्यम् । [129]पशावाहूतायास्तस्याः पशुपाके निष्पन्ने सति निवृत्तत्वादिति चेत् । नैवम् । प्रकृतौ पत्नीसंयाजेभ्य ऊर्ध्वं हविष्कृत वाग्यता [130]-उत्थाप्य वाक्येन विहितम्-[130] । पशावपि तत्र [131]-पूर्वं निवृत्त्यभावात्-[131] । तस्मात् तत्कालीनेषु[132] सौम्यचर्वादिषु नास्ति पुनराह्वानम् । एतच्च " घ्नन्ति वा एतत् सोमम् " ( तैस ६.६ ७ ) इत्यनुवाके द्रष्टव्यम् ॥

पञ्चमाध्यायस्य प्रथमपादे चिन्तितम्—

" उक्थ्योत्कर्षे षोडशी नोत्कृष्येतोत्कृष्यतेऽथ वा ।
स्तोत्रकालाय नोत्कर्षः पूर्ववत् षोडशिग्रहे[133] ॥
ग्रहं पराञ्चमुक्थ्येभ्य इत्यङ्गाङ्गित्वभासनात् ।
सस्तोत्रे ग्रहं उत्कृष्टे स्तोत्रकालः प्रबाध्यताम् ॥ " ( जैन्या ५.१ ३६-३७ ) इति ॥

ज्योतिष्टोमे षोडशिग्रहं प्रकृत्य श्रूयते— " तं पराञ्चमुक्थ्येभ्यो निगृह्णाति " इति । तृतीयसवने सूर्यास्तमयात् प्रागेवोक्थ्यग्रहास्त्रयो गृह्यन्ते । तेभ्यः परस्तादयं षोडशी विहितः । यदि कदाचिदेवोक्थ्यग्रहा[134] अस्तमयादूर्ध्वमुत्कृष्येरंस्तदा तत ऊर्ध्वं विहितस्यापि षोडशिग्रहस्य नास्त्युत्कर्षः । कुतः ? पूर्वन्यायेन कालस्यानुसरणीयत्वात् । कालोऽप्येवमाम्नातः—"समयाविषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोति " ( तैस ६ ६.११ ) इति । समयोऽस्तमयः [135]-तं प्राप्ते-[135] सूर्ये स्तोत्रप्रारम्भकालः । सोऽयमुत्कर्षे सति बाध्यते । तच्चायुक्तं, [136]पूर्वत्राग्निहोत्रस्य स्वकालमबाधितुमेवेष्टिमध्येऽनुष्ठानाङ्गीकारादिति प्राप्ते ब्रूमः —'पराञ्चम्' इति शब्देनोक्थ्येभ्य उत्तरकालः षोडशिग्रहाङ्गत्वेन विधीयते । ततो मुख्यग्रहस्य कालमबाधितुमुपसर्जनस्य स्तोत्रस्य कालं बाधित्वा सस्तोत्रग्रह उत्क्रष्टव्यः ॥

दशमाध्यायस्य पञ्चमपादे चिन्तितम्—

" विकृतौ प्रकृतौ वा स्यात् षोडश्युत्कर्षतोऽग्रिमः ।
अविच्छेदेन वाक्येनानुत्कर्षात्[137] प्रकृतावसौ " ॥ ( जैन्या १० ५.१३ ) इति ॥

ज्योतिष्टोमप्रकरणे श्रूयते—" य एवं विद्वान् षोडशिनं गृह्णाति " ( द्र. मैस ४ ७.६ ) इति । सोऽयं षोडशिग्रहो विकृतौ निविशते । कुतः ? प्रबलेन वाक्येन तस्य ग्रहस्य प्रकरणादुत्कृष्यमाणत्वात् ।

---

१२८-१२८ क-अङ्गरीतिविधापनीय । १२९ आ क-पश्वर्थमाहू° । १३०-१३०. इ उ. त्रि१ पा-उत्थानकालत्वेन । १३१-१३१ इ उ पा-पूर्वनिवृत्त्यभावात् । १३२. इ उ पा-तत्तत्कालीनेषु, त्रि१-तत्कालेषु । १३३. इ ड पा-°ग्रहं । १३४ इ उ-कदाचिदेवोक्थ्यग्रह. । १३५-१३५. [illegible] उ पा-अस्तमयं समाप्ते । १३६. आ-पूर्वमग्नि°, त्रि१-पूर्वम्याग्नि° । १३७. क-°नुत्कर्षात्; त्रि१-°नुत्कर्षम् ।

" उक्थेऽहन्द्विरात्रस्य गृह्यते (द्र. मैसं ४·७·६) मध्यमेऽहंस्त्रिरात्रस्य " (द्र. मैसं ४·७·६) इति हि वाक्यम् । द्विरात्रादीनां च विकृतित्वं प्रसिद्धम् । अतः प्रकरणं बाधित्वा विकृतौ निवेश इति प्राप्ते ब्रूमः—" अप्यग्निष्टोमे राजन्यस्य गृह्णीयात् " (तैसं ६·६·११) इत्यन्यद्वाक्यमस्ति । तेन प्रकृतिभूतेऽग्निष्टोमे निविशते । न चाऽत्र प्रकरणबाधः । अग्निष्टोमस्य ज्योतिष्टोमावान्तरसंस्थारूपत्वेन ततोऽनन्यत्वात् । न चैवं सति चोदकेनैव द्विरात्रादिषु प्राप्तत्वात् पुनर्विधिवाक्यं व्यर्थमिति शङ्कनीयम् । अहर्विशेषसंबन्धाय राजन्यादिनिमित्तनैरपेक्ष्याय च तदुपपत्तेः । तस्मात् प्रकृतौ निवेशः ।

तत्रैवान्यच्चिन्तितम्—

" उक्थ्याग्रयणतः स स्यात् केवलाग्रयणादुत ।
आद्य उक्तिद्वयादन्त्य उक्थ्योर्ध्वत्वविधित्वतः " ॥ (जैन्या १०·५·१४) इति ॥

स पूर्वोक्तः षोडशी वचनद्वयबलेनोक्थ्यपात्रादाग्रयणपात्राच्च ग्रहीतव्यः । " उक्थ्याद्गृह्णाति[138] षोडशिनम् " इत्येकं वाक्यम् । " आग्रयणाद्गृह्णाति षोडशिनम् " इति द्वितीयं वाक्यम् । अत्रोच्यते—आग्रयणपात्रादेव ग्रहीतव्यः । कुतः ? उक्थ्यवाक्यस्योत्तरकालविधिपरत्वात् । " तं पराञ्चमुक्थ्यान्निर्गृह्णाति " इत्यूर्ध्वकालवाचिनः पराक्शब्दस्य प्रयोगात् । ततो नोभयस्माद्ग्रहणम् ॥

तत्रैवान्यच्चिन्तितम्—

" सवनेषु तृतीये वा स ग्रहोक्त्या भवेत् त्रिषु ।
द्वे निन्दित्वा तृतीयस्य विधेस्तत्रैव गृह्यताम् " ॥ (जैन्या १०·५·१५) इति ॥

स पूर्वोक्तः षोडशिग्रहस्त्रिषु सवनेषु भवेत् । कुतः ? सवनत्रयस्योक्तत्वात् । षोडशिनं प्रकृत्याऽऽम्नायते—" प्रातःसवने ग्राह्यो माध्यन्दिनसवने ग्राह्यस्तृतीयसवने ग्राह्यः " (द्र. मैसं ४·७·६) इति । नैतद्युक्तम् । सवनद्वयस्यार्थवादत्वेन तृतीयसवनस्तावकत्वात्[139] । अत एव वाक्यशेषे सवनद्वयं निन्दित्वा तृतीयसवनं विधीयते । " यत् प्रातःसवने " इत्यादिना सवनद्वये [140]वज्रपातदोषोऽभिहितः (द्र. मैसं ४·७·६) । ' तृतीयसवने ग्राह्यः तत्[141] सर्वेषु सवनेषु गृह्णाति ' (द्र. मैसं ४·७·६) इति प्रशंसापूर्वकं विहितम् । तस्मात्तृतीयसवन एव षोडशिग्रहः ॥

पुनरप्यन्यत्तत्रैव चिन्तितम्—

" अग्निष्टोमोक्थ्यसंबन्धी षोडश्यस्तुतशस्त्रकः ।
तद्युक्तो वाऽग्रिमः प्राप्तस्तत्र संस्थामबाधितुम् ॥
स्तोत्रं भवत्येकविंशं हरिवच्छस्यते ततः ।
इष्यते [142]छन्यसंस्थात्वं स्तुतशस्त्रयुतस्ततः " ॥ (जैन्या १०·५·२६-२७) इति ॥

षोडशिनं प्रकृत्याम्नायते—" अप्यग्निष्टोमे राजन्यस्य गृह्णीयादप्युक्थ्ये ग्राह्यः " इति । सोऽयमग्निष्टोमोक्थ्यसंस्थयोर्विहितः षोडशिग्रहः स्तुतशस्त्रवर्जितो भवितुमर्हति । अन्यथा तदीयाभ्यां स्तुतशस्त्राभ्यां क्रतुसमाप्तौ षोडशिसंस्थात्वं प्रसज्येत, अग्निष्टोमसंस्थात्वमुक्थ्यसंस्थात्वं च बाध्येत, [143]तत्संबन्धिसमाप्त्यभावादिति प्राप्ते ब्रूमः—" एकविंशꣳ स्तोत्रं भवति प्रतिष्ठित्यै हरिवच्छस्यते " (द्र. तैसं ६·६·११) इति षोडशिनि प्रत्यक्षविधिना स्तुतशस्त्रे विहिते । किं च—" ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति " (द्र. तैसं ३·१·२) इति [144]ग्रहग्रहणचमसोन्नयनयोः [145]स्तोत्रनिमित्तत्वं श्रुतम् । न हि सति निमित्ते नैमित्तिकं त्यक्तुं शक्यम् । तस्मात् पूर्वसंस्थात्वहानिमन्यसंस्थात्वं चाभ्युपेत्य स्तुतशस्त्रयुतत्वं द्रष्टव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे चतुर्थप्रपाठक एकोनचत्वारिंशोऽनुवाकः ॥

---

१३८. क-निर्गृह्णाति । १३९. आ-°सवनस्योक्तत्वात् । १४०. इ.उ.त्रि१.पा-वज्रघात° । १४१. आ.क-न; इ.उ.पा-सत् । १४२. इ.उ.पा-छ्रस्य स° । १४३. इ.उ.पा-तत्तत्संबन्धि । १४४. इ-प्रतिग्रहग्रहण°; उ.पा-प्रतिग्रहण° । १४५. इ.उ.पा-स्तोत्रत्वनिमित्तं; क-तत्र निमित्तत्वम् ।

यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि ।
जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्याम् ॥
य । त्वा । हृदा । कीरिणा । मन्यमान. । अमर्त्यम् । मर्त्यः । जोहवीमि ॥
जातवेद इति जात–वेद. । यश. । अस्मासु । धेहि ।
५ प्रजाभिरिति प्र–जाभि. । अग्ने । अमृतत्वमित्यमृत–त्वम् । अश्याम् ॥

एवमाध्वरिका मन्त्रा अवभृथान्ता. समाप्ता । अत. परमन्त्योऽनुवाको याज्या, वैश्वदेव काण्डम् ॥

तत्र " अग्नये पुत्रवते पुरोडाशमष्टाकपाल निर्वपेदिन्द्राय पुत्रिणे पुरोडाशमेकादशपाल प्रजाकाम " ( तैस २.२ ४ ) इत्यस्याग्नेयस्य पुरोनुवाक्या— ' यस्त्वा ' इति त्रिष्टुप् ।
१० इयादेशद्वयेन द्वितीयपाद.[1] पूर्य. ॥ हे अग्ने जातवेद जातानां वेदित जातधन वा, य अह मर्त्य मरणधर्मा मनुष्य[2] त्वाम् अमर्त्यम् अमरणधर्माण हृदा मनसा कीरिणा कीर्तयता गुणकीर्तनशीलेन । कीर्तयतेर्ण्यन्तात् " अच इ. " ( उ ५८८ ) इतीप्रत्यये धातोरन्त्य- लोपश्छान्दस. । ईदृशेन हृदयेन त्वा मन्यमानः जानन् जोहवीमि भृशमाह्वयामि । ह्वयते " अभ्यस्तस्य च " ( पा ६ १ ३३ ) इति सम्प्रसारणम् । यद्वा—त्वदर्थमिद हविर्जुहोमि ।
१५ उभयत्रापि यङ्लुगन्तात् ( पा २ ४ ७४ ) लट् । " अनुदात्ते च " ( पा ६ १ १९० ) इत्याद्युदात्तत्वम् । येषा सम्बन्धी तवाह्वाताऽह तेषु अस्मासु पुत्रपौत्रेषु यश धेहि स्थापय यशस्विन. सर्वानस्मान् कुरु । किंच—ताभि प्रजाभिः पुत्रादिभिरविच्छिन्नाभि सह अहम् अमृतत्व दीर्घायुष्यम्[3] अश्या प्राप्नुयाम् । व्यत्ययेन परस्मैपदम् ( पा ३ १.८५ ) ॥

एकोनचत्वारिंशेऽनुवाके[1] सोमयाग समापित. । अथास्य प्रपाठकस्य [2]अन्तिमेऽनुवाके काम्य-
२० याज्यापुरोनुवाक्या[2] उच्यन्ते ।

य इति ॥ इष्टिकाण्डे द्विहविष्का काचिदिष्टिरेवमाम्नायते—" अग्नये पुत्रवते पुरोडाशमष्टा- कपालं निर्वपेदिन्द्राय पुत्रिणे पुरोडाशमेकादशकपाल प्रजाकामोऽग्निरेवास्मै प्रजा प्र जनयति वृद्धामिन्द्र प्र यच्छति " ( तैसं २.२ ४ ) इति । वृद्धा पुत्रपौत्रादिरूपेणाभिवृद्धियुक्ताम्[3] ॥ तत्राग्नेयस्य पुरोनुवाक्या माह—' यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि । जातवेदो यशो अस्मासु धेहि प्रजा-
२५ भिरग्ने अमृतत्वमश्याम् ' इति ॥ हे जातवेद, य अहं मर्त्य सन् कीरिणा गुणकीर्तनशीलेन हृदा मनसा त्वाम् अमर्त्यं मरणरहितं मन्यमान आह्वयामि तादृशेषु अस्मासु पुत्रपौत्रादिरूप- प्रजाभिर्निष्पादितं यश कीर्तिं निधेहि । हे अग्ने, त्वत्प्रसादात् अमृतत्व देवत्वम् अश्यां प्राप्नुयाम् ॥

१ मै–तृतीयपाद. । २–२. ब–मनुष्यात्मा । ३ ति–दीर्घायुष्त्वम् ।

१. क–पञ्चचत्वारिंशेऽनुवाके । २–२ क–षट्चत्वारिंशाख्यान्तिमेऽनुवाके काम्येष्टियाज्याः ।
३० ३. आ–पुत्रपौत्रेणाभिवृद्धाम्, क–पुत्रपौत्ररूपेणा ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

यस्मै त्वꣳ सुकृते जातवेद उ लोकमग्ने कृणवः स्योनम् ।
अश्विनꣳ स पुत्रिणं वीरवन्तं गोमन्तꣳ रयिं नशते स्वस्ति ॥
त्वे सु पुत्र शवसोऽवृत्रन् कामकातयः । न त्वामिन्द्राति रिच्यते ॥

यस्मै । त्वम् । सुकृत इति सु-कृते । जातवेद इति जात-वेदः ।
उ । लोकम् । अग्ने । कृणवः । स्योनम् । ५
अश्विनम् । सः । पुत्रिणम् । वीरवन्तमिति वीर-वन्तम् ।
गोमन्तमिति गो-मन्तम् । रयिम् । नशते । स्वस्ति ॥
त्वे इति । स्विति । पुत्र । शवसः । अवृत्रन् । कामकातय इति काम-कातयः ।
न । त्वाम् । इन्द्र । अतीति । रिच्यते ॥

तत्रैव याज्या—' यस्मै ' इति त्रिष्टुप् । वीरवन्तमिति तृतीयपादान्तः ॥ हे अग्ने १०
जातवेदः, यस्मै सुकृते शोभनानि कर्माणि कृतवते । उ इत्यवधारणे[4] । यस्मा एव यदर्थमेव
स्योनं सुखं लोकं स्थानं कृणवः कुर्याः । कृवि हिंसाकरणयोः । लेट् । " धिन्विकृण्व्योर च "
( पा ३·१·८० ) इत्युप्रत्ययः । " लेटोऽडाटौ " ( पा ३·४·९४ ) इत्यडागमः । [5]अश्विनं
गवाश्वादिसहितं[5] रयिं धनं स्वस्ति अविच्छेदेन नशते प्राप्नोति । नशतिर्गतिकर्मा । स एव
त्वत्प्रसादात् बह्वश्वो भवति, अश्वपुत्रपौत्रादिमांश्च भवति, [6]अन्यैश्च विक्रान्तैः[6] पुरुषैस्तद्वान् १५
भवति, गोमहिष्यादिसंघातस्वामी महाधनश्च भवतीति ॥

अथैन्द्रस्य पुरोनुवाक्या—' त्वे सु पुत्र ' इति गायत्री ॥ त्वे त्वयि । " सुपां सुलुक् "
( पा ७·१·३९ ) इति सप्तम्येकवचनस्य शेआदेशः । हे शवसः बलस्य पुत्र । [7]महाबलश्च,
बलाज्जात[7] इत्युपचर्यते । " परमपि च्छन्दसि " ( पा २·१·२ वा ६ ) इति परमपि षष्ठ्यन्तं
पूर्वमामन्त्रितं प्रत्यङ्गवद्भवतीति षष्ठ्यन्तामन्त्रितसमुदायस्य आष्टमिकमामन्त्रितसर्वानुदात्तत्वम् २०
( पा ८·१·१९ ) । कामकातयः स्तुतयः [8]कामा वाञ्छितानि [9]कायन्ते प्रार्थ्यन्ते याभिस्ताः

यस्मा इति ॥ अथ याज्यामाह—' यस्मै त्वꣳ सुकृते जातवेद उ लोकमग्ने कृणवः स्योनम् ।
अश्विनꣳ स पुत्रिणं वीरवन्तं गोमन्तꣳ रयिं नशते स्वस्ति ' इति ॥ शोभनं कर्म करोतीति सुकृत् । जातं
जगद्वेत्तीति जातवेदाः । [4]हे जातवेदः[4] अग्ने, त्वं सुकृते यस्मै[5] यजमानाय स्योनं सुखकर- २५
मुत्कृष्टं लोकं[6] स्थानं कृणवः करोषि सः यजमानः रयिं धनं स्वस्ति नशते सम्यक् प्राप्नोति ।
कीदृशं धनम्? अश्वैः पुत्रैः शूरभटैर्गोभिश्च संयुतम् ॥

त्व इति ॥ ऐन्द्रस्य पुरोनुवाक्यामाह—' त्वे सु पुत्र शवसोऽवृत्रन् कामकातयः । न त्वामिन्द्राति
रिच्यते ' इति ॥ त्वे त्वयि । शवसः बलस्य । सु अवृत्रन् सुष्ठु वर्तन्ते । कामा भोगाः काम्यन्ते याभिः

४. तं.ति.मै–' °धारणे ' इत्यस्यानन्तरं ' समिष्टयजूंषि ' उकाररूपः प्लुत उदात्तः ' इत्युदात्तः ३०
प्लुतः ' । ५–५. मै–स गवाश्वादिसहितम् । ६–६. व–अन्यैश्च एधिता अश्वैः(न्यैः?) । ७–७. व–
महाबलाज्जातः । ८. व–कामानि । ९. पं–कामयन्ते ।

४–४. इ.उ.पा–' हे जातवेदः ' नास्ति । ५. इ.उ.त्रि१.पा–अस्मै । ६. आ–' लोकम् ' नास्ति ।

उक्थउक्थे सोम इन्द्रं ममाद नीथेनीथे मघवानम्(१) सुतासः ।
यदीम् सबाधः पितरं न पुत्राः समानदक्षा अवसे हवन्ते ॥
उक्थउक्थ इत्युक्थे–उक्थे । सोमः । इन्द्रम् । ममाद ।
नीथेनीथ इति नीथे–नीथे । मघवानमिति मघ–वानम् ( १ ) । सुतासः ॥
यत् । ईम् । सबाध इति स–बाधः । पितरम् । न । पुत्राः ।
समानदक्षा इति समान–दक्षाः । अवसे । हवन्ते ॥

कामकातय. । दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम् ( पा ६ २·४२ ) । तास्त्वय्येव सु अक्रन् शोभनं वर्तन्ते त्वय्येव महाबले क्रियमाणाः स्तुतयः शोभन्ते, न पुरुषान्तरवदनर्थकतां प्रतिपद्यन्ते । कृतेश्छान्दसो लुङ् ( पा ३ ४ ६ ), " मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः " ( पा २ ४ ८० ) इति च्लेर्लुक् ... [reading per page:] कृतेश्छान्दसो लुङ् ( पा ३ ४ ६ ), " घुद्भ्यो लुङि " ( पा १ ३ ९१ ) इति परस्मैपदम्, द्युतादित्वादङ् ( पा ३ १ २६ ), " बहुलं छन्दसि " ( पा ७ १·८ ) रुट् । यदुक्तं त्वय्येव स्तुतयः शोभनवृत्तय इति तदेव समर्थ्यते—हे इन्द्र, तासां स्तुतीनां मध्ये एकाऽपि त्वा न अति रिच्यते त्वां विहाय अन्यत्र न प्रवर्तते सर्वा अपि त्वद्विषया एवाऽऽत्मानं लभन्ते ॥
तत्र याज्या—' उक्थउक्थे ' इति त्रिष्टुप् ॥ उक्थउक्थे शस्त्रेशस्त्रे सोमः इन्द्रं ममाद मादयति तर्पयति । मदेर्ण्यन्तात् ( पा १·४ ५५ ) छान्दसो लिट् ( पा ३·४ ६ ) [" बहुलमन्यत्रापि " ( उ १९० ) इति णिलुक् । " अनुदात्तं च " ( पा ८ १ ३ ) इति द्वितीयस्योक्थशब्दस्यानुदात्तत्वम् । किंच—नीथेनीथे स्तोत्रेस्तोत्रे सुतासः अभिषुताः सोमाः मघवानं

स्तुतिभि सा कामकातय । इन्द्रस्यातिप्रबलत्वात् शवस[7] पुत्रैरुपचर्यते । हे शवसः पुत्र इन्द्र, अस्मदीयस्तुतयस्त्वयि सुष्ठु वर्तन्ते । काचिदपि स्तुतिः त्वा न अति रिच्यते । सर्वस्य स्तुतिवाक्यस्य[8] त्वयि नियमानत्वात् ॥

उक्थउक्थ इति ॥ अथ याज्यामाह—' उक्थउक्थे सोम इन्द्रं ममाद नीथेनीथे मघवानं सुतासः । यदीं सबाधः पितरं न पुत्राः समानदक्षा अवसे हवन्ते ' इति ॥ उक्थउक्थे सोमयागवर्तिनि शस्त्रेशस्त्रे स सोम इन्द्रं ममाद[9] हर्षयामास । नीथस्त आहूयत इन्द्रोऽत्रेति नीथो यागप्रदेशः । समानदक्षाः सर्वेषु यजमानेषु कुशलाः सुतासः पुत्रस्थानीया यजमानाः पितृस्थानीयं मघवानं नीथेनीथे तत्तद्यागप्रदेशे अवसे रक्षार्थं हवन्ते आह्वयन्ति । यत् ईम् सबाधः यस्मादीदृशं आहूतो मघवा विरोधिष्वसुरेषु बाधकारी तस्मादाहूयन्ते । पुत्राः पितरं न पितरमिव यथा बाला[10] अन्यैर्बाध्यमाना रक्षार्थं पितरमाह्वयन्ति तद्वत् ।

१० मै–' अन्यत्र ' नास्ति ।

७ इ उ.पा–' शवस. ' नास्ति, त्रि१–बलस्य । ८ त्रि१–'वाक्यस्यार्थस्य । ९ इ उ.त्रि१.पा–' ममाद ' नास्ति । १० इ उ त्रि१.पा–अन्यदीये ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

**अग्ने॑ रसे॑न॒ तेज॑सा॒ जात॑वेदो॒ वि रो॑चसे । र॒क्षो॒हाऽमी॑व॒चात॑नः ॥**

अग्ने॑ । रसे॑न । तेज॑सा । जात॑वेद॒ इति॒ जात॑—वे॒दः॒ । वीति॑ । रो॒च॒से॒ ।

र॒क्षो॒हेति॑ रक्षः॑—हा । अमी॑व॒चात॑न॒ इत्यमी॑व—चात॑नः ।

महाधनम् इन्द्रं मादयतु¹¹ । " आज्जसेरसुक् " ( पा ७·१·५० ) । किंच—ᵛयत् यदा खलु ᵛसबाधः बाधासहिताः ¹²शत्र्वादिभिः बाधिता भवन्ति पुरुषाः¹² । व्यत्ययेन समासान्तोदात्तत्वम् ( पा ३·१·८५ ) । तदा तेऽपि ᵛपितरं ᵛन पितरमिव पुत्राः¹³ ᵛअवसे रक्षणाय इन्द्रमेव ᵛहुवन्ते ह्वयन्ति । पूर्ववत् संप्रसारणम् ( पा ६·१·३४ ) । ᵛईम् इत्यवधारणे । ᵛसमानदक्षाः, दक्षः पिता, समानपितृका इत्यर्थः । इन्द्र एव सर्वेषां समानः पितेति ॥

" अग्नये रसवतेऽजक्षीरे चरुं निर्वपेद्यः कामयेत रसवान्त्स्याम् " ( तैसं २·२·४ ) ¹⁴इत्यस्य पुरोनुवाक्या—' अग्ने रसेन ' इति गायत्री ॥ हे ᵛअग्ने ᵛजातवेदः, ᵛतेजसा ᵛवि ᵛरोचसे दीप्यसे । केन हेतुना ? ᵛरसेन रसयोगो मम यथा स्यादिति । यद्वा—ᵛरसेन मां योजयितुं तेजसा वि रोचसे विशेषेण दीप्यस्व । यद्वा—तद्धेतुत्वात् ताच्छब्द्यम् । यथा—नड्वलोदकं पादरोग इति । ¹⁶-अस्मद्रसहेतुना तेजसा विरोचसे इति-¹⁶ । इदं चास्त्वित्याह—ᵛरक्षोहा रक्षसां हन्ता ᵛअमीवचातनः अमीवानामाभ्यन्तररोगाणां च नाशयिताऽस्माकं भव । ¹⁷क्षीरादिरससमृद्धिमस्माकं कुरु तद्भोगविघ्नहेतूंश्च रक्षःप्रभृतीन् सर्वांश्च रोगान् नाशयेत्यभिप्रायः ॥

अग्न इति ॥ इष्ट्यन्तरं विधत्ते—" अग्नये रसवतेऽजक्षीरे चरुं निर्वपेद्यः कामयेत रसवान्त्स्यामि-त्यग्निमेव रसवन्तꣳ स्वेन भागधेयेनोप धावति स एवैनꣳ रसवन्तं करोति रसवानेव भवत्यजक्षीरे भवत्याग्नेयी वा एषा यदजा साक्षादेव रसमव रुन्धे " ( तैसं २·२·४ ) इति । रसवान् क्षीरदध्यादि-रसोपेतः । ¹¹-अजा आग्नेयी-¹¹ । अजाया अग्निवत् प्रजापतिमुखादुत्पन्नत्वादाग्नेयत्वम् । साक्षादव्यवधानेन शीघ्रमित्यर्थः ॥

तत्र पुरोनुवाक्यामाह—' अग्ने रसेन तेजसा जातवेदो वि रोचसे । रक्षोहाऽमीवचातनः ' इति ॥ हे ᵛजातवेदः ᵛअग्ने, ᵛरसेन अस्मान् योजय । ᵛतेजसा ᵛवि ᵛरोचसे विशेषेण प्रकाशसे । कीदृशस्त्वम् ? यागदेशे रक्षसां हन्ता । शरीरेऽमीवस्याऽऽन्तररोगस्य चातनो विनाशकः ।

---

११. ति.मै–मादयति । १२. ब–शात्रवादिभिः । १३. ब–पुत्राः । १४. ब–' पुत्राः ' नास्ति । १५. ब–इत्यस्याः । १६–१६. ब–यद्वा रसेन रसहेतुना तेजसा । १७. ब–क्षीरादिभोगसमृ° ।

---

११–११. आ–' अजा आग्नेयी ' नास्ति ।

अपो अन्वचारिषꣳ रसेन सर्मसृक्ष्महि ।
पर्यस्वाꣳ अग्न आऽगमं तं मा सꣳ सृज वर्चसा ॥
वसुर्वसुपतिर्हिकमस्यग्ने विभावसुः । स्याम ते सुमतावपि ॥
अप । अन्विति । अचारिषम् । रसेन । समिति । असृक्ष्महि ॥
५ पर्यस्वान् । अग्ने । एति । अगमम् । तम् । मा । समिति । सृज । वर्चसा ॥
वसुः । वसुपतिरिति वसु-पतिः । हिकम् । असि । अग्ने । विभावसुरिति विभा-वसुः ।
स्याम । ते । सुमताविति सु-मतौ । अपि ॥

तत्रैव याज्या—'अप.' इत्यनुष्टुप् ॥ व्याख्याता चेयं "उरुꣳ हि" (तैस १.४.४५) इत्यत्र । अप. कर्माण्यनुक्रमेण करोमि । रसेन संसृष्टो भूयासम् । हे अग्ने, पयस्वान्
१० हविष्मान् त्वाम् आ अगमम् तं मा वर्चसा बलेन सं सृज इति ॥

"अग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपेद्य· कामयेत वसुमान्त्स्याम्" (तैसं २ २ ४) इत्यस्य पुरोनुवाक्या—'वसुर्वसुपति.' इति गायत्री ॥ हे अग्ने वसु. वासयिता सर्वस्य लोकस्य, वसुपति· धनानां स्वामी च, अत एव वासयिता ईदृशस्त्वमसि । किंच—विभावसु तेजोधनश्च त्वमसि दातासि धनानामित्यर्थ· । हिक यस्मादेव तस्मात् ते तव
१५ सुमतौ कल्याण्यामनुग्रहबुद्धौ वयं स्याम भूयास्म । अपिशब्दात् वसुमन्तश्च स्याम । "मन्क्तिन्-व्याख्यान" (पा ६ २ १५१) इत्युत्तरपदान्तोदात्तत्वम् । यद्वा—क्तिचि (पा ३ ३ १७४) कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६ २ १३९) । क्तिन्येव वा "तादौ च निति" (पा ६ २ ५०) इत्येतद्बाधित्वा कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६ २.१३९) । उत्तरपदे वा[11] "मन्त्रे वृष" (पा ३.३ ९६) इति क्तिन उदात्तत्वम् ॥

२० अप इति ॥ [12]याज्यामाह—'अपो अन्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वाꣳ अग्न आऽगमं तं मा सꣳसृज वर्चसा' इति । सोमारम्भे "उरुं हि राजा वरुणश्चकार" (तैसं १ ४ ४५) इत्यस्मिन्ननुवाके व्याख्यातोऽयं मन्त्र[12] ।

इष्ट्यन्तरं विधत्ते—"अग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपेद्य कामयेत वसुमान्स्यामित्यग्निमेव वसुमन्तꣳ स्वेन भागधेयेनोप धावति स एवैनं वसुमन्तं करोति वसुमानेव भवति"
२५ (तैसं २.२.४) इति ॥

वसुरिति ॥ तत्र पुरोनुवाक्यामाह[13]—'वसुर्वसुपतिर्हिकमस्यग्ने विभावसु । स्याम ते सुमतावपि' इति ॥ हे अग्ने, हिक यस्मात् कारणात् त्वं वसु लोकानां वासयिता धनपति [14]प्रजायुक्तश्च असि । तस्मात् वयम् अपि तवानुग्रहबुद्धाववस्थिता भवेम ॥

११ मे-इत्यस्या । १९. तं ति-न्य, व-'वा' नास्ति ।

३० १२-१२ आ—याज्या लिखिता । उरुꣳ हि राजा वरुणश्चकारेत्यस्मिन्ननुवाके व्याख्यातो मन्त्रः । ति१—याज्यामाह· इति । उरु हि राजेत्यस्मिन्पूर्वानुवाके व्याख्यातो मन्त्र । १३ इ.उ पा-'वाक्या' । १४. ति१—प्रमायुक्तश्च ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

त्वाम॑ग्ने व॒सुप॑तिं॒ वसू॑नाम॒भि प्र म॑न्दे(२)अध्व॒रेषु॑ राजन्।
त्वया॒ वाजं॑ वाज॒यन्तो॑ जयेमा॒भि ष्या॑म पृत्सु॒तीर्मर्त्या॑नाम् ॥

त्वाम् । अ॒ग्ने॒ । वसु॑पति॒मिति॒ वसु॑-प॒ति॒म् । वसू॑नाम् । अ॒भि । प्रेति॑ । म॒न्दे॒ (२) । अ॒ध्व॒रेषु॑ । रा॒ज॒न् ।
त्वया॑ । वाज॑म् । वा॒ज॒यन्त॒ इति॑ वाज-यन्तः॑ । ज॒येम॒ । अ॒भीति॑ । स्या॒म॒ । पृ॒त्सु॒तीः । मर्त्या॑नाम् ॥

तत्रैव याज्या—'त्वामग्ने' इति त्रिष्टुप् ॥ हे अग्ने अध्वरेषु राजन् चरुपुरोडाशादिभिः दीप्यमान त्वां वसूनां सर्वेषां संबन्धिनं नैकस्य द्वयोर्वा, वसुपतिं वसूनां नित्यस्वामिनम् । इदं समासव्यासाभ्यां प्रतिपाद्यते । ईदृशं त्वाम् अभि प्र मन्दे आभिमुख्येन तर्पयामि । मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु । कश्चिदाह—वसूनां देवानां मध्ये वसुपतिमिति । किंच—वाजयन्तः वाजमन्नमात्मन इच्छन्तः । क्यचि (पा ३·१·८). "न च्छन्दस्यपुत्रस्य" (पा ७·४·३५) इतीत्वप्रतिषेधः । यदा वयं वाजमिच्छामस्तदा त्वया वाजं जयेम त्वयैव प्राप्नुयाम । किंच—मर्त्यानां मध्ये पृत्सुतीः पृतनां कर्तुं [२०]याः अस्माभिरिच्छन्ति[२१] ताः शत्रुसेनाः अभि स्याम अभिभवेम । "उपसर्गप्रादुर्भ्यामस्तिर्यच्परः" (पा ८·३·८७) इति षत्वम् । पृदिति संग्रामकर्मा[२२] (द्र. निघण्टु २·१९) । तस्मात् [२३]संग्राममिच्छन्तीति सन् (पा ३·१·७) । छान्दसोऽभ्यासलोपः । विकरणव्यत्ययेन शः । वर्णव्यत्ययेन शतुरकारस्योकारः । "शतुरनुमः" (पा ६·१·१७३) इति नद्या उदात्तत्वम् । यद्वा—पृतनाः सूयन्ते उत्पाद्यन्ते याभिस्ताः पृत्सुतयः । छान्दसं ह्रस्वत्वं पृद्भावश्च । बहुविकारत्वात्तन्नगृह्यते । "मन्क्तिन्व्याख्यान" (पा ६·२·१५१) इत्युत्तरपदान्तोदात्तत्वम् ॥

त्वामिति ॥ याज्यामाह—'त्वामग्ने वसुपतिं वसूनामभि प्र मन्दे अध्वरेषु राजन् । त्वया वाजं वाजयन्तो जयेमाभि ष्याम पृत्सुतीर्मर्त्यानाम्' इति ॥ हे राजन् दीप्तिमन् अग्ने, अध्वरेषु यज्ञेषु त्वाम् अभि प्र मन्दे सर्वतः प्रकर्षेण वोधयामि । कीदृशं त्वाम् ? वसूनां [१५]वसुपतिं धनानां मध्ये यानि श्रेष्ठानि धनानि तेषामधिपतिमित्यर्थः । वाजयन्तः अन्नमिच्छन्तो वयं त्वत्प्रसादेन वाजम् अन्नं जयेम । विरोधिनां मनुष्याणां पृत्सुतीः सेनाः[१६] अभि ष्याम अभिभवितुं शक्ता भवेम ॥ इष्ट्यन्तरं विधत्ते—"अग्नये वाजसृते पुरोडाशमष्टाकपालं निर्वपेत् सङ्ग्रामे संयत्ते वाजं वा एष सिसीर्षति यः संग्रामं जिगीषत्यग्निः खलु वै देवानां वाजसृदग्निमेव वाजसृतꣳ स्वेन भागधेयेनोप धावति धावति वाजꣳ हन्ति वृत्रं जयति तꣳ संग्राममथो अग्निरिव न प्रतिधृषे भवति" (तैसं २·२·४) इति । वाजमन्नं सरति प्राप्नोतीति वाजसृत् । लोके युद्धं जेतुमिच्छुर्वैयाद्भूर्व्वं [१७-]वैरिसंबद्धमन्नं कृत्स्नं[-१७] सिसीर्षति[१८] प्राप्तुमिच्छति । अतो वाजसृदिति विशेषणं युक्तम् । वाजं धावति प्राप्नोति तदर्थं वृत्रं शत्रुं हन्ति युद्धं च जयति । किं चाग्निरिवायमन्येन प्रतिधृषे तिरस्कर्तुं शक्तो न भवति ॥

२०. तं.ति-वा; च-'याः' नास्ति । २१. म.तं.ति.च-°भिरिच्छन्तीः । २२. मै-°कर्म ।
२३. तं.ति.मै-संग्रामयितुमि° ।

१५. ट.पा-'वसुपतिम्' नास्ति । १६. क-युद्धानि । १७-१७. इ.उ-वैरिसंबन्धि कृत्स्न-मन्नम् । १८. आ-'सिसीर्षति' नास्ति ।

त्वामग्ने वाजसातमं विप्रा वर्धन्ति सुष्टुतम् । स नो रास्व सुवीर्यम् ॥
अयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन् ।
अयꣳ शत्रूञ्जयतु जर्हृषाणोऽयं वाजं जयतु वाजसातौ ॥

त्वाम् । अग्ने । वाजसातममिति वाज–सातमम् । विप्राः । वर्धन्ति । सुष्टुतमिति सु–स्तुतम् ।
स । नः । रास्व । सुवीर्यमिति सु–वीर्यम् ॥
अयम् । नः । अग्निः । वरिवः । कृणोतु । अयम् । मृधः । पुरः । एतु । प्रभिन्दन्निति प्र–भिन्दन् ॥
अयम् । शत्रून् । जयतु । जर्हृषाणः । अयम् । वाजम् । जयतु । वाजसाताविति वाज–सातौ ॥

"अग्नये वाजसृते पुरोडाशमष्टाकपालं निर्वपेत् सग्रामे सयत्ते" (तैस २.२.४) इत्यस्य[२४] पुरोनुवाक्या—' त्वामग्ने वाजसातमम् ' इति गायत्री ॥ हे अग्ने, त्वा वाजसातम वाजस्यान्नस्य सम्भक्तृतमम् । सनोतेः "जनसनखनक्रमगमो विट्" (पा ३.२.६७), "विड्वनोरनुनासिकस्यात्" (पा ६.४.४१) इत्यात्वम् । सुष्टुत सर्वै सुष्ठु स्तुतम् । यद्वा—सुष्ठु स्तुतो यथा भवसि तथा । त्वा विप्राः मेधाविनः वर्धन्ति स्तुतिभिस्त्वां वर्धयन्तीत्यर्थः । "बहुलमन्यत्रापि" (उ १९०) इति णिलुक् । यद्वा—"छन्दस्युभयथा" (पा ३.४.११७) इति शप आर्धधातुकत्वात् णिलोपः । स्तौतेः कर्मणि निष्ठायां "गतिरनन्तरः" (पा ६.२.४९) इति गते प्रकृतिस्वरत्वम् । "उपसर्गात् सुनोति" (पा ८.३.६५) इत्यादिना षत्वम् । सः त्वं नः अस्मभ्यं सुवीर्यं शोभनं वीर्यं धनं बाजलक्षणं रास्व देहि । व्यत्ययेनात्मनेपदम् । "वीरवीर्यौ च" (पा ६.२.१२०) इत्युत्तरपदाद्युदात्तत्वम् ॥

तत्रैव याज्या—' अयं नः ' इति त्रिष्टुप् ॥ व्याख्याता चेयं ' त्वं सोम ' (तैस १.३.४) इत्यत्र । अयम् अग्निः अस्माकं वरिवः धनं कृणोतु । अयं मृधः सग्रामान् प्रभिन्दन् पुरस्तात् एतु । अयं जर्हृषाणः सग्रामजयेन हृष्टान्तःकरणः शत्रून् जयतु । अयं वाजम् अन्नं जयतु वाजसातौ वाजलाभहेतौ सग्रामे इति ॥

त्वामिति ॥ तत्र पुरोनुवाक्यामाह—' त्वामग्ने वाजसातमं विप्रा वर्धन्ति सुष्टुतम् । स नो रास्व सुवीर्यम् ' इति ॥ हे अग्ने, त्वा विप्रा यजमाना अभिवृद्धिं प्रापयन्ति । कीदृशं त्वाम् ? वाजसातमम् अतिशयेनान्नप्रदं सुष्टुतं स्तोत्रैर्हि सुष्ठु स्तुतम् । स तादृशस्त्वं नः अस्मान् सुष्ठु सामर्थ्यं रास्व देहि ॥

अयमिति ॥ याज्यामाह—' अयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन् । अयꣳ शत्रूञ्जयतु जर्हृषाणोऽयं वाजं जयतु वाजसातौ ' इति ॥ अयम् अग्निरस्माकं वरिवः परिचारकं भृत्यवर्गं संपादयतु । मृधः वैरिणो विदारयन् नः अस्माकं पुरतो गच्छतु । जर्हृषाणः प्रहरन् शत्रून् जयतु । वाजसातौ अन्नदाननिमित्तं परकीयमन्नं जयतु ॥ इष्ट्यन्तरं विधत्ते—" अग्नयेऽग्निवते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्नावग्निमभ्युद्धरेयुर्निर्दिष्टभागो वा एतयोरन्योऽनिर्दिष्टभागोऽन्यस्तौ सम्भवन्तौ यजमानमभि-

२४ मे–इत्यस्या· ।

१९. त्रि१–शोभनम् ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

अग्निनाऽग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः ॥
त्वꣳ ह्यग्ने (३) अग्निना विप्रो विप्रेण सन्त्सता । सखा सख्या समिध्यसे ॥

अग्निना । अग्निः । समिति । इध्यते । कविः । गृहपतिरिति गृह-पतिः । युवा ।
हव्यवाडिति हव्य-वाट् । जुह्वास्य इति जुहु-आस्यः ॥
त्वम् । हि । अग्ने (३) । अग्निना । विप्रः । विप्रेण । सन् । सता ।
सखा । सख्या । समिध्यस इति सम्-इध्यसे ॥                                                                ५

"अग्नयेऽग्निवते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्नावग्निमभ्युद्धरेयुः" (तैसं २.२.४) इत्यस्य[25] पुरोनुवाक्या—'अग्निनाग्निः' इति गायत्री ॥ [V]अग्निना अभ्युद्धृतेन अयम् [V]अग्निः पूर्वोद्धृतः [V]सम् [V]इध्यते सम्यगेव इध्म उद्ध्मायते[26] [V]कविः मेधावी [V]गृहपतिः गृहस्य पतिः स्वामी । [V]युवा नित्यतरुणः हविर्भिर्वा देवानामात्मनश्च मिश्रयिता । [V]हव्यवाट् हविषां १० वोढा । "वहश्च" (पा ३.२.६४) इति ण्विः । [V]जुह्वास्यः जुहूरास्यस्थानीया यस्य । सोऽयमेवंगुणोऽग्निरभ्युद्धरणदोषमुपशमयत्विति शेषः ॥

तत्रैव याज्या—'त्वं ह्यग्ने' इति गायत्री ॥ हे [V]अग्ने, [V]त्वम् [V]अग्निना अभ्युद्धृतेन [V]समिध्यसे सम्यगेवेध्यसे । कीदृशः कीदृशेनेत्याह—[V]विप्रः मेधावी[27] [V]विप्रेण मेधाविना समिध्यसे । अयमेकः समिन्धनहेतुः । किञ्च [V]सन् प्राज्ञः सता तादृशेनाग्निना समिध्यसे । १५

संभवतः स ईश्वर आर्तिमार्तोर्यदग्नयेऽग्निवते निर्वपति भागधेयेनैवैनौ शमयति नाऽऽर्तिमार्च्छति यजमानः" (तैसं २.२.४) इति । गार्हपत्यादाहवनीयेऽग्निं प्रक्षिप्य तत्राग्निहोत्रं हूयते । तथा सति यस्य यजमानस्य संबन्धिनः पुरुषा विस्मृत्योद्धृत आहवनीयाग्नौ पुनरन्यमग्निमुद्धरेयुः यजमानोऽग्नियुक्तायाग्नये निर्वपेत् । तत्र विशेष्यरूपोऽग्निर्निर्दिष्टभागो विशेषणरूपस्त्वनिर्दिष्टभागस्तावुभौ परस्परं संसृज्यमानौ यजमानं भक्षयितुमभिलक्ष्य संभवतः । [20]ततः स यजमान आर्तिमार्तोरीश्वरो विनाशं [21]प्राप्तुं संप्रभवति[22] । २०
तावुभौ अनयेष्ट्या शाम्यतः ॥

तत्र पुरोनुवाक्यामाह—'अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः' इति । पश्चात् प्रक्षिप्तेन [V]अग्निना पूर्वस्थितः [V]अग्निः [22]सम्यग्दीप्यते । सोऽग्निर्विशेषणैः कविरित्यादिभिर्विशिष्टः । [23]स्पष्टोऽर्थः ॥

त्वमिति ॥ याज्यामाह—'त्वꣳ ह्यग्ने अग्निना विप्रो विप्रेण सन्त्सता । सखा सख्या समिध्यसे' २५ इति ॥ हे पूर्वस्थित [V]अग्ने, पश्चात् प्रक्षिप्तेन [V]अग्निना [V]त्वं [V]समिध्यसे । तादृशस्त्वं ब्राह्मणजात्यभिमानी सन्मार्गवर्ती प्रियश्च । इतरोऽपि तादृश एव ॥ इत्यन्तरं विधत्ते—"अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेत्" (तैसं २.२.४) इति । यस्य यजमानस्याग्निहोत्रार्थम्

२५. मै–इत्यस्याः । २६. व.मै–उद्वायते । २७. तं.ति.पं.व–'मेधावी' इत्यस्यानन्तरं 'स्वाम्' ।

२०. इ.उ.मि१.पा–'ततः' नास्ति । २१–२१. इ.उ.पा–प्राप्तो भवति । २२. इ.उ.पा– ३०
'सम्यक्' नास्ति । २३. आ–'स्पष्टोऽर्थः' नास्ति ।

[ काम्येष्टियाज्यापुरोनुवाक्या

उदग्ने शुचयस्तव .

उदिति । अग्ने । शुचयः । तव ।

"शतुरनुम" (पा ६ १ १७३) इति तृतीयाया उदात्तत्वम्। किंच "सखा समानख्यानः, सख्या तादृशेन त्वया समानख्यानेन अग्निना समिध्यमे"। "हि च" (पा ८ १ ३४) इति निघातप्रतिषेधः। "तिङि चोदात्तवति" (पा ८ १ ७१) इति गतेरनुदात्तत्वम्। "उदात्तवता तिङा" (द्र पामा २ २·१८ वा ४) इति समासः। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे (पा ६ १ १८६) यक उदात्तत्वम्। ईदृशस्त्वमस्युद्धरणदोषमुपशमयेति शेषः॥

"अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेत्" (तैस २·२·४) इत्यस्य पुरोनुवाक्या—'उदग्ने' इति गायत्री॥ व्याख्याता चेयं "त्वमग्ने रुद्र" (तैस १·३·१४) इत्यत्र। इह तु प्रतीकमस्या गृह्यते। हे "अग्ने, "तव शुक्रास्तेजोविशेषाः "शुचयः शुद्धाः "भ्राजन्त दीप्यमानाः "उत् "ईरते उद्गच्छन्ति। किंच तवैव स्वभूतानि "ज्योतींषि आदित्यादीनि "अर्चयः 'अर्चींषि च। यद्वा—तव अर्चयोऽर्चयितारो यजमानाः ज्योतींषि ज्योतीरूपा भवन्ति। स त्वमेवमहानुभाव उद्वापदोषमुपशमयेति॥

उद्धृतोऽग्निर्होमात् पूर्वमेवोपशाम्यति स एतामिष्टिं निर्वपेत्॥ अत्र शाखान्तरानुसारिणा मतं पूर्वपक्षत्वेनोपन्यस्यति—"अपरं आदीप्यानुद्धृत्य इत्याहुः" (तैस २·२·४) इति। अपरोऽग्निर्गार्हपत्ये प्रदीप्य पूर्वोद्धरणमनु पुनरुद्धरणीय इति तन्मतम्॥ तदिदं दूषयति—"तत्तथा न कार्यम्, यद्भागधेयमभि पूर्व उद्ध्रियते किमपरोऽभ्युद्ध्रियेतेति" (तैस २·२·४) इति। अग्निहोत्रहविर्लक्षणं यद्भागधेयमभिलक्ष्य पूर्वो वह्निरुद्धृतस्तमेव भागमभिलक्ष्यापरो वह्निः किमुद्ध्रियेत तदनुचितम्। इतिशब्दो हेतौ। तस्मात् "तत्तथा न कार्यम्। सिद्धान्तं दिघत्ते—"तान्येवावक्षाणानि संनिधाय मन्थेत्" (तैस २ २ ४) इति॥ यान्युल्मुकानि शान्तानि तान्येवाधस्तादुपस्थाप्य "अरणीभ्यामग्निमन्थनं कुर्यात्॥ मन्थने मन्त्रमुपपादयति—"इतः प्रथमं जज्ञे अग्निः स्वाद्योनेरधि जातवेदाः। स गायत्रिया त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन्निति" (तैस २ २·४) इति। अग्निः पूर्वमितो दग्धकाष्ठादुत्पन्न इदानीमपि स जातवेदा गायत्र्यादिभिः छन्दोभिरनुगृहीतः स्वाद्योनेर्दग्धकाष्ठादधिजायताम्। जातश्च स तं देवं प्रजानन् देवेभ्यो हव्यं वहतु॥ मन्त्रस्य तात्पर्यं स्पष्टयति—"छन्दोभिरेवैनं स्वाद्योनेः प्र जनयति" (तैस २ २·४) इति। नन्वस्मिन् सिद्धान्तेऽपि पूर्वस्मादपरोऽग्निः प्रसज्येतेत्याशङ्क्याऽऽह—"एष वाव सोऽग्निरित्याहुः" (तैस २·२·४) इति। स्वकारणादुत्पन्नत्वादेष एव पूर्वोऽग्निर्न तु भेदोऽस्तीति सिद्धान्तिन आहुः॥ किमर्थं तर्हीयमिष्टिरित्याशङ्क्याऽऽह—"ज्योतिस्त्वा अस्य परापतितमिति यदग्नये ज्योतिष्मते निर्वपति यदेवास्य ज्योतिः परापतितं तदेवाव रुन्धे" (तैस २ २ ४) इति। अस्य पूर्वाग्नेर्ज्योतिरेव विनष्टं न स्वमिष्टिर्नष्ट। तच्च ज्वालारूपं ज्योतिरिष्टया संपाद्यते॥

२८–२८ मे–'शतुरनुम .. समिध्यमे' नास्ति। २९ व–त्वत्वया।

२४ आ–'तत्तथा' नास्ति। २५ क–पूर्वारणी।

त्रि ज्योतिषा ॥ ४६ ॥
वीति । ज्योतिषा ॥ ४६ ॥
[ मघवानं मन्दे द्वम्ने चतुर्दश च ]

आ ददे ग्रावस्यर्तय उपयामगृहीतोऽस्या वायो अयं वाम्या वां प्रातर्युजाविमं येनस्तं प्रत्नया ये देवास्त्रिश्शदुपयामगृहीतोऽसि मूर्धानं मधुश्चेन्द्राग्नी ओमासो मरुत्वन्तमिन्द्र मरुत्वो मरुत्वान् महान् महाभूवत् कदा वाममदब्धेभिर्हिरण्यपाणिम् सुशर्मा बृहस्पतिर्हरिरस्यग्ने उत्तिष्ठन् तरणिरा प्यायस्वेयुष्टे ये ज्योतिष्मतीं प्रयासाय चित्तमा तिष्ठेन्द्रमसावि सर्वस्य महान्त्सजोषा उदु त्यं धातोरुम् हि यस्त्वा षट्चत्वारिंशत् ॥

[ आ ददे ये देवा महानुत्तिष्ठन्त्सर्वस्य सन्तु दुर्मित्राश्चतुष्पञ्चाशत् ]　१०
[ आ ददे वि ज्योतिषा ]

तत्रैव याज्या—' वि ज्योतिषा ' इति त्रिष्टुप् ॥ इयमपि " कृणुष्व पाजः " ( तैसं १-२-१४ ) इत्यत्र व्याख्याता, इह तु प्रतीकं गृह्यते। अयमग्निर्बृहता ज्योतिषा वि भाति विशेषेण भायात् अनेन हविषा। किंच—विश्वानि महित्वा माहात्म्यानि आविष्कृणुते आविष्कुर्वीत। किंच—अदेवीः अदेवनशीला आसुरीर्मायाः दुरेवा दुष्प्रधर्षाः प्रसहते अभिभवेत्। किंच— शृङ्गे शृङ्गस्थानीये आत्मीये प्रधाने ज्वाले शत्रूणां वा हिंसके शिशीते तीक्ष्णीकुर्यात्। किमर्थम्? रक्षसे विनिक्षे रक्षसो विनाशार्थं ज्वालाभ्यां निक्षणं चुम्बनं शोषणं वा विनाशो वेति। स एवंमहानुभावोऽग्निरनुगमनदोषमुपशमय्याऽऽत्मनः परापतितं ज्योतिरवरुन्ध इति ॥　१५

॥ इति भट्टकौशिकभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये प्रथमकाण्डे चतुर्थप्रपाठके एकचत्वारिंशोऽनुवाकः ॥　२०

तत्र याज्यापुरोनुवाक्ययोर्ऋचोः प्रतीके दर्शयति—' उदग्ने शुचयस्तव ', ' वि ज्योतिषा ' इति ॥ ' उदग्ने शुचयस्तव शुक्रा भ्राजन्तः ' इत्ययं मन्त्रः " त्वमग्ने रुद्रः " ( तैसं १-३-१४ ) इत्यस्मिन्ननुवाके व्याख्यातः। ' वि ज्योतिषा-बृहता ' इत्ययं मन्त्रः " कृणुष्व पाजः " ( तैसं १-२-१४ ) इत्यस्मिन्ननुवाके व्याख्यातः ॥

अत्र विनियोगसंग्रहः —

" यस्त्वा याज्या पुत्रवत्यामिष्टौ त्वे पुत्रयागके ।
अग्ने रसवद्यागे तु वसुर्वसुमतीष्यते ॥ १ ॥
त्वामग्ने वाजसृद्यागे ह्यग्निनाऽग्निवतीष्यते ।
उद् वि ज्योतिषे ज्योतिष्मत्ये सत्र चतुर्दश " ॥ २ ॥ इति ॥

अथ मीमांसा ॥ नवमाध्यायस्य चतुर्थपादे चिन्तितम्—

" ज्योतिष्मती भवेन्नो वा दर्शाद्युद्धृतलोपने ।
निमित्तसत्त्वात्स्यान्नाग्निहोत्रार्थोद्धृतिवर्जनात् " ॥ ( जैन्या ९·४·११ ) इति ॥

अग्निहोत्रप्रक्रियायामिदमाम्नायते—" अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेत् " ( तैसं २·२ ४ ) इति । प्रतिदिनमग्निहोत्रं होतुं गार्हपत्यात् [26]उद्धृत्याऽऽहवनीयेऽग्निः प्रक्षिप्यते सोऽयमुद्धृतोऽग्निः कदाचिदहुतेऽग्निहोत्रे यदि शाम्येत् तदानीमियमिष्टिः प्रायश्चित्तमित्यर्थः । तत्र दर्शपूर्णमासार्थमुद्धृतस्याप्यग्नेः शान्तौ सेयं ज्योतिष्मतीष्टिर्भवेत् । कुतः ? अग्न्युद्वानस्य निमित्तस्य सद्भावादिति चेत् । मैवम् । अग्निहोत्रार्थोद्धृतस्यैवाग्नेरुद्वानं निमित्तमिति प्रकरणादवगम्यते । अनया चेष्ट्या अग्निहोत्रार्थवाग्निः पुनरुत्पाद्यते । तथा सत्यग्निहोत्रस्येयमिष्टिः सामवायिकमङ्गं भवति । अतोऽग्निहोत्रार्थोद्धृतोद्वानस्य निमित्तस्याभावान्नैमित्तिकीष्टिर्न [27]प्रवर्तते ।

तत्रैवान्यच्चिन्तितम्—

" धार्योद्वाने साऽस्ति नो वा सर्वार्थत्वेन विद्यते ।
गतश्रीत्वनिमित्तं *–तत्परार्थत्वा न–* विद्यते ॥ " ( जैन्या ९ ४ १२ ) इति ॥

इदमाम्नायते—" धार्यो गतश्रिय आहवनीयः " ( द्र.मीसू १२ ४ ३१ शाबरभाष्य ) इति । गतश्रीशब्दार्थस्तत्रैव श्रूयते—" त्रयो वै गतश्रियः शुश्रुवान् ग्रामणी राजन्यः " ( तैस २·५ ४ ) इति । " श्रौतो गौतमो भारद्वाजः " ( हिश्रौ १ ४·९ ) इति कल्पसूत्रकारः । गतश्रीभिर्धार्यमाणस्याऽऽहवनीयस्य सर्वकर्मार्थत्वे सत्यग्निहोत्रार्थत्वमप्यस्तीति तदुद्वाने सा ज्योतिष्मतीष्टिर्नियत इति चेत् । मैवम् । न ह्यस्य धारणेऽग्निहोत्रं निमित्तं किं तु गतश्रीत्वम् । सर्वकर्मसमुदायस्य चोदनया कदाचिदप्यचोदितत्वात् सर्वार्थत्वं वक्तुमशक्यम् । गतश्रीत्वं निमित्तीकृत्य धृतोऽग्निः प्रसङ्गात् सर्वकर्मसूपयुज्यमानोऽग्निहोत्रेऽप्युपकरोतीति चेत् । उपकरोतु नाम । नैतावता प्रायश्चित्तस्य निमित्तत्वं लभ्यते । अग्निहोत्रार्थमुद्धृतस्योद्वानं तन्निमित्तं, न चात्र तदस्ति । किं त्वन्यस्य यस्य कस्यचित् कर्मणोऽर्थे समुद्धृतस्य [28]गतश्रीत्वनिमित्तं धारणं[28] क्रियते । तस्मात् निमित्ताभावात्[29] नास्ति सेष्टिः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
प्रथमकाण्डे चतुर्थप्रपाठके चत्वारिंशोऽनुवाकः ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्विद्यातीर्थमहेश्वरापरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
प्रथमकाण्डे चतुर्थः प्रपाठकः ॥

---

२६ इ उ पा–आहृत्या° । २७ इ–प्रतिपद्यते । *–* [ जैमिनीयन्यायमालायां तु ' तत्परार्थत्वान्न ' इति । ] २८–२८. त्रि१–गतश्रीत्वस्य निमित्तसाधारणम् । , २९. त्रि१–' निमित्ताभावात् ' नास्ति ।

# — शुद्धिपत्रम् —

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६९ | २ | ह॒वि॒धार्न॒मिति॑ | ह॒वि॒र्धान॒मिति॑ |
| ९० | २ | परा॑पू॒त॒म् | परा॑—पू॒त॒म् |
| ९९ | ३ | प॒र्व॑तिः | प॒र्व॒तिः |
| १०४ | ३ | निर्द॑ग्ध॒मिति॒ | निर्द॑ग्ध॒मिति॒ |
| १२२ | १ | पर॒मस्यां | प॒रमस्यां॑ |
| १२५ | २ | वर्स॑वस्त्वा॒ | वर्स॑वस्त्वा॒ |
| १२८ | १ | अ॑स्यु॒र्वी॑ | अ॑स्यु॒र्वी॑ |
| १४३ | ४ | पत्या | पत्या॑ |
| १४९ | १ | ज्योति॑ष्य॒° | ज्योति॑स्त्वा॒ ज्योति॑ष्य॒° |
| १५४ | ३ | ब॒र्हि॒ः | ब॒र्हिः |
| १५४ | ३ | स्रु॒ग्भ्य इति॑ | स्रु॒ग्भ्य इवि॑ |
| १७८ | १ | उद्ग्रा॒भश्च॑ | उ॒द्ग्रा॒भश्च॑ |
| २१० | ४ | प्रवो॑ढु॒मिति॒ | प्रवो॑ढु॒मिति॒ |
| २१५ | ४ | वः | व॒ः |
| २१५ | ९ | वां | वा॒ं |
| २२९ | १ | आगरे | आगु॒रे |
| २५८ | ५ | निः—ऋ॒त्यै | निः—ऋ॒त्यै॒ |
| २५९ | ५ | अच्छि॑न्न॒म् | अच्छि॑न्नम् |
| २६१ | २ | ईम् | ई॒म् |
| २६२ | ५ | पूर्वे॑ | पू॒र्वे॑ |
| २६२ | ७ | इषा | इ॒षा |
| २७० | ३ | विपश्चि॒ता | वि॒पश्चि॒ता |
| २७४ | २ | सो॑मसखा॒ | सोम॑सखा |
| २८४ | ३ | कामम् | काम॑म् |
| २९७ | २ | वरि॒माणं | व॒रि॒माणं॑ |
| २९९ | ५ | ब्र॒ह्म॒चोद॒नात्रिति॑ | ब्र॒ह्म॒चोद॑ना॒त्रिति॑ |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३१२ | १ | गृह्णामि शास्त्रराय | गृह्णामि शास्त्रराय |
| ३१५ | ५ | धा. | धा |
| ३१८ | १ | प्रेपे | प्रेपे |
| ३३७ | ३ | सुप्रजात्वनिरिति | सुप्रजात्वनिरिति |
| ३६८ | २ | देमु | देमु |
| ३७३ | २ | मेंद | मंदे |
| ३८० | ३ | सुप्रजा–र्वनिम् | सुप्रजा–र्वनिम् |
| ३९९ | १ | "स्येकपाद" | "स्येकपाद" |
| ४०४ | ४ | वेतु | वेतु |
| ४१० | २ | स्व–धा | स्व–धा |
| ४४५ | १ | सुजूर्देवेन | सुजूर्देवेन |
| ४८२ | ३ | आ.पं | आपं. |
| ५०३ | २ | वयोभिर् | वयोभिर् |
| ५०७ | ३ | अग्ने | अग्ने |
| ५१८ | २ | युष्माक९ | युष्माकु९ |
| ५५७ | ३ | उपयामगृहीतोऽसि | उपयामगृहीतोऽसि |
| ५७८ | २ | मघनन् | मघनन् |
| ५८४ | ६ | दिवे–दिवे | दिवे–दिवे |
| ६११ | ६ | वृत्रहन्निति | वृत्रहन्निति |
| ६१७ | ५ | सदस्यै | सदस्यै |
| ६१७ | ८ | सु–कृताम् | सु–कृताम् |
| ६५९ | ३ | अध्वेरपु | अध्वरेपु |
| ६६३ | ४ | वा९ या वा | वा या वा |

---

# भाष्यशुद्धिपत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २२ | १६ | लौकियोकरेव | लौकिकयोरेव |
| ३२ | ३१ | ऐन्द्राग्नेष्टौ | ऐन्द्राग्नेष्टौ |
| ३३ | २ | पज्पशा | पस्पशा |
| ४४ | २० | पोपकौ | पोपको |
| ५३ | १७ | दर्भांऽस्तु | दर्भास्तु |
| ७६ | ६ | तत्रव | तत्रैव |
| ११० | ४ | अग्नयये | अग्नये |
| ११४ | २३ | दर्भैंदीप्तैः | दर्भैर्दीप्तैः |
| १३४ | २३ | यच्छद्व° | यच्छन्द° |
| १४२ | ११ | प्रसङ्गावृह | प्रसङ्गादिह |
| १४५ | २० | महीनामिती | महीनामिति |
| १६३ | १० | °दुकर्वस्या° | °दुरुकर्वस्या° |
| १७३ | २८ | ब्रह्मणान्तरं | ब्राह्मणान्तरं |
| १८८ | १७ | स्रुचौं | स्रुचौ |
| १९४ | १६ | वर्हि° | बर्हि° |
| २३५ | १२ | अग्मये | अग्नये |
| २३७ | ५ | °च्छन्दोवृत्तावाप्युदात्त- | °च्छन्दो वृत्तावाप्युदात्तः |
| २५१ | १८ | स्वीकृत | स्वीकृते |
| २५४ | २८ | अग्निमूर्धा | अग्निर्मूर्धा |
| २५८ | २७ | °दिशे दयथा° | °दिशोदयथा° |
| ,, | ,, | श्वापदाश्च | श्वापदाश्च |
| ३१३ | २८ | देववृत्तान्त | देववृत्तान्तः |
| ३१८ | २८ | °वृत्तान्त | °वृत्तान्तः |
| ३१९ | १६ | अतिथ्येष्टौ | आतिथ्येष्टौ |
| ३२० | १७ | आत्माननेव | आत्मानमेवं |
| ३३८ | २८ | सद्भागेधयं | सद्भागधेयं |
| ३६४ | १८ | स्वरप्रसदोना° | स्वरप्रसादेना° |
| ३६६ | १९ | किमन्येन° | किमन्येना° |
| ३८३ | २१ | द्वार्वाहू | द्वार्याहू |
| ४२० | १८ | मूलभारभ्य | मूलमारभ्य |
| ४२४ | २७ | कर्माणि | कर्माणि |
| ४३७ | ४ | °सुचार्य | °मुच्चार्य |
| ४५७ | ७ | सम्यगिष्टये | सम्यगिष्ट्यै |
| ६११ | १५ | अनन्तारं | अनन्तरं |

तत प्रकर्षविवक्षायां तरप्प्रत्ययः । "भूरिदाव्नस्तुट्" (पा ८·२·१७ वा २) इति तुडागमः । द्वितीयाद्विवचनस्य "सुपां सुलुक्°" (पा ७·१·३९) इत्याकारः । कृदुत्तरपदप्रकृतिस्वरत्वम्[५] (पा ६·२·१३९)। यस्मादह युवां भूरिदावत्तरौ [v]अश्रवं युवां दातृतमावशृणवम् । शृणोतेर्लङि शपो लुक् (पा २·४·७३)। कस्मात् पुनरतिशयिनावित्यत आह—[v]विजामातुः । विद्यावयोरूपादि-
५ भिर्गुणैः[६] विहीनो जामाता विजामाता । अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६·२·२)। विजामाता हि कन्यालोभात् कन्यार्थे भूरि धनं ददाति, [v]तस्मै यथा वैगुण्यमनादृत्य कन्यां प्रयच्छति, तस्मादपि युवां दातृतमावशृणवम् । [v]उत [v]वा अपि वा [v]स्यालात् युवां दातृतमावशृणवम् । स्यालो "भार्यायाः भ्राता"[८] । सोऽपि भगिनीस्नेहेन[९] तदर्थे भूरि धनं ददाति । यस्मादेवमाभ्यामपि युवां दातृतमावशृणवम्, तस्मात् युवामेवाह्वयामि । घशब्दः पादपूरणे प्रसिद्धौ वा ।
१० "ऋचि तुनुघ°" (पा ६·३·१३३) इत्यादिना तस्य संहितायां दीर्घः । "अपादावुत्तरे विभागे ह्रस्व व्यञ्जनपर । देवाशीकाद्युम्नाश्वतानियुनाहृदयाघोक्ष्याद्युदा°" (तैप्रा ३·१–२) इति पदकाले ह्रस्वत्वम् । [v]अथ एतस्मात् कारणात् । "निपातस्य च" (पा ६·३·१३६) इति संहितायां दीर्घत्वम् । [v]सोमस्य सोमसदृशस्यास्य हविषः [v]प्रयती प्रयया प्रदानेन । "तादौ च निति कृत्यतौ" (पा ६·२·५०) इति गतेः प्रकृतिस्वरत्वम् । तृतीयैकवचनस्य
१५ "सुपां सुलुक्°" (पा ७·१·३९) इति पूर्वसवर्णदीर्घत्वम् । हे [v]इन्द्राग्नी । पादादित्वात् षाष्ठिकमामन्त्रिताद्युदात्तत्वम् (पा ६·१·१९८)। [v]युवभ्यां युवाभ्याम् । आत्वाभावश्छान्दसः । [v]स्तोम स्तोत्रं [v]जनयामि करोमि [v]नव्यम् अभिनवम् । "वस्वपसोकविक्षेमवचोनिष्केवलोक्यजनपूर्वनवसूरमर्तयविष्ठेभ्यश्छन्दसि स्वार्थे यद्वक्तव्यः" (द्र. पामा ५·४·३०) इति यत्प्रत्यय । "यतोऽनाव" (पा ६·१·२१३) इत्याद्युदात्तत्वम् । एवमनेन स्तोत्रेण तुष्टौ
२० युवां दातृतमौ प्रजां मे दत्तमिति । "इन्द्राग्नी वा एतस्य प्रजामपगूहतः" (तैसं २·२·१) इत्यादि ब्राह्मणम् ॥

---

वीर्यं धत्तो नेन्द्रियेण वीर्येण व्यृध्यते"१ (तैसं २·२·१) इति । युद्धश्रमेणेन्द्रियगतस्य वीर्यस्य व्यृद्धिः ॥

द्वितीयामिष्टिं विधत्ते — "अप वा एतस्मादिन्द्रियं वीर्यं क्रामति य एति जनतामैन्द्राग्नमेका-
२५ दशकपालं निर्वपेज्जनतामेष्यन्निन्द्राग्नी एव स्वेन भागधेयेनोप धावति तावेवास्मिन्निन्द्रियं वीर्यं धत्त

---

५.च-°स्वर । ६. मै– 'गुणै' नास्ति । ७ ब– 'तस्मै' नास्ति, त. ति. प– स° । ८–८, मै– भार्याभ्राता । ९. तं. ति. ब– °स्नेहात् । * "हृदया अघा" इत्यादिच्छेदः. तैप्रा–व्याख्याकर्त्रा माहिषेयेणेष्यते । सूत्रेणानेन, संहितायां दीर्घं 'अघायु.' पदकाले 'अघयु' इति ह्रस्वो भवतीति माहिषेयस्य अभिप्रायः ।

काल्ये द्वियाज्यापुरोनुवाक्याः ]

इन्द्रा॑ग्नी नव॒तिं पुरो॑ दा॒सप॑त्नीरधूनुतम् । सा॒कमेके॑न॒ कर्म॑णा ॥
शुचिं॒ नु स्तोमं॒ नव॑जातम॒द्येन्द्रा॑ग्नी वृत्रहणा जु॒षेथा॑म् (१) ।
उ॒भा हि वां॑ सु॒हवा॒ जोह॑वीमि॒ ता वाजं॑ स॒द्य उ॑श॒ते धेष्ठा॑ ॥

इन्द्रा॑ग्नी इतीन्द्र॑-अ॒ग्नी । न॒व॒तिम् । पुरः॑ । दा॒सप॑त्नी॒रिति॑ दा॒स-प॑त्नीः । अ॒धू॒नु॒त॒म् ॥
सा॒कम् । एके॑न । कर्म॑णा ॥ ५
शुचि॑म् । नु । स्तोम॑म् । नव॑जात॒मिति॒ नव॑-जा॒त॒म् । अ॒द्य ।
इन्द्रा॑ग्नी इतीन्द्र॑-अ॒ग्नी । वृ॒त्र॒ह॒णेति॑ वृत्र-ह॒ना । जु॒षेथा॑म् ( १ ) ।
उ॒भा । हि । वा॒म् । सु॒हवेति॑ सु-हवा॑ । जोह॑वीमि ।
ता । वाज॑म् । स॒द्यः । उ॒श॒ते । धेष्ठा॑ ॥

अथ " ऐन्द्राग्नमेकादशकपालं निर्वपेत् संग्रामं जित्वा " ( तैसं २.२.१ ) इत्यस्य १० पुरोनुवाक्या— " इन्द्राग्नी नवतिम् " इति गायत्री त्रिपदा ॥ हे ᵛइन्द्राग्नी । पाष्ठिकमाद्युदात्तत्वम् ( पा ६.१.१९८ ) । ᵛनवतिं नवतिसंख्याकाः[१०] ᵛपुरः असुराणां पुरीः शत्रूणां वा । ᵛदासपत्नीः दासाः उपक्षपयितारः प्रजानां, तादृशाः पतयः स्वामिनो यासां पुराम् । दंसिः सौत्रो धातुरुपक्षयवृत्तिः । " दंसेष्टटनौ न आ च " ( उ ६९८ ) इति टप्रत्ययः । बहुव्रीहौ " विभाषा सपूर्वस्य " ( पा ४.१.३४ ) इति नकारः । ᵛसाकं सहैव ᵛएकेन ᵛकर्मणा प्रहरणलक्षणेन १५ तादृशीः पुरः ᵛअधूनुतम् अकम्पयतं नाशितवन्तौ । धूञ् कम्पने स्वादिः । वर्णव्यत्ययेन दीर्घः । क्रैयादिकाद्वा धूञो विकरणव्यत्ययेन श्नुप्रत्ययः । तस्मादेवं महानुभावौ युवाम् इमं यजमानं संग्रामे जितवन्तमनुगृह्णीतम् अस्मिन्निन्द्रियादिकं धत्तम् । " वि वा एष इन्द्रियेण वीर्येणर्ध्यते " ( तैसं २.२.१ ) इत्यादि ब्राह्मणम् ॥

तत्रैव याज्या—'शुचिम्' इति चतुष्पदा त्रिष्टुप् ॥ ᵛशुचिं निर्दोषं ᵛस्तोमं स्तोत्रं ᵛनव- २० जातं नवम् अभूतपूर्वं जातं जननम् अस्येति । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ( पा ६.२.१ ) ।

सहेन्द्रियेण वीर्येण जनतामेति " ( तैसं २.२.१ ) इति । [२४]विजिगीषुकथार्थं स्वविद्याप्रकटनाय वा सभां जिगमिषोर्धैर्यभ्रंशरूपं [२५]वीर्यापक्रमणं भवति ॥

तृतीया त्वैन्द्राग्नेष्टिः पौष्णचरुक्षैत्रपत्यचरुभ्यामुपरिष्टात्[२६] विधास्यते ॥

इन्द्राग्नी इति ॥ तासु त्रिसृष्विष्टिषु पुरोनुवाक्यामाह — " इन्द्राग्नी नवतिं पुरो दासपत्नीरधू- २५ नुतम् । साकमेकेन कर्मणा " इति ॥ दासाः प्रजानामुपक्षपयितारस्तस्करप्रभवस्ते पतयो यासां पुरीणां ता दासपत्न्यः । हे ᵛइन्द्राग्नी, तादृशीर्नवतिसंख्याकाः ᵛपुरः युगपत् एकेनैव प्रहारकर्मणा युवां क्षपयतम् ॥

शुचिमिति ॥ याज्यामाह — " शुचिं नु स्तोमं नवजातमद्येन्द्राग्नी वृत्रहणा जुषेथाम् । उभा हि वां सुहवा जोहवीमि ता वाजं सद्य उशते धेष्ठा " इति ॥ हे वृत्रहणौ इन्द्राग्नी ,

१०. व– °संख्यायुक्ताः । ३०

२४. आ.पा.हा–विजिगीषुकथासु । २५. वं–वीर्यापकुण्ठनम् । २६. अ१.तं– °चरुभ्यामूर्ध्वम् ।

$^{v}$अथ अस्मिन्नहनि । हे $^{v}$इन्द्राग्नी, पादादित्वात् न निहन्यते । पाष्ठिकमामन्त्रिताद्युदात्तत्वम् (पा ६.१.१९८)। $^{v}$वृत्रहणा वृत्रस्य पापस्य हन्तारौ युवाम् । " सुपा सुलुक्° " (पा ७.१.३९) इत्यादिना आकार. । " नामन्त्रिते समानाधिकरणे सामान्यवचनम् " ( पा ८.१.७३ ) इति पूर्वस्याविद्यमानवत्त्वनिषेधात् निहन्यते । $^{v}$जुषेथां सेवेथां, $^{v}$नु क्षिप्रम् । " [11]आमन्त्रित पूर्वमविद्यमानवत् " ( पा ८.१.७२ ) इत्यविद्यमानवत्वात्[11] न निहन्यते । छसार्वधातुकानुदात्तत्वे ( पा ६.१.१८६ ) विकरणस्वरः । $^{v}$हि यस्मात् $^{v}$उभा उभौ $^{v}$वां युवां $^{v}$सुहवा स्वाह्वानौ आहूयमानावप्यरोषौ । " बहुल छन्दसि " ( पा ६.१.३४ ) इति प्रागेव प्रत्ययोत्पत्ते अनैमित्तिके संप्रसारणे कृते, आतोयुचोऽप्रसङ्गात्* ( पा ३.३.१२८ ) " ईषद्दु सुषु कृच्छ्राकृच्छ्रार्थेषु खल् " ( पा ३.३ १२६ ) इति खल्प्रत्यय । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६.२.१३९ ) । ' उभा सुहवा ' इति " सुपा सुलुक्° " ( पा ७.१.३९ ) इत्याकार । ईदृशौ $^{v}$वा युवा $^{v}$जोहवीमि भृशमाह्वयामि । ह्वयतेर्यङ्लुक् । " अभ्यस्तस्य च " ( पा ६.१.३३ ) इति सम्प्रसारणम् । " यङो वा " ( पा ७.३.९४) इति ईडागम । " हि च " (पा ८.१.३४ ) इति निघाते निषिद्धे " अभ्यस्तानामादि. " (पा ६.१.१८९) इत्याद्युदात्तत्वम् । $^{v}$ता तौ युवा $^{v}$वाजम् अन्नम् $^{v}$उशते कामयमानाय यजमानाय । " शतुरनुमो नद्यजादी " ( पा ६.१.१७३ ) इति विभक्तेरुदात्तत्वम् । $^{v}$सद्य तदानीमेव $^{v}$धेष्ठा धातृतमौ । धानकर्मणो दधातेस्तृचि " तुश्छन्दसि " ( पा ५.३.५९ ) इति इष्ठन्प्रत्यय । " तुरिष्ठेमेय सु " ( पा ६.४ १५४ ) इति तृशब्दस्य लोपः । पूर्ववत् विभक्तेराकार. । तौ तादृग्गुणौ युवा यस्मात् जोहवीमि, तस्मादिम स्तोमं जुषेयाम् । अस्मिन्निन्द्रियादिक च धत्तमिति ॥

~~~~~~~~~~

[भट्टभास्करः] $^{v}$इम $^{v}$स्तोम $^{v}$जुषेथा सेवेताम् । कीदृशम् ? $^{v}$शुचि निर्दोषं, नवैः [27]उक्तिविशेषैर्जात जन्म यस्य तं $^{v}$नवजातम् । $^{v}$सुहवा[28] रोषगर्वादिरहिततया सुखेन होतु शक्यौ युवामुभौ यस्मात् $^{v}$जोहवीमि आह्वयामि तस्मात् तावुभौ युवा कामयमानाय यजमानाय $^{v}$वाज $^{v}$सद्यः [29]धत्तम् । तदिदमुत्तरार्धोक्तम् [30]अन्नं, न[30] स्तोत्रम् ॥

यथोक्तकर्मप्रयोगान्तःपातिनमपरं याग विधत्ते — " पौष्णं चरुमनु निर्वपेत् पूषा वा इन्द्रियस्य वीर्यस्यानुप्रदाता पूषणमेव स्वेन भागधेयेनोप धावति स एवास्मा इन्द्रिय वीर्यमनु प्र यच्छति " ( तैस २.२.१ ) इति । वीर्यं प्रददानाविन्द्राग्नी अनु पूषा प्रयच्छति ॥

~~~~~~~~~~

११–११. त. वि व – द्वयोरप्यामन्त्रितयोरविद्यमानवत्वात् । *शुद्धीकृतोऽयं पाठ । मैसूर पुस्तके लिखितपुस्तकेषु ' आतोयुजोऽ° ' इति लभ्यते ।

~~~~~~~~~~

२७. आ.क पा.हा – अन्नविशेषै । २८. आ१.इ उ.त.मां हा – ' सुहवा ' नास्ति । २९. क – ' धत्तम् ' इत्यस्यानन्तर ' दत्तम् ' । ३०–३०. हा – अन्नमेव न ; आ१.तं – नूतन° ; क – नूतनमन्नं न ।
~~~~~~~~~~

काम्येष्टियाज्यापुरोनुवाक्याः ]

वयमु त्वा पथस्पते रथं न वाजसातये । धिये पूषन्नयुज्महि ॥
पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानडर्कम् ।
स नो रासच्छुरुधश्चन्द्राग्रा धियंधियं सीषधाति प्र पूषा ॥

वयम् । उ । त्वा । पथः । पते । रथम् । न । वाजसातय इति वाज-सातये ।
धिये । पूषन् । अयुज्महि ॥ ५
पथस्पथ इति पथः-पथः । परिपतिमिति परि-पतिम् । वचस्या ।
कामेन । कृतः । अभीति । आनट् । अर्कम् ॥
सः । नः । रासत् । शुरुधः । चन्द्राग्रा इति चन्द्र-अग्राः ।
धियंधियमिति धियम्-धियम् । सीषधाति । प्रेति । पूषा ॥

अथ संग्रामं जित्वा जनतामेष्यतः "पौष्णं चरुमनु निर्वपेत्" ( तैसं २.२.१ ) इति १०
पौष्णश्चरुः अनुनिर्वाप्यत्वेनाम्नातः । [१२]तत्रेयं पुरोनुवाक्या—'वयम्' इति गायत्री त्रिपदा ॥
हे [v]पथः [v]पते [१३]सन्मार्गस्य [१४]दर्शयितः । "षष्ठ्याः पतिपुत्र°" ( पा ८.३.५३ ) इत्यादिना
विसर्जनीयस्य सकारः । "सुबामन्त्रिते पराङ्गवत् स्वरे" ( पा २.१.२ ) इति षष्ठ्यन्तस्य
पराङ्गवद्भावात् षष्ठ्यन्तामन्त्रितसमुदायो निहन्यते । हे [v]पूषन्, [v]वयम् [v]उ वयमेव त्वाम्
[v]अयुज्महि योजयामः । "छन्दसि लुङ्लङ्लिटः" ( पा ३.४.६ ) इति लङ् । "बहुलं १५
छन्दसि" ( पा २.४.७३ ) इति शपो लुक् । कमिव ? [v]रथं [v]न रथमिव । उपरिष्टादुपा-
चारत्वात्* उपमानार्थो नशब्दः (द्र. निरुक्त १.४)। किमर्थम् ? [v]धिये कर्मणे कर्मसिद्ध्यर्थम् ।
"सावेकाचः°" ( पा ६.१.१६८ ) इति विभक्तेरुदात्तत्वम् । धीर्विशेष्यते, [v]वाजसातये
वाजोऽन्नं स सन्यते लभ्यते अस्याम् इति । [१५]अधिकरणार्थे क्तिनि[१५] "जनसनखनाम्°"
( पा ६.४.४२ ) इत्यात्वम् । "[१६]मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः" २०
( पा ६.२.१५१ ) इत्युत्तरपदान्तोदात्तत्वं[१६] बाधित्वा दासीभारादित्वात् ( पा ६.२.४२ )
पूर्वपदप्रकृतिस्वरत्वम् । ईदृशकर्मसिद्ध्यर्थं त्वां योजयाम इति ॥

तत्रैव याज्या—'पथस्पथः' इति चतुष्पदा त्रिष्टुप् । [v]पथस्पथः सर्वस्य मार्गस्य ।

वयमिति ॥ तत्र पुरोनुवाक्यामाह— "वयमु त्वा पथस्पते रथं न वाजसातये । धिये पूषन्नयु-
ज्महि" इति ॥ हे सुमार्गपते [v]पूषन्, [v]वयम् एव त्वां [v]रथम् इव योजयामः । किमर्थम् ? [v]धिये धीयते २५
अनुष्ठीयत इति धीः कर्म । कीदृश्यै धिये ? वाजस्यान्नस्य सातिर्लाभो यस्याः सा वाजसातिस्तस्यै ॥

पथस्पथ इति ॥ याज्यामाह — "पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यान-
डर्कम् । स नो रासच्छुरुधश्चन्द्राग्रा धियंधियं सीषधाति प्र पूषा" इति ॥ फलकामेन प्रेरितोऽहं

१२. मै- तत्र । १३. च- सर्वस्य मार्गस्य ; मै- मार्गस्य । १४. मै-पालयितः । *निरुक्त-
मनुसृत्य शुद्धतामापादितोऽयं पाठः । मैसूरपुस्तके लिखितपुस्तकेषु च 'उपरिष्टादुपचारत्वात्' इत्यस्ति । ३०
१५. ति-अधिकरणे क्तिन् । १६-१६. ति. च- मन्क्तिन्व्याख्यानेत्यादिनोत्तर° ।

"कस्कादिषु च" (पा ८.३.४८) इति विसर्जनीयस्य सकार. । "अनुदात्तस्य च यत्रोदात्तलोप." (पा ६.१.१६१) इति विभक्तेरुदात्तत्वम् । "अनुदात्तं च" (पा ८.१.३) इत्याम्रेडितस्यानुदात्तत्वम् । परिपतिं परिपालयितारम् । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ( पा ६.२.२ ) । अर्कं स्तोतव्यम् । अर्क स्तवने । कर्मणि घञ् ( पा ३.३.१९ ) । अर्चतेर्वा घञ् । "चजो
५ कु घिण्यतो " ( पा ७.३.५२ ) इति कुत्वम् । उभयत्रापि उञ्छादित्वात् ( पा ६.१.१६० ) अन्तोदात्तत्वम् । ईदृशं हि पूषणम् । [१७]कामेन कृत.[१७]कामेन वशीकृतो जन. । वचस्या वचसा स्तोत्ररूपेण । तृतीयैकवचनस्य याजादेश (पा ७.१.३९) । अश्यानट् अभिप्राप्नोति तस्मादहमपि [१८]अच त्वाम्[१८] उपागतोऽस्मीति भाव. । अशू व्याप्तौ । "छन्दसि लुङ्लङ्लिट." (पा ३.४.६) इति लङ् । श्नम् । परस्मैपदे व्यत्ययेन हल्ङयादिलोपे ( पा ६.१.६८ ) व्रश्चादिना षत्वम्
१० ( पा ८.२.३६ ) । यद्वा नशेर्गतिकर्मण. लुङि "मन्त्रे घस°" ( पा २.४.८० ) इति लेर्लुक् । "छन्दस्यपि दृश्यते" ( पा ६.४.७३ ) [१९]इत्याडागमः । स पूषा न. अस्मभ्य रासत् ददातु । रातेर्लेटि "सिब्बहुलं लेटि" ( ३.१.३४ ) इति सिप् । "लेटोऽडाटौ" ( पा ३.४.९४ ) इत्यडागम । किं ददातु ? [२०]शुरुधः शोकस्य रुधः निवारयित्रीः । क्विप् ( पा ३.२.१७८ ), कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६.२.१३९) । पृषोदरादित्वात्
१५ (पा ६.३.१०९) व्यञ्जनस्य लोप । का. पुनस्ता ? चन्द्राग्रा ओषधीः, चन्द्रः हिरण्यम् असितजातिर्वा चन्द्रः, स अग्रे प्रधानमीश्वरो वा यासां ता., अस्मभ्य ददातु[२०] इदानीं प्रज्ञानतामेव धनवत्तया प्रयोजनमिति ता प्रार्थयते ' धिय धियम् ' इत्यादिना चतुर्थेन पादेन ॥ सर्वां धियं प्रज्ञाम् । स पूषा प्रसीषधाति[२१] प्रकर्षेण सीषधाति साधयत्वस्माकम् । सिध्यतेर्ण्यन्तात्, धातुत्वे [२२]कृते लेटि "बहुलं छन्दसि" ( पा २.४.७६ ) इति शप. श्लु , द्विर्वचनादि[२३], "बहुलं
२० छन्दसि" ( पा ७.४.७८ ) इत्यभ्यासस्येत्वम् । तुजादित्वात् ( पा ६.१.७ ) अभ्यासस्य दीर्घत्वम्[२४] । वर्णव्यत्ययेन धातोर्ह्रस्वत्वम् । "लेटोऽडाटौ" ( पा ३.४.९४ ) इत्याट्[२५]। "छन्दस्युभयथा" (पा ३.४.११७) इति लेट आर्धधातुकत्वात् णिलोप । "इणको"

यस्य तस्य [३१]सम्मार्गस्य परिपालक पूषापरपर्यायमर्कं स्तोत्ररूपेण वचसाऽभिव्याप्तवानस्मि । सोऽस्मभ्य शोकनिरोधिका रासत् प्रयच्छतु । कास्ता ? [३२]चन्द्राग्रा [३३]चन्द्रवदाह्लादनसाधनमग्रं यासा ता
२५ ओषधी । किं च पूषा [३४]धियंधियं तत्तद्विषया[३४] प्रज्ञा [३५]प्र सीषधाति प्रकर्षेण साधयतु ॥

१७-१७. मै- ' कामेन कृत ' नास्ति । १८-१८ ति प. ब- अमुम् । १९ ब-इत्यादिनाऽऽगम । २०-२० त ति. प ब- शुरुध शुध्रुवो निरोधीरेव चन्द्राग्रा निर्मला । यद्वा शु शुध दारिद्र्य ■ निरुन्धीति शुरुध । २१. मै-' प्रसीषधाति ' नास्ति । २२ त ति ब- आत्वे । २३-२३ मै-दाप्श्लुद्विर्वचनानि । २४ मै-दीर्घ । -२५ मै-इत्यात्वम् ।

३० ३१. आ क,पा हा- मार्गस्य । ३२. आ इ.उ त मां,हा-' चन्द्राग्रा ' नास्ति । ३३. पा मां हा-चन्द्रवदास्वादन° । ३४-३४ इ उ हा-धिय तत्तद्वियम्, पा मा- धियं न तत्तद्विय । ३५-३५. आ. इ.उ.त.पा.मां.हा-' प्रसीषधाति ' नास्ति ।

क्षेत्रस्य पतिना वयं हितेनेव जयामसि ।
गामश्वं पोषयित्न्वा स नो (२) मृडातीदृशे ॥
क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व ।
मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृडयन्तु ॥
क्षेत्रस्य । पतिना । वयम् । हितेन । इव । जयामसि । ५
गाम् । अश्वम् । पोषयित्नु । एति । सः । नः (२) । मृडाति । ईदृशे ॥
क्षेत्रस्य । पते । मधुमन्तमिति मधु-मन्तम् । ऊर्मिम् । धेनुः । इव । पयः । अस्मासु । धुक्ष्व ।
मधुश्चुतमिति मधु-श्चुतम् । घृतम् । इव । सुपूतमिति सु-पूतम् । ऋतस्य । नः । पतयः । मृडयन्तु ॥

( पा ८.३.५७ ) इति षत्वम् । यद्वा—विकरणव्यत्ययेन च्लेः “ णिश्रि° ” ( पा ३.१.४८ ) इत्यादिना चङ्द्विर्वचनादिः । णौ चङ्युपधाया ह्रस्वत्वम् ( पा ७.४.१ ) ॥ १०

“ क्षेत्रपत्यं चरुं निर्वपेत् जनतामागत्य ” ( तैसं २.२.१ ) इत्यस्य पुरोनुवाक्या [२६]‘ क्षेत्रस्य ’ इति[२६] चतुष्पदाऽनुष्टुप् ॥ [V]क्षेत्रस्य [२७]सस्यनिष्पत्त्याधारस्य । [V]पतिना पत्याधिष्ठात्रा । “ षष्ठीयुक्तश्छन्दसि वा ” ( पा १.४.९ ) इति घिसंज्ञा । तेनानुगृह्यमाणा [V]वयं [V]जयामसि जयामः । “ इदन्तो मसि ” ( पा ७.१.४६ ) इति इकारः । केनेव ? [V]हितेन [V]इव । यथा हितेन मित्रेण जनेन [२८]अमित्रं जयति, एवं क्षेत्रपतिना जयेम । किं जयेम ?— १५ [V]गाम् [V]अश्वं [V]पोषयित्नु पोषकमन्नादिकं प्रजाम् । आकारः समुच्चये । गां चाश्वं च पोषयित्नु च । पुषेर्ण्यन्तात् “ स्तनिहृषिपुषि° ” ( उ ३१६ ) इत्यादिना इत्नुच्प्रत्ययः । “ अयामन्ताल्वाय्येत्न्विष्णुषु ” ( पा ६.४.५५ ) इति णेरयादेशः । [V]सः च क्षेत्रपतिः [V]नः अस्मान् [V]मृडाति मृडयतु सुखयतु । मृड सुखने तौदादिकः । “लेटोऽडाटौ” ( पा ३.४.९४ ) इत्याडागमः । [V]ईदृशे यथोक्ते [२९]गवादावर्थे अस्मान् स्वामित्वेन स्थापयित्वा सुखयतु । “त्यदादिषु दृशः°” २० ( पा ३.२.६० ) इति कञ् । इदम ईशादेशः ( पा ६.३.९० ) । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६.२.१३९ ) । अत्र यणादेशसवर्णदीर्घयोरकरणेन[३०] तृतीयचतुर्थपादौ [३१]पूरयितव्यौ ॥

तत्रैव याज्या—‘ क्षेत्रस्य पते ’ इति चतुष्पदा त्रिष्टुप् ॥ हे [V]क्षेत्रस्य [V]पते । पराङ्-

इष्ट्यन्तरं विधत्ते—“ क्षेत्रपत्यं चरुं निर्वपेत् जनतामागत्येयं वै क्षेत्रस्य पतिरस्यामेव प्रतितिष्ठति ” ( तैसं २.२.१) इति ॥ क्षेत्राणां भूभागत्वात् भूमेः क्षेत्रपतित्वम् । [२६]अर्थवादगतप्रतिष्ठाकामोऽत्राधिकारी ॥ २५

क्षेत्रस्येति ॥ तत्र पुरोनुवाक्यामाह— “ क्षेत्रस्य पतिना वयं हितेनेव जयामसि । गामश्वं पोषयित्न्वा स नो मृडातीदृशे ” इति ॥ [V]हितेन पुत्रादिना यथा गवादिजयस्तथा [V]क्षेत्रस्य [V]पतिना [V]गाम् [V]अश्वं पोषकमन्नादिकं च [V]वयम् [V]आ समन्तात् जयामः । [V]सः क्षेत्रस्य पतिः [V]ईदृशे गवादौ मां सुखयतु ॥

क्षेत्रस्य पत इति ॥ याज्यामाह — “ क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु

२६–२६. मै–‘ क्षेत्रस्य इति ’ नास्ति । २७. मै–निष्पत्त्याधारस्य । २८. पं. अधिष्ठाता; तं. ति. ३० व– अधिष्ठिता । २९. तं. ति. व–गवाद्यस्यार्थे । ३०.तं. ति– °दीर्घत्वयोरकरणेन । ३१. व– पूर्यौ ।

२६. इ.उ.पा.मा.द्वा–अर्थवादागत° ।

यद्भावेन षष्ठ्यामन्त्रितसमुदायस्य पाष्ठिकमामन्त्रितायुदात्तत्वम् ( पा ६·१·११८ )। मधु-
मन्तम् ऊर्मिं मधुरेण क्षीरादिना तद्वन्तमूर्मिम्। अरणशील गवादिसमुदायम्। " अर्तेरूच "
( उ ४९३ ) इति ऋ गतौ इत्यस्मात् मिप्रत्यय । ऊकारश्चान्तादेश.। मधुश्चुत मधुर
क्षीरादिकमासिञ्चन्त न केवल मधुमन्तम्, अपि तु [32]सर्वदा प्राणिभ्यः स्रवन्तम्। श्चुतिर्
५ आसेचने। कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६·२·१३९ )। घृतम् इव सुपूतम्।
" सु पूजायाम् " ( पा१·४ ९४ ) इति कर्मप्रवचनीयत्वम्। " स्वती पूजायाम् "
( द्र. पाभा २ २·१८ वा ४ ) इति प्रादिसमासः। तेनाव्ययपूर्वपदप्रकृतिस्वरत्वम्
( पा ६·२·२ )। गतित्वाभावात् " सूपमानात् क्तः " ( पा ६ २·१४५ ) इत्येन न
भवति। ईदृश गवादिसमुदायम् अस्मासु धुक्ष्व[33] स्वयमेव धुदव अस्मद्वात्सल्येन, यथा
१० धेनुः पय स्वयमेव दुग्धे दोग्धृवात्सल्येन। कर्मकर्तरि लकार । " न दुहस्नुनमाम् "
( पा ३·१·८९ ) इति यक्प्रतिषेधः। [34]यद्वा—' क्षेत्रम् ' इत्यध्याह्रियते। गवादिसमुदाय क्षेत्राणि।
दुहि स्वरितेत् ( पा १·३·७२ )। किंच ऋतस्य यज्ञस्य पतय. अग्न्यादयो देवा न
अस्मानस्मदीय वा त्वया दीयमान गवादिसमुदाय मृडयन्तु ' सुखयन्तु। " छन्दस्युभयथा "
( पा ३·४·११७ ) इति णिच. सार्वधातुकत्वेन टित्त्वाल्लघूपधगुणाभाव· ( पा ७ ३·८६ )॥

१५ धुक्ष्व। मधुश्चुत घृतमिव सुपूतमृतस्य न· पतयो मृडयन्तु " इति॥ हे क्षेत्रस्य पते, धेनुः
पय इव रसम् अस्मासु माधुर्यरसोपेतमूर्मिवत् पुन पुनरावृत्युपेत द्रव्यान्तरेष्वपि स्वमाधुर्य·
स्राविण घृतवत् पर्युषितत्वदोषाभावेन सुपूत नालिकेरफलेक्षुदण्डगुडादिभोग्यपदार्थसमूह धुक्ष्व।
यज्ञस्य पतय. अस्मान् मृडयन्तु ॥

अवशिष्टामैन्द्राग्नेष्टिं विधत्ते — " ऐन्द्राग्नमेकादशकपालमुपरिष्टान्निर्वपेदस्यामेव प्रतिष्ठायेन्द्रिय
२० वीर्यमुपरिष्टादात्मन् धत्ते " ( तैसं २ २ १ ) इति। क्षेत्रपत्यचरोरूर्ध्वमियमिष्टि । अत्रापि वीर्यकामोऽधि·
कारी। अनतामागत्येति क्षेत्रपत्यस्य काल उपरिष्टादादित्यस्य काल । अत्र याज्यानुवाक्ये
पूर्वमेवोक्ते ॥

इष्टयन्तर विधत्ते — " अग्नये पथिकृते पुरोडाशमष्टाकपाल निर्वपेद्यो दर्शपूर्णमासयाजी
२५ सन्नमावास्या वा पौर्णमासीं वातिपादयेत् पथो वा एषोऽध्यपथेनैति। यो दर्शपूर्णमासयाजी
सन्नमावास्यां वा पौर्णमासीं वातिपादयत्यग्निमेव पथिकृतस्वेन भागधेयेनोप धावति स
एवैनमपथात् पन्थामपि नयत्यनड्वान् दक्षिणा वही ह्येष समृद्ध्यै " ( तैसं २·२·२ ) इति।

[32] तै. ति प- तत्सर्वदा। [33]. तै. ति. ब-' धुक्ष्व ' इत्यस्यानन्तर ' तं गवादिसमुदायं सर्वं
दुग्ध्व स्वम् '। [34]. ति. ब- यथा।

काम्येष्टियाज्यापुरोनुवाक्याः ]

अग्ने नयं सुपथां राये अस्मान् विश्वांनि देव वयुनांनि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमंउक्तिं विधेम ॥

अग्नें । नयं । सुपथेति सु-पथां । राये । अस्मान् । विश्वांनि । देव । वयुनांनि । विद्वान् । युयोधि । अस्मत् । जुहुराणम् । एनः । भूयिष्ठाम् । ते । नमंउक्तिमिति नमः-उक्तिम् । विधेम ॥

"अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयेत्" (तैसं २.२.२) इत्यस्य पुरोनुवाक्या—'अग्ने नय' इति त्रिष्टुप् चतुष्पदा ॥ हे ${}^{V}$अग्ने ${}^{V}$देव, ${}^{V}$सुपथा शोभनेन मार्गेण शास्त्राविरुद्धेन । "परादिश्छन्दसि°" (पा ६.२.१९९) इत्युत्तरपदाद्युदात्तत्वम् । "आद्युदात्तं द्व्यच् छन्दसि" (पा ६.२.११९) इति तु न भवति, अन्तोदात्तत्वात् पथिन्शब्दस्य, क्रत्वादिर्वा द्रष्टव्यः (पा ६.२.११८) । "न पूजनात्" (पा ५.४.६९) इति समासान्तप्रतिषेधः । ईदृशेन १० मार्गेण ${}^{V}$अस्मान् ${}^{V}$नय । किमर्थम्? ${}^{V}$राये धनाय हविर्लक्षणाय; त्वदीयहविःसंपादनयोग्या वयं यथा भवामः तथा कुर्वित्यर्थः । त्वं हि ${}^{V}$विश्वानि ${}^{V}$वयुनानि ज्ञानान्यभिप्रायान् ${}^{V}$विद्वान् । "अजियमिशीङ्भ्यश्च" (उ ३४८) इत्यजेरुनन्प्रत्ययः । "अजेर्व्यघञपोः" (पा २.४.५६) इति वीभावश्च । किंच— ${}^{V}$एनः पापं दर्शपूर्णमासातिपत्तिलक्षणम् ${}^{V}$अस्मत् अस्मत्तः ${}^{V}$युयोधि अपनय । यौतिः पृथग्भावे । लोटि "बहुलं छन्दसि" (पा २.४.७६) इति शपः श्लुः । १५ "वा छन्दसि" (पा ३.४.८८) इत्यपित्त्वाभावेन अङित्त्वात् "अङितश्च" (पा ६.४.१०३) इति धिभावः । कीदृशमेनः? ${}^{V}$जुहुराणं कुटिलस्वभावम् । हुर्छा कौटिल्ये इत्यस्मात् धातोः[३५] "हुर्छेः सनो लुक् छलोपश्च" (उ २५७) इत्यानच्प्रत्ययः ।

पर्वणि पर्वण्यप्रमादेन तदिष्टेरनुष्ठानं [३७]विद्यमानः पन्थाः । कस्मिंश्चित्[३८] [३९]पर्वणि प्रमादेनानुष्ठानाभावोऽपथः । [४०]अस्मिन् विषये प्रायश्चित्तरूपेयमिष्टिः । यस्मादेषोऽनड्वान् भारं वहति तस्मात् २० समृद्धयै भवति ॥

अग्न इति ॥ तत्र पुरोनुवाक्यामाह —"अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम" इति ॥ हे ${}^{V}$अग्ने, त्वं दर्शपूर्णमासेष्टिफलरूपाय धनाय ${}^{V}$अस्मान् अतिपाददोषरहितेन सुमार्गेण ${}^{V}$नय । हे ${}^{V}$देव, त्वं विश्वान् मार्गान् वेत्सि । नरकहेतुत्वेन [४१]कुटिलम् अतिपादरूपं पापमस्मत्तो वियोजय । बहुतमां २५ नमस्कारोक्तिं तव करवाम ॥

३५. मै– 'धातोः' नास्ति ।

३७. आ.पा.भां.हा–विद्यमानम् । ३८. इ.उ.पा.भां.हा–कस्मिन् । ३९. तं– 'पर्वणि' नास्ति । ४०. तं–तस्मिन् । ४१. इ.उ–क्रूरफलम् ।

[ काम्येष्टियाज्यापुरोनुवाक्या

आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोढुम् ।
अग्निर्विद्वान्त्स यजात् (३) सेदु होता सो अध्वरान्त्स ऋतून् कल्पयाति ॥

एति । देवानाम् । अपीति । पन्थाम् । अगन्म ।
यत् । शक्नवाम । तत् । अन्विति । प्रवोढुमिति प्र-वोढुम् ॥
अग्निः । विद्वान् । सः । यजात् (३) । सः । इत् । उ । होता ।
सः । अध्वरान् । सः । ऋतून् । कल्पयाति ॥

हुर्च्छितुमिच्छति जुहुराणम् । यद्वा—हृ प्रसह्यकरणे, [३६]जौहोत्यादिकः, तस्मात् ताच्छीलिके (पा ३.२.१२९) चानशि शप श्लुः (पा २.४.७५) । " बहुलं छन्दसि " (पा ७.१.१०३) इत्युत्वम् । तदर्थं नयं ते तुभ्य भूयिष्ठां बहुतमां नमउक्तिं नमस्कारोक्तिं विधेम क्रियास्म । विध विधाने । आशिषि लिङ् । " लिङ्याशिषि " (पा ३.१.८६) इत्यङ् । यासुडादि. (पा ३.४.१०३) । " छन्दस्युभयथा " (पा ३.४.११७) इति सार्वधातुकत्वात् सलोप. । अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६.२.२) । नमस आद्युदात्तत्वम् । " पथो वा एषः " (तैस २.२.२) इत्यादि ब्राह्मणम् ॥

तत्रैव याज्या— ' आ देवानाम् ' इति चतुष्पदा त्रिष्टुप् ॥ देवानां पन्थां पन्थानं कर्ममार्गं वयम्[३७] आ अगन्म आगता भूयास्म । " मन्त्रे घसह्वर° " (पा २.४.८०) इत्यादिना लेर्लुक् । यद्वा—" बहुलं छन्दसि " (पा २.४.७३) इति शपो लुक् । " पथिमथोः सर्वनामस्थाने " (पा ६.१.१९९) इति पथिन्शब्दस्याद्युदात्तत्वम् । द्वितीयैकवचनेऽपि व्यत्ययेन (पा ३.१.८५) " पथिमथ्यृभुक्षामात् " (पा ७.१.८५) इत्यात्वम् । ये वयं कालविपर्यासात् कर्ममार्गात् प्रच्युतास्तेऽपि वयम् । यद्वा— यत कर्ममार्गात् प्रच्युताः तमपि पन्थानमागन्म । किं कार्त्स्न्येन सर्वं निर्वोढुं शक्यत इत्यत आह— यत शक्नवाम यावत् किंचिदेव विषये अनुष्ठातुं शक्नुयाम । लेट्याडागम (पा ३.४.९२) । सतिशिष्टो विकरणस्वर (पा ६.१.१५८वा ९) । तत् अनु प्रवोढुं तच्छक्यं कर्मजातम् अनुक्रमेणाविच्छेदेन निर्वोढुं पन्थानमगन्म । अविच्छेदेन च अनुष्ठानं प्रवाह । प्रवोढुमित्यत्र " तादौ च निति कृत्यतौ " (पा ६.२.५०) इति गते. प्रकृतिस्वरत्वम् । शक्त्या कर्मप्रवाहो लक्ष्यत इति लक्षणे अनो कर्मप्रवचनीयत्वम्

आ देवानामिति ॥ तत्र याज्यामाह—" आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोढुम् । अग्निर्विद्वान्त्स यजात् सेदु होता सो अध्वरान्त्स ऋतून् कल्पयाति " इति ॥ यस्माद् पथो वय पूर्वं भ्रष्टा तम् अपि देवानाम् पन्थानमिदानीमागता । किं कर्तुम् ? यत् कर्मानुष्ठातुं शक्नुमः तत् अनु क्रमेण प्रवोढुम् । अविच्छेदेनानुष्ठानं प्रवाह । यद्यप्यहं न जानामि तथाप्ययं पवित्रत् अग्नि अपराधं समाधातुं वेत्ति । अत स अस्मदर्थं यक्ष्यति । स एव देवानामाह्वाता । स. एतानिपथान् यज्ञानृत्वादिकांश्च कल्पयिष्यति ॥

[३६]. मै– जुहोत्यादिक । [३७] मै– ' वयम् ' नास्ति ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

(पा १·४·८४)। यद्वा–तदिति लिङ्गव्यत्ययेन (पा ३·१·८५) नपुंसकत्वम्। तं पन्थानमनु प्रवोढुं यस्माद्वयं शक्नवाम। संभावने लोट्। तस्मात् तमागन्म[38] वयमिति। ननु तदवस्थमेव कर्मणो वैकल्यं, कथं वा [39]तन्निर्वोढुं शक्यत इत्यत आह— ᵛसः एव खलु ᵛअग्निः पथिकृन्नामा ᵛयजात् यजेत्। अविगुणं यागं निर्वर्तयिष्यति अनतिपन्नतां कर्मणः संपादयिष्यति। लेट आडागमः (पा ३·४·९४)। कोऽस्य विशेष इत्यत आह– ᵛविद्वान् सम्यग्यागसंपादनोपायज्ञः। ननु देवानां यागेऽतिपन्ने किमग्निना शक्यमित्यत आह– ᵛसः एव खल्वग्निः ᵛहोता देवानां साधु आह्वाता। ह्वयतेस्तृनि "बहुलं छन्दसि" (पा ६·१·३४) इति संप्रसारणम्। देवाः खल्वग्निना हूयमानाः कर्मणो वैगुण्यमनादृत्य आगमिष्यन्तीति। अधुना किमग्निना [40]अशक्यं कर्तुमिति प्रतिपाद्यते। ᵛसः खल्वग्निः ᵛअध्वरान् यागान् ᵛकल्पयाति कल्पयति अकालकृतानपि फलप्रदानसमर्थान् करोति। यद्वा– अध्वरान् ध्वरैः कर्मणो बाधकैः कालातिपत्त्यादिदोषैः रहितानस्मान् अस्मद्यागान् वा करोतु। एवं हि "नव्सुभ्याम्" (पा ६·२·१७२) इत्युत्तरपदान्तोदात्तत्वं लभ्यते। ननु कालो बलवान्, तत् कथं तदतिपत्तिः अग्निना परिहर्तुं शक्यत इत्यत आह–ᵛसः एव खल्वग्निः ᵛऋतून् कालावयवान् कल्पयाति, आदित्यात्मनाप्यग्नेरेवावस्थितत्वात्। यः कालस्यैव स्रष्टा स कथं [41-]विपन्नं कालम्[-41] अविपन्नं कर्तुं न शक्नुयात् इति भावः। [42]अत्र 'सः' इति पदं चतुः प्रयुज्यते। तत्र संहितायां प्रथमस्य "एतत्तदोः°" (पा ६·१·१३२) इति प्रथमा लुप्यते। द्वितीयस्य तु "सोऽचि लोपे चेत्°" (पा ६·१·१३४) इति लुप्यते। तृतीयस्य तु "अतो रोः°" (पा ६·१·११३) इति रोरुत्वे गुणे च कृते, "अनुदात्ते च कुधपरे" (पा ६·१·१२०) इति रोः प्रकृतिभावः। चतुर्थस्य तु "भोभगोअघोअपूर्वस्य योऽशि" (पा ८·३·१·७) इति यत्वे कृते, "लोपः शाकल्यस्य" (पा ८·३·१९) इति लुप्यते। लोपस्य च असिद्धत्वात् (पा ८·२·१) गुणो न क्रियते॥

इष्ट्यन्तरं विधत्ते — "अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद आहिताग्निः सन्नव्रत्यमिव चरेदग्निमेव व्रतपति॰ स्वेन भागधेयेनोप धावति स एवैनं व्रतमा लम्भयति। व्रत्यो भवति" (तैसं २·२·२) इति। अव्रत्यं यागव्रतविरोध्यनृतवादादिकं सोऽग्निरेवैनमव्रत्यचारिणं व्रतं प्रापयति। तत उत्तरेषु यागव्रतेषु योग्यो भवति। अत्र मन्त्रकाण्डे पथिकृल्लिङ्गकं मन्त्रयुग्मं पूर्वमाम्नातमुदाहृतम्। [42]व्रतलिङ्गमुपर्युदाहरिष्यते। [43]मध्यवर्तिनि तु युग्मे विशेषलिङ्गाभावेऽप्युभयसाधारणलिङ्गदर्शनात्[44] पूर्वत्र विकल्पितमित्याहुः केचित्। अपरे तूत्तरत्र विकल्पितमिति मन्यन्ते। आचार्यास्तु पूर्वत्रैव स्विष्टकृतः संयाज्ये इति मन्यन्ते॥

३८. मै–तमागतः। ३९. मै–निर्वोढुम्। ४०. ब–न साधु शक्यम्। ४१–४१. मै–विपन्नकालम्। ४२. ति. ब–तत्र।

४२. क–व्रतलिङ्गकमुप°। ४३. आ. मां–मध्यवर्ति। ४४. आ–°साधारणलिङ्गदर्शनाद्।

[Margin line numbers: ५, १०, १५, २०, २५, ३०]

[ काम्येष्टियाज्यापुरोनुवाक्या·

यद्वाहिंष्ठं तद॒ग्नये॑ बृ॒हद॑र्च विभावसो । महिंषीव॒ त्वद्र॒यिस्त्वद्वाजा॒ उदींरते ॥
यत् । वाहिष्ठम् । तत् । अ॒ग्नये॑ । बृ॒हत् । अ॒र्च॒ । वि॒भा॒व॒सो॒ इति॑ विभा-व॒सो॒ ॥
महि॑षी । इ॒व॒ । त्वत् । र॒यिः । त्वत् । वाजाः॑ । उदिति॑ । ई॒र॒ते॒ ॥

तत्रैव स्विष्टकृत पुरोनुवाक्या—'यद्वाहिष्ठम्' इति चतुष्पदानुष्टुप् ॥ [v]वाहिष्ठ
५ वाहयितृतम प्रीतेः प्रापयितृ । स्तोत्रमेव चेदृशं भवति । तस्मादीदृशं [v]यत् स्तोत्रं [v]तत्
[v]अग्नये अग्न्यर्थमेव । अग्निरेव रमणीय स्तोत्रमर्हति । तस्मादीदृशेन स्तोत्रेण त्वामेव स्तौमीति
भावः । वाहयितृशब्दात् "तुश्छन्दसि" (पा ५·३·५९) इति इष्ठन्प्रत्यय. ।
"तुरिष्ठेमेयःसु" (पा ६·४·१५४) इति तृशब्दलोपः । व्यत्ययेन तस्यासिद्धत्वम्
[४३]अनादृत्य "टे" (पा ६·४·१५५) इति टिलोपः । यद्वा—वाहृ प्रयत्ने इत्यस्माद् धातोः
१० तृजन्तात् इष्ठन्प्रत्ययः । अभीष्टनिर्वहणं प्रयत्नः । हे [v]विभावसो तेजोधन, त्वमपि [v]बृहत्
प्रशस्त मदीय स्तोत्रम् [v]अर्च बहु मन्यस्व अङ्गीकुरु । किमिति देवतान्तरं मुक्त्वा अग्निरेव
स्तूयत इत्यत आह—[v]त्वत् त्वत्त [v]रयिः धनम् [v]उत्पद्यते । [v]उदीरते इति वक्ष्यमाणबहुवचना-
न्तमत्र एकवचनान्तविपरिणामेन सबध्यते । कस्मादिव ? [v]महिषी [v]इव । महान् ऋषिः महर्षि.
महेश्वरः । पृषोदरादित्वात् (पा ६·३·१०९) आकारस्येत्वम्, रेफलोपश्च । ततः
१५ पञ्चम्येकवचनस्य "सुपा सुलुक्" (पा ७·१·३९) इति [४४]लुक् । महाराजादिव[४५]
त्वत्तो धनमुत्पद्यते । वृषादित्वात् (पा ६·१·२०३) आद्युदात्तत्वम् । यद्वा— महिष्येव गृह्यते,
यथा राजभार्यायाः रत्नादिक धन[४५] लभन्ते[४६] एवं त्वत्तोऽपि । "अविमह्योष्टिषच्"
(उ ४८) इति महेः टिषचि कृते, टित्वात् ङीप् (पा ४·१·१५) । उदात्तनिवृत्तिस्वरेण
(६·१·१७४,) ङीप उदात्तत्वे प्राप्ते, "महिष्यषाढयोर्जायेष्टकाख्या चेत्*" (फि ६८)
२० इत्याद्युदात्तत्वम् । किंच— [v]वाजा अन्नान्यपि त्वत्त [v]उदीरते उत्पद्यन्ते । ईर गतौ कम्पने
च, इत्यदादिकोऽनुदात्तेत् ॥ "आत्मनेपदेष्वनत." (पा ७ १ ५) इत्यदादेश ॥

यद्वाहिष्ठमिति ॥ तत्र पुरोनुवाक्यामाह—"यद्वाहिष्ठ तदग्नये बृहदर्च विभावसो ।
महिषीव त्वद्रयिस्त्वद्वाजा उदीरते" इति ॥ [v]यत् प्रायणीय हविः [v]तद् [v]अग्नये [v]बृहत् भवतु । हे
[v]विभावसो, फलप्रदानेन मा पूजय । यथा [v]महिषी मया दत्त कार्पासबीज तिलपिष्टादिक भक्षयित्वा
२५ बहुक्षीरादिना पूजयति तद्वत् । तथा सति त्वदनुग्रहात् धनं अन्यनेऽन्नानि चोत्कर्षेण सपद्यन्ते ॥

४३ ब-अनाश्रित्य । ४४-४४. तं. ति. प. ब-पूर्वसवर्णे ईकार आद्युदात्तप्रकरणे दिवोदासादीना
(ब-दिवोदासादीना) छन्दस्युपसंख्यानम् । यद्वा— महिषीत्र राजभार्या, साऽपि महिषी । मत्वर्थीय ईकार ।
पञ्चम्येकवचनस्य 'सुपां सुलुक्' इति लुक् । महाराजादिवत् । ४५. मै-'धन' नास्ति । ४६. मै-लभते ।
* शुद्धीकृतोऽयं पाठ । मैसूरपुस्तके लिखितपुस्तकेषु च 'महिष्याषाढयोरिष्टकाख्यायाम्' इति पाठ. दृश्यते ।
१. डॉ. देवस्थळी-सपादित-फिट्सूत्रवृत्तौ टिप्पण्य. (पृ ५२, १२९) ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

अग्ने॒ त्वं पा॑रया॒ नव्यो॑ अ॒स्मान्त्स्व॒स्तिभि॒रति॑ दु॒र्गाणि॒ विश्वा॑ ।
पूश्च॑ पृ॒थ्वी ब॑हु॒ला न॑ उ॒र्वी भवा॑ तो॒काय॒ तन॑याय॒ शं योः ॥

अग्ने॑ । त्वम् । पा॒र॒य॒ । नव्यः॑ । अ॒स्मान् ।
स्व॒स्तिभि॒रिति॑ स्व॒स्ति-भिः॑ । अतीति॑ । दु॒र्गाणीति॑ दुः-गानि॑ । विश्वा॑ ॥
पूः । च॒ । पृ॒थ्वी । ब॒हु॒ला । नः॒ । उ॒र्वी ।　　५
भव॑ । तो॒काय॑ । तन॑याय । शम् । योः ॥

तत्रैव याज्या— ' अग्ने त्वम् ' इति चतुष्पदा त्रिष्टुप् ॥ हे ᵛअग्ने, ᵛत्वं ᵛनव्य, ⁴⁷⁻नव एव नव्यः⁻⁴⁷ " वस्त्वपसोकक्विक्षेमवर्चोनिष्क्रेयलोक्यजनपूर्वनवसूरमर्तयविष्टम्य-श्छन्दसि स्वार्थे यद्वक्तव्यः " ( द्र. पाभा ५.४.३० ) इति स्वार्थे यत्प्रत्ययः । " यतोऽनावः " ( पा ६.१.२१३ ) इत्याद्युदात्तत्वम् । ᵛअस्मान् ᵛअति ᵛपारय　१० अतिक्रम्य पारय । पार तीर कर्मसमाप्तौ । अविकलकर्मणः कुरु । किमतिक्रम्य ? ᵛविश्वा विश्वानि । " शेश्छन्दसि बहुलम् " ( पा ६.१.७० ) इति लोपः । ᵛदुर्गाणि दुःखेन गच्छन्ति येषु तानि दुर्गाणि विध्यपराधलक्षणानि पापानि । " सुदुरोरधिकरणे " ( पा ३.२.४८ वा ३ ) इति गमेर्डः । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६.२.१३९ ) । तान्यतिक्रम्यास्मान् पारय । " अन्येषामपि दृश्यते " ( पा ६.३.१३७ ) इति संहितायां दीर्घत्वम् । नव्यो अस्मानिति　१५ " प्रकृत्यान्तःपादमव्यपरे " ( पा ६.१.११५ ) इति प्रकृतिभावः । ᵛस्वस्तिभिः शोभनैर्मार्गैः दुर्गातिक्रमणोपायभूतैः । ⁴⁸⁻अस गतौ⁻⁴⁸ । " क्तिच्क्तौ च संज्ञायाम् " ( पा ३.३.१७४ ) इति क्तिच् । " तितुत्र॰ " ( पा ७.२.९ ) इतीट्प्रतिषेधः । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा ६.२.१३९ ) । किंच ᵛनः अस्माकं तत्र वसतां ᵛपूः नगरी निवासस्थानं ᵛपृथ्वी विस्तीर्णा महावकाशा अविकलकर्मफलोपभोगयोग्या भवत्विति शेषः । पृथुशब्दः कुप्रत्ययान्त-　२० त्वादन्तोदात्तः । " वोतो गुणवचनात् " ( पा ४.१.४४ ) इति ङीष् । " उदात्तयणो

भद्र इति ॥ याज्यामाह — " अग्ने त्वं पारया नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शं योः " इति ॥ हे ᵛअग्ने, ⁴⁵⁻भक्रियापराधपरिहारायेदानीं प्रवृत्तत्वात् नूतनः ᵛत्वम् ᵛअस्मान् फलपर्यन्तानां कर्मणां पारं नय । किं कृत्वा ? ᵛस्वस्तिभिः यथाशास्त्रानुष्ठानैरतिपादरूपाण्यन्यत्यरूपाणि वा ᵛदुर्गाणि पापानि　२५ विश्वान्यतिक्रमय्य । किंच—अस्माकं निवासाय नगरी विस्तृता भवतु । ⁴⁶सस्यसंपत्त्यर्थम् ᵛउर्वी ᵛबहुला भवतु । किंच— त्वमस्मदीयाय पुत्राय दुहितृरूपापत्याय च सुखप्रदो भव ॥

४७–४७. तं. ति.पं.ब– नित्ययुवा । ४८–४८ ति– अस्तेः ।

४५. आ.क.तं–मदीयापराध॰ । ४६. तं–सस्यनिष्पत्त्यर्थम् ।

[काम्येष्टियाज्यापुरोनुवाक्या

**त्वमग्ने व्रतपा असि देव आ (४) मर्त्येष्वा । त्वं यज्ञेष्वीड्यः ॥**

त्वम् । अग्ने । व्रतपा इति व्रत-पाः । असि । देव. । एति (४) । मर्त्येषु । आ ॥

त्वम् । यज्ञेषु । ईड्यः ॥

हलपूर्वात्" (पा ६.१.१७४) इति नद्या उदात्तत्वम् । किंच—अस्माकं तत्र वसताम् ${}^{v}$उर्वी ५ मेदिनी । स एव स्वर. । मा ${}^{v}$बहुला भवतु । बहुभिर्धनधान्यपश्वादिभिस्तद्वती भवतु । सिध्मादिलक्षणो लच् (पा ५.२.९७) । यद्वा—बहूनामर्थानां लात्री आदात्री उत्पादयित्री भवतु । लाते "आतोऽनुपसर्गे" (पा ३.२.३) इति कः । किंच ${}^{v}$तोकाय अस्मदीयाय अपत्याय ${}^{v}$तनयाय तस्यापत्याय अस्मत्पौत्राय ${}^{v}$शं शमयिता रोगाणां ${}^{v}$भव । शमेर्ण्यन्तात् क्विप् (पा ३.२.७६) । "मितां ह्रस्व." (पा ६.४.९२), "णेरनिटि" १० (पा ६.४.५१) इति णिलोप । किंच—${}^{v}$यो ${}^{v}$यापयिता पृथक्कर्ता आगामिनां भयानाम् अस्मदीयजनसकाशादपनेता च भव । यौतेः "अन्येभ्योऽपि दृश्यन्ते" (पा ३.२.७५) इति विच् । "ओतो णित्" (द्र पा ७.१.९०) इति बहुलवचनान्न[४८] भवति । "षष्ठ्यर्थे चतुर्थी वक्तव्या" (पा २.३.६२ वा १) इति वा, "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" (पा २.३.१४) इति वा चतुर्थी । तोकं तनयं च रक्षितुं शं योश्च भव । "द्व्यचोऽ- १५ तस्तिङः" (पा ६.३.१३५) इति संहितायाम् 'अ'-स्य दीर्घत्वम् ॥

"अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद् आहिताग्निः सन्नव्रत्यमिव चरेत्" (तैसं २.२.२) इत्यस्य पुरोनुवाक्या—'त्वमग्ने' इति त्रिपदा गायत्री ॥ "अष्टकसप्तक-षट्कपदा प्रतिष्ठानाम्नी, षट्कसप्तकाष्टकैर्वर्धमाना । विपरीता प्रतिष्ठा" (पिसू ३.१४.१५) इति वचनात् । 'देव.' इति सप्तमीबहुवचनस्य "सुपां सुलुक्" (पा ७.१.३९) २० इत्यादिना स्वादेशः । आकारौ समुच्चयवाचिनौ । हे ${}^{v}$अग्ने, देवेषु च ${}^{v}$मर्त्येषु मनुष्येषु[५०] च ${}^{v}$त्वम् एव ${}^{v}$व्रतपाः व्रतानां पाता रक्षकः नान्य. कश्चित् । पातेः "अन्येभ्योऽपि दृश्यन्ते" (पा ३.२.७५) इति वचनात् विच् । कृदुत्तरपदप्रकृतिस्वरत्वम् (पा ६.२.१३९) । किंच—${}^{v}$त्वम् एव ${}^{v}$यज्ञेषु ${}^{v}$ईड्यः स्तुत्यः । "ईडवन्दवृशंसदुहां ण्यत." (पा ६.१.२१४) इत्याद्युदात्तत्वम् । अतोऽस्मानखण्डितव्रतान् पाहि । त्वामेव वयं स्तुम इति भाव. ॥

२५ त्वमग्न इति ॥ अथ व्रातपत्ययागस्यासाधारणे युग्मे पुरोनुवाक्यामाह — "त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्य" इति ॥ हे ${}^{v}$अग्ने ${}^{v}$त्वम् आगत्य मनुष्येषु व्रतपालकः ${}^{v}$देवः ${}^{v}$असि । ${}^{v}$आ समन्तात् ${}^{v}$यज्ञेषु[४७] ${}^{v}$त्वं स्तुत्योऽसि ॥

४९. तं. ति– यावयिता । ४८. "औतोऽम्शसो" इति सूत्रे सिद्धान्तकौमुदी । "ओतो णित्" इत्यनेन प्राप्तः णिद्वद्भावो न भवतीत्यर्थः । ५०. मे– 'मनुष्येषु' नास्ति ।

४७. इ. ङ–देवेषु ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

यद्वो॑ व॒यं प्र॑मि॒नाम॑ व्र॒तानि॑ वि॒दुषां॑ देवा॒ अवि॑दुष्टरासः ।
अ॒ग्निष्टद् विश्व॒मा पृ॑णाति वि॒द्वान् येभि॑र्दे॒वाँ ऋ॒तुभिः॑ क॒ल्पया॑ति ॥

[ जु॒षे॒था॒मास नो॑ यजा॒ दा त्रयो॑विꣳशतिश्च ]

यत् । वः । व॒यम् । प्र॒मि॒नामेति॑ प्र—मि॒नाम॑ । व्र॒तानि॑ ।
वि॒दुषा॑म् । दे॒वाः । अवि॑दुष्टरा॒स इत्यवि॑दुः—त॒रा॒सः ॥ ५
अ॒ग्निः । तत् । विश्व॑म् । एति॑ । पृ॒णा॒ति । वि॒द्वान् ।
येभिः॑ । दे॒वान् । ऋ॒तुभि॒रित्यृ॒तु—भिः॑ । क॒ल्पया॑ति ॥ १४ ॥

[ इ॒षे त्वा॑ य॒ज्ञस्य॒ शुन्ध॑ध्व॒ं कर्म॑णे दे॒वोऽव॑भृत॒ं धृष्टिः॒ सं व॑पा॒म्या द॑दे॒ प्रत्यु॑ष्ट॒ं
कृष्णो॑ऽसि॒ भुव॑नमसि॒ वाज॑स्यो॒भा वां चतु॑र्दश ]

[ इ॒षे दꣳह॒ भुव॑नम॒ष्टावि॑ꣳशतिः ] [ इ॒षे त्वा॑ क॒ल्पया॑ति ] १०

तत्रैव याज्या— 'यद्वः' इति चतुष्पदा त्रिष्टुप् ॥ हे [V]देवाः, [V]वः युष्माकं [V]विदुषाम् अखण्डितज्ञानानां संबन्धीनि [V]व्रतानि कर्माणि [V]वयम् [V]अविदुष्टरासः अविद्वत्तराः क्षणे क्षणे संभाव्यमानप्रमादाः । अयस्मयादित्वेन (पा १·४·२०) [५१]भत्वात् वसोः संप्रसारणम् । "आज्जसेरसुक्" (पा ७·१·५०) । अव्ययपूर्वपदप्रकृतिस्वरत्वम् (पा ६·२·२) । ईदृशा वयं [V]यत् यस्मात् [V]प्रमिनाम हिंसितवन्तः[५२] । मीङ् हिंसायां [५३]क्र्यादिः । तस्मात् १५ "उपसंवादाशङ्कयोश्च" (पा ३·४·८) इत्याशङ्कायां लेट् । [५४]कारणात् कार्यानुमानमाशङ्का । अज्ञानातिशयेन कर्मलोप आशङ्क्यते । "लेटोऽडाटौ" (पा ३·४·९४) इत्याडागमः । "स उत्तमस्य" (पा ३·४·९८) इति सकारलोपः । "मीनातेर्निगमे" (पा ७·३·८१) इति धातोः ह्रस्वत्वम् । "हिनुमीना" (पा ८·४·१५) इति णत्वं बहुलवचनान्न भवति । [V]तत् तस्मात् कारणात् [V]विश्वम् अखण्डितं सर्वं कर्मजातम् २० [V]अग्निः एवायमिज्यमानः व्रतपतिनामा [V]आ [V]पृणाति [५५]आभिमुख्येन पूरयतु, अखण्डितमापादयतु । पृ पालनपूरणयोः । लेट् । "प्वादीनां ह्रस्वः" (पा ७·३·८०) इति ह्रस्वत्वम् । विकरणव्यत्ययो वा । तत्रैव हेतुः, [V]विद्वान्, यस्मादयमग्निर्विद्वान्, "विदेः शतुर्वसुः"

यदिति ॥ याज्यामाह — "यद्वो वयं प्रमिनाम व्रतानि विदुषां देवा अविदुष्टरासः । अग्निष्टद्विश्वमापृणाति विद्वान् येभिर्देवाꣳ ऋतुभिः कल्पयाति" इति । हे [V]देवाः, [V]विदुषां युष्माकं २५ संबन्धीन्यस्मदनुष्ठेयव्रतान्यत्यन्तमविद्वांसः [V]वयं प्रकर्षेण विनाशयाम इति [V]यत्, [V]तत् सर्वं [V]विद्वान् [V]अग्निः आपूरयतु । यैरेतदुपलक्षितकालविशेषैः [V]देवान् हविर्भोक्तुं कल्पयति तैः कालविशेषैः [४८]व्रतं पूरयतु ॥

५१. व– भसंज्ञकत्वात् । ५२. तं. ति. व– लुप्तवन्तः । ५३. व– क्रैयादिकः । ५४. मै– कारणतः । ५५. ति– 'आभिमुख्येन' इत्यत आरभ्य अनुवाकसमाप्ति यावत् नास्ति ।

४८. उ–प्रीतम्; द्वा–प्रीतिम् । ३०

(पा ७·१·३६)। "उगिदचाम्" (पा ७·१·७०) इति नुम्। "सान्तमहतः सयोगस्य" (पा ६·४·१०) इति दीर्घः। सयोगान्तलोप (पा ८ २·२३)। सर्वज्ञ इत्यर्थः। तस्मादापूरणोपायज्ञो यथा स्यात्तथा कर्तुं समर्थ एवेति भाव.। के पुनस्त उपाया इत्यत आह—[v]येभि. यै। "बहुलं छन्दसि" (पा ७·१·१०) इति भिस ऐस्। [v]ऋतुभिः कालावयवैः
५ पौर्णमास्यादिभि युष्मान् [v]देवान् अग्न्यादीन् [v]कल्पयाति। देवशब्दवाच्यहविर्लाजार्धैः [दीन् यै] कल्पयति कल्पयितुमर्हति। "अर्हे कृत्यतृचश्च" (पा ३ ३ १६९) इति लिङर्थे लेट्। पूर्ववदाडागम (पा ३ ४·९४)। तत्कालादीनवयवान् विदुषोऽग्ने व्रतस्याखण्डित-त्वापादनमात्र कियदिति भाव.। तस्मात् व्रतमनेन खण्डितमिति भवद्भिरुद्वेगो न कार्य.। अत्र संहितायाम् 'अग्निष्टत्' इति "युष्मत्तत्ततक्षुःष्वन्त पादम्" (पा ८ ३·१०३) इति
१० ष। ऋतुभिरित्यत्र "दीर्घादटि समानपादे" (पा ८·३·९) इति रुत्वम्। "आतोऽटि नित्यम्" (पा ८·३·३) इत्यनुनासिक। एतदुक्त भवति—अयमग्नि ये पर्वभिरस्माभि· अननुष्ठितैरसतुष्टस्तद्विद्वान् वर्तते। तै· सर्वैरदुष्टै[नुष्ठितै]रिव अस्मदनुग्रहाय सतुष्टः स देवानपीडानिव इष्टानस्मद्विषये प्रसन्नान् करोतु ॥

॥ इति प्रथमकाण्डे प्रथमप्रपाठके चतुर्दशोऽनुवाक· ॥

१५ इति [56]भट्टभास्करविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये [57]प्रथमकाण्डे प्रथमः प्रपाठक.[57] ॥

---

अत्र विनियोगसंग्रह—

"अन्त्यानुवाके याज्यानुवाक्या. काम्येष्टिसगताः।
काण्डस्य तु द्वितीयस्य द्वितीये प्रश्न इष्टयः ॥ १ ॥
उभैन्द्राग्नमग्नये युग्ममिन्द्रैन्द्राग्नत्रये तथा।
२० वयं पौष्णे [58]चरौ क्षेत्र क्षैत्रपत्यचरौ[58] तथा ॥ २ ॥
अग्ने पाथिकृते यद्वा व्रातपत्ये द्वियुग्मकम्।
विकल्पेनेति मन्त्रा स्युरनुवाके चतुर्दश" ॥ ३ ॥

अथ मीमांसा ॥ तृतीयाध्यायस्य द्वितीयपादे चिन्तितम्—

"ऐन्द्राग्नादीष्टय· काम्या याज्या अभ्युदिताः क्रमात्।
२५ काण्डयोस्ता यथालिङ्गं संचार्यो नियमोऽथ वा ॥
लिङ्गं, क्रमसमाख्याभ्या प्रबलं तद्वशादमू।
अकाम्यास्वपि सचार्यां याज्या सर्वत्र का क्षतिः ॥

---

५६. त ति. पं–भट्टकौशिकभास्कर°, ब–भट्टकौशिकभास्करमिश्र°। ५७–५७. ति. ब– प्रथमे काण्डे प्रथमे प्रपाठके चतुर्दशोऽनुवाक.। इति समाप्त प्रथम. प्रश्न. (ति–इति प्रथम प्रश्नः समाप्त)।

---

३० ५८–५८. त–चरुक्षेत्रे क्षैत्रपत्ये।

समाख्यानात् काण्डयोगः क्रमादिष्टिषु योजनम् ।
अपेक्षते [५०]देवमात्रं शक्तिः[५०] काम्यैकगास्ततः " ॥ (जैन्या ३-२-१६-१८) इति ॥

काम्येष्टयस्तत्काण्डे क्रमेणाम्नाताः—" ऐन्द्राग्नमेकादशकपालं निर्वपेद्यस्य सजाता वी(या)युः " ( मैसं २-१-१ ) इत्यादिना । सजाता ज्ञातयो वीयुः विमताः[५१] विप्रतिपन्ना इत्यर्थः । " इन्द्राग्नी रोचना " (मैसं ४-११-१) इत्यादिके मन्त्रकाण्डे याज्यानुवाक्याः क्रमेणाऽऽम्नाताः। तत्रेदं काम्ययाज्यानुवाक्याकाण्डमिति याज्ञिकानां समाख्ययाऽवगम्यते । तयोरिष्टिकाण्डमन्त्रकाण्डयोः प्रथमायामिष्टौ प्रथमपठिते याज्यानुवाक्ये इत्यादिव्यवस्था । [५२]कर्मस्वरूपमात्रप्रकाशनं लिङ्गम् । न च तावन्मात्रेण मन्त्रकर्मणोरङ्गाङ्गिभावः । ततः समाख्याबलात् मन्त्रकाण्डकर्मकाण्डयोः [५३]संबन्धावगमेन सामान्येन मन्त्रकर्मणोः संबन्धोऽवगम्यते । विशेषतस्त्वस्मिन् प्रथमे कर्मणि अयं मंत्र इति क्रमादवगम्यते। ऐन्द्राग्नेष्टावैन्द्राग्नमन्त्रः, वैश्वानरेष्टौ वैश्वानरमन्त्र इत्येतादृशो विशेषो [५४]लिङ्गेनैवावगम्यत इति चेत्। न। लिङ्गसाधारण्ये क्रमापेक्षणात् । " ऐन्द्राग्नमेकादशकपालं निर्वपेत् भ्रातृव्यवान् " ( मैसं २-१-१ ) इति द्वितीयेष्टिरपि । तत्रेन्द्राग्नी पठितौ । मन्त्रकाण्डेऽपि " इन्द्राग्नी नवतिम् " ( मैसं ४-११-१ ) इत्यादिकमपरमैन्द्राग्नं याज्यानुवाक्यायुगलम्[५५] आम्नातम्। न हि तत्र क्रममन्तरेण निर्णेतुं शक्यम्। न च क्रमेणैव तत्सिद्धेर्लिङ्गमप्रयोजकमिति वाच्यम्। क्वचित् लिङ्गस्यैव व्यवस्थापकत्वात्। ऐन्द्राबार्हस्पत्येष्टिरेकैवाम्नाता— " यं कामयेत राजन्यमनपोब्धो जायेत वृत्रान् घ्नꣳश्चरेदिति तस्मा एतमैन्द्राबार्हस्पत्यं चरुं निर्वपेत् " ( तैसं २-४-१३ ) इति । यं राजपुत्रं जायमानं राज्ञः पुरोहितस्य वा काम एवं भवति— अयं मातृगर्भे देवकृतविघ्नेन केनाप्यप्रतिबद्धो जायतां, जातश्च शत्रून् मारयन् संचरेदिति । तद्राजपुत्रार्थेयमिष्टिः । मन्त्रकाण्डे तदिष्टिक्रमे याज्यापुरोनुवाक्ये ऐन्द्राबार्हस्पत्ये द्विविधे आम्नाते । " इदं वामास्ये हविः " ( तैसं ३-३-११ ) इत्येकं [५५]युगलम्। " अस्मे इन्द्राबृहस्पती " ( तैसं ३-३-११ ) इत्यादिकम् अपरम्[५६] । तयोः प्रथमयुगलस्य[५७] क्रमेण विनियोगेऽपि द्वितीययुगलं लिङ्गेनैव विनियोक्तव्यम्। तस्मात् क्रमसमाख्यासहकृतेन लिङ्गेन काम्येष्टिष्वेवैता याज्या नियम्यन्ते ॥

द्वादशाध्यायस्य चतुर्थपादे चिन्तितम् —

" इदं वां युग्मयोः किं स्यात् साहित्यं वा विकल्पनम् ।
साहित्यं पूर्ववन्मैवं देवताबोधनैक्यतः " ॥ ( जैन्या १२-४-२ ) इति ॥

ऐन्द्राबार्हस्पत्ये कर्मणि " इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती " ( तैसं ३-३-११ ) इति याज्यानुवाक्ये द्विविधे आम्नाते । तयोः सारस्वत्यादिवत् समुच्चयः। यथा " सारस्वतीमनूच्य वाग्यन्तव्या, वैष्णवीमनूच्य वाग्यन्तव्या " ( मैसं ३-६-८ ) इत्यत्र अदृष्टार्थत्वात्[५८] समुच्चयस्तद्वदिति चेत् । मैवम् । दृष्टप्रयोजनस्य देवताबोधनस्यैकत्वात्। तस्मात् विकल्पः ॥

तत्रैवान्यच्चिन्तितम् —

" पुरोनुवाक्यया याज्या विकल्प्या वा समुच्चिता ।
पुरेवाऽऽद्यः समाख्यानात् वचनात् तु समुच्चयः " ॥ ( जैन्या १२-४-३ ) इति ॥

[५९]देवताप्रकाशनकार्यस्यैकत्वात् युग्मयोर्यथा न समुच्चयः, किंतु विकल्प एव तथैवैकयुग्मगतयोरिति चेत् । मैवम्। पुरोनुवाक्येति समाख्याया उत्तरकालीनयाज्यामन्तरेण[६०] अनुपपत्तेः ।

५०–५०. आ.भां.हा–दैवमात्रसक्तिः ; इ.उ.क–दैवमात्रशक्तिः। ५१. इ. ट. पा.मां.हा–विमनाः । ५२. तं–क्रमरूप° । ५३. तं–संबन्धावगतौ । ५४. तं–लिङ्गेनैव गम्यते आ;.इ.उ.पा भां.हा–लिङ्गादवगम्यते। ५५. आ–युगुलम् । ५६. इ.उ.पा–'अपरम्' इत्यस्यानन्तरं 'युगलम्'। ५७ आ–°युगुलस्य । ५८. इ.उ–अदृष्टहेतुत्वात् ; तं–अदृष्टभेदात्। ५९. आ–देवताप्रकाशनरूपकार्य°; उ.पा.भां.हा–देवताप्रकाशरूपकार्य° । ६०. इ.उ.पा.मां.हा–°कालीनयागमन्तरेण ।

## ( अथ प्रथमकाण्डे द्वितीयः प्रपाठकः )

अत परम् अग्निष्टोममन्त्रा येषाम् आध्वरिका इत्याख्या । एषां च सोमः काण्डऋषि', 'कृणुष्व पाज' ( तैसं १·२·१४ ) इत्यतः प्राक् अध्वरग्रहदाक्षिणानां सोमार्षेयत्वात् ॥

यस्य नि श्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
५ निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
आद्यप्रपाठके दर्शपूर्णमासेष्टिरीरिता ।
प्रपाठकत्रयेणाथ सोमयाग प्रवक्ष्यते ॥ २ ॥

तदिदं [1]सौम्य काण्डम् । तथा चानुक्रमणिकायामुक्तम्—
" अध्वरप्रभृतित्रीणि तद्विधिर्वाजपेयिके[2]
१० तथा शुक्रियकाण्डे च नवेन्दोरिति धारणा " ॥ ( काण्डानुक्रमणी २·२ ) इति ।

" आप उन्दन्तु " ( तैसं १·२·१–१३, १ ३ १–१३; तैब्रा १·४·८, १·१·१ ) इत्यादिकमध्वरकाण्डम् । " आ ददे ग्रावासि " ( तैसं १ ४·१–४२, तैब्रा ३ १६ ) इत्यादिकं ग्रहकाण्डम् । " उदु त्यं जातवेदसम् " ( तैसं १·४·४३–४७ ) इत्यादिकं [3]दक्षिणाकाण्डम् । तान्येतानि त्रीणि । " प्राचीनवंशं करोति " ( तैसं ६ १–६, ७ १ १–३ , तैब्रा १·२·१, १·५ ४, १ ५·९–१२ ) इत्यादिकं "त्रयाणामेतेषां"
१५ विधि ॥ " देव सवित प्रसुव " ( तैसं १·७ ७–१२ ) इत्यादिकं वाजपेयस्य मन्त्रकाण्डम् । "देवा वै यथादर्शं यज्ञानाहरन्त" ( तैब्रा १·३·२–९ ) इत्यादिकं वाजपेयस्य विधिकाण्डम् । " त्रिवृत्स्तोमो भवति " ( तैब्रा २·७ ) इत्यादिका तथा । " नमो वाचे या चोदिता " ( तैआ ४·१–४२ ) इत्यादिकं शुक्रियमन्त्रकाण्डम् । " देवा वै सत्रमासत " ( तैआ ५·१–१२ ) इत्यादिकं तद्विधिकाण्डम् । तान्येतानि नवसंख्याकानि चन्द्रस्य काण्डानि । अतस्तेषु ' चन्द्र ऋषि ' इति ध्यायेत् ।

२० सोमाङ्गे दीक्षणीयादौ दर्शमन्त्रातिदेशनात् ।
दर्शोर्ध्वत्व [4]यत्र युक्तमग्निष्टोमोऽत्र वर्ण्यते ॥

[5]"त्रिविध" सोमयाग एकाहाहीनसत्रनामक "[6] । एकस्मिन्नेवाहनि सवनत्रयेण निष्पाद्य एकाहः । द्विरात्रमारभ्यैकादशरात्रपर्यन्ता अहीना । त्रयोदशरात्रमारभ्य सहस्रसंवत्सरपर्यन्तानि सत्राणि । द्वादशाहस्तु द्विरूप । तत्राहीनरूपेण द्विरात्रादीना प्रकृति, सत्ररूपेण त्रयोदशरात्रादीनाम् । तस्य च द्वादशा
२५ हस्यैकाहरूपो ज्योतिष्टोम प्रकृति । अत एवाऽऽम्नायते—" एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोम " ( द्र. ताब्रा १६ १/ । यद्यपि [illegible] ज्योतिष्टोमः— अग्निष्टोमोऽत्यग्निष्टोम उक्थ्य

१. क्ष क ना–सौम्य° । [illegible] ३. ठ, त्रि २. ना पा.मां.म१.मै१–
दक्षिणाकाण्डम् । ४–४. ६ ठ, त्रि[illegible] । ५. क.तं.म१.
मै१.मै१–तस्य । ६–६. मै१–त्रिवि[illegible]